# BENARES SANSKRIT SERIES;

## A COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G THIBAUT, PH. D.

No. 89.




# बोधसारः ।

श्रीत्रिदण्डिनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

# BODHSÂR,

A TREATISE ON VEDANTA,

BY

SRI NARHARI,

With a commentary by the author's pupil

PANDIT DIVÂKAR.

EDITED BY

SWAMI DAYÂNAND.

*Fasciculus I.*

BENARES.

*Published by the Proprietors Messrs. Braj B. Dás & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilâs Press,

BENARES.

1904.

ॐ

नमोऽन्तर्यामिणे ।

श्रीमदाचार्यनरहरिविरचितो

# बोधसारः ।

आचार्यदिवाकरकृतया दीप्त्या संवलितः ।

---

भवभयमपहन्तुं ज्ञानशास्त्रं विधाय
तदनधिकृतमूढज्ञप्तये दैवतं च ।
तदनधिकृतजीवस्यापि कर्मार्थकाण्डं
सकलजनगतिन्तं सद्गुरुं भावयामि ॥ १ ॥
पूर्वजन्मा नरहरिरुत्तरोऽस्मिन्दिवाकरः
बोधसारप्रकाशाय जलवीचिलया यथा ॥ २ ॥
नरहरिपदसेवालब्धविज्ञानसारो
बुधजनहितकृत्यै बोधसारं विधाय ।
बुधदिनकरसाह्वो बोधसारार्थदीप्तिं
विदधति सुजनानां प्राप्तये तत्पदस्य ॥ ३ ॥
यत्कारुण्यामृतजलनिधिस्नानमात्रेण सद्य
स्तापध्वंसात्परसुखनिधिः प्राप्यते जायते च ।
दुःखध्वान्तं स्वशरणगते नाशयित्वा स्वरूपे
चित्तस्थैर्ये नरहरिमहङ्कारणं भावयामि ॥ ४ ॥
अजमभयमनाद्यनन्तमेकं सहजसुखाद्वयचित्स्वरूपमाद्यम् ।
स्वशरणभयहारकं समस्त गुरुमहमभयं नृसिंहमीडे ॥५॥



यद्दृष्टि नें हि राति दृश्यमखिलं विश्वं सदित्यन्तरा
तज्जन्ये च सुखेतरे त्वतितरामन्तर्न रात्येव यत् ।
यज्ज्ञानं च महातमोगजहरिर्ब्रह्मत्वतोऽसौ हरि
स्तन्नामाङ्कितसद्गुरून्नरहरीत्याह्वान्भजेऽहंत्विति ॥६॥
गौरीमुखेऽर्पितकरो गुडमोदके-
षड्रासेन शोभितमुखश्चलितस्वकर्णः ।
दूर्वाङ्कुरैश्चहरितैर्विलसत्किरीटो
विघ्नानि मे हरतु सिद्धिकरो गजास्यः ॥ ७ ॥
बोधसारगुरुसत्कृपालवा द्बोधसारहृदयप्रकाशिनीम् ।
बोधसारहृदयं परिबोद्धुं बोधसारसुहृदां प्रतनोमि ॥८॥

इह कश्चिच्छ्रीनरहरिचरणकमलचिन्मकरन्दमधुपस्तत्करुण-यैव चिदानन्दसमुद्रतरङ्गायितहृदयो दिवाकराह्वाभासो नरहरिचि-कीर्षितं ग्रन्थं मनसि निधाय तदभिधाननिरूपणपुरःसरं तन्नि-रूपणं प्रतिजानीते, अर्थतश्च शास्त्रत्वसिद्धये तस्यानुबन्धचतुष्टय-मपि सूचयति ।

ॐ किञ्चित्कुतूहलेनैव विदुषां प्रियकाम्यया ।
मङ्गलाचरणं कृत्वा बोधसारो निरूप्यते ॥ १ ॥

किंचिदिति । किंचित्कुतूहलेनैवानिर्वचनीयस्वसुखसाक्षात्का-रविलासेनैव न त्वन्यरंजनादिना केनचित्प्रयोजनेनेत्यर्थः । अ-नेन स्वप्रयोजनं स्वानन्दविलासलक्षणं सूचितम् । परप्रयोजनं चाह, विदुषां प्रियकाम्यया विवेकिनां स्वस्वरूपानन्दे चित्तस्थै-र्यलक्षणहितेच्छया ।

नन्वत्र व्याख्याकृतिप्रतिज्ञाश्लोके ग्रन्थकृतिव्याख्याकृति-रूपक्रिययोरेकस्यैव दिवाकरस्य कर्तृत्वमुक्तं, तथा दिवाकराह्वा-

सो नरहरिरित्यत्र दिवाकरगुरोर्नरहरेरेव कर्तृत्वं सूचितं, तथा
स्वन्यरंजनादिनेत्यत्र स्वानन्दविलासेनैव ग्रन्थरचने प्रवृत्ति-
क्ता, परप्रयोजनं चाहेत्यत्र परप्रयोजनार्थमपीति पूर्वापरविरोध
तिचेद्। न दिवाकराद्ध आभासो यस्येति बहुव्रीहिणा बिम्बप्रति-
म्बयोर्वास्तवाभेद इव ग्रन्थकर्तुर्नरहरेर्व्याख्याकर्तुर्दिवाकरस्य
वास्तवाभेदसूचनात् । अत एव पूर्वत्राप्यनेनैवाशयेन बोधसारं
धायेति ग्रन्थरचनक्रियायां व्याख्याकरणक्रियायां चैकस्य
र्तृत्वमुक्तम् । किंच विदुषामित्यत्र स्वस्यान्यविदुषां च वैदुष्यसा-
न्याद् ब्रह्मवित्त्वेन च स्वस्यान्यविदुषामपि ब्रह्मरूपेणैक्याद्
स्वन्यरंजनादिनेत्युक्तिः, प्रातीतिकमात्रभेदापेक्षया तु परप्रयो-
नं चाहेत्युक्तिरेवं पूर्वापरविरोधाभावः। मयेत्यध्याहार्यं, मङ्गला-
रणं मङ्गलस्य मङ्गलार्थस्याचरणं रचनं कृत्वा विधाय। नन्वत्र
ङ्गलाचरणं कथं संपन्नं मङ्गलवाचकशब्दानां देवतावाचकश-
दानां च मङ्गलार्थत्वेनसर्वत्रगृहीतत्वात् । तदुक्तम् ।

'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे मङ्गलाः प्रोक्ता ग्राह्या ग्रन्थादिमङ्गले' ॥ इति ।

तेषामेव शास्त्रेषु मङ्गलकारित्वप्रसिद्धेर्देवतावाचकशब्दाभा-
न्मङ्गलशब्दस्य चाचरणसंबन्धार्थवत्वेन मङ्गलार्थवत्त्वासिद्धे-
ति चेद् । नान्यार्थत्वेप्यस्य मङ्गलशब्दस्य पूर्णकुम्भन्यायेन म-
ङ्लार्थत्वान्मङ्गलकारित्वसिद्धेः । किं च ग्रन्थसमाप्तिप्रचयागम-
भ्यामपि तत्कृतमेवेति ज्ञेयम् । किं च बोधसारपदेनापि जीव-
ह्मैक्येष्टवस्तुस्मरणरूपं मङ्गलं स्पष्टमेवात्रेति सुष्ठूक्तं मङ्गला-
रणं कृत्वेति । मङ्गलाचरणस्य कर्तव्यतायां च महाभाष्यसं-
तिः । 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि

प्रथन्ते सिद्धार्थद्योतकानि सिद्धार्थाध्येतृकाणि च स्युरि'ति । बो
धसार एतन्नामकोग्रन्थो निरूप्यते कथ्यते । बोधपदेनात्र सम
ष्टिव्यष्ट्यन्तःकरणावच्छिन्नचिदाभासाः सारपदेन च तद्बिम्बभूत
चैतन्यं सामानाधिकरण्येनाभिन्नं गृह्यते, तत्प्रतिपादकतया ग्र
न्थस्याप्यभेदोपचाराद्बोधसारत्वम् । अनेन ग्रन्थस्यास्य तत्प्र
तिपाद्याद्वयचैतन्यस्य च प्रतिपाद्यप्रतिपादकरूपो लक्ष्यलक्षकभा
वरूपो वा संबन्धो बोध्य इति सूचितं, तथैव बोधसारपदवाच्य
योर्जीवब्रह्मणोरेकत्वलक्षणो विषयश्च सूचितः । विदुषामिति प
देन च पदपदार्थवाक्यार्थज्ञानपूर्वकवेदान्तश्रवणादिकृतप्रयत्नास्त
त्प्रतिपाद्येऽखण्डरसे व्यवहाराविरोधेनाऽपि[2] चित्तस्थै
र्यैप्सवोऽधिकारिणश्च विशिष्टा अत्र सूचिताः । प्रयोजनम
पि किञ्चित्कूतूहलेनेति पदेन स्वाऽज्ञाननिवृत्त्या सर्वदुःखनिवृ
त्तिलक्षणानिष्टनिवृत्तिरूपप्रयोजनपूर्वकस्वानन्दाविर्भावलक्षणेष्टप्रा
प्तिरूपं सूचितमिति ज्ञेयम् । अस्य चादिमध्यावसानेषु
मङ्गलविधानान्महाशास्त्रत्वम् । वक्ष्यति हि ।

आदौ गुरुस्तवो यत्र प्रान्ते च शिवपूजनम् ।
मध्ये मुकुन्दस्मरणं बोधसारः स उत्तम ॥ इति ।

तस्मादेतद्विचारेण स्वरूपे स्थैर्यलक्षणपुरुषार्थोऽधिकारि
णां स्यादेवेति निश्चेतव्यम् ॥ १ ॥

एवं सप्रयोजनं सानुबन्धं सेष्टस्मरणमङ्गलं ग्रन्थनिरूपणं
प्रतिज्ञायेदानीं शिष्टाचाराविरोधेन स्वेष्टजीवब्रह्मैक्याविरोधेन च
गणपतिस्मरणरूपं मङ्गलमाचरञ्शिष्याणां च तत्कर्त्तव्यताशि
क्षायै श्लोकेनोपनिबध्नाति ।

---

१ परव्यसनिनीवत् ।
२ व्यवहारावस्थायां समाध्यवस्थायां च सर्वदाखण्डैक्यचित्त
स्थैर्येच्छावत्त्वद्योतकोपिशब्दः ।

अनन्तशक्तिसन्दोहपूर्णस्य परमात्मनः ।
विघ्नविध्वंसिनीं शक्तिं गणराजमुपास्महे ॥ २ ॥

अनन्तेति । अनन्तशक्तिसन्दोहपूर्णस्य अनन्ता अपरिमिताः शक्तीः सन्दोहयति परस्परानुकूल्येन स्वस्वकार्यजननक्षमाः करोतीति तथा सा मूलशक्तिस्तयापूर्णस्य । अपूर्णत्वस्य मिथ्यात्वेन तन्निषेधकस्य पूर्णत्वस्यापि शक्तिकार्यत्वम् । चितिशक्तिसत्वे श्रुतिः । 'देवात्मशक्तिं स्वगुणैर्निगूढामि'त्यादिः । परमात्मनः कार्यकारणातीतस्यात्मवस्तुनो विघ्नविध्वंसिनी सर्वकार्यपरिपन्थिविघ्ननिरासकर्त्रीं शक्तिं सामर्थ्यरूपां गणराजं गणराजनाम्नीं गणे भौतिके स्वप्रकाशत्वेन विराजमानत्वात् । 'राजाहः सखिभ्यष्टजि'तिटच् । शक्तिशक्तिमतोः पृथक् सत्वाभावाच्छक्त्यभिन्नमात्मानमेवेत्यर्थः । उपास्महे अखण्डैकरस्येन मदभिन्नत्वेन भावयामीत्यर्थः ॥ २ ॥

एवमेव स्वेष्टाविरोधेन सरस्वतीस्मरणमपि कृत्वा शिष्यशिक्षायै तदपि श्लोकेनोपनिबध्नाति ।

या प्रकाशविमर्शाभ्यां स्वरूपावस्थितिङ्गता ।
स्मरामि तामहं भक्त्या ज्ञानशक्तिं सरस्वतीम् ॥ ३ ॥

येति । या प्रत्यक्षा विदुषां प्रकाशविमर्शाभ्यां प्रकाशेन स्वरूपप्रकाशेन विमर्शः सदसद्विवेकस्तेन चोपलक्षिता सती स्वरूपावस्थितिं स्वप्रकाशचिन्मात्रस्थितिं गता प्राप्ता चिदानन्दघनाभिन्नत्वेन स्थितेति भावः । तामुक्तलक्षणां सरस्वतीं सर्वजीवचैतन्यनदीसमुद्रायितत्वेन सरस्वत्यभिधां ज्ञानशक्तिं सर्वज्ञानप्रकाशयितृसामर्थ्यरूपां स्वतश्च ज्ञानरूपां, परमात्मन इत्यत्राप्यनु-

पञ्जनीयम् । अहं तत्प्रकाशाभिन्नोऽहंत्वावच्छिन्नोऽहमाधारचित्सहितश्चिदाभासो भक्त्या निरतिशयप्रेमलक्षणयाऽहं ब्रह्मास्मीति प्रमारूपया वृत्या स्मरामि मदभिन्नां चिन्तयामीत्यर्थः ॥ ३ ॥

एवं तावत्सर्वारिष्टनिरसनक्षमं गङ्गलाचरणं कृत्वेदानीं मुमुक्षूणां मोक्षस्यैवेष्टत्वात्तस्य च तत्वज्ञानसाध्यत्वात्तस्य च श्रवणजन्यत्वेन तस्य च गुरुप्रसादलभ्यत्वात्तस्य च तद्भक्तिसाध्यत्वात्तद्भक्तेश्च तच्छ्रैष्ठ्यज्ञानाधीनत्वात्तच्छ्रैष्ठ्यनिरूपणार्थं मंगलार्थं च गुरुस्तवाभिधं प्रकरणमारभते द्वादशभिः । तत्र तावत् प्रथमतो गुरो रौदार्यातिशयनिरूपणपूर्वकं तात्विकं गुरुस्वरूपं लक्षीकृत्य प्रणमति ।

श्रीगुरून्परमानन्दस्वरूपानभिवादये ।
तापत्रयापहा येषां कृपा ब्रह्मामृतप्रपा ॥ ४ ॥

श्रीगुरूनिति । परमानन्दस्वरूपान् निरतिशयसुखमेव तत्त्वतः स्वरूपमसाधारणरूपं येषान्तान् श्रीगुरून्गृणन्ति हितमुपदिशन्तीति गुरवस्तान् सर्वहितोपदेष्टृत्वस्य वेदे प्रसिद्धत्वात्तस्य च 'यस्य निःश्वसितं वेदा' इति स्मृतेः, 'अस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद' इत्यादिश्रुतेश्च, परमानन्दस्वरूपपरमात्मन एव गुरुरूपत्वं तद्वाक्यत्वाद्वेदस्यातः परमानन्दरूपाविरोधेन सर्वहितोपदेशकत्वेन च परमात्मन एव गुरुरूपत्वेन प्रणामः कृत इति बोध्यम् । अभिवादये प्रणतिपूर्वकं प्रस्तौमि वदिधातोरभिवादनस्तुतिकरणमत्र प्रतिज्ञातमिति बोध्यम् ।

औदार्यमाह, येषामिति । येषां गुरूणां कृपा करुणैव स्वशरणपथिकानां तापत्रयापहा आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयनिरसनकर्त्री ब्रह्मामृतप्रपा अपरिच्छिन्नभूमानन्दजलपानार्थं

पानीयशालिकाऽस्ति। एतेन समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुं तत्त्वज्ञानार्थमभिगच्छेत्। 'आचार्यवान्पुरुषो वेदे'ति श्रुतेः, तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवये'त्यादि स्मृतेश्च, मोक्षसाधनभूततत्त्वज्ञानस्य गुर्वधीनत्वश्रवणाद्गुरुकृपयैवब्रह्मानन्दाविर्भावे तापत्रयनिवृत्तिर्भवतीति बोध्यम्॥ ४॥

अथगुरुस्तवः।

ननु विष्णोरेव तत्र तत्रसर्वत्र श्रैष्ठ्यमुक्तं मुक्तिप्रदत्वं च श्रुतं, तथाहि 'विष्णोर्नुकं वीर्याणि प्रवोचमि'त्यादौ अगणितवीर्यत्वं, नारायणाद्विधिर्जायते' इत्यादिषु सर्वकारणत्वेन ब्रह्मादिभ्यः श्रैष्ठ्यं च। भागवते च'।

'सत्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्यधत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः॥

इत्यादिषु मुक्तिप्रदत्वं च। अत स्तद्भजनं विहाय गुरुभक्त्यैव केवलं मुक्तिसिद्धिरिति कथं विरुद्धमुच्यत इत्याशङ्क्य मोक्षप्रदत्वेन यद्विष्णुत्वं प्रसिद्धं तद्गुरावेवास्तीत्याशयेनाह।

मदमोहाभिधक्रूरमधुकैटभजिष्णवे।
मोक्षलक्ष्मीनिवासाय नमः श्रीगुरुविष्णवे॥ ५॥

मदमोहेति। मदमोहाभिधक्रूरमधुकैटभजिष्णवे मदयति विक्षेपयतीति मदोहङ्कारो मोहयति विस्मारयति स्वस्वरूपमिति मोहोऽज्ञानं तावेव क्रूरौ स्ववशंप्राप्तस्यातीवदुःखदौ न तु तादृशं क्रौर्यमितरयोः' तत्र च तत्सत्त्वमपि तन्मूलकमितीतरयोर्न्यूनत्वं सूचितम्। अतस्तावेवमधुकैटभौ तयोर्जिष्णवे जयशीलाय' अन्य-

विष्णौ तु यन्मधुकैटभजेतृत्वं तन्मदमोहकृतमेवेति गुरुविष्णोरितरविष्णौ न्यूनत्वमुक्तमिति बोध्यम् । मोक्षलक्ष्मीनिवासाय मोक्षरूपेव लक्ष्मीर्नान्या 'भद्रैषां लक्ष्मीर्निहिताधिवाची'ति श्रुतौ भद्रेति विशेषणेन गुरुवाक्यस्थितलक्ष्म्या मोक्षरूपत्वप्रतिपादनात् । अन्यविष्णौ स्थितलक्ष्म्या बन्धनहेतुत्वेन निकृष्टत्वं' तेन च तद्वासभूतान्यविष्णौ च तज्ज्ञेयम् । तस्या मोक्षलक्ष्म्या निवासायाश्रयाय' एतेनापि श्रीगुरुविष्णावन्यविष्णो रुत्कृष्टत्वं सूचितमिति बोध्यम् । श्रीगुरुविष्णवे सर्वेषां तत्तद्धितोपदेशकत्वेन सर्वव्यापकत्वाद्गुरोर्व्यापकत्वेन विष्णुत्वं' अन्यस्य कस्यचिदगुरुत्वेन विष्णुत्वमेव नास्तीत्यभिप्रायः । तस्मै नमः प्रह्वीभावोस्तु । अतः श्रीगुरुरेव विष्णुर्नान्य इत्यभिप्रायः ॥ ५ ॥

ननु ब्रह्मादिष्वपि गुरुत्वमस्त्येवेत्याशङ्क्य तस्य गुणकृतत्वाद्गौणत्वं गुरौ तु गुणनैरपेक्षेण स्वतो गुरुत्वात्मुख्यत्वमित्याह ।

गुणैर्गौरवमायाता हरिब्रह्महरास्त्रयः ।
गुणातीततयाऽस्माकं गुरवो गुरुताङ्गताः ॥ ६ ॥

गुणैरिति । हरिब्रह्महरा विष्णुर्ब्रह्मा रुद्रश्चैते त्रयोपि प्रसिद्धा गुरुत्वेन ते गुणैः सत्त्वरजस्तमोभिः पालनादिषु गौरवं गुरुत्वमायाताः प्राप्ता न तु स्वतः । अत एव तद्गुरुत्वमन्योन्यक्रियासु व्यावृत्तमतस्तेषां गुरुत्वं नास्तीत्यर्थः । तु इति शेषः । अस्माकं गुरवस्तु गुणातीततया गुणराहित्येन गुरुतां श्रैष्ठ्यं गताः प्राप्ताः' अतो गुरूणां गुरुत्वं स्वतः सिद्धमिति सूचितम् । अस्माकमिति पदेनान्येषामेतादृशगुरुत्वेऽप्रत्यक्षेपि मद्दृष्ट्यैतत्प्रत्यक्षमिति ध्वनितम् ॥ ६ ॥

पराक्रमतोपीतरदेवेभ्यः श्रैष्ठ्यमाह ।

पुरान्तकहरो रुद्रः कंसकेशिहरो हरिः।
चण्डमुण्डहरा चण्डी सर्वद्वन्द्वहरो गुरुः॥७॥

पुरान्तकेति। रुद्रः शिवः पुरान्तकहरः पुरस्य त्रिपुरस्या-
तकस्य यमस्य च हरो घातकोऽस्तीति शेषः, पुरान्तकयोरेव ग्र-
णमत्र तत्पराक्रमस्य परिमितत्वज्ञापनायेति बोध्यम्। एवमुत्तर-
ापिज्ञेयम्। हरिर्विष्णुः कंसकेशिहरः कंसस्य केशिनश्च हरो
ातकः, चण्डी क्रोधवती देवी चण्डमुण्डहरा चण्डनाम्नो मुण्ड-
ाम्नो ऽसुरस्य हरा घातिकाऽस्ति, अत्रापि तु इति शेषः। गुरुस्तु
र्वद्वन्द्वहरः सर्वेषां द्वन्द्वानां सुखदुःखादीनां हरो घातकः, अस्तीति
ेषोऽप्यत्र कर्त्तव्यः। इतरदेवतानां द्वन्द्वैर्ग्रस्तत्वात्तत्पराक्रमस्य चा-
ल्पत्त्वान्न्यूनत्वं, गुरोस्तु द्वन्द्वैरनभिभूतत्त्वात्प्रत्युत तन्नाशकत्वे-
ापरिमितपराक्रमत्वाच्चेतरदेवताभ्यः श्रैष्ठ्यमिति भावः॥ ७॥

इदानीमन्यदेवतानां बन्धनकारणधनादिफलदातृत्वेना-
निष्टत्वादनुपास्यत्त्वं, गुरोस्तु केवलमोक्षप्रदज्ञानप्रदत्वेन मुमुक्षू-
णामुपास्यत्वं चाह।

यच्छन्ति देवतास्तुष्टा धनमायुः सुतं यशः।
ज्ञानं के नाम दास्यन्ति विना श्रीगुरुपादुकाम्॥८॥

यच्छन्तीति। देवता ब्रह्मविष्णुहरादयस्तुष्टास्तपआदिभिः
साधनैः प्रसादिताः सत्यो धनमायुः सुतं पुत्रं यशः कीर्तिं च
यच्छन्ति ददति। एतदुपलक्षणं सर्वविषयाणाम्, एतेन बन्धकारण-
विषयप्रदत्त्वेन मुमुक्षुभिरितरदेवताभजन आदरो न कर्त्तव्य इ-
त्याशयः। श्रीगुरुपादुकां विना पादुकापदेनात्र गुरुस्वरूपज्ञानाभावे
मुमुक्षूणां गुरुपादुकैव प्रतिमादिवत्पूज्या नान्येति सूचितम्। ज्ञान-
मात्यन्तिकमुक्तिसाधनं साक्षाज्जीवब्रह्मैक्यविषयकं महावाक्य-

जन्यं ज्ञानं, के नाम ब्रह्मादयः प्रसिद्धा अपि दास्यन्ति नेत्यर्थः। ब्रह्मादिषु यत्प्रसिद्धं ज्ञानप्रदत्वं तदपि गुरुरूपेणैवेति भावः ॥८॥

ननुब्रह्मादीनां कारणत्वेन यच्छ्रैष्ठ्यं सर्वं तदनादृत्य कुतो गुरोरेव श्रैष्ठ्यमुच्यत इत्याशङ्क्य तेषां गुणाभिमानित्वेनानादरणीयत्वं मुमुक्षूणां, गुरोस्तु गुणनाशकत्वेन मुक्तिप्रदत्वादादरणीयत्वमित्याशयेनाह।

जयति श्रीगुरूणां हि चरणाब्जरजोगुणः।
हतास्त्रयो यदेकेन रजःसत्त्वतमोगुणाः ॥ ९ ॥

जयतीति। हि यस्मात्कारणाच्छ्रीगुरूणामादरे बहुवचनं, चरणाब्जरजोगुणः पादकमलस्य परागवत्स्थितस्य शिष्यप्रेमवासनारूपस्य प्रतापरूपो गुणो जयति सर्वोत्कृष्टो वर्त्तते। केन कार्येणेत्यत आह, यद्यस्मात्कारणादेकेनान्यकर्मोपासनादिसाधननिरपेक्षेणैवेत्यर्थः। रजःसत्त्वतमोगुणाः कामज्ञानावरणहेतुत्वेन प्रसिद्धास्ते हताः स्वस्वरूपप्रकाशज्ञानेन बाधिताः, अतो मुमुक्षूणां गुरुभक्तिरेव मुख्या नान्येति भावः ॥ ९ ॥

इदानीं मुमुक्षूणां गुरूपासनप्रकारं निरूपयितुं स्वकृतं गुरूपासनं रूपकेणाह।

तार्या वयं तरिर्बोध स्तरणीयो भवार्णवः।
तत्कर्णधाररूपेण तारकं श्रीगुरुं भजे ॥ १० ॥

तार्या इति। वयं गुरूपासका बहुवचनं मद्वदन्येषामपि गुरूपासकानां मुक्तिर्भवतीति ज्ञापनाय, तार्यास्तारितुं योग्या नान्ये गुर्वभक्ताः, बोधो जीवब्रह्मैक्यविषयकं महावाक्यजन्यमपरोक्षज्ञानं तरिस्तीर्यतेऽनया सा तरिस्तरणसाधनं नौका, भवार्णवो विषयजल-

पूर्णो रागादिग्राहपङ्कर्मितरङ्गादिमत्वेन समुद्रः, स तर्तुं योग्य-
वात्तरणीयोऽस्ति, तत्कर्णधाररूपेण तत्र नाविकवत्तारकरूपतया
तारकं तारकः प्रणवस्तन्नामानं श्रीगुरुं तद्वाच्यं लक्ष्यं वा भजे
सोऽहमित्यभिन्नत्वेन चिन्तयामि ॥ १० ॥

ननु सर्वत्रेश्वरस्याधिक्यप्रदर्शनात्कोयं निर्युक्तिक आग्रह ई-
श्वराद्गुरोराधिक्य इत्याशङ्क्याह ।

तारकस्योपदेशेन गुरुर्भूत्वा विमुक्तिदः ।
काश्यामपीश्वरस्तस्मा दीश्वरादधिको गुरुः ॥११॥

तारकस्येति । ईश्वरोपि स्वयमीश्वरः सन्नपीत्यर्थः, स्वस्मि-
न्यूनता बुध्येति शेषः। काश्यां पुरि तारकस्य संसारतारणक्षमस्य
प्रणवस्योपदेशेन उपदेशं निमित्तं कृत्वा गुरुर्भूत्वा गुरुरूपं धृ-
त्वेत्यर्थः । विमुक्तिदो मुक्तिप्रदो भवति, तस्मात्कारणादीश्वरा-
दीशपदाद्गुरुर्गुरुपदमधिकं श्रेष्ठमित्यर्थः । नहि श्रेष्ठत्वं
परित्यज्य निकृष्टत्वमङ्गीक्रियते क्वापि सामान्यविद्भिरपि, तर्हि
सर्वज्ञेनेश्वरेण न्यूनं चेद्गुरुपदं कथमङ्गीक्रियेतेति भाव ॥ ११ ॥

नन्वीश्वरदर्शनहेतुत्वेन गुरोः श्रैष्ठ्यमस्तु, तथापि फलत्वे-
नेश्वरस्य तत्त्वरूपत्वाद्गुरुप्रसादेनैव तत्त्वप्राप्तिश्रवणात्सर्वत्रेश्वर-
स्यैव तत्त्वस्वरूपत्वाच्छ्रैष्ठ्यमित्याशङ्क्य ।

'यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावन्नसद्गुरुं कश्चित्सच्छास्त्रमपि नो लभेद्' ॥ इ-
त्यादिषूपासनागुरोरीश्वरप्रसादहेतुत्वस्य प्रतिपादनात्सद्गुरो-
स्तु ईश्वरप्रसादलभ्यतया तत्त्वस्वरूपत्वाच्छ्रैष्ठ्यमित्याशयेनाह ।

गुरोरनुग्रहादीश ईश्वरानुग्रहाद्गुरुः ।

श्रीगुरोर्दर्शनं हेतुः परं त्वीश्वरदर्शने ॥ १२ ॥

गुरोरिति । गुरोरुपासनोपदेष्टुरनुग्रहात्प्रसादेन ईश ईश्वरः प्राप्यत इतिशेषः, तत ईश्वरानुग्रहादीश्वरप्रसादाद्गुरुः सद्गुरुर्मुक्तिप्रदः प्राप्यते, अतः श्रीगुरोर्दर्शनमुपासनोपदेष्टुर्दर्शन मीश्वरदर्शन ईशप्रसादलब्धौ हेतुः कारणमस्तीत्यध्याहार्यं, तथापि श्रीगुरोर्दर्शनं तु मोक्षप्रदगुरोर्दर्शनं तु पर मीशप्रसादलभ्यत्वाद-तिश्रेष्ठमिति ज्ञेयम् । अतः श्रीगुरोरेव श्रैष्ठ्यात्तत्त्वरूपत्वमिति भावः ॥ १२ ॥

किं चेश्वरस्य सर्वकारणत्त्वाद्बन्धमोक्षकारणत्वेनातत्त्वत्वं गुरोस्तु केवलमोक्षप्रदत्त्वात्तत्त्वत्वमित्याशयेनाह ।

ईश्वरः सर्वहेतुत्वा द्धेतुःसंसारमोक्षयोः ।

मोक्षस्यैव गुरुस्तस्मा न्नास्ति तत्वं गुरोः परम् ॥ १३ ॥

ईश्वरइति । सर्वहेतुत्वात् सर्वप्रपञ्चकारणत्वात्, 'एषयोनिः' 'यतो वा इमादिभूतानि जायन्त' इत्यादिश्रुतिषु कारणत्वं सर्व-स्यास्यप्रसिद्धम्, ईश्वरः समष्टिकारणोपाधिकः सर्वज्ञत्वादिमान् संसारमोक्षयोः संसारस्य मोक्षस्य च हेतुः कारणं भवति, रजस्त-मोभ्यां कामादिभिर्मोहादिभिश्च संसारकारणं, सत्त्वेन प्रका-काशरूपेण मोक्षकारणं तदपि गुरुरूपेणेत्याशयः । गुरुस्तु मोक्ष-स्यैव कारणं ब्रह्मात्मैक्यज्ञानप्रदत्वेन केवलमोक्षस्यैवकारणं भ-वति, अत गुरोः परमन्यत्तत्त्वमनारोपितं पारमार्थिकं रूपं नास्ति न विद्यते, अतो मुमुक्षुभिर्गुरुरेवोपास्य इति भावः ॥१३॥

ननु 'काश्यां तु मरणान्मुक्तिरि'त्यादौ काश्यादिक्षेत्राणामपि मुक्तिप्रदत्वमुक्तमतः कथं गुरोरेव मुक्तिप्रदत्वमुच्यत इत्या-शङ्क्याह ।

विनापि क्षेत्रमाहात्म्यं गुरुमाहात्म्यतः किल ।
विमुक्तिर्यत्र कुत्रापि न काश्यां गुरुणा विना॥१४॥

विनापीति । क्षेत्रमाहात्म्यं क्षेत्रस्य काश्यादिक्षेत्रस्य माहात्म्यं सामर्थ्यं विनापि राहित्येनापि यत्र कुत्रापि मुक्तिप्रदक्षेत्रान्यभूमावपि अपिशब्दात्कुग्रामोषरकीकटादावपुण्यदेशेपि गुरुमाहात्म्यतः केवलगुरुकृपयैव विमुक्तिर्मोक्षो जायते किलेति प्रसिद्धमेतदागोपालं, गुरुणा विना गुरुं त्यक्त्वा काश्यां मुक्तिप्रदत्वेन प्रसिद्धायामपि मुक्तिर्न जायते, अतोऽन्वयव्यतिरेकाभ्यां गुरोरेव मुक्तिप्रदत्वं, क्षेत्रस्य तु तदर्थवादमात्रमितिभावः ॥ १४ ॥

इदानीं क्षमाप्रसादराहित्येनान्यदेवतानां निकृष्टत्वं गुरोस्तु ताभ्यां पूर्णत्वाच्छ्रैष्ठ्यमाह ।

क्षम्यतामिति किं वाच्यं प्रसीदेति किमुच्यताम् ।
क्षमाप्रसादसंपूर्णः स्वभावादेव मे गुरुः ॥ १५ ॥

इतिश्रीबोधसारेगुरुस्तवाभिधं प्रकरणम ॥ १ ॥

क्षम्यतामिति । अन्यदेवतास्विव गुरौ क्षम्यतां क्षमस्वेति किं वाच्यं किमर्थं वक्तव्यं निरर्थकमेव तत्तत्रेत्यर्थः । तथा प्रसीदेति प्रसन्नो भवेति किमुच्यतां किमर्थं वक्तव्यं तदपि निरर्थकं तत्रेत्यर्थः । कुतो निरर्थकत्वं क्षमापनप्रसादनयोस्तत्राह मे इति मद्दृष्ट्येत्यर्थः, गुरुर्मोक्षप्रदोगुरुः परब्रह्मरूपत्वात्स्वभावादेव स्वत एव क्षमाप्रसादसम्पूर्णः क्षमया सहनतया प्रसादेन प्रसन्नतया च संपूर्णः परिपूर्णोऽस्ति, अतः क्षमापनप्रसादनयोर्नैरर्थक्यमिति भावः ॥ १५ ॥

इतिश्रीनरहरिशिष्यदिवाकरकृतौ बोधसारदीप्तौ
गुरुस्तवार्थप्रकाशः प्रथमः ॥ १ ॥

अथ शिष्यविवेकः।

एवं मुमुक्षूणां गुरौ सर्वदेवताभ्यः श्रैष्ठ्यनिरूपणेन गुरौभक्तिदार्ढ्यं विधायेदानीं कुमतिकृतकुतर्कैः पण्डितमन्यैर्गुरुशिष्यसाम्यप्रतिपादनेन गुरुभक्तिशैथिल्यं माभूदिति गुरुशिष्यविवेकाख्यं प्रकरणमेकोनविंशतिश्लोकमारभ्यते, तत्र तावत्कुमतिकृततर्केण गुरुशिष्यसाम्यं सूचयन्नुपक्रमाह।

बीजं गुरूपदेशो हि जिज्ञासुः क्षेत्रमुच्यते।
विवेकांकुरजो बोध द्रुमो मोक्षस्तु तत्फलम् ॥१॥

बीजमिति। गुरूपदेशो महावाक्यजन्यं जीवब्रह्मैक्यविषयं ज्ञानं युक्त्या प्रतिपादितं बीजमहंब्रह्मेत्याकारनिश्चयवृक्षस्य कारणत्वेन बीजस्थानीयं, हि प्रसिद्धं बीजं वृक्षकारणमिति सर्वेषामित्यर्थः। जिज्ञासुः स्वस्वरूपं ज्ञातुमिच्छुः शिष्यः क्षेत्रं प्रसिद्धबीजवपनाय क्षेत्रमिवोपचर्यते उच्यतेऽतः भूमिरिति कथ्यते विद्वद्भिरिति शेषः। विवेकाङ्कुरजः सदसद्विवेक एवांकुरस्तस्माज्जात उत्पन्नो बोधद्रुमः अहंब्रह्मास्मीति साक्षाज्ज्ञानं तदेव द्रुमो वृक्षो, मोक्षस्तु तत्फलं मुक्तिर्ज्ञानवृक्षफलमित्युपचर्यते, वस्तुतस्तु तु शब्देन मोक्षस्य जन्यत्वं नास्तीति सूचितम्। इति क्षेत्रबीजयोर्वृक्षजननं प्रति कारणत्वेन साम्यमिव गुरुशिष्ययोर्बोधं प्रति साम्यमेवेत्याक्षेपः ॥ १ ॥

सिद्धान्ती दृष्टान्तदार्ष्टान्तिकयोः कारणत्वे समानेपि निमित्तत्वोपादानत्वाभ्यां तयोर्न्यूनाधिकत्वमित्याशयेनाह।

यद्यपि क्षेत्रबीजाभ्यां विना न द्रुमसंभवः।

किं तु बीजमुपादानं निमित्तं क्षेत्रमुच्यते ॥२॥

यद्यपीति। यद्यपि एतत्सत्यमित्यर्थः, क्षेत्रबीजाभ्यां क्षेत्रेण
जिन च विना ऋते द्रुमसम्भवो वृक्षोत्पत्तिर्न भवत्येव, तर्हि
म्यस्य कागतिरिति चेत्तत्राह किन्तु, तथापि बीजं वृक्षस्यो-
दानमुपादानकारणं क्षेत्रं भूमिर्निमित्तं निमित्तकारणमु-
यते कथ्यते विवेकिभिरिति शेषः, इदमेव गुरोः शिष्याच्छ्रे-
ष्ठ्यमिति भावः॥ २॥

इदानीमुपादानपरिणामवत्वेन दृष्टान्तदार्ष्टान्तिकयोरुपा-
ानस्यैव श्रेष्ठत्वमाह।

द्रुमो बीजपरीणामो न क्षेत्रपरिणामकः।
बोधो गुरुपरीणामो न शिष्यपरिणामकः॥ ३॥

द्रुमइति। द्रुमो वृक्षो बीजपरीणामो बीजस्य सजातीयको-
ादानस्य परीणामो विकारः क्षेत्रपरिणामकः क्षेत्रस्य भूमेः प-
िणामको विकारो न न भवति, तथा बोधो जीवब्रह्मैक्यज्ञानं
ुरुपरीणामो गुरोः सच्चिदानन्दरूपगुरोः परीणामो विकारः
शिष्यपरिणामकश्चिज्जडरूपस्य शिष्यस्य परिणामको विकारो
न भवति, गुरुबोधयोरैकजात्येन बोधस्य गुरुकार्यत्वं बोध-
शिष्ययोर्वैजात्येन निमित्तनैमित्तिकत्वम्। अतः बोधं प्रति गुरो-
ुख्यत्वं शिष्यस्य गौणत्त्वमिति भावः॥ ३॥

ननु वृक्षबोधयोर्बीजगुरुकार्यत्वं कुतो निश्चेयं तत्राह।

द्रुमो हि बीजजातीयः क्षेत्रजातीयको न हि।
बोधो हि गुरुजातीयः शिष्यजातीयको न हि॥४॥

द्रुमोहीति। हि यस्मात्कारणाद् द्रुमो वृक्षो बीजजातीयो बीजजातिभवः क्षेत्रजातीयको भूमिजातिभवो न हि नैवाऽस्ति, बोधो हि जीवात्मैकत्वज्ञानमपि गुरुजातीयो गुरुजातिभवः सच्चिदानन्दत्वस्यैक्यात्, शिष्यजातीयकः चिज्जडशिष्यजातिभवो न हि नास्त्येवेत्यर्थः ॥ ४ ॥

एतदेव स्पष्टमाह।

बीजेन बीजजातीयस्तरुः क्षेत्रे समर्पितः।

गुरुणा स्वात्मजातीयो बोधः शिष्ये समर्पितः ॥५॥

बीजेनेति। बीजेन वटादिकारणबीजेन बीजजातीयो बीजजातिभवो वृक्षस्तरुः क्षेत्रे भूमौ समर्पितः स्थापितः, तथा गुरुणा ब्रह्मस्वरूपेण महावाक्योपदेष्ट्रा स्वात्मजातीयोऽखण्डानन्दब्रह्मस्वरूपो बोधो ब्रह्मात्मैक्यज्ञानं शिष्ये शुद्धान्तःकरणेऽधिकारिणि समर्पितः स्थापितः, अतः शिष्यो निमित्तत्वान्न्यूनो गुरुस्तूपादानत्वादधिक इति निश्चेतव्यम् ॥ ५ ॥

एवमुपादानतया गुरोर्बोधं प्रति प्राधान्यं निमित्ततया च शिष्यस्य गौणत्वं च प्रतिपाद्येदानीं तदेव स्थूणानिखननन्यायेन द्रढयितुमाक्षिप्य दृष्टान्तान्तरेण स्थापयति।

वह्निप्रभा हि वर्त्तिस्था तमो हन्ति प्रकाशते।

तमोहन्त्री प्रकाशात्मा प्रभैव न तु वर्त्तिका ॥ ६ ॥

वह्नीत्यादिद्वाभ्याम्। हि प्रसिद्धमेवेदं वह्निप्रभा अग्नेः प्रकाशरूपा शक्तिर्वर्तिस्था कार्पाससूत्रमाश्रिता तमो गृहादिस्थितं नेत्रावरकमन्धकारं हन्ति नाशयति स्वयं च प्रकाशते

प्रकाशरूपा वर्त्तते । तत्रेति शेषः, वर्त्तिप्रभासमूहे लोकदृष्ट्याऽन्ध-
कारनिवारणप्रकाशलक्षणे कार्ये साम्यप्रतीतावपि न तु सा प्रती-
तिस्तात्विकी भ्रान्तिरेव सा, विवेके तु तमो हन्त्यन्धकारनि-
रसनक्षमा प्रकाशात्मा प्रकाशस्वरूपा प्रभैवाऽग्निशक्तिरेव न तु
वर्त्तिका वर्त्तिका तु अन्धकारनाशक्षमा न भवतीत्यर्थः ॥ ६ ॥

दार्ष्टान्तिकमाह ।

गुरुप्रभा हि शिष्यस्था तमो हन्ति प्रकाशते ।
तमोहन्ता प्रकाशात्मा गुरुरेव न शिष्यकः ॥७॥

गुरुप्रभेति । हि स्तथार्थः, तथा गुरुप्रभा गुरुरूपाखण्डजीवा-
मैक्यविषयाऽहंब्रह्मास्मीत्याकारा प्रमारूपा वृत्तिः शिष्यस्था
साधनसंपन्नान्तःकरणविशिष्टचिदाभासमाश्रिता सती तमो वृत्तेः
स्वरूपाज्ञानं हन्ति नाशयति प्रकाशते स्वयं प्रकाशात्मरूपतया
ऽवशिष्यते, अत्रापि तत्रेतिशेषः । अज्ञाननाशप्रकाशनलक्षणे कार्ये
ऽन्तःकरणावच्छिन्नचिदाभासस्य साधिष्ठानस्य गुरूपदिष्टज्ञानस्य
च कारणत्वे समे प्रतीतेपि सा प्रतीतिः पारमार्थिकी न भ्रान्ति-
कृतैव सा, विवेके तु तमोहन्ता वृत्तेः स्वरूपाबोधलक्षणान्धका-
रस्य तमसो हन्ता नाशकः प्रकाशात्मा स्वयंप्रकाशतयाऽवशि-
ष्टस्वरूपश्च गुरुरेवास्ति न शिष्यकोऽल्पः शिष्योऽज्ञाननाश-
समर्थो न भवतीत्यर्थः । बोधे बोधावसाने च गुरोरेवावशिष्ट-
त्वाच्छिष्यस्य च बोधकाले तस्य च स्वरूपलयावस्थायामपि
असत्वाच्च गुरोः प्राधान्यं शिष्यस्य गौणत्वमिति भावः ॥ ७ ॥

पुनरपि तदेव द्रढयति दृष्टान्तान्तरेण द्वाभ्याम् ।

यदाग्निः काष्ठमारुह्य भस्मसात्कुरुते पुरीम् ।
भस्मासात्कारणं तत्र गुणो वह्नेर्न काष्ठगः ॥८॥

यदिति । यद्यस्मात्कारणादग्निर्दाहकत्वेन प्रसिद्धो वह्निः काष्ठं दार्वादिकं दाह्यं वस्तु आरुह्याश्रित्य पुरीं नगरीं भस्मसाद्भस्मावशिष्टां कुरुते, तत्र वह्निकाष्ठयोरुभयोरपि भस्माऽवशेषणलक्षणे कार्ये कारणत्वप्रतीतिसाम्येपि अविवेक एव सा प्रतीतिः, विवेकदृष्ट्यातु तत्र वह्निकाष्ठयोर्मध्ये भस्मसात्कारणं भस्मावशेषणकार्यस्य कारणमुपादानकारणं वह्नेर्गुण एवाग्नेर्दाहकशक्तिरेव न काष्ठगो दाह्यकाष्ठनिष्ठा शक्तिर्भस्मावशेषणकार्ये नोपादानरूपेत्यर्थः ॥ ८ ॥

दार्ष्टान्तिकमाह ।

> बोधात्मना गुरुः शिष्यमाविश्य दहति क्षणात् ।
> यद्द्वैतं सा गुरोः शक्तिर्न शिष्यस्येति निर्णयः ॥ ९ ॥

बोधात्मनेति । एवं बोधात्मना जीवब्रह्मैक्यबोधरूपेणैव गुरुरखण्डैकचिन्मात्रः परमात्मा शिष्यं साधनसहितान्तःकरणवृत्त्युपहितचैतन्यरूपमाविश्य प्रविश्य क्षणात्क्षणमात्रेणैव यद्द्वैतं द्वैतप्रतीतिकारणं यदंशरूपमज्ञानं तद्दहति नाशयति सा द्वैतनाशकर्त्री गुरोरखण्डचिन्मात्रपरमात्मनः शक्तिः सामर्थ्यं शिष्यस्यान्तःकरणावच्छिन्नचिदाभासस्य न तत्सामर्थ्यं न भवतीत्यर्थः, तत्कार्यत्वात्तस्य इति निर्णय एवं निर्णीतोऽर्थः सर्वशास्त्रेषु नास्मत्कपोलकल्पित इति भावः । अत्र युगलयोर्द्वयोर्मध्ये पूर्वयुगले वह्निप्रभावत्योस्तमोनाशप्रकाशनलक्षणकार्ये कारणत्वसाम्यमिव बोधबोध्यरूपगुरुशिष्ययोरज्ञाननाशनस्वरूपप्रकाशनलक्षणकार्यं प्रति समानत्वमित्याक्षेपः, वह्निप्रभाया एव प्रधानत्वमिवाज्ञाननाशप्रकाशलक्षणे कार्ये गुरोरेव मुख्यत्वमिति समाधानम् । उत्तरयुगले तु भस्मावशेषलक्षणे कार्ये वह्निकाष्ठयोः

साम्यमिव द्वैतदाहलक्षणे कार्ये गुरुशिष्ययोः साम्यमित्याक्षेपः, समाधानं तु नगरदाहलक्षणे कार्ये वह्निशक्तेः प्राधान्यमिव द्वैतदाहस्वरूपे कार्ये गुरुशक्तेरेव प्राधान्यमिति विवेकः ॥ ९ ॥

इदानीं पुनरपि तदेव द्रढयितुं पूर्वोत्तरपक्षेण निर्णयमाह सार्धाभ्याम् ।

यद्यप्युदयने भानोर्यथा पद्मं प्रकाशते ।
न काशन्ते तथा पद्माः काष्ठपाषाणमृण्मयाः ॥ १० ॥

यद्यपीति । भानोः सूर्यस्योदयन उदये जाते सति यथा यादृक् पद्मं कमलं प्रकाशते प्रफुल्लति, तथा तादृक् काष्ठपाषाणमृण्मयाः काष्ठकृतानि पाषाणकृतानि मृत्कृतानि च पद्माः कमलानि 'पद्मोऽस्त्री'त्युक्तत्वात्पुंस्त्वं नपुंसकत्वं चात्र पद्मशब्दस्य, न काशन्ते न प्रफुल्लन्ति तेषु तत्कमलत्वमारोपितं न तु वास्तवमिति भावः ॥ १० ॥

दृष्टान्तपूर्वकं दार्ष्टान्तिकमाह ।

प्रकाशको रविर्यद्वत्पद्ममेव विकासयेत् ।
गुरुस्तथा बोधकः सच्छिष्यमेव प्रबोधयेत् ॥ ११ ॥

प्रकाशकइति । यद्वद्यथा प्रकाशकः प्रकाशकर्ता रविः सूर्यः पद्ममेव वास्तवकमलमेव न त्वारोपितं विकासयेत् प्रफुल्लं कुर्यात्, तथा तद्वद्बोधक उपदेष्टा गुरुः शिष्यमेव सच्छिष्यमेव न तु नाममात्रं प्रबोधयेत्प्रबोधितं कुर्यात् ॥ ११ ॥

इदानीमुक्तदृष्टान्तेन गुरुशिष्यसाम्यानुवादेनोक्तं तद्दूरीकरोति ।

प्रकाशकस्य महिमा प्रकाश्यादधिकः किल ।

सूक्ष्मं विशेषं वक्ष्यामि गुरुसूर्यस्य तं शृणु॥१२॥

प्रकाशकस्येति । हे शिष्य प्रकाश्यात्प्रकाशकर्मभूतात्कम-लादेः परिच्छिन्नात्प्रकाशकस्य प्रकाशयितुः सूर्यादेरपरि-च्छिन्नस्य महिमा महत्त्वमधिक उत्कृष्टः किलेति निश्चेतव्यं नात्र सन्देहः कार्य इति । एवं श्रीगुरोः शिष्यादाधिक्यं प्रतिपाद्ये-दानीं पूर्वप्रकरणे सर्वदेवेभ्यः श्रीगुरोः श्रैष्ठ्यं प्रतिपादितं यत्त-दत्र सूर्यदृष्टान्तेन तत्साम्यस्फूर्त्या ध्वस्तमतस्ततोऽपीदानीं गुरोः श्रैष्ठ्यं दर्शयति तच्छ्रवणे च शिष्यं सन्मुखीकरोति सार्धाभ्यां सूक्ष्ममिति, हे शिष्य त्वं गुरुसूर्यस्य गुरुरूपादित्यस्य प्रसिद्धा-दित्यात्सूक्ष्मं विचारमन्तरेण ज्ञातुमशक्यं विशेषं श्रेष्ठत्वेन का-रणत्वातिशयं वक्ष्यामि तं विशेषं त्वं शृणु सावधानतया श्रो-तव्य इत्यर्थः ॥ १२ ॥

तदेवाह ।

तत्तद्विवेकवैराग्ययुक्तवेदान्तयुक्तिभिः ।
शिष्यं नयति गुर्वर्कः स्वैक्यं स्वाद्भिन्नमप्यहो॥१३

तत्तदिति । गुर्वर्को गुरुरूपः सूर्यस्तत्तद्विवेकवैराग्ययुक्तवे-दान्तयुक्तिभिः, तत्त्वमादिपदार्थयोर्विवेकश्चानात्मपदार्थेषु वै-राग्यं वैतृष्ण्यं च ताभ्यां युक्ता या वेदान्तयुक्तयोऽन्वयव्य-तिरेकाद्यास्ताभिर्लक्षितैर्वचनैरितिशेषः, स्वाद्गुरुरूपाद् भिन्नं भेदं प्राप्तमपि शिष्यं साधनसंपन्नमन्तःकरणावच्छिन्नं चिदाभासं स्वैक्यं स्वेनाखण्डैकरसब्रह्मणा सहैकत्वं नयति प्रापयति अहो इदमाश्चर्यं गुराविति भावः ॥ १३ ॥

प्रसिद्धसूर्ये तदभावं दर्शयति ।

विकासकोऽपि तपनो न पद्मं स्वैकतां नयेत् ।
तस्मात्सर्वात्मभावेन सेव्या श्रीगुरुपादुका ॥१४॥

विकासकोपीति । तपनः सूर्यो विकासकोऽपि पद्मानां प्रका-
कोऽपि पद्मं कमलं स्वैकतां सूर्यभावं न नयेन्नप्रापयेत् । तस्मा-
सूर्यादपि गुरोराधिक्यात्सर्वात्मभावेन सर्वत्रात्मभावनया श्री-
रुपादुका गुरुचरणारविन्दं सेव्या सेवितुं योग्या मुमुक्षूणां न
न्यत्, पादुकापदं चात्र यथार्थगुरुस्वरूपज्ञानाभावे प्रतिमावद्-
रुपादुकापूजाधिकार इति मुमुक्षूणां सूचनायेति ज्ञेयम् ॥ १४ ॥

ननु दातुः पात्रस्य च दानक्रियां प्रति साम्यमिव बोध-
क्रियां प्रति गुरुशिष्ययोः साम्यं कुतो न स्यादित्याक्षिप्य समाधत्ते ।

तत्सत्यं दातृपात्राभ्यां विना दानं न सिद्ध्यति ।
तथापि पात्रं पात्रं स्याद्दाता परमकारणम् ॥१५॥

तदिति । दातृपात्राभ्यां दाता दानकर्त्ता पात्रं प्रतिगृहीता
। ताभ्यां विना तौ वर्जयित्वा दानं दानक्रिया न सिध्यति
सिद्धा न भवति तत्सत्यं प्रामाणिकमेवेदं, तथापि तयोः साम्यं
। भवति । कुतः, पात्रं प्रतिगृहीता पात्रं धान्यसंचयनाद्यर्थं कुसू-
लादिवत्पात्रं स्याद्दातुर्देयस्य संचयनार्थं पात्रमेव स्यादतो
। मुख्यत्वं तस्येत्यर्थः । दाता दानकर्त्ता परमकारणं मुख्यं का-
रणं तस्यैव तद्धेतुत्वादित्यर्थः । बोधं प्रत्युपादानत्वेन बोधा-
वस्थायां तच्छेषत्वेन च गुरोरेव प्राधान्यं शिष्यस्य तु निमि-
त्तमात्रत्वेन गौणत्वमिति भावः ॥ १५ ॥

इदानीं स्पर्शमणेरपि गुरोर्वैलक्षण्यद्योतनेन ततोऽपि गुरोः
श्रैष्ठ्यमाह द्वाभ्याम् ।

भवेत्स्पर्शमणिस्पर्शाल्लोहं स्वर्णं न तन्मणिः ।
गुरुस्पर्शमणिस्पर्शात्स एव भवति क्षणात् ॥१६॥

भवेदिति । स्पर्शमणिस्पर्शात्स्पर्शनामकमणेः स्पर्शात्संयोगाल्लोहमयः स्वर्णं कनकं भवेत्स्यात् तच्च मणिः स्पर्शमणिर्न भवेत्,गुरुस्पर्शमणिस्पर्शाद् गुरुरेव स्पर्शमणिस्तत्संयोगाच्छिष्यः स एव गुरुरेव क्षणादुपदेशक्षणे एव भवति स्याद्,अयमेव स्पर्शमणेर्विशेषो गुरुस्पर्शमणाविति भावः ॥ १६ ॥

सिद्धान्तयति ।

एवं विवेकतो धीमन्नुपयोगो द्वयोरपि ।
शिष्यो निमित्तमात्रं स्याद्गरिष्ठा गुरुपादुका ॥ १७ ॥

एवमिति । हे धीमन्निति सम्बोधनेन मूर्खाणान्तु गुरुशिष्ययोः साम्यं भासतु तव त्वेतदयोग्यमिति सूचितम् । एवमुक्तरीत्या विवेकतो विवेकेन बोध उपयोगो फलजनकत्वं द्वयोरपि उभयोरप्यविशेषेणास्ति, तथापि शिष्यो बुध्यवच्छिन्नः साधनसंपन्नश्चिदाभासो निमित्तमात्रं निमित्तमेव केवलं गुरुपादुका प्राधान्याद्गुरुः पादुकापदप्रयोगतात्पर्यं पूर्वमेवोक्तं गरिष्ठाऽतिश्रेष्ठाऽऽदरार्हेत्यर्थः ॥ १७ ॥

ननु वासिष्ठे ग्रन्थे ।

'उपदेशक्रमो राम व्यवस्थामात्रपालनम् ।
ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवलम्' ॥

इत्यादिवाक्ये गुरोः सकाशाच्छिष्यस्यैव श्रैष्ठ्यमुक्तमत्र तद्विरुद्धं गुरोः श्रैष्ठ्यं भवद्भिः कथं प्रतिपाद्यत इत्याशङ्क्य तस्यान्यार्थकत्वान्नैवमिति परिहरति ।

उपदेशक्रमो राम व्यवस्थामात्रपालनम्।
इत्यादि वचनं तत्तु शिष्योत्साहविवृद्धये॥ १८॥

उपदेशेति। 'उपदेशक्रमो राम व्यवस्थामात्रपालनमि'त्यादि-वचनं यत्तत्तु तत्सदृशमन्यदपि वाक्यजातमादिपदाद्ग्राह्यं शिष्योत्साहविवृद्धये शिष्यान्तःकरण उत्साहं विना बोधो न भवेदिति तदभिवृद्ध्यर्थं तदिति योज्यम्। अन्यथा।

'यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात्।
तावन्न सद्गुरुं कश्चित्सच्छास्त्रमपि नोलभेद्' ॥

इत्यादिबहुवाक्यविरोधादिति भावः॥ १८॥

इदानीमेतत्प्रकरणार्थप्रामाण्यप्रतिपादनपूर्वकं तत्फलोक्त्या तद्विचारकर्तव्यतां विधत्ते।

सिद्धान्तः सर्वतन्त्राणां सद्यः प्रत्ययकारकः।
सर्वदा भावनीयोऽयं गुरुशिष्यविनिर्णयः॥ १९॥

इति श्रीनरहरिविरचिते बोधसारे गुरुशिष्यतत्त्वविवेकाख्यं
द्वितीयं प्रकरणम्॥ २॥

सिद्धान्त इति। सर्वतन्त्राणां सर्वशास्त्राणां सिद्धान्तः सिद्धान्तभूतोयम्। अनेन प्रामाण्यमुक्तं, एतत्प्रकरणस्य फलमाह सद्यः प्रत्ययकारको विचारसमय एव गुर्वाधिक्यप्रतीतिद्योतकः, अयं गुरुशिष्यविनिर्णयो गुर्वाधिक्यनिर्णायकं प्रकरणमिदं सर्वदा निरन्तरं भावनीयो विचार्यः॥ १९॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारदीप्तौ
गुरुशिष्यतत्त्वविवेकप्रकाशो द्वितीयः॥ २॥

---

अथ ब्रह्मजिज्ञासा।

एवं शिष्यस्य गुरौ श्रद्धामान्द्यनिमित्तं कुतर्कमूलं गुरौ स्वसाम्यं यदुत्पन्नं तद्युक्त्या परिहृत्य यदर्थं गुरुसेवा कर्त्तव्या तदर्थनिरूपणार्थमिदानीमुत्तरं प्रकरणमारभते पञ्चभिः।

अथातो ब्रह्मजिज्ञासा जिज्ञास्यं ब्रह्म केवलम्।
तटस्थलक्षणेनाथ स्वरूपस्य च लक्षणात्॥ १॥

अथेति। अथ गुरुशरणगमनानन्तरमतो मुमुक्षूणां ब्रह्मज्ञानस्यैवेष्टत्वादित्यर्थः, ब्रह्मजिज्ञासा कर्त्तव्येति शेषः। ब्रह्मण इति कर्मणि षष्ठी, ननु ब्रह्मणोज्ञानविषयत्वे सद्वितीयत्वं तेन चावस्तुत्वे तस्य ज्ञानप्रयोजकत्वेन शास्त्राप्रामाण्यापत्तिः, अद्वितीयत्वे च ज्ञानाविषयत्वेन तत्प्रतिपादकशास्त्रस्य निर्विषयत्वेनाप्रामाण्यापत्तिः, अतः कथं ब्रह्मणो जिज्ञासाकर्मत्वमित्याशङ्क्याह केवलं निरुपाधिकं ब्रह्म देशकालवस्तुपरिच्छेदशून्यं जिज्ञास्यं ज्ञानेच्छाविषयो न तु सोपाधिकमतः पूर्वोक्तदोषो नेति भावः। सर्वनिषेधेन तस्यैवावशेषत्वात्तज्ज्ञानस्य पुरुषार्थत्वं तत्प्रतिपादकशास्त्रस्याऽपि सप्रयोजनत्वेन च प्रामाण्यमिति भावः, ननु निरुपाधिकस्य कथं ज्ञानविषत्वं तत्राह तटस्थेति, तटस्थलक्षणेन तत्कारणत्वादिद्योतकानि लक्षणानि शास्त्रादीनि यथैकदेशस्थत्वेपि चन्द्रलक्षकाणि तद्वदेतानि ब्रह्म वस्तुतोऽस्पृष्ट्वैव तल्लक्षकाणि भवन्ति, अतस्तेषां तटस्थत्वं जातित्वादेकवचनं च, स्वरूपस्य चाथ तटस्थलक्षणेन लक्षयित्वाऽनन्तरामित्यर्थः, स्वरूपस्य सत्यज्ञानादिस्वरूपस्य लक्षणानि प्रतिपादकानि तैर्लक्षणैर्ब्रह्म केवलं ज्ञानविषयो भवतीति भावः। एताभ्यां लक्षितं ज्ञानेछाविषय इत्युपचर्यते न तु वास्तवविषयत्वं ब्रह्मणो जिज्ञासात्याशयः॥ १॥

तत्र तटस्थलक्षणं निरूपयति ।

उत्पत्तिस्थितिनाशानां मूलकारणमीश्वरः ।
सर्वज्ञः सत्यसङ्कल्प इत्यादिषु तटस्थता ॥ २ ॥

उत्पतीति । उत्पत्तिस्थितिनाशानां जगत उत्पत्तेः स्थिते र्नाशस्य च मूलकारणं कारणं माया तदाधारो मूलकारणमीश्वर इशनादिशक्तिमान्सर्वज्ञः सर्वजगत्प्रकाशकः सत्यसंकल्पः सफलसंकल्पवानित्यादिषु 'यतो वा इमानि भूतानि जायन्त'इत्यादिषु वाक्येष्वित्यर्थः' तटस्थता तटस्थलक्षणं ज्ञेयम् ॥ २ ॥

स्वरूपलक्षणमाह ।

सच्चिदानन्दरूपं तत्स्वप्रकाशं परात्परम् ।
अनण्वित्यादिवेदोक्तं स्वरूपस्य तु लक्षणम् ॥३॥

सदिति । तद्ब्रह्म सच्चिदानन्दरूपं सदबाध्यं चिज्ज्ञप्तिमात्रस्वरूपमानन्दं निरतिशयसुखं रूपं यस्य तत् 'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे'त्यादिषूक्तं स्वप्रकाशं स्वयं ज्योतिः स्वरूपम्, 'अत्रायं पुरुषः स्वयं ज्योतिर्भवती'ति श्रुतावुक्तं परात्परं परं कारणं जगतो माया तस्या अपि परं तयाऽस्पृष्टमित्यर्थः । अनण्वित्यादिवेदोक्तमणुत्वादिप्रतिषेधकविशेषणैरुक्तं यत्तत्स्वरूपस्य तुपदेन पूर्वलक्षणादेतस्य महद्वैलक्षण्यं द्योतितं, लक्षणं लक्षकं ब्रह्मणो ज्ञेयम् ॥ ३ ॥

इदानीमस्मिन्ग्रन्थे मोक्षे प्रधानसाधनभूतस्य ज्ञानस्यापेक्षितान्यन्यसाधनानि सन्ति तन्निरूपणं प्रतिजानीते ।

गुणप्रधानभावेन यद्यत्किञ्चिदपेक्षितम् ।
नानाप्रकरणव्याजैस्तत्सर्वमभिधीयते ॥ ४ ॥

गुणेति । गुणप्रधानभावेन गौणमुख्यभावेन यद्यत्साधनं प्रधानसाधनभूतज्ञानस्योपेक्षितमीप्सितं तत्सर्वं ज्ञानानुकूल्येनास्मिन्ग्रन्थे नानाप्रकरणव्याजैरनेकप्रकरणमिषेण मयेत्यध्याहार्यम्, अभिधीयते प्रतिपाद्यते ॥ ४ ॥

तन्निरूपणक्रमपीठिकां रचयति ।

बहिरङ्गान्तरङ्गाणां साधनानामनुक्रमः ।
यदन्तरङ्गं यस्मात्तु तत्पश्चात्तु निरूप्यते ॥ ५ ॥

इति श्रीनरहरिविरचिते बोधसारे ब्रह्मजिज्ञासाप्रकरणं तृतीयम् ॥३॥

बहिरिति । साधनानां प्रधानसाधनज्ञानसाधनानां बहिरङ्गान्तरङ्गाणां कतिचिज्ज्ञानस्य बहिरङ्गाणि कतिचिदन्तरङ्गाणीति साधनानां भेदः, अतस्तेषामनुक्रमोऽनुक्रम्यन्तेऽनेनेत्यनुक्रमः क्रमेणज्ञानमपेक्षितमतो यस्मात्साधनाद्यद्यद्दित्यर्थः, तत्तत्तदित्यर्थः, पश्चादनन्तरं बहिरङ्गं प्रथमतो निरूप्य पश्चात्ततोन्तरङ्गमित्यर्थः, तुपदेन वैलक्षण्यद्योतनपूर्वकमिति ज्ञेयं, निरूप्यते कथ्यते। एवमस्मिन्ग्रन्थे उत्तरप्रकरणेषु क्रमो ज्ञेयः ॥५॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ ब्रह्मजिज्ञासार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

अथ वैराग्यपीठिका बन्धः ।

एवं मोक्षे मुख्यसाधनभूतज्ञानस्य साधनानुक्रमनिरूपणं प्रतिज्ञायेदानीं सर्वसाधनेभ्यो बहिरङ्गत्वेन प्राथम्याद्वैराग्यस्य तज्ज्ञानं प्रथममपेक्षितमतस्तदर्थं वैराग्यपीठिकाबन्धाख्यं सार्धषट्षष्टिश्लोकं प्रकरणमारभते। तत्रावान्तरप्रकरणानि सप्त वैराग्यभेदनिरूपण कायाविडम्बना वृत्तिविडम्बना कामविडम्बना क्रोध-

विडम्बना लोभविडम्बना कर्मविडम्बनाऽऽख्यानि सन्ति, तानि क्रमेण निरूप्यन्ते । तत्रादौ वैराग्यभेदानिरूपणाख्यं पञ्चदशश्लोकं निरूपितं तद्व्याख्यायते तत्रादावेतत्प्रकरणश्रवणाय शिष्यं प्रेरयति ।

वैराग्यपीठिकाबन्धं प्रथमं शृणु सन्मते ।
न नेमिरेव यत्रास्ति स्थितिश्चक्रस्य कीदृशी ॥ १ ॥

वैराग्येति । हे सन्मत इति सम्बोधनेनैतच्छ्रुत्वाऽवधारणमेव सन्मतित्वं तव युक्तमिति सूचितं, त्वं प्रथममादौ वैराग्यपीठिकाबन्धो वैराग्यस्य पीठिकाऽनुक्रमो बध्यते रच्यतेऽनेनेति वैराग्यक्रमबोधकं प्रकरणं शृणु श्रवणे सावधानो भवेत्यर्थः, ननु मुमुक्षो मोक्षस्यैवेष्टत्वात्तत्प्रधानीभूतसाधनज्ञानस्यैवेष्टत्वमतस्तत्प्रतिपादकवेदान्तश्रवणाद्येव कर्त्तव्यं किं वैराग्येणेत्याशङ्क्य वैराग्यं विना कृतेऽपि श्रवणादौ ज्ञानस्थिरता न न भवेदित्याशयेनाह नेति, यत्र चक्रे नेमिरेव सर्वाङ्गेषु सत्स्वपि तच्चलनकारणभूता धारैव केवलं नास्ति तस्य चक्रस्य स्थितिश्चलनरूपे कार्ये स्थिरता कीदृशी कथं स्यान्न कथमपीत्यर्थः, तथा वैराग्यं विना ज्ञानस्याज्ञाननाशनलक्षणे कार्ये सामर्थ्यमेव न स्यादिति भावः ॥ १ ॥

एतदेवस्पष्टमाह ।

न शूद्रे वेदसंस्कारस्तैलञ्च सिकतासु न ।
न स्यात्करतले रोम तथा मुक्तिर्न रागिणि ॥ २ ॥

नेति । शूद्रे वेदसंस्कारो वेदोक्तो व्रतबन्धादिसंस्कारो न नास्ति सिकतासु वालुकासु तैलञ्च तैलमपि न नास्ति । यथेति सर्वत्र योज्यं, यथा यादृक्करतले हस्ततले रोम केशो न नास्ति तथा तादृ-

ग्रागिणि विषयासक्तपुरुषे मुक्तिर्ज्ञानफलरूपो मोक्षो न स्यान्न सम्भवेदतो मुमुक्षूणां प्रथमं वैराग्यमेवेष्टमित्याशयः ॥ २ ॥

एवं ज्ञानमुख्यसाधनभूतवैराग्यस्वरूपप्रतिपादकशास्त्रश्रवणे शिष्यमभिमुखीकृत्येदानीन्तद्भेदं निरूपयति ।

वैराग्यं द्विविधं सूक्ष्मं तद्भेदमवधारय ।
जिज्ञासामुख्यमेकं स्याज्जिहासामुख्यमेव च ॥ ३ ॥

वैराग्यमिति । वैराग्यं विषयवैतृष्ण्यं द्विविधं द्विप्रकारमस्तीतिशेषः, ननु वैराग्यं स्वरूपेणैकधैव प्रतीयतेऽतः कथं द्वैविध्यमुच्यत इत्याशङ्क्याह सूक्ष्ममिति, सूक्ष्मं तल्लक्षणभेदज्ञानं विना दुर्ज्ञेयं तद्भेदं तस्य वैराग्यस्य भेदं मत्तोऽवधारय श्रुत्वा निश्चिनु, तमेव प्रतिज्ञातं निरूपयति जिज्ञासेति, एकं वैराग्यं जिज्ञासामुख्यं ब्रह्मज्ञानेच्छैव मुख्या निदानभूता यस्मिन्तत्स्याद्भवेच्च पुनरन्यज्जिहासामुख्यमेव त्यागेच्छैव मुख्या निदानभूता यत्र तदपि द्वितीयं वैराग्यमित्यर्थः ॥ ३ ॥

ननु किंविषया जिज्ञासा जिहासा चेति तज्ज्ञानापेक्षायामाह ।

जिहासा संसृतेर्ब्रह्मजिज्ञासेति द्वयं मुने ।
एकमेव तथाप्यस्ति विशेषः कश्चिदत्र हि ॥ ४ ॥

जिहासेति । संसृतेः संसारस्य जिहासा त्यक्तुमिच्छा ब्रह्मजिज्ञासा ब्रह्मणोऽपरिच्छिन्नात्मवस्तुनो जिज्ञासा ज्ञातुमिच्छेति जिहासाजिज्ञासयोर्विषयभेदोऽवगन्तव्यः, इदानीं तयोरपि भेदं निरूपयितुं तत्र विशेषं दर्शयति द्वयमिति । द्वयं द्वितयमपि एकमेकैकमेवत्याद्वृत्तिरेकैकरूपमपीत्यर्थः, तथापि उभयत्रैकैकथा प्रती-

तावपीत्यर्थः, कश्चिद्विशेषः किञ्चिद्वैलक्षण्यमत्र द्विविधवैराग्येऽस्ति विद्यते हीति प्रसिद्धिद्योतकेनेदं विशेषभानं विदुषां प्रसिद्धमेवेति सूचितम् ॥ ४ ॥

तत्रोभयत्राऽपि मन्दमध्योत्तमभेदेन त्रैविध्यमस्ति, तेष्वपि प्रथमतो मन्दं जिहासामुख्यं सोदाहरणं लक्षयति ।

राज्यभ्रष्टा दीर्घरोगाः पराधीना हतश्रियः ।
ये विरक्तास्तपस्यन्ति जिहासामुख्यमेव तत् ॥५॥

राज्येति । राज्यभ्रष्टा राज्याच्च्युताः पुनाराज्याप्राप्तिं कारणैर्निश्चित्य दीर्घरोगा जन्मत आरभ्य मरणपर्यन्तं स्वशरीरे निश्चित्तरोगाः पराधीना मरणपर्यन्तं स्वपराधीनत्वनिश्चया हतश्रिय गतसंपत्तिकाः पुनस्तत्प्राप्त्यभावनिश्चया एतदादिकारणैर्ये पुरुषा विरक्ता विषयभोगवितृष्णासन्तस्तपस्यन्ति एतादृशं जन्म मा भूदितोप्युत्कृष्टं स्वाधीनसर्वसंपत्तिकं जन्म स्याद्यस्मिन्नेतानि दुःखानि न स्युरितीच्छया तपः कुर्वन्ति तदिह जन्मनि प्रतीयमानं यद्विषयवैतृष्ण्यं तत्त्यागेच्छामूलकत्वाज्जिहासामुख्यमेव त्यागेच्छाप्रधानमेव ज्ञेयमिति शेषः । अस्य च जन्मान्तरीयभोगहेतुकत्वादधमत्वमिति भावः ॥ ५ ॥

इदानीं सोदाहरणमधमं जिज्ञासामुख्यं लक्षयति द्वाभ्याम् ।

आधिव्याधिभयोद्वेगपारतन्त्र्यादिवर्जिताः ।
ये धीरा मुक्तिमिच्छन्ति शृणु तेषामयं क्रमः ॥६॥

आधीति । आधिव्याधिभयोद्वेगपारतन्त्र्यादिवर्जिता आधिर्मानसं चिन्तादिजन्यं दुःखं व्याधिर्देहदुखं ज्वरादिजन्यं भयं भीतिरुद्वेगश्चित्तास्थैर्यजन्यः क्लेशः । पारतन्त्र्यं पराधीनते

त्यादिभिर्दुःखैर्वर्जिता रहिता ये धीरा ब्रह्मचर्यादिसाधनसंपन्ना दुःखाद्यनुद्विग्नाश्च सन्तो मुक्तिं मोक्षमिच्छन्ति तेषां तद्वैराग्यं जिज्ञासामुख्यमेव ज्ञानेच्छामुख्यमेव ज्ञेयमित्युत्तरेणान्वयः, एतद्वैराग्यवत उदाहर्त्तुं तच्छ्रवणे शिष्यमभिमुखीकरोति ।

शृण्विति, तेषामुक्तलक्षणानां जिज्ञासामुख्यवैराग्यवतामयं मद्वाक्स्थितो मत्प्रत्यक्षः क्रमो मन्दजिज्ञासावैराग्यवत्वबोधक आचारः कथ्यत उत्तरश्लोके तं शृणु श्रुत्वा चावधारय तदाचारे ज्ञाते तेषु स्थितमन्दजिज्ञासामुख्यवैराग्यज्ञानं स्यादिति भावः ॥ ६ ॥

तदेवोदाहरति ।

कामधेनुर्गृहे येषां निवासो नन्दनेवने ।
कश्यपाद्यास्तपस्यन्ति जिज्ञासामुख्यमेव तत्॥७॥

कामधेनुरिति । येषां कश्यपादीनां गृहे मन्दिरे कामधेनुः सर्वकामदोग्ध्री गौः सुरभिरस्ति येषां कश्यपादीनां निवासो वसत्यस्मिन्निति निवासो गृहं नन्दने वने नन्दननाम्नीन्द्रवनेऽस्ति, सर्वभोगप्राप्तिकारणकामधेनुप्राप्तौ सर्वे कल्पतरवः सर्वकामपूरका यत्र सन्ति तत्रैव वासप्राप्तौ सत्यामपि सर्वभोगसुखे सत्यपि नन्दनादेत्य कश्यपाद्या ऋषयो वैराग्यपूर्वकं तपस्यन्ति तपः कुर्वन्ति, इदमेवाधमजिज्ञासामुख्यं वैराग्यमिति भावः ॥७॥

एवं मन्दजिहासामुख्याजिज्ञासामुख्ययोर्वैराग्ययोर्भेदं प्रदर्श्य मध्यमयोस्तयोर्भेदज्ञानाय वैलक्षण्यं प्रदर्शयति त्रिभिः । तत्र प्रथमतो मध्यमं जिहासामुख्यं लक्षयत्येकेन ।

आधिव्याधिभयोद्वेगपारतन्त्र्यादिपीडिताः ।

ये जीवा मोक्षमिच्छन्ति जिहासामुख्यता तु सा ॥८॥

आधीति। आधिव्याधिभयोद्वेगपारतन्त्र्यादिपीडिताः आध्यादीनामर्थ उक्त एव तैः पीडिताः पीडां प्राप्ताः सन्तो ये केचिज्जीवा मोक्षं संसारदुःखान्मुक्तिमिच्छन्ति अभिलषन्ति सा तु विरक्तता तुपदेन पूर्वोक्तजिहासामुख्यवैराग्यान्मुक्तीच्छारहितान्मुक्तीच्छाजनकत्वरूपं वैलक्षण्यमत्र सूचितं, जिहासामुख्यताऽस्ति जिहासायास्त्यागेच्छाया मुख्यता प्राधान्यं यस्यां विरक्ततायां सा तथोक्ताऽतोऽस्य वैराग्यस्य मध्यमत्वमिति भावः ॥ ८ ॥

जिज्ञासामुख्यं मध्यमं वैराग्यं लक्षयति द्वाभ्याम्।

मानुष्यं दुर्लभं प्राप्तं सच्छास्त्रैः संस्कृता मतिः।

यदि न ब्रह्मविश्रान्तिस्तदस्माभिः किमर्जितम् ॥९॥

मानुष्यमिति। दुर्लभं दुःसाध्यं बहुपुण्यैः प्राप्यमित्यर्थः, मानुष्यं मनुष्यजन्म प्राप्तं लब्धं तत्रापि सच्छास्त्रैर्वेदान्तानुकूलैः शास्त्रैः सह वेदान्तैरित्यर्थः, मतिर्बुद्धिः संस्कृता सूक्ष्मा जाता यदि अथापि यर्हि ब्रह्मविश्रान्तिरपरिच्छिन्नानन्दे चितस्थैर्यं न न स्याच्चेत्तर्हि अस्माभिः किमर्जितं किं संपादितं न किमपीत्यर्थः, मिथ्यात्वात्सर्वस्येत्यर्थः ॥ ९ ॥

इत्येवं व्यवसायेन ह्याकाशफलपातवत्।

जिज्ञासयन्ति ये धीरा जिज्ञासामुख्यता तु सा॥ १०॥

इतीति। इत्येवं एवंप्रकारेण व्यवसायेन निश्चयेनाकाशफलपातवत्काकतालीयन्यायेनेत्यर्थः, हि प्रसिद्धमेतद्वासिष्ठादावित्यर्थः, धीराः साधनसंपन्नाः सन्तो ये रामादयो जिज्ञास-

यन्ति जिज्ञासां कुर्वन्ति 'तत्करोति तदाचष्टे' इति णिच्। सा तेषां विरक्तता जिज्ञासामुख्यता ज्ञानेच्छाया मुख्यता यस्यां सा तथा ज्ञेयेति शेषः॥ १०॥

एतद्वैराग्यवतोऽप्युदाहरति।

विरोचनः कार्त्तवीर्यो बलिः श्रीराघवादयः।
विरक्ता राजलीलायां ते हि तत्र निदर्शनम्॥११॥

विरोचनइति। विरोचनो दैत्यो बलेः पिता कार्त्तवीर्यः कृतवीर्यस्य राज्ञः पुत्रः सहस्रार्जुन इत्यर्थः, बलिर्विरोचनपुत्रो दैत्यः श्रीराघवादयः श्रीराघवो रामचन्द्रस्तदादयस्तत्प्रभृतयः पुराणेषु प्रसिद्धा बहवः सन्ति राजलीलायां सहजेपि राजकर्मणि दुःखरहितेपि प्रजापालनादिरूपे कर्मणीत्यर्थः, विरक्ता उदासीनाः स्थिता इति शेषः। ते हि प्रसिद्धास्ते तत्र मध्यमजिज्ञासामुख्यवैराग्ये निदर्शनं निदर्श्यते प्रदर्श्यतेऽनेनेति तदुदाहरणमित्यर्थः, करणे ल्युड्ज्ञेयमिति शेषः॥ ११॥

एवं मध्यमजिहासामुख्यजिज्ञासामुख्यवैराग्ये दर्शयित्वोत्तमे ते दर्शयति द्वाभ्यां, तत्रादावुत्तमं जिहासामुख्यं दर्शयाति।

तीव्रात्संसारवैराग्याद्ब्रह्मजिज्ञासनं यदि।
वैराग्यं पुण्यजीवानां जिहासामुख्यमेव तत्॥१२॥

तीव्रादिति। तीव्राद्वेगवत्तरात्संसारवैराग्यात्संसारे वैराग्यं प्राप्येत्यर्थः, यदि यर्हि ब्रह्मजिज्ञासनं ब्रह्मज्ञानेच्छा केवलं स्यात्तद्वैराग्यं पुण्यजीवानां तद्बहुपुण्यैर्जीवानां जायते परन्तु जिहासामुख्यमेव जिहासैव मुख्या यत्र तत्तथा ज्ञेयमिति शेषः॥ १२॥

उत्तमं जिज्ञासामुख्यं वैराग्यं दर्शयति ।

ब्रह्मजिज्ञासया तात तीव्रया यो विधीयते ।
विरागो दृश्यभावेषु जिज्ञासामुख्यमेव तत् ॥ १३ ॥

ब्रह्मेति। हे तात यो विरागो यद्वैराग्यं दृश्यभावेषु द्रष्टव्यपदार्थेषु तीव्रया दृढया ब्रह्मजिज्ञासया ब्रह्मज्ञानेच्छया विधीयते क्रियते तद्वैराग्यं जिज्ञासामुख्यमेव जिज्ञासैव मुख्या यत्र तत्तथा जिज्ञासाया एव प्रथमत उत्पन्नत्वादिति भावः ॥ १३ ॥

अथ सप्तमं पूर्वषड्वैराग्यविलक्षणं वैराग्यमाहार्धेन ।

सहजं यस्य वैराग्यं का वाच्या तस्य मुख्यता ।
अथ दोषाः प्रदर्श्यन्ते वैराग्यं दोषदर्शनात् ॥१४॥

सहजमिति । यस्याधिकारिधुरीणस्योत्तमाधिकारिण इत्यर्थः, सहजं स्वाभाविकं न तु दोषदृष्टिजनितं सर्वत्रात्मदर्शनाद्गुणदोषदृष्टिरहितत्वाच्च दोषदृष्टिरहितत्वाज्जिहासामुख्यं न प्राप्तस्वरूपत्वात्स्वाभाविकं सर्वत्रानात्मदृष्टिरूपं यद्वैराग्यमस्ति तस्य का मुख्यता जिहासाजिज्ञासयोर्मध्ये कस्य प्रधानता वाच्या वक्तव्या न कयोरपीत्यर्थः, अत एव पूर्वोक्तषड्वैराग्येभ्य इदं श्रेष्ठं विलक्षणं चेति भावः। एवं सप्तविधं वैराग्यं सलक्षणमभिधायेदानीं तस्य दोषदर्शनजन्यत्वात्तज्जननार्थं दोषप्रदर्शनं प्रतिजानीते सार्धेनाथेति, अथ वैराग्यभेदप्रदर्शनानन्तरं दोषदर्शनाद्दोषज्ञानाद्वैराग्यं जायतेऽतः दोषा दूषणानि प्रदर्श्यन्ते प्रदर्शयित्वा निरूप्यन्त इत्यर्थः ॥ १४ ॥

कथयामि समासेन सावधानमना: शृणु ।

५

असमञ्जसतां साधो समारभ्य शरीरतः ॥१५॥

इतिश्रीबोधसारे वैराग्यपीठिकाबन्धे वैराग्यविवेचनं प्रकरणम् ॥ १ ॥

कथयामीति। हे साधो वैराग्यादिसाधनसंपादक शरीरतः शरीरात्समारभ्य प्रारभ्य सर्वविषयेषु असमञ्जसतां दोषरूपत्वं समासेन संक्षेपेण कथयामि निरूपयामि त्वं सावधानमनाः स्थिरचित्तो भूत्वेत्यर्थः, शृणु अवधारय ॥ १५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकाबन्धार्थप्रकाशे वैराग्यविवेचनार्थप्रकाशः प्रथमः ॥ १ ॥

---

एवं वैराग्यं विविच्य दर्शयित्वा प्रतिज्ञातान्विषयदोषान्दर्शयिष्यन्प्रथमतः शरीरदोषान्दर्शयितुं कायविडम्बनाख्यं प्रकरणमाह नवभिः, तत्र तावच्छरीरे रम्यताप्रतीतिरन्यद्रव्यकृता न तु स्वतो रम्यत्वं शरीर इत्याशयेनाह।

यं भूषयन्ति कनकैर्वसनैश्चन्दनैरपि।
अविचारत एवायं कायो रम्यत्वमागतः ॥ १ ॥

यमिति। लोकाः कनकै सौवर्णालङ्कारैर्वसनैर्वस्त्रैः कञ्चुकोष्णीषादिभिश्चन्दनैरपि चन्दनादिसुगन्धिद्रव्यैश्च यं देहं भूषयन्ति भूषणैर्वस्त्रैश्चालं कुर्वन्ति चन्दनादिभिः सुगन्धयन्तीति विवेकः, यदि देहे स्वतो रम्यत्वं स्यात्तर्हि भूषणादिधारणं व्यर्थं स्यात्तथा यदि सुगन्धित्वं स्यात्तर्हि चन्दनादिलेपनं व्यर्थं स्याद्, अरम्यत्वमेव स्वतो देहे तत्तिरस्कारार्थं भूषणादिधारणं तथा दुर्गन्धित्वं स्वतो देहे तद्दूरीकरणाय चन्दनादि-

ना लेपः क्रियतेऽतोऽरम्यत्वं प्रत्यक्षमेव, तथापि अविचारत एव केवलमविवेकेनैवायमरम्यतया प्रत्यक्षः कायः शरीरं रम्यत्वं सुन्दरत्वमागतः प्राप्तः सुवर्णवस्त्रादीनां सुन्दरत्वं चन्दनादीनां सुगन्धित्वमरम्ये दुर्गन्धिस्वभावे देह आरोप्य तस्यारम्यत्वं दुर्गन्धित्वं च तिरस्कृत्यायमेव देहो रम्यः सुगन्धरूप इति प्रतीतिरस्ति, सा भ्रान्तिमात्रमिति भावः ॥ १ ॥

इदानीमरम्यत्वमेव देहस्य स्पष्टमाह ।

अस्य क्रव्यादभक्ष्यस्य कृशानोरिन्धनस्य च ।
परिणामकृशस्यैव केन कायस्य रम्यता ॥ २ ॥

अस्येति । क्रव्यादभक्ष्यस्य क्रव्यादा मांसाहारिणो जीवा व्याघ्रादयस्तेषां भक्षितुं योग्यस्य कृशानोरिन्धनस्य चाऽग्नेः काष्ठादिवद्दाह्यस्य, एताभ्यां मांसादिरूपत्वेन दाहसमयेऽनुभूयमानदुर्गन्धित्वेन चारम्यता स्पष्टैवेति ज्ञापितं, जाड्यरूपत्वेन च परिणामकृशस्यैव ज्वरादिभिर्मध्ये मध्ये वृद्धत्वेन चान्ते दुर्बलस्यापि, एतेन कृशावस्थायामरम्यत्वं दुर्गन्धित्वं च स्पष्टमेवेति ज्ञापितमिति ज्ञेयम् । अस्य कायस्योक्तलक्षणस्य शरीरस्य रम्यता सुन्दरत्वं स्नेहास्पदत्वं केन किं विषया न कापीत्यर्थः ॥२॥

ननु सुखभोगाश्रयत्वेन स्नेहास्पदत्वमस्त्यतो रम्यत्वमित्याशङ्क्य तन्नामनिरुक्त्या तदभावं दर्शयति ।

कलेर्वरमिदं स्थानं विग्रहो मूर्त्तिमानसौ ।
पञ्चभूतनिवासोऽयं कथं तत्र सुखी भवेत् ॥३॥

कलेरिति । इदं शरीरं कलेः कलहस्याधर्मबहुलस्य कालस्यापि वरं श्रेष्ठं स्थानं स्थीयतेऽस्मिन्निति स्थानं गृहं दुर्ग च

यथा सार्वभौमस्य सर्वा पृथिवी स्थानमपि निजाभिमानविषयं गृहं दुर्गं वा क्वचिद्देशे वर्तते, तत्र तत्स्थितिर्नित्यं दृश्यते। तथा कलहकालिकालयोरपि सर्वब्रह्माण्डव्याप्तयोः शरीरे स्वीयाभिमानेन नित्यं स्थितिर्ज्ञेया, अतः किंचित्कालं स्थितयोः क्वचिद्देशे तयोर्दुःखहेतुत्वं दृष्टं तत्कुतस्तयोर्नित्यस्थाने देहे सुखाशङ्केति भावः। पुनश्चासौ देहो मूर्त्तिमानाकारवान्विग्रहो युद्धं सर्वभूतानां भौतिकानामिन्द्रियाणां च परस्परं विरुद्धस्वभाववत्त्वेन तेषां च कार्यत्वाद्देहस्य विग्रहरूपत्वमिति भावः। किं चाऽयं देहः पञ्चभूतनिवासः पञ्चभूतानां निवासो वसतिर्यस्मिन्स गृहमस्ति, यत्र यत्र युद्धं भूतप्रवेशश्च जायते तत्र तत्र सुखं न भवतीति प्रत्यक्षमतः सर्वदा विग्रहरूपे पञ्चभूतनिवासे च देहे कुतः सुखाशङ्केति भावः, तत्र देहे कथं सुखी भवेन्न कथमपीत्यर्थः॥ ३॥

ननु देहे सर्वदा सुखं मास्तु तथापि गर्भवासे सर्वबाह्योपाध्यभावात्तत्र सुखं स्यादिति तत्रैव वासः सर्वप्रयत्नैः साध्यः शुकेनापि गर्भे द्वादशवर्षं स्थितमत एवेति पुराणप्रसिद्धेरित्याशङ्क्य तत्रापि दुःखसत्वे हेतुमाह।

> कारागृहं गर्भवासो बाल्यं केवलमूढता।
> तत्रापि दुःसहात्यन्तं पराधीनतया स्थितिः॥ ४॥

कारागृहमिति। गर्भवासो मातुरुदरे वासः स्थितिः कारागृहं कारा वन्धनं तस्य गृहं शालाऽस्ति वन्धनहेतुत्वात्तत्रापि न सुखमिति भावः, ननु गर्भस्थशरीरे सुखं मास्तु बालत्वे तु स्नेहः सर्वैः क्रियतेऽतस्तत्र सुखं स्यादिति तदेव सर्वदा सर्वप्रयत्नैः संपाद्यमित्याशङ्क्य तत्रापि तदभावहेतुं दर्शयति बा-

ल्यमिति, बाल्यं बालत्वं केवलमूढता केवलमत्यन्तं मूर्खत्वमेव । तद्दुःखहेतोरज्ञानस्य तत्र सत्वात्सुखहेतोर्ज्ञानस्य चात्यन्ताभावाच्चात्यन्तं दुःखास्पदमेव बाल्यमिति भावः, किं च तत्रापि अतिदुःखहेतावपि बाल्ये पराधीनतयाऽऽहारविहारादिषु अस्वाधीनतया स्थितिः स्थानमत्यन्तमतिशयं दुःसहा सोढुमशक्या, इदं दुःखं तु सार्वजनीनानुभवविषयमिति भावः ॥४॥

ननु युवावस्थायां शरीरे सर्वकार्ये च स्वातन्त्र्यात्सर्वविषयभोगजन्यसुखसत्त्वाच्च तदेव साध्यमित्याशङ्क्य तत्रापि तदभावहेतुनिरूपणपूर्वकं तदसत्त्वं दर्शयति ।

कामबाणैर्यत्र पीडा कामिनीविरहज्वरः ।
पुष्कला पापसंपत्तिर्यौवनं विपदां वनम् ॥ ५ ॥

कामबाणैरिति । यत्र युवदेहे कामबाणैः कामस्य मनोभवस्य बाणैर्मोहनादिभिर्बाणसदृशैर्विकारैः पीडा दुःखं भवतीति शेषः, किं च कामिनीविरहज्वरः कामिनीनां कामवतीनां स्त्रीणां विरहेणाप्राप्तिजन्यदुःखेन ज्वरः सन्तापो भवति यौवने, किं च यौवने पुष्कला वह्वी पापसंपत्तिः सर्वदुःखकारणभूतपापनिष्पत्तिर्जायतेऽतो यौवनं युवावस्था विपदां दुःखवृक्षाणां वनं समूह एव कुतः सुखाशङ्का तत्रेति भावः ॥ ५ ॥

ननु जरावस्थायां कामाद्यभावात्पुत्रादिभिरादरणीयत्वाच्च सुखमस्त्वित्याशङ्क्याह ।

उन्नताऽनततां यातो जराक्षारविधूसरः ।
पुराणकूष्माण्डसमः कायो वृद्धस्य गर्हितः ॥ ६ ॥

उन्नतेति । उन्नतानततां गमने क्रियमाणे उन्नततामुच्चत्वमा-

नततां नम्रत्वं च यातः प्राप्तः कटिदेशे निर्वलत्वेनोन्नमनानमने पीडाजन्ये एवेति भावः, किं च जराक्षारविधूसरो वृद्धत्वनिमित्तकक्षारेण धूसरवर्णो भवतीत्यर्थः, क्षारपदेनात्र तज्जनितं तद्दुःखं लक्ष्यते। किं च पुराणकूष्माण्डसमः पुराणकूष्माण्डवदन्तर्निःसार इत्यर्थः, वृद्धस्य जरिणः कायो देहो गर्हितः सर्वजनैरनादृतो भवतीति शेषः, सर्वजनकृतानादरजन्यं दुःखं तत्र भवतीति सूचितम् ॥ ६ ॥

ननु मरणे सर्वदुःखकारणदेहाद्युपाधिरहितत्वात्सुखं स्यादित्याशङ्कमानं प्रत्याह।

मरणस्य तु किं वाच्यं मृत्युदूतभयं ततः।
नरके तु महद्दुःखं स्वर्गे पतनजं भयम् ॥ ७ ॥

मरणस्येति। मरणस्य तु मृतेस्तु किं वाच्यं तत्र दुःखं वचनानर्हमेव सर्वदुःखपरमावधित्वस्य सर्वलोकप्रत्यक्षत्वादनिर्वचनीयत्वाच्च न वाच्यं तदिति भावः, ननु मरणानन्तरं सुखं स्यादित्याशङ्क्याह मृत्युदूतेति, ततः मरणानन्तरं मृत्युदूतभयं मृत्योर्यमस्य ये दूतास्तेभ्यो भयं भीतिर्जायतेऽतस्तत्रापि दुःखमस्तीत्याशयः, तत इत्यावर्त्तनीयम्, अनन्तरं नरके तु तुशब्देनोक्तसर्वदुःखेभ्यो नरके महद्दुःखं भवतीति सूचितं, ननु पुण्यकर्मिणां स्वर्गप्राप्तौ तत्र दुःखाभावेन तत्प्रार्थ्यमेव स्यादित्याशङ्क्याह स्वर्ग इति, स्वर्गे इन्द्रादिलोके तत्तद्विषयसुखे सत्यपि पतनजं पतनाज्जायमानं भयं भीतिरस्तीति शेषः, भयजनितदुःखसत्त्वात्तत्राऽपि तस्य दुःखरूपत्वमिति भावः ॥ ७ ॥

भोगकालेऽपि स्वर्गसुखे दुःखहेतुं दर्शयति।

उत्तमाधमभावेन तत्राप्यस्ति विडम्बना।
यदि पश्वादियोनिः स्यात्तदा दुःखस्य का कथा॥८॥

उत्तमेति। तत्रापि स्वर्गसुखभोगसमयेऽपि उत्तमाधमभावेनो-च्चनीचत्वबुद्ध्या विडम्बना तिरस्कारादिजनितदुःखमस्ति व-र्त्ततेऽतः स्वर्गे सुखं नास्त्येवेति भावः। ननु तर्हि स्वर्गनर-कयोः सुखाभावेऽपि अन्यत्रैव गतौ सुखं क्वचित्स्यादतः सैव प्रार्थनीया भवेदिति शङ्कामालक्ष्योभयगत्यभावे तृतीया गतिस्त-त्रापि दुःखं दर्शयति यदीति, पश्वादियोनिः स्याद्भवेद्यदि यर्हि तदा तर्हि दुःखस्य दुःखसम्बन्धिनी कथा वार्त्ता का न कापीत्यर्थः, सर्वकार्येषु पराधीनत्वस्य स्पष्टत्वादन-न्तत्वाच्च वचनानर्हमिति भावः॥ ८॥

ननु मरणानन्तरं पुनर्जन्म नेति नास्तिकमतं श्रुत्वा पुनर्ज-न्मास्ति वा नवेति सन्दिहानं प्रत्याह।

पुनर्जन्म पुनर्मृत्युः पुनर्दुःखं पुनर्भयम्।
न जानाति गतिं जन्तुर्निमग्नो मोहसागरे॥ ९॥

इति कायविडम्बना॥ २॥

पुनरिति। जन्म जननं पुनर्मरणानन्तरं स्याद्भवेन्मृत्यु-र्मरणं पुनर्जननानन्तरं स्याद्दुःखं पुनर्दुःखानन्तरं स्या-द्भयं मृत्युः पुनर्जन्मानन्तरंस्यात्, ननु तर्हि जन्ममरणातीत-गतिः कुतो न साध्यते सर्वैरित्याशङ्क्याह नेति, जन्तुर्जीवो मोहसागरे मोहो मूलाज्ञानं तदेव सागर इवापारत्वात्त-स्मिन्निमग्नस्तादात्म्याभिमानं प्राप्तः सन्गतिं सर्वप्रपञ्चाती-तमोक्षरूपां स्थितिं न जानाति अतस्तत्साधन आदरं प-

रित्यज्य पुनः पुनः संसारापत्तिकारणानि कर्माण्येव करोतीति भावः ॥ ९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकार्थप्रकाशे कायविडम्बनार्थप्रकाशो द्वितीयः ॥ २ ॥

अथ वृत्तिविडम्बना ।

एवं शरीरदोषान्प्रदर्श्येदानीं तज्जीवनभूतवृत्तिदोषान्प्रदर्शयितुं वृत्तिविडम्बनाख्यं प्रकरणं सार्धद्विश्लोकमाह, तत्र प्रथमं क्षत्रवृत्तेर्दोषानाह पादेन ।

क्षत्रधर्मे परा हिंसा याच्ञायां लाघवं महत् ।
असत्यमेव वाणिज्ये नानृतात्पातकं परम् ॥ १ ॥

क्षत्रेति । क्षत्रधर्मे क्षत्रियकर्मणि परा हिंसोत्कृष्टा हिंसाऽस्ति अतोऽत्रासक्तिर्न योग्या, ननु ब्राह्मणजीविका निर्दोषेति चेत्तत्राह याच्ञायामिति, याच्ञायां भिक्षावृत्तौ महद्बहु लाघवमनादरणमस्ति, अतोऽनादरजन्यं दुःखमसह्यं तत्रेति भावः, तर्हि वैश्यवृत्तौ दोषो न स्यादिति चेत्तत्राह वाणिज्ये, व्यापारवृत्तावसत्यमेवानृतमेव केवलमस्ति, ननु असत्ये दुःखहेतुत्वं न प्रतीयत इत्याशङ्क्याहानृतान्मिथ्यावचनात्परमन्यदुत्कृष्टं पातकं पापं न नास्ति तदेव श्रेष्ठं पापमित्यर्थः, दुःखहेतोः पापस्य सत्वात्तत्रापि दुःखमस्तीत्याशयः ॥ १ ॥

ननु तर्हि शूद्रवृत्तिः श्रेष्ठा चेत्तत्राह ।

सेवायां परमं कष्टं मृत्कीटस्तु कृषीबलः ।
द्यूते सर्वस्वनाशः स्याच्चौर्ये राजभयं महत् ॥ २ ॥

सेवायामिति । सेवा शूद्रवृत्तिस्तस्यां परममुत्कृष्टं कष्टं दुःखं

प्रसिद्धमेवातः शूद्रवृत्तावप्यादरो न कार्य इति भावः, कृषिवृत्तावपि दोषं दर्शयति मृदिति, कृषीवलः कर्षको मृत्कीटो मृदि कीट इव सदा तिष्ठतीत्यर्थः, तुपदेन सर्ववृत्तिभ्योऽपि तत्र कृषिवृत्तौ दुःखाधिक्यं सूचितमिति ज्ञेयं, ननु द्यूतवृत्तिस्तर्हि समीचीना स्यात्तत्राह द्यूत इति, द्यूते द्यूतवृत्तौ सर्वस्वनाशः स्यात्स्त्रीधनगृहादिनाशः स्याद्भवेदतस्तत्रापि दुःखमेवेति भावः, चौरवृत्तौ तु तत्प्रसिद्धमेवेत्याशयेनाह चौर्य इति, चौर्ये चौरवृत्तौ महदतीव राजभयं राज्ञो भीतिरस्तीति शेषः ॥ २ ॥

नाकाशात्पतति द्रव्यं जीविका सुखदा कथम् ।

इति श्रीनरहरिविरचिते बोधसारे वैराग्यपीठिकाबन्धे वृत्तिविडम्बनाख्यं तृतीयं प्रकरणम् ॥ ३ ॥

नन्वेताभ्यः षड्वृत्तिभ्योऽन्या काचिद्वृत्तिराश्रयणीयेत्याशङ्क्याह नेति, द्रव्यं सर्वजीविकानिदानभूतं द्रव्यं धनमाकाशाद्वियत्तो न पतति न वर्षति एता वृत्तीर्विना न लभ्यत इति भावः, अतो जीविका जीवनहेतुभूतं द्रव्यं वस्तुमात्रमित्यर्थः, सुखदा सुखप्रापिका कथं केन प्रकारेण स्यान्न कथमपीत्यर्थः ।

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकाबन्धार्थप्रकाशे वृत्तिविडम्बनार्थप्रकाशस्तृतीय ॥ १ ॥

---

अथ कामविडम्बना ।

एवं वृत्तिदोषान्प्रदर्श्येदानीं कामस्यैव सर्वसंसारमूलत्वं ‘सोऽकामयत, कामो दाता कामः प्रतिगृहीते’त्यादि श्रुतिभ्यः प्रसिद्धमतस्तत्रासक्तिनिषेधार्थं तद्दोषान्दर्शयितुं का-

मविडम्बनाख्यं प्रकरणमारभते पञ्चभिः श्लोकैः, तत्र तावन्मनुष्येषु मनुष्यस्वभावमाच्छाद्य पिशाचस्वभावं क्रौर्यादिदोषरूपं पिशाचेभ्योऽप्यतिमलिनं प्रकटयति एवं रूपं कामदोषमाह।

चर्वयन्ति महामांसं गते प्राणे पिशाचकाः।
जीवत्परस्परं मांसं स्त्रीपुंसाश्चतुराननाः॥ १॥

चर्वयन्तीति। पिशाचकाः पिशाचाः कप्रत्ययेन कामिपिशाचेभ्यः पिशाचेषु पिशाचत्वं न्यूनमेवेति सूचितं, ते प्राणे गते सति प्राणवियोगे जाते सति प्रेतानां महामांसं पुरुषादिमांसं स्वयमपि प्राणवियोगे जाते पिशाचत्वं प्राप्येत्यर्थोऽपि ज्ञेयः, चर्वयन्ति खादन्ति तत्तेषां स्वधर्मत्वान्न क्रौर्यं गणनीयमिति भावः, तेभ्यः पुरुषेषु कामिषु तदाधिक्यं दर्शयति जीवदिति, स्त्रीपुंसाः स्त्रियश्च पुमांसश्च स्त्रीपुंसाः परस्परं मिथुनीभूयेत्यर्थः, जीवत्परस्परं जीवतामेव परस्परमन्योन्यमित्यर्थः, मांसं चर्वयन्ति खादन्ति। ननु परस्परमांसभक्षणे कृते कुतो न ज्ञायते मन्मांसं भक्षतीति, ज्ञाते च कुतो न निवारयन्तीत्याशङ्क्याह चतुराननाः भक्षणे चतुराण्याननानि मुखानि येषां ते, सर्वप्रयत्नैः संपादितानि प्राणवत्प्रियाणि धनान्येव मांसतुल्यानि वा परस्परदुःखपरिहारादिजीवनादिचिन्तया परस्परं मांसशोषणं भवति तदेव भक्षणमुपचर्यते, भक्षकत्वेपि परस्परं भक्षकत्वाप्रतीतिरेवाननानां चातुर्यमिति विवेकः, मनुष्यत्वं दूरीकृत्य पिशाचत्वं संपादितमित्ययं कामस्य महान्दोषो दर्शित इति ज्ञेयम्॥ १॥

पुनरपि तदेव प्रकारान्तरेण दर्शयति।

नृदेहैर्निशि नृत्यन्ति श्मशानेषु पिशाचकाः।

विचित्ररङ्गविन्यासैर्गृहेषु गृहमेधिनः ॥ २ ॥

नृदेहैरिति। पिशाचकाः पिशाचाः कप्रत्ययार्थस्तूक्त एव नृदेहैः स्वदेहैर्नृत्यं कर्तुं लज्जिता इव मनुष्यशरीराणि धृत्वेत्यर्थः, तत्रापि निशि रात्रौ तत्रापि श्मशानेषु अमङ्गलस्थानेषु शवदाहदेशेषु नृत्यन्ति नृत्यं कुर्वन्ति गृहमेधिनो गृहधर्मेषु हिंसाप्रायेषु शीलं येषान्ते तथोक्ताः कामिनः स्वदेहैरेव दिने रात्रौ च निर्लज्जा भूत्वा गृहेषु स्वस्थानेष्वेव विचित्रैर्भावहावविशिष्टैरङ्गविन्यासैर्हस्ताद्यङ्गस्थापनैर्नृत्यं कुर्वन्ति, अतः कामिनां पिशाचेभ्योऽप्यतितरामविवेकित्वं तत्कामस्यैव दोषजातमिति भावः ॥ २ ॥

एवं कामिषु पिशाचचेष्टानुकरणं प्रदर्श्येदानीं श्वचेष्टामपि तेषु दर्शयति।

लिहति स्पृशति भ्रान्तो मुहुर्जिघ्रति खादति।
ग्रामसिंहानुरूपेयं ग्राम्यधर्मव्यवस्थितिः ॥ ३ ॥

लिहतीति। यथा श्वा कश्चिदन्नमांसचर्मादिपदार्थं दृष्ट्वा भ्रान्तः सन्दिशि दिशि भ्रममाणः प्रथमतस्तं स्पृशति स्पर्शेन निश्चिनोति मुहुः पुनस्तत भक्ष्यं वाऽन्यत्किञ्चिदिति संदेहे जिघ्रति घ्राणेन निश्चिनोति तत्रापि संदेहे लिहति जिह्वया स्वादु वाऽस्वादु निश्चिनोति ततश्च निःसंदेहं खादति भक्षति, एवं श्वस्वभावव्यवस्था दृष्टैव सर्वैरित्यर्थः, एवमेव ग्राम्यधर्मव्यवस्थितिः कामवतां स्वभावव्यवस्थाऽपि। सेयं ग्रामसिंहानुरूपा शुनामेव योग्येत्यर्थः, एवं विपरीतस्वभावः कामकृत एवेति भावः ॥ ३ ॥

विषयेषु दुःखरूपेषु सत्स्वपि कामेन भ्रान्तानामेव तेषु सुखरूपत्वनिश्चयो भवतीत्याशयेनाह।

कण्डूयनेन यत्कण्डूसुखं तत्किं भवेत्सुखम् ।
पश्चाद्यत्र महापीडा तथा वैषयिकं सुखम् ॥ ४ ॥

कण्डूयनेनेति। कण्डूयनेन नखादिना घर्षणेन कण्डूसुखं घर्षणजन्यं सुखमिव यत्प्रतीयते तत्किं सुखं भवेन्नैव तत्सुखमित्यर्थः, कुतो न तत्सुखमित्यत आह यत्र घर्षणजन्ये सुखे पश्चाद्घर्षणानन्तरं महापीडा महतीव पीडा दुःखमस्ति तथा तद्वद्वैषयिकं विषयघर्षणजन्यं सुखं सुखमिव प्रतीयते परन्तु तद्दुःखमेव नाशरोगचिन्तादिदुःखैर्बहुभिर्व्यामिश्रत्वाद्विषसंपृक्तान्नं विषमिव तत्सुखं दुःखमेवेति भावः ॥ ४ ॥

स्त्रीषु तु स्वस्य पुनः पुनर्मारकत्वेनातीव शत्रुरूपत्वे सत्यपि मित्रबुद्धिस्तत्र कामकृतभ्रान्त्यैवेत्याशयेनाह।

नादासक्तं मृगं व्याधश्छिनत्ति निशितैः शरैः ।
रूपासक्तं नरं नारी रतिच्छुरिकयाऽसकृत् ॥ ५ ॥

इति कामविडम्बना ॥ ५ ॥

नादेति। व्याधो मृगयुर्नादासक्तं मृगयुकृतगायनलुब्धं मृगं हरिणं निशितैस्तीक्ष्णैः शरैर्बाणैश्छिनत्ति भिनत्ति तत्तु एकवारमेव नारी स्त्री रूपासक्तं स्वरूपलुब्धं नरं पुरुषं रतिच्छुरिकया रतिर्मैथुनमेव च्छुरिका क्षुरस्तयाऽसकृन्नित्यमेव च्छिनत्तीत्यहो व्याधादपि क्रूरत्वं स्त्रीणामतीवेति भावः ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकाबन्धार्थप्रकाशे कामविडम्बनार्थप्रकाशश्चतुर्थः ॥ ४ ॥

## अथ क्रोधविडम्बना ।

एवं कामदोषान्प्रदर्श्येदानीं क्रोधेऽतिदुष्टत्वस्य सर्वजनप्रसिद्धत्वात्संक्षेपेण तद्दोषान्प्रदर्शयितुं क्रोधविडम्बनाख्यं प्रकरणमेकश्लोकमारभते राक्षसादप्यतिक्रौर्यं क्रोधवति दर्शयति।

रुधिरं पिबति स्वीयं दिवा तमसि नृत्यति ।
भीषयत्यात्मनात्मानं क्रूरः क्रोधी न राक्षसः॥१॥

इति श्रीबोधसारे क्रोधविडम्बनाख्यं प्रकरणम् ॥ ५ ॥

रुधिरमिति । क्रोधी क्रोधवान्स्वीयं स्वकीयं रुधिरमसृक्पिबति प्राश्नाति, स्वीयदेहेपि निर्दयस्य परदेहे कुतो दयाशङ्केति भावः, 'स्वापत्यभक्षणं यत्र परापत्येषु कादये'ति न्यायाद्राक्षसस्तु परकीयं रुधिरं पिबति न स्वीयमतो दयासत्वात्कदाचिदपि परदेहेऽपि सा स्यादिति राक्षसे क्रौर्यन्यूनत्वमिति भावः, किञ्च क्रोधी दिवा दिवस एव तमसि अन्धकारे नृत्यति नृत्यं करोति क्रोधिनः प्रकाशरूपेऽपि दिनेऽन्धकारप्रतीतेरतीवाविवेकित्वं राक्षसे तु तमस्येव तमःप्रतीतेरविवेकस्य न्यूनत्वमिति भावः। किञ्च क्रोध्यात्मना स्वेनैवात्मानं स्वं भीषयति भयं प्रापयति राक्षसस्तु अन्यं भीषयति अतः स्वस्मिन्सदयत्वस्य विद्यमानत्वात्कदाचिदन्येष्वपि तत्ततः स्यात्क्रोधवति तु तदभावान्न तदाशङ्केति भावः, अतः क्रोध्येव क्रूरो निष्ठुरतरो न राक्षसो राक्षसस्तु क्रूरो न क्रूरतर इति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकार्थप्रकाशे क्रोधविडम्बनार्थप्रकाशः पञ्चमः ॥ ५ ॥

———

अथ लोभविडम्बना।

एवं क्रोधदोषान्प्रदर्श्येदानीं लोभस्यैव सर्वमोक्षसाधनपरिपन्थित्वात्तस्य दोषान्विस्तरेण प्रदर्शयितुं लोभविडम्बनाख्यं प्रकरणमेकविंशतिश्लोकमारभते, तत्रादौ पिशाचादिभ्योऽपि बुद्धेरतिभ्रामकत्वं लोभे दर्शयति।

न पिशाचा न डाकिन्यो न भुजङ्गा न वृश्चिकाः।
संभ्रान्तयन्ति मनुजं यथा लोभो धियं रिपुः ॥१॥

नेति। पिशाचाः प्रेता न डाकिन्यो न भुजङ्गाः सर्पा न वृश्चिका न, एते सर्वेपि प्रत्येकं मिलिता वा मनुजं मनुष्यं संभ्रान्तयन्त्यपि तथा न संभ्रान्तयन्ति, तथा कथं, यथा येन प्रकारेण लोभो लोभाख्यो वृत्तिविशेषो धियं बुद्धिं संभ्रान्तयति तथा, अतः स एव रिपुः शत्रुतर इति भावः। मनुष्यपदेन वृश्चिकादीनां मनुष्यत्वबुद्धिमात्रभ्रामकत्वं न त्वन्यजन्मविषयबुद्धिभ्रामकत्वमतस्तेषु शत्रुत्वं प्रसिद्धमेव न शत्रुतरत्वं, लोभस्य तु केवलबुद्धिमात्रभ्रामकत्वेन जन्मान्तरविषयबुद्धिभ्रामकत्वसिद्धेः शत्रुतरत्वं गोश्वौ पशू इति न्यादिति भावः ॥ १ ॥

एवं लोभस्य शत्रुत्वं प्रदर्श्येदानीं शत्रुजयेच्छायां शत्रुजयोपायाश्चत्वारः सामदानभेददण्डाख्याः सन्ति, तेषु समञ्जसे शत्रौ सामोपयुज्यते लोभे त्वसामञ्जस्येन तस्यानुपयोगं निश्चित्य दानरूपोपायेन शत्रुं जिगीषुमालक्ष्य शिष्यं गुरुस्तदनुपयोगं दर्शयति।

मेरवो घृतबिन्द्वाभा दुराशादावपावके।
कथं सहस्रलक्षाद्यैस्तर्हि तृप्यतु लोभवान् ॥ २ ॥

मेरव इति। मेरवः कनकाचला अपरिमिता दुराशादाव-

पात्रके विषयाशैवारण्याग्निस्तस्मिन्घृतविन्द्राभा घृतविन्दुतुल्या भवन्तीत्यर्थः, तदा तर्हि लोभवान्स लोभो यस्मिन्विद्यते स पुरुषविशेषः सहस्रलक्षाद्यैः सहस्रलक्षादिसङ्ख्यापरिमितैर्द्रव्यैरिति शेषः, कथं तृप्यतु तृप्तो भवेन्न कथमपीत्यर्थः, अतो दानरूपोपायोऽपि निरुपयोगीति भावः ॥ २ ॥

एवं लोभरूपशत्रुजये सामदानयोरनुपयोगित्वं प्रदर्श्योऽत्र भेदोपयोगं निश्चित्य तस्मिन्बलाबलविचारस्य कर्त्तव्यतायां तद्बलं दर्शयति ।

आनिद्रं प्रातरारभ्य जाग्रति स्वप्नपूर्ष्वपि ।
भ्रमन्नो लभते शान्तिं स लोभस्य पराक्रमः ॥३॥

आनिद्रमिति । अयं जीवः प्रातरारभ्य प्रातर्जागरणादारभ्याऽऽनिद्रं निद्रापर्यन्तं जाग्रति जागरावस्थायां भ्रमन्भ्रान्तः सन्स्वप्नपूर्ष्वपि स्वप्ननगरेष्वपि अपिशब्दान्मनोरथादौ भ्रान्तः सञ्छान्तिं स्थैर्यसुखं नो लभते न प्राप्नोति तत्कारणं यत्स लोभस्य लोभरूपशत्रोः पराक्रमो बलं निश्चेतव्यम् ॥ ३ ॥

इदानीं मनुष्यत्वं दूरीकृत्य सर्पभूतादिस्वभावजननमपि लोभबलकृतमेवेत्याह ।

निधानं यक्षसर्पाद्या यदाक्रामन्ति यत्नतः ।
न पिबन्ति न खादन्ति तेषां हि गुरवः शठाः॥४॥

निधानमिति । ये यक्षसर्पाद्या यक्षाः प्रेतादयः सर्पाद्याः सर्पवृश्चिकादयो निधानं द्रव्यपूर्णं पात्रं दानभोगाद्यनुपयोगेऽपि आक्रामन्ति आक्रम्य तिष्ठन्ति यत्नतो यत्नेन न पिबन्ति न खादन्ति स्नानपानाद्युपायेन व्ययं न कुर्वन्तीत्यर्थः, तेषां मध्ये शठा

दानाद्युपयोगरहितधनरक्षका गुरवः श्रेष्ठाः, यद्वा तेषां गुरव उपदेष्टारस्तेषां पिशाचादीनां तथा धनरक्षणमेतस्माच्छिक्षितमिति तेषां न्यूनत्वमेतस्मादिति भावः, तेषां पिशाचादीनां ज्ञानाभावेऽनुपयोगितया द्रव्यरक्षणं न निन्द्यमिति ध्वनितं, मनुष्याणां तु तत्सत्वेऽपि पिशाचवत्तद्रक्षणं निन्द्यमेवेति पिशाचेभ्योऽपि निकृष्टत्वसम्पादनमिति लोभपराक्रमः सूचितः ॥ ४ ॥

इदानीं दानभोगहीनधनरक्षणं व्यर्थमेवेत्याह।

दानभोगविहीनं च यदेव धनिनो धनम्।
न तु तस्य मुखे धूलिर्दीयते भूमिगोपनैः ॥ ५ ॥

दानेति। दानभोगविहीनं दानाभावात्परलोकहितं न भवति भोगाभावादैहिकसुखासाधकं च भवति अतो यदुभयलोकासाधकं धनिनो धनवतो धनं द्रव्यमस्ति तुशब्देन तन्नास्त्येवेति सूचितं, ननु मरणसमये मुखे सुवर्णादि निक्षिप्यते प्रेतक्रियाश्च कुर्वन्ति पुत्रादयस्तदुपयोगित्वाद्धनरक्षणमुचितमेवेत्याशङ्क्याह नत्विति, तस्योक्तलक्षणस्य यक्षवित्तस्य मुखे तु आस्येऽपि भूमिगोपनैर्भूमिरक्षकैर्नृपैरित्यर्थः, धूलिर्द्रव्यसमीपवर्त्तिरजोऽपि द्रव्यकणगमनशङ्कया न दीयते दूरे क्रियायां धनस्योपयोगाशङ्केति भावः ॥ ५ ॥

ननु'आपदर्थे धनं रक्षेदि'त्यादीनि नीतिवाक्यानि, 'सत्पात्रे स्थापितं द्रव्यं परलोकहितं भवेदि'ति, 'दृढे पात्रे तु निक्षिप्तं धनं भद्रं भवेदि'त्यादिवाक्यानि पण्डितजनमुखेन श्रुत्वा परलोकाय धनं दृढे ताम्रादिनिर्मितपात्रे निक्षिप्य भूम्यां स्थापयन्ति तद्धितमेवेति तत्कुतो निन्द्यत इत्याशङ्क्य तद्वाक्यतात्पर्यमज्ञात्वैव धनं द्रव्यं रक्षेद्यदि तर्हि तद्रक्षणं तद्धनं वाऽऽपदर्थे स्यात्-

स्वनाशायैव स्यात्। यद्वा धनं रक्षेच्चेद्रक्षणं न सम्भवति, कुतः! अर्थे धन आपन्नाशः स्यादेव, यद्वा धन आपन्नाशोस्ति अतस्तदायासं त्यक्त्वाऽऽत्मानमित्यपकृष्य तमेव रक्षेदित्यर्थः, सत्पात्रे तु श्रोत्रियत्वादिगुणविशिष्ट इत्यर्थः, अस्तदेव दद्यं भूमिनिक्षेपणं तु सर्वजगदुत्पत्तिकारणभूम्यां निक्षेणं ब्रह्मार्पणमित्यादिवाक्योक्तमेव विहितम्, इममर्थमज्ञात्वा केवलताम्रादिपात्रे द्रव्यनिक्षेपो मौर्ख्यविलसितमेवेत्याशयेनाह।

मूढस्ताम्रमये पात्रे संस्थापयति किं धनम्।
पात्रे स्थितं धनं भद्रं किन्तु पात्रं परीक्षय॥ ६॥

मूढ इति। मूढो मूर्खस्ताम्रमये ताम्रादिरचिते पात्रे भाण्डे धनं द्रव्यं स्थापयाति स्थापनं करोति तत्किं न किमपि तदित्यर्थः, पात्रे स्थितं धनं भद्रं सत्पात्रे विद्यमानं द्रव्यं भद्रं सुखाय भवति तत्सत्यमुक्तं किं तु पात्रं सत्पात्रं परीयक्ष परीक्ष्य ज्ञातव्यमित्यर्थः॥ ६॥

इदानीं मानं शरीरसुखाशां च त्यक्त्वा याच्ञायै भ्रमणं गृहं गृहं प्रति लोभपराक्रमकृतमेवेति दर्शयति।

काकविष्ठाधनस्यार्थे कायक्लेशेन भूयसा।
मदान्धा धनिनः सेव्या महतीयं विडम्बना॥ ७॥

काकविष्ठेति। काकविष्ठाधनस्य वायसविष्ठातुल्यस्य धनस्याऽर्थे निमित्ते भूयसाऽधिकेन कायक्लेशेन शरीरजन्यक्लेशेन मदान्धा द्रव्यमदेनान्धा हिताहितज्ञानशून्या धनिनो धनवन्तः सेव्याः सेवितव्या इयमुक्तलक्षणा कदर्थना सह्या सा म-

हत्यतीव विडम्बनाऽनार्यतैव सेत्यर्थः, इदमपि लोभपराक्रमकृतमेवेति भावः ॥ ७ ॥

न लोभस्योपचाराय मणिमन्त्रौषधादयः ।
मणिमन्त्रौषधश्लाघी सोऽपि लोभपरायणः ॥ ८ ॥

ननु लोभरोगनिवारण औषधाद्युपायोस्ति वा नवेति सन्दिह्यमानं प्रष्टुमिच्छन्तं शिष्यमालक्ष्याह नेति, लोभस्य लोभनाम्नो रोगस्योपचाराय निवारणाय मणिमन्त्रौषधादयो मणिश्च मन्त्रश्चौषधश्चादीनि येषां ते न न सन्ति, ननु लोभनिवारकं मण्यादिकं नास्तीति कुतोऽवगतमित्यत आह मणीति, यः कश्चिन्मणिमन्त्रौषधश्लाघी मणिभिर्मन्त्रैरौषधैश्च लाघत आत्मानं कत्थते सोऽपि असौ च लोभपरायणो लोभपर एव दृष्ट इति शेषः, अत एवावगतमिति भावः ॥ ८ ॥

इदानीं मनुष्येषु मनुष्यस्वभावं तिरस्कृत्य श्वस्वभावसम्पादनमपि लोभकृतमेवेत्याशयेनाह ।

किञ्चिद्धनकणं ध्यात्वा मुखमाढ्यस्य पश्यसि ।
करोषि श्वेव चाटूनि लोभेनापकृतं स्मर ॥ ९ ॥

किञ्चिदिति । यथा श्वा किञ्चित्स्वल्पं धनकणं स्वभक्ष्यकणिकां ध्यात्वा ममैतावत्प्राप्नुयादिति निश्चित्याढ्यस्य धनिनोऽन्नसमृद्धिमतो मुखमास्यं पश्यति अवलोकयति चाटूनि तद्रञ्जनार्थमुदरदर्शनपुच्छचालनपादप्रक्षेपणादीनि करोति तद्वत्किञ्चित्सर्वं द्रव्यं कोऽपि न ददाति तत्र ढब्बूकादिकणिकामात्रं ददाति न वा ददातीति जानन्नपि धनवतो मुखं प्रति पश्यसि प्रतीक्षां कुर्वन्नेव तिष्ठसि ततश्च तद्रंजनार्थं चाटूनि गायनहास्यविनोदशास्त्रचर्चानृत्यादिचेष्टाः करोषीत्ययं श्वस्वभाव-

स्त्वयि उत्तमं मनुष्यस्वभावं दूरीकृत्य सम्पादित एतल्लोभे-नाऽपकृतं लोभनाम्ना शत्रुणाऽपकृतमपकारः कृत इति स्मर जानीहीत्यर्थः॥ ९॥

इदानीं लोभनामनिरुक्त्याऽपि लोभप्रतापं सूचयति।

लोहार्गलो भद्रहरो लोलताङ्को भयप्रदः।
लुनात्युभौ च यल्लोकौ तेन लोभः प्रकीर्त्तितः॥१०॥

लोहार्गल इति। लोहार्गल आयसी शृङ्खलेव यत्र यत्र विषये लोभवतो बुद्धिः संलग्ना ततो विषयात्सा निर्गन्तुम-स्वाधीनाऽतो लोभशृङ्खलया रुद्धाऽतो लोभस्य लोहार्गलत्वमत एव लोभनाम्नि लोकारस्य सिद्धिरिति भावः, किं च भद्रहरो भद्रस्य सुखस्य हरो नाशको यस्य बुद्धौ लोभस्तस्य सुखं नैव स्यादित्यर्थः, अतो लोभनाम्नि भकारसिद्धिर्ज्ञेया, किञ्च लोल-ताङ्को लोलता चाञ्चल्यं तदेवाङ्कं चिह्नं यस्य स यत्र यत्र सचेतनेषु चाञ्चल्यं लक्ष्यते तत्र तत्र लोभसत्त्वमनुमीयते ऽयं लोभवान् क्रि-यावत्त्वात्तद्वत्। ननु ज्ञानिष्वेतद्व्यभिचारः, न तत्रापि व्यवहा-रकाले तत्सत्त्वात्समाधिकाले तु व्यवहाराभावाल्लोभासत्त्व-मिष्टमेव, ननु ज्ञानिनि तत्सत्त्वे तत्त्वमेव व्याहन्येत 'रागो लि-ङ्गमबोधस्ये'ति श्रुते रागवृत्तेर्विशेषस्यैव लोभत्वादिति चेन्न बा-धितत्वेन तत्सत्त्वेप्यकिञ्चित्करत्वात् 'सन्तु रागादयो बुधे' इति शास्त्रान्तरेण तस्य तेष्वकिञ्चित्करत्वोक्तेः, 'जीवन्नाखुर्न मा-र्जारं हन्ति हन्यात्कथं मृत' इति न्यायेनाबाधकत्वसिद्धेश्च ज्ञा-निषु तदबाधकत्वान्न ज्ञानित्वव्याहतिरत इदमनुमानमव्यभि-चारि लोलताङ्क इति, अतोऽपि लोभनाम्नि लोकारसिद्धिर्ज्ञेया। किं च भयप्रदो यत्र यत्र भयं तत्रापि लोभसत्त्वमनुमीयतेऽतो

लोभनाम्नि भकारासिद्धिर्ज्ञेया, किञ्च यद्यतो लोभ उभौ लोका एतल्लोकपरलोकौ दानभोगाप्रवर्त्तकतया लुनाति खण्डयति नाशयति, ननु लुभधातुप्रकृतिकत्वे प्रसिद्धे लोभस्य कथं लूञ्प्रकृतिकत्वमुच्यते येन च्छिदिक्रियावत्वं स्यादिति चेन्न लुभधातोर्विमोहनार्थवत्वेन विमोहनस्य चोभयलोकघातकत्वप्रसिद्धेर्लोभशब्दस्यार्थतो लूञ्प्रकृतिकत्वात्तेन कारणेन लोभो लोभनाम्ना प्रकीर्तितः प्रसिद्धत्वेन प्रतिपादितः, एतेनाऽपि लोभप्रतापो ज्ञेय इतिं भावः ॥ १० ॥

एवं लोभरूपशत्रोर्बलं प्रतिपाद्यातिबलित्वे निर्णीते तज्जये भेदोऽपेक्षितः। स च द्विविधः, शत्रुबलन्यून्यत्वसाधकदानसामोपायैस्तन्मन्त्र्यादिवशीकाररूप एकः, अपरः समाश्रयः। समाश्रयोऽपि द्विविधः श(१)त्रोरन्याधिकबलिसंश्रयः शत्रुसंश्रयश्च। तत्र दानसाम्नोरसामञ्जस्येन लोभरूपशत्रोस्तन्मन्त्र्यादिष्वपि तथात्वादनुपयोगः, अतः प्रथ(२)मानुपयोग एव। शत्रुसमाश्रयस्यापि तथैव दुःसाध्यत्वात्तमपि विहाय तदधिकबलसमाश्रयेण स जेतव्य इति तदधिकबलिजिज्ञासायां तद्दौर्लभ्यं परमयत्नादरार्थं दर्शयति।

सकामाः कामिनीलुब्धा निष्कामा मोक्षलोभिनः।
भावलुब्धो हि भगवान्निर्लोभोऽत्यन्तदुर्लभः ॥११॥

सकामा इति। सकामाः कामेन सह वर्त्तमाना ये जगति प्रसिद्धास्ते कामिनीलुब्धाः कामिनीत्युपलक्षणं धनादिसर्वविषयाणामतस्तेषां लोभग्रस्तत्वं प्रत्यक्षमेवेति तदाश्रयोऽकिंचित्कर इति भावः, किञ्च निष्कामाः कामरहिता विरक्ता

(१) शत्रुतः। (२) प्रथमयोः सामदानयोः।

इत्यर्थः, ते मोक्षलोभिनो मोक्षे लोभो विद्यते येषां ते तथोक्ता अतस्तेषामपि समाश्रयो लोभशत्रुजयेऽप्रयोजक एवेति भावः । किञ्च हि प्रसिद्धो भगवान्षड्गुणैश्वर्योऽपीश्वरो भावलुब्धो भावे प्रेम्णि लुब्धो लोभी भवति अतस्तस्यापि लोभग्रस्तत्वमेवेति तदाश्रयो लोभनाशेऽकिञ्चित्कर एव तस्यापि तन्मूलकत्वादिति भावः, तर्हि निर्लोभो नास्त्येव किं तर्हि असाध्यलोभजयविचारेणेत्याशङ्क्याह निर्लोभो लोभरहितः केवलब्रह्मनिष्ठो जीवन्मुक्त इत्यर्थः, अत्यन्तदुर्लभोऽत्यायासैर्बहुसाधनैर्लभ्यः प्राप्यः स इति तत्प्राप्तिसाधनेषु दृढो भूत्वा प्रवृत्तिः कार्येति सूचितम्, अतः केवलं तदाश्रयेणैव स जेतुं शक्यो नान्यथेति भावः ॥ ११ ॥

ननु ईश्वरेऽपि लोभसत्वं कथं निश्चेयमित्याशङ्क्य तत्सम्भावनायै तद्विभूत्यां राजनि तं दर्शयति ।

दुग्धफेनोज्ज्वला शय्या बाला चरणसेविनी ।
निद्रां न लभते भूपः परराष्ट्रजिगीषया ॥ १२ ॥

दुग्धेति । दुग्धफेनोज्ज्वला दुग्धफेनवत्कोमलस्पर्शा निर्मला च शय्या शयनसाधनं कशिपुयुक्तपर्यङ्को ऽस्तीति शेषः, बाला पूर्ववयस्का स्त्री चरणसेविनी पादसेवां कर्त्तुं विद्यते इति शेषः, एतादृशनिद्रासाधनानुकूल्येपि भूपः स्वीयराज्यलाभवानपीत्यर्थः, परराष्ट्रजिगीषयान्यराजदेशग्रहणेच्छया निद्रां निद्रासुखं न लभते न प्राप्नोतीति लोभसत्वं तत्र प्रसिद्धमेवात एतादृशसर्वविभूतिमतीश्वरेऽपि लोभोऽस्तीति भावः ॥ १२ ॥

ननु निर्लोभस्यातीव दुर्लभत्वात्तदाश्रयं विना लोभजयासम्भवादस्तु स को बाधस्तेनेत्याशङ्क्य बुद्धेर्विपरीतकारित्वेन

लोभेऽनिष्टत्वमेव दर्शयतीतः परं द्वाभ्यां, तत्रादौ हितेष्वहितबुद्धिमहितेषु हितबुद्धिं जनयतीत्येवं बाधकत्वं लोभे दर्शयति ।

मार्गेषु मिलिताश्चौराः सख्यं तैः सह वर्धितम् ।
ते गता धनमादाय पश्चाच्छोचति मन्दधीः ॥१३॥

मार्गेष्विति । मार्गेषु प्रसिद्धपथिषु भवमार्गेषु च चौराः प्रसिद्धचौरा भार्यापुत्रादयश्च चौरसादृश्याच्चौरा मिलिताः सङ्गतास्तैः सह भार्यापुत्रादिभिश्चौरैश्च साकं सख्यं हितबुद्धित्वं वर्धितं वृद्धिं प्रापितं ततस्ते चौरा भार्यापुत्रादयोऽपि धनं भोगसाधनभूतं द्रव्यमादाय गृहीत्वा गता याताः पश्चादनन्तरं मन्दधीर्मन्दबुद्धिः शोचति शोकं करोति अयं बुद्धिविपर्यासो लोभकृत एवेति भावः ॥ १३ ॥

इदानीं स्वामिचौरयोश्चौरत्वस्वामित्वसम्पादनरूपं विपरीतकारित्वं लोभस्यैवेत्याशयेनाह ।

स्वामी तु चौरवद्द्रव्यं गोपायति यतस्ततः ।
भार्यापुत्रादयश्चौरा भुञ्जते स्वामिनो यथा ॥ १४ ॥

स्वामीति । स्वामी तु स्वाम्यपि स्वयं चौरवद्यथा चौरा इतस्ततो गोपायन्ति तथा द्रव्यं धनं व्ययभयाद्यतस्ततो गोपायति आच्छाद्य रक्षति न ददाति न भुनक्ति चेत्यर्थः, भार्यापुत्रादयः स्त्र्यपत्यादयश्चौरा धनहारित्वाच्चौरसादृश्याच्चौरा यथा यद्वत्स्वामिनः प्रकटं भुञ्जते तथा तद्द्रव्यं भुञ्जते भक्षणादिना हरन्ति एवं स्वामिनि चौरत्वं चौरेषु स्वामित्वं च विपरीततया लोभेनैव सम्पादितमिति भावः ॥ १५ ॥

तर्हि सर्वेभ्योऽपि धनं गोपनीयमेव नेत्याह ।

पुत्रमित्रकलत्रेभ्यो गोप्यते यद्धनं जनैः।
तेन मन्येऽवनं पापं सुकृ(१)त्या गोप्यते नहि ॥१५॥

पुत्रमित्रेति। पुत्रमित्रकलत्रेभ्यः पुत्रान्मित्रात्कलत्राच्च जनैर्लोकैर्धनं द्रव्यं गोप्यते रक्ष्यते यद्यत इह लोकेपि सुखाभावादिति भावः, तेन कारणेनावनं रक्षणं धनस्येति शेषः, पापं पापमेव केवलं तद्, अतः सुकृती पुण्यकर्मा यः कश्चित्तेन न हि नैव गोप्यते रक्ष्यते ॥ १५ ॥

ननु विरक्तवेषा अपि मुखतश्च वैराग्योपदेष्टारो बहवो धन लुब्धा दृश्यन्ते तत्राह।

रागिणी गणिका वित्तं यद्वाञ्छति वरा हि सा।
धिकृतं वैराग्यवक्तारं वाचालं वित्तलम्पटम् ॥१६॥

रागिणीति। रागिणी रागवती प्रसिद्धैव गणिका वेश्या यद्धनादि वाञ्छतीच्छति सा वरा श्रेष्ठा प्रसिद्धरागत्वाद्वैराग्यवक्तारमन्येषां वैराग्योपदेष्टारं वित्तलम्पटमन्तर्धनलुब्धमत एव वाचालं निरर्थकवाक्यं तं धिग्धिक्कारोस्तु स चात्यधम इति भावः ॥ १६ ॥

ननु बहवः शास्त्रवक्तारोपिं धनार्जनक्लिष्टास्तत्कुतो निन्द्यते भवद्भिस्तत्राह।

धनिभ्यो धनमादाय श्लाघेत शास्त्रपाठकः।
बहुभ्यो मिथुनीभूय धनिभ्यो गणिका यथा ॥१७॥

धनिभ्य इति। बहुभ्योऽनेकेभ्यो धनिभ्यो धनवद्भ्यो मिथुनीभूय रतिं कृत्वा धनं द्रव्यमादाय गृहीत्वा गणिका वेश्या

(१) पात्रे समर्पणेन।

यथा यद्वच्छ्लाघते कत्थते ऽहमेव धनवती स्वरूपवती चातुर्यवती चेति आत्मानं प्रशंसतीत्यर्थः, तथा तद्वच्छास्त्रपाठकः शास्त्रवक्ता बहुभ्यो धनिभ्यो धनवद्भ्यस्तत्तद्रञ्जनं कृत्वा धनमादाय द्रव्यं सम्पाद्य श्लाघतेऽहमेव पण्डितः मयैतावद्द्रव्यं सम्पादितं कोन्यो मत्सदृशोस्तीति कत्थते कामिषु वेश्यातुल्य एव स इति भावः ॥ १७ ॥

ननु वेदान्तवक्तारोऽपि धनलुब्धा दृश्यन्ते तत्राह ।

न शोभते तथैवायं लोभी वेदान्तवाचकः ।
चौर्येण निगडे दत्तो जटाभस्मधरो यथा ॥१८॥

नेति । यथा यद्वज्जटाभस्मधरः शिरसि जटाजूटधारि अङ्गे च विभूतिधारि एवं वैराग्यवेषवानपि चौर्येण तस्करकर्मणा निगडेऽवरोधककाष्ठे दत्तोऽर्पितः स न शोभते तथैव तद्वदेवायं भवदुक्तो वेदान्तवाचको वेदान्तवक्ता लोभी लोभवान्न शोभते शोभां न प्राप्नोतीत्यर्थः, उभयो र्विरोधादिति भावः ॥ १८ ॥

ननु धनं विना गौरवं लोके न स्यादिति तदर्थं तत्सम्पाद्यं विदुषामित्याशङ्क्याह ।

यदि वित्तार्जनेनैव विद्वांसो यान्ति गौरवम् ।
कस्तर्हि वेश्याविदुषोर्विशेष इति वर्णय ॥ १९ ॥

यदीति । विद्वांसः पण्डिता वित्तार्जनेनैव द्रव्यसम्पादनेनैव केवलं गौरवं प्रतिष्ठां यान्ति प्राप्नुवन्ति यदीति यर्हि सम्भाव्यते त्वया तर्हि तथा सति वेश्याविदुषोरुभयोर्ज्ञाने समाने सति को विशेषो भेद इति तद्वर्णय कथय तस्माद्विदुषां विद्ययैव गौरवं तद्धनकृतमिति ज्ञानं भ्रमएवेति भावः ॥ १९ ॥

ननु सुखेनानित्यतां प्रतिपादयन्तः पुनस्तानेव सेवमाना अपि बहवो दृश्यन्ते तत्राह ।

अनित्यमिति यो वक्ति सेवते नित्यमेव तत् ।
बहिर्मुखस्य तस्यास्यं मा दर्शय महेश्वर ॥ २० ॥

अनित्यमिति । हे महेश्वर हे परमेश्वर यः कोऽपि ज्ञानिमन्योऽनित्यं नाशवत्सर्वमिदमिति एवं वक्ति ब्रूते परन्तु तदनित्यवस्तु नित्यमेव सर्वकालमपि सेवते भुनक्ति तस्य बहिर्मुखस्य विरक्तापसदस्यान्तर्विषयिण आस्यं मुखं मा दर्शय न दर्शनं भवेद्यथा तथा कुरु तादृशस्य मुखदर्शनमपि न कर्त्तव्यमिति भावः ॥ २० ॥

एवं लोभबलं प्रदर्श्य तदधिकबलब्रह्मनिष्ठदौर्लभ्यप्रदर्शनेन तदाश्रये साधनात्यादरं विधाय तत्समाश्रयेण स जेतव्य इति ज्ञापयित्वेदानीं शत्रुसमाश्रयपक्षे दोषप्रदर्शनपूर्वकं तज्जये च फलं दर्शयति ।

कामकिंकरतां प्राप्य सकामाः सर्वकिंकराः ।
कामेनैव परित्यक्तो निष्कामः कस्य किंकरः ॥२१॥

इति श्रीनरहरिविरचिते बोधसारे वैराग्यपीठिकाबन्धे
लोभविडम्बना ॥ ६ ॥

कामेति । कामकिंकरतां काम्यन्ते विषया अनेनेति कामो लोभस्तस्य किंकरतां सेवकत्वं प्राप्य लोभसमाश्रयं कृत्वेत्यर्थः, सकामाः सर्वविषयेच्छावन्तो जायन्त इति शेषः, ततश्च सर्वकिङ्कराः सर्वसेवकत्वमङ्गीकार्यं महाननर्थोयं लोभसमाश्रय इति भावः; अतो निर्लोभसमाश्रयेण तज्जये तु कामेनैव परि-

त्यक्तः कामो लोभस्तेन परित्यक्तो लोभनाशेन तद्धीनः पुरुषो निष्कामः स कस्य किङ्करो न कस्यापि किङ्कर इति स्वाराज्यसिद्धिफलं दर्शितम् ॥ २१ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकाबन्धार्थप्रकाशे लोभविडम्बनार्थप्रकाशः षष्ठः ॥ ६ ॥

---

अथ कर्मविडम्बना ।

एवं लोभदोषान्प्रदर्श्य तन्मूलककाम्यकर्मदोषान्प्रदर्शयितुं कर्मविडम्बनाख्यं प्रकरणं चतुर्दशश्लोकमारभते, तत्रादौ कर्मणोऽपूर्णतया श्रमहेतुत्वादनादरणीयत्वमाह ।

वंशपात्रमिवापूर्णं पूर्णं घटशतैरपि ।
क्रियाजालं कथं साधो विरागाय न जायते ॥२२॥

वंशेति । हे साधो क्रियासाधनपर घटशतैरपि घटपदेनात्र तत्परिमितं जलं ग्राह्यं लक्षणया 'भावानयने द्रव्यानयनमि'ति न्यायेन वा शतपदं चात्रासंख्यातपरमसंख्यघटजलैरित्यर्थः, पूर्णमपि अपूर्णं वंशपात्रमिव वंशशकलनिर्मितभाण्डमिव क्रियाजालं कर्मरूपं जालमिव स्वबन्धकारणं विरागाय विरागं जनयितुं कथं कुत इत्यर्थः; न जायते न भवति बन्धनहेतुत्वाच्छ्रमहेतुत्वाच्च विरागयोग्ये कर्मणि रागोऽहोन्तःकरणमौढ्यमेतदिति भावः ॥ १ ॥

ननु कृते च कर्मणि पूर्णता स्यादित्याशङ्क्याह ।

ब्रह्मणो दिनमारभ्य यावदद्य कृताः क्रियाः ।

मुहूर्त्तं हन्त संसारी नैव निश्चिन्तताङ्गतः ॥ २ ॥

ब्रह्मण इति। ब्रह्मणोऽजस्य दिनं दिनादारभ्य प्रारम्भं कृत्वाद्य यावदद्यपर्यन्तं क्रियाः कर्माणि कृताः कृतानि तेषु कृतेष्वपि मुहूर्त्तं क्षणमात्रं संसारी जीवो निश्चिन्ततां चित्तस्थैर्यजन्यं सुखं नैव गतो नैव प्राप्तो हन्त इति खेदे तत्पूर्णताशाऽद्यापि तव वर्त्ततेऽयं मम खेदो भवतीति भावः ॥ २ ॥

ननु पुत्रात्सुखं स्यादिति प्रसिद्धिर्लोके 'नापुत्रस्य लोकोऽस्ती'ति श्रुतेः, पुत्रं विना परलोकासिद्धेः श्राद्धादिकर्मणा च पुत्रकृतेन परलोकसुखसिद्धेः पुत्रजननोपयोगि विवाहादि कर्म कार्यमेवेत्याशङ्क्य तत्रापि साम्ना दोषं दर्शयति त्रिभिः। तत्रादौ पुत्रदत्तपिण्डोपजीवनं पराधीनजीवनत्वाद्दौर्भाग्यमेवेत्याह।

अभाग्यं परमं पुंसां परपिण्डोपजीवनम्।
तत्कथं नाम सौभाग्यं पुत्रपिण्डोपजीवनम् ॥३॥

अभाग्यमिति। पुंसां पुरुषार्थिनां दृष्ट्येति शेषः, परपिण्डोपजीवनमन्याधीनान्नादिनाऽऽयुः क्षपणमात्रं तज्जीवनमिह लोके परलोके च सुखासाधकत्वात्तत्परमं केवलमभाग्यमेव दौर्भाग्यमेव प्रसिद्धमिदं लोकेऽपि तत्तस्मात्पुत्रपिण्डोपजीवनं पुत्रदत्तपिण्डादिना परलोक इहापि पुत्रादेः पिण्डस्य शरीरस्यार्थे पुत्राद्यर्थशरीरेण वोपजीवनं पराधीनमेव नाम प्रसिद्धं चेदं कथं केन प्रकारेण सौभाग्यं संपन्नत्वं न कथमपि परमं दारिद्र्यमेव तदिति भावः ॥ ३ ॥

तत्राप्यतीवानादरेण दत्तान्नादिना जीवनं त्वतीव दुःखास्पदत्वादतीव दौर्भाग्यमेवेत्याशयेनाह।

मृतशब्देन सम्बोध्य मृतपिण्डं मृताहनि।
मृताय दास्यते पुत्रस्तद्वरं किमुतामृतम् ॥ ४ ॥

मृतशब्देनेति। मृतशब्देन मृतस्य शब्देन प्रेत इति नाम्ना सम्बोधनं कृत्वा हे प्रेतेति, इदानीमपि यस्य कस्यापि त्वं प्रेतोसीत्युक्ते दुःखं मन्यते स तर्हि कथं तत्तव तदा सुखकारकं स्यादिति भावः, पुत्रः स्वपालकस्य यस्य कस्याप्येतादृशं वचनं दुःसहं तत्किं वाच्यं स्वपाल्यस्य पुत्रस्य तादृशं वचनं दुःसहमिति भावः। मृतपिण्डं मृतिनिमित्तं पिण्डं मृतमेव पिण्डं शरीरमिति वा मृतशरीरोत्पादकत्वात्पिण्डस्येति भावः, मृतेरप्रियत्वात्तन्निमित्तकपिण्डस्यापि दुःखकारणत्वं मृतशरीरमपि कस्यापि न रोचते तत्कथं मृतशरीरोत्पादकः पिण्डः सुखदः स्यादिति भावः, मृताहनि मृतदिने मृतदिने मृतसम्बन्धिनामपि दुःखेनान्नाद्यरुचिर्दृश्यते मृतस्य तर्हि मूर्च्छावत्त्वादन्नादिभोगो दुर्घटस्तत्किं पुनस्तस्याप्यरुचिरन्नादिष्विति वक्तव्यमिति भावः। तत्रापि मृताय मरणमूर्च्छिताय दास्यतेऽर्पयिष्यति भविष्यदर्थेन दानप्रयोगेण तदपि बुध्यादिचाञ्चल्येन मरणादिना पुत्रस्य स्यान्नवेति तत्र निश्चयाभावः सूचित इति ज्ञेयम्, तत्तादृशपुत्रादिसंपादनेन मृत्वा तद्दत्तपिण्डादिना जीवनं वरं श्रेष्ठं किमुत किं वाऽमृतं मोक्षसुखं वरं श्रेष्ठमित्येवं विचार्यतामित्यर्थः ॥ ४ ॥

शास्त्रतोऽपि श्राद्धादिभोजनं निन्द्यमित्याशयेनाह।

अशनायां पिपासां च शोकं मोहं जरां मृतिम्।
प्राप्नुवञ्छ्रुतिशास्त्रेभ्यो मा भव श्राद्धभक्षकः ॥५॥

अशनायामिति। त्वमशनायां रोगादिना भक्षितान्नादेर्भस्मीभावेन पुनः पुनर्भोक्तुमिच्छामन्नाद्यप्राप्त्या बहुबुभुक्षुत्वमि-

त्यर्थः, पिपासां च तृड्बाहुल्यमपि शोकमाधिं मोहं कर्त्तव्यास्फुरणरूपां स्तब्धतां जरामकाले तु धातुक्षीणत्वादिना वार्धक्यं मृतिमकालमृत्युमित्यादिफलानि श्रुतिभ्यः 'आद्धीयमन्नं भुञ्जनमेतोशनायातृट्शोकजरामूर्च्छाकालमृत्युभ्यः शङ्कमानो जीवन्नेव मृतो न तत्समश्नीयादि'त्यादिभ्यः श्रुतानि, शास्त्रेभ्योपि कर्मविपाकादिभ्यः श्रूयन्तेऽतस्तानि माप्नुवन्नङ्गीकुर्वन्सञ्छ्राद्धभक्षकः पुत्राद्युत्पादनेन तत्कृतश्राद्धभोजनेप्सुर्मा भव न भवितव्यं निन्द्यत्वादेतदयोग्यमिति भावः ॥ ५ ॥

ननु मास्तु पुत्राद्युत्पादनादिश्राद्धान्तं कर्म, ऐहिकसुखभोगहेत्वायुर्वर्धीयकं तु कर्म कर्त्तव्यमेवेत्याशङ्क्य तत्रापि दोषं दर्शयति।

दीर्घमायुर्जराभुक्त्यै धनं भूरि दुराधये ।
पुत्राः कलहदुःखाय संसारे दुःखमद्भुतम् ॥ ६ ॥

दीर्घमिति । दीर्घं बहुकालमायुर्जीवनं जराभुक्त्यै सर्वलोकतिरस्कार्यं स्वस्य चानपेक्ष्यमशक्त्यादिदोषवत्वाद्वृद्धत्वं तद्भोगाय तस्य भोगं कर्तुं तत्स्यादतस्तत्साधककर्मण्यादरो न युक्त इति भावः, ननु धनस्य सर्वविषयभोगहेतुत्वेन सुखहेतुत्वात्तत्साधनभूते कर्मण्यादरो विधेय इत्याशङ्क्याह धनमिति, भूरि बहु धनं द्रव्यं दुराधये चिन्तायै स्याद्, भूरिपदेनात्र जीवनमात्रकारणभूतं धनं तु जीवनकारणप्रारब्धेनैव स्यात्तद्विशेषभोगार्थं तु विशेषकर्मणेति तदर्थं कर्मण्यादरो न कर्त्तव्य इति सूचितं ज्ञेयम्। ननु पुत्राणां पारलौकिकसुखहेतुत्वाभावेप्यैहिकसुखहेतुत्वेन तत्साधककर्मण्यादरो युक्त एवेत्याशङ्क्याह

पुत्राइति, पुत्रा अपत्यानि कलहदुःखाय स्वेप्सितादाने स्वेन सह स्वधनार्थं तेषां वा परस्परेण सह यः

कलहो विग्रहस्तद्वारा दुःखं जनयितुं स्युः, अतस्तदर्थकर्मण्या-
दरो न युक्त इति भावः; ननु सर्वेप्येते दुःखदा एवेति कुतो न-
ज्ञायते सर्वैरित्याशङ्क्याह संसार इति, संसारेऽसारेपि संसा-
रनाम्नि दुःखं दुःखमपीत्यर्थः, अद्भुतमत्याश्चर्यरूपमित्यर्थः,
असारत्वेपि संसारत्वप्रतीतौ दुःखे सुखप्रतीतिर्युक्तैवेति भावः॥६॥

ननु रूपसाधने तर्हि कर्मण्यादरोस्तु तत्राह।

छायां पश्यति कायस्य रायो गर्वेण मुह्यति।
जायां भजति भावेन मायां नो वेद वैष्णवीम् ॥७॥

छायामिति। कायस्य शरीरस्य च्छायां प्रतिरूपं दर्पणादौ
पश्यति अवलोकयति ततस्तत्र सुन्दरत्वं यत्प्रतीयते तद्रायो
द्रव्यस्य न तु देहस्य तथैव तत्सुन्दरत्वं स्वदेह आरोप्य गर्वेण सु-
न्दरोहमित्यभिमानेन मुह्यति तदासक्तिं करोति अतो विमोह-
कत्वाद्रूपस्य तत्साधनभूते कर्मण्यादरो न कर्त्तव्य इति भावः,
एवं भार्यासाधनभूतं कर्म त्याजयितुं भार्यायामपि दोषं दर्शय-
त्यर्धेन जायामिति। जायां जायते स्वयं पुत्ररूपेण पतिरूपेण
च यस्यां सा जाया माता तां भावेन भार्याबुध्या भजति भु-
नक्ति अहो अन्याय इत्यर्थः। ननु मातरि भार्याबुद्धिः कथं
स्यादित्याशङ्क्याह। मायामिति वैष्णवीं विष्णुसम्बन्धिनीं माया-
मघटितघटनाचातुरीं नो वेद न जानाति 'तज्जाया जाया भवति
यदस्यां जायते पुनरि'ति श्रुतेः, तस्यां पुत्ररूपेणोत्पन्नत्वाद्भा-
र्याया मातृत्वं प्रसिद्धं प्रमाणसिद्धमेव युक्त्यापीदं स्वस्यापि प-
तिरूपेण तस्यामेवोत्पन्नत्वासम्भावनीयं मायापदेनापि मायाया
विपरीतकारित्वं प्रसिद्धमेवेति सूचितं, वैष्णवीमिति पदेन च
विष्णोर्जगत्स्थापकत्वात्तस्येयं स्त्रीरूपा मायैव मूर्त्तिमती सा

त्वं रूपं तिरस्कृत्य विपरीतबुद्धिमुत्पाद्य स्वासक्तं पुरुषं करोति तेन च जगत्स्थितिनिर्वाहो जायत इति सूचितम् ॥ ७ ॥

अतः सर्वत्र स्त्रीपुत्रादिषु ममता त्याज्येत्याह ।

यात्रासमागमसमे नतर्कितगतागते ।
पशुपुत्रकलत्रादौ ममता न मता समा ॥ ८ ॥

यात्रेति । यात्रासमागमसमे क्वचिद्यात्रायामपि असम्बन्धिनां समागमः संगो जायते तत्तुल्ये नतर्कितगतागते नतर्किते तर्कागोचरे गतागते संयोगवियोगौ यस्मिन्तादृशे पशुपुत्रकलत्रादौ पशवस्तुरगगजादयः पुत्राश्च कलत्रं स्त्री चादयो यस्मिन्तस्मिन्सर्वस्मिन्ममताऽऽसक्तिः समा सुखदा न मता न संमता मुनिभिरिति शेषः, तदासक्तिर्न कार्येति भावः ॥८॥

तर्हि सा ममता कथं त्याज्येत्याशङ्क्य गुरुसेवां विना न त्यक्तास्यादित्याशयेनाह ।

सुतरां गुरवोऽस्माकं वैयाकरणसत्तमाः ।
आदिश्य ममतास्थाने समतां साधयन्ति ये ॥९॥

सुतरामिति । अस्माकमस्मदृष्ट्या गुरवो दैशिका वैयाकरणश्रेष्ठाः सुतरामत्यन्तं ज्ञेयाः, किं तद्गुरूणां वैयाकरणश्रेष्ठत्वं तदाह ये गुरवो ममतास्थाने ममतारूपे समतां समतारूपमादिश्यादेशं कृत्वा साधयन्ति, इदमेव वैयाकरणश्रेष्ठत्वं गुरूणामिति भावः ॥ ९ ॥

ननु स्त्रीपुत्रादित्यागो दुष्कर इत्याशङ्क्याह ।

त्यक्ष्यंत्यवश्यं च त्वान्त्वं च त्यक्ष्यसि यानपि ।

येषां त्यागे महत्सौख्यं तेषां त्यागेऽपि कः श्रमः॥१०॥

त्यक्ष्यन्तीति। ये च विषयास्त्वां तदासक्तमपि त्वामवश्यं निश्चयेन त्यक्ष्यन्ति परित्यज्य गमिष्यन्ति त्वं च त्वमपि यानपि पुत्रादिविषयानपि त्यक्ष्यसि परित्यज्य गमिष्यसि स्वमरणकालेऽवश्यभाविवियोगकाले वेत्यर्थः, किञ्च येषां विषयाणां स्वतस्त्यागे कृते सति महदतीव सौख्यं सुखं भवति तेषां विषयाणां त्यागेऽपि त्यागनिमित्तकः कः श्रमः किं दुःखं जायते प्रत्युत सुखेनैव भाव्यमिति भावः॥ १०॥

ननु विषयत्यागेन वैराग्ये क्रियमाणे सुहृज्जनकृतनिन्दा दुःसहेत्याशङ्क्याह।

व्यवहारविमूढानां स्तुतिनिन्दामयः क्रमः।
सोपि तत्कायपर्यन्तः कायः कतिदिनान्वयी॥११॥

व्यवहारेति। व्यवहारविमूढानां व्यवहारेपि ये विमूढा विशिष्टा मूर्खा व्यवहारेप्यर्थसाधनं तेषां न स्यादिति भावः, व्यवहारेऽपि स्तुतिनिन्दयोः सत्वात्तत्र च निन्दाभयेन व्यवहारलोपः प्रसज्येतातस्त उभयज्ञानशून्यास्तेषां स्तुतिनिन्दामयः क्रमः स्तुतिः प्रशंसा निन्दा जुगुप्सा च तत्प्रचुरः क्रमो व्यवहारो न तूभयज्ञानिनां स्तुतिर्निन्दा चेति स्वकार्यपरत्वमेव तेषां व्यवहार इति भावः, अतः स्वकार्यपरत्वमेव तवोचितमिति सूचितं, तथापि न सहते चेत्तत्राह सोपीति, सोपि स्तुतिनिन्दामयक्रमोपि तत्कायपर्यन्तस्तेषां सम्बन्धिशरीरपर्यन्तमेव, अतः स कायस्तत्सम्बन्धि शरीरं कतिदिनावयी कतिदिनपर्यन्तं तव सम्बन्धी स्यात्, शरीरपर्यन्तं निन्दा सह्या परन्तु 'स्वकार्यं साधयेद्धीमा-

नि'ति नीतिवाक्येन स्वकार्यपरस्यैव धीमत्वप्रतिपादनात्तव स्वकार्यपरतैव योग्येति भावः ॥ ११ ॥

एवं नीतिं प्रदर्श्य विषयासक्तौ भयमपि दर्शयति।

एकतः सकला लोका विकर्षन्ति यथाबलम्।
पदार्थमालां बलवानेकः कालो गिलत्यसौ ॥१२॥

एकत इति। सकलाः सर्वे लोका जीवाः पदार्थमालां विषयस्रजं यथाबलं बलमनतिक्रम्य स्वस्वशक्त्यनुसारेणेत्यर्थः, एकत एकदेशेन विकर्षन्ति स्वस्वाभिमुख्येन ममैवेयमिति स्वीकुर्वन्तीत्यर्थः, अन्यत्र देश एकोऽसहायी बलवान्महाबलः कालः सर्वजगत्कलनसमर्थ ईश्वरस्तांङ्गिलति ग्रसति असौ, विषयासक्त्या कालसुखे न गन्तव्यं तत्त्यागेनामृतो भवेति भावः ॥ १२ ॥

ननु यावद्विषयभोगसुखहेतुत्वाद्विषयाणां कुतस्त्याज्यत्वमित्याशङ्क्य तत्र विषयाणां वृत्तीनां भोक्तुश्च क्षणिकत्वेनान्योन्याभावे जीवनस्यैवाभावः कुतो भोगजन्यसुखाशङ्केत्याशयेनाह।

लोला लक्ष्मीर्वयं लोला लोला विषयवृत्तयः।
किं सुखं तत्र यत्राङ्ग जीवनस्यैव संशयः ॥१३॥

लोलेति। लक्ष्मीर्विषयभोगसंपत्तिर्लोला चञ्चला क्षणिकेत्यर्थः, वयमस्मदादयो भोक्तृत्वाभिमानिनो लोलाः क्षणिका विषयवृत्तयो विषयाकारान्तःकरणवृत्तयो भोगसाधनभूता लोलाः क्षणिकाः, एवं सर्वेषां क्षणिकत्व उत्तरोत्तरक्षणेऽभावसत्वादन्योन्यत्राभावे सिद्धे यत्र विषयवृत्तौ भो-

क्तरि च भोग्येपि जीवनस्यैव केवलसत्वस्यैव संशयोऽस्ति न वेति सन्देहस्तत्र विषयभोगे किं सुखं सुखसत्वं कुतो निश्चेयं यत्रासक्तिः स्यादिति भावः ॥ १३ ॥

इदानीं तत्र क्षणिकसुखेपि अनेकदुःखमिश्रितत्वेन दुःखरूपत्वमेवेति तदासक्तिर्न कार्येति सिद्धान्तयन्नुपपादितमर्थमुपसंहरति ।

शोकमोहौ भयं दैन्यमाधिर्व्याधिः क्षुधा तृषा ।
इत्यादि त्रिविधं दुःखमिति संक्षेपकीर्त्तनम् ॥१४॥

इति बोधसारे वैराग्यपीठिकाबन्धे कर्मविडम्बना समाप्ता ॥ ७ ॥

शोकेति । शोकमोहौ शोको गतार्थगुणचिन्ताजन्यं दुःखं मोहो दुःखेन कर्त्तव्याकर्त्तव्यविस्मृतिर्भीतिः प्रसिद्धा दैन्यं स्वविषयालाभजन्यं दुःखमाधिः संकल्पजनितदुःखप्रतीतिर्व्याधिर्ज्वरादिरोगजनितपीडा क्षुधा बुभुक्षाजनितदुःखप्रतीतिस्तृपा पिपासाजनितपीडेत्यादि एतदादि त्रिविधमनेकप्रकारं दुःखं तत्र सुखाभासेऽस्ति दुःखमिश्रितत्वेन तत्सुखं दुःखमेव विषमिश्रितान्नं विषमिवेति भावः, संक्षेपकीर्त्तनं विषयदोषाणां संक्षेपतो निरूपणमिति समाप्तमित्यर्थः ॥ १४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ वैराग्यपीठिकाबन्धार्थप्रकाशे कर्मविडम्बनार्थप्रकाशः सप्तमः ॥ ७ ॥

---

अथ धर्मजिज्ञासा ।

एवं सर्वविषयदोषान्प्रदर्श्य तत्र कर्मविडम्बनायां कर्मणां त्याज्यत्वे सर्वकर्मणां त्यागेन मुमुक्षूणां चित्तशुद्धिर्न स्यादिति ग्राह्यं कर्म ग्राहयितुं धर्मजिज्ञासामारभत एकोनत्रिंशद्भिः श्लोकैः,

तत्रावान्तरप्रकरणानि धर्मजिज्ञासा तपस्यातात्पर्य व्रतव्यवस्था वेषविचार मौनमीमांसा दानज्ञान तीर्थतत्वा चारचातुर्याख्यान्यष्टौ सन्ति तानि क्रमतो व्याख्यास्यामः, तत्रादौ धर्मजिज्ञासाप्रकरणमेकादशश्लोकं व्याख्यायते, तत्र तावद्धर्मजिज्ञासानिरूपणं सभेदं प्रतिजानीते ।

अथातो धर्मजिज्ञासा धर्मः प्रोक्तश्चतुर्विधः ।

नित्यो नैमित्तिकः काम्यः प्रायश्चित्तमिति क्रमात् ॥ १ ॥

अथेति । अथ वैराग्यनिरूपणानन्तरं यतो ग्राह्यत्याज्यधर्मज्ञानं विना ग्राह्यधर्मसंग्रहो न स्यात्तेन विना मुमुक्षोश्चितशुद्धिर्न स्या'त्तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने'त्यादि श्रुतेः, कर्मणां शुद्धिद्वारा वेदनेच्छाजनकत्वं श्रुतं, वक्ष्यति हि वेदनेच्छा वेदनं वा चित्रा सत्कर्मणां गतिरि'ति, अतः कारणाद्धर्मजिज्ञासा धर्मस्य जिज्ञासा ज्ञानेच्छा कर्त्तव्येति शेषः । तस्यां च कर्त्तव्यायां सत्यां शिष्यं प्रति धर्मं ज्ञापयितुं तद्भेदमाह धर्म इति, धर्मो विहितधर्मरूपश्चतुर्विधश्चतुःप्रकारः प्रोक्तः कथितो मन्वादिभिरिति शेषः, चातुर्विध्यमेव दर्शयति नित्य इति, नित्यो एको नैमित्तिको निमित्तादुत्पन्नो द्वितीयः काम्यः कामनानिमित्तस्तृतीयः प्रायश्चित्तं प्रायश्चित्तनामा चतुर्थ इति एवं क्रमात्क्रमेण स चतुर्विधो ज्ञेयः ॥ १ ॥

तत्रादौ नित्यधर्मं लक्षयत्येकेन ।

वर्णाश्रमसमाचाराः शौचस्नानादयश्च ये ।

आवश्यकास्ते नित्याः स्युरकृत्य प्रत्यवैति यान् ॥ २ ॥

वर्णेति । ये धर्मा वर्णाश्रमसमाचारा वर्णानां ब्राह्मणादीनामनुलोमादीनां चाश्रमाणां ब्रह्मचारिगृहस्थवानप्र-

स्थयतीनां समाचाररूपा विविक्ता आचाररूपाः शौचस्नानादयश्च शौचमान्तरं रागत्यागरूपं बाह्यं स्नानादिरूपं देहमलत्यागरूपमेते आदिनी येषां संध्यावन्दनादीनां ते तथोक्ताः, साधारणलक्षणमाह आवश्यका इति, आवश्यका यैर्विनेह लोके परत्र वा भ्रष्टाः स्युस्ते, तानेव स्पष्टमाह यान्धर्मानकृत्य न कृत्वा प्रत्यवैति प्रत्यवायो दोषस्तद्वान्भवति ते धर्मा नित्याः स्युर्भवेयुः ॥ २ ॥

नैमित्तिकाँल्लक्षयत्येकेन ।

> देशकालनिमित्ता ये ते तु नैमित्तिकाः स्मृताः ।
> संक्रान्तिग्रहणस्नानदानश्राद्धजपादयः ॥ ३ ॥

देशेति । ये धर्मा देशकालनिमित्ता देशाः क्षेत्राणि कुरुक्षेत्रप्रयागादीनि काला व्यतीपातसंक्रान्तिग्रहणादयस्ते एव निमित्तं येषां धर्माणां ते तुपदेन नित्यधर्मादस्य कादाचित्कत्वं दर्शितं, ते धर्मा नैमित्तिका निमित्तभवाः स्मृताः स्मृतिभिः प्रतिपादिताः, तानेव स्पष्टमाह संक्रान्तीति, संक्रान्तिग्रहणस्नानदानश्राद्धजपादयः संक्रान्तिग्रहणे च कालौ, अन्येषामप्युपलक्षणमेतद्व्यतीपातादीनां देशानां चेति ज्ञेयं, तन्निमित्तकाः स्नानं प्रसिद्धं दानं द्रव्यादीनां सत्पात्रे प्रक्षेपणं श्राद्धं पितृकार्यं जपश्च गायत्र्यादिमन्त्रावृत्तिरादयो येषां यज्ञोपवासादीनां ते तथोक्तास्ते सर्वे नैमित्तिका ज्ञेयाः ॥ ३ ॥

तेषु ग्राह्यत्वात्प्रथमं प्रायश्चित्तधर्मान्दर्शयति ।

> प्रायश्चित्तात्मका धर्माः कृच्छ्रचान्द्रायणादयः ।
> कामनापूर्वकं काम्यं मुमुक्षोर्न विधीयते ॥ ४ ॥

प्रायश्चित्तेति। कृच्छ्रचान्द्रायणादयः कृच्छ्रं च शरीरशोषणा-

दिना पापनिवर्त्तकं तप्तकृच्छ्रादि चान्द्रायणं च मासादिनियमे-
न एकग्रासत एकैकोत्तरं पञ्चदशग्रासवृद्ध्या पञ्चदशदिनानि
व्यतीत्य तत एकैकह्रासेनैकग्रासावशेषरूपमादिनी येषां ते
धर्माः प्रायश्चितात्मका प्रायश्चित्तनामकाः दोषनिवर्त्तका ज्ञेयाः
काम्यधर्मनिरूपणपूर्वकं तत्र मुमुक्षोः प्रवृत्तिं वारयति कामनेति,
कामनापूर्वकं कामनया यत्क्रियमाणं तत्काम्यं कर्म ज्ञातव्यं त-
न्मुमुक्षो मोक्षेच्छोर्न विधीयते न कथ्यते तत्र विरक्तत्वात्तस्ये-
त्यर्थः, काम्यकर्मणस्तु कामिविषयत्वादिति भावः ॥ ४ ॥

ननु निष्कामकर्मणां चित्तशुद्धिनिमित्तत्वादुपासना-
याश्च भगवत्प्रसादनिमित्तत्वाच्छ्रवणादीनां च मोक्षकामना-
निमित्तत्वाच्च सर्वमपि कर्मकाम्यत्वात्त्याज्यमित्याशङ्क्य तस्य का-
मनानिवर्त्तकत्वान्न त्याज्यत्वमित्याशयेनाह ।

हरिप्रसादकाम्या च चित्तशुद्धेश्च कामना ।
मोक्षस्य कामना चेति कामनेयं न कामना ॥ ५ ॥

हरीति । हरिप्रसादकाम्या च हरेर्भगवतः प्रसादः प्रस-
न्नता तस्य काम्या कामनापि च पुनश्चित्तशुद्धेश्चित्तस्यान्तः-
करणस्य शुद्धिर्निर्मलत्वं तस्याः कामनेच्छा च पुनर्मो-
क्षस्य मुक्तेः कामनेच्छेयं कामनापीच्छापि न कामना-
ऽकामनैव सा स्वनाशहेतुत्वादिति भावः ॥ ५ ॥

सिद्धान्तयति ।

तस्मात्तया कामनया स्नानदानजपादिकम् ।
तीर्थव्रततपोनिष्ठा मोक्षकामैर्विधीयताम् ॥ ६ ॥

तस्मादिति । तस्माद्धेतोः कर्मणः कामनिवर्त्तकत्वादित्यर्थः,
तया कामनया तया भगवत्प्रसादादीच्छारूपेच्छया स्नान-

दानजपादिकं स्नानं च प्रसिद्धं दानं च द्रव्यादीनां सत्पात्रे निक्षेपो जपश्च गायत्र्यादिमन्त्रस्यावृत्तिरूप आदयो यस्य तत्सर्वमपि कर्मादिपदादुपासनश्रवणमननादयो गृह्यन्ते मोक्षकामैर्मुमुक्षुभिस्तीर्थव्रततपोनिष्ठा तीर्थानि पुष्करादीनि व्रतानि एकादश्युपवासादीनि तपांसि स्वस्वकर्माचरणे क्लेशसहनरूपाणि तेषु निष्ठा सहजप्रीतिर्विधीयतां क्रियताम् ॥ ६ ॥

नन्वत्र किं प्रमाणं तत्राह ।

कर्मणां निर्णयं त्वेवं गीतायामाह माधवः ।
सर्वथा न परित्याज्यं नित्यं कर्म मुमुक्षुणा ॥ ७ ॥

कर्मणामिति । माधवः श्रीकृष्ण उभयविधलक्ष्मीच्छावतामनुल्लंघ्यवचनत्वं माधवपदेन सूचितमिति ज्ञेयं, गीतायां भगवद्गीतायां कर्मणां विहितकर्मणां त्यागेऽत्यागेवैवमनेन प्रकारेण निर्णयं निश्चयमाहोक्तवान, किमुक्तवांस्तत्राह यज्ञ इति, यज्ञो नित्यो ब्रह्मयज्ञादिर्दानं च तपश्च मनीषिणां विवेकवतां मुमुक्षूणामित्यर्थः, पावनानि अन्तःकरणशुद्धिकारणानि सन्तीति एवमुक्तवानित्यर्थः, तथा च गीतायां 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि संङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसे'ति, अतः सर्वथा सर्वप्रकारेण मुमुक्षुणा मोक्षेच्छुना नित्यं कर्मावश्यकं सन्ध्यावन्दनादि न परित्याज्यं नैव त्यक्तव्यम् ॥ ७ ॥

ननु जिज्ञासूनां कर्मकर्त्तव्यतायां विहितायामपि ज्ञानिनां तु तत्त्यागो विहित एवेत्याशङ्क्य वृथाज्ञानित्वाभिमानेन न कर्त्तव्य इत्याह ।

ज्ञाने जातेपि न त्याज्यं लोकानुग्रहहेतुना ।

यो वासनापरित्यागः कर्मत्यागः स एवहि ॥८॥

ज्ञान इति । ज्ञाने देहाद्यतीतात्मज्ञाने जातेपि उत्पन्नेपि लोकानुग्रहहेतुना लोकान्कर्म ग्राहयितुमिच्छया न त्याज्यं कर्म न त्यक्तव्यमयमपि निर्णयो भगवद्गीतासूक्तः, 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसी'त्यादिभिः। ननु 'त्यागेनैके अमृतत्वमानशुरि'ति श्रुतौ मुमुक्षूणां कर्मत्यागो विहित इत्याशङ्क्याह य इति, यो वासनापरित्यागो वासनानां जगन्मिथ्यात्वबुध्या वासनानामत्यन्ताभावज्ञानमेव परित्यागः स एव कर्मत्यागः कर्मणां त्यागः संन्यासो हि प्रसिद्ध उक्तः श्रुतावित्यर्थः ॥ ८ ॥

कर्मणो बाह्यस्य त्यागो नैव कार्यः किन्तु मनसा कर्तृकरणक्रियाणां मिथ्यात्वदृढीकरणं कार्यमित्याशयेनाह ।

न कर्मणां परित्यागः कर्मत्यागो मनोमयः ।
यज्ञो दानं तपश्चेति पावनानि मनीषिणाम् ॥ ९ ॥

नेति । कर्मणां क्रियाणां स्वरूपेण परित्यागः सर्वभावेन संन्यासो न न कर्त्तव्य इत्यर्थः, किन्तु मनोमयः मनसैव त्रिपुटीमिथ्यात्वदृष्टिरूपः कर्मत्यागः कर्मणां विहितानां त्यागः संन्यासः कर्त्तव्य इति शेषः, ननु यज्ञादिकर्मणां कुतो न त्याज्यत्वं तत्राह मनीषिणामिति, यज्ञो ब्रह्मयज्ञादिर्दानं प्रसिद्धं सत्पात्रे द्रव्यनिक्षेपरूपं तपश्च स्वस्वकर्मसु क्लेशसहनादर एतानि मनीषिणां मननवतां विवेककारणत्वात्पावनानि चित्तशोधकानि सन्तीति अतो न त्याज्यानीत्यर्थः ॥ ९ ॥

एवं कर्मत्यागे दोषं निरूप्येदानीं कर्मणां चित्तशुद्धिद्वारा ज्ञानोपकारकत्वात्तत्यागे मित्रद्रोहसम्भवात्तेन दोषेण ज्ञाना-

भावे जन्ममरणरूपसंसारनरकपातरूपानिष्टप्रदर्शनेन कर्मण्या-
दरं विधत्ते।

कर्मणा चित्तशुद्धिः स्यात्तया तीव्रा मुमुक्षता।
ततो विवेकान्मुक्तिः स्यात्कर्म त्याज्यं कथं तु तत्॥१०॥

कर्मणेति। कर्मणा विहितकर्माचरणेन चित्तशुद्धिश्चित्तस्यान्तःकरणस्य शुद्धी रागादिमलापाकरणं स्याद्भवेत्तया चित्तशुध्या तीव्रा यत्नसहिता मुमुक्षुता मोक्षेच्छास्थैर्यं स्यात्ततो मुमुक्षास्थैर्याद्विवेकाद्विवेको जायते तस्मान्मुक्तिर्मोक्षः स्याद्भवेत्तु ईदृशं कर्मोपकारकं कर्म विहिताचाररूपं कथं केन प्रकारेण त्याज्यं त्यागयोग्यं भवेन्न कथमपीत्यर्थः, अतस्तत्त्यागेऽनिष्टमेव स्यादिति भावः॥ १०॥

ननु तर्हि शुकादिषु तत्त्यागः कथं श्रूयते तत्राह।

ये तु बोधेन संप्राप्तास्तात कर्मातिगां दशाम्।
न विधेः किंकरास्तस्मात्स्वच्छन्दं विचरंतु ते॥११॥

इति श्रीबोधसारे धर्मजिज्ञासायां कर्मत्यागात्यागनिर्णयः॥१॥

---

ये त्विति। तुपदेनोक्तपूर्वकर्माधिकारिभ्यो वैलक्षण्यमेतेषु सूचितं, ये त्वदाशङ्किताः शुकादयो बोधेन ज्ञानेन कर्मातिगां दशां कर्मणामगोचरामवस्थां संप्राप्ता याता हे तात ते दत्तादयोऽवधूता विधेर्वेदाज्ञायाः किङ्करा दासा अधिकारिण इत्यर्थः, न न भवन्ति तथाचोक्तं वृद्धैः 'वर्णाश्रमाभिमानेन श्रुतेर्दासो भवेन्नरः। वर्णाश्रमविहीनश्च वर्त्तते श्रुतिमूर्धनी'ति,यावद्देहात्म-

विज्ञानं बाध्यते न प्रमाणतः । प्रामाण्यं कर्मशास्त्राणां तावद्देहुपपद्यते' इति च, भगवताप्युक्तं 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येवात्मना तुष्टस्तस्य कार्यं न विद्यते ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रय' इति, तस्मात्कर्मण्यनधिकृतत्वात्कृतकृत्यत्वाच्च स्वच्छन्दं स्वेच्छया कर्मण्यकर्मणि वा विचरन्तु वर्त्ततां; तथा च श्रुतिः 'समाधिमथ कर्माणि मा करोतु करोतु वा । हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशय' इति, तेषां जीवन्मुक्तानां कृतेऽकृते वा कर्मणि गुणो दोषो वा नेति भावः ॥ ११ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे धर्मत्यागात्यागविवेकार्थप्रकाशः प्रथमः ॥ १ ॥

---

अथ तपस्यातात्पर्यम् ।

एवं धर्मत्यागात्यागनिर्णयं कृत्वेदानीं तत्प्रसङ्गेन तपस्त्यागात्यागनिर्णयं निरूपयितुं तपस्यातात्पर्याख्यं प्रकरणमारभते चतुर्भिः श्लोकैः, तत्रादौ त्याज्यत्वेनाधमां तपस्यां लक्षयति ।

कृता कपटभावेन दम्भलोभपरायणैः ।
हट्टे नगरमध्ये वा सा तपस्याऽधमा स्मृता ॥१॥

कृतेति । दम्भलोभपरायणैर्दम्भो लोककृतस्तुतीच्छया स्वतपस्वित्वख्यापनं लोभो द्रव्यादिप्राप्तीच्छा तावेव परमयनं मनोनिवासो येषान्तैः कपटभावेन च्छलेन हट्टे व्यापारिजनदृग्गोचरस्थाने नगरमध्ये वा नगरग्रामादिषु मध्येपि कृता या तपस्या तपःक्रिया साऽधमा निकृष्टा स्मृता प्रोक्ता मुनिभिरिति शेषः, अतो नाङ्गीकार्या सेति भावः ॥ १ ॥

मध्यमां काम्यतपस्यां लक्षयति ।

वेदशास्त्रोक्तविधिना शीतोष्णादिसहिष्णुना ।
या कृता कामनापूर्वं सा तपस्या तु मध्यमा ॥२॥

वेदेति । वेदशास्त्रोक्तविधिना वेदेन शास्त्रेण चोक्तेन विधिनाऽऽचरणेन शीतोष्णादिसहिष्णुना शीतोष्णादिसुखदुःखसहनशीलेन कर्त्रा या कृता तथा कामनापूर्वं कामनानिमित्तका च यथा तथा सा तपस्या तत्तपस्तु पूर्वविलक्षणा मध्यमा मुमुक्षुभिर्नादरणीया सेत्यर्थः ॥ २ ॥

उत्तमां मुमुक्षुग्राह्यां तपस्यां लक्षयति ।

मनसो निग्रहार्थाय परमार्थपरायणा ।
अकामा तत्वजिज्ञासोः सा तपस्योत्तमा मता॥३॥

मनस इति । तत्त्वजिज्ञासोरनारोपितात्मज्ञानेच्छोर्मनसोऽन्तःकरणस्य निग्रहार्थाय वशीकरणमेवार्थस्तदर्थं तथा परमार्थपरायणा परमार्थो मोक्षः स एव परायणं मुख्यं साध्यं यस्याः सा तथोक्ता, अकामैहिकपारलौकिकविषयेच्छाहीना या सा तपस्या सा तपःक्रियोत्तमा श्रेष्ठा स्मृता मुनिभिरिति शेषः; अतो मुमुक्षुभिरियमन्तःकरणशुध्यर्थ्यमङ्गीकार्येति भावः ॥ ३ ॥

इदानीं पूर्वोक्ताभ्यो विलक्षणां जीवन्मुक्तेषु स्थितां तां सर्वश्रेष्ठां लक्षयति ।

आगते स्वागतं कुर्याद्गच्छन्तं न निवारयेत् ।
यथाप्राप्तं सहेत्सर्वं सा तपस्योत्तमोत्तमा ॥ ४ ॥

इति श्रीनरहरिकृतौ बोधसारे धर्मजिज्ञासाप्रकरणे तपस्यातात्पर्यम्॥२॥

आगत इति । आयाते प्राप्ते पुरुषे वा कस्मिंश्चित्पदार्थे

स्वागतमादरं कुर्यात्क्रियतां गच्छन्तं गन्तारं पुरुषं वा कश्चित्पदार्थं न निवारयेन्न निरुन्ध्यात्, किञ्च यथा प्राप्तं येन सुखरूपेण वा दुःखरूपेण प्रकारेण प्राप्तमागतं सर्वं सुखं दुःखं वा सहेत सोढव्यं सोक्तलक्षणा तपस्या तपश्चर्योत्तमोत्तमाऽतीवश्रेष्ठेयं जीवन्मुक्तेषु जीवन्मुक्तिस्थितिलक्षणरूपैवेति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपे धर्मजिज्ञासार्थप्रकाशे तपस्यातात्पर्यार्थप्रकाशो द्वितीयः ॥ २ ॥

---

अथ व्रतव्यवस्था ।

इदानीं मुमुक्षूणां ग्राह्यं व्रतं निर्णेतुं व्रतव्यवस्थाख्यं प्रकरणमारभते द्विश्लोकं, तदेव व्रतं दर्शयति ।

परदारपरद्रव्यपरद्रोहविवर्जनम् ।
रागद्वेषपरित्यागो व्रतानामुत्तमं व्रतम् ॥ १ ॥

परेति । परदारपरद्रव्यपरद्रोहविवर्जनं परेषामन्येषां दाराः स्त्रियस्तथा परेषामन्येषां द्रव्याणि गृहधनादीनि तथा परेषामन्येषां द्रोहोऽनिष्टचिन्तनपूर्वकस्तदुद्योगस्तेषां विवर्जनं त्यागः, तथा रागद्वेषपरित्यागो रागो विषयस्नेहो द्वेषोऽप्रीतिस्तयोः परित्यागः सर्वथानङ्गीकार एतदेव व्रतानामेकादश्युपवासादिव्रतानां मध्य उत्तममतिश्रेष्ठं व्रतं नियमेनानुष्ठेयमित्यर्थः ॥ १ ॥

अत्र प्रमाणमाह ।

तदुक्तं काशीखण्डे,

तदुक्तमिति । तन्मन्निर्णीतमेव व्रतं काशीखण्डे ग्रन्थेप्युक्तं ज्ञेयं कथितमिति ज्ञेयमित्यर्थः ।

तत्रत्यं वाक्यमाह।

'परदारपरद्रव्यपरद्रोहपराङ्मुखः।

गङ्गाप्याह कदागत्य मामयं पावयिष्यति' ॥ २ ॥

परेति। गङ्गापि सर्वान्पावितयितुं समर्थापि प्रसिद्धा गङ्गा परदारपरद्रव्यपरद्रोहपराङ्मुखः परदारेषु परस्त्रीषु परद्रव्येषु परधनेषु परद्रोहे परानिष्टचिन्तने च पराङ्मुखो निवृत्तो ऽप्रवृत्त इत्यर्थः अयं प्रसिद्धगुणः पुरुष आगत्यागतः सन्मां सर्वजनसङ्गजन्यपापैर्मलिनां कदा कस्मिन्काले पावयिष्यति पवित्रीकरिष्यतीत्याहैवं प्राह, अत एवोक्तं विश्वास्यमिति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे व्रतव्यवस्थार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

अथ वेषविचारः।

इदानीं संन्यासादिवेषस्यैव मुक्तिहेतुत्वप्रसिद्धेस्तन्निर्णयार्थं वेषविचाराख्यं प्रकरणं त्रिश्लोकमारभते, तत्र तावन्मुक्तेर्हेतुत्वं वेषे नास्तीत्याह।

मुक्तिर्नास्ति जटाजूटे न काषाये न मुण्डने।

न भस्मनि न कन्थायां तिलके वा कमण्डलौ॥ १॥

मुक्तिरिति। जटाजूटे जटानां मुकुटवद्रचिते व्यूहे मुक्तिर्मोक्षो नास्ति न विद्यते तथा काषाये गैरिकादिरंजिते वस्त्रे मुक्तिर्न विद्यते मुण्डने शिखाश्मश्र्वादिवपनेन विशिष्टवेषावधारणे मुक्तिर्न विद्यते भस्मनि विभूतिलेपने मुक्तिर्न विद्यते कन्थायां

वस्त्रखण्डादिनिर्मिते वसनादौ मुक्तिर्नास्ति तिलके वा गोपीचन्दनादिना तिलके विशिष्टे धृतेपि तस्मिन्मुक्तिर्नास्ति कमण्डलौ मृदादिनिर्मिते पात्रे मुक्तिर्न विद्यते, एतेन सर्वेपि वेषा मुक्तिहेतवो न भवन्तीति सूचितमिति ज्ञेयम् ॥ १ ॥

नन्वेते वेषास्तर्हि शास्त्रेषु विहिताः कुत इत्याशङ्क्य सर्वाण्यपि वेषचिह्नानि मनोव्यापृतिसङ्कोचार्थवत्त्वेनेति तद्द्वारैवमुक्तिसाधनानि भवन्ति, तदभावे तु व्यर्थान्येवेत्याशयेनाह।

द्वेषेन ताड्यते सर्पो वृथा वल्मीकताडनम्।
मनसो निग्रहो नास्ति वृथा कायस्य मुण्डनम्॥२॥

द्वेषेनेति। द्वेषेन शत्रुभावेन सर्पो भुजङ्गः केवलं ताड्यते मार्यते बुधैरिति शेषः, वल्मीकताडनं मृद्विकारस्य सर्पगृहस्य ताडनं मूर्खैः क्रियमाणं दण्डादिभिर्हननमित्यर्थः, वृथा व्यर्थं निष्फलमेवेत्यर्थः, तथा मनसोन्तःकरणस्य निग्रहो व्यापारनिवृत्तिर्नास्ति न विद्यते तर्हि कायस्य शरीरस्य मुण्डनं वेषान्तरधारणं तथा वृथा निष्फलमित्यर्थः ॥ २ ॥

तर्हि शास्त्रेषु तत्र तत्र कुतो वेषमहिमा कृत इत्याशङ्क्य वैराग्येण चित्तविक्षेपन्यूनत्वार्थं न तु तदासक्त्या तद्वृद्ध्यर्थमित्याशयेनाह।

चित्तविक्षेपशान्त्यर्थं जटाकन्थादिधारणम्।
कुरुते वीतरागश्चेदुत्तमोत्तममेव तत् ॥ ३ ॥

इतिश्रीनरहरिकृतबोधसारे धर्मजिज्ञासाप्रकरणे वेषविचारः ॥ ३ ॥

चित्तेति। वीतरागो वीता रागा विषयस्नेहादिवृत्तयो यस्य स निवृत्तस्नेहः पुरुषश्चित्तविक्षेपशान्त्यर्थं चित्ते मन-

सि ये विक्षेपाः कार्यविशेषस्मृत्यादयस्तेषां शान्त्यर्थं निवृत्त्यर्थं जटाकन्थादिधारणं जटा असंस्कृतकेशाः कन्थाः जीर्णवस्त्रादिखण्डनिर्मिता आदिपदेन भस्मकमण्डल्वादयो गृह्यन्ते, तेषां धारणमङ्गीकारं कुरुते चेत्कर्त्रभिप्रायक्रियाफलार्थेनात्मनेपदप्रयोगेण दम्भादिना तद्धारणं निषिद्धमिति ज्ञेयं, तदेतादृशवेषधारणमुत्तमोत्तममेवात्युत्तमं सफलत्वात्तद्विहितमिति भावः ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे वेषविचारार्थप्रकाशश्चतुर्थः ॥ ४ ॥

---

अथ मौनमीमांसा ।

इदानीं ग्राह्याग्राह्यत्वं मौनस्य निर्णेतुं मौनमीमांसाख्यं प्रकरणं चतुःश्लोकमारभते, तत्रादौ मौनभेदनिरूपणपूर्वकं तद्भेदेषु भेदद्वयं सलक्षणमाह ।

मौनं चतुर्विधं प्रोक्तं वाग्मौनं वाग्विनिग्रहः ।
ज्ञानेन्द्रियाणां संरोधस्त्वक्षमौनमुदाहृतम् ॥ १ ॥

मौनमिति । मौनं लोके प्रसिद्धं यन्मौनशब्देन तच्चतुर्विधं शास्त्रे चतुःप्रकारं प्रोक्तं निरूपितं, तेषु प्रथममाह वागिति, वाग्विनिग्रहो वाचो वाण्या विनिग्रहो निरोधः स वाङ्मौनं वाच एव केवलं मौनं तूष्णीम्भावो वाङ्मौननाम्ना शास्त्रेष्वभिहितं, द्वितीयमाह ज्ञानेति, ज्ञानेन्द्रियाणां ज्ञानसाधनानिं रूपादिज्ञानकरणानि यानीन्द्रियाणि तेषां संरोधोऽवरोधः स्वस्वविषयान्निवृत्तिरित्यर्थः, तुपदेनास्य पूर्वमौनादान्तरत्वं सूचितमिति ज्ञेयम्, अक्षमौनमक्षमौननाम्नोदाहृतं कथितम् ॥ १ ॥

तृतीयं मौनमाहार्धेन ।

कर्मेन्द्रियाणां संरोधः काष्ठमौनं तु काष्ठवत् ।
गौणं तु त्रिविध मौनमुत्तमं तु मनोलयः ॥ २ ॥

कर्मेति । कर्मेन्द्रियाणां क्रियासाधनानि यानीन्द्रियाणि तेषां संरोधो गमनादिविषयेभ्यो निवृत्तिः,तुशब्देन पूर्वादेतस्य जाड्येन न्यूनत्वादग्राह्यत्वं सूचितं, तदेतदतिजाड्यात्काष्ठवत्- काष्ठादिसदृशमतः काष्ठमौनं काष्ठमौननाम्नाभिहितं शास्त्रेष्वि- त्यर्थः, एतत्त्रितयस्याग्राह्यत्वं मुमुक्षूणामाह गौणमिति, त्रि- विधं तु एतात्त्रिविधमपि मौनं गौणं निकृष्टमग्राह्यमित्यर्थः, इदानीं पूर्वत्रिविधमौनेभ्यो विलक्षणं मुमुक्षुग्राह्यं मौनमाहोत्तममि- ति, मनोलयस्तु मनसोन्तःकरणस्य जगत्प्रतीतिकारणस्य ल- योऽत्यन्ताभावः कालत्रयासत्त्वप्रतीतिरेवोत्तमं तमोनिवर्त्तक- त्वादतिश्रेष्ठमिदमेव मुमुक्षुभिर्ग्राह्यमिति भावः ॥ २ ॥

एतदभावेन्यमौनेषु तल्लक्षणाभावं दर्शयति ।

न मौनी मूकतां यातो न मौनी दुग्धबालकः ।
न मौनी व्रतनिष्ठोपि मौनी संलीनमासः ॥ ३ ॥

नेति । मूकतां वाग्व्यापारहीनत्वं यातो गतो मौनी मौनवान्न न भवति वाचोवरोधे यदि मौनं भवेत्तर्हि मूकेपि त- त्प्रसक्तिरिति भावः, किञ्च दुग्धबालको दुग्धपानो बालको डिम्भो मध्यमपदलोपी समासो मौनी मौनवान्न न भवति केवल- कर्मेन्द्रियावरोधे मौनं स्यात्तर्हि विशेषकर्माभावेनेन्द्रियास- त्वाद्बालेपि तत्प्रसक्तिरिति भावः, किञ्च व्रतनिष्ठोपि व्रतेषु चान्द्रायणादिनियमेषु निष्ठा स्नेहपूर्विकास्थितिर्यस्य सोपि मौनी मौनवान्न न भवति केवलज्ञानेन्द्रियव्यापाराभावे यदि मौनं

स्यात्तर्हि व्रतनिष्ठेपि तत्प्रसक्तिरिति भावः, तर्हि मौनी भवन्मते कस्तत्राह मौनीति, संलीनमानसः संलीनं कालत्रयेऽसत्त्वमापन्नं मनोन्तःकरणं यस्य स तथोक्तो मौनी मौनवान्विज्ञेयो नान्ये ॥ ३ ॥

ननु लीनमानसे मौनित्वं न प्रसिद्धं लोके क्वापीत्याशङ्क्याह ।

मुने र्भावस्तु मौनं स्याच्छब्दशास्त्रव्यवस्थया ।
मुनिभावो यर्हि नास्ति तर्हि मौनं निरर्थकम् ॥४॥

मुनेरिति । मुनेर्मननवतो भावः सत्ताऽऽशयो वा मौनं मौननामकमर्थतः स्यान्निर्मनस्कत्वं मौनमित्युक्तं भवति, एवं शब्दशास्त्रव्यवस्थया शब्दशास्त्रं व्याकरणं तस्य व्यवस्था प्रकृति प्रत्यययोरर्थमर्यादा तया मौनशब्दार्थोयमेव, स मुनिभावो निर्मनस्करूपो यर्हि यदा नास्ति न विद्यते तर्हि तदा मौनं लोकप्रसिद्धं निरर्थकं व्यर्थं निष्फलमेवेत्यर्थः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे मौनमीमांसार्थप्रकाशः पञ्चमः ॥ ५ ॥

---

अथ दानज्ञानम् ।

दानस्यापि ग्राह्याग्राह्यविचारेण ग्राह्यं दानं ग्राहयितुं दानज्ञानाख्यमेकश्लोकमेव प्रकरणमाह, तत्र तावद्दानानां भेदमाह ।

कीर्त्तिदानं कामदानं दयादानमिति त्रिधा ।
उत्तरादुत्तरं श्रेष्ठं तेभ्यः कृष्णार्पणं परम् ॥ १ ॥

कीर्तिदानमिति । कीर्तिदानं कीर्त्यै यशोर्थं दानं यत्त-

दानमिदमधमं कामदानं कामेनेह परत्र वा मम फलमेतद्दानेन स्यादितीच्छया यद्दीयते तत्कामदानमिदं मध्यमं कामिनामेव तस्य विहितत्वाद्दयादानं दयया मद्धनेन दारिद्र्यवतां केषां चित्सुखमेव भूयादितीच्छया यद्दीयते तद्दानं दयादानमिदं मुमुक्षुभिरपि कर्त्तव्यमेवातः श्रेष्ठमित्यर्थः, इति एवं प्रकारेणैतद्दानं त्रिधा त्रिप्रकारकम् । पूर्वोक्तत्रय उत्तमधमत्वादि स्पष्टयति उत्तरादिति, उक्तं त्रिविधदानमुत्तरात्पूर्वादधमादुत्तरं श्रेष्ठं तस्मादुत्तरादपि उत्तरमुपरितनं श्रेष्ठमुत्तममुत्तरोत्तरापेक्षया पूर्वपूर्वस्याधमत्वं पूर्वपूर्वापेक्षयोत्तरोत्तरस्य श्रैष्ठ्यमिति भावः, इदानीमत्युत्तमं दानं जीवन्मुक्तेषु स्थितमाह तेभ्य इति, तेभ्यः पूर्वोक्त त्रिविधदानेभ्यः कृष्णार्पणं 'कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत' इत्युक्तत्वात्कृष्णस्य ब्रह्मणोऽर्पणं कृतदाने ब्रह्मसत्ताया ऽवलोकनरूपं 'नान्योतोस्ति द्रष्टा नान्योतोस्ति श्रोता नान्योतोस्ति विज्ञाते'त्यादिश्रुतिदृष्ट्या दातृप्रतिगृहीत्रादित्रिपुटीबाधेन यद्दीयते तद्दानं कृष्णार्पणमित्युच्यते, तत्परमत्युत्तम मिदं जीवन्मुक्तेषु स्थितं मुमुक्षुभिस्तु साध्यमिति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिसार्थप्रकाशे दानज्ञानार्थप्रकाशः षष्ठः ॥ ६ ॥

---

अथ तीर्थनिर्णयं निरूपयितुं तीर्थतत्त्वाख्यं प्रकरणं श्लोकचतुष्कमारभते, तत्र तावत्तीर्थमिति भ्रान्तिज्ञानं तत्यागार्थमाह द्वाभ्याम् ।

इदं तीर्थमिदं तीर्थमितस्तीर्थमतः परम् ।
इतो दूरंतर तीर्थं मया दृष्टं न तु त्वया ॥ १ ॥

तव तीर्थफलं स्वल्पं मम तीर्थफलं महत् ।
इति भ्रमन्ति ये तीर्थं ते भ्रान्ता न तु तैर्थिकाः ॥२॥
( युग्मम् )

इदमिति । इदन्तीर्थमिदं मत्पुरतो दृश्यते तदिदं कूपतडागादिरूपमेव तीर्थमिति भ्रमेण तत्रैव कतिचिद्दिनानि स्थित्वा ततोन्यत्र तीर्थं श्रुत्वा तत्र पूर्वतीर्थेऽश्रद्धां कृत्वान्यतीर्थे गत्वेदं तीर्थं पूर्वं यच्छ्रुतं तदिदं तीर्थं पवित्रताकारकं ममेति मत्वा किंचित्कालं तत्र स्थित्वैतस्तीर्थमितोप्यन्यत्तीर्थमस्तीति मत्वा तथैव तत्र गत्वा च तत्रापि पूर्ववदतोस्मादपि तीर्थात्परं श्रेष्ठं तीर्थमस्तीति मत्वा तत्र गत्वा तत्रापि केनचिदित एतस्मात्तीर्थाद्दूरतरं तीर्थमतिदूरे वर्त्तमानं तीर्थं मानसादिकमपि अन्यच्छ्रेष्ठमस्ति तन्मया दृष्टं तीर्थाधिकारिणा मयैव दृष्टं न तु त्वया न्यूनतीर्थस्नायिना भवता नैव दृष्टं तदतस्तव ते तीर्थफलं तीर्थानां फलं स्वल्पं न्यूनमस्ति मम मे तीर्थफलं तीर्थस्नानजं पुण्यं महद्बहु अस्तीति एवं प्रकारेण ये पुरुषाधमास्तीर्थं तीर्थाभासं प्रति भ्रमन्ति गच्छन्ति मार्वं ते पुरुषा भ्रान्ता भ्रमणवन्त एव केवलं न तु नैव तैर्थिकास्तीर्थस्वरूपविदस्तेषां भ्रान्तिरेव फलं भ्रमणस्य न तु तीर्थफलमिति भावः ॥१॥२॥

इदानीं तीर्थतत्त्वनिरूपणपूर्वकं तद्विद आह ।

तीर्थे पापक्षयः स्नानैस्तीर्थे साधुसमागमः ।
तीर्थे वैराग्यचर्चा स्यात्तीर्थमीश्वरपूजनम् ॥ ३ ॥

तीर्थ इति । तीर्थे पुष्करादौ स्नानैरवगाहैरिदं चोपलक्षणं दानैदैवपैत्रकर्मणां, पापक्षयः पापानां दुष्कृतकर्मणां क्षयो नाशो भवतीति निश्चयः कार्यः, तीर्थे पुष्करादौ साधुसमागमः

साधूनां विवेकिनां समागमः सङ्गतिः स्यान्मम भूयादिति निश्चयः कर्त्तव्यस्तदेव तीर्थमित्यर्थः, पूर्वतोपि उत्तरत्रादरः कर्त्तव्य इति भावः, तीर्थे सत्सङ्गरूपे तीर्थे वैराग्यं विषयवैरस्यं तस्य तत्प्रतिपादकशास्त्रस्य चर्चा निरूपणं स्याद्भवेदत्रापि पूर्वत आदरो विशिष्टो विधेय इत्याशयः, तीर्थं ततोपि पवित्रकारकमीश्वरपूजनमीश्वरस्यान्तर्यामिणः पूजनं तल्लक्षणैर्ज्ञानमस्ति पूर्वतोप्यत्रादरो विशेषः कार्य इति भावः ॥ ३ ॥

तीर्थं शीतोष्णसहनं तीर्थं निःसङ्गचारिता ।
इति जानन्ति ये तीर्थं तीर्थतत्त्वविदो हि ते ॥ ४ ॥

इति श्रीबोधसारे धर्मजिज्ञासायां तीर्थतत्त्वाख्यं प्रकरणम् ॥ ७ ॥

तीर्थमिति । ततोपि तीर्थमन्तःकरणशुद्धिकारणं शीतोष्णसहनं शीतं शैत्यजन्यं दुःखमुष्णं तापजन्यं दुःखं तदादिद्वन्द्वसहिष्णुत्वमधिकं ज्ञेयं, किञ्च तीर्थमन्तःकरणशुद्धिकरं निःसङ्गचारिता स्वासङ्गत्वानुभवस्तदेतेषूत्तरोत्तरं विशिष्टादरणीयत्वमेवेत्येवं ज्ञात्वा ये विवेकिन उक्तप्रकारेण तीर्थं यथार्थं तीर्थस्वरूपं जानन्ति विदन्ति ते हि ते एव नत्वन्ये तीर्थतत्त्वविदस्तीर्थानामन्तकरणशुद्ध्युपायभूतानां तत्त्वं यथार्थस्वरूपं विदन्ति ते तथा मन्तव्यास्तान्पृष्ट्वा स्वयमपि तथा कर्त्तव्यमिति भावः ।

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे तीर्थतत्त्वार्थप्रकाशः सप्तमः ॥ ७ ॥

---

## अथाचारचातुरी ।

आचारोपि ग्राह्यस्त्याज्यश्चेति द्विविधोऽतस्तत्र ग्राह्यं ग्राहयितुं त्याज्यं त्याजयितुमाचारचातुर्याख्यमेकश्लोकं प्रकरण-

मारभते, तत्र चानाचारनिषिद्धाचारयोर्लक्षणनिरूपणपूर्वकं सदाचारलक्षणं निरूपयति ।

अनाचारस्तु मालिन्यमत्याचारस्तु मूर्खता ।
विचाराचारसंयोगः सदाचारस्य लक्षणम् ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे धर्मजिज्ञासायामाचारचातुरी ॥ ८ ॥

अनाचार इति । अनाचारस्तु केवलमाचारत्याग एव प्रत्यवायजनकत्वादन्तःकरणशोधको न भवति प्रत्युत मालिन्यं मलिनत्वकारणमेव स्यादिति शेषः, किञ्चात्याचारस्तु समीचीनदृष्ट्यान्येषां वर्णभेदेनाश्रमभेदेन वा श्रेष्ठानां य आचारः स स्वस्य मलिनत्वकारकत्वात्तस्मिन्प्रवृत्तिश्चेत्सा मूर्खता मूर्खत्वमेव, तर्त्तर्हि कः सदाचारस्तत्राह विचाराचारसंयोगो विचारः स्वस्य ग्राह्याग्राह्यविवेक आचारः स्वयोग्यकर्माचरणं तयोः संयोगः सहवर्त्तनं तदेव सदाचारस्य प्रामाणिकाचरणस्य लक्षणं चिह्नं ज्ञेयमिति शेषः, तथा स्वयमपि ज्ञात्वाचरेति भावः ॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ धर्मजिज्ञासार्थप्रकाशे आचारचातुर्याख्यप्रकरणार्थप्रकाशोऽष्टमः ॥ ८ ॥

---

अथ रागत्यागात्यागनिर्णयः ।

एवं सभेदां धर्मजिज्ञासां निरूप्येदानीं वैराग्यस्य मुक्तिहेतुत्वप्रसिद्धेस्तथापि बाह्यत्यागमात्रेण कृतार्थता न स्यादिति ज्ञापयितुं रागत्यागनिर्णयाख्यं षट्श्लोकं प्रकरणमारभते, तत्र तावद्बाह्यत्यागमात्रस्य वैराग्यत्वेतिप्रसङ्गदर्शनपूर्वकं मुख्यवैराग्यलक्षणमाह ।

न विरक्ता धनैस्त्यक्ता न विरक्ता दिगम्बराः ।
विशेषरक्ताः स्वपदे ते विरक्ता मता मम ॥ १ ॥

नेति । धनैर्द्रव्यैस्त्यक्ता रहिता विरक्ता वैराग्यवन्तो न न भवन्ति केवलबाह्यधनादित्यागमात्रं विरक्तलक्षणं चेन्निर्द्रव्येषु तत्प्रसक्तिरिति भावः, किंच दिगम्बरा नग्ना न विरक्ता वैराग्यवन्तो न भवन्ति नग्नत्वमेव वैराग्यलक्षणं चेद्बालादिषु तत्प्रसक्तिरिति भावः, तर्हि विरक्ताः के तत्राह विशेषेति, ये पुरुषाः स्वपदे स्वस्वरूपे वा स्वाधिकारानुरूपे स्वस्वभावानुकूल्येन प्राप्ते वा वर्णाश्रमाद्याचाररूपे कर्मणि वा विशेषरक्ताः स्वस्वरूपस्थितिमविस्मृत्य बाधितत्वदृष्ट्या वर्तमाना अपि लोकदृष्ट्याऽऽसक्ता इव स्थिताः स्वरूपे तु अत्यन्तासक्ता एव ते एतादृशा मे मम मद्दृष्ट्येत्यर्थः, विरक्ता वैराग्यवन्तो मता निश्चिता न तु बाह्यत्यागमात्रेण वैराग्यवन्तो भवन्तीति भावः ॥ १ ॥

बाह्यत्यागमात्रेण वैराग्याभावमेवोदाहृत्य दर्शयति द्वाभ्याम् ।

चौरस्त्यजन्ति गेहं स्वं भयेनैव न बोधतः ।
जारास्त्यजन्ति गेहं स्वं कामेनैव न बोधतः ॥ २ ॥

चौर इति । चौरस्तस्करः कदाचित्स्वकर्मणः प्राकट्येन राजादिभयात्स्वं स्वीयं गेहं गृहमुपलक्षणं चैतत्कुटुम्बक्षेत्रवित्तादेः, सर्वमित्यर्थः, त्यजति परित्यज्य गच्छति स तस्य त्यागो भयेनैव दण्डादिभीत्यैव केवलं न बोधतो न तु ज्ञानेन, केवलं गृहादित्यागमात्रेण बोधं विना विरक्तश्चेच्चौरेपि तत्प्रसक्तिरिति भावः, किञ्च जाराः परस्त्र्यासक्ता उपपतयः स्वकर्मणः प्रा-

कश्चे परस्त्रियं गृहीत्वा त्यक्त्वा वा स्वं स्वीय गहं गृहं स्वगृह-कुटुम्बपुत्रक्षेत्रवित्तादि सर्वमपीत्यर्थः, त्यजन्ति परित्यज्य गच्छ-न्ति देशान्तरं स त्यागः कामेनैव कामनिमित्तक एव स न बोधतो न तु ज्ञानेन, ज्ञानं विना केवलगृहादित्यागमात्रेण विर-क्तत्वे जारेष्वपि तत्प्रसक्तिरिति भावः ॥ २ ॥

क्रुद्धस्त्यजति गेहं स्वं प्रतिवादिविरोधतः ।
रुद्धस्त्यजति गेहं स्वं रोधेनैव न बोधतः ॥ ३ ॥

क्रुद्ध इति । क्रुद्धः क्रोधवान्स्वं स्वीयं गेहं गृहं सर्वमि-त्यर्थः, त्यजति परित्यज्य देशान्तरं गच्छति स त्यागः प्रतिवा-दिविरोधतः स्वबन्धुजनविरोधेन वा परकीयशत्रुजनविरोधेन वा न तु बोधेन बाह्यगृहादित्यागमात्रेण विरक्तत्वे क्रोधिष्वपि तत्प्रसक्तिरिति भावः, किञ्च रुद्धो निगडादिना कारागृहेऽव-रुद्धः स्वं स्वीयं गेहं गृहं धनादिसर्वमपीत्यर्थः, त्यजति परित्य-ज्य गच्छति देशान्तरं स त्यागो रोधेनैवावरोधनिमित्तक एव न बोधतो न तु ज्ञानेन, तथा च बाह्यत्यागमात्रेण विरक्तत्वे रुद्धत्यागेपि तत्प्रसक्तिरिति भावः ॥ ३ ॥

एवं बोधाभावे त्यागासिद्धिं प्रदर्श्य बोधे सति तु त्यागः सिद्ध एवेति बाह्यत्यागेनात्यागेन वा न किञ्चित्प्रयोजनमित्याह ।

निःसङ्गतासुखं प्राप्ताः कया चिद्बोधलीलया ।
गृहं त्यजन्ति मुनयो गृहस्था वा वने स्थिताः ॥४॥

निःसङ्गेति । कया चिदनिर्वचनीयया विद्वदनुभवगम्यया बोधलीलया ज्ञानमेव लीलाऽनायासचेष्टा तद्रूपया निःसङ्गता-सुखमसङ्गसुखं प्राप्ता गताः सन्तो मुनयो विवेकिनः गृहं गृ-

हादिकं सर्वं त्यजन्ति मिथ्येत्यनुभवन्ति, ततश्च गृहस्था गृहे एव स्थिता वा वने स्थिता गृहादि त्यक्त्वा वनाद्युपलक्षिते स्थाने स्थितास्त उभयेपि समाना एवेत्यर्थः ॥ ४ ॥

अस्मिन्नर्थे वृद्धसंमतिमाह ।

तदुक्तम् ।

तदुक्तमिति, इदमेवोक्तं वृद्धैरित्यर्थः, तद्वाक्यं पठति ।

'मूढः किं त्यजतु प्रमत्तमनसस्त्यागेन वा किं फलं ।
विज्ञः कर्म करोतु वा न कुरुतां त्यागेऽवलिप्तो न यत् ।
इत्येवं कृतनिश्चयः प्रवचनैरद्वैतविद्यावतां ।
रागत्यागनिरादरो मुनिजनः पारे गिरां खेलति॥ ५॥

मूढ इति । मूढो मूर्खः किं किमपिवस्तु त्यजतु नाङ्गीकरोतु प्रमत्तमनसः प्रमत्तं कार्याकार्यविचारहीनं मनोन्तःकरणं यस्य तस्य कृतेनापि त्यागेन वैराग्येण किं फलं न किमपि फलं तादृशत्यागस्य तस्येत्यर्थः, तुषकण्डनवद्व्यर्थमेव तदिति भावः; किञ्च विज्ञः कर्तृत्वादिमिथ्याज्ञानवान्तस्मिन्सर्वस्यापि बाधितत्वात्स कर्म क्रियां करोतु आचरतु वा न कुरुतां नाचरतु तदुभयमपि तस्य सममित्यर्थः, कुत इत्यत आह यद्यस्मात्कारणात्त्यागेपि कर्मानाचरणेऽपिशब्दात्तदाचरणेपि अवलिप्तः कर्तृत्वाकर्तृत्वरूपलेपवान्न भवति अतस्तस्य त्यागात्यागौ समावेवेति भावः, इत्येवमनेन प्रकारेणाद्वैतविद्यावतामद्वैतज्ञानिनां प्रवचनैः स्वोपदेशकवाक्यैः कृतनिश्चयो दृढनिश्चयवान्मुनिजनो विवेकिसार्थो रागत्यागनिरादरो रागः स्नेहस्त्यागस्संन्यासस्तयोरादररहितः सन्गिरां विध्यतीतत्वाद्वेदवचसां पारेऽगोचरे ब्रह्मणि खेलति कदाचित्कर्मणा कदाचित्त्यागेन वा क्रीडति

न तूभयमपि तस्य गुणकृतद्दोषकृद्वा स्यादिति भावः ॥ ५ ॥

उक्तमुपसंहरति।

इत्ययं योगयुक्तानां रागत्यागविनिर्णयः।
त्यजतैव हि तज्ज्ञेयमिति वेदान्तनिर्णयात् ॥ ६ ॥

इति श्रीनरहरिकृतौ बोधसारे रागत्यागात्यागनिर्णयः ॥ ६ ॥

इतीति। योगयुक्तानां जीवात्मैकत्वज्ञानमेव योगस्तद्वतामयमुक्तलक्षणो रागत्यागविनिर्णयो रागस्य स्नेहस्य त्यागः संन्यासस्तस्य विनिर्णयो विनिर्णीयते ऽनेति विनिर्णयः प्रकरणमिति समाप्तमित्यर्थः, नन्वेतन्निरूपणस्य किं कारणमत्रेत्यत आह त्यजतेति, यस्माद्धि वेदान्तनिर्णयाद्वेदान्तो ब्रह्मात्मैकत्वं तन्निर्णीयतेनेनेति वेदान्तनिर्णयमुपनिषत्सूत्रवार्तिकादिकं तच्छ्रवणादिव्यापारादित्यर्थः, त्यजतैव त्यागं कृतवतैवात्मरूपं तद्यथार्थं ज्ञेयं ज्ञातुं शक्यमस्ति नात्यागवतेति अतो हेतोस्त्यागनिर्णयः प्रोक्त इति भावः ॥ ६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ रागत्यागविनिर्णयार्थप्रकाशः षष्ठः ॥ ६ ॥

---

अथाधिकारपरीक्षा।

एवं रागत्यागनिर्णयं निरूप्येदानीं यत्र धर्मे येन प्रवर्तितव्यमधिकारिणा तज्ज्ञानार्थमधिकारपरीक्षाख्यं षट्श्लोकं प्रकरणमारभते, तत्रादौ धर्माणां बहुत्वादधिकारिणोपि बहुत्वं तत्तद्धर्माधिकारिनिरूपणार्थमाह।

धर्मा बहुविधाः प्रोक्ताः शास्त्रे धर्माधिकारिणाम्।
तत्र तीव्रा मुमुक्षैव मोक्षे मुख्याधिकारिता ॥ १ ॥

धर्मा इति । शास्त्रे वेदे धर्माधिकारिणां यत्र यत्र धर्मे येषामधिकारोऽस्ति तेषां बहुविधा अनेकप्रकारा धर्माः प्रोक्ताः सन्तीति शेषः, तत्र मोक्षधर्मेऽधिकारिणमाह तत्रेति, तत्र धर्मेषु मध्ये मोक्षे मोक्षधर्मे तीव्रा फलपर्यवसाना मुमुक्षैव मोक्षेच्छैवाऽधिकारिताऽधिकारित्वं मतोक्ता मुनिभिरिति शेषः ॥ १॥

इदानीमन्यधर्मेषु अधिकारिनिरूपणपूर्वकं पुनरपि मोक्षधर्माधिकारिणमाह ।

ज्योतिष्टोमे स्वर्गकामो विवाहे पुत्रकामवान् ।
वाणिज्ये लोभवान्मोक्षे मुमुक्षुरधिकारवान् ॥ २ ॥

ज्योतिष्टोम इति । स्वर्गकामः स्वर्गसुखे काम इच्छा यस्य स ज्योतिष्टोमे ज्योतिष्टोमनाम्नि यज्ञेऽधिकारवानधिकारी ज्ञेयः, विवाहे स्त्रीपरिणयनादिकर्मणि पुत्रकामवान्पुत्रेऽपत्ये काम इच्छा यस्य विद्यते सोऽधिकारी ज्ञेयः, किञ्च वाणिज्ये व्यापारकर्मणि लोभवान्धनलोभ्यऽधिकारवानधिकारी ज्ञेयः, मोक्षे मोक्षसाधनभूते कर्मणि मुमुक्षुर्मुक्तीच्छावानधिकारवानधिकारी ज्ञेयः ॥ ३ ॥

ननु मोक्षधर्माधिकारिणा मुमुक्षुणा बुद्धिमान्द्ये सति कुत्र प्रवर्त्तितव्यं तत्राह ।

तीव्रा मुमुक्षा यद्यस्ति प्रज्ञामान्द्यं च वर्त्तते ।
सच्छास्त्रविद्वच्चर्चाभिः प्रथमं तन्निवारयेत् ॥ ३ ॥

तीव्रेति । यदि यर्हि तीव्रा वैराग्यादियुक्ता दृढा मुमुक्षा मोक्षेच्छास्ति विद्यते प्रज्ञामाद्यं च बुद्धेर्मान्द्येनार्थधारणासामर्थ्यमपि वर्त्ततेऽस्ति यस्य सोऽधिकारी प्रथममादौ सच्छास्त्र

विद्वच्चर्चाभिः सच्छास्त्राणि वेदान्तग्रन्था विद्वांसो वेदान्तता- त्पर्यानुसन्धानपूर्वकं स्वमात्रनिष्ठास्तेषां तैः सह वा चर्चाभिः प्रश्नपूर्वं तदुत्तरं विचार्याज्ञाते पुनः प्रश्नादिरूपास्ताभिस्त- द्बुद्धिमौढ्यं निवारयेन्निराकुर्यादेवं बुद्धौ सर्वपदार्थधारणसा- मर्थ्यं संपादयेदिति भावः ॥ ३ ॥

ननु तीव्रमुमुक्षायां सत्यामपि बुद्धिमान्द्ये च विद्यमाने वेद- श्रवणानधिकारिणा शूद्रादिना कथं बुद्धिमान्द्यं निवार्य, मोक्षे प्रधानसाधनभूतं ज्ञानं च कथं संपाद्यं तत्राह ।

वेदे नास्त्यधिकारोस्य मुमुक्षा यदि वर्त्तते ।
विचारस्तेन कर्त्तव्यः पुराणश्रवणादिना ॥ ४ ॥

वेद इति । अस्य मुमुक्षोः शूद्रादेर्वेद उपनिषदादिश्र- वणेऽधिकारो योग्यता नास्ति न विद्यते परन्तु मुमुक्षा मो- क्षेच्छा यदि यर्हि विद्यतेऽस्ति तर्हि तेन वेदश्रवणानधिका- रिणा शूद्रादिना विचारः श्रवणमनननिदिध्यासनरूपः पुरा- णश्रवणादिना पुराणानां भागवतादीनां श्रवणमादिर्यस्य मननादेस्तत्तथा तेन, अनेनेदानीन्तनग्रन्थभाषाग्रन्थादिसर्वमुप- लक्ष्यते तेनेत्यर्थः, कर्त्तव्यः कुर्यात् ॥ ४ ॥

ननु वेदश्रवणजं ज्ञानं पुराणश्रवणेन कथं स्यात्तत्राह ।

यदेव वेदे कथितं पुराणेपि तदेव हि ।
न तु वेदाक्षरं श्राव्यमिति भाष्ये विनिर्णयः ॥५॥

यदेति । वेद उपनिषदादिरूपे ज्ञानप्रतिपादकभागे यदेव यच्च ज्ञानं कथितं प्रतिपादितमस्ति पुराणेपि पुराणशब्दवाच्य आर्षग्रन्थे वासिष्ठादौ तदेव वेदोक्तं ज्ञानमेवास्ति नान्य-

त्कथितं हि निश्चये, ननु वेदोक्तमेव ज्ञानं पुराणेष्वप्यस्ति चे-द्वेदश्रवणं कुतो निषिध्यते तत्राह नत्विति, वेदाक्षरं वेदानामुप-निषदामक्षरं वर्णो जातावेकवचनं न तु नैव श्राव्यं श्रोतव्य-मिति एवंप्रकारो भाष्यविनिर्णयो भाष्ये शारीरके विनिर्णयो निर्णीतोर्थोस्ति अतो मया निषिध्यत इति भावः ॥ ५ ॥

ननु मास्तु वेदश्रवणेधिकारो वेदश्रवणे कृते तु ज्ञानं स्यादेवेत्याशङ्क्याविहितकरणे फलं न स्यात्प्रत्युत दोष एव स्यादित्याह ।

यथाधिकारविहितं कर्म सिध्यति चान्यथा ।
कार्यसिधिर्न जायेत प्रत्यवायो महान्भवेत् ॥६॥

इति श्रीनरहरिकृतौ बोधसारेऽधिकारपरीक्षा ॥ ७ ॥

यथेति । यथाधिकारविहितं स्वाधिकारमनुल्लङ्घ्य यत्तद्यथा-धिकारं तच्च तद्विहितं चेति तत्तथा कर्म क्रिया सिध्यति फलति अन्यथा स्वाधिकारमुल्लङ्घ्य परविहितं कर्म कृतं चेत्कार्य-सिद्धिः कार्यस्य कर्मणः सिद्धिः फलं न जायेत न भवेत्प्रत्युत महाननिवार्यः प्रत्यवायो दोषो भवेत्स्यादत आग्रहो-नधिकारिणान्यविहिते कर्मणि न कार्य इति भावः ॥ ६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपि-कायामधिकारपरीक्षार्थप्रकाशः सप्तमः ॥ ७ ॥

---

अथ सत्संगसुधा ।

एवमधिकारिभेदनिर्णयेन तत्तत्कार्यनिर्णयं विधायेदानीं सर्वसाधनमुख्यज्ञानकारणभूतं सत्सङ्गं विधातुं तत्प्रशंसार्थं स-त्सङ्गसुधाख्यमष्टश्लोकं प्रकरणमारभते, तत्रादौ सत्सङ्गेन मनसि सुखाविर्भावे स्वमोहमुक्तिः स्यादेवेति निश्चेतव्यमित्याह ।

सत्संगसुधया तात मन आनन्दितं यदा ।
निश्चेतव्यं तदा मोहान्मम मुक्तिर्भविष्यति ॥ १ ॥

सत्सङ्गेति, हे तात सत्सङ्गसुधया सतां विवेकिनां सङ्गः सङ्गतिः स एव सुधाऽमृतं सुखदत्वान्मृतिनिवर्त्तकत्वाच्चेति भावः, तथा मनोन्तःकरणं यदा यस्मिन्काल आनन्दितं सञ्जातसुखं स्यात्तदा तस्मिन्काले मम मे मोहादज्ञानान्मुक्तिर्मोक्षो भविष्यति स्यादिति निश्चेतव्यं निश्चयः कार्यः, सत्सङ्गप्रेमैव मुख्यं भाविमोक्षस्य चिन्हमिति भावः ॥ १ ॥

ननु सत्स्वन्यसाधनेषु किं सत्सङ्गत्या तत्राह ।

साधनानां हि सर्वेषां वरिष्ठा साधुसङ्गतिः ।
एतया सिद्धया सिद्धं सर्वमेव हि साधनम् ॥ २ ॥

साधनानामिति । सर्वेषां समस्तानां साधनानां साधनभूतानां करणानां मध्ये साधुसङ्गतिः साधूनां सज्जनानां सङ्गतिः सङ्गो वरिष्ठा श्रेष्ठा सैव सर्वसाधनमूलमित्यर्थः, तदेव स्पष्टयति एतयेति, एतया सत्सङ्गत्या सिद्धया जातया सर्वं साधनं समस्तसाधनजातं सिद्धं प्राप्तं हस्तगतमिति यावद्भवति जायतेऽतः सत्सङ्ग एव सर्वसाधनेषु श्रेष्ठतर इति भावः ॥ २ ॥

ननु सतां किं लक्षणं येषां सङ्गो विधीयते तत्राह ।

शश्वदीश्वरभक्ता ये विरक्ताः समदर्शिनाः ।
साधवः सेवितव्यास्ते मोक्षशास्त्रविशारदाः ॥ ३ ॥

शश्वदिति । ये पुरुषाः शश्वन्निरन्तरमीश्वरभक्ता ईश्वरस्य शिवस्य विष्णोर्वा भक्ता दासाः सेवका इत्यर्थः, वि-

रक्ता ईश्वरातिरिक्ताखिलपदार्थेषु वैराग्यवन्तः समदर्शिनः समं ब्रह्म पश्यन्ति साक्षादनुभवन्ति ते तथा मोक्षशास्त्रविशारदा मोक्षस्य मोक्षसाधनज्ञानस्य च प्रतिपादकं यच्छास्त्रं वेदान्तास्तस्मिन्विशारदाः पदपदार्थविदस्ते साधवः परकार्यसाधने दक्षास्ते सेवितव्याः सेवितुं योग्यास्तेषां सेवा कार्येति भावः ॥ ३ ॥

अन्यान्यपि साधुलक्षणान्याह चतुर्भिः ।

येषां दर्शनमात्रेण मोक्षे श्रद्धा विवर्धते ।
येषां च वाग्विलासेन संशयो विनिवर्त्तते ॥ ४ ॥

येषामिति । येषां पुरुषविशेषाणां दर्शनमात्रेण केवलं दर्शनेनैव मोक्षे मोक्षशास्त्रे श्रद्धा विश्वासो विवर्धते वृद्धा भवति, किञ्च येषामिति, येषां च पुरुषविशेषाणां वाग्विलासेन प्रश्नप्रत्युत्तरवचनरूपक्रीडयैव संशयः सन्देहो विनिवर्त्तते निवृत्तो भवति ॥ ४ ॥

किञ्च ।

उपक्रमादितात्पर्यलिङ्गैस्तात्पर्यनिर्णयः ।
विशेषसामान्यतया शास्त्रार्थानां व्यवस्थितिः ॥५॥

उपक्रमेति । उपक्रमादितात्पर्यलिङ्गैरुपक्रमः प्रकरणप्रतिपाद्यस्य वस्तुनः प्रकरणारम्भ उद्देशः स आदिर्येषामुपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तीनां तानि उपक्रमादितात्पर्यलिङ्गानि तात्पर्यस्य सर्वप्रकरणार्थस्यावद्योतकानि चिह्नानि तैस्तात्पर्यनिर्णयस्तात्पर्यस्य प्रकरणप्रतिपाद्यार्थस्य निर्णयो निर्णीयते निश्चीयतेनेनेति निर्णयो निश्चयो येषां वाक्यादवाप्यते इति तृतीयस्थेन सहान्वयः, तथा शास्त्रार्थानां व्यवस्थितिः शास्त्राणां सर्ववाक्यानामर्था विषयास्तेषां व्यवस्थि-

तिर्व्यवस्था विशेषसामान्यतया केषां चिद्विशेषत्वेन केषांचित्सामान्यत्वेन सर्ववाक्यानां स्वस्वार्थप्रतिबोधकत्वेप्येकार्थपरिनिष्ठत्वमित्यर्थः, इयं व्यवस्थितिर्येषां वाक्यादवाप्यते ॥ ५ ॥

किञ्च ।

वेदशास्त्राविरोधेन मोक्षमार्गप्रवेशनम् ।
संप्रदायपरिज्ञानं मतभेदविनिर्णयः ॥ ६ ॥

वेदेति । वेदशास्त्राविरोधेन वेदा ऋगादयः शास्त्राणि मीमांसादीनि तेषामविरोधेन विरोधपरिहारेण मोक्षमार्गप्रवेशनं मोक्षस्य मुक्तेर्मार्गे साधनभूते ज्ञाने प्रवेशनं प्रविश्यतेनेनेति प्रवेशनं प्रवृत्तिज्ञानं करणे ल्युट्, येषां वाक्यादवाप्यते, किञ्च मतेति, मतभेदपरिज्ञानं मतानां शैववैष्णवादीनां भेदस्य वैलक्षण्यस्य परिज्ञानं यथार्थसम्यग्बोधो येषामिति पूर्ववत्, किञ्च संप्रदायेति, संप्रदायविनिर्णयः शैववैष्णवादिमतप्रवर्त्तकानामाशयनिर्णयो यथार्थस्फुरणं येषामिति पूर्ववत् ॥ ६ ॥

केन प्रकारेणावाप्यते तदाह ।

पूर्वोत्तराभ्यां पक्षाभ्यां येषां वाक्यादवाप्यते ।
ज्ञानिनः कर्णधारास्ते सेवितव्या हि साधवः॥७॥

पूर्वोत्तराभ्यामिति । पूर्वोत्तराभ्यां पक्षाभ्यां स्वकृतेन पूर्वपक्षेण वक्तुश्चोत्तरपक्षेण च येषां पुरुषविशेषाणां वाक्यात्संवादादिरूपाद्वचनविलासात्पूर्वोक्तं सर्वमवाप्यते प्राप्यते ते ज्ञानिनो जीवब्रह्मैक्यज्ञानवन्तो लौकिकव्यवहारे सम्यग्ज्ञानवन्तश्च कर्णधाराः संसारसमुद्रे मुमुक्षूञ्ज्ञाननाव्यारोप्य तारकाः साधवः परकार्यसाधनप्रयोजनास्ते सेवितव्याः सेवितुं योग्या ज्ञेयाः ॥ ७ ॥

अस्मिन्नर्थे गीतावाक्यं प्रमाणयति ।

तथा च गीता ।

तथाचेति । इममर्थं गीताप्याहेत्यर्थः, केन वाक्येनेत्याशङ्क्य तदाह ।

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥ ८ ॥

इति श्रीनरहरिकृतौ बोधसारे सत्सङ्गसुधा ॥ ८ ॥

तदिति । हे अर्जुन तज्ज्ञानं ज्ञेयं च प्रणिपातेन प्रणामेन परिप्रश्नेन प्रश्नादिवार्त्तया सेवया तेषां परिचर्यया विद्धि जानीहि लभस्व वा तेभ्यो ज्ञानप्राप्तौ सन्देहो न कर्त्तव्य इत्याहोपदेक्ष्यन्तीति, ते साधवो ज्ञानिनो ज्ञानवन्तस्तत्त्वदर्शिन अनारोपितमेव स्वरूपं पश्यन्ति ते तथा ज्ञानं ज्ञानसाधनमुपदेक्ष्यन्ति उपदेशं करिष्यन्तीत्यर्थः ॥ ८ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ सत्सङ्गसुधार्थप्रकाशोऽष्टमः ॥ ८ ॥

---

अथ समन्वयसरस्वती ।

एवं सर्वसाधनानां प्रधानकारणभूतसत्सङ्गकर्त्तव्यतां विधायेदानीं सर्वशास्त्राणां वेदान्तानुकूल्यं दर्शयितुं तत्तद्वारेणोपयोगनिरूपणार्थं समन्वयसरस्वत्याख्यं षट्श्लोकं प्रकरणमारभते, तत्रादौ निरूपयितव्यप्रकरणश्रवणे श्रद्धां जनयितुं फलप्रदर्शनेन शिष्यं तदभिमुखीकरोति ।

अवगाह्या विशेषेण समन्वयसरस्वती ।
जायेत मतभेदाख्यपङ्कप्रक्षालनं यया ॥ १ ॥

अवगाह्येति । हे शिष्य भवताऽन्यैश्चाधिकारिभिः समन्वयसरस्वती सम्यगेकस्मिन्नेवार्थेऽन्वयः तात्पर्यबोधकः सम्बन्धो यस्याः सा सरस्वती भारती वाग्रूपा विशेषेण परमादरेणाऽवगाह्या विचार्या, ननु समन्वयसरस्वत्यवगाहनेन किं फलं तत्राह जायेतेति, यथा समन्वयसरस्वत्या मतभेदाख्यपङ्कप्रक्षालनं मतानां व्याकरणादिशास्त्रप्रतिपाद्यानामर्थानां भेदो भेदप्रतीतिः सैवाख्या नाम यस्य तदेव पङ्को मलस्तस्य प्रक्षालनं निवर्त्तनं जायेत भवेदिदमेव फलं तस्येति भावः ॥१॥

एवं फलदर्शनेनैतत्प्रकरणं श्रोतुं सन्मुखीकृत्येदानीं सर्वशास्त्राणां ब्रह्मणि समन्वयं वक्तुं प्रथमं मोक्षे यानि साधनानि तान्याह ।

पदं पदार्थो वाक्यार्थस्तत्वानि मनसो यमः ।
महावाक्यार्थविज्ञानं साधनानि क्रमेण हि ॥ २ ॥

पदमिति । पदं सुप्तिङन्तं प्रसिद्धं पदमेकं, 'सुप्तिङन्तं पदमि'ति सूत्रितत्वात्पदार्थो पदस्य वाच्यो लक्ष्यो वार्थो द्वितीयं, वाक्यार्थः पदसमूहो वाक्यं सक्रियापदमित्युक्तलक्षणस्य वाक्यस्यार्थस्तात्पर्यं तृतीयं, तत्वानि प्रकृतिपुरुषौ द्वौ महदादयः सप्त मनआदयो विकाराः षोडशैवं पञ्चविंशतिसंख्यानि चतुर्थं, मनसो यमश्चित्तस्य निरोधाख्यो योगः पञ्चमं, महावाक्यार्थविज्ञानं महावाक्यानि तत्त्वमस्यादिवाक्यानि तेषामर्थो जीवब्रह्मणोरेकत्वरूपस्तस्य विज्ञानमनुभवः षष्ठम्, एतानि षट्साधनानि मोक्षस्य कारणानि क्रमेण क्रमतो हि प्रसिद्धानि विदुषामित्यर्थः ॥ २ ॥

तेषु सर्वसाधनेषु सर्वशास्त्राणामुपयोगनिरूपणं प्रतिजानीते ।

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

# विज्ञापनम् ।

—:०:—

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा। सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टप्रणीता ख० ४ | ४ | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः | १ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृत टीकया स० (वे०) | १ | ० |
| न्यायलीलावती ( यन्त्रस्था ) | ० | ० |

**व्रजभूषण दास और कम्पनी**

चांदनीचौक के उत्तर नई सड़कबनारस

2

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 90.*

Bodhasarah




# बोधसारः।

श्रीविद्वद्वर्यनरहरिविरचितः।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः।

# BODHSÂR,

A TREATISE ON VÊDANTA,

BY

SRI NARHARI,

With a commentary by the author's pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus II.* V. 2

BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilas Press,

BENARES.

1904.

सर्वेषां तत्र तन्त्राणामुपयोगो यथायथम् ।
वदामि तत्समासेन सर्वमेव यथातथम् ॥ ३ ॥

सर्वेषामिति । तत्र तेषु साधनेषु सर्वेषां समस्तानां तन्त्राणां शास्त्राणां यथायथं येन येनोपयोगेनोपयोगः प्रयोजनमस्ति तत्सर्वमेव तत्समस्तमपि यथार्थं समासेन संक्षेपेण वदामि कथयामि त्वं शृण्वित्यर्थः ॥ ३ ॥

तत्र तावद्व्याकरणोपयोगमाहार्धेन ।

जायते शब्दशास्त्रेण पदव्युत्पत्तिरुत्तमा ।
व्युत्पत्तिश्च पदार्थानां न्यायवैशेषिकोक्तिभिः ॥४॥

जायत इति । शब्दशास्त्रेण व्याकरणेनोत्तमा यथार्था पदव्युत्पत्तिः पदानां सुप्तिङन्तानां व्युत्पत्तिर्ज्ञानं जायते भवति, न्यायादीनामुपयोगमाह न्यायवैशिषिकोक्तिभिः, न्यायस्य वैशेषिकस्योक्तिभिर्वाक्यैः पदार्थानां पदानां लक्ष्या वाच्या वाऽर्थास्तात्पर्याणि तेषां व्युत्पत्तिश्च ज्ञानमपि भवति ॥ ४ ॥

मीमांसोपयोगमाहार्धेन ।

मीमांसया च वाक्यार्थव्युत्पत्तिः परिनिष्ठिता ।
व्यक्तिः सांख्येन तत्त्वानां योगेन मनसो यमः॥५॥

मीमांसयेति । मीमांसया मीमांसाशास्त्रेण वाक्यार्थव्युत्पत्तिर्वाक्यानां पदसमूहानामर्थस्तात्पर्यं तस्य व्युत्पत्तिश्च ज्ञानं परिनिष्ठिता स्थिरा भवति; सांख्योपयोगमाह पादेन व्यक्तिरिति, सांख्येन सम्यगसांकर्येण ख्यायन्ते तत्वानि प्रकृतिपुरुषादीनि अनेनेति सांख्यं तेन तत्त्वानां प्रकृत्यादीनां व्यक्तिरसाङ्कर्येण प्रतीतिर्जायते, योगोपयोगमाह पादेन

योगेनेति, योगेन चतुर्विधेन शैवेन पातञ्जलेनैकविधेन च मनसोन्तःकरणस्य यमोवरोधो निरोधाख्यसमाधिरूपो जायते ॥५॥

वेदान्तोपयोगमाह ।

महावाक्यार्थविज्ञानं वेदान्तैर्ब्रह्मनिष्ठया ।
इत्येवं सर्वतन्त्राणां ब्रह्मण्येव समन्वयः ॥ ६ ॥

इति श्रीबोधसारे समन्वयसरस्वती ॥ ९ ॥

महावाक्येति । वेदान्तैरुपनिषद्वाक्यैर्महावाक्यार्थविज्ञानं महावाक्यानि तत्त्वमस्यादीनि तेषामर्थस्तात्पर्यं जीवब्रह्मणोरेकत्वं तस्य विज्ञानं बोधो जायते परन्तु ब्रह्मनिष्ठया ब्रह्मणि निष्ठा सहजं प्रेम तया स्यान्न तु केवलेन वेदान्तार्थविचारेणेति भावः ॥ ६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ समन्वयसरस्वत्यर्थप्रकाशो नवमः ॥ ९ ॥

---

अथाविरोधबोधः ।

एवं सर्वशास्त्राणां वेदान्तार्थे जीवब्रह्मैक्ये समन्वयेनानुकूल्यं प्रदर्श्यैतत्प्रसङ्गेनैव वेदान्तवाक्यजन्ये बोधे जातेपि तस्मिन्द्वैतादीनां भिन्नार्थत्वेन विरोधित्वप्रतीतिर्बाधिका स्यादिति हेतोस्तन्निरासायाविरोधबोधाख्यं सप्तश्लोकं प्रकरणमारभते, तत्र तावत्समन्वयनिरूपणप्रसङ्गेनैव तदनन्तरमविरोधबोधनिरूपणं प्रतिजानीतेऽर्धेन ।

प्रसङ्गादविरोधस्य बोधोप्यत्र निरूप्यते ।
व्यवहारे द्वैतसत्वं द्वैताद्वैतमते समम् ॥ १ ॥

प्रसङ्गादिति । प्रसङ्गात्सर्वशास्त्रनिरूपणप्रसङ्गेनैवाविरोधस्य द्वैताद्वैतादिसर्वमतानामानुकूल्यस्य बोधो विज्ञानमपि अत्रास्मिन्ग्रन्थे प्रकरणेनेत्यर्थः, निरूप्यते कथ्यते प्रतिपाद्यत इत्यर्थः, त्वं शृण्विति शेषः; तत्र तावद्द्वैताद्वैतविवादं परिहर्तुं द्वैताद्वैताविरोधमाहार्धेन व्यवहारे इति, व्यवहारे व्यवह्रियते व्याप्रियतेनेनेति व्यवहारो व्यापारस्तस्मिन्द्वैतसत्त्वं द्वैतस्य सत्त्वं सत्यत्वं द्वैताद्वैतमते द्वैतमतेऽद्वैतमते च समं तुल्यमस्ति वेदान्तिभिरपि व्यवहारे द्वैतस्याङ्गीकृतत्वाद्द्वैतवादिभिरपि प्रतीतिविषयत्वेनैव द्वैतसत्त्वस्याङ्गीकृतत्वाद्द्वयोर्मतयोर्न विरोध इति भावः ॥ १ ॥

ननु द्वैताद्वैतवादेऽद्वैतकल्पिताकल्पितत्वरूपविरोधस्य सत्त्वात्कथमविरोध इत्याशङ्क्य वेदान्तिभिः प्रातीतिकद्वैतापवादार्थकत्वेनाद्वैतेपि तथात्वस्याङ्गीकृतत्वान्न सिद्धान्ते विरोधस्तेनेत्याह ।

अद्वैतकल्पितत्वं चाविरोधोतो मतद्वये ।
विवदन्ति मुहुर्वादरसैस्तद्विवदन्तु ते ॥ २ ॥

अद्वैतकल्पितत्त्वमिति । अद्वैतकल्पितत्त्वं चाद्वैतस्य कल्पितत्वमारोपितत्वमपि द्वैताद्वैतमत उभयत्रापि सममिति पूर्वेणैवान्वयः, वेदान्तिनोपि सिद्धान्तेऽद्वैतस्य कल्पितत्वं मन्यन्ते तदेव द्वैतवादिनोप्यद्वैतकल्पितत्वं प्रतिपादयन्तीत्याशयः, अतः कारणान्मतद्वये मतयोर्द्वैताद्वैतयोर्द्वये युग्मेऽविरोधो विरोधो नास्तीत्यर्थः, ननु तर्हि द्वैताद्वैतिनोर्विषयेऽविरोधे कथंविवादः प्रवर्त्तत इत्याशङ्क्याह विवदन्तीति, ये वादरसिकाः केवलं वादरसैर्वादेषु ये रसाः प्रातीतिकाः स्वस्मादन्यपराभवस्वाधिक्या-

दिजन्याः सुखविशेषास्तैर्निमित्तभूतैर्मुहुः पुनः पुनर्विवदन्ति परस्परं विरुद्धं वदन्ति तत्तस्मात्ते मूर्खा विवदन्तु विरुद्धं वदन्तु विवेकिभिर्जिज्ञासुभिश्चा विरोधं ज्ञात्वा विवादस्त्याज्य इति भावः ॥ २ ॥

एवं द्वैताद्वैतविरोधं परिहृत्य विशिष्टाद्वैताद्वैतयोर्विरोधः परिहर्त्तव्यः । तत्र तावद्विशिष्टाद्वैतिनो हि अद्वैतब्रह्मपरिणामो जीवो जगच्च मन्यन्ते, अद्वैतवादिनस्तु जीवो ब्रह्मैव जगच्चाद्वैतब्रह्मविवर्त्त इति मन्यन्त इति यद्यपि विरोधः प्रतीयते, तथापि जीवोपाधेर्जगतश्च मायापरिणामत्वेन वेदान्तिभिरप्यङ्गीकृतत्वात्, किञ्च साधनसम्पत्तेर्वेदान्तिनामपीष्टत्वाच्च विशिष्टाद्वैतिभिरपि साधनादराय ब्रह्मपरिणामत्वं जीवस्य स्थापयित्वा तन्निरासाय साधनसम्पत्या जीवत्वनाशेनाद्वैतेश्वरत्वप्राप्तिः प्रतिपाद्यतेऽतस्तदविरोधं ज्ञापयितुं यमादिसर्वसाधनानां सर्वसंमतत्वमाह द्वाभ्याम्।

यमास्त्वहिंसासत्याद्या नियमाः शुचितादयः ।
सुखासने च संस्थानं प्रत्याहारस्तु सर्वतः ॥३॥

यमास्त्विति । यमाः पञ्चाहिंसासत्याद्या अहिंसा च हिंसात्याग आवश्यकं विना स च ज्ञेयः, सत्यं सत्यवचनं सत्यप्रतिज्ञत्वादिराद्यः प्रथमं येषामस्तेयब्रह्मचर्यापरिग्रहाणां ते यमा ज्ञेयाः, तथा शुचितादयः शुचिता निर्मलत्वमादिः प्रथमं येषां सन्तोषस्वाध्यायतपईश्वरप्रणिधानानां ते शुचितादयो नियमा ज्ञेयाः । संस्थानं च सम्यक्स्थीयतेनेनेति संस्थानं शरीरस्य स्थैर्यसम्पादनं, सुखासन इति निमित्ते सप्तमी चर्मणि द्वीपिनं हन्तीतिवत्, सुखासननिमित्तजं शरीरे स्थैर्यं सम्पाद्यमिति भावः, यद्वा सुखेन यदा-

सनं स्थितिरेतादृश्येव शरीरस्थिरता सैवासनं मुख्यमित्यर्थः, यद्वा सुखे सुखरूपे ब्रह्मणि आस्यते स्थीयतेनेनेति सुखासनं वृत्तेर्ब्रह्मणि स्थैर्यमेवात्र शरीरस्थैर्यकारणत्वाच्छरीरस्थिरता नान्या बद्धपद्मासनादिरूपा शरीरस्थिरता मतेत्यर्थः, तथा सर्वतः सर्वेभ्यो विषयेभ्य इन्द्रियाणामिति शेषः, स तु प्रत्याहारो ज्ञेयः ॥ ३ ॥

धारणा च तथा ध्यानं समाधानं च चेतसः ।
योगाङ्गसप्तकं त्वेतत्सर्वेषामपि संमतम् ॥ ४ ॥

धारणेति । धारणा च कस्मिंश्चिद्विषये चित्तस्थैर्यास्थैर्ये ज्ञातुं तस्यैव स्थापनं धारणाशब्देनोच्यत इत्यर्थः, तथा ध्यानं वृत्तीनामिष्टैकवस्तुविषयकप्रवाहोन्यविषयवृत्तिभिरनन्तरितस्तद्ध्यानमित्युच्यते चेतसास्त्रिपुटीरूपस्य चित्तस्य समाधानं ध्येयमात्रावस्थानं समाधिर्ज्ञेयः, एतत्तु इदमपि योगाङ्गसप्तकं योगस्य निर्बीजसमाध्याख्यस्य निरोधापरपर्यायस्याङ्गानां साधनानां सप्तकं सप्तानां समूहः समूहे कन्प्राणायामस्य तु सर्वैरेवाङ्गीकृतत्वात्तं विना सप्तैवात्रोक्तानीति ज्ञेयं, सर्वेषामपि द्वैताद्वैतवाद्यादीनामपि संमतमिष्टमतस्तदर्थवतो विशिष्टाद्वैतस्य न केनापि विरोध इति भावः ॥ ४ ॥

इदानीं लयादीनामपि सर्वेषां विरोधं परिहरति ।

लये मन्त्रे हठे राज्ञि भक्तौ सांख्ये हरेर्मते ।
मतैक्यमस्ति सर्वेषां ये बुधा मोक्षमार्गगाः ॥ ५ ॥

लय इति । लये लययोगे 'निद्रादौ जागरस्यान्ते निद्रान्ते जागरोदये । लयो भवति चित्तस्य कार्यं तत्रात्मचिन्तनमि'त्या-

दिषु लयप्रतिपादकेषु लय आत्मचिन्तनायोक्तस्तस्मिन्नपि न वेदान्तिभिः सह विरोध इत्यर्थः, आत्मचिन्तनोपयोगित्वादिति भावः । मन्त्रे मन्त्रयोगे शैववैष्णवादिमन्त्राणामपि देवताप्रसाद-हेतुत्वात्तस्य च ज्ञानप्राप्तिहेतुत्वात्तस्याश्च मुक्तिहेतुत्वान्न वि-रोधो वेदान्तिनां मन्त्रयोगिनां चेति भावः । तथा हठे हठयोगे हठस्यापि शिवशक्तिसमायोगफलत्वात्तस्य च साम्यरूपत्वा-त्तस्य चान्तःकरणशुद्धिद्वारा ज्ञानहेतुत्वान्न विरोधो हठवेदा-न्तयोरिति भावः, राज्ञि राजयोगे राजयोगस्य च स्वरूपस्थि-तिरूपत्वान्न कोपि विरोध इति भावः, भक्तौ भक्तियोगे भक्ति-योगस्याप्यन्तःकरणशुद्धिद्वारा ज्ञानप्राप्त्या मुक्तिहेतुत्वान्न वि-रोधो वेदान्तेन सहेति भावः, सांख्ये सांख्यमते सांख्यस्यापि तत्त्वविवेचनद्वारा पुरुषासङ्गत्वज्ञानेन त्वंपदार्थशोधन उपयो-गित्वाद्वेदान्तिभिः सह सांख्यानां न विरोधः, हरेर्मते श्रीकृ-ष्णस्य 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तप-स्यसि कौन्तेय तत्कुरुष्व मदर्पणमि'त्याद्युक्तलक्षणे भागवतधर्म इत्यर्थः, एतस्मिन्नपि कर्तृत्वबाधेन 'नान्योतोस्ति द्रष्टे'त्यादिश्रु-त्यर्थानुकूल्येनाविरोधो वेदान्तेन सहेति भावः, एवं सर्वेषां स-र्वशास्त्राणां मतैक्यं मतस्येष्टार्थस्यैक्यमविरोधोऽस्ति विद्यते य एवं विदुरिति शेषः, ते बुधा ज्ञानिनस्ते मोक्षमार्गगा मो-क्षस्य मार्गो जीवब्रह्मैक्यज्ञानं तेन गच्छन्ति प्रवर्त्तन्त इति तथो-क्तास्ते ज्ञेयाः, यदि मतेषु तात्पर्यभेदं पश्यन्ति तर्हि तेऽज्ञा-निन इति भावः ॥ ५ ॥

ननु हठयोगे प्राणायामादिना क्लेशबाहुल्यमित्याशङ्क्य प्रा-णायामेन मनःस्थैर्यलक्षणप्रयोजनसद्भावात्तस्यापि सर्वसंम-तत्वमित्याह ।

हठिनामधिकस्त्वेकः प्राणायामपरिश्रमः।
प्राणायामे मनःस्थैर्यं स तु कस्य न संमतः॥६॥

हठिनामिति। हठिनां हठयोगिनामेको मुख्यः प्राणायामपरिश्रमस्तु प्राणानामायामो नियमनन्तु अन्येभ्यो विलक्षणोधिको विशेषोस्ति तस्मिंश्च प्राणायामे सिद्धे सति मनःस्थैर्यं मनसश्चित्तस्य स्थैर्यं स्थिरत्वं जायत इति शेषः, अतः स तु प्राणायामश्च कस्य साधकस्य न संमतो नेष्टः सर्वस्यापीष्ट इत्यर्थः॥६॥

तस्मात्सर्वमतानां मुक्तिफलत्वं सिद्धमित्याह।

विमुक्तिर्वादिनां तस्मान्मतभेदो न कश्चन।
कश्चित्कश्चिन्मते भेदस्त्वस्ति वेदान्तिनामपि॥७॥

इति श्रीनरहरिकृतौ बोधसारेऽविरोधबोधः॥ ७॥

विमुक्तिरिति। तस्मात्फलेऽविरोधाद्वादिनां सर्वेषां स्वस्वमतवादशीलानां विमुक्तिर्मोक्षः स्यादतः फलैकत्वात्कश्चन कोपि मतभेदो मतेषु भेदो भिन्नत्वं न नास्ति, ननु तैः स्वस्वप्रक्रियासु अन्यथान्यथा प्रतिपाद्यतेऽतः कुतो न भेदस्तेष्वित्याशङ्क्याह कश्चिदिति, वेदान्तिनामपि अद्वैतवादिनामपि मते सिद्धान्ते कश्चित्कश्चित्कोपि कोपि भेदो भिन्नत्वमेकजीवत्वानेकजीवत्वादिरूपोऽस्ति वर्त्तते प्रक्रियाभेदेन विषयभेदे वेदान्तेपि विषयभेदः स्यादिति भावः॥ ७॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपिकायामविरोधबोधार्थप्रकाशो दशमः॥ १०॥

---

अथ सांख्याञ्जनशलाका।

एवं सर्वमतानामविरोधं प्रदर्श्येदानीं सांख्यस्यापि असङ्गपुरुषज्ञानसाधनत्वात्तस्य च त्वंपदार्थशोधनेन त्वंपदलक्ष्ये कूटस्थ उपयोगात्तदर्थज्ञानाय सांख्यं निरूपयितुं सांख्याञ्जनशलाकाख्यमेकविंशतिश्लोकं प्रकरणमारभते, तत्रादौ सांख्याञ्जनशलाकेतिप्रकरणनामार्थं सम्भावयितुं तदर्थनिरूपणाय च रूपकमाह।

नेत्रयोरञ्जनं कार्यं सांख्यांजनशलाकया।
ततस्तिमिरनाशेन सूक्ष्मवस्तु विलोक्यते ॥ १ ॥

नेत्रयोरिति। हे शिष्य त्वया सांख्याञ्जनशलाकया सम्यग्निःसन्देहं यथा तथा ख्यायन्ते कथ्यन्ते तत्त्वानि प्रकृतिपुरुषादीनि अनेनेति सांख्यं शास्त्रं तदेवाञ्जनशलाका तया नेत्रयोः प्रकृतिपुरुषज्ञानरूपयोर्नीयते प्राप्यतेऽसङ्गं तत्त्वं याभ्यामिति नेत्रे तयोर्नेत्रसदृशयोः प्रकृतिपुरुषविषयकज्ञानयोरित्यर्थः, अञ्जनमज्यते व्यज्यते स्वरूपमनेनेति अञ्जनमसङ्गत्वज्ञानं शास्त्रजन्यं तत्कार्यं कर्त्तव्यं, किं फलं तस्येत्यपेक्षायां फलं दर्शयति तत इति, ततः कृतनेत्राञ्जनात्तिमिरनाशेन नेत्रस्थिताज्ञाननाशेन सूक्ष्मवस्तु अदृश्यत्वात्सूक्ष्मं वस्तु यथार्थभूतं स्वरूपं विलोक्यते प्रत्यक्षमनुभूयते, इदमेव फलं ज्ञेयम् ॥ १ ॥

एवं फलप्रदर्शनेन मुमुक्षूणां सांख्यश्रवणे रुचिमुत्पाद्येदानीं तेषां तत्र विश्वासं जनयितुं सांख्यसंप्रदायश्रैष्ठ्याय तत्संप्रदायमाह।

कपिलेन मुकुन्देन देवहूती प्रबोधिता।
सर्वतत्त्वविवेकेन तत्सांख्यमभिधीयते ॥ २ ॥

कपिलेनेति। मुकुन्देन मुक्तिदेन परमेश्वरेणैव कपिलेन कपिलनामकेनाचार्येण सर्वतत्त्वविवेकेन सर्वाणि तत्त्वानि समस्तानि प्रकृतिपुरुषादीनि तत्त्वानि विविच्यन्ते पृथग्लक्षणैरसङ्कीर्य ज्ञाप्यन्तेऽस्मिन्निति सर्वतत्त्वविवेकं सांख्यशास्त्रं तेन कृत्वा येनेत्यध्याहार्यं, देवहूतीनाम्नी स्वमाता प्रबोधितोपदिष्टा तच्छास्त्रं सांख्यं सांख्यनामकमभिधीयते कथ्यतेऽतोऽत्र विश्वासः कार्य इति भावः ॥ २ ॥

एवमत्र विश्वासञ्जनयित्वेदानीं सांख्यप्रतिपाद्येषु तत्त्वेषु मध्ये मूलकारणभूतां प्रकृतिं प्रधानापरपर्यायां लक्षयति।

सर्वा विकृतयो यस्याः स्थूलसूक्ष्माश्चराचराः।
अस्ति काचिदनिर्देश्या प्रकृतिस्त्रिगुणात्मिका॥ ३॥

सर्वा इति। यस्याः कारणभूतायाः स्थूलसूक्ष्माः स्थूलाः पञ्चीकृतभूतभौतिकरूपाः सूक्ष्मा अपञ्चीकृतभूतभौतिकरूपाश्च चराचराः पञ्चीकृतभौतिकेष्वपि चरा जङ्गमा अचराश्च स्थावराः सर्वाः समस्ता अपि विकृतयः विकाराः कार्याणीत्यर्थः, भवन्ति एतादृशी त्रिगुणात्मिका त्रयाणां गुणानां सत्त्वरजस्तमोभिधानानां साम्यावस्थारूपाऽनिर्देश्या सत्त्वेनासत्त्वेन वा केनापि रूपेण निर्देशानर्हाऽत एव काचिदनिर्वचनीया प्रकृतिः सर्वजगत्कारणरूपत्वात्प्रकृतिनाम्न्यस्ति विद्यते तदसत्वे जगत्सत्त्वप्रतीत्यनुपपत्तेरिति भावः, तथा चात्र सांख्यानां कारिका 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष' इति ॥ ३ ॥

एवं मूलप्रकृतिलक्षणं निरूप्येदानीं सप्त प्रकृतिविकृतीराह।

महतत्त्वमहङ्कारः पञ्च तन्मात्रकाणि च ।
प्रकृतिर्विकृतिश्चेति सप्तैतानि भवन्ति हि ॥ ४ ॥

महत्तत्त्वमिति । महत्तत्वमेकमहङ्कारो द्वितीयः पञ्च पञ्चसंख्यानि तन्मात्रकाणि च शब्दस्पर्शरूपरसगन्धाख्यानि अपि एतानि हि प्रसिद्धानि उक्तानि सप्त सप्तसंख्याकानि प्रकृतिः कारणरूपाणि विकृतिश्च कार्यरूपाण्यपि भवन्ति जायन्ते ॥ ४ ॥

नन्वेतेषां कारणत्वं कार्यत्वं चैकैकस्य परस्परं विरुद्धं कथं सम्भाव्यमित्याशङ्क्याह ।

स्वकारणानां विकृतिः प्रकृतिः स्वोद्भवस्य यत् ।
एवमष्टौ प्रकृतयस्ततो विकृतयो भवन् ॥ ५ ॥

स्वेति । यद्यस्मात्कारणान्महदादीनि प्रत्येकं स्वकारणानां स्वस्य स्वस्य च यानि यानि कारणानि प्रकृतयस्तेषां विकृतिः स्वयं विकारः कार्यमित्यर्थः, तथा स्वोद्भवस्य स्वस्मात्स्वस्मात्कारणरूपादुद्भव उत्पत्तिर्यस्य यस्य कार्यरूपस्य तस्य तस्य स्वयं प्रकृतिः प्रक्रियते कार्यमनया सा प्रकृतिः कारणं भवतीति शेषः, सर्वप्रकृतिसंख्यामाह एवमिति, एवमुक्तरीत्या प्रकृतयः प्रकृतिशब्दवाच्यानि कारणानि अष्टावष्टसंख्या मूलप्रकृत्या सहेति ज्ञेयाः, ताभ्य एव विकृतिसम्भवमाह तत इति, ततस्ताभ्योष्टप्रकृतिभ्यो विकृतयो विकाराः षोडशसंख्याका वक्ष्यमाणा अभवञ्जाताः ॥ ५ ॥

तानेव विकारान्संख्यया सह निरूपयति ।

व्योमादिपञ्चभूतानि पञ्च ज्ञानेन्द्रियाणि च ।

कर्मेन्द्रियाणि पञ्चैव मनसा सह षोडश ॥ ६ ॥

व्योमादीति । व्योमादिपञ्चभूतानि व्योमाकाशमादिर्येषां वाय्वादीनां चतुर्णां तानि व्योमादीनि तानि पञ्चसंख्यानि भूतानि च तथा तानि, तथा ज्ञानेन्द्रियाणि च शब्दादिज्ञानसाधनान्यपि करणानि पञ्च पञ्चसंख्यानि पूर्वपञ्चकेन सह दश भवन्ति, तथा कर्मेन्द्रियाणि क्रियाजनकानि करणानि पञ्चैव पञ्चसंख्याकान्येव, एवं पूर्वदशकेन सह पञ्चदश भवन्ति, तानि सर्वाणि मनसाऽन्तःकरणेन सह साकं षोडशसंख्याका एते विकारा ज्ञेयाः ॥ ६ ॥

तानेव विकारान्स्पष्टं नामतो निर्दिशति सपादद्वाभ्याम् ।

खं वायुरग्निस्तोयं भूर्भूतपञ्चकमुच्यते ।
शब्दस्पर्शौ रूपरसौ गन्धस्तेषां गुणाः क्रमात् ॥ ७ ॥

खमिति । खमाकाशं वायुरनिलोऽग्निस्तेजस्तोयं जलं भूः पृथ्व्येतद्भूतपञ्चकं भूतानामाकाशादीनां पञ्चकं पञ्चसमूहः समूहे कन्, उच्यते कथ्यते मुनिभिरिति शेषः, प्रसङ्गात्तेषां गुणानप्याह शब्देति, शब्दस्पर्शौ शब्दश्च प्रतिध्वनिरूपः स्पर्शश्चानुष्णाशीतरूपस्तौ द्वौ रूपरसौ रूपं च प्रभारूपं रसश्च माधुर्यरूपस्तौ द्वावेवं पूर्वाभ्यां सह चत्वारः, गन्धः सामान्यगन्धः पञ्चमः, एते पञ्च तेषां गुणा वियदादीनां गुणा धर्माः क्रमात्क्रमेण ज्ञेयाः ॥ ७ ॥

इन्द्रियाणां दशकमाह ।

श्रोत्रं त्वक्चक्षु रसनं घ्राणं ज्ञानेन्द्रियाणि च ।
वाक्पाणिपादपाय्वादि पञ्च कर्मेन्द्रियाणि च ॥ ८ ॥

श्रोत्रमिति। श्रोत्रं श्रुतिः शब्दज्ञानकरणमित्यर्थः, त्वक्स्पर्शज्ञानकरणमित्यर्थः, चक्षुर्नेत्रगोलकस्थं रूपज्ञानकरणं, रसनं रस्यतेनेनेति रसनं रसज्ञानकरणं जिह्वागोलकस्थं, घ्राणं नासिका गोलकस्थं गन्धज्ञानसाधनमेतानि पञ्च ज्ञानेन्द्रियाणि ज्ञानकरणानि ज्ञेयानि, कर्मजनकानीन्द्रियाण्याह वागिति, वाग्वचनजनकं जिह्वास्थं करणं, पाणिर्ग्रहणत्यागजनकं हस्तस्थं करणं, पादो गतिक्रियाजनकमंघ्रिस्थं करणं, पायुर्गुदस्थं मलोत्सर्गक्रियाजनकमिन्द्रियमादिपदेनोपस्थं शिश्नस्थं रतिसुखजनकं करणमेतानि कर्मेन्द्रियाणि च क्रियाजनकानीन्द्रियाणि अपि पञ्च ज्ञेयानि ॥ ८ ॥

मनसः स्वरूपमाह।

उभयात्मा मनस्तेन चतुर्विंशतिरीरिता।
तत्त्वानां तद्विकारस्तु सर्वं चैव जगत्त्रयम् ॥ ९ ॥

उभयात्मेति। मनः संकल्पविकल्परूपं संशयात्मिकान्तःकरणवृत्तिरुभयात्मोभयेषां ज्ञानकर्मेन्द्रियाणामात्मा कारणमुभयेन्द्रियसाधनभूतमित्यर्थः, सर्वतत्त्वानां संख्यामाह तेनेति, तेन कारणेन तत्त्वानां पुरुषवर्जितानां चतुर्विंशतिश्चतुर्विंशतिपरिमिता संख्येरिता कथिता, एवं सर्वतत्त्वसंख्यामुक्त्वेदानीमेतत्सर्वतत्त्वकार्यत्वं जगतो दर्शयति तदिति, सर्वं समस्तं जगत्त्रयं चैव भुवनत्रयमपि तद्विकारस्तेषां तत्त्वानां विकारः कार्यं अस्ति तु ॥ ९ ॥

इदानीं जगतः प्रकृतिकार्यत्वं दर्शयितुं प्रकृतेस्त्रैगुण्यनिरूपणपूर्वकं सर्वजगतस्त्रिगुणकार्यत्वेन गुणमात्रत्वं दर्शयति।

प्रकृतेस्त्रिगुणात्मत्वात्सर्वं हि त्रिगुणात्मकम्।

रक्तश्वेतश्यामरूपा रजःसत्त्वतमोगुणाः ॥१०॥

प्रकृतेरिति । प्रकृतेः सर्वजगत्कारणभूतायाः प्रधानापरपर्यायास्त्रिगुणात्मत्वाद्गुणत्रयसाम्यरूपत्वात्सर्वं तत्कार्यभूतं जगद्धि प्रसिद्धं चेदं त्रिगुणात्मकं सत्त्वरजस्तमोमात्रमस्ति जगतो गुणमात्रत्वमेव ज्ञापयितुं गुणानां वर्णतो रूपमाहार्द्धेन रक्तेति, रजःसत्त्वतमोगुणा रजश्च सत्त्वं च तमश्चैतन्नामकास्त्रयो रक्तो लोहितः श्वेतः शुक्लः श्यामः कृष्ण एतानि रूपाणि येषां तथाविधाः, एतेनैव जगतोपि रक्तश्वेतश्यामरूपत्वेन गुणमात्रत्वं निश्चेयमिति भावः ॥ १० ॥

इदानीं जगतो गुणकार्यत्वं गुणस्वभावकथनेन सूचयत्यर्धेन ।

रजश्चलं तमः स्तब्धं प्रकाशस्सात्त्विको मतः ।
तमोऽधमं रजो मध्यं सत्त्वमुत्तममेव हि ॥ ११ ॥

रज इति । रजो रजोगुणश्चलं चञ्चलस्वभावमस्ति तमस्तमोगुणः स्तब्धं स्तब्धस्वभावं स्थिरमित्यर्थः, अस्ति प्रकाशो ज्ञानं सात्त्विकः सत्त्वधर्मो मतो निश्चितो मुनिभिरिति शेषः, पुनरपि जगतो गुणकार्यत्वं ज्ञापयितुं नीचत्वादीन्धर्मान्गुणानामाह तम इति, तमस्तमोगुणोऽधमं नीचस्वभावं रजो रजोगुणो मध्यं मध्यस्वभावं सत्त्वं सत्त्वगुण उत्तममेवोच्चस्वभावमेवास्ति हि प्रसिद्धमेतद्विदुषामिति भावः ॥ ११ ॥

इदानीं गुणकार्यतोपि जगतो गुणमात्रत्वं दर्शयितुं गुणानां कार्याण्याह ।

लोभादयो रजोभावास्तमसो जडतादयः ।
सुखप्रसादबोधाद्या भावाः सत्त्वस्य कीर्त्तिताः॥१२॥

लोभादय इति। लोभादयो लोभः प्राप्तेपि वस्तुनि स्पृहारूपान्तःकरणवृत्तिरादिर्येषामक्षचाञ्चल्यादीनां ते रजोभावा रजोगुणकार्याणि ज्ञेयानि, जडतादयो जडता मोह आदिर्येषां क्रोधादीनां ते तमसस्तमोगुणस्य भावाः कार्याणि विद्यन्ते, सुखप्रसादबोधाद्याः सुखानि प्रियमोदप्रमोदाख्याः सुखविशेषाः प्रसादोन्तःकरणनैर्मल्यं बोधो ज्ञानं चाद्याः प्रमुखा येषां शमादीनां ते भावाः कार्याणि सत्त्वस्य सत्त्वगुणस्य कीर्त्तिताः कथिता मुनिभिरिति शेषः, एवं प्रकारेण विचारे कृते जगतः प्रकृतिगुणकार्यत्वं सिद्धमेवेति ज्ञेयमिति भावः ॥ १२ ॥

इदानीं स्पष्टमेव जगतो गुणकार्यत्वं दर्शयति।

देवादयः सात्त्विकाः स्युर्नराद्या राजसाः स्मृताः।
तामसाः पशुभूताद्या एवं सर्वं विविच्यताम्॥ १३॥

देवादय इति। देवादयो देवा इन्द्रादय आदयो येषां विद्याधरकिंनरगन्धर्वादीनां ते तारतम्येन सात्त्विकाः सत्त्वगुणोद्भवाः स्युर्भवेयुः, तथा तद्वन्नराद्या नरो मनुष्य आद्यो येषां मुनिऋष्यादीनां ते राजसा रजोगुणोद्भवाः स्मृताः प्रोक्ताः पुराणेतिहासादावित्यर्थः, पशुभूताद्याः पशवो गोश्वादयश्च भूताश्च प्रेतादय आद्या मुख्या येषु पतङ्गकीटवृक्षादिषु ते तामसास्तमोगुणोद्भूताः, यद्यपि 'भूतोमी देवयोनय' इत्यमरसिंहेन देवयोनित्वमुक्तं तथापि तदन्तर्धानादिशक्तिमत्त्वेनेति ज्ञेयं, तामसत्वं क्रौर्याद्यतिशयवत्त्वादिति भावः, उक्तमन्यत्राप्यतिदिशति एवमिति, एवमुक्तप्रकारेण सर्वं वस्तुजातं विविच्यतां सात्त्विकादिभेदेन पृथक्पृथग्ज्ञायतामित्यर्थः ॥ १३ ॥

एवं जगतो गुणकार्यत्वं प्रदर्श्येदानीं सांख्यस्य वेदान्ता-

नुकूल्याय तत्कारणभूतप्रकृतेर्मायात्वं ज्ञापयितुं गुणानामघटितघटनाकारित्वं दर्शयति।

विरोधिनस्सहायाश्च मिथः कार्यं च कारणम्।
मिलित्वा कार्यकर्त्तारो गुणा विषमचेष्टिताः॥१४॥

विरोधिन इति। गुणाः प्रकृतिलक्षका धर्मा रजःसत्त्वतमोरूपा मिथोऽन्योन्यं विरोधिनो विरोधो विद्यते येषां ते तथोक्ताः परस्परनाशकस्वभावा इत्यर्थः, सहायाश्च मिथोऽन्योन्यमनुकूलास्तत्तत्कार्यजननेऽन्योन्यमनुकूला इत्यर्थः, सन्तीति शेषः, अन्योन्यं कार्यं कारणं च परस्परं कार्यकारणरूपा अपि भवन्ति, किञ्च गुणाः सत्त्वरजस्तमोभिधा विषमचेष्टिता विषममन्योन्यनाशकं चेष्टितं चेष्टा येषां ते प्रकाशकं सत्त्वं चाञ्चल्यादिमद्रजो लयरूपं तमः, एवं वैषम्याद्गुणानां परस्परं प्रातिकूल्यमिति भावः, ते गुणाः मिलित्वैकीभूय कार्यकर्तारः कार्यस्य जगतो जननस्थितिनाशरूपस्य कर्त्तारः कारका भवन्ति, एतेन गुणानामघटितघटनारूपत्वेन तत्कार्यस्य जगतोपि तथात्वादुभयत्र मायालक्षणसिद्धेर्मायात्वं सिद्धं तेन च तत्कारणभूतप्रकृतावपि तत्सिद्धमेवेत्यूह्यमिति भावः॥ १४॥

एवं प्रकृतेर्मायात्वं प्रदर्श्येदानीं पुरुषस्यासङ्गत्वं दर्शयितुं विश्वस्यात्मनश्च वैलक्षण्यं दर्शयति।

विश्वं गुणात्मकं सर्वमात्मा निर्गुण एव हि।
प्रकाशकतया तत्र प्रविष्ट इव भासते॥ १५॥

विश्वमिति। सर्वं समस्तं विश्वं जगद्गुणात्मकं गुणा एवात्मा स्वरूपं यस्य तद्गुणरूपमित्यर्थः, आत्मा पुरुषो हि वि-

लक्षणत्वेन प्रसिद्धो विदुषां निर्गुण एव गुणरहित एवातस्तत्र जगति गुणकार्ये प्रकाशकतया गुणानां जगतश्च प्रकाशकलक्षणाभासरूपसम्बन्धाभासेन प्रविष्ट इव प्रविष्टसदृशो भासते प्रतीयते वस्तुतस्तु न प्रविष्ट इत्यर्थः, अत एव न केन चित्सम्बन्ध आत्मनः सम्भवति तेन चासङ्गत्वं सर्वदैवात्मनः सिद्धमिति भावः ॥ १५ ॥

इदानीं सर्वतत्त्वेभ्यो वैलक्षण्यं पुरुषस्य सदृष्टान्तमाह ।

यथा द्वात्रिंशद्दन्तस्था रसज्ञा रसवेदिनी ।
चतुर्विंशतितत्वान्तः स्वात्मज्ञस्तत्त्वविचथा ॥ १६॥

यथेति । यथा यद्वद्द्वात्रिंशद्दन्तस्था द्वात्रिंशत्संख्यदन्तसमूहस्था रसज्ञा रसान्मधुरादीञ्जानातीति रसज्ञा जिह्वा सर्वरसानुभवित्रीत्यर्थः, रसवेदिनी रसवेदनशीला रसज्ञानरूपक्रियाकरणरूपेत्यर्थः, न तु दन्ता रसवेदनशीलाः, तथा तद्वच्चतुर्विंशतितत्त्वान्तश्चतुर्विंशतिसंख्यप्रकृत्यादितत्त्वानि अन्तयति नाशयति स्वसत्ताकर्षणेन स तथा स्वात्मज्ञः स्वात्मानं जानातीति तथा स्वप्रकाश इत्यर्थः, तत्त्वविचत्त्वानि चतुर्विंशतिसंख्यानि वेत्तीति तथा स पुरुषो ज्ञेयः, स्वतः सत्तास्फूर्तिरहिततत्त्वेभ्यः सद्रूपत्वस्वप्रकाशत्वसर्वप्रकाशकत्वेन सिद्धमात्मनोऽसङ्गत्वमिति भावः ॥ १६ ॥

एवमात्मनोऽसङ्गत्वं स्वप्रकाशत्वं च प्रदर्श्य तस्य वास्तवैकत्वे बहुत्वस्य मायामात्रत्वं दर्शयति ।

एकमेव निजं नाथं माया विषयलम्पटा ।
बहुरूपधरं कृत्वा वेश्येव खलु खेलति ॥१७॥

एकमिति। विषयलम्पटा विषयेषु भोग्येषु लम्पटा लोलुपा मायैव प्रकृतिरेव केवलमेकं तत्त्वतो भेदरहितं निजं स्वकल्पितं स्वीयं निर्माय स्वरूप एकत्वानेकत्वयोरभावादित्यर्थः, नाथमीश्वरं बहुरूपधरं कृत्वाऽनेकरूपजननशक्तिमन्तं कृत्वा विधाय तेन सहैव वस्तुतः शुद्धात्मनस्तत्सम्बन्धानुपपत्तेर्वेश्येव यथा वेश्या जारैः सह क्रीडति तथेयं खेलति क्रीडति खलु निश्चयेऽत्रार्थे सन्देहो न न कार्य इत्यर्थः, पुरुषानिष्ठमनेकत्वं यत्प्रतीयते तन्मायिकमेव न पारमार्थिकमिति भावः॥ १७॥

ननु मायाया अत्यन्तपृथक्त्वे तत्कृतानेकत्वस्य प्रतीतिरात्मनि कथं स्यादित्याशङ्क्य मायातत्कार्ययोरात्मनश्च सत्त्वैकत्वान्मायानिष्ठानेकत्वस्यात्मनि भ्रान्त्या प्रतीतिर्जायत इत्याशयेनाह।

अपृथग्भावरूपेण मिलित्वा पुरुषेण हि।
विचित्राकाररूपैस्तं सन्नर्त्तयति नर्त्तकी॥ १८॥

अपृथगिति। नर्त्तकी नर्त्तनकर्त्री स्वयं मायाऽपृथग्भावरूपेण न विद्यते पृथग्भिन्नो भावः सत्ता यस्य तत्तच्च तद्रूपं च स्वरूपं यस्य स तथोक्तो मायापुरुषयोरेकसत्ताकत्वमिति भावः, तेनारोपितेन पुरुषेण साधिष्ठानबुद्धिस्थचिदाभासेन सह मिलित्वैकीभूय विचित्राकाररूपैः स्वीयानि यानि विचित्राकाराणि विलक्षणाकृतीनि रूपाणि तैः कृत्वा तं स्वकृतमेव पुरुषं न तु शुद्धं सन्नर्त्तयति स्वनृत्यं तस्मिन्नारोप्य तदभिन्नं दर्शयतीत्यर्थः, हि प्रसिद्धं चैतद्विवेकिनां माया स्वकार्यमनेकत्वं मायिकपुरुषे समारोप्य तच्च तं च पारमार्थिके ऽसङ्गे चिदात्मनि समारोप्यात्मनोनेकत्वं प्रत्याययति सा प्रतीतिर्न पार-

मार्थिकी भ्रान्तिरेव सेति भावः ॥ १८ ॥

ननु मायिकपुरुषशुद्धपुरुषयोः पारमार्थिकैकत्वज्ञानं कथं स्यादित्याशङ्क्य मायाया मायाकार्यभूतपुरुषस्य च भिन्नस्वाभाव्यान्मायिकपुरुषस्य दुःखप्रतीतिर्मायायां यदा स्यात्तदा वैराग्योत्पत्या स्वस्योपाधेश्च विविक्तत्वज्ञानेन स्वस्य निर्मायात्मनश्चैकत्वज्ञानं स्यादित्याशयेनाह ।

निर्दोषो निश्चलो नाथः सदोषा चञ्चला वधूः ।
दम्पत्योरनयोर्नूनं रसभङ्गो भविष्यति ॥ १९ ॥

निर्दोष इति । नाथो मायाकल्पितो मायानियन्ता जीवो वस्तुतो निर्दोष उपाधिरहितः शुद्धात्मांशत्वादतो निश्चलश्चाञ्चल्यरहितः सदैकरूप इत्यर्थः, वधूः स्वधबन्धनकारणभूता माया प्रकृत्यपरपर्याया सदोषा सोपाधिकाऽत एव चञ्चलाऽस्थिराऽनेकरूपेत्यर्थः, अस्तीति शेषः, अनयोरुक्तयोरेव भिन्नलक्षणयोरेवेत्यर्थः, दंपत्योः प्रकृतिपुरुषयोर्जगत्प्रजाजननायजायापतिभावेन वर्तमानयोर्भिन्नस्वाभाव्यादेव नूनं निश्चयेन रसभङ्गो रसः सुखं तस्य भङ्गो नाशो दुःखं भविष्यति उत्पत्स्यति ततश्च वैराग्येण स्वस्य प्रकृतेश्च भिन्नत्वज्ञानं भविष्यतीति भावः ॥ १९ ॥

ततश्च प्रकृतिनाशः स्यादित्याशयेनाह ।

पृथक्त्वेन परिज्ञाता दुष्टरूपतया पि च ।
न मुखं दर्शयत्येषा सलज्जा म्रियतेपि च ॥ २० ॥

पृथक्त्वेनेति । एषा प्रकृतिरूपा वधूः पृथक्त्वेन स्वविलक्षणस्वाभाव्येन च पुनर्दुष्टरूपतयापि सर्वदोषकारणवत्त्वेन च

परिज्ञाता सर्वदाऽनुभूता सती स्वस्याग्रे मुखमास्यं न दर्शयति प्रतीतिविषयं न करोति अपि च किन्तु सलज्जा त्रपाभरासहा च सती म्रियते विनश्यति ॥ २० ॥

ततश्च प्रकृतिविकृत्योः पृथक्सत्त्वाभावे प्रकृतेरपि पुरुषात्पृथगसत्त्वे च सिद्धे पुरुषस्य शुद्धबुद्धस्वरूपत्वेन नित्यासङ्गत्वं सिद्धमित्याह ।

प्रकृतिर्विकृतिर्नापि पुरुषो निश्चलात्मकः ।
शुद्धबुद्धस्वरूपोऽसावित्रिति सांख्यविनिर्णयः ॥ २१ ॥

इति श्रीनरहरिकृतौ बोधसारे सांख्याञ्जनशलाका ॥ ११ ॥

प्रकृतिरिति । विकृतिर्महत्तत्त्वादिब्रह्माण्डपर्यन्ता कार्यरूपा न नास्ति प्रकृतेः पृथगसत्वात्तथा प्रकृतिरपि महदादिकारणभूता न नास्ति तस्या अपि पुरुषात्पृथगसत्त्वादित्यर्थः, अतोऽसावुक्तलक्षणः पुरुष आत्मा निश्चलात्मक एकत्वानेकत्वादिरूपचाञ्चल्यहीनोऽत एव शुद्धबुद्धस्वरूपः शुद्धं मायातत्कार्यास्पृष्टमसम्बद्धमित्यर्थः, बुद्धं स्वयंप्रकाशरूपं च रूपं स्वरूपं यस्य स एतादृशोऽस्ति, उक्तमुपसंहरतीतीति, सांख्यविनिर्णयः सांख्यस्य प्रकृत्यादितत्त्वविवेचकशास्त्रस्य विनिर्णयो विशेषनिर्णय इति सम्पूर्णः सम्यक्ख्यायते तत्त्वमनेनेति साङ्ख्यनामनिरुक्तेरेतदन्यथार्थप्रतिपादकस्य कस्य चिच्छास्त्रस्य सांख्याभासत्वेन तस्य प्रामाण्यं नाभ्युपेयमिति भावः ॥ २१ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ सांख्याञ्जनशलाकार्थप्रकाश एकादशः ॥ ११ ॥

---

अथ योगदीक्षाचिन्तामणौ पातञ्जलयोगः।

एवं सांख्यं वेदान्तानुकूलतया प्रतिपाद्येदानीं मलिनान्तःकरणानां जिज्ञासूनां सांख्योक्ते जीवात्मैक्यासंगलक्षणपुरुषे चित्तस्थितिर्न स्यादिति तदन्तःकरणमलनिरासकनिरोधाख्ययोगेन चित्तशुद्धौ विवेकाविर्भावेन तत्रैव चित्तस्थैर्यं स्यादिति तदर्थं योगं निरूपयितुं योगदीक्षाचिन्तामण्याख्यमेकोत्तरशतश्लोकं प्रकरणमारभते, तत्र चावांतरप्रकरणे द्वे पातञ्जलाख्यं शैवाख्यं चेति; तत्रापि पातञ्जलस्यैकविध्यादाद्यमेव षड्विंशतिश्लोकं भवति, इतरस्य च चातुर्विध्यात्तत्र चत्वारि प्रकरणानि मन्त्रयोग हठयोग शिवशक्तिपराक्रम लययोगाख्यानि क्रमेण चतुःश्लोकैकोनविंशतिश्लोक षोडशश्लोक षट्त्रिंशच्छ्लोकानि सन्ति, तान्यनुक्रमतो व्याख्यास्यामः। तत्रादौ पातञ्जलं योगं निरूपयति, तत्र तावद्योगप्रतिपादकस्यास्य प्रकरणस्य योगदीक्षाचिन्तामणिनाम्नोर्थं तत्र प्रवृत्तिं जनयितुं सफलं दर्शयति।

अथातो योगदीक्षायाश्चिन्तामणिरुदीर्यते।
तत्प्राप्त्याऽबोधदारिद्र्यं सर्वमेव विनश्यति॥ १॥

अथेति। अथ सांख्यप्रतिपादनानन्तरं सांख्योक्ते तत्त्वे मलिनान्तःकरणानां मुमुक्षूणां केन चित्प्रतिबिन्धेन चित्तस्थैर्यं न भवति यतोऽत इति हेतोरित्यर्थः, योगदीक्षाया योगस्य निरोधाख्यस्य दीक्षा संस्कारस्तस्याश्चिन्तामणिः कल्पितफलप्रदत्वाच्चिन्तामणिरिव कल्पितधारणाजन्यफलप्रदत्वाच्चिन्तामणिरिति नाम प्रकरणस्य स उदीर्यते निरूप्यते तत्त्वं शृणु, ननु चिन्तामणिप्राप्त्या दारिद्र्यं नश्यत्यनेन किं स्यादित्यत आह तदिति, तत्प्राप्त्या तस्य

ोगदीक्षाचिन्तामणेः प्राप्त्या लाभेनाऽबोधदारिद्र्यमबोधो-
ज्ञानं तदेव सर्वदारिद्र्यमूलत्वाद्दारिद्र्यं दरिद्रत्वं तत्सर्वमेव स-
ास्तमपि विनश्यति निवर्ततेऽतोऽस्य योगदीक्षाचिन्तामणि-
रिति नामेति भावः ॥ १ ॥

अस्य च संप्रदायतः प्रामाण्यं वक्तुं योगप्रवर्त्तकान्द्वाभ्यामाह ।

महायोगेश्वरः शम्भुः महायोगेश्वरो हरिः ।
महायोगेश्वरो ब्रह्मा भवानी सिद्धयोगिनी ॥ २ ॥

महायोगेश्वर इति । शम्भुः शं सुखं भवत्यस्माल्लोकाना-
मेति स शम्भुः शङ्कर इत्यर्थः, महायोगेश्वरो महाञ्छ्रेष्ठो यो-
ानां मन्त्रादियोगानामीश्वरः प्रवर्त्तक आचार्य इत्यर्थः, तथा
रिर्हरति सर्वं दुःखं भक्तानां स हरिर्विष्णुर्महायोगेश्वरो
हान्सर्वमान्यो योगेश्वरो योगप्रवर्त्तकोऽस्ति तथा ब्रह्मा
रमेष्ठी महायोगेश्वरो महाञ्जगत्पूज्यो योगेश्वरो योगप्रव-
्तकोऽस्ति तथा भवानी सर्वजगज्जीवयित्री चिच्छक्तिः सि-
द्धयोगिनी स्वतःसिद्धयोगवत्यस्ति, एतेषां सर्वजगच्छ्रेष्ठत्वं
ोगफलमेव योगानां प्रवृत्तिरपि तेभ्य एवेति भावः ॥ २ ॥

तदितरेषामपि योगेन सिद्धिप्राप्तिमपि तदितरेषां तत्र
चिं जनयितुं प्रदर्शयति ।

सनकाद्याः वसिष्ठाद्याः कचदत्तशुकादयः ।
अरुन्धतीप्रभृतयो योगात्सिद्धिमुपागताः ॥ ३ ॥

सनकेति । सनकाद्याः सनक आद्यो मुख्यो येषु ते नै-
ष्ठिका, वसिष्ठाद्या वसिष्ठ आद्यो मुख्यो येषां पुलस्त्यादीनां
सर्वे गृहिणः, तथा कचदत्तशुकादयः कचो बृहस्पतेः पुत्रो

दत्तो ह्यत्रेः पुत्रः शुको व्यासपुत्र एत आदयो मुख्या येषामा-र्षभादीनां ते सर्वेपि परमहंसाः, तथाऽरुन्धतीप्रभृतयोऽरुन्धती वसिष्ठपत्नी प्रभृतिरादिर्यासां देवहूत्यादीनां ताः स्त्रियः, एते सर्वे योगाच्चित्तवृत्तिनिरोधलक्षणयोगात्सिद्धिमणिमादिरूपां मुक्तिमपि उपागता प्राप्ता अतो मुमुक्षुभिर्योगः साध्य एवेति भावः ॥ ३ ॥

ननु योगशब्दवाच्यार्थानां मतभेदेन बहुत्वप्रतीतेर्मुख्यो योगशब्दार्थः को विवक्षित इत्याशङ्कायामाह ।

आत्मज्ञानेन यो योगो जीवात्मपरात्मनोः ।
स योगस्तस्य हेतुत्वाद्योगा बहुविधा मताः ॥४॥

आत्मज्ञानेनेति । यो वेदान्तेषु प्रसिद्ध आत्मज्ञानेन आत्मस्वरूपयथार्थज्ञानेन तत्त्वमसीत्यादिवाक्यजन्याहंब्रह्मेत्याकारेण जीवात्मपरमात्मनोर्जीवस्य प्राणोपाधिकस्य साधिष्ठानबुद्धिस्थचिदाभासस्यात्मा शोधितस्त्वंपदार्थः कूटस्थः, परमश्चासावात्मा च परमात्मा शोधितस्तत्पदार्थो जगदारोपाधिष्ठानं ब्रह्मेत्यर्थः, तयोरुभयोर्योग एकत्वं यत्पारमार्थिकं स स एवेत्यर्थः, योगो योगशब्दवाच्यो मुख्यो भवति, तत्र तर्हि कुतो बहुत्वं दृश्यते तत्र तत्र शास्त्रेषु तत्राह तस्य, योगस्य हेतुत्वात्साधनत्वात्तेपि योगा योगशब्दवाच्यार्था भवन्ति, अतस्ते बहुविधा अनेकप्रकारा मता मुनिभिस्तत्तच्छास्त्रेषु निर्णीताः, याथार्थ्यात्मज्ञानस्यैव योगशब्दमुख्यार्थत्वमितरेषां तु तत्साधनभूतत्वाद्गौणं योगशब्दार्थत्वमिति भावः ॥ ४ ॥

एवं मुख्यं योगशब्दार्थं प्रतिपाद्येदानीं भगवत्प्रतिपादितं योगशब्दार्थं दर्शयति ।

ष्ठानोऽन्तःकरणसत्त्ववृत्तिस्थश्चिदाभासो विषयानन्दान्विषय-
ोगजन्यसुखानि अमन्दादरादतीवादरेणादानार्थिभिरा-
ानं विषयभोगजन्यसुखानुभवस्तमर्थितुं याचितुं शीलं येषां
तथोक्तास्तैर्जडैर्मूढैरज्ञैरित्यर्थः, अर्थितानीप्सितानपि आ-
न्दान्विषयजन्यसुखलवान् यद्यपि ते मूर्खानुभवेनानन्दाः
तीयन्ते तथापि ते नानन्दा इत्यर्थः, कुत इत्यत आहान-
दलेशानिति, आनन्दलेशानानन्दस्य ते लेशा अंशाः प्र-
ेबिम्बानीत्यर्थः, तानमून्प्रसिद्धानपि संविहाय त्यक्त्वा-
ऽनन्दोपनिषत्प्रमाणपठितामानन्दस्य प्रतिपादिकोपनिषदान-
दोपनिषत् 'सैषानन्दस्य मीमांसा भवति, युवा स्यात्साधु-
ुवाध्यायकः, आशिष्ठो दृढिष्ठो बलिष्ठः, तस्येयं पृथिवी सर्वा
वेत्तस्य पूर्णा स्यादि'त्यादिना मानुषानन्दज्ञानाय मानुषान-
दलक्षणानि प्रतिपाद्य 'स एको मानुष आनन्द' इति मानुषा-
न्दं लक्षयित्वा 'ते ये शतं मानुषा आनन्दाः स एको मनुष्य-
न्धर्वाणामानन्द' इत्यादिका 'स यश्चायं पुरुषे यश्चासावादित्ये
 एकः' इत्यन्ता सैव प्रमाणं तस्मिन्पठितां मानुषानन्दादुत्त-
ोत्तरं शतशतगुणत्वेन प्रतिपादितामानन्दसीमाशिखामान-
दानां मानुषानन्दादिब्रह्मानन्दान्तानां सीमाऽवधिर्ब्रह्मानन्द-
तस्य शिखावदूर्ध्वं 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः'
ति श्रुत्योपास्यादित्यतदुपासकपुरुषस्थितानन्दैकत्वेन प्रति-
ादित आनन्दः स्थितस्तद्रूपामानन्दमात्रोपलक्षितामित्यर्थः,
ानन्दामृतवाहिनीमानन्दो निरतिशयसुखं स एवामृतं जग-
जीवकत्वादमृतमिव जलमित्यर्थः, तस्य वाहिनी प्रवहनशीला
ां यथा नदी निरन्तरं जलप्रवाहेनोपलक्षिता तथाखण्डानन्द-
वषयकवृत्तिप्रवाहेनोपलक्षितेत्यानन्दामृतवाहिनीपदेन सूचितं

ज्ञेयं, वस्तुतस्तु परमानन्दाभिन्नत्वादानन्दरूपामानन्द एव रूपं यस्यास्तां भगवतीं षड्गुणैश्वर्यसंपन्नां शक्तिं भजे चिन्तयामि ॥१६॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ योगदीक्षाचिन्तामण्यर्थप्रकाशे शिवशक्तिपराक्रमार्थप्रकाशश्चतुर्थः ॥ ४ ॥

---

अथ लययोगः।

एवं शिवशक्तिपराक्रमं निरूप्येदानीं लयभेदप्रकारनिरूपणाय लययोगाख्यं षट्त्रिंशच्छ्लोकं प्रकरणमारभते, तत्रादौ लयप्रयोजनमाह ।

चञ्चलं हि न जानाति मनो निश्चलतासुखम् ।
तद्विचिन्तयितुं तस्मै मुनिभिर्दर्शितो लयः ॥ १ ॥

चञ्चलमिति । हि प्रसिद्धं गीतादौ तथाच गीता 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढं । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्कर'मिति चञ्चलमस्थिरं मनोन्तःकरणं कर्तृ निश्चलतासुखं निश्चलतया स्थैर्येण यत्सुखं जायते यत्तन्न जानाति न वेत्ति अतो मुनिभिर्विवेकिभिस्तत्सुखं विचिन्तयितुमनुभवितुं तस्मै मनःस्थैर्याय लयो लीयते मनोनेनेति लयो मनश्चाञ्चल्यनिवर्त्तको योगभेदो दर्शितः प्रतिपादित इत्यर्थः ॥ १ ॥

इदानीमेतत्संप्रदायज्ञापनपूर्वकमेतस्यानन्ततया संक्षेपनिरूपणं प्रतिजानीते ।

आख्याताः शम्भुना गौर्यै ह्यसंख्याता लयक्रमाः ।
केन ज्ञेयाः केन वर्ण्याः किञ्चित्तु कथयाम्यहम् ॥२॥

आख्याता इति । शम्भुना शिवेनासङ्ख्याता न सङ्ख्याता न गणिता इत्यर्थः, लयक्रमा लयस्य लययोगस्य क्रमा भेदा गौर्यै पार्वत्या आख्याता उपदिष्टाः सन्तीति शेषः, ते केनेदानीन्तनेन पुरुषेण स्वल्पायुर्बुद्धिबलवीर्यवता ज्ञेया ज्ञातुं शक्या न केनापीत्यर्थः, किञ्च केन पुरुषेण वर्ण्या वर्णितुं शक्या न केनापीत्यर्थः, ननु तर्हि तज्ज्ञानं कथं स्यात्तत्राह किञ्चिदिति, अहं तु अहमपि किञ्चित्स्वल्पं यथा तथा कथयामि वर्णयामि ॥ २ ॥

एवं लयनिरूपणं प्रतिज्ञायेदानीं लयस्थाननिदर्शनपूर्वकं लयानन्तरं कार्यमुपदिशति ।

निद्रादौ जागरस्यान्ते निद्रान्ते जागरोदये ।
लयो भवति चित्तस्य कार्यं तत्रात्मचिन्तनम्॥३॥

निद्रादाविति । निद्रायाः पूर्वक्षणे जागरस्यान्ते जाग्रतोऽन्तक्षणे तथा निद्रान्ते निद्रायाः सुपुप्तेरंतक्षणे जागरोदये जागरो जागृतिस्तस्योदय उदयोपलक्षितकाले निद्राजागरयोरुभयसधावित्यर्थः, चित्तस्यान्तःकरणस्य लयो नाशो भवति जायत एतत्सर्वानुभवसिद्धं, तत्र तस्मिन्काल आत्मचिन्तनं निर्मनस्कस्थित्युपलक्षितस्यात्मनश्चिन्तनं ध्यानं तत्प्रत्ययावृत्तिरूपं कार्यं कुर्यादित्यर्थः ॥ ३ ॥

अन्यदपि लयस्थानं दर्शयति यदेति ।

यदा शिथिलतां याति भारं त्यक्त्वेव भारिकः ।
आत्मादरेण कर्त्तव्यं तदैव शिवपूजनम् ॥ ४ ॥

यदेति । आत्मान्तःकरणोपाधिको जीवो भारं त्यक्त्वेव

काष्ठादिभारं त्यक्त्वा विसृज्य शिरस्तो दूरीकृत्येत्यर्थः, भारिक इव भारवाहीव व्यवहाररूपं भारं त्यक्त्वा यदा यस्मिन्काले शिथिलतां मनसि व्यवहारविषयकशैथिल्यमौदासीन्यमित्यर्थः, याति प्राप्नोति तदैव तस्मिन्नेव काल आदरेण प्रेम्णा शिवपूजनं शिवस्य प्रत्यगानन्दरूपस्यात्मनः पूजनं ध्यानं कर्त्तव्यं कार्यम् ॥ ४ ॥

उक्तलयस्थानाभ्यामन्येष्वपि लयस्थानेषु आत्मध्यानादरो विधेय इत्याह ।

यदा यदा शिथिलतां याति चित्तं तदा तदा ।
चिन्तनीयो महेशानस्तदैव शिवपूजनम् ॥ ५ ॥

यदा यदेति । चित्तमन्तःकरणं यदा यदा यस्मिन्यस्मिन्काले शिथिलतामुदासीनवृत्तां याति प्राप्नोति तदा तदा तस्मिंस्तस्मिन्काले महेशानः परमेश्वरश्चिन्तनीयो ध्येयस्तदेव ध्यानमेव शिवपूजनं शिवस्यात्मनः पूजनं ध्यानरूपा पूजा भवतीति शेषः ॥ ५ ॥

इदानीं सर्वेष्वपि कालेषु लयोपायकथनपूर्वकं ध्यानं विधत्ते ।

सर्वेष्टानिष्टभावानामिष्टत्वेनैवभावनात् ।
नीरागद्वेषता चित्ते या सैव शिवपूजनम् ॥ ६ ॥

सर्वेति । सर्वेष्टानिष्टभावानां सर्वे च त इष्टाश्चानिष्टाश्च ये भावाः पदार्थास्तेषामिष्टत्वेनैव प्रीतिविषयत्वेनापि भावनाच्चिन्तनाच्चित्ते मनसि नीरागद्वेषता रागद्वेषरहितत्वं योदेति सैव शिवपूजनं शिवस्य सुखरूपस्यात्मनः पूजनं पूजा ज्ञेया ॥ ६ ॥

तामेव भावनामुदाहृत्य दर्शयति पीडैवेत्यादिभिः ।

पीडैव परमा पजा यथा चरणपीडनम् ।
दुःखमेव परा पूजा रूक्षमुद्वर्त्तनं यथा ॥ ७ ॥

पीडेति । पीडैव दुःखमेवैवोप्यर्थः, हि प्रसिद्धं सर्वजनेषु परमा श्रेष्ठा पूजा पूजनं भवति, ननु दुःखस्य परमप्रसादकारणपूजात्वं कथमित्याशङ्क्य दृष्टान्तेन तत्तत्र सम्भावयति यथेति, यथा यद्वच्चरणपीडनं चरणयोरङ्घ्र्योः पीडनं मर्दनं तद्दुःखरूपमपि सुखहेतुत्वाद्यथा सुखं भवति तथा दुःखमपि स्वनाशेन सुखपर्यवसायित्वात्पुण्यवासनाजनकत्वाच्च पुण्यक्रियया च सुखफलत्वेन सुखरूपत्वाच्च पूजैवेति भावः, एवं सुखकारणतो दुःखस्य सुखरूपत्वं प्रदर्श्य स्वरूपतोपि तदाह दुःखमेवेति, दुःखमेव स्वतो दुःखं पीडापि परा श्रेष्ठा पूजा पूजनमात्मनो भवति, ननु दुःखस्य चित्तमालिन्यकारणत्वप्रसिद्धेः कथं चित्तप्रसादहेतुपूजात्वं तत्राह रूक्षमिति, यथा यद्वद्रूक्षं शुष्कमामलकचणकादिचूर्णादिना कृतमुद्वर्त्तनं मलनिवर्त्तकं शरीराभ्यञ्जनं तद्यथा दुःखरूपमपि मलापकर्षणेन शरीरकान्त्यभिव्यञ्जकत्वात्सुखं भवति तथा दुःखमपि स्वभोगेन पापरूपमलनिवर्त्तकत्वादन्तःकरणप्रसादहेतुत्वेन पूजैव सेति भावः ॥७॥

ननु दुःखाविर्भावे खेदो जायते मनसीत्याशङ्क्याह ।

खेद एव परा पूजा खेदे चिंति मनोलयः ।
भयं हि परमा पूजा 'भीषाऽस्मादि'ति च श्रुतेः॥८॥

खेद इति । खेदश्चित्तवैक्लव्यं स एव सोपीत्यर्थः, परा श्रेष्ठा पूजाऽर्चा जायते, ननु खेदस्य कथं पूजात्वं तत्राह खेद इति, खेदे वैक्लव्ये सति चिति चैतन्ये मनोलयो मनसोन्तःकरणस्य लयो नाशो भवति चितः सर्वाधिष्ठानत्वेन खेदे च मनोलय-

स्याधिष्ठानमात्रपरिशेषात्पूजात्वमिति भावः, ननु खेदाद्भयं भवतीत्याशङ्क्याह भयमिति, हि प्रसिद्धं चैतद्विद्वत्सु भयं भीतिः पुण्यकर्मणि प्रवर्त्तकत्वाद्भयहेतुत्वेन प्रसिद्धात्मानुसन्धायकत्वाच्च परमा पूजा श्रेष्ठा पूजा भवति, ननु भयस्य पुण्यकर्मणि प्रवर्त्तकत्वमात्मानुसन्धायकत्वं च कुतो ज्ञातं तत्राह भीषेति, हि उपनिषत्सु प्रसिद्धाया भीषास्मादिति च 'भीषास्मादि'त्यादिकायाः श्रुतेर्वेदवाक्यतो ज्ञातमित्यर्थः ॥ ८ ॥

दानस्यापि पूजात्वमाह ।

दानं तु परमा पूजा दीयते परमात्मने ।
अदानं परमा पूजा यदि चित्तं प्रसीदति ॥ ९ ॥

दानमिति । दानं तु स्वस्वीयत्वनिवृत्तिपूर्वकं पदार्थे परस्वीयत्वप्रतिपादनमित्युक्तलक्षणं दानमपि अन्तःकरणशोधकत्वात्प्रसादहेतुत्वाच्च परमा पूजा भवति, ननु दानस्य कथं पूजात्वं तत्राह दीयत इति, यद्दीयते दानं क्रियते तत्परमात्मने कार्यकारणातीतायात्मने 'नान्योतोस्ति द्रष्टे'त्यादिश्रुतेः स्वस्मिन्कर्त्तृत्वनिषेधेन प्रसादहेतुत्वात्प्रतिग्रहीतुरपि पृथगसत्वेन दानस्य परमात्मार्थत्वाच्च दानस्य पूजात्वं सिद्धमेवेति भावः, ननु तर्हि अदानं निषिद्धं स्यात्तत्र मे मनसः स्वाभाविकी प्रवृत्तिस्तत्र किं कर्त्तव्यमित्याशङ्क्याहादानमिति, अदानं दानविरोधिप्रतिग्रहः करग्रहो वा लोभेन दानाभावो वा परमा पूजा भवति, ननु अदानस्य कथं पूजात्वं तत्राह यदीति, चित्तमन्तःकरणमदाने यदि यर्हि प्रसीदति प्रसन्नं भवति तर्हि पूजा स्यादित्यर्थः, पूजादिसर्वकर्मणश्चित्तप्रसादार्थत्वादतोऽदानं चित्तप्रसादे सति पूजैवेति भावः ॥ ९ ॥

इदानीं रोगेष्वपि पूजात्वं सम्भावयति ।

रोगा एव परा पूजा रोगैः पापक्षयो यतः ।
आरोग्यं परमा पूजा नैरोग्यं मुक्तिसाधनम् ॥१०॥

रोगा इति । रोगा एव व्याधयोपि परा पूजा भवति, ननु रोगेषु कुतः पूजात्वं तत्राह रोगैरिति, यतो यस्मात्कारणाद्रोगैर्व्याधिभिः पापक्षयः पापानां किल्बिषाणां क्षयो नाशो भवति पूजायाः पापक्षयकारकत्वप्रसिद्धे रोगाणामपि तथात्वात्पूजात्वं सम्भाव्यमिति भावः, आरोग्ये तु प्रसिद्धं पूजात्वं दर्शयति आरोग्यमिति, निर्गता रोगा यस्मात्स नीरोगस्तस्य भावो नैरोग्यं रोगराहित्यं मुक्तिसाधनं मुक्तेर्मोक्षस्य साधनं सर्वसाधनेषु श्रवणमननादिषूपयोगित्वेनोपचारात्साधनमित्यर्थः, अतः पूजायाः मुक्तिफलत्वादारोग्यं रोगराहित्यं परमा पूजा भवति ॥ १० ॥

कर्मण्यपि तद्दर्शयति ।

क्रिया तु परमा पूजा शिवार्थं क्रियते ऽखिलम् ।
अक्रियैव परा पूजा निश्चला ध्यानरूपिणी ॥११॥

क्रियेति । क्रिया तु क्रियते सा क्रियापि परमा पूजा भवति कुत इत्यत आहाखिलं सर्वं यत्क्रियते तच्छिवार्थं शिव आत्मा तदर्थमेव, अत्र बृहदारण्यकीयाश्रुतिरपि 'आत्मनस्तु कामाय सर्वं प्रियं भवती'त्यादिः, वृद्धा अप्याहुः,

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनमि'ति ॥

अतः सर्वक्रियाया आत्मार्थत्वात्पूजात्वमिति भावः, ननु क्रियायाः पूजात्वमस्तु मम तु सा नैव रोचते तत्राह।क्रियेति, अक्रियैव क्रियात्यागोपि परा पूजा भवति, ननु अक्रियायां प्रत्यवायसत्त्वात्कथं पूजात्वं सम्भाव्यं तत्राह निश्चलेति, निश्चला चाञ्चल्यहीना हेतुगर्भं विशेषणं निश्चलत्वादेव ध्यानरूपिणी ध्यानं चिन्तनमेव रूपं यस्याः सा तथोक्ता त्रिपुटीराहित्यमेवात्मनो-ध्यानमित्यक्रियायाः ध्यानत्वमिति भावः ॥ ११ ॥

सत्सङ्गेपि तद्दर्शयति ।

सत्सङ्गः परमा पूजा सत्सङ्गो मोक्षसाधनम् ।
असत्सङ्गः परा पूजा यत्र मोहः परीक्ष्यते ॥१२॥

सत्सङ्ग इति । सत्सङ्गः सतां जीवन्मुक्तानां सङ्गः परमा पूजा भवति सत्सङ्गस्य कथं पूजात्वं तत्राह सत्सङ्ग इति, सत्सङ्गः सतां ज्ञानिनां सङ्गः सत्सङ्गो मुक्तिसाधनं मुक्तेर्मोक्षस्य साधनं कारणं भवति मोक्षकारणत्वेन सत्सङ्गस्य विधीयमानत्वाच्छास्त्रेषु मोक्षकारणत्वं सत्सङ्गस्य प्रसिद्धमेवेति भावः, ननु सत्सङ्गस्य मुक्तिसाधनत्वादस्तु तदसत्सङ्गे तु तदभावात्तदभावो मम तु तत्रैव रुचिर्भवति किं कर्त्तव्यमित्याशङ्क्याहासत्सङ्ग इति, असत्सङ्गोऽसतां विषयिणां दुष्टानां च सङ्गः संयोगः सोपि परा पूजा भवति असत्सङ्गस्य कथं पूजात्वं तत्राह यत्रेति, यत्रासत्सङ्गे मोहोऽज्ञानं परीक्ष्यते ज्ञायते दुःसङ्गनिकर्षं विना मोहहेम्नः शेषपरीक्षा न स्यादिति भावः ॥ १२ ॥

इदानीं धैर्येपि तत्सम्भावयति ।

धैर्यं तु परमा पूजा धीरो ह्यमृतश्नुते ।
अधैर्यं परमा पूजा शीघ्रं कार्यविमोक्षतः ॥ १३ ॥

धैर्यं त्विति। धैर्यं तु धीरत्वमपि परमा पूजा भवति कुत
इत्यत आह हि, यस्मात्कारणद्धीरः प्राप्तेष्वपि सुखदुःखेषु क्षो-
भहीनः पुरुषोऽमृतं मोक्षमश्नुते प्राप्नोति, ननु तर्हि अधै-
र्यस्य मुक्तिहेतुत्वाभावान्न पूजात्वमित्याशङ्क्य तत्रापि तत्सम्भा-
वयति अधैर्यमिति, अधैर्यं कस्मिंश्चिदपि कार्ये सत्वरं प्रवृत्ति-
स्तदपि परमा पूजा भवति कुत इत्यत आह शीघ्रमिति, शीघ्रं
सत्वरं यथा स्यात्तथा कार्यविमोक्षतः कार्यात्कर्तव्याद्विमोक्षो नि-
वृत्तिस्तस्मात्कार्यमकृत्वा हृदि रुद्धचित्तेन मलिनेन्तःकरणे
श्रवणादि सम्यक् न स्यादित्यधैर्येण कृते तस्मिंस्तावन्मात्रमलनि-
वृत्तेरधैर्येपि पूजात्वमिति भावः ॥ १३ ॥

स्तुतौ प्रसिद्धं तद्दर्शयति ।

स्तुतिरेव परा पूजा स्तुतौ देवः प्रसीदति ।
निन्दैव परमा पूजा सुहृदां गालयो यथा ॥ १४ ॥

स्तुतिरिति । स्तुतिरेव स्तुतिः स्तवनमपि परा पूजा भवति
कुतस्तदाह स्तुताविति, स्तुतौ कृतायां सत्यां देव आत्मा प्र-
सीदति प्रसन्नो भवतीति प्रसिद्धमाबालगोपमिति भावः, ननु
तर्हि सा निन्दायां न स्यादित्याशङ्क्याह निन्देति, निन्दैव गर्हापि
परमा पूजा भवति, ननु निन्दाया असन्तोषकारणत्वं स्पष्टमतः
कथं सन्तोषकारणभूतपूजात्वं तस्यामित्याशङ्क्य दृष्टान्तेन त-
त्तस्यां सम्भावयति सुहृदामिति, यथा यद्वत्सुहृदां सम्बन्धिनां
श्यालादीनां गालयो निन्दारूपा अपि सन्तोषकारणानि भव-
न्तीत्यर्थः, तद्वन्निन्दापि भावनया सुखहेतुरपि भवती-
ति भावः ॥ १४ ॥

इदानीं तृष्णायामपि पूजात्वं सम्भावयति ।

तृष्णैव परमा पूजा देवार्थं वहु काङ्क्षते।
सन्तोषः परमा पूजा देवः सन्तोषलक्षणः ॥ १५ ॥

तृष्णैवेति। तृष्णैव तृष्णापि परमा पूजा भवति कुत इत्यत आह देवार्थमिति, यदित्यध्याहार्यं, यद्बहु अधिकं द्रव्यादि काङ्क्षत इच्छति तद्देवार्थं देव आत्मा तदर्थं तत्प्रयोजनायेत्यर्थः, 'नान्योतोस्तो'त्यादिश्रुत्यात्मनो व्यतिरिक्तभोक्तृत्वस्य प्रतिषेधनात्तदर्थविषयतृष्णाया अपि पूजात्वमिति भावः, सन्तोषे तु तत्प्रसिद्धमेवेत्याह सन्तोष इति, सन्तोषो निरिच्छत्वं वैतृष्ण्यमित्यर्थः, परमा पूजा भवति कुत इत्यत आह देव इति, देवश्चैतन्यस्वरूपः आत्मा सन्तोषलक्षणः सन्तोषो वैतृष्ण्यमेव लक्षणं चिह्नं यस्य स तथाभूतोऽतः सन्तोषस्यापि पूजात्वमिति भावः ॥ १५ ॥

गमनेपि तद्दर्शयति।

यात्रा हि परमा पूजा देवस्यैतत्प्रदक्षिणम्।
आसनं परमा पूजा स्वासनं योग उत्तमः ॥ १६ ॥

यात्रेति। यात्रा हि गमनमपि परमा पूजा भवति केन रूपेणेत्यत आह देवस्येति, एतद्गमनं देवस्यात्मनः प्रदक्षिणं प्रदक्षिणारूपं भवति, ननु यस्य गमनेप्यरुचिस्तस्य तदभावात्सा न स्यादित्याशङ्क्य तत्रापि तत्सम्भावयति आसनमिति, आसनमास्यते स्थीयतेऽस्मिन्नित्यासनं स्थिरत्वं तदपि परमा पूजा भवति कुत इत्यत आह स्वासनमिति, स्वासनं सुष्ठु आसनं स्थैर्यमुत्तमः श्रेष्ठो योगो धारणाविशेष एव ज्ञेयः, अतः पूजैव तदिति भावः ॥ १६ ॥

भोजनेपि तत्सम्भावयति।

भोजनं परमा पूजा देवनैवेद्यरूपतः ।
अभोजनं परा पूजा ह्युपवासप्रियो हरिः ॥ १७ ॥

भोजनमिति । भोजनं भुज्यते तद्भोजनमाहारस्तदपि परमा पूजा भवति, कुतो भोजनस्य पूजात्वं तत्राह देवेति, देवनैवेद्यरूपतो देवश्चिदात्मनोऽभिन्नो भोक्ता तस्य नैवेद्यो निवेदनं समर्पणमित्यर्थः, स एव रूपं यस्य तस्माद्, इदानीमभोजनेपि तत्सम्भावयति अभोजनमिति, अभोजनमनाहारः परा पूजा भवति, अभोजने कुतः पूजात्वं तत्राह हीति, हि यस्मात् कारणाद्धरिः सर्वदुःखहरणशीलः प्रत्यगभिन्नः परमात्मोपवासप्रिय उपवास एव तस्य पूजेति भावः ॥ १७ ॥

स्थितावपि पूजात्वं सम्भावयति ।

स्थितत्त्वं परमा पूजा तदुपस्थानमात्मनः ।
पतनं परमा पूजा नमस्कारस्वरूपिणी ॥ १८ ॥

स्थितत्त्वमिति । स्थितत्वं स्थितं स्थानं तस्य भावस्तत्त्वं तदेव परमा पूजा भवति, ननु स्थितौ कथं पूजात्वं तत्राह तदिति, तत्स्थानमात्मनः प्रत्यगात्मनः प्रकाश्यरूपेण समीपत्वादुपस्थानरूपं भवति, इदानीं पतनेपि तत्सम्भावयति पतनमिति, पतनं भूमौ स्वस्य निपातः परमा पूजा भवति, पतने कथं पूजात्वं तत्राह नमस्कारेति, नमस्कारस्वरूपिणी नमस्कारो नमनक्रियैव स्वरूपं यस्याः सा तथोक्ता पूजायां भूमौ निपात एव नमस्कार इति सार्वजनीनप्रसिद्धिरिति भावः ॥ १८ ॥

भाषणेपि तत्सम्भावयति ।

भाषणं परमा पूजा सर्वं स्तुतिमयं हरेः ।

मौनं तु परमा पूजा मौनं व्याख्यानमस्य तत् ॥१९॥

भाषणमिति। भाषणं लौकिकं वैदिकं च सर्ववचनमपि परमा पूजा भवति, ननु भाषणे स्तुतिनिन्दयोः सत्वात्सर्वभाषणे कथं पूजात्वं तत्राह सर्वमिति, हरेः सर्वद्वैतहरणशीलस्य तस्मिन्सर्वस्य समत्वात्सर्वं भाषणं स्तुतिमयं स्तुतिप्रधानं भवति, यद्वा तस्यैवेश्वरत्वादीश्वरे च धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्याष्टशक्तिसत्वात्सर्वशब्दैरीश्वरत्ववर्णनलक्षणं स्तोत्रमेव सर्वभाषणमित्यर्थः, यद्वा साकारे विष्णौ सर्वकार्यनिर्वाहात्सर्वकार्यनिर्वाहकत्वस्य सर्वशब्दप्रतिपाद्यत्वात्सर्वभाषणस्य स्तुतित्वमित्यर्थः, यद्वाऽहमावच्छिन्ने चिदात्मनि सर्वभाषणस्य स्वेष्टसंपादकत्वेन स्तुतिमयत्वमित्यर्थः, मौनेपि तत्सम्भावयति मौनमिति, मौनं तु मौनं लोकप्रसिद्धं वाग्रोधनरूपमपि पूजा भवति, मौने कथं पूजात्वं तत्राह मोनमिति, यन्मौनमसम्भाषणं तदात्मदेवस्यास्य व्याख्यानं प्रतिपादनं भवति 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह, यद्वाचानभ्युदितम्, अथात आदेशो नेति नेती'त्यादिश्रुतिभ्यो वाग्विषयत्वनिषेधात् 'त्रैगुण्यविषया वेदा' इति गीतायामपि वेदानां त्रिगुणविषयत्वप्रतिपादनाच्च मौनस्यात्मशिवरूपप्रतिपादनेन स्तुतिरूपत्वात्पूजात्वं सम्भाव्यमिति भावः ॥ १९ ॥

इदानीं मनोबुद्धीन्द्रियचेष्टासु तद्दर्शयति।

चेष्टैव परमा पूजा चेष्टते तत्प्रकाशतः।
अचेष्टा हि परा पूजा जोषमास्वेति वेदवाक् ॥२०॥

चेष्टैवेति। चेष्टैव मनोबुद्धीन्द्रियाणां व्यापारोपि परमा पूजा भवति हि यस्मात्कारणात्तत्प्रकाशतस्तस्य शिवस्य प्रकाशतः

प्रकाशाच्चेष्टते व्यापृणोति सर्वचेष्टाप्रकाशनलक्षणेन लक्षणेन-लक्षकत्वाचेष्टायामपि पूजात्वं सम्भाव्यमिति भावः, चेष्टा-ऽभावेपि तत्सम्भावयति अचेष्टेति, अचेष्टा तूष्णीं स्थितिः सापि परमा पूजा भवति, नन्वचेष्टायां कथं पूजात्वं सम्भाव्यं तत्राह जो-षमिति, जोषं तूष्णीं यथा तथाऽऽस्व भवेति एवं वेदवाग्वेदवच-नमस्ति देवस्याज्ञारूपत्वाद्वेदस्येति तदाज्ञाङ्गीकारवत्त्वादेवाचेष्टायां पूजात्वमिति भावः ॥ २० ॥

जन्मैव परमा पूजा सोवतारो हरेःसतः ।
जीवनं परमा पूजा जीवन्कार्याणि साधयेत् ॥२१॥

जन्मैवेति । जन्मैव जननमपि परमा पूजा भवति, जन्मनः कथं पूजात्वं तत्राह स इति, सतः सद्रूपस्य हरेः सर्वद्वैतहरणशी-लस्यावतारो विभूतिर्ज्ञेयो जन्माभावे निराकारस्य पूजा न सम्भवति अतः पूजायामुपयोगाज्जन्मनः पूजात्वमिति भावः, जीवनेपि तद्दर्शयति जीवनमिति, जीवनमायुः परमा पूजा भवति, कथमित्यत आह जीवन्निति, जीवन्सन्पुरुषः कार्याणि कर्त्तव्यानि श्रवणकीर्तनादीनि साधयेत्सम्पादयेत्सर्वकार्यसा-धनोपयोगित्वाज्जीवनस्यापि पूजात्वमिति भावः ॥ २१ ॥

दीर्घायुष्यपि तद्दर्शयति ।

दीर्घायुः परमा पूजा योगिनो दीर्घजीविनः ।
स्वल्पायुः परमा पूजा सद्यो ह्यस्माद्विमुच्यते ॥२२॥

दीर्घायुरिति । दीर्घं चिरकालं वर्त्तमानमायुरायुष्यं प-रमा पूजा भवति, ननु दीर्घायुषि कथं पूजात्वं तत्राह योगिन इति, योगिनो योगाभ्यासिनो दीर्घजीविनश्चिरजीवनवन्तो

भवन्ति योगदार्ढ्यसाधनोपयोगाद्योगिनस्तद्योगेन साधयन्ति तत्त्वतः सिद्धं दीर्घायुः परमा पूजैव श्रवणाद्युपयोगेनेति भावः, तर्हि स्वल्पायुषि तदसम्भवोस्त्विति तत्राह स्वल्पायुरिति, स्वल्पायुः स्वल्पं चाचिरमायुश्च जीवनं तत्परमा पूजा भवति हि यस्मात्कारणादस्मात्संसारदुःखात्सद्यः शीघ्रं विमुच्यते मुक्तो भवति शीघ्रं संसारदुःखमोचकत्वात्स्वल्पायुषि पूजात्वमिति भावः ॥ २२ ॥

मरणेपि तत्संभावयति ।

मरणं परमा पूजा निर्माल्यत्यागरूपिणी ।
शोको हि परमा पूजा शोको वैराग्यसाधनम् ॥ २३ ॥

मरणमिति । मरणं देहत्यागस्तदपि परमा पूजा भवति, ननु मरणे कथं पूजात्वं सम्भाव्यं तत्राह निर्माल्येति, निर्माल्यत्यागरूपिणी निर्माल्यस्यानद्यतनपूजाद्रव्यवन्निर्माल्यरूपो देहस्तस्य त्यागो विसर्जनं तदेव रूपं यस्याः पूजायाः सा तथोक्ता पूजायां निर्माल्यत्यागस्यावश्यकत्वाद्देहत्यागस्यापि तथात्वात्पूजात्वमिति भावः, ननु मरणेपि शोको जायत इत्याशङ्क्याह शोक इति, शोको वैराग्यसाधनं वैराग्यस्य विषयवैतृष्ण्यस्य साधनं कारणं भवति अतः शोकस्तु शोकोपि परमा पूजाभवति वैराग्ये कारणत्वाच्छोकस्य पूजात्वं सम्भाव्यमिति भावः ॥ २३ ॥

हर्षेपि तत्सम्भावयति ।

हर्ष एव परा पूजा हृष्टरूपः सदा हरिः ।
पुष्टिस्तु परमा पूजा स्वस्थचित्तो हि पुष्टिमान् ॥ २४ ॥

हर्ष इति । हर्ष आनन्दोपि परमा पूजा भवति, कुत इत्यत

हृष्टरूप इति, हि यस्मात्कारणाद्धरिः सर्वदुःखसंहारको देवो हृष्टरूपो हृष्टं सुखमेव रूपं यस्य स तथोक्तः सदा नित्यमस्ति देवस्वरूपत्वादेव हर्षस्य पूजात्वमित्याशयः, पुष्टावपि तत्सम्भावयति पुष्टिस्त्वति, पुष्टिस्तु पुष्टिरपि परमा पूजा भवति हि यस्मात्कारणात्पुष्टिमान्पुष्टः पुरुषः स्वस्थचित्तः स्वस्थं स्थिरं चित्तं चेतो यस्य स तथाभूतो भवति ॥ २४ ॥

इदानीं कृशत्वेपि पूजात्वं सम्भावयति ।

कृशत्वं परमा पूजा कृशगात्रा हि योगिनः ।
लाभ एव परा पूजा लाभः सन्तोषकारणम्॥२५॥

कृशत्वमिति । कृशत्वं क्षीणत्वं परमा पूजा भवति हि यस्मात्कारणाद्योगिनो योगाभ्यासवन्तः कृशगात्राः कृशं क्षीणं गात्रमङ्गं येषां ते तथोक्ता भवन्ति गात्रकार्श्यस्य योगसाधनत्वात्पूजात्वमिति भावः, लाभेपि तत्सम्भावयति लाभ एवेति, लाभ एवादायोपि परा पूजा भवति, कुतो लाभे पूजात्वं तत्राह लाभ इति, लाभो द्रव्यादेः प्राप्तिः सन्तोषकारणं सन्तोषस्य तृप्तेः कारणं हेतुर्भवति ॥ २५ ॥

हानावपि पूजात्वं दर्शयति ।

हानिरेव परा पूजा तस्मादेव विमुच्यते ।
गुण एव परा पूजा साधूनां संमतो गुणी ॥२६॥

हानिरेवेति । हानिरेव द्रव्यादेर्नाशोपि परा पूजा भवति, ननु हानौ कुतः पूजात्वं तत्राह तस्मादिति, तस्मादेव यस्य यस्य धनादेर्नाशो जायते तस्मात्तस्मादित्यर्थः, तत्तद्रक्षणादिचिन्तात इत्याशयः, विमुच्यते मुक्तो भवति द्रव्यादिरक्षणादिचिन्तायाः पुरुषस्य विमोचकत्वाद्धानेरपि पूजात्वमिति भावः, गुणेष्वपि

तत्सम्भावयति गुणा एवेति, गुणा एव विद्यादिगुणा अपि परा पूजा भवति, गुणेषु कुतः पूजात्वं तत्राह साधूनामिति, गुणी गुणवान्साधूनां सज्जनानां सम्मतो मान्यो भवति सज्जनकृतसन्मानविषयत्वाद्गुणेषु पूजात्वमिति भावः ॥ २६ ॥

इदानीं दोषेपि तत्सम्भावयति।

दोषा एव परा पूजा निरहङ्कारता यतः।
मान एव परा पूजा मान्यते परमेश्वरः ॥ २७ ॥

दोषा एवेति। दोषा एव लाञ्छनान्यपि परा पूजा भवति, ननु दोषे कथं पूजात्वं तत्राह निरहङ्कारतेति, यतो येभ्यो दोषेभ्यो निरहङ्कारता निर्गतो निवृत्तोऽहङ्कारो यस्य तस्य भावस्तत्ता सा भवति अहङ्कारानुदयकारणत्वेन दोषेष्वपि पूजात्वसंभव इति भावः, इदानीं मानेपि तद्दर्शयति मानएवेति, मान एव मान आदरोपि परा पूजा भवति, ननु माने कथं पूजारूपत्वं संभाव्यं तत्राह मान्यत इति, परमेश्वरः परमः कार्यकारणातीत आत्मा स एवेश्वर नियन्ता सर्वत्र नियन्तृत्वेन स्थित आत्मा शिव एव मानार्हत्वान्मान्यत आद्रियतेऽतः पूजात्वं मानेपि संभवतीति भावः ॥ २७ ॥

ननु तर्ह्यपमाने तन्नस्यादित्याशङ्क्य तत्रापि तत्संभावयति।

अपमानः परा पूजा योगी सिद्ध्येदमानतः।
धनं हि परमा पूजा धनं धर्मस्य साधनम् ॥२८॥

अपमान इति। अपमानोऽनादरः परा पूजा भवति, कुत इत्यत आह योगीति, योगी योगाभ्यास्यमानतोऽनादरात्सिद्ध्येद्योगसिद्धिं प्राप्नुयादतोनादरेपि योगस्य स-

त्कर्मणो वा फलसाधकतया पूजात्वं संभाव्यमिति भावः, वृद्धा अप्याहुः ।

'मानितः पूजितो योगी दुग्धा गौरिव गच्छती'ति ।
अपमानपुरस्कारेणार्थसिद्धौ नीतिवाक्यम् ॥
'अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यं साधयेद्धीमान्कार्यभ्रंशो हि मूर्खते'ति ॥

इदानीं धनित्वेपि तत्संभावयति सधनत्वमिति, सधनत्वं धनं द्रव्यं तेन सहितः सधनस्तस्य भावस्तत्त्वं तदपि परा पूजा भवति, कुत इत्यत आह धनमिति, धनं द्रव्यं धर्मस्यान्तःकरणशुद्धिकारणभूतस्य दानादेः साधनं साधकं भवति अतः सधनत्वे पूजात्वं संभाव्यमिति भावः ॥ २८ ॥

इदानीं निर्धनत्वेपि तद्दर्शयति ।

निर्धनत्वं परा पूजा ब्रह्म प्राप्तमकिञ्चनैः ।
अप्रमादः परा पूजा ह्यप्रमत्तो हि सिध्यति ॥२९॥

निर्धनत्वमिति । निर्धनत्वं निर्धनो धनहीनस्तस्य भावस्तत्त्वमपि परा पूजा भवति, कुत इत्यत आह ब्रह्मेति, अकिञ्चनैर्निर्धनैर्निष्किञ्चनैरित्यर्थः, ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं भूमानन्दरूपं प्राप्तमनुभूतम्, अकिञ्चनत्वस्य भूमानन्दप्रापकत्वात्पूजात्वमनुमन्धेयमिति भावः, दक्षतायामपि तत्संभावयति अप्रमाद इति, अप्रमादोऽविस्मरणं परा पूजा भवति हि यस्मात्कारणादप्रमत्तः सावधानः सिद्ध्यति कार्यफलभागी भवति अत एवाप्रमादेपि कार्यसाधकत्वात्पूजात्वं सम्भाव्यमिति भावः ॥ २९ ॥

प्रमादेपि तद्दर्शयति ।

प्रमादः परमा पूजा कर्त्तव्यं विस्मरेद्यतः।
सुषुप्तिः परमा पूजा समाधिर्योगिनां हि सः ॥३०॥

प्रमाद इति। प्रमादः कर्त्तव्यविस्मृतिः परमा पूजा भवति, कुत इत्यत आह कर्त्तव्यमिति, यतः प्रमादात्कर्त्तव्यं कार्यं विस्मरेन्नानुसन्दध्यात्कार्यविस्मरणस्य समाधीप्सूनामिष्टत्वात्तत्साधनत्वेन प्रमादोऽपि पूजैवेति भावः, इदानीं सुषुप्तावपि पूजात्वं सम्भावयति स्तुषुप्तिरिति, सुषुप्तिर्निद्रा परमा पूजा भवति, ननु निरर्थिकायां सुषुप्तौ कुतः पूजात्वं तत्राह समाधिरिति; हि यस्मात्कारणात्स सुप्तिरूपो योगिनां ज्ञानिनां समाधिः समं ब्रह्माधीयतेऽनुभूयतेस्मिन्निति समाधिर्निर्विकल्पसमाधिरित्यर्थः, ज्ञानिदृष्ट्या निद्रासमाध्योरैक्यात्सुप्तेरपि समाधित्वात्पूजात्वमिति भावः ॥ ३० ॥

कर्मयोगेपि तत्साधयति।

कर्मयोगः परा पूजा कर्म ब्रह्मार्पणं हरौ।
भक्तियोगः परा पूजा यो मद्भक्तः स मे प्रियः॥३१॥

कर्मयोग इति। कर्मयोगः कर्माचरणं परा पूजा भवति, कर्मयोगे कुतः पूजात्वं तत्राह कर्मेति, हरौ सर्वद्वैतहरणशीलेऽखण्डरसात्मक आत्मनि वास्तवकर्माभावाद् 'नान्योतोस्ति श्रोते'-त्यादिश्रुतेः कर्तुः पृथगसत्वादपि सर्वं कर्म ब्रह्मार्पणं ब्रह्मणि अर्पणं ब्रह्मार्पणं ब्रह्मरूपेणैव दृश्यं भवतीत्यर्थः, भक्तौ तत्सम्भावयति भक्तियोग इति, भक्तियोगो भजनं भक्तिस्तस्या योगस्संयोगस्तदङ्गीकरणमित्यर्थः, परा पूजा भवति, कुत इत्यत आह य इति, यः पुरुषो मद्भक्तो मम भक्तः सेवको भवति स पुरुषो मे मम प्रिय इष्टो भवतीति भगवदुक्तत्वादित्यर्थः, भगव-

त्प्रीतिसाधनत्वाद्भक्तियोगस्य पूजात्वमिति भावः॥ ३१॥

ज्ञानयोगेऽपि पूजात्वं सम्भावयति।

ज्ञानयोगः परा पूजा ज्ञानात्कैवल्यमश्नुते।
तुरीयं परमा पूजा साक्षात्कारस्वरूपिणी॥ ३२॥

ज्ञानयोग इति। ज्ञानयोगो युज्यतेऽनेनेति योगो जीवब्रह्मैक्यं ज्ञानमेव योगो ज्ञानयोगः परा पूजा भवति, कुत इत्यत आह ज्ञानादिति, ज्ञानात्तत्त्वमसीत्यादिवाक्यजन्यादहं ब्रह्मास्मीति साक्षात्काररूपाज्ज्ञानात्कैवल्यमाखण्डैकरस्यमश्नुते प्राप्नोति 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इति श्रुतेः, ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिरि'ति च श्रुतेः, 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति च श्रुतेरपि ज्ञानस्यैव साक्षान्मुक्तिसाधनत्वात्पूजात्वं प्रसिद्धमेवेति भावः, तुरीयेऽपि तत्सम्भावयति तुरीयमिति, तुरीयं तुर्यावस्थारूपं साक्षिचैतन्यं परमा पूजा भवति, कुत इत्यत आह साक्षादिति, साक्षात्कारस्वरूपिणी साक्षात्कारः प्रत्यक्षानुभवः स एव स्वरूपमसाधारणं रूपं यस्यास्तुर्यावस्थारूपपूजायाः सा तथोक्ता स्वरूपत्वादेव तुर्यस्य पूजात्वमिति भावः॥ ३२॥

श्रवणे तत्सम्भावयति।

श्रवणं परमा पूजा श्रूयते परमेश्वरः।
मननं परमा पूजा मननं ध्यानसाधनम्॥ ३३॥

श्रवणमिति। श्रवणं तु श्रवणमपि परा पूजा भवति, कुतः श्रवणे पूजात्वमित्यत आह श्रूयते इति, परमेश्वरः कार्यकारणातीत ईश्वर ईशनादिशक्तिमानात्मा श्रूयते श्रवणविषयीक्रियतेऽतः श्रवणस्य पूज्यात्मविषयतया पूजात्वमिति भावः,

मननेपि तां सम्भावयति मननमिति, मननं श्रुतस्यार्थस्य युक्त्या सम्भावनं तत्परमा पूजा भवति, मनने कथं पूजानुसन्धेया तत्राह मननमिति, मननं श्रुतार्थसम्भावनरूपं ध्यान साधनं ध्यानस्य विजातीयप्रत्ययानन्तरिततत्सजातीयप्रत्ययप्रवाहरूपस्य साधनं साध्यतेनेनेति साधनं कारणमतो मननमपि पूजैवेति भावः ॥ ३३ ॥

ननु सर्वेष्विष्टानिष्टपदार्थेषु इष्टबुद्धिरेव विधेयेत्युक्तं तत्तु दुर्घटमित्याशङ्क्य मद्गुरुसदृशगुरुलाभे सुलभमेवेत्याह ।

मद्गुरोः सदृशः कश्चिद्गुरुः कर्णे लगेद्यदि
सर्वमेव तदा पूजा देवस्य लयरूपिणी ॥ ३४ ॥

मद्गुरोरिति । मद्गुरोर्मम गुरोर्दैशिकस्य सदृशस्तुल्यः कश्चित्कोपि गुरुर्दैशिकः कर्णे कर्णमूले लगेदुपदिशेद्यदि यर्हि तर्हि सर्वमेव समस्तमपि लयरूपिणी साम्येन लयो नाश एव रूपं यस्याः सा तथोक्ताऽत एव देवस्य चैतन्य शिवस्य पूजार्चा भवेत्स्यात् ॥ ३४ ॥

इदानीमुक्तसर्वलयेभ्यो नादानुसन्धानस्य श्रैष्ठ्यमाह ।

लयानामपि सर्वेषां विश्वविस्मृतिहेतुतः ।
श्रेष्ठं नादानुसन्धानं नादो हि परमो लयः ॥३५॥

लयानामिति । सर्वेषामपि समस्तानामप्युक्तलक्षणानां लयानां लयोपायानां मध्ये निर्धारणे षष्ठी'यतश्च निर्धारणमि'ति सूत्राद्,विश्वविस्मृतिहेतुतो विश्वस्य समस्तबाह्यपदार्थजातस्य विस्मृतिरननुसन्धानं तस्य हेतुतः कारणत्वान्नादानुसन्धानं दक्षिणकर्णस्थितानाहतस्य नादस्यानुसन्धानं श्रवणं श्रेष्ठ-

मुत्तमं हि यस्मात्कारणान्नादो नादानुसन्धानं परमः श्रेष्ठो लयो लयोपायोऽस्ति, लोकेपि गायनवाद्यादिनादलुब्धस्य सर्वकार्यविस्मृतिर्दृश्यत इति भावः ॥ ३५ ॥

उक्तमेव नादानुसन्धानश्रैष्ठ्यं सदृष्टान्तं सहेतुकं चाह ।

मकरन्दम्पिबन्भृङ्गो यथा गन्धं न काङ्क्षति
नादासक्तं तथा चित्तं विषयान्नाभिकाङ्क्षति ॥ ३६॥

इति श्रीनरहरिविरचिते बोधसारे योगदीक्षाचिन्तामणौ लययोगः ॥ ६ ॥

मकरन्दमिति । भृङ्गो भ्रमरो मकरन्दं पुष्परसं 'मकरन्दः पुष्परस' इत्यमरसिंहः, पिबन्पानं कुर्वन्सन्गन्धं तद्बहिर्वर्तिनं केसरस्थं परिमलं न काङ्क्षति नेच्छति यथा यद्वत्तथा तद्वन्नादासक्तमनाहतनादे बाह्ये वासक्तं रक्तं चित्तमन्तःकरणं विषयान्नादातिरिक्तविषयान्नाभिकाङ्क्षति नेच्छति अतो नादानुसन्धानस्य श्रैष्ठ्यमिति भावः, राजयोगपक्षे तु आकाशगुणत्वेन शब्दस्य नाममात्रत्वानुसन्धानेन तद्वाच्यजगतोपि मिथ्यात्वेन च स्वरूपमात्रशेषलक्षणमेव नादानुसन्धानं लयोपायमङ्गीकुर्यादिति भावः ॥ ३६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ योगदीक्षाचिन्तामण्यर्थप्रकाशे लययोगार्थप्रकाशः पञ्चमः ॥ ५ ॥

इति श्रीयोगदीक्षाचिन्तामण्यर्थप्रकाशो द्वादशः ॥ १२ ॥

---

## अथ भक्तिरसायनम्

एवं सर्वसाधनानि प्रतिपाद्येदानीं सर्वसाधनशिरोभूतं सर्वसाधनमुख्यसाधनं स्वतोन्यसाधननिरपेक्षं भक्त्याख्यसाधनं

प्रतिपादयितुं भक्तिरसायनाख्यं सार्धद्विपञ्चाशच्छ्लोकं प्रकरणमारभते, तत्र तावदेतत्प्रकरणश्रवणे शिष्यं प्रेरयति।

अथ सिद्धान्तसर्वस्वं शृणु भक्तिरसायनम्
जन्ममृत्युजराव्याधिभेषजं तद्रसायनम्॥ १॥

अथेति। अथ योगश्रवणानन्तरं हे शिष्य सिद्धान्तसर्वस्वं सिद्धान्तस्य सर्वशास्त्रतात्पर्यस्य सर्वस्वं मुख्यतात्पर्यभूतं भक्तिरसायनं भक्तिर्भजनं स एव रसः सुखं तस्यायनं मार्गभूतं प्रापकमित्यर्थः, एतन्नामकं प्रकरणं शृणु अवधारय, ननु भक्तिप्रतिपादकस्य प्रकरणस्य कुतोरसायनशब्दयोगस्तत्राह जन्मेति, तद्भक्तिरूपं साधनं जन्ममृत्युजराव्याधिभेषजं जन्म देहाहम्भावरूपो मृत्युरत्यन्तदेहविस्मृतिरूपो जरा वृद्धत्वरूपो देहविकारविशेषस्तेन चान्येपि विकारा ग्राह्याः, व्याधयश्च तन्मूलज्वरादयस्तेषां भेषजमौषधं तन्निवर्त्तकमित्यर्थः, अतो रसायनं रसायननाम्नाभिहितमित्यर्थः॥ १॥

उक्तमेव सर्वसाधनश्रैष्ठ्यं भक्तेर्विशदयति।

धर्मार्थकाममोक्षाणां ज्ञानवैराग्ययोरपि
अन्तःकरणशुद्धेश्च भक्तिः परमसाधनन्॥ २॥

धर्मेति। धर्मार्थकाममोक्षाणां धर्मश्च स्वस्ववर्णाश्रमोचितकर्माचरणरूपोऽर्थश्च द्रव्याद्यर्थमुद्योगप्रतिपादकं शास्त्रं तत्प्रतिपाद्य उपायश्च, कामश्चेन्द्रियविषयसंयोगसुखेच्छारूपस्तया च तल्लाभस्तत्प्रतिपादकशास्त्रोक्तसाधनानि च ग्राह्याणि, मोक्षश्च मोक्षप्रधानार्थशास्त्रं च तत्प्रतिपादितानि तत्साधनानि च ग्राह्याणि, तेषां ज्ञानवैराग्ययोरपि ज्ञानस्य जीवात्मैक्यविषयस्य

वैराग्यस्यापि अन्तःकरणशुद्धेश्चान्तःकरणं चित्तं तस्य शुद्धी रागादिमलविसर्गस्तस्या अपि भक्तिः स्नेहरूपावृत्तिः परमसाधनं श्रेष्ठं साधनं मुख्यकारणमित्यर्थः ॥ २ ॥

भक्तिलक्षणमाह ।

ययात्र रक्त्या जीवोयं दधाति ब्रह्मरूपताम् ।
साधिता सनकाद्यैः सा भक्तिरित्यभिधीयते ॥ ३ ॥

ययेति । अयं जीवः प्रत्यक्षः प्राणाद्युपाधिमानधिष्ठानसहितो बुद्धिस्थश्चिदाभासोऽत्र प्रत्यक्परोक्षादिरहिते चिदात्मनि यया रक्त्या रागरूपया वृत्या प्रेमापरपर्यायया ब्रह्मरूपतां ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यस्य रूपं सच्चिदानन्दैकरस्यं तस्या भावस्तत्ता तां दधाति धारयति या च सनकाद्यैः सनक आद्यो येषां सनन्दनादीनां ते तथोक्तास्तैः साधिता कृता, आदिपदेन नारदादीनामपि ग्रहणं, सोक्तलक्षणा भक्तिरित्यभिधीयते भक्तिरित्येवं नाम्ना प्रतिपाद्यते शास्त्रेष्वित्यर्थः ॥ ३ ॥

एवं भक्तेर्लक्षणं प्रतिपाद्येदानीं भक्तिहीनानां सर्वसाधनानां वैयर्थ्यमाह ।

सर्वा साधनसंपत्तिरस्ति भक्तिस्तु नास्ति चेत् ।
तर्हि साधनसंपातस्तुषकण्डणवद्वृथा ॥ ४ ॥

सर्वेति । सर्वा नित्यानित्यवस्तुविवेकादिका साधनसम्पत्तिः साधनानां मोक्षकारणभूतानां सम्पत्तिः सम्पादनमस्ति विद्यते भक्तिस्तु प्रेमलक्षणा वृत्तिस्तु तुशब्दोत्र भक्तेः सर्वसाधनसापेक्षत्वेन[1] स्वतोन्यनिरपेक्षत्वेन च वैलक्षण्यं दर्शयति नास्ति चेत्तन्न विद्यते चेद्यदि तर्हि तदा साधनसम्पत्तिः साधनानां

१ सर्वसाधनानि सापेक्षाणि यत्र तस्या भावस्तत्त्वं तेन ।

सर्वसाधनानां सम्पत्तिः सम्पादनं वृथा व्यर्था तत्र दृष्टान्तस्तुष-कण्डनवत्तुषस्य धान्योपरितनधान्यहीनत्वचः कण्डनं मुसलादिना कुट्टनं तद्यथा निष्फलं श्रममात्रं तद्वद्भक्तिहीनानि सर्वसाधनानि श्रममात्राणीत्यर्थः ॥ ४ ॥

एवं भक्तेरन्यसाधनसापेक्षतां[1] प्रतिपाद्येदानीं तस्या अन्य-साधननिरपेक्षत्वं प्रतिपादयति ।

यद्यन्यत्साधनं नास्ति भक्तिरस्ति महेश्वरे ।
तदा क्रमेण सिध्यन्ति विरक्तिज्ञानमुक्तयः ॥५॥

यदीति । अन्यत्साधनं नित्यानित्यवस्तुविवेकादिकं साधनं नास्ति न विद्यते यदि यर्हीश्वर ईशनादिशक्तिमति वात्म-तत्वे वा भक्तिरुक्तलक्षणा प्रेमवृत्तिरस्ति विद्यते तदा तर्हि क्रमेणानुक्रमतो विरक्तिज्ञानमुक्तयो विरक्तिर्वैराग्यं ज्ञानं जीवब्रह्मैक्यविषयं महावाक्यजन्यं मुक्तिर्मोक्ष एत सिद्ध्यन्ति सिद्धाः भवन्तीत्यर्थः ॥ ५ ॥

ननु 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इत्यादिश्रुते-र्ज्ञानस्यैव मोक्षहेतुत्वप्रतिपादिनात्किं भक्त्येत्याशङ्क्य भक्त्यैवे-श्वरप्रसादे ज्ञानं जायते ततो मोक्ष इति ज्ञानद्वारैव भक्तेर्मुक्तिहे-तुत्वमित्याशयेनाह ।

न हि कश्चिद्भवेन्मुक्त ईश्वरानुग्रहं विना ।
ईश्वरानुग्रहादेव मुक्तिरित्येष निश्चयः ॥ ६ ॥

नहीति । कश्चित्कोपीश्वरानुग्रहं विनेशनादिशक्तिम-तोऽन्तर्यामिणोऽनुग्रहो दया तामृते मुक्तो मोक्षं प्राप्तः संसारा-दुत्तीर्ण इत्यर्थः, न न भवेद्धि प्रसिद्धमित्यर्थः, व्यतिरेकमु-

---

[1] अन्यसाधनानि सापेक्षाणि यत्र तस्या भावस्तत्ता ताम् ।

खेन दर्शितमर्थमन्वयमुखेन दर्शयतीश्वरेति, ईश्वरानुग्रहादेवेश्वरस्यान्तर्यामिणोनुग्रहः कृपा तत एव केवलं मुक्तिर्मोक्षो भवतीति शेषः, एषोऽयं निश्चयो निश्चीयतेऽनेनेति निश्चयो निर्णयोऽस्ति मुक्तेः प्रधानसाधनभूतज्ञानस्य गुर्वधीनत्वाद्गुरोश्चेश्वरानुग्रहप्राप्यत्वादीश्वरानुग्रह एव देशिकप्रापणद्वारा मुक्तिहेतुरिति भावः ॥ ६ ॥

ननु तर्हीश्वरप्रसादस्य मुक्तिहेतुत्वे किं भक्त्येत्याशङ्क्य भक्तिं विना तद्दौर्लभ्यादित्याह ।

ईश्वरः परिपूर्णत्वान्न तु किञ्चिदपेक्षते ।
प्रीत्यैवाशु प्रसन्नः सन्परं कुर्यादनुग्रहम् ॥ ७ ॥

ईश्वर इति । ईश्वर ईशनादिशक्तिमान्सर्वनियन्ता परिपूर्णत्वात्सच्चिदानन्दघनतयाऽऽप्तकामत्वात्किं चिद्यज्ञदानादिकं स्वभोगोपयोगि द्रव्यादिकमपि न तु नैवापेक्षत इच्छति अतः प्रीत्यैव केवलं प्रेम्णैवाशु शीघ्रम्, अनेन यज्ञदानस्वधर्मानुष्ठानजपादिनेश्वरः प्रसीदति तथापि बहुकालेन तत्रापि भक्तिसापेक्षितेन भक्त्या त्वन्यनिरपेक्षितयैवेश्वरशीघ्रप्रसादोपलब्धिरिति भावः, प्रसन्नः प्रीतः सन्परं ज्ञानप्रदगुरुप्रापकमनुग्रहं प्रसादं कुर्याद्, अन्यसाधनैर्भक्तिसापेक्षितैः सांसारिकफलकारणमीश्वरानुग्रहो जायते केवलभक्त्या तु केवलेश्वरानुग्रहेण गुरुप्राप्त्या ज्ञानप्राप्तिद्वारा मोक्षप्राप्तिरिति भावः ॥ ७ ॥

एवं प्रेमलक्षणवृत्तेरेव केवलमीश्वरप्रसादहेतुत्वं प्रतिपाद्येदानी प्रेमलक्षणवृत्तेरेवेश्वरे स्थैर्यं प्रार्थयति ।

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ ८ ॥

येति। अविवेकानां विकेकहीनानां विषयेषु वनितास्त्र-क्चन्दनादिषु अनपायिनि अव्यभिचारिणि अनेकविधदुर्ल-ङ्घ्यविघ्नान्यविगणय्य तत्रैव प्रवर्त्तमानेत्यर्थः, या प्रीतिर्य-द्वत्स्नेहरूपा वृत्तिरस्ति विद्यते सा सेव तादृशीत्यर्थः, त्वा-मीशनादिशक्तिमन्तं त्वामनुस्मरतस्तया वृत्त्या सदा चिन्तयतो मे मम हृदयादन्तःकरणान्मापसर्पतु मा गच्छतु त्वद्विषया सा सदैव तिष्ठत्वित्यर्थः, यद्वा सा त्वेद्विषया[1] प्रीतिर्हृदयाद्धे माप लक्ष्मीपते सर्पतु निवृत्ता भवतु इति प्रार्थना ॥ ८ ॥

पूर्वप्रीतिलक्षणे सूत्रमपि प्रमाणयति।

तथा च शाण्डिल्यं सूत्रं 'सापरानुक्तिरीश्वर' इति।

तथाचेति। तथा च तस्मिन्नुक्ते भक्तिलक्षणे शाण्डिल्यस्य मुनेः सूत्रमस्ति तदाह सेति, येत्यध्याहार्यम्; ईश्वर ईशनादिश-क्तिमत्यन्तर्यामिणि परे ब्रह्मणि वा परा निरतिशयाऽनुरक्तिः स्नेहः सा भक्तिरित्यर्थः ॥ १ ॥

एवं भक्तिलक्षणप्रतिपादकं सूत्रमुपन्यस्येदानीं भक्ति-सिद्धौ सर्वसाधनसिद्धिः स्यादित्याह।

परमात्मनि विश्वेशे भक्तिश्चेत्प्रेमलक्षणा।
सर्वमेव तदा सिद्धं कर्तव्यं नावशिष्यते ॥ ९ ॥

परमात्मनीति। विश्वेशे विश्वस्य जगत ईशे नियन्तरि परमात्मनि वस्तुतः कार्यकारणहीने ब्रह्मणि व्यावहारिकदृष्ट्या त्वीश्वर इत्यर्थः, प्रेमलक्षणा प्रेम स्नेह एव लक्षणं यस्याः सा तथाभूता भक्तिश्चिन्त्याकारा वृत्तिश्चेद्यदि सिद्धा भवति तदा

[1] त्वत्तोऽन्यविषया।

तर्हि सर्वमेव समस्तमपि साधनजातं सिद्धं भवति तदा कर्तव्यं कार्यं नावशिष्यते नैव शिष्टं विद्यते, भक्तिसिद्धौ तु सर्वमेव सिद्धं भवतीति भावः ॥ ९ ॥

वेदान्तप्रतिपादिताया अपरोक्षानुभूतेरपि भक्तिफलत्वमाह ।

अपरोक्षानुभूतिर्या वेदान्तेषु निरूपिता ।
प्रेमलक्षणभक्तेस्तु परिणामः स एव हि ॥ १० ॥

अपरोक्षानुभूतिरिति । या विद्वदनुभवसिद्धा वेदान्तेषु वेदान्तशास्त्रेषु प्रतिपादिता निरूपिताऽपरोक्षानुभूतिरपरोक्षा प्रत्यक्षाऽनुभूतिरनुभवः सा प्रेमलक्षणभक्तेस्तु प्रेमा निरतिशयस्नेहः स लक्षणं यस्या भक्तेः सा तथोक्ता तस्या एव परिणामः फलमेव निश्चयेन ज्ञेयं हि विद्वत्सु प्रसिद्धमेतदित्यर्थः ॥१०॥

ननु ज्ञानहेतुकत्वं कृतकृत्यत्वफलाया अपरोक्षानुभूतेर्वेदान्तेषु प्रसिद्धं दृश्यते तत्कथं विरुद्धं भक्तिफलत्वं तस्या उच्यत इत्याशङ्क्य प्रेमलक्षणवृत्तेर्द्वैतविस्मारकत्वेन ज्ञानस्याप्यद्वैतरूपत्वेन च ज्ञानभक्त्योर्वैलक्षण्याभावात्तयोरैक्यं दर्शयति द्वाभ्याम् ।

शास्त्रार्थः संपरिज्ञातो जातं प्रेम महेश्वरे ।
प्रेमानन्दप्रकारेण द्वैतं विस्मरणं गतम् ॥ ११ ॥

शास्त्रार्थ इति । शास्त्रार्थः शास्त्राणां व्याकरणादिवेदान्तान्तानामर्थस्तात्पर्यं संपरिज्ञातः सम्यग्ज्ञातो निश्चितश्चानन्तरं महेश्वरे वेदान्तप्रतिपादित ईश्वरत्वारोपाधिष्ठानभूते तत्त्वे प्रेम स्नेहो जातमुत्पन्नं यदेत्यध्याहार्यं यदा यस्मिन्समये तदा तस्मिन्समये प्रेमानन्दप्रकारेण प्रेम्णा स्नेहेन य आनन्दः सुखं तस्य प्रकार उल्लासस्तेन द्वैतं जगद्विस्मरणमभानं गतं प्राप्तं भवति ॥११॥

वासुदेवमयं सर्वं वासुदेवात्मकं जगत्।
इत्थं द्वैतरसाढ्यस्य ज्ञानं किमवशिष्यते ॥ १२ ॥

तदा तस्य भक्तस्य सर्वं समस्तं वासुदेवमयं वा विकल्पेनामूनां प्राणाद्युपाधीनां देवः प्रकाशकः प्रकाश्यमिथ्यात्वेनाप्रकाशको व्यवहारावस्थायां प्रकाशं विना प्रकाश्यानिर्वाहाच्च प्रकाशकश्चेति विकल्पेन प्रकाशकत्वं वासुदेवशब्दार्थस्तन्मयं तत्प्रधानं प्रतीयत इत्यर्थः, अतो जगद्विश्वं वासुदेवात्मकं वासुदेवो जगदारोपाधिष्ठानं जगतो विकल्पेन प्रकाशकं चैतन्यमात्मा यस्य तत्तथा वासुदेवान्यन्न प्रतीयत इत्यर्थः, इत्थमेवं प्रकारेण द्वैतरसाढ्यस्य द्वैते जगति यो रस आनन्दस्तेनाढ्यस्य संपन्नस्य पुरुषस्य ज्ञानमद्वैतात्मस्वरूपमवशिष्यतेऽवशिष्टं भवेत्किन्नैवेत्यर्थः, तस्यैवाद्वैतलक्षणज्ञानवत्त्वान्न भक्ति ज्ञानयोर्भेद सिद्धिरिति भावः ॥ १२ ॥

इदानीं ज्ञानभक्त्योरुक्ताभेददार्ढ्याय विष्णुशिवभक्तयोर्भजनप्रकारं चतुर्भिः श्लोकैराह।

वासुदेवः परं ब्रह्म परमात्मा परात्परः।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ १३॥

वासुदेव इति। वासुदेवो

'वासनाद्वासुदेवस्य वासितं भुवनत्रयम्।
सर्वभूतनिवासोसि वासुदेव नमोस्तुते' ॥

इति वचनाद्वासुदेवसत्तया सर्वसत्तानिर्वाहलक्षणेन सर्वभूतनिवासत्वात्सर्वव्यापित्वलक्षणेन च लक्षितं वासुदेवं स्मरन्वासुदेव इति नामोच्चरति, परं ब्रह्म परं जगत्कारणं ब्रह्म बृहद्देशकालवस्तुपरिच्छेदशून्यं ब्रह्मशब्दार्थं विचिन्त्य परं ब्रह्मेति नामोच्चरति, तथा

परमात्मा कार्यकारणत्वहीनः परमः परमश्चासावात्मा चेति स तथोक्त इत्यर्थानुसन्धानपूर्वकं परमात्मेति नामोच्चरति कार्यकारणहीनमात्मानमनुस्मृत्यैतन्नामोच्चारं करोतीति भावः, तथा परात्परः पराज्जगदारोपाधिष्ठानत्वेन कारणादारोप्यमिथ्यात्वेन परस्तदतीत इत्येवमर्थमनुसन्धाय परात्परमित्येवं नामोच्चरतीत्यर्थः, तथा तत्सर्वं तत्सर्वमिति पदद्वयेन समस्तः कार्यकारणात्मकः प्रपञ्च उच्यतेऽन्तर्बहिश्चाऽऽन्तरं देशं बाह्यं देशमपि व्याप्यं व्याप्नुवन्सन् स्थितो वर्ततेऽतो नारायणो नृणां जीवानां समूहो नारं तदेवायनं स्थानं प्रापकत्वान्मार्गभूतं वा यस्य स तथोक्तः, यद्वा—

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः प्रोक्तास्तेन नारायणः परः' ॥

इति स्मृतेः, नरात्पुरुषाज्जाता नारा जलानि ता अयनं यस्येत्यर्थः, अत्रापि 'अम्भो मरीचीर्मरमाप' इति श्रुतेर्जलप्रधानकारणके कार्यरूपे जगति व्यापकत्वमेव नारायणशब्दार्थ एवमुभयपक्षेपि व्यापकत्वमव्यभिचरितमित्यादिनारायणपदार्थानुसन्धानेन नारायण इति नामोच्चरतीत्यर्थः ॥ १३ ॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
इत्यादिवचनैर्भक्तो वैष्णवः स्तौति केशवम् ॥ १४ ॥

अणुरिति । अणुर्बुद्ध्यादीनामव्यक्तत्वात्सूक्ष्म इत्यणुशब्दार्थं लक्ष्यीकृत्याणुरिति नामोच्चरति, तथा बृहद्देशाद्यपरिच्छिन्नत्वात्महानित्यर्थानुसन्धानपूर्वकं बृहदिति नामावृत्तिं करोतीत्यर्थः, कृशः कृशत्वस्यापि तद्व्यतिरेणासिद्धेर्घटाभिन्ने घटे घटत्वमिवेश्वराभिन्ने कृश ईश्वरत्वात्तन्नाम्न्यपि नामाभेदोपचारादीश्वरनामैव कृश इति ज्ञात्वा कृश इत्येवं नामोच्च-

रतीत्यर्थः, एवं स्थूल इति च नामोच्चरति, तथा गुणभृद्गुणानामाश्रय इत्यर्थानुसन्धानपूर्वकमेतन्नामोच्चरतीत्यर्थः, तथा निर्गुणो गुणानां मिथ्यात्वात्सदैव गुणरहित इत्येवमनुसन्धाय निर्गुण इति नाम जपतीत्यर्थः, तथा महाञ्छ्रेष्ठो सर्वजगत्पूज्य इत्यर्थः, इत्यादिवचनैरेवमादिभिर्वाचकैः शब्दैर्वैष्णवो विष्णुसम्बन्धी विष्णुदेवताको वोक्त उपासकः केशवं केऽन्तःकरणे शेते स्वपिति अन्तःकरणमननुसन्धाय स्वरूपमनुसन्दधातीत्यर्थः, तमन्तर्यामिणं स्तौति वर्णयति ॥ १४ ॥

एवं विष्णुभक्तभजनप्रकारं प्रदर्श्य शिवभक्तस्यापि तं दर्शयति।

शिवः कर्ता शिवो भोक्ता शिवः सर्वेश्वरेश्वरः।
शिव अत्मा शिवो जीवः शिवादन्यन्न विद्यते॥१५॥

शिव इति। शिवः प्रत्यगात्मा कूटस्थः कर्ता कर्मेन्द्रियव्यापारवान्बुद्धिस्थश्चिदाभासोऽस्ति तथा शिवो भोक्ता शिव एव सुखदुःखादिसाक्षात्कारवानानन्दमयोपाधिको बुद्धिस्थो 'नान्योतोस्ति द्रष्टे'त्यादिश्रुतेः, 'क्षेत्रज्ञं चापि मां विद्धी'त्यादिस्मृतेश्च कर्त्तुर्भोक्तुश्च प्रत्यगात्मनोऽपृथक्त्वप्रतिपादनादिति भावः, तथा शिव आत्मा सर्वेश्वरेश्वरो सर्वस्य जगतो य ईश्वरा ब्रह्मविष्णुरुद्राख्यास्तेषामपीश्वरो नियन्ता तथा शिवो जगत्सुखकारणं परमात्मा घटाकाशमहाकाशयोरिव प्रत्यगात्मशिवयोरभेद इत्यर्थः, तथा शिवो जीवः शिवः समष्ट्युपाध्यावृतं चैतन्यं तत्पदवाच्यार्थ एव जीवो देहत्रयसहितः साधिष्ठानश्चिदाभासोऽस्ति उपाध्यैक्यादुपहितयोरप्यैक्यमिति भावः, अतश्शिवात्परमात्मनोऽन्यद्भिन्नं किमपि न विद्यते नास्तीत्यर्थः, आत्मनो व्यतिरिक्तस्यासत्त्वादिति भावः ॥ १५ ॥

खंवायुतेजोजलभूक्षेत्रज्ञार्केदुमूर्तिभिः ।
अष्टाभिरष्टमूर्तिं च शांभवः स्तौति शङ्करम् ॥१६॥

किञ्च खमिति । खंवायुतेजोजलभूक्षेत्रज्ञार्केन्दुमूर्तिभिः खमाकाशं वायुः पवनस्तेजोऽग्निर्जलं सलिलं भूः पृथ्वीः क्षेत्रज्ञो जीवोऽर्कः सूर्य इन्दुश्चन्द्र इत्येवमभिधाभिर्मूर्तिभिरष्टाभिरष्टसङ्ख्याभिः शाम्भवः शिवभक्तोऽष्टमूर्तिमष्टौ मूर्तयो रूपाणि यस्य तं सर्वरूपमित्यर्थः, शङ्करं सकलजगदानन्दकरमात्मानं स्तौति प्रशंसति ॥ १६ ॥

एवं विष्णुशिवभक्तयोर्भजनप्रकारं निरूप्येदानीं पूर्वोक्तमेव ज्ञानभक्त्योरैक्यं सिद्धान्तयति ।

इदं यदा परिणतं प्रेम तज्ज्ञानमेव हि

इदमिति । इदमुक्तलक्षणमेतादृशं भजनमेव यदा यस्मिन्काले परिणतं परिणामं प्राप्तं निरतिशयसुखरूपेण पर्यवसितमित्यर्थः, तत्प्रेम स्नेहो भवति तदेव ज्ञानं ज्ञानशब्देनोच्यते हीति विदुषामेतत्प्रसिद्धमित्यर्थः ।

उक्तभक्तिज्ञानैक्ये युक्तिरप्यस्तीत्याह ।

अथ युक्त्यन्तरम् ।

अथेति । अथात्रेत्यर्थः, युक्त्यन्तरमन्या युक्तिरप्यस्तीत्यर्थः, तामेवाह त्रिभिः श्लोकैः बालक इत्यादिना ।

बालकस्तात तातेति जनकं प्रति भाषते ।
न पुनस्तातशब्दार्थं स तु जानाति किञ्चन ॥१७॥

बालकोऽर्भकस्तात तातेति हे तात हे तात एवं प्रकारेण जनकं पितरं प्रति उद्दिश्येत्यर्थः, भाषते ब्रूत एव केवलं पु-

नरन्यत्स तु बालकस्तातशब्दार्थे पितृवाचको यस्तातशब्दस्त-स्यार्थे पितृरूपं किञ्चन किमपि न जानाति वेत्ति नैवेत्यर्थः॥१७॥

यदा तातपदार्थस्य व्युत्पत्तिं यात्यसौ क्रमात् ।
तदा तु सत्यमेवायं तात इत्येति निश्चयम् ॥१८॥

यदेति । असौ स बालो यदा यस्मिन्काले क्रमात्क्रमेण तातपदार्थस्य तातेति यत्पितृवाचकं पदं नाम तस्यार्थः पितृरूपस्तस्य व्युत्पत्तिं ज्ञानं याति प्राप्नोति तदा तु तस्मिन्काले चायमेष बालस्तात एव पितैव सत्यं तथ्यमित्येवं निश्चयं निर्णयमेति प्राप्नोति यथा ॥ १८ ॥

तथा भक्तो भजन्देवं वेदशास्त्रोदितैः क्रमैः ।
व्युत्पत्तिं परमां प्राप्य मुक्तो भवति हि क्रमात् ॥१९॥

तथेति । तथा तद्वद्भक्तोऽव्युत्पन्नो भजनक्रियावान्वेदशास्त्रोदितैर्वेदाश्च ऋगादयः शास्त्राणि वेदान्तानुकूलानि मीमांसासाङ्ख्यपातञ्जलशैवतन्त्रनारदपञ्चरात्रादीनि तेषूदिता उक्तास्तैः क्रमैः प्रक्रियाभिर्देवमीश्वरं भजन्सेवमानः सन्नन्तःकरणशुध्या परमां यथार्थां व्युत्पत्तिं वाच्यलक्ष्यभेदेन शब्दार्थज्ञानं प्राप्य लब्ध्वा क्रमाज्ज्ञानस्थैर्यक्रमेण मुक्तो मोक्षं प्राप्तो भवति जायते हि एतत्सर्वत्र प्रसिद्धमित्यर्थः ॥ १९ ॥

अन्यदपि ज्ञानभक्त्योरभेदे कारणं दर्शयति ।

किं च लक्षणभेदो हि वस्तुभेदस्य कारणम् ।
न भक्तज्ञानिनोर्दृष्टा शास्त्रे लक्षणभिन्नता ॥ २० ॥

किञ्चेति । किञ्चान्यदपि शृण्वित्यर्थः, हि यस्मात्कारणाद्वस्तुनः पदार्थस्य भेदोन्यत्वं तस्य कारणं हेतुर्लक्षणभेदो ल-

क्ष्यते भेदो याभ्यां ते लक्षणे तयोर्भेदो भिन्नत्वं भवति जायते तत्र तदभावं दर्शयति नेति, भक्तज्ञानिनोरुपासकबुद्धयोर्ज्ञानीत्वत्र यथार्थस्वरूपवेत्ता लक्षणभिन्नता लक्षणयोश्चिह्नयोर्भिन्नता पार्थक्यं चिह्नभेद इत्यर्थः, शास्त्रे वेदान्त उपासनाप्रतिपादके च शास्त्रे न दृष्टा नैव दृष्टाऽतो ज्ञानभक्त्योर्लक्षणैक्यादैक्यमेव सिद्धमिति भावः ॥ २० ॥

तान्येव ज्ञानभक्त्योर्लक्षणानि स्फुटं दर्शयति ।

विरागश्च विचारश्च शौचमिन्द्रियनिग्रहः ।
वेदे च परमा प्रीतिस्तदेकं लक्षणं द्वयोः ॥ २१ ॥

विराग इति । विरागश्च विरागो विषयवैतृष्ण्यमेकं लक्षणं, विचारश्च विचारो विवेकोपि द्वितीयं, शौचमान्तरं रागादिमलराहित्यं बाह्यं स्नानादिशौचं शुद्धिहेतुः क्रिया तृतीयम्, इन्द्रियनिग्रह इन्द्रियाणां श्रोत्रादीनां निग्रहः स्वस्वविषयेभ्यो ज्ञानभक्तिसाधनव्यतिरिक्तेभ्यो व्यावृत्तिश्चतुर्थं, वेदे च श्रुतावपि परमाऽव्यभिचारिणी प्रीतिः प्रेमा पञ्चममित्यादीन्यन्यान्यपि ज्ञेयानि तत्तस्मात्कारणाद् द्वयोर्भक्तिज्ञानयोर्लक्षणं लक्षकं चिन्हमेकमभिन्नमतो ज्ञानभक्त्योर्न भेद इत्यर्थः ॥ २१ ॥

ननु ज्ञानभक्त्योर्लक्षणैक्यं क्व दृष्टं तत्राह ।

अध्याये भक्तियोगाख्ये गीतायां भक्तिलक्षणम् ।
यदुक्तमष्टभिः श्लोकैर्दृष्टं ज्ञानिषु तन्मया ॥ २२ ॥

अध्याये इति । गीतायां श्रीमद्भगवद्गीतायां भक्तियोगाख्ये भक्तियोग इत्येवमाख्या यस्य तस्मिन्नध्याये द्वादशाध्यायेऽष्टभिः श्लोकैः 'अद्वेष्टा सर्वभूताना'मित्यादिभिः, 'भ-

क्तास्ते तीव मे प्रिया' इत्यन्तैरष्टसङ्ख्याकैः श्लोकैर्यद्यादृशं भक्तिलक्षणं भक्तेर्भजनस्य लक्षणं चिह्नं जातित्वादेकवचनमुक्तं कथितमस्ति तत्तदेव लक्षणं ज्ञानिषु ज्ञानवत्सु मयोभयलक्षणपरीक्षकेण तत्रैव त्रयोदशाध्याये 'अमानित्वमदम्भित्वमि'-त्यादिभिः 'एतज्ज्ञानमिति प्रोक्तमि'त्यन्तैः पादोन पञ्चभिः श्लोकैः प्रतिपादितं दृष्टमवलोकितं तस्मादपि ज्ञानभक्त्योरैक्यमेव सिद्धमिति भावः ॥ २२ ॥

तवास्मीति भजत्येकस्त्वमेवास्मीति चापरः ।

इति किञ्चिद्विशेषेपि परिणामः समो द्वयोः ॥२३॥

ननु ज्ञानिभक्तयोः सोहंभावदासोहंभावरूपभजनाभ्यां वैलक्षण्यमस्तु तेन च भेदोपि स्यादित्याशङ्क्याह तवेति, द्वयोर्ज्ञानिभक्तयोर्मध्य एको भक्तस्तव तेऽहं त्वदंशत्वात्सेवक एवास्मि भवामीत्येवं भजति सेवते, अपरोऽन्यो ज्ञानी त्वमेव 'निष्कलं निष्क्रियं शान्तमि'ति श्रुतौ निरंशत्वप्रतिपादनान्नापि त्वदंशोहं किन्तु त्वमेव त्वदभिन्न एवाहमस्मि भवामीत्येवं प्रकारेण, यद्वा त्वं सर्वजगत्कारणं सर्वाधिष्ठानं सर्वज्ञ ईशनशक्तिमान्त्वमेवाहं समष्टिव्यष्ट्युपाध्योरैक्याद्व्यावहारिकभेदेपि न परमार्थिकभेदकल्पनायुक्तेति भावः, भजति सेवते इति किञ्चिद्विशेषेपि एवं प्रकारेण स्वल्पे भेदे सत्यपि तयोः परिणामः परिपाकः सम एकरूपोऽतोपि ज्ञानिभक्तयोरैक्यमेव सिद्धमिति भावः ॥ २३ ॥

ननु भक्तज्ञानिनोर्भजनैक्यलक्षणः परिणामः क्व दृष्ट इत्याशङ्क्याह सार्धेन ।

अन्तर्बहिर्यदा देवं देवभक्तः प्रपश्यति ।

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

# BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS

EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*No. 94.*

---

Bodhasarah

# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।
तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।
श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण
दयानन्दस्वामिना परिशोधितः ।

# BODHSÂR,

A TREATISE ON VEDANTA,
BY
SRI NARHARI,
With a commentary by the author's pupil
PANDIT DIVÂKAR.
EDITED BY
SWÂMÎ DAYÂNAND.
*Fasciculus III.*

BENARES.
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilas Press,
BENARES.

1905.

दासोहं भावयन्नेव दाकारं विस्मरत्यसौ ॥ २४ ॥

अन्तरिति । देवभक्तो देवस्य चिन्मात्ररूपिणः परमात्मनो भक्तः सेवको दासोहं भावयन्नेव दासः सेवक एवाहमिति चिन्तयन्सन्नपि तादृशभजनेनैव शुद्धान्तःकरणो यदा यस्मिन्कालेऽन्तर्बुद्ध्यहङ्कारादिसर्ववृत्तिसाक्षितया वृत्तिसन्धिप्रकाशकतया च बहिर्जगत्प्रकाशकतया जगद्गतघटपटादिपदार्थसन्धिप्रकाशकतया च देवं चिन्मात्रैकस्वभावमात्मानं प्रपश्यति साक्षात्करोति तदा तस्मिन्कालेऽसौ भक्तो दाकारं विस्मरति भेदबोधकं दा-इत्येवं पूर्वमक्षरं नानुसन्धत्ते ॥ २४ ॥

दृष्टमेकान्तभक्तेषु नारदप्रमुखेषु तत् ।
किंचिद्विशेषं वक्ष्यामि त्वमेकाग्रमनाः शृणु ॥ २५ ॥

दृष्टमिति । एकान्तभक्तेषु अव्यभिचारिभक्तेषु नारदप्रमुखेषु नारदः प्रमुख आद्यो येषां तेषु तद्दाकारविस्मरणं दृष्टमवलोकितमतो ज्ञानभक्त्योरैक्यमेव सिद्धमिति भावः, एवं ज्ञानभक्त्योरैक्यं प्रसाध्य भक्तिश्रद्धाविवृद्धये ज्ञानतो भक्तेराधिक्यं दर्शयितुं किञ्चिद्वैलक्षण्यं दर्शयति सार्द्धाभ्यां किञ्चिदिति, अहं किञ्चित्सूक्ष्मं विशेषं ज्ञानतो भक्तेराधिक्यं वक्ष्यामि कथयिष्यामि तं त्वमेकाग्रमना एकाग्रं स्थिरं मनोन्तःकरणं यस्य स तथाभूतः सञ्छृणु अवधारय ॥ २५ ॥

एवं भक्त्याधिक्यश्रवणे शिष्यमभिमुखीकृत्येदानीं तयोरैक्यनिरूपणपूर्वकं किञ्चिद्वैलक्षण्यं दर्शयति ।

यदीश्वररसी भक्तस्तदीश्वररसी बुधः ।
उभौ यद्यप्येकरसौ तथापीषद्विलक्षणौ ॥ २६ ॥

यदिति । भक्तो यदीश्वररसी यस्येश्वरस्य रसः सुखं विद्यते यस्य स तथोक्तोऽस्ति बुधो ज्ञानी तदीश्वररसी तस्यैवेश्वरस्य रसः सुखं तद्विद्यते यस्य स तथोक्तोऽस्ति एवं यद्यपि सत्यमित्यर्थः, उभौ भक्तज्ञानिनावेकरसावेकसुखविषयौ स्तस्तथापीषद्विलक्षणावीषत्स्वल्पं विशेषं लक्षणं चिन्हं ययोस्तौ तथोक्तौ भवतः ॥ २६ ॥

तदेव वैलक्षण्यं दर्शयति ।

बुद्धा बोधरसादन्यरसनीरसतां गताः ।
तथाधिकप्रेमरसान्न तु भक्ताः कदाचन ॥ २७ ॥

बुद्धा इति । यथा बुद्धा ज्ञानिनो बोधरसाद्बोधो ज्ञानं तदेव रसः सुखं 'रसो वै स' इतिश्रुतेः, तस्मादन्यरसनीरसतां गता अन्यो वैषयिको रसः सुखं तस्मिन्नीरसतां वैरस्यं गताः प्राप्तास्तथा तद्वदधिकप्रेमरसादधिको विम्बरससहितत्वेन द्विगुणत्वेन प्रतीयमानः प्रेमा तद्रसविषयकस्नेहरूपा वृत्तिस्तद्विषयभूतो रसः सुखं तस्माद्धेतोर्भक्ता उपासकाः कदाचन कस्मिन्नपि काले न तु नैवान्यरसविरसत्वं याता ज्ञानिनः स्वरूपसुखमात्रं भक्तस्य तु तत्सहितवृत्तिसुखमतो भक्ते सुखाधिक्याज्ज्ञानितो वैशिष्ट्यमिति भावः ॥ २७ ॥

एवं ज्ञानिभक्तयोर्मध्ये भक्ते वैशिष्ट्यं प्रदर्श्येदानीं भक्तेर्ज्ञानं ज्ञानान्मोक्ष इत्येवं व्यवस्थासिद्ध्यै ज्ञानभक्त्योरेकनिष्ठत्वसिद्धेः शास्त्रेषु वसिष्ठादिषु ज्ञानित्वं नारदादिषु तु भक्तत्वं च भिन्नत्वेन कुतः प्रतिपाद्यते तत्र हेतुं ज्ञापयितुं प्रश्नमुत्थापनं प्रतिजानीते ।

अथप्रश्नः ।

अथेति । अथेदानीं प्रश्न उत्थाप्यत इत्यर्थः, तमेवाह सार्धाभ्याम् ।

ननु ज्ञानं विना मुक्तिर्नास्ति युक्तिशतैरपि ।
तथा भक्तिं विना ज्ञानं नास्त्युपायशतैरपि ॥२८॥

नन्विति । ननु इयमत्राशङ्का ज्ञानं विना ज्ञानं जीवब्रह्मैक्यविषयं महावाक्यजन्यमपरोक्षं विन ऋते युक्तिशतैरपि युक्तीनां योगधारणानां शतैः शतसङ्ख्याकैरसङ्ख्ययोगधारणाभिरित्यर्थः, मुक्तिर्मोक्षो नास्ति न भवति तथा तद्वद्भक्तिं विना प्रेमलक्षणवृत्तिमीश्वरविषयां विन ऋते ज्ञानमात्मबोध उपायशतैरपि उपायानां कर्मोपास्त्यादीनां शतैरपि असङ्ख्येयोपायैरित्यर्थः, नास्ति न भवतीत्येवं निर्णयः सर्वशास्त्रेष्विति भावः ॥ २८ ॥

भक्तेर्ज्ञानं ततो मुक्तिरिति साधारणक्रमः ।
ज्ञानिनस्तु वसिष्ठाद्या भक्ता वै नारदादयः ॥२९॥

भक्तेरिति । भक्तेरीश्वरविषयकप्रेमवृत्तेर्ज्ञानं जीवब्रह्मैक्यबोधो भवति ततो बोधान्मुक्तिर्मोक्षो भवतीति एवं क्रमो निर्णयः साधारणः सामान्योऽस्ति एवं सत्यपि वसिष्ठाद्यास्तु वसिष्ठ आद्यो मुख्यो येषां ते तथोक्तास्त एव ज्ञानिनो ज्ञानवन्तो भवन्ति नारदादयो वै नारद आदिर्येषां ते तथोक्तास्त एव भक्ता ईश्वरविषयकप्रेमलक्षणवृत्तिमन्तो भवन्ति ॥ २९ ॥

एवमादिव्यवस्थायाः कारणं किं निरूप्यताम् ।
अत्रोच्यते विचित्रं यत्कारणं तन्निशामय ॥ ३० ॥

एवमिति । एवमादिव्यवस्थाया एवंरूपा याऽऽदिः प्राचीना व्यवस्था मर्यादा तस्याः कारणं बीजं किमस्ति तन्निरूप्यतां कथ्यताम्, इदानीं दृष्टान्तसहितोत्तरश्रवणे शिष्यं प्रेरयति

अत्रेति, अत्रास्यां व्यवस्थायां विचित्रं विलक्षणं यद्यादृशं कारणं बीजमस्ति तदुच्यते मया कथ्यते तत्कारणं त्वं निशामय शृणु ॥ ३० ॥

तत्कथनं प्रतिजानीते ।

कथयामि सदृष्टान्तं येनार्थः स्फुटतां व्रजेत् ।
स्यात्तापस्य च पापस्य गंगास्नानेन हि क्षयः ॥३१॥

कथयामीति । अहं सदृष्टान्तं दृष्टान्तेन सहितं यथा तथा तत्कारणं कथयामि निरूपयामि येन निरूपणेनार्थः पृष्टोर्थः स्फुटतां प्राकट्यं व्रजेद्गच्छेत, प्रतिज्ञातार्थनिरूपणे तावद्दृष्टान्तमाह स्यादित्यादित्रिभिः, गङ्गास्नानेन गङ्गाया अवगाहनेन तापस्य शरीरगतौष्ण्यस्य पापस्य च कलुषस्यापि क्षयो नाशः स्याद्भवेद्धीदं सर्वलोकशास्त्रयोः प्रसिद्धमित्यर्थः ॥ ३१ ॥

यस्तु स्यात्तापशान्त्यर्थी तस्यापि स्यादघक्षयः ।
यस्तु स्यादघशान्त्यर्थी तापस्तस्यापि नश्यति ॥३२॥

यस्त्विति । यस्तु योपि तापशान्त्यर्थी ताप उष्णत्वं तस्य शान्तिर्नाशस्तामर्थते प्रार्थयतीति स तथोक्तस्तस्यापि शीतेच्छुपुरुषस्यापि अघक्षयोऽघं पापं तस्य क्षयो नाशः स्याद्भवेद्, यस्तु योपि अघशान्त्यर्थि अघं पापं तस्य शान्तिर्नाशस्तामर्थत इच्छति स तथोक्तः स्याद्भवेत्तस्यापि पापक्षयेच्छुपुरुषस्यापि ताप औष्ण्यं नश्यति नष्टो भवति ॥ ३२ ॥

तापपापक्षयौ स्नानं त्रयमेतत्समं द्वयोः ।
तथाप्येकस्तु शैत्यार्थी शुद्ध्यर्थी तु द्वितीयकः ॥३३॥

तापेति । तापपापक्षयौ तापश्चोष्णत्वं पापं च कलुषं तयोः

क्षयौ नाशौ स्नानं चैतत्त्रयमिदं त्रितयं द्वयोस्तापपापक्षयार्थिनोरुभयोरपि समं तुल्यं भवति यद्यपि यद्यपि तथापि तयोर्मध्य एकस्तु एक एव शैत्यार्थी शीतलत्वार्थीति लोके नाम्नोच्यते द्वितीयकस्तु अन्य एव शुद्ध्यर्थी पापनिवृत्त्यर्थीति नाम्नोच्यत इत्यर्थः ॥ ३३ ॥

यथैव भावभेदेन नामभेदस्तयोरभूत् ।
एवमेव बुधैर्यैस्तु देवो मुक्त्यर्थमाश्रितः ॥ ३४ ॥

यथेति । एवमनेन प्रकारेण यथा यद्वद्भावभेदेन वासनाभिन्नत्वेन द्वयोरुभयोर्नामद्वयमेव द्वे एव नामनी जातं व्यवहार उत्पन्नम्, दार्ष्टान्तिकमाह सार्धत्रिभिरेवामिति, एवमेवैवं प्रकारेणैव बुधैर्विवेकिभिर्यैर्यादृशैर्देवश्चेतनरूपः परमात्मा मुक्त्यर्थं मुक्तीच्छयाऽऽश्रितोवलम्बितः ॥ ३४ ॥

भक्त्या ज्ञानमवाप्यैव ये मुक्ता ज्ञानिनो हि ते ।
यैस्तु संसारविरसैर्भक्त्यर्थं हरिराश्रितः ॥ ३५ ॥

भक्त्येति । ते बुधा भक्त्या प्रेमवृत्त्या सहैव ज्ञानं जीवब्रह्मैक्यबोधमवाप्य संप्राप्य मुक्ता मोक्षं प्राप्तास्ते ज्ञाने भक्तौ च समाभ्यासवन्तो ज्ञानिनो ज्ञानिनामानो हि प्रसिद्धा लोके शास्त्रे चेत्यर्थः, यैस्तु यैरपि संसारविरसैः संसार ऐहिकपारलौकिप्रपञ्चे विरसैर्दोषदृष्ट्या विरक्तैर्ज्ञानमोक्षयोरवज्ञानात्तदिच्छाभावेन भक्त्यर्थं केवलं भक्तिरर्थः प्रयोजनं यस्यामाश्रयक्रियायां यथा तथा हरिर्भक्तदुःखहारक आश्रितोवलम्बितः ॥३५॥

ततो भक्तिप्रभावेन स्वभावाज्ज्ञानमुद्गतम् ।
तज्ज्ञानं प्राप्य मुक्ता ये तेभक्ता इति वर्णिताः ॥३६॥

तत इति। ततो हरेराश्रयणाद्भक्तिप्रभावेन भक्तेर्भजनस्य प्रभावः प्रतापस्तेन स्वभावाद्रागादिमलनिवृत्त्या स्वस्यात्मनो भावात्सत्तानुभावाज्ज्ञानं जीवब्रह्मणोरैक्यलक्षणमुद्गतमुत्पन्नं भवतीति शेषः, तज्ज्ञानं तं बोधं प्राप्य लब्ध्वा ये पुरुषा भक्ता इति भक्ता एवं प्रकारेण वर्णिताः कथिताः पुराणादिष्वित्यर्थः॥ ३६॥

उभयोः फलैक्यं दर्शयति।

विरक्तिभक्तिविज्ञानमुक्तयस्तु समा द्वयोः।
तथापि भावभेदेन नामभेदस्तयोरभूत्॥ ३७॥

विरक्तीति। द्वयोर्ज्ञानिभक्तयोस्तु अपि विरक्तिभक्तिविज्ञानमुक्तयो विरक्तिश्च वैराग्यं भक्तिश्च प्रेमलक्षणा विज्ञानं जीवब्रह्मैक्यविषयं मुक्तिश्च मोक्ष एता समास्तुल्याः सन्ति तथापि फलसाम्ये सत्यपि तयोर्ज्ञानिभक्तयोर्भावभेदेन भावयोर्भिन्नविषयकवासनयोर्भेदेन भिन्नत्वेन नामभेदो नाम्नोरभिधानयोर्भेदः पृथक्त्वमभूज्जातम्॥ ३७॥

एवं फलैक्ये भक्तज्ञानिनोरैक्यं प्राप्तं तत्प्रकरणविरुद्धत्वान्निवारयितुं ज्ञानतो भक्तेराधिक्यं दर्शयति।

मुक्तिर्मुख्यफलं ज्ञस्य भक्तिस्तत्साधनत्वतः।
भक्तस्य भक्तिर्मुख्यैव मुक्तिः स्यादानुषङ्गिकी॥३८॥

मुक्तिरिति। ज्ञस्य ज्ञानिनो मुक्तिर्मोक्षो मुख्यफलं मुख्यं प्रधानं च तत्फलं च मुख्यफलमस्ति भक्तिरीश्वरविषयकं प्रेम तत्साधनत्वतस्तस्य मोक्षस्य साधनत्वादेव हेतोर्न मुख्यफलमस्ति भक्तस्योपासकस्य भक्तिरेवेश्वरविषया प्रेमवृत्तिरेव

मुख्या प्रधाना भवति मुक्तिर्मोक्ष आनुषङ्गिकी भक्तिफलरूपेण भक्तिसहचारिणी स्याद्भवेत् ॥ ३८ ॥

रीत्यानयापि सुमते वरिष्ठा भक्तिरीश्वरे ।
अथान्योपि महिमा
परमानन्दरूपोसौ परमात्मा स्वयं हरिः ॥ ३९ ॥

रीत्येति। हे सुमत इदमेव ते सुमतित्वं यद्भक्तिसहचरितज्ञानेन मुक्तिसम्पादनमित्यनेन सम्बोधनेन सूचितम्, अनयोक्तया रीत्या प्रकारेणेश्वरे परमात्मनि भक्तिः प्रेमलक्षणावृत्तिरेव वरिष्ठा श्रेष्ठा, एवं ज्ञानतो भक्तेराधिक्यं प्रतिपाद्येदानीं भक्तेरेव प्रकारान्तरेण महिमानं निरूपयितुं प्रतिजानीते—अथेति, अथ भक्तिश्रैष्ठ्यनिरूपणानन्तरमन्योपि उक्तप्रकाराद्विलक्षणोपीत्यर्थः, महिमा भक्तेर्महत्त्वं निरूप्यत इत्यर्थः, तमेव प्रकारमाह परमानन्दरूप इति, असौ स परमात्मा कार्यकारणातीत आत्माऽत एव परमानन्दरूपः परमो निरतिशयो य आनन्दः सुखं तदेव रूपमाकृतिर्यस्य स तथोक्तोऽत एव हरिः सर्वदुःखहरणशीलः स्वयमात्मापि ॥ ३९ ॥

शिवभक्तिं पुरस्कृत्य भुङ्क्ते भक्तिरसायनम् ।
सनकाद्या वसिष्ठाद्या नन्दिस्कन्दशुकादयः ॥ ४० ॥

शिवभक्तिमिति। शिवस्य कूटस्थस्यात्मनो भक्तिं प्रेमलक्षणां वृत्तिं पुरस्कृत्य ध्वजीकृत्य भक्तिरसायनं सर्वसुखानां विम्बभूतानन्दविषयत्वाद्भक्तेः रसायनत्वमित्यर्थः, ज्ञानस्य तु परब्रह्मस्वरूपत्वेन परमानन्दरूपत्वे सत्यपि तस्य निर्विषयत्वात्प्रेमलक्षणवृत्तेस्तु वृत्तिविषयकानन्दस्य परमानन्दस्य च सत्वात्सर्ववैषयिकानामपि

तत्रैव सत्वाच्च प्रेमातिशयेन सर्वदुःखतिरोभावेन च केवलसुखसमूहरूपत्वाच्च भक्तौ विष्णोरपि प्रवृत्तिरुद्भेत्याशयः, जीवन्मुक्ति सुखादपि भक्तिसुखमधिकमिति सनकादिप्रवृतिनिरूपणेन दृढीकरोति सनकाद्या इति, सनकाद्याः सनक आद्यो मुख्यो येषां सनत्कुमारादीनां ते तथोक्तास्तथा वसिष्ठाद्या वसिष्ठ आद्यो मुख्यो येषां व्यासादीनां ते तथोक्तास्तथा नन्दिस्कन्दशुकादयो नन्दिः शिववाहनभूतो वृषभः स्कन्दो गुहः शुको व्यासपुत्र एत आदयो येषां ते तथोक्ताः ॥ ४० ॥

भुञ्जते तत्पदं प्राप्ता अपि भक्तिरसायनम् ।
द्वैतं विना कथं भक्तिरिति तत्रोत्तरं शृणु ॥ ४१ ॥

भुञ्जत इति । तत्पदं तत्प्रत्यगभिन्नं पदं स्वरूपं प्राप्ता अपि तद्रूपाः सन्तोपि भक्तिरसायनं भक्तिसुखं भुञ्जतेऽनुभवन्ति । ननु भक्तेर्द्वैतमिश्रितत्वे 'नाल्पे सुखमस्ती'ति श्रुत्या विषसंपृक्तान्नस्य विषत्वमिव भक्तेर्दुःखमिश्रितत्वेन दुःखरूपत्वात्कथं सुखरूपत्वं श्रुतिविरुद्धं प्रतिपाद्यत इत्याशङ्कामुद्भाव्योत्तरयति सार्धेन द्वैतमिति, द्वैतं विना भेदमृते भक्तिर्भजनं कथं केन प्रकारेण स्यान्न कथमपीत्यर्थः, इति चेदेवं यदि वदसि तर्हि तत्र प्रश्न उत्तरं प्रत्युत्तरं शृणु अवधारय ॥ ४१ ॥

द्वैतं मोहाय बोधात्प्राक्प्राप्ते बोधे मनीषया ।
भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम् ॥ ४२ ॥

द्वैतमिति । द्वैतं भेदो बोधात्प्राग्जीवब्रह्मैक्यज्ञानात्पूर्वं मोहयितुं भवति बोधे प्राप्ते जीवात्मैकत्वज्ञाने लब्धे सति मनीषया स्वेच्छया भक्त्यर्थं भक्तिं कर्त्तुं कल्पितं कल्पनया कृतं द्वैतं

द्वैतं पृथक्त्वमद्वैतादपि सामान्यैकरूपात्सुखादपि सुन्दरमतिसुखमेवास्ति आनन्दद्वैगुण्यादिति भावः ॥ ४२ ॥

अत्रार्थे भागवतं प्रमाणयति ।

तथा चोक्तं भागवते

तथा चेति । तथा च तथैवेत्यर्थः, भागवते भगवल्लीलाप्रतिपादनप्रधाने शास्त्र उक्तं, तद्वाक्यं पठति ।

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ ४३ ॥

आत्मारामा इति । आत्मारामाश्चात्मनि सच्चिदानन्दघन आरमन्ते क्रीडन्ति ते तथोक्तास्तथाभूता अपि निर्ग्रन्था अत एव ग्रन्थनिरपेक्षा अपि मुनयो मननवन्त उरुक्रम उरुर्बहुः क्रमः पादविक्षेपो यस्य तस्मिन्नहैतुकीं फलापेक्षाहीनां भक्तिं श्रवणकीर्त्तनादिनवलक्षणामन्तःकरणवृत्तिं कुर्वन्ति प्रवर्त्तयन्ति, ननु 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तत' इति न्यायात्फलापेक्षारहितानां परमानन्दानुभविनां च मुनीनां क्रियारूपायां भक्तौ कथं प्रवृत्तिस्तत्राहेत्थमिति, हरिः समस्तदुःखहारी विष्णुरित्थंभूतगुण इत्थंभूता निरपेक्षत्वेपि पुरुषाणां स्वेषु प्रवर्त्तका गुणा यस्य स तथोक्तोऽस्ति गुणसंस्कार एव गुणेषु प्रवर्त्तको गुणानां भवतीति भावः ॥ ४३ ॥

उक्तमेव भक्त्यर्थकल्पितद्वैतस्य सुखातिशयरूपत्वं दृष्टान्तेन विशदयति ।

जाते समरसानन्दे द्वैतमप्यमृतोपमम् ।
मित्रयोरिव दंपत्योर्जीवात्मपरमात्मनोः ॥ ४४ ॥

जाते इति । समरसानन्दे सम एकरूपो रसः सुखरू-

पत्वं यस्य स चासावानन्दश्च स तथोक्तो जीवब्रह्मणोरैक्यलक्षणे सुख इत्यर्थः, जाते प्राप्ते सत्यपि जीवात्मपरमात्मनोर्जीवस्य परमात्मनश्च यद्भक्त्यर्थं भक्तिं कर्तुं कल्पितं कल्पनयाङ्गीकृतं द्वैतं पृथक्त्वं तदमृतोपममसृतं मुक्तिसुखमेवोपमा तुला यस्य तत्तथाभूतमस्ति तत्र दृष्टान्तो मित्रयोरिति, मित्रयोः परस्परं प्रेमवतोर्दम्पत्योरिव जायापत्योः पृथक्त्वमिवेति ॥ ४४ ॥

दृष्टान्तं विशदयति ।

हृदये वसति प्रीत्या लोकरीत्या च लज्जते ।
यथा चमत्कारमयी नित्यमानन्दिनी वधूः ॥ ४५ ॥

हृदय इति । यथा यद्वद्वधूर्जाया 'वधूर्जाया स्नुषा स्त्री चे'ति विश्वः, हृदयेन्तःकरणे प्रीत्या पतिप्रेम्णैव वसति तिष्ठति लोकरीत्या च लौकिकव्यवहारेण च लज्जते त्रपते यथा यादृशी चमत्कारमयि आश्चर्यवती नित्यं सर्वदाऽऽनन्दिनी पत्यावानन्दवर्धनशीला भवति एतत्प्रसिद्धं सर्वेष्विति भावः ॥ ४५ ॥

ननु परमानन्दरूपमुक्तिं त्यक्त्वा किं दुःखरूपद्वैतरूपभक्त्येत्याशङ्क्याह ।

पारमार्थिकमद्वैतं द्वैतं भजनहेतवे ।
तादृशी यदि भक्तिश्चेत्सा तु मुक्तिशताधिका ॥ ४६ ॥

पारमार्थिकमिति । अद्वैतं जीवब्रह्मैक्यं पारमार्थिकं तात्त्विकमित्यङ्गीकृत्य द्वैतं पृथक्त्वं भजनहेतवे भजननिमित्तमङ्गीकरोति गुरुशिष्यादिरूपं द्वैतमङ्गीकरोतीत्यर्थः, यद्वा भजनं भक्तिस्तदेव हेतुः फलं तदर्थं द्वैतं गुरुशिष्यादिद्वारा श्रवणमननादिरूपं सेव्यसेवकादिरूपं चाङ्गीकरोतीत्यर्थः, तादृशि एवं

रूपा भक्तिर्भजनं चेद्यदि अङ्गीकृता तर्हि सा भक्तिस्तादृशी उक्तलक्षणा मुक्तिशताधिका मुक्तीनां शतं मुक्तिशतं तस्मादप्यधिकोत्कृष्टा ॥ ४६ ॥

पुनर्भक्तेराधिक्यप्रतिपादनाय भक्तिज्ञानयोरेकफलत्वप्रतिपादनाय च वृत्तमाह ।

प्रियतमहृदये वा खेलतु प्रेमरीत्या
पदयुगपरिचर्यां प्रेयसी वा विधत्ताम् ।
विहरतु विदितार्थो निर्विकल्पे समाधौ
ननु भजनविधौ वा तद्द्वयं तुल्यमेव ॥ ४७ ॥

प्रियतमेति । प्रेयसी प्रियतरा स्त्री प्रियतमहृदयेऽतिप्रीतिविषयः प्रियतमस्तस्य हृदये वक्षसि वेति पक्षे प्रेमरीत्या प्रेमप्रकारेण खेलतु क्रीडतु इत्येकः पक्षः, वाऽथवा पदयुगपरिचर्यां पदयोरङ्घ्र्योर्युगं युग्मं तस्य परिचर्यां सेवां विधत्तां क्रियतामुभयत्र सुखं तुल्यमिति भावः, यथा यद्वत्तथा विदितार्थो ज्ञाततत्त्वो निर्विकल्पे विकल्पा नामरूपजात्यादयस्ते निर्गता निवृत्ता यस्मात्तस्मिन्समाधौ समं ब्रह्माधीयते लक्ष्यतेऽस्मिन्निति समाधिस्तस्मिन्विहरतु क्रीडतु वेत्येकः पक्षः, अथवा भजनविधौ भक्तिप्रकारे विहरतु क्रीडतु तद्द्वयं तदुभयमपि तुल्यमेवैकमेवास्ति ननु निश्चय इत्यर्थः ॥ ४७ ॥

एवमुभयोः साम्यं प्रतिपाद्येदानीं प्रकरणविषयत्वाद्भक्तेः श्रैष्ठ्यं सदृष्टान्तमाह ।

विश्वेश्वरस्तु सुधिया गलितेऽपि भेदे
भावेन भक्तिसहितेन समर्चनीयः ।

प्राणेश्वरश्चतुरया मिलितेपि चित्ते
चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ ४८ ॥

विश्वेश्वर इति। सुधिया तु शोभना रागादिरहिता धीर्मतिर्यस्य स तथोक्तस्तेनापि भेदे सेव्यसेवकादिलक्षणे पृथक्त्वे गलितेपि निवृत्ते सत्यपि भक्तिसहितेन श्रवणादिनवलक्षणलक्षितयान्तकरणवृत्त्या सहितेन भावेन प्रेम्णा विश्वेश्वरो जगदीश्वरः परमात्मा समर्चनीयः पूज्यः, तत्र दृष्टान्तः प्राणेश्वर इति, चतुरया बुद्धिमत्या स्त्रिया चित्तेन्तःकरणे मिलितेपि एकीभूते सत्यपि चैलाञ्चलव्यवहितेन चैलमूर्ध्ववस्त्रं तस्याञ्चलमंशस्तेनान्तरितं तेन चक्षुषेति शेषः, प्राणेश्वरः पतिर्निरीक्षणीयः प्रेक्षणीयोऽन्यथा सुखं न स्याद्यथा तथा श्रवणादिभक्तिं विनापि केवलसमाधौ सुखं न स्यादिति भावः ॥ ४८ ॥

उक्ते भक्तिश्रैष्ठ्ये वृद्धवाक्यं प्रमाणयितुमाह।

अथ भक्तिरसमाश्रित्य श्लोकः।

अथेति। अथात्रेत्यर्थः, भक्तिरसमाश्रित्य भक्तिसुखमवलम्ब्य श्लोकः श्लोकावित्यर्थः, जातित्वादेकवचनमस्ति तमेवोदाहरति।

योगे नास्ति गतिर्न निर्गुणविधौ सम्भावनादुर्गमे
नित्यं नीरसया धिया परिहृते द्वे ऐहिकामुष्मिके।
गोपः कोपि सखाकृतः स तु पुनर्नानाङ्गनासङ्गवा-
नस्माकं पदमर्थयन्ति मुनयश्चित्रं किमस्मात्परम्॥४९॥

योग इति। अष्टाङ्गसहिते योगे चित्तनिरोधाख्ये समाधौ मम गतिः प्रचारो नास्ति न विद्यते किञ्च सम्भावनादुर्गमे सम्भावनाया निश्चयवृत्तेर्दुर्गमोऽप्राप्तिर्यस्मिन्, यद्वा सम्भा-

वनया दुर्गमे दुष्प्रापे निर्गुणविधौ निर्गुणं गुणरहितं ब्रह्म वि-
धीयते निश्चीयतेऽस्मिन्निति तथाभूते वेदान्त इत्यर्थः, गतिः प्र-
चारो नास्ति तर्हि वैषयिके सुखे एव प्रचारोस्तु तत्राह नित्यं
सर्वदा नीरसयोदासीनया धिया बुद्ध्यैहिकामुष्मिके इह
लोके भवमैहिकं स्रक्चन्दनवनितादिविषयजं सुखमामुष्मिकं
चामृतभोगादिविषयजन्यं पारलौकिकं सुखं च ते द्वे उभे
अपि परिहृते त्यक्ते अतो नात्र मनसो रमणमिति भावः, पुनः
पश्चादन्यदेव विचार्य मया कृतं किं तदित्यत आह गोप इति,
मया कोपि अनिर्वचनीयो गोपो गोपालो ग्रामीण इत्यर्थः, स
तु सोपि नानाङ्गनासङ्गवान्नानाऽनन्ताश्च ता अङ्गनाः स्त्रियश्च
तासां सङ्गः सम्भोगोस्यास्तीति तथाभूतः स सखा मित्रं कृतः
आश्रितो मित्रत्वेनाश्रित इत्यर्थः, ननु गोपालसङ्गत्या बुद्धिभ्रं-
शेनाधः पात एव स्यात्तत्र किं पुनर्वक्तव्यं नानाङ्गनासङ्गवद्गो-
पालसङ्गेनाधः पात इतिशङ्कायामाहास्माकमिति, मुनयो मन-
नवन्तोपि अस्माकं तादृशगोपालसङ्गवतां न पदं प्रेमानन्दस्थि-
तिरूपमधिकारमित्यर्थः, अर्थयन्ति प्रार्थयन्तीत्यर्थः, अतोस्मा-
त्परमेतदाश्चर्यादन्यदाश्चर्यं श्रेष्ठं किं न किमपीत्यर्थः, इदमेवा-
तिश्रेष्ठमाश्चर्यमिति भावः ॥ ४९ ॥

आश्चर्यान्तरमाह ।

रोमाञ्चेन चमत्कृता तनुरियं भक्त्या मनो नन्दितं
प्रेमाश्रूणि विभूषयन्ति वदनं कण्ठं गिरो गद्गदाः ।
नास्माकं क्षणमात्रमप्यवसरः कृष्णार्चनं कुर्वतां
मुक्तिर्द्वारि चतुर्विधापि किमियं दास्याय लीलायते ॥ ५० ॥

रोमाञ्चेति । कृष्णार्चनं कृष्णस्य भूमानन्दरूपस्यार्चनं

ध्यानरूपं बाह्यमपि साकारस्य पूजनं कुर्वतामस्माकं नः ।

'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्मकृष्ण इत्यभिधीयते' ॥

इति प्रभृतिवचनैः कृष्णशब्दार्थस्य भूमानन्दत्वेन प्रतिपादनादियमेषा तनुर्देहयष्टी रोमाञ्चेन रोम्णां बालानामञ्चः पुलकस्तेन चमत्कृता चमत्कारवती दृश्यत इति शेषः, मनश्चान्तःकरणं भक्त्या प्रेमलक्षणया हृत्याऽऽनन्दितमानन्देन समृद्धं प्रेमाश्रूणि स्नेहाऽऽविर्भूतानि अश्रूणि नेत्रजलानि वदनं मुखं विभूषयन्ति अलंकुर्वन्ति गद्गदाऽव्यक्ताक्षरा गिरो वाण्यः कण्ठं गलमवरोधयन्तीति शेषः, एवंलक्षणवतामस्माकं क्षणमात्रमपि क्षणमात्रं तावन्मात्रमपि अवसरः समयोऽन्यविषयमङ्गीकर्तुं न न विद्यते तथापि चतुर्विधापि सायुज्यसार्ष्टिसामीप्यसारूप्यभेदेन चतुःप्रकारापि मुक्तिर्मोक्षो द्वारि पारिमार्थिकजीवब्रह्मैक्यलक्षणमोक्षद्वारभूते भजने दास्याय दास्यं कर्तुं लोलायते लोला चञ्चलेवाचरति अतश्चतुर्विधा मुक्तिः प्रपञ्चनिवृत्तिः किं न किमपि अति तुच्छेत्यर्थः ॥ ५० ॥

उक्तश्लोकौ मधुसूदनकृतावुदाहृतौ स्वश्लोकेनापि भक्त्याधिक्यप्रतिपादकेनाश्चर्यान्तरमाह ।

घनः कामोऽस्माकं तव तु भजनेऽन्यत्र नरुचि-
स्तवैवांघ्रिद्वन्द्वे नतिषु रतिरस्माकमतुला ।
सकामे निष्कामा सपदि तु सकामा पदगता
सकामास्मान्मुक्तिर्भजति महिमायं तव हरे ॥५१॥

इति श्रीनरहरिविरचिते बोधसारे भक्तिरसायनम् ॥ १३ ॥

घन इति । तव तु तवैव नान्यस्येत्यर्थः, भजने भक्तावस्माकं त्वद्भक्तिरुचिमतां नो घनो गाढः काम इच्छाऽस्ति

अन्यत्र कर्मणि ज्ञाने वाऽन्यभजने वापि रुचिः प्रीतिर्न नास्ति कुत इत्यत आह तवेति, तवैव त एव केवलमङ्घ्रिद्वन्द्वेऽङ्घ्र्योः पादयोर्द्वन्द्वं युग्मं तस्मिंस्तद्विषयिणीष्वित्यर्थः, नतिषु प्रणामेषु अस्माकं त्वद्भक्तानां रतिः प्रीतिरतुला न विद्यते तुलोपमा यस्याः सा तथाभूताऽस्ति यतोऽत इत्यर्थः, किञ्च सकामे विषयेच्छावति पुरुषे निष्कामेच्छारहिता तु अपि यद्वा तु प्रसिद्धेत्यर्थः, सकामा कामवती भूत्वेति शेषः, मुक्तिः सायुज्यसार्ष्टिसामीप्यसारूप्यरूपा सपदि शीघ्रं पदगता पदयोश्चरणयोर्गता लग्ना सती सकामास्मान्कामसहितान्नो भजति सेवते हे हरे हे सर्वदुःखनिरासक अयमेष महिमा महत्वं तव तेऽस्ति ॥५१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भक्तिरसायनार्थप्रकाशस्त्रयोदशः ॥ १३ ॥

---

## अथ राजयोगे भूमिकाभेदभास्करः।

एवं सर्वसाधनानि प्रतिपाद्येदानीमेतैः साधनैः साध्यामवस्थां निरूपयितुमुत्तरग्रन्थारम्भः, तत्र च फलरूपां तामेवावस्थां भूमिकाभेदेन निरूपयितुं भूमिकाभेदभास्कराख्यं प्रकरणं सार्धचतुःषष्ट्युत्तरशतश्लोकमारभते, तत्र च त्याज्यग्राह्यभेदेन भूमिकाश्चतुर्दश प्रतिपादयितुं प्रकरणद्वयमस्ति, तत्रादौ त्याज्यसप्तभूमीस्त्याजयितुं तज्ज्ञानार्थमज्ञानभूमिका निर्णेतुमज्ञानभूमिकानिर्णयाख्यं पादोनचतुर्दशश्लोकं प्रकरणमारभते, तत्राप्यादौ तावदुत्तरग्रन्थ इत ऊर्ध्वं राजयोगनिरूपणं प्रतिजानीते।

भूमिकाभेदमारभ्य यावद्ग्रन्थसमापनम्।
अगाधबोधसारेऽस्मिन्राजयोगो निरूप्यते ॥ १ ॥

भूमिकाभेदमिति। भूमिकाभेदं भूमिकानां चतुर्दशभूमीनां भेदं भेदनिरूपकप्रकरणमारभ्यारम्भं कृत्वा ग्रन्थसमापनं यावद्ग्रन्थस्य बोधसाराख्यग्रन्थस्य समापनं समाप्तिर्यावद्ग्रन्थसमाप्तिपर्यन्तमित्यर्थः। अस्मिन्प्रकृतेऽगाधबोधसारेऽगाधो दुरवगाहोऽनुभवं विनाऽर्थतो दुरवगाह इत्यर्थः, स चासौ बोधसारश्चैतन्नामको ग्रन्थस्तस्मिन्राजयोगो राज्ञां नृपाणां स्वस्थाने स्थित्वापि साधयितुं शक्यत्वात्तत्सम्बन्धी योगो जीवब्रह्मैक्यविषयकज्ञानलक्षणो निरूप्यते प्रतिपाद्यते ॥ १ ॥

एवमुत्तरग्रन्थार्थनिरूपणं प्रतिज्ञायेदानीं प्रकरणार्थं श्रोतुं फलप्रदर्शनेन शिष्यं प्रेरयति।

अथायं हृदि कर्तव्यो भूमिकाभेदभास्करः।
यस्य प्रसादमात्रेण तमो हार्दं विलीयते ॥ २ ॥

अथेति। अथ साधनश्रवणानन्तरमयं प्रत्यक्षो निरूप्यमाणो भूमिकाभेदभास्करो भूमिकानामवस्थानां निरूपयिष्यमाणानां चतुर्दशसंख्यानां भेदः परस्परवैलक्षण्येन पार्थक्यं तस्य भास्करः सूर्य इव प्रकाशको ग्रन्थो हृदि अन्तःकरणे कर्तव्योऽवधार्यः, नन्वेतदवधारणे किं फलं तत्राह यस्येति, यस्य भूमिकाभेदभास्करस्य प्रसादमात्रेण प्रसन्नतयैव केवलं हार्दं हृदि भवमन्तःकरण उत्पन्नं तमोऽज्ञानलक्षणमान्ध्यं विलीयते नश्यति ॥ २ ॥

एवं प्रकरणार्थविचारस्य फलं प्रदर्श्येदानीं प्रकरणप्रतिपाद्यसर्वभूमिकासंख्यामाह।

अज्ञानभूमिकाः सप्त सप्तैव ज्ञानभूमिकाः।
बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च ॥ ३ ॥

अज्ञानेति। अज्ञानभूमिका अज्ञानस्य मोहस्य भूमिका

अवस्थाः सप्त सप्तसङ्ख्याः सन्ति, ज्ञानभूमिका एवाज्ञाननिवर्त्तकस्य विवेकस्य भूमिका अवस्था अपि सप्त सप्तसङ्ख्याः सन्ति, एवं भूमिकासङ्ख्यां प्रदर्श्य त्याज्यत्वेनाज्ञानभूमिकाज्ञानार्थं प्रथममज्ञानभूमिकाः सप्त नामभेदेन निर्दिशति बीजजाग्रदिति, बीजजाग्रद्बीजजाग्रन्नाम्न्येका, तथा तद्वज्जाग्रज्जाग्रन्नाम्नी द्वितीया, तथैव च तद्वदेव महाजाग्रदेतन्नाम्नी तृतीया, ।

जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तकम् ।
इति सप्तविधो मोहस्तेषां विवरणं शृणु ॥ ४ ॥

तथा जाग्रत्स्वप्नो जाग्रत्स्वप्ननाम्नी चतुर्थी, तथा तद्वत्स्वप्ननाम्नी पञ्चमी, तथा स्वप्नजाग्रन्नाम्नी षष्ठी, तथा सुषुप्तकं सुषुप्तिनाम्नी सप्तमी, सर्वसंख्यामाहेतीति, एवं प्रकारेण मोहोऽज्ञानं सप्तविधः सप्तप्रकारोऽस्ति, तासां भेदज्ञानाय ता निरूपयितुं तच्छ्रवणे शिष्यं प्रेरयति तेषामिति, तेषां सप्तविधमोहानां विवरणं विस्तरं शृणु अवधारय ॥ ३ ४ ॥

तासु प्रथमां लक्षयति सार्धेन ।

कुसूले संस्थितं बीजं तत्र सर्वो यथा द्रुमः ।
तथा यत्र स्थितं विश्वं न तु व्यक्तिमुपागतम्॥ ५॥
बीजरूपं स्थितं जाग्रद्बीजजाग्रत्तदुच्यते ।
संसारप्रथमावस्था महामोहः स एव हि ॥ ६ ॥

कुसूल इति । कुसूले धान्यसञ्चयार्थं मृदादिना निर्मिते पात्रे संस्थितं पूर्वं स्थापितं बीजं चणकादिधान्यानां कारणभूतं धान्यमस्ति तत्र बीजे सर्वः शाखाकाण्डपुष्पफलोपेतो द्रुमो वृक्षो यथा यद्वदस्ति तथा तद्वद्यत्र मायाशबले ब्रह्मणि

विश्वं जगत्स्थितमस्ति व्यक्तिं प्रकटतां न तु नैवोपागतं प्राप्तं तदेव जगज्जाग्रच्छब्दवाच्यं बीजरूपत्वाद्बीजमिव जगत्कारणं मायाशबलं ब्रह्म तदेव रूपं यस्य तत्तथाभूतं स्थितं तिष्ठति तत्कारणमेव बीजजाग्रदेतन्नामकमुच्यते कथ्यते मुनिभिरिति शेषः, तस्यैव ग्रन्थान्तरे नामान्तराणि सन्ति तान्याह संसारेत्यादिना, संसारप्रथमावस्था संसारस्य ब्रह्माण्डस्य प्रथमा गर्भस्थिति रूपाऽवस्था स्थितिरिति सैवोच्यते स एव हि उक्तलक्षण एव हि प्रसिद्धो महामोहो मूलाज्ञानमिति नामान्तरैरुच्यते ॥ ५६ ॥

तदेवाज्ञानमित्युक्तं यत्स्वबोधेन लीयते ।
कुसूले संस्थितं बीजं क्षेत्रे निक्षिप्यते यदा ॥७॥

तदेव बीजजाग्रदेवाज्ञानं ज्ञानविरोधि भावरूपमिति एवं नाम्नोक्तं कथितं वेदान्तेष्विसर्थः । कुत इत्यत आह यदिति, यद्यस्मात्कारणात्स्वबोधेन स्वस्याज्ञानस्य बोधो ज्ञानं तेन, यद्वा स्वस्यात्मनो बोधो ज्ञानं तेनेसर्थः, लीयते नश्यतीत्यत इत्यर्थः, द्वितीयां सदृष्टान्तां लक्षयति कुसूल इति सार्धाभ्यां, कुसूले धान्यसञ्चयनार्थं मृदादिना निर्मिते पात्रे संस्थितं पूर्वं संस्थापितं बीजं चणकादिकारणभूतं चणकादि यदा यस्मिन्काले क्षेत्रे भूमौ निक्षिप्यत उप्यते ॥ ७ ॥

तदेत्यध्याहार्यं, तदा तस्मिन् काले ।

अंकुरोन्मुखतां याति सावस्था जाग्रदुच्यते ।
इदमेव महत्तत्त्वमिति सांख्यैर्निरूप्यते ॥ ८ ॥

अङ्कुरोन्मुखतां किञ्चिदङ्कुरोत्पत्त्या वृक्षजनने सन्मुखतां याति प्राप्नोति तस्यावस्थैवावस्थानं या सा जाग्रन्नाम्नोच्यते

कथ्यते तस्या एतस्या अपि शास्त्रान्तरे नामान्तराणि सन्ति तान्याहेदमित्यादिसार्धेन, इदमेवेयमवस्थैव सांख्यैः सांख्यशास्त्रविद्भिर्महत्तत्त्वमिति एवं नाम्ना निरूप्यते प्रतिपाद्यते ॥८॥

ईक्षणं चेति वेदान्तैः सामान्याहङ्कृतिस्तथा ।
आनन्दमयकोशश्च तत्साक्षी त्वीश्वरः स्मृतः ॥९॥

तथा तद्वद्वेदान्तैरुपनिषद्वाक्यैः 'स ईक्षते'त्यादिभिरीक्षणं चेक्षणमवलोकनमिति नाम्नेदमेव प्रतिपाद्यते तथा तद्वत्सामान्याहङ्कृतिः समष्ट्यहङ्कार इति आनन्दमयकोशश्चेति च तैरेव वेदान्तिभिरभिधीयते तत्साक्षी तु तस्या जाग्रतः साक्ष्यव्यवधानेन प्रकाशकस्तद्विलक्षणश्चेश्वर इति स्मृत उक्तः ॥ ८ ९ ॥

तृतीयां लक्षयति त्रिभिः पादैः ।

विशेषाहङ्कृतिः सुक्ष्माङ्कुरवद्व्यावहारिकी ।
महाजाग्रद्बुधैः प्रोक्ता व्यष्ट्यवस्थात्रये तु सा॥१०॥
जाग्रत्स्वप्नसुषुप्ताख्येऽवस्था जाग्रदिति स्मृता ।
जाग्रदेव यदा जीवो मनोराज्यं करोति हि ॥११॥

विशेषेति । सूक्ष्माङ्कुरवद्यवादिधान्यानां परिचितिकारणं यद्वत्तद्व्यावहारिकी व्यवहारे भवा विशेषाहङ्कृतिर्विशेषा सुख्यहं दुःख्यहं काणोहं बधिरोहं पुष्टोहं कृशोहं ब्राह्मणोहं क्षत्रियोहमित्यादिरूपाहङ्कृतिरहङ्क्रिया सा बुधैर्विवेकिभिर्महाजाग्रदेतन्नाम्ना प्रोक्ता कथिता, अस्या एव नामान्तरं व्यावहारिकमाह व्यष्टीति, सा तु सैव जाग्रत्स्वप्नसुषुप्त्याख्ये जाग्रच्चेन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणा, स्वप्नश्चेन्द्रियाणां कारणाज्ञानमात्रावस्थाने जाग्रत्संस्कारजः प्रत्ययवान्स्वप्न इत्युक्त

लक्षणः, सुषुप्तिश्चाज्ञानमात्रस्थितिरूपा, एता आख्या आह्वा यस्य तस्मिन्व्यष्ट्यवस्थात्रये व्यस्तरूपबुद्धेरवस्था जाग्रत्स्वप्नसुषुप्तयस्तासां त्रयं तस्मिञ्जाग्रदिति नाम्ना स्मृता प्रोक्ता मुनिभिरिति शेषः, चतुर्थीं लक्षयति जाग्रदेवेति, जीवः साधिष्ठानबुद्धिस्थश्चिदाभासो यदा यस्मिन्काले जाग्रदेव जाग्रत्सन्नपि मनोराज्यं मानसं संसारं करोति संकल्पयति हि प्रसिद्धमेतत्सर्वेषामित्यर्थः ॥ १० ॥ ११ ॥

जाग्रतः स्वप्न इव यत्स जाग्रत्स्वप्न उच्यते ।
लोकप्रसिद्धो यः स्वप्नः स स्वप्न इति कथ्यते ॥ १२ ॥

जाग्रत इति । जाग्रतो जागरणवतः स्वप्न इव स्वप्नवद्यन्मनोराज्यं स जाग्रत्स्वप्नो जाग्रत्स्वप्ननाम्न्यवस्थोच्यते कथ्यते, पञ्चमीमाह लोकप्रसिद्ध इति, यो लोकप्रसिद्ध आगोपालं सर्वैरनुभूतः स्वप्नोऽस्ति स स एव स्वप्ननाम्नी कथ्यते निरूप्यते ॥ १२ ॥

षष्ठीं लक्षयति ।

जातेपि जागरे जन्तोः स्वप्नदृष्टार्थभासनम् ।
प्रत्यक्षमिव संस्कारात्स्वप्नजाग्रत्तदुच्यते ॥ १३ ॥

जातेपीति। जन्तोर्जीवस्य जागरे जागरणे जातेपि उत्पन्नेपि सति संस्कारात्स्वाप्नार्थानुभवसंस्कारात्प्रत्यक्षमिव जाग्रद्दृग्गोचराभावेनाप्रत्यक्षमपि प्रत्यक्षवत्स्मृतिविषयं स्वप्नदृष्टार्थभासनं स्वप्ने ये दृष्टा अर्था गिरिनदीनगरादयस्तेषां भासनं प्रतीतिस्तद्भासनं स्वप्नजाग्रदेतन्नाम्न्यवस्थोच्यते कथ्यते ॥ १३ ॥

सप्तमीं लक्षयति।

षडवस्थापरित्यागे सुषुप्तिः सप्तमी मता।
अज्ञानभूमिकास्त्वेताः शृणु विज्ञानभूमिका ॥१४॥

इति श्रीनरहरिकृतौ बो० भूमिकाभेदभास्करेऽज्ञानभूमिनिर्णयः।

षडिति। षडवस्थापरित्यागे षण्णामुक्तलक्षणानां जाग्रदाद्यवस्थानां परित्यागेऽभावे सति या सुषुप्तिर्निद्रा सा सप्तमी सप्तम्यवस्था मतोक्ता मुनिभिरिति शेषः, उक्तमज्ञानभूमिकानिरूपणमुपसंहरति अज्ञानेति, हे शिष्य एता निरूपिता अज्ञानभूमिका अज्ञानस्य महामोहस्य भूमिका अवस्था उक्ता इति शेषः, एवं सलक्षणा अज्ञानभूमिकाः प्रतिपाद्येदानीं ज्ञानभूमिकाः श्रोतुं शिष्यं प्रेरयति शृण्विति, विज्ञानभूमिका विज्ञानस्य विवेकस्य भूमिका अवस्थाः पूर्वं सप्त निर्दिष्टास्ता इदानीं त्वं शृणु अवधारय ॥ १४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ
भूमिकाभेदभास्करार्थप्रकाशेऽज्ञानभूमिका-
निर्णयार्थप्रकाशः प्रथमः ॥ १ ॥

---

अथ ज्ञानभूमिका।

एवं अज्ञानभूमिकाः सलक्षणाः सप्त निरूप्येदानीं ज्ञानभूमिकाः प्रतिपादयितुं ज्ञानभूमिनिर्णयाख्यं प्रकरणमेकोनसार्धशतश्लोकमारभते, तत्र चावान्तरप्रकरणानि प्रथमभूमिका द्वितीयभूमिका तृतीयभूमिका चतुर्थभूमिका पञ्चमभूमिका षष्ठभूमिका-सप्तमभूमिकानिर्णयाख्यानि सप्तभूमिकाशास्त्रार्थनिर्णयाख्यं चेत्यष्टौ क्रमेणैकोनत्रिंशच्चतुस्त्रिंशदेकादशाष्टादशद्वाविंशतिनवनवसप्तदशश्लोकानि सन्ति तत्रादौ प्रथमभूमिकानिर्णयाख्यमेकोनत्रिंश-

श्लोकं प्रकरणमारभते, तत्र च तावन्निरूप्यमाणभूमिकानामान्याह।

जिज्ञासाथ विचाराख्या ततस्तु तनुमानसा ।
सत्त्वापत्तिरसंसक्तिः पदार्थाभाविनी तथा ॥ १ ॥
सप्तमी तुर्यमित्युक्ता तुर्यातीतमतः परम् ।

जिज्ञासेत्यादिसार्धेन । जिज्ञासा ज्ञातुमात्मनस्तात्त्विकं रूपमिच्छेति जिज्ञासानाम्न्येका, अथानन्तरं विचाराख्या विचारो विवेकः प्रकृतिपुरुषात्मानात्मादीनां सैवाख्या यस्याः सा तथोक्तैतनाम्नी द्वितीया, ततस्तु द्वितीयभूमिकानन्तरं तु ताभ्यां विलक्षणा तनुमानसा तनवः सूक्ष्मा मानसा मनोविकाराः कामाद्यो यस्यां सा तथोक्तैतन्नाम्नी तृतीया, ततोनन्तरं सत्त्वापत्तिः सत्त्वस्य सत्त्वगुणस्यापत्तिः प्राप्तिर्यस्यां सा तथोक्ता यद्वाऽन्यासत्त्वदृष्ट्यात्मनः स्वस्य कालत्रयाबाधितस्याप्तिः प्राप्तिर्यस्यां सा तथोक्ता चतुर्थी ज्ञेया, ततोनन्तरमसंसक्तिर्न विद्यते संसक्तिः केनापि सम्बन्धप्रतीतिः स्वस्मिन्यस्यां सैतन्नाम्नी पञ्चमी ज्ञेया, तथा तद्वत्पदार्थाभाविनी पदानि जीवेश्वरादिनामानि अर्थास्तद्वाच्यानि रूपाणि तेषामभावोऽसत्त्वं विद्यते यस्यां सा पदार्थाभाविनी षष्ठी नाम्ना ज्ञेया, तुर्यमित्युक्ता तुर्यमित्येवं नाम्नोक्ता मुनिभिः कथिता सा सप्तमी ज्ञेया, अतः परं सप्तमभूम्यस्पृष्टं तुर्यातीतमेतन्नाम तत्त्वमस्ति ॥ १ ॥

आसां भूमिकानां ग्रन्थान्तरे नामभेददर्शनेन भ्रमो माभूदिति नामान्तराण्यपि वक्तुं प्रतिजानीते ।

आसामेव नामान्तराणि ।

आसामिति । आसामेवोक्तनाम्नीनां भूमीनां नामान्त-

राणि अन्यानि नामानि उच्यन्त इति शेषः, तान्येवाह ।

सुमुक्षा च समक्षा च परीक्षा च परोक्षका॥ २ ॥

मुमुक्षेति । मुमुक्षा मोक्तुं संसारबन्धनादिच्छा मुमुक्षा प्रथमा भूमिका ज्ञेया, च पुनः समक्षा सम्यगक्षं समीचीनं विचाररूपं नेत्रं यस्यां सा तथोक्ता द्वितीया, च पुनः परीक्षा परीक्षणं परीक्षा मननं तदस्यामस्तीति सा तथोक्ता तृतीया, च पुनः परोक्षका परोक्षं परोक्षतया ज्ञातं कं ब्रह्म यस्यां सा तथोक्ता चतुर्थी ज्ञेया ॥ २॥

अपरोक्षा महादीक्षा पराकक्षेति सप्त ताः ।
प्रथमा त्वधिकाराख्या द्वितीया श्रवणात्मिका ॥ ३॥

अपरोक्षेति । अपरोक्षा न परोक्षं ब्रह्म यस्यां सा तथोक्ता ब्रह्मसाक्षात्कारवतीत्यर्थः, पञ्चमी; महादीक्षा महत्यनवच्छिन्ना दीक्षाऽहं ब्रह्मेति दीक्षणं संस्कारविशेषो यस्यां सा तथोक्ता षष्ठी ज्ञेया, तथा पराकक्षा परोत्कृष्टा ब्रह्मप्राप्तेः कक्षा द्वारभूता सप्तमी, इत्येवं ता भूमिकाः सप्त सप्तविधा ज्ञेयाः, पुनश्च ग्रन्थान्तरस्थितं भूमिकानामभेदमाह प्रथमेति, अधिकाराख्याऽधिकारित्वं सैवाख्या नाम यस्याः सा तथोक्ता प्रथमा प्रमथभूमिका ज्ञेया, तथा श्रवणात्मिका श्रवणं वाक्यानामादिमध्यावसानेषु एकस्मिन्ब्रह्मैक्यलक्षणेर्थे तात्पर्यप्रतीतिरित्युक्तलक्षणोऽर्थ आत्मा स्वरूपं यस्याः सा तथोक्ता द्वितीया भूमिका ज्ञेया ॥ ३ ॥

तृतीया मननप्राया निदिध्यासश्चतुर्थिका ।
साक्षात्कारः पञ्चमी स्यात्षष्ठी परिणतिः स्मृता ॥४॥

तृतीयेति । मननप्राया मननं श्रुतार्थस्य युक्त्या संभावितत्वानुसन्धानं मननमित्युक्तलक्षणं प्रायं बहु यस्यां सा प्रायश·

ब्दोत्राकारान्तः सा तृतीया ज्ञेया, निदिध्यासः श्रुतार्थस्य सजातीयप्रत्ययानुवृत्तिर्विजातीयप्रत्ययरहितेत्युक्तलक्षणो विपरीतभावनानिवर्तको निदिध्यासो वृत्तिविशेषः सा चतुर्थिका चतुर्थभूमिका ज्ञेया, साक्षात्कारः साक्षात्करोतीति साक्षात्कारो जीवब्रह्मैक्याव्यवहितानुभवरूपा वृत्तिः सा पञ्चमी भूमिका ज्ञेया, परिणतिस्तस्मिन्नेव जीवब्रह्मैक्ये परिणतिः परिणामरूपा वृत्तिः सा षष्ठी भूमिका स्मृता मुनिभिरिति शेषः ॥ ४ ॥

सप्तमी तु परा काष्ठा सैव तुर्यमितीरिता ।
प्रथमायां तु विद्यार्थी द्वितीयायां पदार्थवित् ॥५॥

सप्तमीति । पराकाष्ठा तु जीवब्रह्मैक्यार्थपरिणतिरूपा वृत्तिरेव परा काष्ठा निरतिशयसुखरूपेण गाढं परिणता सती सप्तमी भूमिका ज्ञेया, सैव सप्तम्येव तुर्यमिति तुर्येत्येवं नाम्नेरिता कथिता, एवं भूमिकानामान्यभिधायेदानीं तास्वारूढपुरुषलक्षणप्रतिपादनेन तासां लक्षणं विस्तरेण प्रतिपादयितुं तास्वेवारूढलक्षणं संक्षेपेणाह द्वाभ्यां, प्रथमायां प्रथमभूमिकायां जिज्ञासाऽऽह्वायामारूढो विद्यार्थीति विद्यां जीवब्रह्माभेदापरोक्षज्ञानमर्थते तच्छीलो भवति, तु पुनर्द्वितीयायां विचाराख्यायां भूमिकायामारूढः पदार्थवित्पदानि तत्त्वमसीत्यादीनि तेषामर्थौ वाच्यलक्ष्यौ तत्त्वमोर्द्वयोरैक्यं चासिपदस्येत्यादयस्तान्वेत्तीति स तथोक्तो भवति ॥ ५ ॥

निःसंशयस्तृतीयायां चतुर्थ्यां पण्डितो भवेत् ।
प्राप्तानुभूतिः पञ्चम्यां षष्ठ्यामानन्दघूर्णितः ॥६॥

निःसंशय इति । तनुमानसानाम्न्यां तृतीयभूमिकायां निःसं-

शयो निर्गताः संशया यस्मात्स तथोक्तो भवति, चतुर्थ्यां चतुर्थभूमिकायां सत्त्वापत्तिनाम्न्यामारूढः पण्डितः समस्तपदपदार्थेषु समबुद्धिर्भवेत्स्यात्, तथा पञ्चम्यां पञ्चमभूमिकायामसंसक्तिनाम्न्यामारूढः प्राप्तानुभूतिः प्राप्ता लब्धाऽनुभूतिर्जीवात्मैक्यस्यानुभवो येन स तथोक्तो भवति, तथा षष्ठ्यां षष्ठभूमिकायां पदार्थाभाविनीनाम्न्यामारूढः पुरुष आनन्दघूर्णित आनन्देन भूमानन्देन घूर्णितो व्याप्तो भवेदानन्दानन्यास्वादीभवेदित्यर्थः ॥ ६ ॥

सप्तमी सहजा तुर्या तुर्यातीतमतः परम् ।
भूमिका त्रितयं पूर्वं त्वत्र जाग्रदिति स्मृतम् ॥७॥

सप्तमीति । सप्तमी सप्तमभूमिका तुर्यैतन्नाम्नी सहजा सहजस्वभावा तदारूढः सहजानन्दवान्भवतीत्यर्थः, अतः परं तुर्याख्यसप्तमभूमेः परमुत्कृष्टन्तदस्पृष्टन्तदन्यच्च तुर्यातीतं तुर्यायाः सप्तमभूमेरतीतमस्पृष्टं तत्त्वं ज्ञेयमित्यर्थः, एवं सप्तभूमिकास्वारूढलक्षणं संक्षेपतः प्रदर्श्येदानीं सप्तमभूमेस्तुर्यशब्दवाच्यत्वं यदुक्तं तद्विशदयितुं सप्तभूमिकासु चतस्रोऽवस्था दर्शयति सार्धाभ्यां भूमिकात्रितयमिति, अत्र तु अत्र ज्ञानेपि पूर्वं प्रथममवस्थात्रितयमवस्थानां भूमिकानां त्रितयं त्रिकं जिज्ञासाविचारातनुमानसाख्यं जाग्रदिति जाग्रन्नाम्ना स्मृतं प्रोक्तं मुनिभिरिति शेषः ॥ ७ ॥

कुत इत्यत आह ।

जिज्ञासोरत्र संसारो यथापूर्वं यतः स्थितः ।
चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ॥८॥

जिज्ञासोरिति । यद्यस्मात्कारणादत्र भूमित्रये जिज्ञासो-

मुमुक्षोर्यथापूर्वं पूर्वमनतिक्रम्येति यथापूर्वमज्ञानावस्थायां यथा संसारः स्थितस्तथैवेत्यर्थः, संसारो दृश्यदर्शनद्रष्टृरूपः स्थितस्तिष्ठति अत इत्यर्थः; अयं भावः, एतद्भूमित्रिके पूर्ववत्संसारप्रतीतौ सत्यामपि भूमित्रिकस्यैतस्य मोक्षसाधनत्वाज्ज्ञानत्वेन तुर्यत्वे जाग्रत्तुर्यत्वं जाग्रत्त्वं तु सप्तमीभूमिकायास्तुर्यात्वापेक्षयेति ज्ञेयं, एवं भूमित्रिके जाग्रत्त्वं प्रदर्श्येदानीमेतदपेक्षया चतुर्थ्यां स्वप्नत्वं साधयति चतुर्थीति, चतुर्थी चतुर्थभूमिका सत्त्वापत्तिनाम्नी स्वप्न इत्युक्ता स्वप्न इत्येवं नाम्नोक्ता कथिता कुत इत्यत आह स्वप्नाभमिति, यद्यतः कारणाद्यत्र चतुर्थभूमिकायां जगद्विश्वं स्वप्नाभं स्वप्नस्याभेवाभा यस्य तत्तथाभूतमस्ति प्रतीयत इत्यर्थः, अत इति योऽन्वयम्। अत्राप्ययं भावः, ज्ञानसाधनत्वाज्ज्ञानत्वेप्यस्यां जगतो मिथ्यात्वपूर्वप्रतीतेः स्वप्नत्वं स्वप्नोत्थितपुरुषे स्वप्नपदार्थप्रतीतिरिवास्यां जगतस्तात्कालिकमिथ्यात्वेन स्वप्नतुर्यत्वमिति ॥ ८ ॥

इदानीं सुषुप्त्यवस्थाभेदप्रदर्शनपूर्वकं भूमिकाद्वये क्रमप्राप्तं सुषुप्तं दर्शयति।

सुषुप्तिः शिथिला गाढा द्विविधाऽऽद्या तु पञ्चमी।
षष्ठी गाढसुषुप्तिः स्यात्सप्तमी तुर्यमुच्यते ॥ ९ ॥

सुषुप्तिरिति। सुषुप्तिर्निद्रा द्विविधा द्विप्रकाराऽस्ति एका शिथिलाऽपरा गाढा घना तत्राद्या तु शिथिला सुषुप्तिस्तु पञ्चमि असंसक्तिनाम्नी पञ्चमभूमिका ज्ञेया, षष्ठी पदार्थाभाविनी भूमिका गाढसुषुप्तिर्गाढा घना सुषुप्तिर्निद्रा सा तथोक्ता स्याद्, एवं च शिथिलात्वगाढात्ववैलक्षण्येनोभयत्र भेदेपि सुषुप्तित्वं स-

ममेव । अयं भावः, प्रपञ्चास्फूर्त्या सुषुप्तत्वमहङ्कारलयाभावेन स्वरूपस्फूर्त्या च सुषुप्ततुर्यत्वमिति, यदर्थमत्रस्थात्रयं प्रदर्शितं तदिदानीं तुर्यत्वं सप्तम्या दर्शयति सप्तमीति, सप्तमी सप्तमभूमिका तुर्यं तुर्यावस्थोच्यते विद्वद्भिः कथ्यते पूर्वावस्थाषट्कस्थितावस्थात्रयापेक्षया सप्तम्यास्तुर्यात्वं पूर्वावस्थाषट्कस्य ज्ञानत्वेन तुर्यत्वापेक्षया तु तुर्यतुर्यात्वमिति भावः ॥ ९ ॥

एवं ज्ञानभूमिकाः सप्तापि संक्षेपतो निरूप्येदानीं ता एव विस्तरतो वर्णयितुमज्ञानभूमिकाभ्यो ज्ञानभूमिकास्ववतरणे कारणं ज्ञापयितुं प्रश्नमुत्थापयति त्रिभिः ।

अत्र प्रश्नः ।

अत्रेति । अत्र ज्ञानभूम्यवतरणकारण इत्यर्थः, प्रश्नोऽनुयोगः क्रियत इति शेषः, तमेवाह ।

संसारमेव यो वेत्ति मोक्षमार्गं न वेत्ति यः ।
तस्य संसारिणः पूर्वं मुमुक्षा जायते कथम् ॥ १० ॥

संसारमिति । यः कश्चिदज्ञानी संसारमेव केवलं संसारं प्रपञ्चमेव वेत्ति जानाति केवलं वर्त्तमानमेव दृश्यं जानातीत्यर्थः, न तु पारमार्थिकं रूपं पारलौकिकं च, यश्चाज्ञानी मोक्षमार्गं मोक्षस्य ब्रह्मात्मभावस्थितेर्मार्गमुपायभूतं साधनं शास्त्रं च न वेत्ति न जानाति उभयोरैहिकमात्रज्ञानपारलौकिकज्ञानाभ्यां भेदे सत्यपि मोक्षमार्गाज्ञानं समानमेवेति भावः, तस्य तथाविधस्य संसारिणः संसारप्रवृत्तस्य पुरुषस्य पूर्वं प्रथमं मुमुक्षा मोक्षेच्छा कथं केन प्रकारेण जायते भवति तत्कथ्यताम् ॥ १० ॥

इदानीं पृष्टमेवार्थमाक्षिप्य पुनः पृच्छति ।

यादृशो यस्य संस्कारस्तादृशी तस्य वासनाः ।
संसारसंस्कारवतो मुमुक्षा जायते कथम् ॥ ११ ॥

यादृश इति । यस्य पुरुषस्य यादृशो यद्वत्संस्कारः पूर्वजन्मकर्मजन्यो वासनाविधानकारणं भवति तस्य पुरुषस्य वासनेच्छाविशेषस्तादृशी तद्वद्भवेत्तत्र संसारसंस्कारवत इदानीं संसारप्रवृत्तस्य पूर्वमपि संसारसंस्कार एवानुमीयतेऽतस्तद्वतः पुरुषस्य मुमुक्षा मोक्षेच्छा कथं केन कारणेन जायते भवति । अत्रायं प्रयोगः, अयं संसारसंस्कारवान्भवितुमर्हति संसारे प्रवर्तमानत्वाज्जाग्रत्संसारसंस्कारेण स्वप्नसंसारप्रवृत्तवदिति, इह जन्मनि संसारप्रवृत्तस्य पूर्वजन्मन्यपि संसारसंस्कारेणैव भाव्यमिति तस्य न मोक्षमार्गे प्रवृत्तिः सम्भवतीति भावः॥११॥

ननु विषयसुखलोभेन विषयज्ञानेन विषयसाधनप्रवृत्तिवन्मोक्षविषयकज्ञानेनैव मोक्षेच्छया मोक्षसाधनेषु प्रवृतिः स्यादित्याशङ्क्य तस्याज्ञानित्वाद्विषयप्रात्यक्ष्येण मोक्षस्य चाप्रात्यक्ष्येणाऽपिं तन्न भवतीत्याशयेनाह ।

मोक्षे तु विषयो नास्ति सुखं न विषयैर्विना ।
इति मूढधियां पूर्वं मुमुक्षैव कथं भवेत् ॥ १२ ॥

मोक्षेत्विति । विषयस्तु सुखसाधनभूतो विषयश्च मोक्षे वेदान्तप्रतिपाद्ये मोक्षाख्ये ब्रह्मणि नास्ति न विद्यते सुखं शर्मापि विषयैर्विना सुखकारणभूतविषयानृते न नास्तीति एवं मूढधियां मूढाऽज्ञानवती धीर्निश्चयात्मिकान्तःकरणवृत्तिर्येषां तेषां विपरीतज्ञानिनामित्यर्थः, मुमुक्षैव मोक्षेच्छैव पूर्वं प्रथमं कथं केन प्रकारेण भवेत्स्यान्न कथमपि भवेदत एवाज्ञा-

नभूभ्योऽज्ञानिनः ज्ञानभूम्यवतरणं केन हेतुना स्यात्तत्कथ्यतामिति प्रश्नतात्पर्यम् ॥ १२ ॥

एवं प्रश्नमुत्थाप्य तदुत्तरं वक्तुमाह ।

अत्रोतरम् ।

अत्रेति । अत्राज्ञानभूमिकाभ्यो ज्ञानभूम्यवतरणकारणप्रश्न इत्यर्थः, उत्तरं प्रतिवाक्यमुच्यत इति शेषः, तदेवाह ।

निष्कामा वा सकामा वा भक्तिर्विष्णोः शिवस्य वा ।
सप्रेम हृदये जाता मुमुक्षाकारणं हि तत् ॥ १३ ॥

निष्कामेति । विष्णोर्जगद्व्यापकस्य परमात्मनः साकारस्य विष्णुरूपस्य वा शिवस्य वा सुखरूपस्याहन्तादिसाक्षिणस्त्वंपदलक्ष्यस्य वा निष्कामा निर्गतः कामो हेतुर्यस्याः सा तथोक्ता तदभावपक्षद्योतको वाशब्दः, सकामा वा काम इच्छाविषयभोगानां तेन सहिता वा सप्रेम प्रेम स्नेहस्तेन सहितं यथा तथा हृदयेन्तःकरणे भक्तिर्भजनानुरागवती वृत्तिर्जातोत्पन्ना चेत्तत्तदेवेत्यर्थः, मुमुक्षाकारणं मुमुक्षायां हेतुर्भवति हि प्रसिद्धमेतन्नारदादिष्वित्यर्थः ॥ १३ ॥

स्थानभेदेनापि कृतस्य विशिष्टतपसो मोक्षेच्छाहेतुत्वमाह ।

कदाचिच्छुद्धभावेन गङ्गातीरे तपः कृतम् ।
तत्पुण्यपरिपाकेन मुमुक्षा जायते सताम् ॥ १४ ॥

कदाचिदिति । कदाचिदिह निष्कामत्वेनेह जन्मनि जन्मान्तरे वा शुद्धभावेन निष्कामतया गङ्गातीर उपलक्षणमेतत्कस्मिंश्चिद्गङ्गाद्युपलक्षिते पुण्यस्थाने तपः शीतोष्णादि सहिष्णुतया स्वस्ववर्णाश्रमोचितकर्मानुष्ठानं कृतमाचीर्णं तत्पुण्य-

परिपाकेन तस्य पुण्यस्य तपःपुण्यस्य परिपाकः फलदाने प्रवृत्तिस्तेन सतां शुद्धान्तःकरणानां मुमुक्षा मोक्षेच्छा जायत उत्पद्यते ॥ १४ ॥

कारणान्तराण्याह ।

विदुषां वीतरागाणामन्नपानादिसेवया ।
सङ्गत्या प्रणयेनापि मुमुक्षाऽऽकस्मिकी भवेत् ॥ १५॥

विदुषामिति । वीतरागाणां वीतो रागो विषयस्नेहो येषां तेषां विदुषां विवेकिनां ज्ञानिनामित्यर्थः, अन्नपानादिसेवयाऽद्यते तदन्नं यवगोधूमादिकं सिद्धमन्नं वा पीयते तत्पानं जलादिकं ते आदिनी येषां दर्शनसंभाषणादीनां ते तथोक्तास्तेषां सेवाङ्गीकारस्तया तेषामेव सङ्गत्या समागमेन प्रणयेनापि नमस्कारेण चाकस्मिक्यकस्माद्भवाऽऽकस्मिकी कारणाननुसन्धानपूर्विकेत्यर्थः, मुमुक्षा मोक्षविषयिणीच्छा भवेत्स्यात् ॥ १५ ॥

आकस्मिकमोक्षेच्छोत्पत्तौ गीतापि प्रमाणमस्तीत्याह ।

तदुक्तम् ।

तदिति । तदाकस्मिकमोक्षेच्छाजन्म गीतायां भगवद्गीतायामुक्तं कथितं, केन वाक्येनेत्याशङ्क्य तद्वाक्यं पठति ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ १६॥

मनुष्याणामिति । मनुष्याणामधीतवेदवेदाङ्गस्तदर्थज्ञः शमादिगुणवान्पापभीरुर्युवा दृढः सङ्कल्पितविषयप्राप्तिमान्बलवांश्चैतादृशस्य सप्तद्वीपवती पृथिवी राज्यं धनधान्यसमृद्धिमद्यदि स्यात्तर्हि स मनुष्य इत्युच्यते तादृशानां

मनुष्याणां सहस्रेषु सहस्रसङ्ख्येषु बहुसङ्ख्येषु मध्ये कश्चित्कोपि विरलः सिद्धये मुक्त्यर्थं यतति निष्कामकर्मादिविचारान्तेषु सम्यक्प्रवर्त्तते यततामपि तादृशयत्नं कुर्वेतामपि बहूनां मध्ये कश्चिद्विरलः सिद्धो मुक्तो भवति तादृशानां मध्ये कश्चिद्विरलो मामात्मानं यथार्थभूतं तत्त्वतस्तात्त्विकरूपेण वेत्ति जानाति अस्मिन्नर्थे श्रुतिरपि 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यन्न विद्युरि'ति, अन्यापि 'कश्चिद्धीरः प्रत्यमात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि'ति ॥ १६ ॥

वासिष्ठवाक्यमपि प्रमाणयितुमाह।

तथा च वासिष्ठे ।

तथाचेति। तथा च तथैव वासिष्ठे वासिष्ठनाम्नि ग्रन्थ उक्तमिति शेषः, कथितमित्यर्थः। केन वाक्येनेत्याशङ्कायां तद्वाक्यं पठति।

चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत् ।
अनेकजन्मनामन्ते विवेकी जायते पुमान् ॥१७॥

चलेति। चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवच्चलौ चञ्चलौ यावर्णवावर्णसा जलेन वातो गच्छतस्तावर्णवौ तरङ्गौ पृषोदरादित्वात्सलोपस्तयोर्युगं युग्मं तस्यच्छिद्रं मध्यवर्त्याकाशं तत्र स्थितो यः कूर्मः कमठस्तस्य कच्छपस्योभयपार्श्वे बहुकालं निरन्तरं तरङ्गकृतताडनेन विह्वलत्वे ग्रीवाप्रवेशो ग्रीवा कण्ठस्तदुपलक्षिततदाद्यङ्गप्रवेशो यथा जायते तद्वत्पुमान्पुरुषाऽनेकजन्मनामनन्तजन्ममरणोपलक्षितसुखदुःखानां स्पर्शेन खिन्नस्तदन्तःकरणबाह्यकरणानि स्वस्वविषयेभ्यो व्यावर्त्य विवेक्यात्मानात्मविवेकवाञ्जायते भवति ॥ १७ ॥

निष्कामत्वेन कृतानामुपास्तिसहितानां कर्मणामपि मोक्षहेतुभूतज्ञानेच्छाकारणत्वमाह।

सोपास्तीनां कर्मणां तु चित्तशुद्धिः फलं मतम्।
वेदनेच्छा वेदनं वा चित्रा सत्कर्मणां गतिः॥ १८॥

सोपास्तीनामिति। सोपास्तीनामुपासनासहितानां कर्मणां स्वस्ववर्णाश्रमोचितक्रियाणां तु अन्यफलेषु सत्स्वपि तद्विलक्षणं चित्तशुद्धिश्चित्तस्यान्तःकरणस्य शुद्धी रागादिमलविसर्जनमेव फलं मुख्यप्रयोजनं मतमिष्टं ज्ञेयम्, अन्तःकरणस्यातीव मलविसर्जने सति तेषामेव कर्मणां वेदनेच्छा वेदनं ज्ञानं तस्येच्छा स्पृहा जिज्ञासेत्यर्थः, तदेव फलं भवति, ततोप्यतिशयान्तःकरणशुद्धौ सत्यान्तेषामेव कर्मणां वेदनं वा ज्ञानमेव फलं भवति, ननु वन्धहेतूनां कर्मणां मुक्तिकारणं ज्ञानं कथं फलं स्यादित्याशङ्क्याह चित्रेति, सत्कर्मणां काम्यानां निष्कामानां वा सत्कर्मणां विध्युक्तकर्मणां गतिः फलं चित्राऽऽश्चर्यरूपास्ति कर्कट्यादिषु काम्यतपसोपि मुक्तिहेतुज्ञानलाभः श्रूयते वासिष्ठे, दाशूरेपि मौढ्यग्रस्तत्वेपि वह्न्याराधनेन तद्दत्तकदम्बवृक्षस्थित्या तत्रैव कर्म कृत्वान्तःकरणशुद्ध्या ज्ञानं जातमित्यादि च, तस्मादुपास्तयः कर्माण्यपि मुमुक्षाकारणानि भवन्तीत्यर्थः॥ १८॥

साम्प्रदायिकैर्वेदान्तेषु कर्मणोङ्गीकृतत्वादपि कर्मणो मुमुक्षाहेतुत्वं ज्ञेयमित्याशयेनाह।

वेदान्तैरपि जिज्ञासोस्तस्मात्कर्मोररी कृतम्।
श्रद्धा चित्तस्य शान्तिश्च दान्तिश्चोपरमस्तथा।
मुमुक्षा साधनानां हि संपत्प्रथमभूमिका॥ १९॥

वेदान्तैरपीति। यतो ज्ञानसाधनं कर्म तस्मात्कारणाद्वेदान्तैरपि उपनिषदादिभिर्ज्ञानप्रधानफलप्रतिपादकैरपि ग्रन्थैर्जि-

ज्ञासोर्ज्ञानेच्छोरन्तःकरणशुद्ध्या ज्ञानेच्छादार्ढ्याय कर्म स्व-स्ववर्णाश्रमोचितनित्यनैमित्तिकं प्रायश्चिताख्यमुररीकृतमङ्गीकृतमतोपि ज्ञानेच्छाहेतुत्वं कर्मणः सिद्धमिति भावः।

एवं मुमुक्षाकारणानि प्रदर्श्येदानीं तदारोहणाय तत्साधनभूतां सम्पदं प्रथममाह।

श्रद्धेति। श्रद्धा गुरुवेदान्तवाक्येषु विश्वासस्तथा चित्तस्यान्तःकरणस्य शान्तिर्निर्वासनत्वं च पुनर्दान्तिर्बाह्येन्द्रियाणां निग्रहः पुनरुपरमः सर्वविषयेषु विरसता तथा यद्वन्मुमुक्षाभूमिरुत्तरभूमीनां तथेयमपि मुमुक्षा साधनानां जिज्ञासाख्यभूमेः साधनानां कारणभूतानां सम्पत्प्राप्तिः प्रथमभूमिका जिज्ञासायाः प्रथमसाधनभूता तदारोहणार्थं वेदिका ज्ञेया, तुपदेनोक्तसर्वसाधनेभ्य एतस्या आवश्यकत्वं सूचितम् ॥ १९ ॥

ततोप्यन्तरङ्गमावश्यकं साधनमाह।

गुरूपसदनं पूर्वं कर्त्तव्यं हि मुमुक्षुणा।
गुरुमेवाभिगच्छेच्च विज्ञानार्थमिति श्रुतिः ॥ २० ॥

गुरूपसदनमिति। पूर्वं प्रथमं मुमुक्षुणा मोक्षेच्छुना गुरूपसदनं गुरोर्वेदान्तवक्तुरुपसदनं सेवकतया समीपस्थानं कर्त्तव्यङ्कार्यं हि श्रुतौ प्रसिद्धमेतत। तामेव श्रुतिमर्थतः पठति गुरुमिति, विज्ञानार्थं ज्ञानप्राप्त्यर्थं गुरुमुक्तलक्षणं दैशिकमेवेति तं विना ज्ञानं न स्यादिति सूचितम्, अभिगच्छेच्छरणं भूयादिति एवं श्रुतिरस्तीति शेषः ॥ २० ॥

एवं मुमुक्षारोहणे हेतूंस्तत्साधनान्युक्त्वेदानीं जिज्ञासाभूमिकारूढलक्षणनिरूपणेन जिज्ञासालक्षणानि वक्तुमाह।

## तल्लक्षणानि ।

तस्या जिज्ञासाया लक्षणानि चिह्नानि उच्यन्त इति शेषः । तान्येवाह नवभिः ।

मोक्ष एव ममास्त्वीश मास्तु संसारदर्शनम् ।
इति यः सुदृढो भावो मुमुक्षालक्षणं हि तत् ॥ २१ ॥

मोक्ष इति । हे ईश हे अन्तर्यामिन्मम मे मोक्षेच्छोर्मोक्ष एव मुक्तिरेव केवलमस्तु भवतु संसारदर्शनं संसारस्य संसारकारणस्याज्ञानस्य तत्कार्यस्य विक्षेपस्यापि दर्शनं प्रतीतिर्मास्तु मा भवतु इत्येवं प्रकारेण सुदृढोऽनवच्छिन्नो यो यत्प्रकारको भावोन्तःकरणप्रीतिः सोस्तु भवतु इति यत्प्रार्थनं तन्मुमुक्षालक्षणं मुमुक्षाया जिज्ञासाभूमेर्लक्षणं चिह्नं ज्ञेयम् ॥ २१ ॥

लक्षणान्तरमाह ।

पुण्यक्षेत्रेषु या बुद्धिः पुण्यतीर्थेषु या रुचिः ।
मोक्षधर्मेषु या श्रद्धा मुमुक्षाल० ॥ २२ ॥

पुण्यक्षेत्रेष्विति । पुण्यक्षेत्रेषु पुण्यानि पवित्राणि यानि क्षेत्राणि कुरुक्षेत्रादीनि तेषु या बुद्धिर्निश्चयविशिष्टान्तःकरणप्रीतिः, किञ्च पुण्यतीर्थेषु या रुचिः पुण्यानि पवित्राणि यानि तीर्थानि पुष्करादीनि तेषु या रुचि प्रीतिः, किञ्च मोक्षधर्मेषु मोक्षस्य मुक्तेर्ये साधनभूता धर्मा निष्कामधर्मा गुरुसेवनादिविवेकान्ता वा तेषु श्रद्धा विश्वासो या प्रसिद्धा तद्धि तदपि मुमुक्षालक्षणं ज्ञेयम् ॥ २२ ॥

अथान्यदप्याह ।

यतः कुतश्चिदानीय ज्ञानशास्त्राण्यवेक्षते ।

चिन्तयंस्तस्य तात्पर्यं मुमुक्षा० ॥ २३ ॥

यत इति । यतः कुतश्चिद्यत्र कुत्रापि मिलितानि ततस्ततोपि ज्ञानशास्त्राणि वेदान्तशास्त्रगतग्रन्थानानीय संगृह्यावेक्षतेवलोकयति तस्य ग्रन्थस्य तात्पर्यमर्थं चिन्तयन्विचारयन्सन्तिष्ठति तदेतद्धि प्रसिद्धं मुमुक्षालक्षणं जिज्ञासाभूमिकायाश्चिह्नं ज्ञेयम् ॥ २३ ॥

अन्यान्यपि लक्षणान्याह ।

महतापि प्रयत्नेन कुर्यात्पण्डितसङ्गतिम् ।

संस्थापयित्वा मूर्धानं तेषां चरणपङ्कजे ॥ २४ ॥

महतेति । तेषां विदुषां चरणपङ्कजे चरणोऽङ्घ्रिरेव पङ्कजं कमलं तस्मिन् पङ्कजपदेन यथा भ्रमरः कमल आसक्तस्तथायं मुमुक्षुर्गुरुचरण आसक्तो भवेदिति सूचितमत्र मूर्धानं शिरः संस्थापयित्वा समर्प्य महतापि अखण्डेनैव प्रयत्नेन पौरुषेण विद्वानविगय्य प्रयत्नः कार्य इति विशेयः, पण्डितसङ्गतिं पण्डितानां विवेकिनां सङ्गतिं सह वासं कुर्यात्कर्तव्यो मुमुक्षूणां सर्वदैव गुरुसेवा विहितेति भावः ॥ २४ ॥

किञ्च ।

प्रश्नान्मनोगतान्पृच्छेत्स्वाज्ञानं च प्रकाशयेत् ।

तेषामुत्तरवाक्यानां तात्पर्यं हृदि भावयेत् ॥२५॥

प्रश्नानिति । मनोगतान्मनसि स्थितान् प्रश्नान्प्रष्टव्यार्थान्पृच्छेत्कुर्यादित्यर्थः, च पुनः स्वाज्ञानं स्वस्यात्मनोऽज्ञानं प्रकाशयेद्विवेकिनामग्रे प्रकटयेत्ततस्तेषां विवेकिनामुत्तरवाक्यानां प्रतिवाक्यानां तात्पर्यमर्थं हृदि अन्तःकरणे भावयेद्-

१ आशयः ।

विचारयेदिदमपि मुमुक्षालक्षणं ज्ञेयम् ॥ २५ ॥

अन्यच्च ।

नाधर्मो रोचते यस्य यस्य धर्मे सदा रुचिः ।
काम्यधर्मे न च श्रद्धा मुमुक्षालक्षणं हि तत्॥२६॥

नेति । यस्य पुरुषस्याऽधर्मोऽविहिताचरणरूपो न रोचते न प्रियो भवति, किञ्च यस्य पुरुषस्य धर्मे श्रुतिस्मृत्युदिताचारलक्षणे सदा सर्वदा सम्पद्यापदि च रुचिः प्रीतिरस्ति, किञ्च काम्यधर्मे ऐहिकपारलौकिकविषयसाधनभूते श्रुतिस्मृत्युदिताचारे न च नैव श्रद्धा विश्वासोऽनेनैवाहं सुखीकृतार्थश्च स्यामिति मतिरित्यर्थः, तदेतद्धि प्रसिद्धं मुमुक्षालक्षणं ज्ञेयम् ॥२६॥

अन्यच्च ।

रागद्वेषमदक्रोधलोभमत्सरवृत्तिषु ।
स्वभावाद्ग्लानिमाप्नोति मुमुक्षालक्षणं हि तत् ॥२७॥

रागेति । रागद्वेषमदक्रोधलोभमत्सरवृत्तिषु रागः स्त्र्यादिषु स्नेहो द्वेषोस्तेष्वेव प्रतिकूलेष्वप्रीतिर्मदो देहाद्यहन्तया स्वोत्कृष्टत्वबुद्धिः क्रोधो रोषो लोभस्तृष्णा मत्सरः परोत्कर्षासहनमेतासु वृत्तिषु स्वभावात्सहजतयैव न तु दोषदृष्ट्या ग्लानिं वैरस्यमाप्नोति याति तदेतद्धि प्रसिद्धं मुमुक्षालक्षणं ज्ञेयम् ॥ २७ ॥

एतल्लक्षणबोधने शृङ्गारश्लोकं वक्तुमाह ।

तत्र श्लोकः ।

तत्रेति । तत्र मुमुक्षालक्षणनिरूपणे श्लोकोऽस्तीति शेषः, जातित्वादेकवचनं श्लोकौ स्त इत्यर्थः । तमेवाह ।

प्रेक्षितुं न विजानाति प्रेक्षणे कुरुते मनः ।
लज्जां जहाति नैवेयं वयःसन्धिरयं किल ॥ २८ ॥

प्रेक्षितुमिति । इयं सन्निकृष्टा पुरो दृश्यमाना काचिन्नायिका पतिं स्वेष्टं भर्तारं प्रेक्षितुं द्रष्टुं न विजानाति न वेत्ति मनश्च सङ्कल्पविकल्परूपा वृत्तिः प्रेक्षणे अवलोकने कुरुते प्रेरयति मनोभिलषितपतिदर्शने दृशोऽप्रवृत्तौ हेतुमाह लज्जामिति, लज्जां त्रपां नैव जहाति नैव त्यजति तदेतल्लक्षणेन लक्षितोऽयं पुरो दृश्यमाननायिकायामारूढो वयःसन्धिर्बाल्ययौवनाख्यवयसोः सन्धिर्मध्यं किलेति निश्चयेन ज्ञातव्यः, इदमेव लक्षणं मुमुक्षारूढबुद्धौ योज्यं, तथाहि प्रेक्षितुं वेदान्तशास्त्रं तत्प्रतिपाद्यमर्थं जीवब्रह्मैक्यरूपं द्रष्टुं न विजानाति न वेत्ति मूढत्वाल्लज्जालुत्वाल्लोकहास्यादिशङ्कया वा न प्रवर्त्तत इत्यर्थः, मनः सङ्कल्पविकल्परूपामन्तःकरणवृत्तिं प्रेक्षणे वेदान्तावलोकने तद्वक्तृगुरुदर्शनेपि कुरुते प्रेरयति, तर्हि कुतो न प्रवर्त्तते तत्रेत्यत आह लज्जामिति, इयं मुमुक्षुमतिः प्रकृता लज्जां त्रपां नैव जहाति नैव त्यजति तदेतल्लक्षणवानयं दृश्यमानो वयःसन्धिरज्ञानज्ञानलक्षितकालयोः सन्धिर्मध्यं किलेति निश्चयेन ज्ञेयः ॥ २८ ॥

तर्हि स सन्धावेव स्थिरो भवतूत्तरत्र प्रवृत्तः स्यान्नवेति सन्दिहानं प्रत्याह ।

चलिता स्वामिगेहाय वधूः खिद्यति रोदिति ।
इदमत्र समाधानं पदमग्रे दधाति यत् ॥ २९ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे प्रथमभूमिकानिर्णयः ॥ २ ॥

चलितेति । वयःसन्धिमती स्त्री 'वधूर्जाया स्नुषा स्त्री

चे'ति कोशः, स्वामिगेहाय स्वामिनः पतेर्गेहं गृहं तद्गन्तुं चलिता पितृगृहाद्बहिर्निःसृता सती खिद्यति खिन्ना भवति रोदिति अश्रुपातं करोति यदा तदेत्यध्याहार्यं तदाग्रे चलति वा नेति सन्देहेऽत्रास्मिन्संशये यत्पदमङ्घ्रिमग्रे पुरतो दधाति धत्ते तदिदं प्रत्यक्षं समाधानं प्रत्युत्तरं सन्देहनिवर्त्तकत्वाज्ज्ञेयं, तथा वधूर्वधयति बन्धयति आत्मानं सा वधूर्बुद्धिः स्वामिगेहाय स्वामिनो जीवस्य गेहं निवासस्थानं निर्विकारमात्मरूपं गन्तुं चलिता पितृगृहात्पालकत्वात्पिता मोहस्तस्य गेहं कार्यरूपं देहत्रयं तत्कारणं महामोहश्च तस्माच्चलिता चलायमाना सती खिद्यति पूर्वस्नेहसंस्कारात्खिन्ना भवति रोदिति विरक्ततया रजःप्रधानां रागरूपां वृत्तिं च स्वस्यास्त्यजति अत्रोत्तरत्र ज्ञानभूमिकासु आरोहति वा नवेति सन्देहे पदं यत्पद्यतेनेनेति पदं स्थानं स्थितिमित्यर्थः, अग्रे तूतरभूमिकासु क्रमेण दधाति धरति तदिदं प्रत्यक्षं समाधानं प्रत्युत्तरं सन्देहनिवर्त्तकं ज्ञेयम्॥२९॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिभेदभास्करार्थप्रकाशान्तर्गतज्ञानभूमिकार्थप्रकाशे प्रथमभूमिकार्थप्रकाशो द्वितीयः ॥ २ ॥

---

एवं सविस्तरां सलक्षणां प्रथमभूमिकां निरूप्येदानीं चतुस्त्रिंशच्छ्लोकैर्द्वितीयां निरूपयितुमाह ।

## अथ द्वितीया ।

अथेति । अथ जिज्ञासानिरूपणानन्तरं द्वितीया विचाराख्या भूमिका निरूप्यत इति शेष, तत्र तावद्द्वितीयभूमिकालक्षणान्याह पञ्चभिः ।

प्रकृतेर्लक्षणं त्वेतदिदं विकृतिलक्षणम् ।
स्वरूपं पुरुषस्येदं तद्विचारस्य लक्षणम् ॥ १ ॥

प्रकृतेर्गुणसाम्यावस्थारूपायाः कारणभूतायाः प्रकृत्याख्याया लक्षणं लक्षकं चिन्हमेतदिदमिति विकृतिलक्षणात्पुरुषलक्षणाच्च विविच्यैतदिति प्रत्यक्षतयानुभवति, तथा विकृतिलक्षणं विकृतेः कार्यवर्गस्य लक्षणं चिह्नमपीदमेतदिति प्रकृतिलक्षणात्पुरुषलक्षणाच्च विविच्यैतदिति प्रत्यक्षतयानुभवनं, तथा पुरुषस्यासङ्गोदासीनस्यात्मनः स्वरूपं स्वेनात्मना रूप्यते प्रकाशासङ्गरूपं चिन्हमिदमेतदिति प्रकृतिलक्षणाद्विकृतिलक्षणाच्च विविच्य साक्षात्करणं तदुक्तं विचारस्य लक्षणं चिन्हं ज्ञेयम् ॥१॥

अन्यदप्याह ।

इदं सत्यमिदं मिथ्या त्विदं चेत्यमियं हि चित् ।
इदं ब्रह्म त्वियं माया तद्विचारस्य लक्षणम् ॥ २ ॥

इदमिति । सत्यं कालत्रयाबाधमात्मस्वरूपमिदमिति सदसती विविच्य सतो विलक्षणत्वेन साक्षात्करणं, तथा मिथ्या प्रकृतिविकृतिजातं सतो विविच्येदमेतदिति साक्षादसत्त्वेनानुभवनं, तथा चेत्यं चेतनाविषयजातं प्रकृतिविकृतिरूपमिदमिति चेतनतो विविच्येदमिति साक्षात्करणं, चिद्धि चेतनापि असङ्कूटस्थस्वरूपेयमेषेति चेत्यादसद्रूपाद्विविच्य विलक्षणत्वेनानुसन्धानं, तथा ब्रह्म देशकालवस्तुभिरपरिच्छिन्नं सच्चिदानन्दलक्षणमिदमेतदिति साक्षात्करणं, तथेयं माया माया तु अघटितघटनासमर्था शक्तिरपीयमेषेति ब्रह्मतो विविच्य साक्षादनुभवनं, तदेतद्विचारस्य लक्षणं ज्ञेयमिति पूर्ववत् ॥ २ ॥

किञ्च।

कस्मिन्निदं कुतश्चेदं किमिदं केन वा कृतम्।
कथमेतद्विलीयते तद्विचारस्य लक्षणम् ॥ ३ ॥

कस्मिन्निति। इदं दृश्यं कार्यकारणजातं कस्मिन्नाधारेऽस्ति सति वाऽसति, नाद्यः सदसतोराधाराधेयत्वायोगाद्, न हि खवृक्षस्य व्यावहारिकसत्त्वमाधारं दृष्टं श्रुतं वोपलभ्यते, नचासति असतो निरात्मकस्य व्यावहारिकसदाधारत्वायोगादतो जगदिदं निराधारकत्वेन दृश्यमानमपि मिथ्यैवेति निश्चयः, तथेदं दृश्यं कुतः कारणादुत्पन्नं किं सत उतासतः, न तावदाद्योऽसतो दृश्यस्य सत्कार्यत्वासम्भवाद्, नापि द्वितीयोऽसतः शून्यात्मकस्य व्यावहारिकसत्त्वेन प्रतीयमानस्य दृश्यस्य कारणत्वायोगात्, किञ्च जगतोऽसत्कार्यत्वे त्वसदसदिति प्रतीतिः स्याद्, न हि जगदसदसदिति प्रतीयतेऽतो जगतोऽसत्कार्यत्वं नेति निश्चयः, तथा किमिदमिदं दृश्यं किं सदुतासद्, न सदुत्पत्तिलयवत्त्वात्, सतो हि उत्पत्तिलयवत्त्वासम्भवाच्च, यतः श्रुतिरप्यसत्त्वं वदति 'अतोन्यदार्त्तमि'ति, अतश्चापवदति श्रुतिः, 'नेह नानास्ति किञ्चने'ति, अतो न सन्नाप्यसदसतः शशशृङ्गादेरुत्पत्त्यादिमत्त्वस्यादृष्टत्वाद् जगतस्तूत्पत्तिस्थितिलया दृश्यन्ते सत्सदितिप्रतीतिविषयं चेदमतो नासत्, सदसत्त्वपक्षस्य विरुद्धत्वान्नोभयत्वमिति निश्चयः, तथा केन वा कर्त्रा कृतमिदं दृश्यजातमुत्पादितं, तथाहि—इदं सत्कर्तृकमुतासत्कर्तृकं, न तावत्सत्कर्तृकमसतः कार्यस्य सत्कर्तृकत्वायोगाद् न हि शशशृङ्गधनुषः सद्धनुष्कारकर्तृकत्वं दृष्टं नाप्यसत्कर्तृकं व्यावहारिकसत्प्रतीतिविषयस्य जगतोऽसत्कर्तृकत्वेऽसदसदिति प्रतीतिविषयत्वसम्भवाद् न च दृश्यमसदसदिति प्रतीयतेऽतो ना-

सत्कर्तृकत्वं जगत इति निश्चयः, तदिदं जगत्कथं केनोपायेन विलीयते विनश्येत कर्मणोत योगेनऽथवा ज्ञानेन, न तावत्कर्मणा मिथ्याभुतस्य जगतः कर्मनाश्यत्वायोगान्न हि रज्जुसर्पो दण्डादिताडनरूपकर्मणा विनाशितो दृष्टोऽतो न कर्मनाश्यं जगद्, न तावद्योगेन योगस्यापि कर्मसहायत्वेन द्वैतविनाशकत्वासम्भवात् क्वचिद्योगेन विनष्टत्वेन प्रतीतावपि बीजसत्वाच्च तस्मात्परिशेषाज्ज्ञानेनैव नश्येतेति निश्चयः, अथवेदं दृश्यं सदाधारकं रज्जुसर्पादेरज्ज्वाधारत्ववत, तथेदं दृश्यं सदुत्पन्नं रज्जूत्पन्नरज्जुसर्पवत, तथेदं सदुसतादित्येवं विचार्यमाण उत्पत्यादिमत्त्वेनासदेवेति निश्चयः, तथाऽसत्कर्तृकत्वेऽसन्तासत्त्वात्सत्कर्तृकमेवेन्द्रजालिककर्तृकेन्द्रजालवद्, इदं कथं विलीयेतेति विचार्यमाणे ज्ञानेनैवेति निश्चयस्तदेतदिति व्याख्यातम् ॥३॥

किञ्च ।

> क ईश्वरश्च को जीवः का मुक्तिः किन्तु बन्धनम् ।
> किं द्वैतं कथमद्वैतं तद्विचारस्य लक्षणम् ॥ ४ ॥

क इति । ईशनादिशक्तिमानीश्वरः क इति सन्दिह्यविचार्य चेशनादिशक्तिमान्सर्वज्ञः सर्वकरणान्तर्यामी विद्योपाधिको निमित्तकारणमित्यादिलक्षणैर्लक्षितः पुरुषविशेप इति निश्चयः, जीवश्च क इति संदिह्याविद्योपाधिकः किञ्चिज्ज्ञादिलक्षणवान्कूटस्थसाक्षिचिदात्मसहितो बुद्धिस्थश्चिदाभासो जीव इति निश्चयः, तस्य च का मुक्तिर्मोक्षः कः किंस्वरूपमिति सन्दिह्य कूटस्थरूपेण ब्रह्माभिन्नं यथा भवति तथा स्थितिरेव मुक्तिरिति निश्चयः, तथा बन्धनं तु बन्धनमपि किं किंरूपमेवं सन्दिह्योक्तात्मरूपविपर्ययेणावस्थानं बन्धनमिति निश्चयः, तथा

किं द्वैतं द्वैतं किंरूपमिति सन्दिह्य पृथक्सत्त्वाभावादसद्रूपमिति निश्चयः, तथाऽद्वैतं द्वैतरहितमात्मस्वरूपं कथं केन प्रकारेणास्तीति सन्दिह्य सर्वदा द्वैतानुत्पत्तिमत्त्वादसङ्गत्वाच्चात्मरूपं द्वैतास्पृष्टमिति निश्चयः, तदेतद्विचारस्य लक्षणं ज्ञेयम् ॥ ४ ॥

नित्यानित्यविवेकेन नित्यवस्तुनि वस्तुता ।
अनित्ये तुच्छताबुद्धिस्तद्विचारस्य लक्षणम् ॥५॥

नित्येति । नित्यानित्यविवेकेन नित्यमात्मस्वरूपमनित्यमनात्मस्वरूपं प्रकृतिविकृत्यादि तयोर्विवेको विवेचनं तेन नित्यवस्तुनि नित्यं त्रिकालाबाध्यं यद्वस्तु आत्मस्वरूपं तस्मिन् वस्तुता सत्यत्वप्रतीतिः, ततोऽनित्येऽनात्मनि मायायां तत्कार्ये जगति च तुच्छताबुद्धिस्तुच्छत्वमुदासीनविषयत्वं तस्य बुद्धिर्निश्चयः, तदेतद्विचारस्य लक्षणं ज्ञेयं पूर्वमेव व्याख्यातम् ॥ ५ ॥

प्रौढविचारलक्षणमाह ।

एवमभ्यासयोगेन विदुषां मनसा सह ।
जायते ब्रह्मवादो यः सा तु प्रौढविचारणा ॥ ६ ॥

एवमिति । विदुषां विवेकिनामेवमुक्तरीत्याऽभ्यासयोगेनाभ्यासः पुनः पुनरावर्त्तनं तस्य योगः सम्बन्धस्तेन कृत्वा मनसा सहान्तःकरणेन समं यो ब्रह्मवादो देशकालवस्तुकृतपरिच्छेदशून्यं ब्रह्म तस्मिन्वादः पश्यंत्याख्यवाचा सम्भाषणं जायते भवति सा तु सा च प्रौढविचारणा प्रौढा दृढा विचारणा विचारो ज्ञेया ॥ ६ ॥

तामेव शिष्यबुद्धिरोहायोदाहरति स्वयमित्यादिभिः केवलं ब्रह्म तिष्ठतीत्यन्तैरष्टाविंशतिभिः श्लोकैः ।

स्वयं प्रकाशरूपोऽयं पृष्टः कोसीति संवदेत्।
अहमज्ञो न जानामि मामहं कोहमित्युत ॥ ७ ॥

स्वयमिति। अयं जीवः स्वयं प्रकाशरूपो वस्तुतः स्वतोऽन्यप्रकाशनिरपेक्षतया प्रकाशरूपः प्रकाश एव रूपं मूर्त्तिर्यस्य स तथोक्तोपि केन चिज्ज्ञानिना प्रसङ्गेन त्वं कोसीति त्वं किंरूपोसीत्येवं पृष्ट आक्षिप्तः सन्मामात्मानमहं जीवोऽहमहमित्येवं सर्वदा व्याप्रियमाणः कः किंरूपः किं देहरूप उतेन्द्रियरूपः किं वा प्राणरूपोऽथवा मनोरूपो किंवा बुद्धिरूपः किं वाहङ्काररूपः किं वाज्ञानरूपः, एवं निश्चयेन न जानामीत्यत हेतोरहमज्ञोऽज्ञानमेवेति सम्वदेत्प्रतिवचनन्दद्यात् ॥ ७ ॥

तत्र प्रतिवचने विचारो यथा कर्तव्यस्तथाह।

आत्मभानादृते नाहमज्ञ इत्युक्तिसम्भवः।
आत्मानमेव नो वेत्ति तर्ह्ययं जड एव हि ॥ ८ ॥

आत्मभानादिति। देहादिनिरासक्रमेण बुद्धिपर्यन्ते सर्वस्मिन्निरस्तेप्यात्मज्ञानाभावेनाहमज्ञ इत्युक्तावात्मभानादृतेऽहङ्कारारोपाधिष्ठानमात्मा तस्य भानात्प्रकाशनादृत आत्मभानं वर्जयित्वाऽहमज्ञ आत्मन्यारोपितस्याज्ञानविशिष्टस्याहमः स्फूर्तिर्न स्यात्तां विना च तद्विषयकाज्ञोहमित्युक्तिभाषणं तस्याः सम्भवः सम्भावना न भवतीत्यर्थः, 'यन्मनसा ध्यायति तद्वाचा वदती'ति श्रुत्या वचनविषयज्ञानं विना वाचकशब्दानुच्चारस्य प्रतिपादितत्वादिति भावः, ननु केवलात्मज्ञानाभावेपि अज्ञानभानेन तद्विशिष्टाहंपदवाच्यात्मज्ञानेन वाज्ञोहमित्येवं प्रतीतिसम्भवात्तया चाज्ञोहमित्युक्तिः सम्भवेदित्याशङ्क्यात्माभानेऽङ्गीकृतेपि तेनात्मनो जडत्वेन घटादिवदज्ञाहंभावस्यापि प्रकाश-

कत्वासम्भवात्प्रकाशाभाव इत्याशयेनाहात्मानमिति, आत्मानमेवाज्ञानमहङ्कारश्च त्यक्त्वा केवलमात्मानं नो वेत्ति न जानातीति चेत्तर्हि तस्मिन्पक्षे हि अपि अयमात्मा जड एवाभानरूप एव केवलं भवेद्धि प्रसिद्धमेवेदं स्वतोऽभानरूपेषु घटादिषु ॥८॥

इष्टापत्तिर्जगदभानेनेत्याशङ्क्य जगदान्ध्यप्रसङ्गेन दूषयति।

जडत्वाच्च घटादीनि कथमेव प्रकाशयेत्।
तस्मादयं स्वमात्मानं जानात्येवेति निर्णयः ॥ ९॥

जडत्वादिति। एवं चात्मन एवाभानेऽङ्गीकृते सति जडत्वादभानरूपत्वादात्मा घटादीनि घटो जडत्वेन प्रत्यक्षः कुम्भ आदिः प्रथमो येषां पटादिवस्तूनां तानि वस्तूनि कथं केन प्रकारेण प्रकाशयेत्प्रकाशितानि कुर्यान्न कथमपीत्यर्थः, जडस्य घटादेः पटादिप्रकाशकत्वाभाववत्त्वस्य प्रात्यक्ष्यात्तद्वदात्मनोप्यभानरूपत्वेन जडत्वे जगदान्ध्यप्रसङ्ग इति भावः, अतो भानमेव सर्वदात्मनोऽङ्गीकार्यमिति सिद्धान्तयति तस्मादिति, तस्मात्कारणादयं जीवः स्वं स्वीयमात्मानं स्वरूपं जानात्येव वेत्त्येवेत्येवं निश्चयो निर्णयोऽस्तीत्येवं सिद्धान्तः ॥ ९ ॥

ननु सर्वदाऽऽत्मभाने सिद्धेऽहमज्ञ इत्युक्तिवाच्यस्याहमज्ञ इति स्फुरणस्य कागतिरित्याशङ्क्याह।

अथात्मानमसौ वेत्ति परन्तु न हि वेत्ति यत्।
विशेषं स्वगतं तस्मात्स्वरूपज्ञानवानयम् ॥१०॥

अथेति। अथातः कारणादसावात्माऽऽत्मानं स्वस्वरूपं वेत्ति जानाति परन्तु तथापि न वेत्ति न जानातीति हि प्रसिद्धं यत्तत्स्वगतं स्वस्मिन्नेव स्थितं विशेषं स्वयं प्रकाशचिद्रूपापेक्षया परप्रकाश्याचिद्रूपत्वाद्विशेषरूपमज्ञानमस्ति तस्मात्तेन

कारणेनायमात्मा स्वरूपाज्ञानवान्स्वस्यात्मनो रूपमसङ्गाद्वितीयस्वप्रकाशचिन्मात्रं तस्याज्ञानं तद्वान्भवति स्वस्मिन्नज्ञानमारोप्याज्ञानवानिव प्रतीयत इति भावः ॥ १० ॥

अत्र ब्रूमो विशेषोत्र नास्त्यवाच्ये तु चिद्घने ।
निर्विशेषस्वरूपेऽत्र विशेषं यदि वेत्ति सः ॥ ११ ॥

अत्रेति । अत्रात्मन्यज्ञानस्फूर्तौ ब्रूमः कथयामोऽत्रात्मनि चिद्घने सघनचिन्मात्रस्वरूपेऽवाच्ये वाचामविषये 'यतो वाचो निवर्त्तन्ते, यद्वाचा नभ्युदितमि'त्यादिश्रुतिभ्यः, कल्पयितुरभावात्कल्पितस्यावास्तवत्वाच्च विशेषः कल्पिताज्ञानस्वरूपो नास्ति न विद्यते तुपदेनात्यन्तासत्वं सूचितमज्ञानस्य, नन्वज्ञानस्य कल्पितत्वं कथं निश्चेयं तत्राह निर्विशेषेति, निर्विशेषस्वरूपे निःशेषं गतो व्यावृत्तो विशेषोऽज्ञानस्वरूपो यस्मात्स तथोक्तः स एव स्वमसाधारणं रूपमाकृतिर्यस्य तस्मिन्नत्रात्मनि स आत्मा विशेषमज्ञानस्वरूपं यदि यहि वेत्ति जानाति तर्हि॥११॥

वेद्यत्वात्कल्पितः स्वस्मिंस्तेन किं तद्विचारणैः ।
निर्विशेषतया ज्ञातो निर्विशेषस्वरूपवान् ॥ १२ ॥

वेद्यत्वादिति । स विशेषः स्वस्मिन्नात्मनि अतस्मिंस्तद्बुद्धिरिति तल्लक्षणसत्त्वात्कल्पित आरोपितस्तत्र हेतुर्वेद्यत्वाद्वेदनविषयत्वात्तथा चायं प्रयोगः, अयं विशेष आरोपित आधारात्पृथगसत्त्वे सति वेदनाविषयत्वान्मानोरथिकपुरवद्, अयमात्माऽनारोपितो विद्यमानत्वे सति अवेद्यत्वान्मनोरथकर्तृवत्, तेनाज्ञानस्य कल्पितत्वेन तद्विचारणैस्तस्य मिथ्याभूतस्य विशेषस्य विचारणैः किमस्य कारणं किं चास्य स्वरूपं किं चास्य कार्यमित्यादिविचारैः किं किं फलं न किमपीत्यर्थः,

तत्र बाधदृष्टिरेव कर्त्तव्या न विचारः कर्त्तव्य इति भावः,

नन्नु निर्विशेषात्मज्ञानमेव विचारस्य फलमस्तु तत्राह

निर्विशेषतयेति, यदि यर्हि निर्विशेषस्वरूपवान्निर्गतो विशेषोऽज्ञानरूपो यस्मात्तत्स्वरूपं यस्यासाधारणं रूपं तदेवास्यास्तीति तद्वान्सदैव निवृत्ताविद्य इत्यर्थः, आत्मा निर्विशेषतया निवृत्ताज्ञानरूपत्वेन ज्ञात उक्तविचारेण साक्षात्कृतश्चेत् ॥ १२ ॥

पूर्णबोधस्तर्हि जातो जिज्ञासैव निरर्थिका ।

किञ्जातीयः किंगुणोऽसौ किञ्चेष्टो नाम तस्य किम्॥ १३॥

तर्हि तदानीमेव पूर्णबोधः परिपूर्णं ज्ञानं जात उत्पन्नस्ततश्च जिज्ञासा निर्विशेषात्मज्ञानेच्छा यया विशेषविचारोऽपेक्ष्यते सैव निरर्थिका निष्फलैवातो विशेषविचारो निरर्थक एवेति भावः।

ननु निर्विशेषात्मज्ञानमात्मनोऽस्ति नवेति शङ्कायां तत्सादृशमात्मभानं स्पष्टीकर्तुं तज्जात्यादिप्रश्नमुत्थापयति ।

किं जातीय इति, असावात्मा किंजातीयः का जातिर्यस्यात्मनः स तथोक्त आत्मनः का जातिरित्यर्थः, तथाऽसावात्मा किंगुणः के गुणा यस्य स तथोक्त आत्मनो गुणाश्च क इति द्वितीयः प्रश्नः, तथाऽसावात्मा किंचेष्टः काश्चेष्टा यस्य स तथोक्त आत्मनश्चेष्टाश्च का इति तृतीयः प्रश्नः, तथा तस्यात्मनो नामाभिधानं किमिति चतुर्थः प्रश्नः, ।

किं प्रकारः किमाकारः किंविचारश्च पृच्छसि ।

न जातिर्निर्गुणस्यास्य निश्चेष्टो नाम तस्य न ॥१४॥

तथा किंप्रकारोऽसावात्मा किंप्रकारः कः प्रकार प्रकृतिः स्वभावो यस्य स तथोक्त आत्मनः का प्रकृतिरिति पञ्चमः, तथा किमाकारः क आकार आकृतिर्यस्य स तथोक्त आत्मन आका-

रश्च क इति षष्ठः प्रश्नः, तथा किंविकारश्च को विकारो विकृतिर्यस्य स तथोक्त आत्मनः कार्यमपि किमिति सप्तमः प्रश्नः, एवं यदि त्वं पृच्छसि प्रश्नान्करोषि यदि तर्हि त्वं शृण्विति शेषः।

अस्य निर्गुणस्य निर्गता निवृत्ता गुणा यस्मात्स तथोक्तस्तस्यात एवास्यात्मनो जातिर्नित्यमेकमनेकवृत्तिसामान्यमित्येवंलक्षणलक्षिता जातिर्न न विद्यते गुणवद्वस्तुनिष्ठत्वाज्जातेरात्मनि गुणस्य जातेश्चाभाव इत्याशयः, तथा गुणजातिरहितत्वादेव निश्चेष्टो निर्गता निवृत्ता चेष्टा व्यापारो यस्मात्स तथोक्तोऽत एव तस्यात्मनो नामाभिधानं न नास्ति नाम्नः क्रियावद्वस्तुनिष्ठत्वादात्मनि क्रियाभावेन नाम्नोप्यभाव इति भावः॥१४॥

निष्प्रकारो निराकारो निर्विकारः स निश्चितः।
सच्चिदानन्दरूपेण जिज्ञास्य इति चेद्वदेत् ॥१५॥

निष्प्रकार इति। गुणजातिक्रियानामरहितत्वादेवात्मा स निष्प्रकारो निर्गतः प्रकारः प्रक्रिया यस्मात्स तथोक्तोऽस्ति अत एव निराकार आकृतिहीनोऽत एव निर्विकारो विकाररहितः स आत्मा निश्चित निर्णीत उपनिषत्स्विवत्यर्थः, अतो जात्याद्यभावादात्मनस्तद्वैशिष्ट्याभाववत्त्वं तेन च तद्विशिष्टात्मज्ञानाभावेपि केवलात्मज्ञानस्य विद्यमानत्वेन जिज्ञासाया नैरर्थक्यं सिद्धमिति भावः, ननु सामान्येनात्मनि ज्ञातेपि सच्चिदानन्दलक्षणैर्ज्ञातत्वाभावाज्जिज्ञासायाः सार्थक्यमस्तु इति प्रश्नमुत्थापयति सदिति, आत्मा सच्चिदानन्दरूपेण सत्कालत्रयाऽबाध्यं चिज्ज्ञानरूपमानन्दः सुखमेतत्त्रयमभिन्नं स्वरूपं यस्य तेन लक्षणेन जिज्ञास्यो ज्ञानेच्छाविषयः कर्त्तव्यः, एवं च जिज्ञासायाः सार्थकतेति चेद्वदेद्ब्रूयाच्चेत्तर्हि ॥ १५ ॥

सच्चिदानन्दरूपेण ज्ञात एवायमेव हि।

अस्य विवरणम्।

अयमात्मा स्वमात्मानं सद्रूपेण न वेत्ति किम् ॥१६॥

सच्चिदानन्दरूपेणेति। अयमात्मा सच्चिदानन्दरूपेण सद्विद्यमानत्वं चिज्ज्ञानमानन्दः सुखमेतद्रूपमाकारो यस्य स तथोक्तस्तेन रूपेण ज्ञात एवानुभूत एव हीति निश्चयः।
आत्मनः सच्चिदानन्दरूपत्वेन ज्ञानसत्वमेव स्पष्टीकर्त्तुं प्रतिजानीते।
अस्येति, अस्य प्रतिज्ञातार्थस्य विवरणं विस्तरः क्रियत इति शेषः, तदेव निरूपयति अयमिति, हे शिष्य अयं प्रत्यगात्मा स्वीयमात्मानं स्वरूपं सद्रूपेण विद्यमानरूपत्वेन न वेत्ति किं न जानाति किमिति प्रश्नः सिद्धान्तिनः ॥ १६ ॥

नेति चेत्तत्र पृच्छति सिद्धान्ती।

अहमस्मीति जानाति नाहमस्मीति तद्वद।

अहमस्मीति जानाति पश्चाद्विज्ञेय आत्मनः ॥१७॥

धर्मे चार्थे च कामे च मोक्षे च यतते स्वयम्।

तस्मात्सद्रूपतायां तु नास्त्येवाज्ञानमात्मनः ॥१८॥

अहमिति। हे शिष्य अहं सामान्याहन्त्वावच्छिन्नः प्रत्यगात्माऽस्मि विद्यमान इत्येवं जानाति वेत्ति वा नाहमस्मीति अहमविद्यमान एवेत्येवं जानाति तत्त्वं पृष्टं वद ब्रूहि एतत्पृष्टं विचार्य निश्चित्य ब्रूहीत्यर्थः, विचार्यमाणे च किं निश्चीयते तदाह धर्म इति, पूर्वं प्रथममहमात्माऽस्मि विद्यमान इत्येवं वेत्ति जानाति पश्चादनन्तरमात्मनः स्वस्य विज्ञेय इदन्तया स्फूर्त्ति-

विषये धर्मे श्रुतिस्मृत्युदिते स्ववर्णाश्रमोचिते परलोकसाधनभूते कर्मणि च पुनरर्थे द्रव्यादिसाधनभूते नौसादौ च पुनः काम इन्द्रियभोगजन्यसुखसाधने विवाहादिकर्मणि च पुनर्मोक्षे मुक्तिसाधनभूते गुरुसेवाश्रवणादिकर्मणि आत्मा स्वयं यतते यत्नं करोति आत्मनः सत्त्वज्ञानाभाव आत्मनः कस्मिन्नपि कर्मणि प्रवृत्तिर्न स्यादिति भावः, उक्तमर्थमुपसंहरति तस्मादिति, तस्मात्कारणादात्मनः स्वस्य सद्रूपतायां सत्कालत्रयाबाध्यं रूपं स्वभावो यस्य तस्य भावस्तत्ता तस्यां विषये स्वस्यात्मनोऽज्ञानमस्फुरणं न विद्यते तु नास्त्येवेति निश्चयः॥ १७॥ १८॥

एवमात्मनः स्वसद्रूपताविषयं ज्ञानं प्रसाध्येदानीं चिद्रूपताविषयं ज्ञानं साध्यते।

चेतनोऽहं विजानामि घटादीनीति यो वदेत्।
स्वस्य चिद्रूपतायां तु तस्याज्ञानं न विद्यते॥१९॥

चेतन इति। य आत्मा घटादीनि घटः कुम्भ आदिर्येषां पटादिवस्तूनां तानि अहमहन्त्वावच्छिन्नः कूटस्थ आत्मा विजानामि सामान्यतया कूटस्थरूपेण विशेषतया तत्सहितचिदाभासरूपेण वेद्मीति अतो हेतोश्चेतनोऽहं चैतन्यस्वरूपोऽहमस्मीति वदेदेवं ब्रूयात्तस्यात्मनः स्वस्य स्वस्वरूपभूतायां राहोश्शिर इति वद्भेदे षष्ठी चिद्रूपतायां चिन्मात्रस्वरूपत्वविषयेऽज्ञानमभानं न तु विद्यते नैवास्ति स्वचिद्रूपतास्फूर्त्तिं विनाऽहं जानामीति वागुच्चार एव न सम्भवति 'यन्मनसा ध्यायति तद्वाचा वदती'तिश्रुत्या वाच्यज्ञानं विना वचनोच्चारासम्भवस्य प्रतिपादितत्वादिति भावः॥ १९॥

एवमात्मनः सच्चिद्रूपत्वभानं प्रसाध्येदानीमानन्दरूपत्वभानं प्रसाध्य दर्शयति।

सर्वं प्रियं स्वकामाय तस्मात्प्रियतमः स्वयम् ।
तेनात्मनस्तु सा युक्ता स्पष्टैवानन्दरूपता ॥२०॥

सर्वमिति । सर्वं स्त्रीपुत्रादिविषयजातं स्वकामाय स्वस्यात्मनो भोक्तृभावेन कल्पितस्य कामाय काम्यत इति कामो भोगस्तस्मै तदर्थं प्रियमिष्टं भवति सर्वविषयजातं भोक्तृशेषं न तु भोग्यशेषो भोक्तेति भावः, तथा च श्रुतिः 'नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवती'ति, तस्मादात्मार्थमेव सर्वस्य प्रियत्वात्स्वयमात्मा प्रियतमोऽतिशयितः प्रियोऽस्तीति निश्चयः, तेन श्रुतियुक्त्यनुभवसिद्धेन प्रियतमत्वेनातिप्रेमविषयत्वेन सुखस्यैवागोपालं लोके प्रियत्वप्रसिद्धेरात्मनः स्वस्यानन्दरूपता सुखरूपता स्पष्टैव व्यक्तैवानुभूयते, आनन्दरूपत्वज्ञानमप्यात्मनोऽस्त्येवेति भावः ॥ २० ॥

उपसंहरति ।

तेनात्मनस्तु सा व्यक्ता सच्चिदानन्दरूपता ।
तस्मात्स्वयं प्रकाशेऽस्मिन्सच्चिदानन्दरूपिणि ॥२१॥

तेनेति । तेनात्मनः सच्चिदानन्दरूपत्वज्ञानसत्त्वेनात्मन आत्मसम्बन्धिनी सा तु सापि सच्चिदानन्दरूपता सत्कालत्रयाबाध्यं चिज्ज्ञानमानन्दः सुखमेतत्त्रयमभिन्नं रूपं यस्य स तथा तस्यात्मनो भावस्तत्ता व्यक्ता भाताऽतो जिज्ञासाया निरर्थकत्वं सिद्धमिति भावः, तस्मात्कारणात्सच्चिदानन्दस्वयंप्रकाशात्मनि अज्ञानस्यासम्भवेनारोपितत्वं सिद्धमित्याह सदृष्टान्तं द्वाभ्यां तस्मादिति, तस्मात्सच्चिदानन्दरूपेण भासमानत्वात्स्वयंप्रकाशेऽवेद्यत्वे सत्यपरोक्षत्वं स्वप्रकाशत्वमित्युक्तलक्षणस्वप्रकाशलक्षणवति सच्चिदानन्दरूपिणि सदबाध्यं चिज्ज्ञान-

मानन्दः सुखमेतत्त्रयमभिन्नं रूपं विद्यते यस्य तस्मिन्नस्मिन्प्रकाशमान आत्मनि ॥ २१ ॥

आकाशे नीलिमा यद्वत्तोयं मरुमरीचिषु ।
जले च नैल्यमन्येन चेतनेन प्रकल्पितम् ।
अज्ञानं चित्स्वरूपेण स्वयं स्वस्मिन्प्रकल्पितम् ॥ २२ ॥

आकाश इति । चित्स्वरूपेण चिज्ज्ञानमेव स्वमसाधारणं रूपमाकृतिर्यस्य तेनात्मना स्वयमात्मनैवारोपककर्त्रा स्वस्मिन्नात्मन्येवाधारेऽज्ञानं ज्ञानविरुद्धं व्यावहारिकभावरूपऽभानं प्रकल्पितमारोपितं तत्र दृष्टान्ता अन्येन भिन्नेनारोपितादत्यन्तविविक्तेनेत्यर्थः, चेतनेन ज्ञानवता पुरुषेणाकाशेऽवकाशरूपे द्रव्ये वियत्संज्ञके नीलिमा नीलत्वं यद्वद्यथा तथान्येन चेतन पुरुषेण मरुमरीचिषु मरुर्धन्वा नाम देशविशेषस्तस्मिन्ये मरीचयः सूर्यकिरणास्तेषु तोयं जलमारोपितं यद्वत्तथान्येन चेतनपुरुषेण जले स्वतः शुक्लरूपे तोये नैल्यं नीलत्वं प्रकल्पितमारोपितं यद्वत्तद्वदिति योज्यम् ॥ २२ ॥

तस्य चान्यथा स्फूर्तिहेतुकत्वमाह ।

मोहस्यापि स्वभावोऽयं विश्वरूपेण भासनम् ।
विद्यया नाशिते मोहे तत्स्वभावो न भासते ॥ २३ ॥

मोहस्येति । यद्विश्वरूपेण विश्वं जगत्तदेव रूपमाकारस्तेन भासनं प्रकाशनं तदयं प्रत्यक्षो मोहस्यापि अज्ञानस्यैव स्वभावः स्वरूपमस्ति तस्य लयस्तर्हि कथं स्यात्तत्राह विद्ययेति, मोहेऽज्ञाने विद्यया ज्ञानेन नाशिते नाशं प्रापिते सति तत्स्वभावस्तस्य मोहस्याज्ञानापरपर्यायस्य स्वभावः स्वरूपं

जगद्रूपेणान्यथा भासनं न भासते न प्रतीतो भवति निमित्तापाये नैमित्तिकस्याप्यपायादिति भावः ॥ २३ ॥

एतदेव सदृष्टान्तं निरूपयति द्वाभ्याम् ।

जीवचैतन्यभास्यानां वृत्तीनां प्रलये लयः ।
वृत्तीनां प्रलयादेव न भासन्तेऽत्र वृत्तयः ॥२४॥

जीवेति । यथेत्यध्याहार्यं जीवचैतन्यभास्यानां जीवनामकमाधारभूतकूटस्थचैतन्यसहितं बुद्धिप्रतिबिम्बितं यच्चैतन्यं तस्य भास्याः प्रकाश्यास्तासां वृत्तीनां कामादिसर्ववृत्तीनां प्रलयेऽन्तःकरणस्य कारणरूपेऽज्ञाने लये सति अज्ञानमात्राकारेण स्थितौ सत्यामित्यार्थः, लयो नाशो भवति अत्र प्रलये वृत्तीनां कामादिवृत्तीनां प्रलयान्नाशादेव वृत्तयः कामादिका न भासन्ते न प्रकाशन्ते ॥ २४ ॥

तत्पुनर्जीवचैतन्यं यथा पूर्वं हि वर्तते ।
न पुनर्वृत्तिभासात्मा जीवस्तत्र विनश्यति ॥२५॥

तत्पुनरिति । तत्तत्र पुनः पश्चाज्जीवचैतन्यमधिष्ठानसहितबुद्धिस्थचिदाभासरूपं चैतन्यं यथा पूर्वं प्रथमं वृत्तिव्यवहारकाले यथा स्थितं तथैव वर्त्तते वर्तमानमस्ति हि प्रसिद्धमेतद्विद्वत्सु पुनः पश्चादपि वृत्तिभासात्मा वृत्तीनां प्रकाशक आत्मा तत्र वृत्तिलये सति न विनश्यति न नष्टो भवति ॥ २५ ॥

दार्ष्टान्तिकमाह ।

आत्मचैतन्यभास्यस्य मोहस्य प्रलये तथा ।
मोह एव निवर्तेत यथा पूर्वं लसत्यसौ ॥ २६ ॥

आत्मेति।आत्मचैतन्यभास्यस्यात्मचैतन्यप्रकाश्यस्य मोहस्या-

ज्ञानस्य प्रलये प्रकर्षेण लये नाशे सति तथा तद्वन्मोह एव अज्ञानमेव केवलं निवर्त्तेत निवृत्तं भवेदसौ स आत्मा सच्चिन्मात्रस्वरूपो यथा पूर्वं मोहस्थितिकाले यथा स्थितस्तथैव लसति प्रकाशते ॥ २६ ॥

ननु बोधेन मोहे विनाशितेपि बोधः शिष्टः स्यात्तेन चात्मनः सद्वितीयत्वं भवत्वित्याशङ्क्य तन्नाशो भवेदिति स दृष्टान्तमाह ।

दीपप्रभायामायातौ श्वेतकृष्णपटौ यथा ।
तौ तया काशितौ पश्चात्तन्नाशे सा यथा स्थिता॥२७॥

दीपेति द्वाभ्याम् । दीपप्रभायां दीपस्य प्रकाशे क्रमेण युगपद्वा श्वेतकृष्णपटौ श्वेतः शुक्लः कृष्णः श्यामस्तौ च तौ पटौ वस्त्रे आयातौ प्राप्तौ तौ च तावेव तया दीपप्रभया काशितौ प्रकाशितौ तदापि दीपप्रभास्ति तन्नाशे तयोः श्वेतकृष्णपटयोर्नाशेऽन्यत्र नयने तथा दाहेन नाशे वा जाते सति पश्चादनन्तरमपि सा दीपप्रभापि यथापूर्वं प्रथमं यथा यद्वत्तथा तथैव स्थिता ॥ २७ ॥

आत्मभायां समायातौ मोहबोधौ यथाक्रमात् ।
तया प्रकाशितौ पश्चात्तन्नाशेन सा यथा स्थिता॥२८॥

आत्मेति । आत्मभायामात्मन आत्मचैतन्यस्य भा प्रकाशस्तस्यां समायातौ काकतालीयन्यायेन प्राप्तौ क्रमात्क्रमेण मोहबोधौ मोहोऽज्ञानं बोधश्च ज्ञानं तौ च मोहबोधौ तयाऽऽत्मप्रभया प्रकाशितौ भासितौ तदापि आत्मभा यथा स्थिता तथैव तन्नाशे तयोर्मोहबोधयोर्नाशे लये सति पश्चात्तु अनन्तरमपि यथा यद्वन्मोहबोधयोः प्रकाशसमये स्थिता तद्वन्मोहबो-

धनाशसमयेपि स्थितेरर्थः, यथाग्निर्दाह्यं काष्ठादि दग्ध्वा स्वयमपि नश्यति तथा बोधोपि स्वविरुद्धमज्ञानं विनाश्य स्वयमपि नश्यत्येव ततश्चात्माशेषसम्बन्धरहितः प्रकाशत इति भावः ॥ २८ ॥

एवं द्वितीयभूमिकालक्षणनिरूपणप्रसङ्गेन विचारस्वरूपं फलपर्यन्तं प्रदर्श्येदानीं द्वितीयभूमिकाभ्यासफलं निरूपयति चतुर्भिः।

वेदान्तसंप्रदायेन कृत इत्यादिचिन्तने।
असम्भावनया युक्ता विपरीतत्वभावना ॥ २९ ॥

वेदान्त इति। वेदान्तसंप्रदायेन वेदान्तस्योपनिषदादेः संप्रदायस्तदर्थानुसन्धानं तेन तदनुकूल आचारस्तेन चेत्यादिचिन्तन इत्येवमुक्तलक्षणं चिन्तनमादि यस्य तस्मिंश्चिन्तनेऽर्थविचारे कृते पुनः पुनरभ्यासिते सति असम्भावनयोक्तार्थस्यासम्भावनाऽनङ्गीकारस्तया युक्ता सहिता विपरीतत्वभावनाऽसङ्गाद्वितीयकूटस्थात्मनि सर्ववेदान्तप्रमाणसंसिद्धेपि विपरीतत्वेन ससङ्गसद्वितीयसविकारजीवरूपत्वेन भावना प्रतीतिर्याऽस्ति ॥ २९ ॥

सा नश्यति द्वितीयायां प्रज्ञातैक्ष्ण्यं च वर्धते।
'दृश्यते त्वग्र्यया बुद्ध्या' सा बुद्धिस्तस्य जायते॥३०॥

सेति। सा विपरीतभावना द्वितीयायां विचाराख्यायां नश्यति नष्टा भवति च पुनः प्रज्ञातैक्ष्ण्यं प्रज्ञा बुद्धिस्तस्यास्तैक्ष्ण्यमज्ञानभेदनसामर्थ्यं वर्धते वृद्धं भवति अत्रार्थे श्रुतिमपि प्रमाणयति दृश्यते इति, अग्र्ययाऽग्रे भवाऽग्र्या सूक्ष्मेत्यर्थः, तया बुद्ध्या मत्या दृश्यते साक्षादनुभूयत आत्मेति शेषः, सा श्रुत्युक्ता बुद्धिर्मतिस्तस्य द्वितीयभूम्यारूढस्य जायत उत्पन्ना भवति ॥ ३० ॥

विचारफलं सदृष्टान्तमाह द्वाभ्याम् ।

सक्षारैरग्निसंस्कारैर्विहिते हेमशोधने ।
श्यामिका क्षयमायाति केवलं हेम तिष्ठति ॥३१॥

सक्षारैरिति । सक्षारैः क्षारद्रव्यसहितैरग्निसंस्कारैरग्निकृतदाहादिसंस्कारैर्हेमशोधने हेम्नः सुवर्णस्य शोधने शुद्धौ विहिते कृते सति श्यामिका कृष्णता क्षयं नाशमायाति प्राप्नोति ततः केवलं शुद्धं हेम सुवर्णं तिष्ठति अवशिष्टं भवति यथा तथेत्यध्याहार्यम् ॥ ३३ ॥

सतर्कैर्बोधसंस्कारैर्विहिते ब्रह्मशोधने ।
अविद्या क्षयमायाति केवलं ब्रह्म तिष्ठति ॥३२॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे द्वितीयभूमिकानिर्णयः ॥ २ ॥

सतर्कैरिति । तथा तद्वत्सतर्कैस्तर्कसहितैर्बोधसंस्कारैर्बोधस्य विवेकस्य दृढाभ्यासजन्यैः संस्कारैर्वासनारूपैर्ब्रह्मशोधने ब्रह्मणोऽसङ्गसच्चिदानन्दापरिच्छिन्नरूपस्यात्मनः शोधने विवेचने विहिते कृते सति अविद्या कार्यकारणरूपाऽज्ञानापरपर्याया क्षयं नाशमायाति प्राप्नोति ततश्च केवलमसङ्गाद्वितीयकूटस्थात्मस्वरूपं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु तिष्ठति अवशिष्टं भवति, इदमेव द्वितीयभूमिकाभ्यासफलमिति भावः ॥ ३२ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिकाभेदभास्करार्थप्रकाशे ज्ञानद्वितीयभूमिकानिर्णयार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

एवंलक्षणां द्वितीयभूमिकां निरूप्येदानी सलक्षणां तृतीयभूमिकामेकादशश्लोकां निरूपयितुं प्रतिजानीते।

## अथ तृतीयभूमिकानिर्णयः।

अथेति। अथ द्वितीयभूमिका निरूपणाऽनतंर तृतीया तृतीयभूमिका निरूप्यत इति शेषः, तत्रादौ पूर्वभूमिकाभ्यासहेतुकां तत्प्राप्तिमाह।

भूमिकाद्वितयाभ्यासात्तृतीया तनुमानसा।
मननापरपर्याया भवेत्तल्लक्षणं शृणु॥ १॥

भूमिकेति। भूमिकाद्वितयाभ्यासाद्भूमिकयोर्जिज्ञासाविचाराख्ययोर्द्वितयं युग्मं तस्याभ्यासात्पुनः पुनरावर्त्तनलक्षणान्मननापरपर्याया मननमित्यपरोऽन्यः पर्यायो नाम यस्याः सा तथोक्तैतन्नाम्नी तृतीया पूर्वद्वयापेक्षया तृतीया भूमिका भवेत्स्यात्तल्लक्षणं तृतीयभूमिकाया लक्षणं चिह्नं शृणु अवधारय॥ १॥

तदेव प्रतिज्ञातं चिह्नं दर्शयति।

सान्धकारगृहस्थस्य पर्यालोचनया चिरम्।
सूक्ष्मोर्थो भासते यद्वत्तृतीयायां तथा मुनेः॥ २॥

सान्धकारेति। यद्वद्यादृक् सान्धकारगृहस्थस्यान्धकारेण तमसा सहितं युक्तं यद्गृहं मन्दिरं तस्मिन्स्थः स्थितो बहिर्देशादागत्य दीप्तचक्षुष्टया स्थितस्तस्य पुरुषस्य चिरं बहुकालं तत्रैव स्थित्वा पर्यालोचनया सर्वतोऽवलोकनेन सूक्ष्मः पूर्वं दृष्ट्यगोचरोऽर्थो घटादिपदार्थो भासते दृश्यते तथा तद्वत्तृपीयायां तृतीयभूमिकायां मनननाम्न्यां प्रथमद्वितीयभूमिका-

भ्यासेन तृतीयायां प्रविष्टस्य तत्र चिरं स्थित्वा मुनेर्मननवतः पु-
रुषस्य पर्यालोचनया मननेन सूक्ष्मः पूर्वं वृत्तेः स्थूलत्वात्तद-
गोचरोऽर्थस्तत्त्वंपदयोरर्थो वाच्यो लक्ष्यश्च भागलक्षणया जी-
वब्रह्मैक्यलक्षणो भासतेऽनुभवारूढो भवति ॥ २ ॥

मुनेर्जात्यन्तरप्राप्तिरूपं तृतीयारूढस्य चिन्हं सदृष्टान्तमाह ।

बालस्य शूद्रकल्पस्य गायत्र्या उपदेशतः ।
यथा द्विजत्वमायाति तथा जात्यन्तरं मुनेः ॥ ३ ॥

बालस्येति । बालस्य द्विजातिभवार्भकस्य शूद्रकल्पस्य शू-
द्रतुल्यस्य गायत्र्या गायन्तमावर्तयन्तं पुरुषं त्रायते या सा
गायत्री त्रिपदा चतुर्विंशत्यक्षरा तस्या उपदेशत उपदेशेन
सार्वविभक्तिकस्तसिः, यथा यद्वद्द्विजत्वं द्वाभ्यां जन्मसंस्का-
राभ्यां जातो द्विजस्तस्य भावस्तत्त्वं द्विजत्वरूपं जात्यन्तरमित्यर्थः,
आयाति प्राप्नोति तथा तद्वन्मुनेस्तृतीयभूमिकारूढस्य मुनित्व-
रूपं जात्यन्तरं द्वितीया जातिरित्यर्थः, जायत इति शेषः, इद-
मपि तृतीयारूढस्य चिन्हं ज्ञेयम् ॥ ३ ॥

लक्षणान्तरमाह ।

दृष्ट्वा लोकस्थितिं लोलां सविस्मय इव स्थितः ।
अन्तरेव विषीदेत तृतीयालक्षणं हि तत् ॥ ४ ॥

दृष्ट्वेति । लोकस्थितिं लोकानां दृश्यपदार्थानां स्थितिं गतिं
लोलां क्षणपरिणामिनीं दृष्ट्वावलोक्य सविस्मय इव विस्मय
आश्चर्यं तेन सहित इव स्थितो वर्तमानः सर्वपदार्थानां नित्य-
परिणामित्वात्तेषां परिणामेन वास्तवाश्चर्यरहितोपि साश्चर्यव-
द्वर्तमान इति भावः, अतोन्तरेवान्तःकरण एव केवलं श्रव-
णादिसाध्यफलप्राप्तिपर्यन्तं शरीरादिस्थैर्याविश्वासेन विषीदेत

विपण्णो भवेत्तद्धि तत्प्रसिद्धं विवेकिषु तृतीयालक्षणं तृतीयायास्तनुमानसाया लक्षणं चिन्हं ज्ञेयम्, एतत्पूर्वत्रोत्तरत्र च योज्यम् ॥ ४ ॥

अन्यच्च ।

दिनं गतं गता रात्रिर्गतमायुर्गतं वयः ।
कदा स्थास्यामि निष्ठायां यत्र मोहो न बाधते ॥५॥

दिनमिति । दिनं दिनमिदं गतमतीतं तथा रात्रिरियं रात्रिर्निशा गताऽतीता तथाऽऽयुर्जीवनं गतं नष्टं तथा वयस्तारुण्यं गुरुसेवादिसाधनेषु क्षमं तदपि गतं नष्टं यत्र यस्यामवस्थायां मोहोऽज्ञानं न बाधते न व्यथयति तज्जन्यं दुःखं च न व्यथयति तस्यां निष्ठायां स्थितावहं कदा कस्मिन्समये स्थास्यामि स्थितो भविष्यामि एवं सदा चिन्तयति तदपि तृतीयालक्षणं ज्ञेयम् ॥ ५ ॥

अन्यदपि ।

गतेह्नि शोचति मुहुर्गतेनाह्ना किमर्जितम् ।
गतायां च तथा रात्रौ किं मे रात्र्यानयार्जितम् ॥६॥

गत इति । अह्नि दिने गते व्यतीते सति गतेनातीतेनाह्ना दिवसेन मोक्षेच्छुना मया मोक्षसाधनं किमर्जितं किं सम्पादितं न किमपीत्यर्थः, एवं विचार्य मुहुः पुनः पुनः शोचति शोकं करोति तथा गतायां यातायां रात्रौ निशि सत्यामनयैतया राज्या निशीथिन्या मया मुमुक्षुणा किमर्जितं किं सम्पादितं न किमपीत्यर्थः, एवं मुहुः पुनः पुनः शोचति शोकं करोति तृतीयालक्षणं हि तदिति च योज्यम् ॥ ६ ॥

अन्यच्चापि ।

अनिषिद्धेषु भोगेषु प्राप्तेष्वपि यदृच्छया ।
निषिद्धानिव तान्पश्येत्सा स्थितिस्तनुमानसा ॥७॥

अनिषिद्धेष्विति । अनिषिद्धेषु शास्त्रलोकाविरुद्धेषु भोगेषु भुज्यन्त इति भोगा भोग्यविषयास्तेषु यदृच्छया पूर्वकर्मानुसारेण प्राप्तेष्वपि लब्धेषु सत्स्वपि तान्भोगान्निषिद्धानिव निषिद्धाः शास्त्रलोकविरुद्धास्तानिव तद्वत्पश्येदवलोकयेद् यस्यां स्थित्यां सा स्थितिः सावस्था तनुमानसा तनुमानसानाम्नी तृतीया भूमिका ज्ञेया ॥ ७ ॥

तथान्यच्च ।

बहिर्मुखजनस्तुत्या लज्जते निन्दितो यथा ।
परमार्थिजनस्तुत्या प्रसादमधिगच्छति ॥ ८ ॥

बहिरिति । बहिर्मुखजनस्तुत्या बहिर्बाह्यविषयेषु भोजने मुखमिव भोगे प्रवृत्तबाह्येन्द्रियस्तादृशो जनः पुरुषस्तस्य स्तुतिः प्रशंसनं तया बहिर्मुखजनकृतया स्वस्तुत्या वा यथा निन्दितः सन्निन्दास्पदीभूतो यद्वल्लज्जते तद्वल्लज्जते त्रपते परमार्थिजनस्तुत्या परमः कार्यकारणातीत आत्मैवार्थो विषयः सत्यतया यस्य सेव्योऽस्ति तस्य तादृशजनस्य स्वकृतयान्यकृतया वा स्वस्यैवान्यतादृशजनेन कृतया वा स्तुत्या स्तवनेन प्रसादं प्रसन्नतामधिगच्छति अधिकं यथा तथा प्राप्नोति तदिदमपि तृतीया लक्षणं ज्ञेयम् ॥ ८ ॥

एवं तृतीयालक्षणान्युक्त्वा शृङ्गारश्लोकेनापि तानि निरूपयितुमाह ।

तत्र श्लोकः ।

तत्रेति । तत्र तृतीयभूमिकालक्षणनिरूपणे श्लोकः शृङ्गाररसिकः श्लोको जातित्वादेकवचनमस्ति ।

अस्यै तु पतिरात्मानं दातुमुत्कण्ठितः सदा।
आदातुं न विजानाति नित्यमुत्कण्ठितापि सा ॥९॥

तानेवोदाहरति अस्या इति। पतिस्तु पातीति पतिर्भर्तापि अस्यै नायिकाया आत्मानं आत्मा देहस्तं तत्कृतं भोगमित्यर्थः, दातुमर्पितुं सदा नित्यमुत्कण्ठित उद्युक्तो वर्त्तते तथापि सा पत्नी नित्यं सर्वदोत्कण्ठितापि उद्युक्तापि लज्जाद्याधिक्यादादातुमङ्गीकर्त्तुं न विजानाति न वेत्ति यथा तथा प्रस्तुतेऽर्थेपि योज्यं पातीति पतिः स्वसच्चिदानन्ददानेन पालक एव बुद्धेरस्यै मोक्षेच्छावत्यै तृतीयारूढायै बुद्ध्या आत्मानं सच्चिदानन्दासङ्गकूटस्थस्वरूपमात्मभावमित्यर्थः, दातुमर्पितुं सदा नित्यं उत्कण्ठितः उद्युक्तोऽस्ति परन्तु सा मननवती बुद्धिर्नित्यं सदोत्कण्ठितापि उद्युक्तापि आदातुमात्मभावमङ्गीकर्तुं लोकैषणादिभिरवरुद्धा सती न विजानाति नवेत्ति निःशङ्कतया, इदमपि तृतीयालक्षणं ज्ञेयम् ॥ ९ ॥

ननूभयत्रापि दृष्टान्तदार्ष्टान्तिकयोः परस्परमुत्कण्ठितत्वं कुतो निश्चीयते तत्राह।

सौभाग्यकामिनी नारी नायको रतिदायकः।
परन्तु मुग्धभावेन किं चित्कालं विलम्बनम् ॥१०॥

सौभाग्येति। नारी स्त्री सौभाग्यकामिनी लोके हि दम्पत्योः परस्परं भोगसुखमेव सौभाग्यनाम्ना प्रसिद्धं तत्कामयितुं शीलमस्याः सा तथोक्ताऽस्ति तथा नायको नीयन्ते प्राप्यन्ते पत्न्या भोगा अस्मात्स नायकः पुरुषो रतिदायको रतेर्भोगसुखस्य दायको दानशीलोऽस्ति अतः परस्परागवत्त्वेनैव परस्परमिच्छास्तीति ज्ञायत इति भावः, तर्हि कुतो न र-

तिस्तत्राह परन्त्विति, परन्तूभयोरिच्छायां सत्यामपि मुग्ध-भावेन मुग्धस्य मौढ्यस्य भावो विद्यमानत्वं तेन किञ्चित्कालं किञ्चित्कालपर्यन्तं विलम्बनं विलम्बो भवतीति ज्ञेयं, प्रस्तुते तु न रातीति नरो वैराग्यादिसम्पन्नः पुरुषस्तस्येयं नारी प्रपञ्चविरक्ता बुद्धिः सा सौभाग्यकामिनी सु शोभनं भगमैश्वर्य-मसङ्गाद्वितीयरूपं तत्कामयितुं शीलमस्याः सा तथोक्ताऽस्ति तथा नायको नयति प्रापयति ब्रह्मभावं स नायको जीवोपाधि-बुद्धेर्ब्रह्मभावप्रापको विवेको रतिदायको रतेर्जीवब्रह्मैक्यभावेन सुखस्य दायको दाताऽस्ति परन्तु एवं साधनसम्पन्नबुद्धौ विद्यमानायां विवेके च विद्यमाने सति मुग्धभावेन मुग्धं मौढ्यं तस्य भावः सत्त्वं तेन किञ्चित्कालं किञ्चित्कालपर्यन्तं यावत्प्र-तिबन्धक्षयमित्यर्थः, विलम्बनं विलम्बोऽस्ति प्रतिबन्धक्षये जीवब्रह्मैक्यानुभवजन्यसुखाविर्भावः स्यादिति भावः ॥ १० ॥

ननूभयत्र मौढ्यमेव सुखप्रतिबन्धकमिति कुतो निश्चेयं तत्राह ।

इदमेव कथं नु स्यादिति क्लिश्यति चात्मना ।<br>
भूयः कटाक्षकलहं करोति स्वामिना सह ॥ ११ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे<br>
तृतीयभूमिकानिर्णयः ॥ ४ ॥

इदमेवेति । इयं नायिकेदमेवेदं मनोभिलषितं पत्या सह भोगसुखमेव कथं कीदृक्स्याद्भवेन्नु इति वितर्कयति च पुनरित्येवं वितर्क्यात्मनान्तःकरणेन क्लिश्यति तत्प्राप्त्य-भावेन क्लिष्टा भवति तत्रैकमत्त्येनोभयोः केवलसुखप्राप्तिसम्भवे सति सुखेच्छायां च सत्यां विरुद्धमतित्वेन दुःखानुभवनं मौढ्य-कारणकमेवेति भावः, ननु सुखेच्छायां सत्यामपि विरुद्धमति-

स्वमस्तीत्येतत्कुतोऽवगम्यत इत्याशङ्क्याह भूय इति, इयं नायिका स्वामिना पत्या सह समं भूयः पुनः पुनः कटाक्षकलहं कटाक्षः स्नेहपूर्वकं नेत्रप्रान्तेनावलोकनं कलहश्चाप्रीत्या विरुद्धवचनं च तयोः समाहारो भूयः कटाक्षकलहं करोति क्रियमाणा दृश्यते लोकेऽतः सुखसाधने सम्भोगे विद्यमाने सति सुखेच्छायां च सत्यां दुःखजनकाचारो मौढ्यविलसितमेवेति भावः, प्रकृते तु इयं साधनसंपन्ना मुमुक्षुबुद्धिरिदमेवात्मसुखं प्रपञ्चजन्यदुःखरहितं केवलं सुखं कथं कीदृक् स्याद्भवेदिति एव नुवितर्कयति च पुनरात्मनान्तःकरणेन क्लिश्यति क्लिष्टा भवति तत्साधनेषु क्लेशं करोतीत्यर्थः, भोगेच्छया मोक्षसुखसाधनेषु क्लेशवती, आत्मसुखेच्छया च तेषु विरज्यात्मसुखप्राप्तीच्छावती च पुनः पुनर्भवतीति केवलात्मसुखेच्छायां सत्यामपि कादाचित्कत्वपराधीनत्वदुःखमिश्रितत्वादिदोषदुष्टवैषयिकसुखस्यात्यन्तत्यागेन केवलस्वाधीनदुःखरहितसस्यैकसुखाननुभवो मौढ्यं विनानुपपन्न इति भावः, नन्वत्र मौढ्यमस्तीत्येतत्कुतो निश्चेयं तत्राह भूय इति, इयं मुमुक्षुबुद्धिः स्वामिना स्वपालकेनात्मना सह समं भूयः पुनः कटाक्षः सप्रेमसूक्ष्मदृष्ट्यावलोकनं 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि'ति श्रुतेः कलहश्च वर्तमानप्रतिबन्धहेतुककुतर्केण विरुद्धवचनोच्चारस्तयोः समाहारः भूयः कटाक्षकलहं कदाचिदात्मावलोके रमणं कदाचिद्विरुद्धवाद इति भावः, करोति कुर्वती दृश्यते तदिदं मौढ्यं विनानुपपन्नमिति मौढ्यमेवात्र कारणं निश्चेयमिति भावः ॥ ११ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ भूमिकाभेदभास्करार्थप्रकाशे ज्ञानतृतीयभूमिकानिर्णयार्थप्रकाशश्चतुर्थः ॥ ४ ॥

अथ चतुर्थभूमिकानिर्णयः ।

एवं सलक्षणां तृतीयभूमिकां प्रतिपाद्येदानीं चतुर्थभूमिका-
श्लो॰ १८ मष्टादशश्लोकां निरूपयितुमाह ।

अथेति । अथ तृतीयभूमिकानिरूपणानन्तरं चतुर्थी चतुर्थ-
भूमिका सत्त्वापत्तिनाम्नी निरूप्यत इति शेषः, तत्र तावत्पूर्वभू-
मिकाभ्यासेन रजस्तमोनाशेन सत्त्ववृद्ध्या चतुर्थी प्राप्यत इत्याह ।

तृतीयभूमिकाभ्यासान्नाशमेति रजस्तमः ।
सत्त्वापत्तिश्चतुर्थी स्यान्निदिध्यासनरूपिणी ॥ १ ॥

तृतीयेति । तृतीयभूमिकाभ्यासात्तृतीयाया मननापरपर्या-
याया स्त्वनुमानसाख्यभूमिकाया अभ्यासात्पुनःपुनरावर्तनल-
क्षणाद्रजो रजोगुणस्तमस्तमोगुणस्तत्कार्येण रागमौढ्यरूपेण
सहैव नाशं लयमेति प्राप्नोति यदा तदेत्यध्याहार्यं निदि-
ध्यासनरूपिणी निदिध्यासनं निश्चयो ध्यानं वा तदेव रूपं स्व-
भावो यस्याः सा तथोक्ता सत्त्वापत्तिनाम्नी चतुर्थी भूमिका
स्याद्भवेत्प्राप्ता स्यादित्यर्थः ॥ १ ॥

ननु सत्त्वापत्तेर्मुक्तिहेतुत्वे देवानां तदापन्नानां कुतो न मु-
क्तिरित्याशङ्क्य परिहरति ।

अत्राक्षेपपरीहारः ।

अत्रेति । अत्र मुक्तिसाधनभूतसत्त्वप्राप्तौ सत्यामपि देवानां
मुक्त्यभावे शङ्कायामाक्षेपपरीहार आक्षेपस्याशङ्कायाः परिहार
उत्तरमुच्यत इति शेषः प्रतिज्ञातं परिहारमेवाह द्वाभ्याम् ।

भोगार्थमेव देवत्वं प्राप्ता देवा न मुक्तये ।
मुमुक्षाविरहात्तेषां सत्त्वापत्तिर्न मुक्तिकृत् ॥ २ ॥

भोगार्थमिति। देवा अमरा भोगार्थमेव भुञ्जन्त इति भोगा विषयास्तदर्थं तदिच्छयैव केवलं देवत्वं सत्त्वगुणप्रधानममरत्वं प्राप्ता याता न मुक्तये नैव मुक्त्यर्थमतो मुमुक्षाविरहान्मोक्तुमिच्छा मुमुक्षा तस्या विरहाद्वियोगात्तेषां देवानां सत्त्वापत्तिः सत्त्वस्य सत्त्वगुणस्यापत्तिः प्राप्तिर्मुक्तिकृन्मोक्षदा न नैव भवतीत्यर्थः ॥२॥

एवं मोक्षेच्छाव्यतिरेकेण सत्त्वापत्तेर्मुक्तिकारणत्वाभावं प्रतिपाद्येदानीं मुक्तीच्छान्वयेन तस्या एव मोक्षहेतुत्वमपि दर्शयति।

देवेष्वपि तथा शक्रकुबेरवरुणादयः।
ये मुमुक्षां गतास्तेषां मुक्तिप्राप्तिः किमद्भुतम्॥३॥

देवेष्वपीति। देवेष्वपि सत्त्वापत्तिमत्स्वपि अमरेषु तथा मुक्तीच्छावन्त इत्यर्थः, शक्रकुबेरवरुणादयः शक्र इन्द्रः कुबेरो वित्तेशो वरुणो जलेश आदयो मुख्या येषु ते तथोक्ता ये ये च इत्यर्थः, मुमुक्षां मोक्षेच्छां गताः प्राप्ताः सन्ति तेषां देवानां सत्त्वापत्तिमतामपि मुक्तिप्राप्तिर्मुक्तिलाभो जातस्तत्रस्तत्र किमद्भुतं किमाश्चर्यं सप्तम्यन्तपाठे मुक्तिलाभविषय इत्यर्थः, न किमप्याश्चर्यमित्यर्थः, तस्मान्मुक्तीच्छापूर्वकसत्त्वापत्तेर्मुक्तिकारणत्वं न भोगेच्छापूर्विकाया इति भावः॥ ३॥

एवं सत्त्वापत्तिप्राप्तिं सहेतुकां साक्षेपपरिहारां निरूप्येदानीं तल्लक्षणनिरूपणं प्रतिजानीते।

अथ लक्षणानि।

अथेति। अथेतः परं सत्त्वापत्तिप्राप्तिक्रमनिरूपणानन्तरमित्यर्थः, लक्षणानि सत्त्वापत्तेश्चिह्नानि निरूप्यन्त इति शेषः, तान्येवाह पञ्चभिः।

एकान्ते मुक्तिगाथानां गानं रोदनमेव च।

कण्ठे सत्त्वापत्तेस्तु लक्षणम् ॥४॥

एकान्त इति । एकान्ते निर्जनस्थाने स्थित्वेति शेषः, मुक्तिगाथानां मुक्तिर्मोक्षस्तस्यास्तत्साधनभूतवैराग्यादेश्च प्रतिपादिका गाथा ग्रन्थविशेषास्तासां गानं पठनं तस्मिंश्च मध्ये मध्ये स्वस्य मुक्त्यभावस्मरणेन रोदनमश्रुपातो मध्ये मध्ये रोमाञ्चो रोमोत्थानं कण्ठे च गले गद्गदोऽस्पष्टाक्षरोच्चारः, इदं सर्वं सत्त्वापत्तेस्तु सत्त्वापतिनाम्न्याश्चतुर्थभूमिकाया लक्षणं चिह्नं ज्ञेयम् ॥ ४ ॥

इदं च परमतेन लक्षणमुक्तमिति सूचयति ।

स्वमतमाह ।

स्वमतमिति । स्वमतं स्वस्य ग्रन्थकारस्य मतमिष्टं सत्त्वापत्तेश्चिन्हमाह कथयति । तदेवाह ।

वेदान्ताः सम्यगभ्यस्ता अथ ध्येयो महेश्वरः ।
प्राप्तातिसौरभे भृङ्गे रसपानं गुणाधिकम् ॥ ५ ॥

वेदान्ता इति । मुमुक्षुरेवं विचारयति मनसि वेदान्ता उपनिषत्सूत्रभाष्यादयः सम्यक्पूर्वापराविरोधेनाभ्यस्ताः पुनः पुनरवलोकिता अथेतः परं मया मुमुक्षुणा महेश्वरः सर्ववेदान्तनिर्णीतजीवब्रह्मैक्यलक्षणलक्षित आत्मेश्वरत्त्वाधिष्ठानरूपत्वादीश्वरतत्त्वं ध्येय ध्यातव्यो वेदान्तग्रन्थाभ्यासं परित्यज्य तत्प्रतिपाद्यात्मरूपमेव चिन्तनीयमिति भावः, अस्मिन्नर्थे दृष्टान्तमाह यथा प्राप्तेति, प्राप्तातिसौरभे प्राप्तं लब्धमतिसौरभमतिगन्धवत्केसरस्थानं येन तस्मिन्भृङ्गे भ्रमरे रसपानं रसस्य तदन्तर्गतमधुनः पानं प्राशनं गुणाधिकं गुणेन

तृप्तिहेतुत्वेन मिष्टतया चाधिकमुत्कृष्टम् ॥ ५ ॥

अन्यदपि सत्त्वापत्तेर्लक्षणमाह।

नित्योऽस्मि शुद्ध एवास्मि क्वाज्ञानं क्व च बन्धनम्।
एवमादिचमत्कारः सत्त्वापत्तेस्तु लक्षणम् ॥ ६ ॥

नित्य इति। अहं नित्यः सद्रूपोऽस्मि भवामि अहङ्कारादिशरीरान्तलक्षणादनित्याद्भिन्नमात्मानं लक्ष्यीकृत्याहमविनाश्यस्मीति चिन्तयतीत्यर्थः, तथा शुद्ध एवास्मि शुद्धो मायाऽविद्यादिमलरहितो निश्चयेनाहं भवामि स्वस्य स्वयं प्रकाशरूपत्वान्मायाऽविद्ययोर्जडासत्त्वरूपत्वेन चासङ्गत्वादात्मनः शुद्धत्वं निश्चिनोति, तथा क्व कुत्राज्ञानं मोहोऽस्ति न क्वापीत्यर्थः, तथा हि अज्ञानमात्मनि विद्यते वाज्ञान उत जगति, नाद्य आत्मनः सच्चिदानन्दघननिर्विकारनिरंशत्वेनाज्ञानाधिष्ठानत्वायोगादुभयोर्विरुद्धत्वेन प्रकाशतमसोरिवाधाराधेयत्वासिद्धेः प्रत्युतनाशकत्वाच्च, नापि द्वितीयः स्वस्य स्वाधारत्वासम्भवादसत्त्वेनाप्युभयोराधाराधेयत्वाभावाच्च, न च तृतीयोपि जगतोऽज्ञानकार्यत्वेन तदाधारत्वायोगाद् न हि कारणभूताया मृदो मृत्कार्यो घट आधारो दृष्टः कार्यस्योत्पत्त्यादिमत्त्वेनोत्पत्तेः प्रागभावात्कारणस्यानुत्पन्नत्वेन सत्त्वान्न कार्यकारणयोराधाराधेयत्वमिति भावः, किञ्च क्व च बन्धनं बद्ध्यतेऽनेनेति बन्धनं बन्धसाधनं द्वैतं तत्कारणस्याज्ञानस्यासत्त्वे क्व कुत्र न कुत्राप्यस्तीत्यर्थः, अतो नित्यमुक्तः शुद्धोऽज्ञानाद्यस्पृष्ट एवाहमस्मीत्यर्थः, एवमादिचमत्कार एवमित्येवरूप आदिः प्रमुखो यस्य तथाभूतश्चमत्कारः स्वस्फुरणं सत्त्वापत्तेः सत्त्वापत्तिनाम्न्याश्चतुर्थभूमेर्लक्षणं चिह्नं ज्ञेयम् ॥ ६ ॥

अन्यच्चापि लक्षणमाह ।

यथा निजकथास्तद्वच्छृणोत्युपनिषत्कथाः ।
यथान्यस्य कथास्तद्वच्छृणोति जनसंकथाः ॥ ७ ॥

यथेति । यथा यद्वन्निजकथा अन्यकृताः स्वगुणख्यापका वार्त्ताः स्वस्तुतिप्रियः पुरुषः हर्षाविर्भावपूर्वकं शृणोति अवधारयति तद्वत्सत्त्वापत्त्यारूढः पुरुष उपनिषत्कथा उप समीपे निषण्णं वाच्यलक्ष्यभावेन ध्येयं लक्ष्यं च श्रेयो ब्रह्मसुखं यासु ता उपनिषदस्तासां कथा वार्त्ता आत्मतत्त्वप्रकाशिका वार्त्ता इत्यर्थः, शृणोत्यवधारयति, किञ्च यथेति, यथा यद्वदन्यस्य परस्य शत्रोरित्यर्थः, कथास्तद्गुणख्यापका वार्त्ता अप्रीत्या शृणोति तद्वत्तथा जनसंकथा जनस्य जन्मनः सम्बन्धिनीः कथा लौकिकीः पुराणादिष्वपि धर्माधर्मादिकथा अवतारादिचरित्राण्यपि संसारोत्कर्षबोधिनीर्वार्त्ता अपि अप्रीत्या शृणोत्यवधारयति, इदमपि सत्त्वापत्तेर्लक्षणं ज्ञेयम् ॥ ७ ॥

अन्यदपि चतुर्थीलक्षणमाह ।

देहेन्द्रियमनःप्राणबुद्ध्यहङ्कारचेतसाम् ।
निरीक्ष्य विविधाश्चेष्टा आस्ते विस्मितवन्मुनिः॥८॥

देहेन्द्रियेति । देहेन्द्रियमनःप्राणबुद्ध्यहङ्कारचेतसां देहस्यान्नमयाख्यस्य स्थूलदेहस्य जन्ममरणबाल्यतारुण्यवार्धक्यस्थूलकृशव्याधिगौरकार्ष्ण्यादयः, इन्द्रियाणां करणानां बधिरत्वाबधिरत्वकाणत्वाकाणत्वान्धत्वानन्धत्वादिरूपाः, मनसश्चेष्टाः संकल्पविकल्पाध्यासादयः, प्राणस्य श्वासादयः, बुद्धेश्चेष्टा जाग्रत्स्वप्नसुषुप्तिनिश्चयादयः, अहङ्कारस्य कर्तृत्वाकर्तृत्वसुखित्वदुःखित्वादिरूपाः,

चेतसः स्मरणास्मरणप्रत्यभिज्ञाऽप्रत्यभिज्ञानुभवाननुभवादिरूपा विविधा अनेकप्रकारा एताश्चेष्टाः क्रिया निरीक्ष्यावलोक्य विस्मितवदाश्चर्यवानिवास्ते वर्तते, इदमपि चतुर्थीलक्षणं ज्ञेयम् ॥८॥

अथान्यदपि लक्षणमाह ।

ज्ञत्वकर्तृत्वभोक्तृत्वजन्ममृत्युजरादिकान् ।
भावानन्यस्य जानाति तदन्यं भावमात्मनः ॥ ९ ॥

ज्ञत्वेति । ज्ञत्वकर्तृत्वभोक्तृत्वजन्ममृत्युजरादिकाञ्ज्ञत्वं ज्ञानेन्द्रियसहितस्य बुद्ध्यवस्थितचिदाभासस्य, कर्तृत्वं कर्मेन्द्रियसहितस्य बुद्ध्यवस्थितचिदाभासस्य, भोक्तृत्वमानन्दमयोपहितचिदाभासस्य जन्ममृत्युजरादिकाः स्थूलदेहस्य, तत्र तादात्म्यापन्नस्य चिदाभासस्य वा, एतान्सर्वान्भावान्विकारानन्यस्य स्वात्मतो विविक्तस्य चिदाभासस्य जानाति वेत्ति आत्मनः स्वस्य भावं स्वरूपं तदन्यं तेभ्य उक्तेभ्यो विकारेभ्योऽन्यं विलक्षणं जन्ममृत्युजराकर्तृत्वभोक्तृत्वज्ञत्वादिरहितं जानाति वेत्ति अनुभवतीत्यर्थः ॥ ९ ॥

अन्यच्चापि लक्षणमाह ।

मोहजालाद्विनिर्गत्य जालादिव विहङ्गमः ।
खेचरत्वमनुप्राप्तो धन्यतामनुविन्दति ॥ १० ॥

मोहजालादिति । जालादानायाद्विहङ्गमः पक्षी विनिर्गत्य विमुच्यानु पश्चात्खेचरत्वमाकाशगामित्वं प्राप्तः सँल्लब्धाः सन्ननु पश्चाद्धन्यतां कृतकृत्यतां विन्दति प्राप्नोतीव यथा तथाऽयं सत्त्वापन्नो मोहजालान्मोह आत्माज्ञानं स एव स्वनाशहेतुत्वाज्जालमिव जालं तस्माद्विनिर्गत्य विमुच्यानु पश्चात्खेचरत्वं सर्वद्वैतशून्यत्वोपलक्षितब्रह्माभेदवदात्मानुभवि-

तृत्वं प्राप्तः लब्धः सन्ननु पश्चाद्धन्यतां कृतकृत्यत्वरूपां निरङ्कुशां तृप्तिं विन्दति प्राप्नोतीत्यर्थः, इदमपि चतुर्थीलक्षणं ज्ञेयम्॥१०॥

अन्यच्चापि सत्त्वापत्तेर्लक्षणमाह।

दरिद्र इव संप्राप्य निधानं विस्मयं गतः।
ईश्वरानुग्रहो जात इति नृत्यति हृष्यति ॥ ११ ॥

दरिद्र इवेति। निधानं निधीयते द्रव्यमस्मिन्निति निधानं द्रव्यपूर्णं भाण्डं संप्राप्योपलभ्य विस्मयमाश्चर्यं गतः प्राप्तो दरिद्र इव निर्धनः पुरुष इव गर्वं प्राप्त इत्यर्थः, तथा तद्वन्मुनिः सत्त्वापन्न आत्मानन्द एव निधानं निधीयन्त आध्रियन्ते सर्वाणि सुखानि जगन्ति च यस्मिन्निति निधानं परमानन्दस्वरूपमात्मानं प्राप्योपलभ्य विस्मयमाश्चर्यं गतः प्राप्तः सन्नीश्वरानुग्रहो जात ईश्वरस्येशनादिशक्तियुक्तस्य गुरोरनुग्रहः प्रसादो मयि जात-उपन्न इति एवं मत्वा नृत्यति नृत्यं करोति हृष्यति हर्षं प्राप्नोति; एतदपि सत्त्वापन्नस्य लक्षणं ज्ञेयम् ॥ ११ ॥

अन्यदपि च लक्षणमाह।

विषयैः शब्दसंस्पर्शगन्धरूपरसैर्न यः।
प्रियैरपि भवेत्तादृक्सात्त्विकानन्दमागतः ॥ १२ ॥

विषयैरिति। यः पुरुषः प्रियैरपि मौढ्यावस्थायामिष्टैरपि शब्दसंस्पर्शगन्धरूपरसैः शब्दश्चाकाशगुणत्वेन प्रसिद्धः संस्पर्शश्च वायुगुणो रूपञ्च तेजोगुणो गन्धश्च पृथिवीगुणो रसश्च जलगुण एतन्नामकैर्विषयैर्गोचरैस्तादृग् यादृक्पूर्वं हर्षखेदादिविकारवान्स्थितस्तादृक्तद्वन्न भवेन्नस्यात्तत्र हेतुमाह सात्त्विकानन्दमिति, सात्त्विकानन्दं सत्त्वगुणोपाधिकमानन्दं सुखमागतः प्राप्तः, इदमपि सत्त्वापन्नस्यैव लक्षणं ज्ञेयम् ॥ १२ ॥

अन्यदपि लक्षणमाह।

व्यतिरिक्तमिवात्मानं पश्यन्भावेषु सन्नपि।
चाण्डालीमिव यो मायां न स्पृशन्दूरवर्तिस्थतः॥ १३॥

व्यतिरिक्तमिति। यः पुरुषो भावेषु पदार्थेषु स्वान्वयाभावे तेषामसत्त्वाद्व्यवहारायोग्यत्वाद्व्यवहारकाले तेषु सन्नपि अस्तिभातिप्रियरूपेण नामरूपात्मकेषु तेषु विद्यमानोपि अनुवृत्तोपीत्यर्थः, आत्मानं तेष्वनुवृत्तं सच्चिदानन्दरूपं भावानामसत्त्वात्ततः पृथक्त्वस्यापि तथात्वाद्व्यतिरिक्तमिव पृथगिव पश्यन्सन्पश्यमानश्चाण्डालीमिव नटरज्जुगतचाण्डालीं तत्स्थकृत्रिमब्राह्मणीमिव मायामविद्यापरपर्यायां न स्पृशन्स्पर्शमकुर्वाण एव दूरवदात्मसत्तान्वयाभावे मायातत्कार्ययोर्निर्वाहायोगान्मायायां तत्कार्ये चान्वितोपि तयोर्मिथ्यात्वेन ततो दूरत्वस्यापि सत्त्वाभावाद्दूर इव स्थितो विद्यमानोऽस्ति, इदमपि चतुर्थीलक्षणं ज्ञेयम्॥ १३॥

सत्त्वापत्तेः परीपाकस्य लक्षणमाह।

औदासीन्येन यः पश्येत्स्वप्नाभं जागरे जगत्।
सत्त्वापत्तिपरिपाकलक्षणं तदुदाहृतम्॥ १४॥

औदासीन्येनेति। यो विशिष्टः पुरुष औदासीन्येन उदासीनोऽनासक्तस्तस्य भाव औदासीन्यमनासक्तत्वं तेन जागरे जागरावस्थायामेव किं पुनः स्वप्नावस्थायां वक्तव्यमित्यर्थः, जगत्त्रिपुटीरूपं विश्वं स्वप्नाभं स्वप्नस्याभेवाभा कान्तिर्यस्य तत्तथा स्वप्नोत्थितपुरुषस्य स्मृतिविषयं स्वप्नजगदिवेत्यर्थः, पश्येदवलोकयेत्तदेतदुक्तं सत्त्वापत्तिपरीपाकलक्षणं सत्त्वापत्तेश्चतुर्थभूमेः परिपाकः स्थैर्येणोत्तरभूमिकासु परिणामयो-

यत्त्वं तस्य लक्षणं चिन्हमुदाहृतं कथितं मुनिभिरिति शेषः ॥१४॥

इदानीं सत्त्वापत्तेरेव लक्षणं स्फुटं बोधयितुमाह ।

अत्र श्लोकः ।

अत्रेति । अत्र चतुर्थीलक्षणबोधने शृङ्गारश्लोकोऽस्ति अत्रापि जातित्वादेकवचनं श्लोकाः सन्तीत्यर्थः, तानेव क्रमेणाह ।

भावः सम्यक्परिज्ञातो ग्रहणेपि मनः कृतम् ।
आदानमवशिष्टं हि कृत्वाभूषणमात्मनः ॥ १५ ॥

भाव इति । भाव आशयः सम्यग्यथार्थं परिज्ञातः परीक्षित उभयोराशय उभाभ्यां ज्ञात इत्यर्थः, आत्मनः शरीरस्य भूषणमलङ्कारं कृत्वा विधाय ततो गृहणेपि परस्परमङ्गीकारेपि मनः संकल्परूपमन्तःकरणं कृतं प्रवर्त्तितं परं तु कयाचिच्छङ्कयाऽऽदानं केवलमङ्गीकरणमवशिष्टमुर्वरितं यथा, तथा मुमुक्षुबुद्ध्या निदिध्यासनवत्या भावः सत्ताऽऽत्मन इत्यर्थः, सम्यक् संशय विपर्ययरहितं यथा तथा परिज्ञातोऽवलोकितस्तत आत्मनो बुद्धेः साधनचतुष्टयमेव भूषणमलङ्करणं कृत्वा विध्याय गृहणेपि आत्मत्वाङ्गीकारेपि मनः संकल्परूपमन्तःकरणं कृतं प्रेरितं तथापि आदानं हि आत्मभावाङ्गीकरणमेव केवलमवशिष्टं केन चित्प्रतिबन्धेनोर्वरितम्, एतच्च चतुर्थभूमिस्थितपुरुषबुद्धिलक्षणं ज्ञेयम् ॥ १५ ॥

तमेव परीक्षाविषयं भावं विशदयति ।

अहं त्वनूढा तरुणी न कस्यापि परिग्रहः ।
एनमेव वरिष्यामि पतिं को वा हसिष्यति ॥ १६ ॥

अहं त्विति । तरुणी तु यौवनापन्नापि अहमनूढा न केनापि विवाहिता विवाहविधिपूर्वं नाङ्गीकृताऽस्मि मम मे केनापि पु-

रूपेण सह परिग्रहः परिगृह्यते हस्तोऽस्मिन्निति परिग्रहो विवाहो जातो नेति एनमेव मम मनःप्रियं पुरोवर्त्तिनमेव नान्यं पतिं मम पालनक्षमं पुरुषं वरिष्यामि विधिपूर्वकं परिणेष्यामि अनेन सह परिणयने जाते सति मां मा को वा पुरुषो हसिष्यति हासं करिष्यति विधिपूर्वकं परिणयने जात उपहासाभावेन निःशङ्कं भोगसुखं स्यादिति भावः, यथा तथा मुमुक्षुबुद्धिरपि निश्चिनोति तमेव निश्चयमाह—अहमिति, तरुणी तु यौवनसंपन्ना मोक्षसुखानुभवे क्षमेत्यर्थः, अनूढा न मोहादिभिर्वरैः परिणीता तैरस्पृष्टेत्यर्थः, अहं मोक्षेच्छावती बुद्धिरात्माकारास्मि स्थितवती—अत एव न कस्यापि अहङ्कारादेः परिग्रहः सत्त्वेनाङ्गीकारो मय्यस्तीति शेषः, अतः स्वतः स्थातुमशक्यत्वादेनमेव पुरो दृश्यमानमेव पतिं स्वचित्सुखदानेन पालकमात्मानं वरिष्यामि अभिन्नत्वेनाङ्गीकरिष्यामि अहंब्रह्मास्मीत्येवं महावाक्यविचारलक्षणवेदोक्तविधिनाऽनुभविष्यामीति भावः, अत्र महावाक्यप्रमाणेनाहंब्रह्मेति स्वस्य ब्रह्माभिन्नत्वसाक्षात्करणे मां को वा हसिष्यति न कोपि हसिष्यति विधिपूर्वकं श्रुत्यादिप्रामाण्येन ब्रह्माहंभावेऽङ्गीकृते सति नोपहासास्पदं भवेदिति निश्चयः, सत्त्वापन्नबुद्धिलक्षणमेवेति भावः ॥ १६ ॥

पुनरपि सत्त्वापन्नबुद्धिलक्षणमेवाह ।

हतः कामी कटाक्षेण कयाचिन्मृगचक्षुषा ।
व्यसनित्वमवाप्नोति तथायं मुक्तिकान्तया ॥ १७ ॥

हत इति । यथा कामी स्त्रीकामवान्पुरुषः कया चिदतीवसुन्दर्या मृगचक्षुषा मृगस्य हरिणस्य चक्षुरिव चक्षुर्नेत्रं यस्याः सा तथोक्ता तया कान्तया कटाक्षेण नेत्रप्रान्तेन हतस्ताडितः सन् व्यसनित्वं तत्प्राप्त्यभावेन विह्वलत्वं विरहव्यथावत्त्वमित्यर्थः,

अवाप्नोति यथा यद्वत्तथा तद्वदयं प्रकृतः सत्त्वापन्नः पुरुषो मुक्तिकान्तया मुक्तिर्मोक्ष एव कमनीयत्वात्कान्ता तया कयाचिदनिर्वचनीयया मृग्यते शोध्यते ब्रह्मसुखं येन तन्मृगमेतादृशं चक्षुर्ब्रह्मावलोकनसाधनभूता वृत्तिर्यस्याः सा तथोक्ता तया कटाक्षेण कटति आवृणोति ब्रह्मसुखमिति कटं तच्च तदक्षं नेत्रं च तेन हतः प्राप्तः सन्नहं ब्रह्मास्मीति विद्धः सन्निश्चयः, व्यसनित्वं मुक्तिसुखानुभवेऽत्यासक्तत्वमवाप्नोति प्राप्नोतीत्यर्थः, इदमपि सत्त्वापन्नस्यैव लक्षणं ज्ञेयम् ॥ १७ ॥

ननु सत्त्वापन्नस्य मुक्तिसुखानुभवेऽत्यासक्तिः कुतो ज्ञेया तत्राह ।

गुञ्जद्भृङ्गिध्वनिं श्रुत्वा गुञ्जन्कीटो यथा विले ।
ब्रह्मास्मीति तथैवायं भवितुं ब्रह्म गुञ्जति ॥ १८ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे
ज्ञानचतुर्थभूमिकानिर्णयः ॥ ५ ॥

गुञ्जदिति । यथा यद्वत्कीटः क्रिमिर्विले मृदादिनिर्मिते छिद्रे स्थितः सन्गुञ्जद्भृङ्गिध्वनिं गुञ्जन्गुञ्जारवं कुर्वाणो यो भृङ्गी भ्रमरविशेषस्तस्य ध्वनिं रवं बहिर्देशाच्छ्रुत्वा श्रवणेनावधार्य स्वयं क्रिमिर्गुञ्जन्गुञ्जारवं कुर्वन्सन्तिष्ठति तथा तद्वदयं प्रकृतः सत्त्वापन्नः पुरुषः स्वदेहरूपे विले स्थित्वा तद्बहिःस्थितस्य गुरुभ्रमरस्याहं ब्रह्मास्मीति जीवब्रह्मैक्यलक्षकं महावाक्यरूपं ध्वनिं श्रुत्वा श्रवणादिना निश्चित्यैव ब्रह्मभवितुं स्वयमपि गुरुरूपब्रह्माभिन्नभावं प्राप्तुं ब्रह्मास्मीत्येवं गुञ्जति वाक्यवृत्तिरूपं गुञ्जारवं सर्वदैव करोतीत्यर्थः ॥ १८ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ
भूमिकाभेदभास्करार्थप्रकाशे ज्ञानचतुर्थभूमिकानिर्णयार्थप्रकाशः पञ्चमः ॥ ५ ॥

---

एवं सलक्षणा सविस्तरा चतुर्थभूमिका निरूप्येदानीं पञ्चमभूमिकानिर्णयाख्यं द्वाविंशतिश्लोकं प्रकरणं निरूपयितुमाह।

अथ पञ्चमी भूमिका।

अथेति। अथ चतुर्थभूमिकानिरूपणानन्तरं पञ्चमी पञ्चमी भूमिका निरूप्यत इत्यर्थः। तत्र तावत्सहेतुकां तत्प्राप्तिमाह।

दशाचतुष्टयाभ्यासादसंसक्तिस्तु पंचमी।
सुषुप्तिप्रथमावस्था साक्षात्कारनवांकुरा ॥ १ ॥

दशेति। दशाचतुष्टयाभ्यासाद्दशानां भूमिकानां चतुष्टयं चतुष्कं तस्याभ्यासः पुनः पुनस्तासु चित्तस्थिरीकरणं तस्माद्धेतोस्तुपदेन पूर्वाभ्यो वैलक्षण्यमस्याः सूचितम्, असंसक्तिरसंसक्तिनाम्नी सुषुप्तिप्रथमावस्था सुषुप्तेर्विद्वन्निद्रारूपायास्तुरीयाख्यायाः प्रथमा शिथिलाख्या वक्ष्यमाणावस्थारूपाऽतः साक्षात्कारनवाङ्कुरा साक्षात्कारः प्रत्यक्षानुभवस्तस्य नवस्तत्कालोत्पन्नोऽङ्कुर उद्गमो यस्यां सा तथोक्ता पञ्चमी पञ्चमभूमिका लभ्यत इति शेषः, प्राप्यत इत्यर्थः ॥ १ ॥

तल्लक्षणनिरूपणप्रतिज्ञापूर्वकं तल्लक्षणान्याह।

साऽपरोक्षा नैव निशा शृणु तस्यास्तु लक्षणम्।
प्रथमः स्वचमत्कारः स्वरूपानन्दलक्षणम् ॥ २ ॥

सेति। तस्यास्तु तस्या अपि लक्षणं लक्षणानीत्यर्थः, जातित्वादेकवचनं शृणु अवधारय तान्येवाह सा भूमिरपरोक्षा न परोक्षं ब्रह्म यस्यां सा तथोक्ताऽत एव नैव निशा विषयरूपद्वैतप्रकाशाभावेन निशात्वेन निशात्वेपि स्वप्रकाश ब्रह्मापारोक्ष्यान्नैव रात्रिः सा पञ्चमभूमिरित्यर्थः, प्रथमस्वचमत्कारः प्रथम आद्यः स्वस्यात्मनश्चमत्कारोऽनुभवः, इदमपि

लक्षणं पञ्चम्या ज्ञेयं, स्वरूपानन्दलक्षणं स्वेनैव रूप्यते प्रकाश्यत इति स्वरूपो य आनन्दः सुखं तल्लक्ष्यतेऽनेनेति स्वरूपानन्दलक्षणं चिह्नं स्वरूपसुखलक्षकत्वमपि पञ्चमभूमेर्लक्षणमित्यर्थः ॥ २ ॥

लक्षणान्तराण्याह ।

ब्रह्मत्वसंस्मृतिः सैव सैव जीवत्वविस्मृतिः ।
तदेवाज्ञानमरणममृतत्वं तदेव हि ॥ ३ ॥

ब्रह्मत्वसंस्मृतिरिति । सैव पञ्चमभूमिकैव ब्रह्मत्वसंस्मृतिः स्वस्य यत्पारमार्थिकं ब्रह्मत्वं तस्य संस्मृतिर्दृढस्मरणं पञ्चम्या लक्षणं ज्ञेयं, जीवत्वविस्मृतिः स्वस्मिन्नारोपितं यज्जीवत्वं तस्य विस्मृतिरननुसन्धानमपि सैव पञ्चमीभूमिरेव ज्ञेया, आरोपितस्य जीवत्वस्य मिथ्यात्वेन तद्विस्मृतेरपि मिथ्यात्वाद्विस्मृतिरिवविस्मृत्तिरिति व्याख्येयं सा पञ्चमी भूमिकेत्यर्थः, तथा तदेव पञ्चम्येवाऽज्ञानमरणमज्ञानस्य महामोहस्य मरणं नाशस्तदपि पञ्चम्या लक्षणं ज्ञेयम्, अमृतत्वं मोक्षस्तदेव हि तदज्ञानमरणनाम्ना प्रसिद्धमेव विवेकिनाम्, एतच्चापि पञ्चमीलक्षणं ज्ञेयम् ॥ ३ ॥

अन्यदपि लक्षणमाह ।

आविर्भूता तु सा नैव नाविर्भूतत्वभाक्पुनः ।
कथं भूयो भ्रमत्येष भ्रान्तिरेव गता यदि ॥ ४ ॥

आविर्भूतेति । सा साक्षात्काररूपा पञ्चम्यवस्था तु सर्वाभ्यो विलक्षणाविर्भूता प्राकट्यं प्राप्ता सती पुनः पश्चाद्व्यवहारेण व्यवधाने सत्यपि नाविर्भूतत्वभाक्नाविर्भूतत्वमनाविर्भूतत्वं भजते तच्छीला नैव भवेदिदमेव पूर्वाभ्यो वैलक्षण्यरूपं पञ्चम्या लक्षणमिति भावः, तदारूढवैलक्षण्यनिरूपणद्वारापि तल्लक्षणमाह भूय इति,

एष पञ्चम्यारूढो जातसाक्षात्कारः पुरुषो यदि यर्हि तस्य भ्रान्तिर्भ्रमो गतैव निवृत्तैव यतोऽतः भूयो पुनर्न भ्रमति भ्रान्तिमान्न भवति, एतदपि पञ्चम्या लक्षणं ज्ञेयम् ॥ ४ ॥

अन्यदपि लक्षणमाह ।

यथा वर्तुलपाषाणा गिरेः शिखरतश्च्युताः ।
ध्वंसंत्येव न तिष्ठन्ति विकारास्तद्वदत्र हि ॥ ५ ॥

यथेति । वर्तुलपाषाणाः कपित्थादिवद्वर्तुलाकाराः पाषाणा अश्मानो गिरेः पर्वतस्य शिखरतः शृङ्गाच्च्युता अधः पतिताः सन्तः ध्वंसन्त्येवाधोधः पतन्त्येव न तिष्ठन्ति मध्ये मध्ये स्थिरा न भवन्ति यथा यद्वत्तद्वत्तथा विकारा रागद्वेषादयोऽत्र पञ्चम्यारूढे पुरुषे च्युता ग्रन्थिभेदेन स्वात्मनोभिन्नत्वेनान्तःकरणे स्थिता निर्बलाः सन्तः क्रमेण ध्वंसन्त्येव नश्यन्त्येव न तिष्ठन्ति न स्थिरा भवन्ति, एतदपि पञ्चम्या लक्षणं ज्ञेयम् ॥ ५ ॥

ननु स्वस्थाच्च्युतानामपि विकाराणां कुतो न स्थानं तत्राह ।

मुनिरर्धकाटक्षेण यं विकारमवेक्षते ।
सद्यः पतत्यसौ पृथ्व्यां नोत्तिष्ठति यथा पुनः ॥६॥

मुनिरिति । मुनिर्मननशीलो जातसाक्षात्कारोऽर्धकटाक्षेणेषद्विवेकवृत्त्या यं मुनिवृत्तिगोचरं यं यं विकारं कामादिकं विकारमवेक्षते पश्यति असौ विकारः पृथ्व्यां प्रथयति आत्मानमनेकरूपेणेति पृथ्वी क्षेत्रशब्दवाच्या बुद्धिस्तस्यां सद्यस्तत्कालमेव पतति पतितो भवति क्षेत्रे एव स्थितो भवतीत्यर्थः, यथा पुनर्यथा यद्वत्पूर्वमात्मनि प्रतीयमान उत्थितोऽभूत्तथा पुनर्भूयः स्वात्मसाक्षात्कारानन्तरं नोत्तिष्ठति

नोदितो भवति प्रारब्धशेषपर्यन्तं प्रतीयमानोपि बुद्धावेव प्रतीयते नात्मनि प्रतीयत इति भावः, तदुक्तं विद्यारण्यस्वामिभिः

'अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहङ्कृतिम्।
इच्छस्तु कोटिवस्तूनि नबाधो ग्रन्थिभेदत' इति।

गीतायामपि।

'पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्छ्वसन्नि'त्यादिना,
'गुणागुणेषु वर्त्तन्त इति मत्वा न सज्जते'इत्यन्तेनोक्तमेतदेव॥६॥

अन्यदप्याह।

अविगीते न तुष्येत्तु विगीते न विषीदति।
विस्मरत्यखिलं कार्यं रमते स्वात्मनात्मनि॥ ७॥

अविगीतेनेति। अयं पञ्चम्यारूढः पुरुषोऽविगीते विगीतं विरुद्धं वचनं लौकिकं शास्त्रीयं वा तन्न विद्यते यस्मिन्वाक्ये तस्मिन्नुच्चारिते सति न तुष्येन्न सन्तुष्टो भवेत्तु पुनर्विगीते केन चिल्लोकशास्त्रविरुद्धे वचन उच्चारिते सति न विषीदति न खिद्यति अखिलं संपूर्णं कार्यमवश्यकर्तव्यं विस्मरति नानुसन्धत्ते स्वात्मनान्तःकरणसाक्ष्यभिन्नेनान्तःकरणेनात्मनि ब्रह्माभिन्नकूटस्थे रमते क्रीडति, इदमपि पञ्चमीलक्षणं ज्ञेयमिति भावः॥ ७॥

ननु तर्हि अखिलकार्यविस्मरणे सति कर्माचरणं विना देहः कथं वर्तेत तत्राह।

भूताविष्ट इवाकस्माद्वर्णाश्रमविधिक्रमम्।
प्रेरितः पूर्वसंस्कारैः करोति न करोत्यपि॥ ८॥

भूताविष्ट इति। भूताविष्ट इव यथाभूताविष्टो भूतः पिशाच आविष्टः प्रविष्टो यस्मिन्स तथोक्तः स पुरुषोऽकस्माद्-

नुसन्धानरहितोऽपि तत्क्षणमेव पूर्वसंस्कारैः पूर्वं प्रथमं यानि कृतानि कर्माणि तेषां ये संस्कारा वासनाविशेषास्तैः कृत्वा प्रेरितो नोदितः सन्वर्णाश्रमविधिक्रमं वर्णाश्च ब्राह्मणादय आश्रमाश्च ब्रह्मचारिप्रभृतयस्तेषां विधिर्वेदकृतं प्रेरणं 'ब्रह्मचर्यमामरणान्तं द्वादशवार्षिकं वाचरेत्, सन्ध्यामुपासीते'त्यादिरूपस्तस्य क्रममाचरणं करोत्यपि कर्तारं विना कर्म निर्वाहायोगात्तत्कृतं कर्म प्रतीयमानमपि न करोति भूतावेशेन तदनुसन्धानाभावान्न तत्कर्तृकं तत्कर्मेति भावः, तथा तद्वत्पश्चम्यारूढो जातसाक्षात्कारः पूर्वसंस्कारः पूर्वमज्ञानावस्थायां कृतानि यानि स्वस्मिन्पारमार्थिककर्तृत्वनिश्चयेन कृतानि कर्माणि तेषां संस्कारा वासनास्तैः कृत्वा प्रेरितो नोदितः सन्नकस्मात्पूर्वापरानुसन्धानरहितस्तत्क्षणमेवेत्यर्थः, वर्णाश्रमविधिक्रमं स्ववर्णाश्रमोचितवेदप्रेरणानुकूलं कर्म करोत्यपि कर्तृत्वं विना कर्मनिर्वाहायोगात्तत्कर्तृकं कर्म प्रतीयमानमपि न करोति कर्तृत्वस्य बाधितत्वादसङ्ग आत्मनि च तदयोगात्कर्मणोऽप्यसत्त्वाच्च तस्मिंस्तत्कर्म च तत्कर्तृत्वं चोभयमपि न सम्भाव्यमिति भावः, एतदपि पञ्चमीलक्षणं ज्ञेयम् ॥ ८ ॥

पुनश्च लक्षणान्तरमाह सार्धेन ।

यथैव लौकिकज्ञाने प्रमाणं चक्षुरादयः ।
ब्रह्मज्ञानस्य विषये तथैवोपनिषन्मता ॥ ९ ॥

यथैवेति यथा यद्वल्लौकिकज्ञाने लोके भवा लौकिका घटादयो दृश्यपदार्थास्तेषां ज्ञानं प्रतीतिस्तस्मिंश्चक्षुरादयश्चक्षू रूपप्रकाशसाधनं नेत्रगोलकस्थमिन्द्रियं तदादि येषां त्वगादीनां ता वृत्तीः प्रमाणं प्रमाभूतमेवास्ति तथा तद्वद्ब्रह्मज्ञानस्य विषये ब्रह्मणो देशकालवस्तुकृतपरिच्छेदरहितस्यात्मनो

ज्ञानं मानं राहोः शिर इति वदभेदे भेदव्यपदेशो ब्रह्मस्वरूपमेव ज्ञानमिति भावः, तस्य विषये तत्सम्बन्ध्यर्थवर्णने तज्ज्ञाने चोपनिषदुप समीपे निषण्णं स्थितं वाच्यत्वेन लक्ष्यत्वेन च ब्रह्मस्वरूपभूतं सुखं यस्यां सोपनिषत्तत्त्वमसीत्यादिवाक्यरूपा तज्जन्यं ज्ञानं च प्रमेयत्वे ब्रह्मणः प्रकाशकं मानं मताऽङ्गीकृता मुनिभिरिति शेषः ॥ ९ ॥

यत्साक्षित्वात्प्रमाणानि तानि कस्तत्र संशयः
विधिकिङ्करतां त्यक्त्वा ह्यकिञ्चित्करतां गतः।
अकिञ्चनत्वमापन्नो न चिन्तयति किञ्च न ॥१०॥

यदिति। तानि लौकिकानि चक्षुरादीनि वैदिकं ब्रह्मणि विषय उपनिषदुपनिषद्वाक्यजातं तज्जन्यं ब्रह्मविषयकं ज्ञानं चैतानि स्वतो जडत्वासत्त्वाभ्यां तेषां प्रामाण्याभावाद्यत्साक्षित्वाद्यस्य पञ्चम्यारूढस्य ब्रह्माभिन्नत्वसाक्षात्कारवतो ब्रह्मरूपत्वात्तस्यैव साक्षित्वात्प्रकाश्यत्वेन प्रमाणानि प्रमेयप्रकाशकानि भवन्ति आत्मचैतन्यकृतमेव प्रामाण्यन्तेषु न स्वत इति भावः, तत्रान्यप्रमाणनिरपेक्षतया स्वतः प्रमाणभूत आत्मस्वरूपे पञ्चम्यारूढपुरुषे संशयः संदेहः कः किं रूपो न कोपीत्यर्थः, इदं निःसंशयत्वमपि पञ्चमीलक्षणं ज्ञेयम्, अन्यदप्याह विधिकिङ्करतामिति, अयं पञ्चम्यारूढो विधिकिङ्करतां विधेर्वेदाज्ञायाः किङ्करो दासस्तस्य भावस्तत्ता तां त्यक्त्वाऽनादृत्याऽकिञ्चित्करतां न किञ्चित्करोतीत्यकिञ्चित्करस्तस्य भावस्तत्ता तां गतः प्राप्तः, तत्र हेतुमाहाकिञ्चनत्वमिति, अकिचनत्वं 'नेह नानास्ति किञ्चने'ति श्रुत्या निषेधितं यत्किञ्चनपदवाच्यं द्वैतं यत्र तदकिञ्चनं तेन सर्वद्वैतनिषेधावधितया लक्षितं ब्रह्म ग्राह्यं तस्य भावस्तत्त्वं ब्रह्म

स्वमापन्नः प्राप्तः किञ्चन द्वैतं तन्निषेधं वा किमपि न चिन्तयति न स्मरति, इदमपि पञ्चमीलक्षणं ज्ञेयम् ॥ १० ॥

अन्यच्चापि तदाह ।

संलग्ने ऽप्यातपे भानोर्हिमाचलशिलेव यः ।
बहिरन्तश्च संपूर्णः शीतलत्वं न मुञ्चति ॥ ११ ॥

संलग्नेपीति । हिमाचलशिलेव यथा हिमन्तुषारस्तस्याचलः पर्वतो हिमवान् गिरिस्तस्य शिला बृहत्पाषाणो हिमपाषाण इत्यर्थः, सा भानोः सूर्यस्यातप उष्णे संलग्नेपि स्पृष्टे सत्यपि बहिर्बाह्यदेशेऽन्तश्च गर्भे संपूर्ण व्याप्तं शीतलत्वं शैत्यं न मुञ्चति न त्यजति तथा यः पञ्चम्यारूढः पुरुषः स सूर्य इव तापकोहङ्कारस्तस्य भातत्वाद्भानुरासमंतात्तापयतीत्यातपो दुःखं तस्मिन् संलग्नेपि स्वस्मिन् प्रतीते सत्यपि बहिर्दृश्यकोटावन्तश्च द्रष्टृकोटौ संपूर्ण परिपूर्णशीतलत्वं दुःखरहितसुखमात्रत्वं न मुञ्चति न त्यजति, एतच्चापि पञ्चमीलक्षणं ज्ञेयम् ॥ ११ ॥

अन्यदपि लक्षणमाह ।

स्फटिकः स्फटिकत्वज्ञः सलिलं सलिलत्ववित् ।
गगनं गगनत्वज्ञं यदि स्यात्सा दशा चितः ॥ १२ ॥

स्फटिकइति । स्फटिकः स्फटिकाश्मा स्फटिकत्वज्ञः स्वस्मिन्स्फटिकत्वं निर्मलत्वं रागाद्यस्पृष्टत्वं तज्जानातीति स तथोक्तो यदि यर्हि स्याद्भवेत्तथा सलिलं जलं सलिलत्ववित्स्वस्मिन्यत्सलिलत्वं नैल्यास्पृष्टत्वं तरङ्गादिविकारोद्भवेपि निर्विकाररूपत्वं च तद्वेत्तीति तत्तथोक्तं यदि यर्हि स्याद्भवेत्तथा गगनमाकाशं गगनत्वज्ञं स्वस्मिन्यद्गगनत्वं नीलिमाकटाहाद्याका-

रैरस्पृष्टत्वं तज्जानातीति तत्तथोक्तं यदि यर्हि स्याद्भवेत्तर्हि सा दशावस्था चितः पञ्चम्यारूढस्य पुरुषस्य चेतनाया ज्ञेया, अभूतोपमया निरूपमत्वं द्योतितं पञ्चम्यारूढपुरुषचेतनायाः। एतदपि पञ्चम्या रूपमुक्तम् ॥ १२ ॥

ननु तर्हि नानाविधसुखदुःखेषु सत्सु कथं मोहो न स्यात्पञ्चम्यारूढस्येत्याशङ्क्य तस्मिन्मोहाभावं दृष्टान्तेन सम्भावयति।

बुधो यथा न मुह्येत नानारङ्गगृहेष्वपि ।
तथा मुह्यति नात्मायं नानारङ्गगृहेष्वपि ॥ १३ ॥

बुध इति । बुधश्चतुरः पुरुषो नानारङ्गगृहेष्वपि नानाऽनेकविधा ये रङ्गा रञ्जकद्रव्याणि येषु तथाविधेषु गृहेषु गेहेषु दर्पणादिभिर्मार्गादिविस्मारकेषु वसन्नपि न मुह्यति मोहं न प्राप्नोति यथा तथा तद्वदयं पञ्चम्यारूढो यत आत्मैव परिपूर्णः पुरुषोऽतो नानारङ्गगृहेष्वपि नानाऽनेकविधा रङ्गा रञ्जका अतिग्रहापरपर्याया विषयास्तैर्युक्तेषु गृहेषु गृह्यन्ते विषया यैस्तेषु इन्द्रियेषु व्यवहारदृष्ट्या वर्तमानोपि न मुह्यति तत्सत्यत्वनिश्चयेन स्वात्मानं न विस्मरति, इदमपि पञ्चम्या लक्षणं ज्ञेयम् ॥ १३ ॥

ननु तर्हि बहिर्मुखजनसङ्गं त्यक्त्वा पञ्चम्यारूढ आत्मानुसन्धानानुकूलेषु तत्त्ववित्सु गुहादौ वा वसेदित्याशङ्क्यैकान्तवासो विद्वत्सु वासो मूढजनवासश्च सम एव तस्येति सदृष्टान्तमाह ।

योगी क्रीडति निद्राति हसत्यपि वदत्यपि ।
बहिर्मुखैरपि जनैः पिशाचैरिव शंकरः ॥ १४ ॥

योगीति । योगी जीवब्रह्मैक्यज्ञानवान् पञ्चम्यारूढः पुरुषो बहिर्मुखैरपि बहिर्मुखा मूढास्तैः सहापि शब्दादिद्वाद्भिरपि जनैः

पुरुषैः सह क्रीडति रमते कदाचिन्निद्राति तैरेव सह निद्रासुखमपि अनुभवति तथा हसत्यपि तैः सह हास्यादिकं करोति तथा वदत्यपि तैः साकं भाषणमपि करोति एतादृशव्यवहारे तेन कृतेऽपि तस्य योगित्वं न नश्यतीति भावः। तत्र दृष्टान्तः, पिशाचैरिवेति, शङ्करः सकलजगदानन्दकरः शिवो यथा पिशाचैभूतप्रेतादिभिः सह क्रीडादिकं कुर्वन्नपि जगदानन्दकरस्वभावान्न च्यवति तद्वदित्यर्थः ॥ १४ ॥

ननु पञ्चम्यारूढे किं सुखमस्ति येन ब्रह्मेन्द्रादिपदप्रापककर्मत्यागेन तत्रैवासक्तो भवेत्तत्राह।

न प्राप्तपरमार्थस्य तुलामर्हति वासवः।
वासवस्तत्पदाकांक्षी न स वासवताप्रियः॥ १५ ॥

नेति। वासव इन्द्र उपलक्षणमेतद्ब्रह्मादीनामपि प्राप्तपरमार्थस्य प्राप्तो लब्धः परमोतिश्रेष्ठोर्थस्तत्त्वं येन स तथोक्तो जातसाक्षात्कार इत्यर्थः, तस्य तुलां तुलनां नार्हति योग्यो न भवति कुत इयत आह वासव इति, वासव इन्द्रस्तत्पदाकाङ्क्षी तस्य पञ्चम्यारूढस्य पदं पञ्चमीभूमिकास्थितिरूपं तस्याऽऽकाङ्क्षीच्छावानस्तीति शेषः, स जातसाक्षात्कारः पञ्चम्यारूढः पुरुषो वासवताप्रियः वासवो इन्द्रस्तस्य भावस्तत्तेन्द्रपदमित्यर्थः, उपलक्षणमेतद्ब्रह्मादिपदानां सा प्रिया यस्य स तथोक्तो न न भवति ब्रह्मादिपदसुखस्यात्मानन्दकणत्वेनासत्त्वेन च ज्ञानीच्छाविषयत्वाभावः, ज्ञानिप्राप्तसुखे तु पारमार्थिकत्वेन ब्रह्मेन्द्रादिकामनाविषयत्वमिति भावः ॥ १५ ॥

ननु ज्ञानिनां प्रारब्धशेषे देहधारणस्य प्रतीयमानत्वात्कथं देहराहित्यं तस्मिंश्च सति कर्मफलेच्छाभावेन कर्मण्यप्रवृत्तौ तां विना देहनिर्वाहः कथं स्यादित्याशङ्क्य दृष्टान्तेन तत्सम्भावयति।

वन्हिपक्वं यथा मांसं पूर्ववत्स्थितमस्थिषु ।
संसक्तमप्यसंसक्तं स्वशरीरे तथा मुनिः ॥ १६ ॥

वन्हिपक्वमिति । वह्निपक्वं वह्निरग्निस्तस्मिन्पक्वं पाचितं सन्मांसं पिशितं यथा यद्वदस्थिषु अस्थिनि तत्सन्धौ च पूर्ववदपक्वावस्थायामिव स्थितं वर्तमानमपि न स्थितं नैव तिष्ठति कुत इत्यत आह संसक्तमिति, तन्मांसं संसक्तमपि अस्थिसंलग्नमपि दृश्यमानत्वादसंसक्तं न संसक्तं नैव संलग्नं वृद्ध्यादिपरिणामस्यादृश्यमानत्वात्तथा तद्वन्मुनिर्जातसाक्षात्कारवान्पञ्चम्यारूढः स्वशरीरे स्वस्यात्मनः शरीरं देहस्तस्मिनासक्तोपि देहाभिमानाभावे देहचलनाद्ययोगादासक्त इव प्रतीयमानोपि वासक्तो बाधितत्वेनाहङ्कारादेरासक्तो न भवति पूर्ववदविद्यावस्थायामिव लोकवद्व्याप्रियमाणत्वात्स्वशरीरे स्थितोपि विद्यमानोपि तद्दृष्ट्या बाधितत्वान्न स्थितो नैव विद्यमानः, इदमपि पञ्चमीलक्षणं ज्ञेयम् ॥ १६ ॥

उक्तपञ्चमीलक्षणानुभवायैव शृङ्गारश्लोकैस्तु तल्लक्षणं निरूपयितुं प्रतिजानीते तत्रेति ।

तत्र श्लोकाः ।

तत्र पञ्चमीलक्षणबोधने श्लोकाः सन्ति । तानेवोदाहरति ।

इयं पराङ्मुखीभूय पतिं प्रत्यगवेक्षते ।
प्रेमप्रसन्नया दृष्ट्या ह्यस्या यौवनमागतम् ॥ १७ ॥

इयमिति । इयं पुरोदृश्यमाना काचिन्नायिका पराङ्मुखीभूय पतिसन्मुखं पृष्ठं कृत्वा प्रेमप्रसन्नया प्रेम्णो स्नेहेन प्रसन्ना मुदिता तया दृष्ट्या नेत्रेण पतिं स्वभर्त्तारं प्रत्यक्पृष्ठतो यथा तथाऽवेक्षते पश्यति अतोऽनेनैव लक्षणेनास्याः पुरोवर्तिन्या नायिकाया यौवनं तारुण्यं पत्या सह भोगक्षमं वय

इत्यर्थः, आगतमारूढमिति लक्ष्यते यथा तथेदमपि प्रकृते योज्यं तद्यथा, इयं पञ्चम्यारूढबुद्धिरियं प्रकृता पतिं पाति रक्षतीति पतिरात्मा स्वसत्सुखदानेन बुद्धिपालक इत्यर्थः, तं पराङ्मुखीभूयाहङ्कारादिशरीरान्तेषु सन्मुखत्वेन व्यवहारावस्थायामात्मानं पृष्ठतः कृत्वापि प्रेमप्रसनया दृष्ट्या प्रेम्णा निरतिशयस्नेहेनात्मविषयकस्नेहेनेत्यर्थः, प्रसन्ना रागादिहीनत्वेन निर्मला तया दृष्ट्या दृश्यत आत्माऽनया सा दृष्टिः प्रत्यगात्मविषयान्तःकरणवृत्तिस्तया पाति स्वमिति पतिरात्मा तं प्रत्यगन्तर्मुखं यथा तथाऽवेक्षतेऽवलोकयति यदा तदेत्यध्याहार्यं यदा यस्मिन्काले तदा तस्मिन्समये हि प्रसिद्धमस्या विवेकिनां दृश्यमानाया अहं ब्रह्मास्मीत्याकारप्रमावृत्तेर्यौवनं स्वात्मसुखानुभवसामर्थ्यवत्स्वरूपमागतं प्राप्तमिति ज्ञेयं, यद्वा स्वात्मना सह मिश्रणामिश्रणेनात्मानुसन्धानपूर्वकव्यवहारक्षमत्वं प्राप्तमित्यर्थः, युमिश्रणामिश्रणार्थकधातुप्रकृतिकत्वादिति भावः ॥१७॥

अन्यच्च लक्षणान्तरमपि दृष्टान्तदार्ष्टान्तिकोक्त्याह ।

न खेलति वयस्याभिः शिथिला गृहकर्मणि ।
रहः पश्यति चिन्हानि प्राप्ता प्राणपतेः सुखम् ॥१८॥

नेति। यदेत्यध्याहार्यं यदा यस्मिन्काल इयं नायिका वयस्याभिः क्रीडासहायाभिः समानवयस्काभिः कन्याभिः सह न खेलति न क्रीडति तथा गृहकर्मणि गृहस्य मन्दिरस्य कर्म लेपनसंमार्जनादिकं तस्मिञ्छिथिला मन्दा भवति तथा रह एकान्ते चिन्हानि यौवनलक्षणानि स्तनादीनि भोगजन्यानि नखरादीनि वा पश्यति अवलोकयति तदा तस्मिन्काले प्राणपतेः पत्युः सकाशात्सुखं शर्म प्राप्ता लब्धवतीति ज्ञायते, एवं पञ्चम्यारूढमतावपि योज्यं तथाहि, इयं पञ्चम्यारूढा बुद्धिर्यदा य-

स्मिन्काले वयस्याभिरात्मक्रीडासहायाभिः क्षान्तिदान्त्या-दिभिः समानवृत्तिरूपसखीभिः सह प्रयोजनसिद्धौ ताभिः सह-क्रीडाया निष्फलत्वान्न खेलति न क्रीडति तथा गृहकर्मणि गृ-ह्यते स्वात्मतयाङ्गीक्रियत इति गृहं शरीरं तस्य कर्म स्वस्वर्णा-श्रमविहितक्रिया वैदिकं लौकिकं च भोजनादिकं तस्मिञ्छ्-थिलाहङ्कारस्य बाधितत्वान्मन्दं मन्दं प्रवर्त्तमाना भवति ग्रह-कर्मणीति पाठे ग्रहा इन्द्रियाणि तेषां कर्माणि श्रवणादीनि तेषु जातित्वादेकवचनं शिथिला 'नान्योतोस्ति द्रष्टे'त्यादि श्रुत्या ऽऽत्मनः पृथक्त्वस्य द्रष्टृत्वादिषु बाधितत्वादनादरवतीत्यर्थः । नायिका पक्षे तु ग्रहेति पाठे ग्रहाणामिन्द्रियाणां यत्कर्म वचना-दानादि कर्मेन्द्रियाणां अन्यवार्त्ताश्रवणादि ज्ञानेन्द्रियाणां तस्मि-ञ्छिथिला पतिसंभोगसुखानुसन्धाने सक्ततया मन्दादरेत्यर्थः, तथा रह एकान्ते स्थित्वेति शेषः, चिन्हानि स्वात्मनि स्थैर्यास्थैर्य-न्यूनत्वाधिकत्वादिलक्षणानि स्वात्मनो वा लक्षणानि सच्चिदान-न्दादीनि पश्यति साक्षादनुभवति तदा तस्मिन्काले प्राणपतेः प्राणस्य बुद्धेर्जीवनस्य पतिः पालक आत्मा तस्य सुखमानन्दं प्राप्ता लब्धेति ज्ञेया, एतदपि पञ्चम्या लक्षणं ज्ञेयम् ॥ १८ ॥

ननु शारीरः 'सन्न्यासादिवेषः सन्न्यासयोगादि'त्यादिश्रु-तिषु श्रूयते तत्कुतस्तत्कर्मण्यनादरो ज्ञानिबुद्धेरित्याशङ्क्याह ।

न वेषो विहितः कश्चिन्न वा वचनचातुरी ।

किन्तु प्रेमातिसातत्याद्बालया लालितो हरिः ॥१९॥

न वेष इति । बालया राधया कश्चित्कोपि वेषः शृङ्गारो न विहितो हरिप्रीत्यर्थं न धृतस्तथा वचनचातुरी वचनानां वा-क्यानां चातुरी कुशलता न विहिता न कृतेत्यर्थः, किन्तु किं तर्हि कृतमित्याशङ्कायामाह प्रेमेति, प्रेमातिसातत्यात्प्रेम्णः स्नेह-

स्यातिसातत्यं नैरन्तर्यं सन्ततप्रवाहवत्त्वं तस्मादेव केवलं तया राधया हरिर्भक्तदुःखहरणशीलः श्रीकृष्णो लालितः क्रीडितो वशीकृत इत्यर्थः, अतः शरीरवेषेण पाण्डित्येन वा न भगवान्वशीभवति किन्तु प्रेम्णैव केवलं वशः स्यादिति भावः, प्रकृतेपीदं योज्यं तद्यथा, बालया बालः केशस्तद्वदतिसूक्ष्मया 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि'ति श्रुतेः पञ्चम्यारूढबुद्ध्या वेषः संन्यासादिः कश्चित्कोपि न विहित आत्मसाक्षात्काराय न धृतस्तथा वचनचातुरी वचनानां वाक्यानां चातुरी पाण्डित्यं न वा नैव कृता किन्तु किं तर्हि कृतमित्यपेक्षायामाह प्रेमेति, प्रेमातिसातत्यात्प्रेम्णः निरतिशयस्नेहस्यातिसातत्यं निरन्तरप्रवाहस्तस्मादेव कारणात्केवलं तया बुद्ध्या हरिर्हरति सर्वं द्वैतमिति हरिरात्मा लालितो वशीकृतोऽतो नाश्रमवेषपाण्डित्यादिकमात्मज्ञाने हेतुरिति भावः ॥ १९ ॥

अत एवालङ्कारादीनां स्वरूपप्राप्त्यभावे वैयर्थ्यमेवेत्याह ।

नालङ्कृता नो कुलीना न विदग्धा न सुन्दरी ।
यस्यां तु रमते स्वामी सा सौभाग्यवती वधूः ॥ २० ॥

नेति । वधूः स्त्री 'वधूर्जाया स्नुषा स्त्री चे'त्यनेकार्थः, अलङ्कृता भूषणैर्भूषितापि पत्या सह रमणाभावान्न सौभाग्यवती सौभाग्यं पतिभोगपुत्रादिजन्यं सुखं विद्यते यस्यां सा तादृशी नैव भवति अलङ्कृतायामपि विधवायां व्यभिचारेण पुरुषभोगजन्यसुखे सत्यपि पुत्रजन्यसुखाभावान्न सौभाग्यवत्त्वं व्यभिचाररहितायाश्च तस्यामुभयाभावात्तदभावः प्रसिद्ध एव सधवायां चालङ्कृतायां सत्यामपि पत्युः प्रेमाभावेन तत्र तद्रमणाभावान्न सौभाग्यवत्त्वमुभयत्रोभयप्रेमाभावे च परस्पर-

भोगेनापि तदभावः प्रसिद्ध एव, अतः स्वामी तु पतिरेव यस्यां भार्यायां तत्प्रेम्णा वशीकृतः सन्रमते क्रीडति सा सौभाग्यवती सौभाग्यं पतिपुत्रादिजन्यं सुखं विद्यते यस्यां सा तादृश्यस्त्रीति ज्ञेया, तथा कुलीना सत्कुलभवा श्रेष्ठकुलोद्भवेत्यर्थः, न सौभाग्यवती न सौभाग्यसम्पन्ना भवति तथा सुन्दरी सुरूपा वधूः स्त्री न सौभाग्यवती नैव सौभाग्यसंपन्ना भवति तथा विदग्धा चतुरी स्त्री न सौभाग्यवती भवति यस्यां त्विति व्याख्यातं तत्सर्वत्रैव योज्यं, तस्मादलङ्कारकुलवैदग्ध्यसुन्दरत्वादयो गुणा न सौभाग्ये हेतवो भवन्ति किन्तु प्रियस्नेहेन स्वस्मिंस्तद्रमणमेव सौभाग्यकारणमिति भावः, एवं प्रकृतेपि योज्यं तद्यथा, वधयति बन्धयतीति वधूर्बुद्धिः सालङ्कृता शृङ्गारादिरसज्ञानवती संन्यासादिवेषपूर्वं शान्त्यादिवृत्तिभिर्वा भूषितापि न सौभाग्यवती सु शोभनं भगमैश्वर्यादिषट्कं तद्विद्यते यस्यां सा तथोक्ता षडैश्वर्यवती मुक्ता न नैव भवति लोके तद्वत्त्वेपि तद्वत्त्वाभावदर्शनात्तथा वधूर्बुद्धिः कुलीना कौ क्षेत्रे लीना नष्टा क्षेत्राकारत्वान्नष्टेत्यर्थः, यद्वा श्रेष्ठकुलजत्वाभिमानवती न सौभाग्यवती सौभाग्यसम्पन्ना मुक्तत्वेन षडैश्वर्यवती न भवतीत्यर्थः, तथा विदग्धा लौकिकपाण्डित्यादिगुणवत्यपि वधूर्बुद्धिर्न सौभाग्यवतीति पूर्ववत्तथा सुन्दरी निर्मलत्वेन सुन्दरत्वाभिमानेन वा युक्तापि वधूर्बुद्धिर्न सौभाग्यवती भवति तर्हि का सौभाग्यवतीत्यपेक्षायामाह यस्यां त्विति स्वामी बुद्धिपालकः सच्चिदानन्ददानेन बुद्धिसाक्षी कूटस्थस्तुपदेन बुद्धेर्विलक्षणत्वमात्मनः सूचितं, यस्यां बुद्धितो वैलक्षण्येन निरतिशयस्नेहवत्यां बुद्धौ रमते सहजसुखरूपेणाविर्भवति सा वधूरित्यावर्तनीयं वाक्यभेदात्सा वधयति हिंसति सर्वं द्वैतमिति वधूर्बुद्धिरद्वैतात्मा-

कारा मतिः सौभाग्यवती षड्गुणैश्वर्यवती मुक्ता नित्यतृप्तिमतीत्यर्थः, भवति तस्मादात्मसुखाविर्भावाभावेऽलङ्कारादिकं सर्वं व्यर्थमेवेति भावः॥ २०॥

स्वरूपसुखानुभवं विना स्वरूपज्ञानाभावे दृष्टान्तमाह।

यस्मिन्देशे सिता नास्ति तद्देश्यो वेत्ति किं सिताम्।
स एव वेद माधुर्यं येनैवास्वादिता सिता॥ २१॥

यस्मिन्निति। यस्मिन्देशे यत्र जनपदे सिता खण्डं नास्ति न विद्यते तद्देश्यस्तस्मिन्देशे भवः पुरुषः सितां खण्डं वेत्ति किं जानाति किं नैव जानातीत्यर्थः, तर्हि को जानाति तमाह स एवेति, येनैव पुरुषेण सिता खण्डमास्वादिता भक्षिता स एव खण्डास्वादक एव नान्यो माधुर्यं मधुरतां वेद जानाति यथा तथात्मसुखाननुभवी नात्मसुखं वेत्ति तदनुभव्येवात्मसाक्षात्कारवानिति भावः॥ २१॥

पुनश्च पञ्चम्यारूढलक्षणमाह।

तृष्णां विहाय तुच्छेभ्यो मुनिर्निःशल्यतां गतः।
स्वरसायनतृप्तात्मा दिनानुदिनमेधते॥ २२॥

तृष्णामिति। मुनिर्मननवान्पञ्चम्यारूढः पुरुषस्तुच्छेभ्यस्तुच्छान्विषयान्भोक्तुं या तृष्णेच्छा तां विहाय परित्यज्य निःशल्यतामन्तर्वासनाः शल्यमिव दुःखहेतुत्वाच्छल्यं तन्निर्गतं यस्मात्स निःशल्यस्तस्य भावस्तत्ता तां गतः प्राप्तः सन्स्वरसायनतृप्तात्मा स्वमात्मरूपं रसानां मानुषानन्दादिहिरण्यगर्भानन्दान्तानां सुखानामयनं स्थानं लयाधारं वा सनत्कुमारेण नारदायोक्तं छान्दोग्ये 'यो वै भूमा तत्सुखमि'ति श्रुत्या भूमाशब्दवाच्यमात्मसुखं तेन तृप्तः सुखित आत्माऽन्तःकरणं यस्य स तथाभूतः

सन् दिनानुदिनं पूर्वपूर्वदिनादुत्तरोत्तरदिन इत्यर्थः, इदं चोपल-क्षणं लक्षणादेरित्यर्थः, एधते वर्धते। इदमपि पञ्चम्यारूढल-क्षणं ज्ञेयम् ॥ २२ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिकाभेदभास्करार्थप्रकाशे ज्ञानपञ्चमभूमिकानि-र्णयार्थप्रकाशः षष्ठः ॥ ६ ॥

---

एवं पञ्चमभूमिकां सलक्षणां सविस्तरां निरूप्येदानीं नव-श्लोकां षष्ठीं भूमिकां निर्णेतुमाह।

अथ षष्ठी भूमिका।

अथेति। अथ पञ्चमभूमिकानिरूपणानन्तरं षष्ठी षष्ठी भू-मिका निरूप्यते इति शेषः, सहेतुकं तज्जन्माह।

भूमिकापञ्चकाभ्यासात्पदार्थाऽभाविनी भवेत्।
षष्ठी घनसुषुप्तिः स्यान्महादीक्षेति सा भवेत् ॥१॥

भूमिकेति। भूमिकापञ्चकाभ्यासाद्भूमिकानामुक्तलक्ष-णानां पञ्चकं तस्याभ्यासस्तत्र तत्र चेतसः स्थिरीकरणं तस्मा-द्धेतोः षष्ठी भूमिका पदार्थाभाविनी पदानि नामानि अर्था रूपाणि तेषामभावो विद्यते यस्यां सा तथोक्ता नामरूपपार-मार्थिकास्फुरणवतीत्यर्थः, भवेत्स्यात्तस्या नामान्तरैः सहोत्पत्तिं निरूपयति सार्धेन घनेति, सा सैवेत्यर्थः, घनसुषुप्तिर्घना पदा-र्थास्फुरणेन निबिडा सुषुप्तिर्निद्रानाम्नी स्याद्भवेत्तथा सा सैव षष्ठी भूमिका महादीक्षा महती दीक्षाऽज्ञत्वनिरासेन ज्ञानित्व-संस्काररूपा यस्यां सा तथोक्तैतन्नाम्नी सा स्याद्भवेत ॥ १ ॥

महानिद्रेति सा प्रोक्ता यस्यामानन्दघूर्णिता।

पदार्थविस्मृतिः सैव प्रोक्ता परिणतिश्च सा ॥२॥

महानिद्रेति । सा षष्ठी भूमिका महानिद्रेति, पञ्चम्याः शिथिलनिद्रात्वापेक्षया महती गाढात्यन्तविषयाऽस्फूर्त्या सुषुप्तिर्महानिद्रेति नाम्नी प्रोक्ता कथिता ग्रन्थान्तर इति शेषः, तथा यस्यां षष्ठभूमिकायामानन्दघूर्णिताऽऽनन्दस्य सुखस्य घूर्णिता व्याप्तिरस्ति आनन्दमात्रस्फूर्त्या सर्वदुःखास्फूर्तिस्तस्यां भवतीत्यर्थः, । तथा सैव षष्ठभूमिकैव पदार्थविस्मृतिः पदानि नामानि अर्था रूपाणि तेषां विस्मृतिरभानं यस्यां सा तथोक्तैतन्नाम्नी भवेत्सा च षष्ठी भूमिकैव परिणतिरात्मनि परिणामात्परितिनाम्नी प्रोक्ता कथिता मुनिभिरिति शेषः ॥ २ ॥

तल्लक्षणानि वक्तुमाह ।

तल्लक्षणानि ।

तदिति । तल्लक्षणानि तस्याः षष्ठभूमिकाया लक्षणानि चिह्नानि उच्यन्ते इति शेषः, तान्येवाह सप्तभिः ।

नरवाहनसंरूढाः सुप्ता एव यथा नृपाः ।
चलन्ति तद्वत्स्वानन्दे सुप्त एव चलत्यसौ ॥ ३ ॥

नरेति । सुप्ता एवं निद्रिता एव नरवाहबसंरूढा नरैरुह्यते प्राप्यते देशान्तर इति नरवाहनं शिविकादिकं तस्मिन्संरूढा आरूढा नृपा राजानो यथा चलन्ति गच्छन्ति अगच्छति राज्ञि यथा गमनं व्यवह्रियते तद्वत्तथाऽसौ षष्ठ्यारूढः पुरुषः स्वानन्दे भूमानन्दे स्थित्वा प्रपञ्चे सुप्तः सन्निद्रित एव नराद्यभिधे शरीरे स्थितः सन्नहङ्कारादिभिः कृत्वा चलतीत्युपलक्षणं व्याप्रोतीत्यर्थः, इदं च षष्ठ्यारूढलक्षणं ज्ञेयम् ॥ ३ ॥

अन्यदपि लक्षणमाह ।

ध्यानाध्वरविधौ यस्य पशवश्चक्षुरादयः ।
स्वयमेवोपतिष्ठन्ति रन्तिदेवमखे यथा ॥ ४ ॥

ध्यानेति । यथा यद्वद्रन्तिदेवमखे रन्तिदेवस्य राज्ञो मखे पशव अज्ञाः स्वयमेवोपस्थिताः, एतच्च पुराणेषु प्रसिद्धम् । रन्तिदेवनामा राजेक्ष्वाकुवंशोद्भवः कश्चिद्दयाशीलस्तं चर्षयो यज्ञैर्याजयितुं प्रवृत्तास्तेन च तन्नाङ्गीकृतं हिंसाभयात्तदा ब्राह्मणैस्तत्र हिंसा न स्याद्यथा तथा कुर्म इति प्रतिज्ञाय ततो ब्राह्मणैः स्वयमेव पशवः पशुवधार्थमभिमन्त्रिते शस्त्रे स्वस्वशिरो यथा च्छेत्स्यन्ति तथाभिमन्त्रितास्तैश्च ततः स्वयमेव स्वस्वशिरांसि च्छित्वा तत्तद्देवताभ्यः स्वस्वशरीराण्यर्पितानीति तथा यस्य षष्ठ्यारूढस्य पुरुषस्य ध्यानाध्वरविधौ ध्यानमात्मचिन्तनं तदेवाध्वरो यज्ञस्तस्य विधिर्विधानं क्रिया तस्मिंश्चक्षुरादयश्चक्षुर्नेत्रगोलकस्थं रूपज्ञानसाधनमिन्द्रियं तदादि येषां ते पशवो वहिर्मुखत्वात्पशव इव पशवः स्वयमेव प्रत्याहारादि प्रयत्नं विनैवोपतिष्ठन्ति स्वस्वदेवतासु दिगादिषु लीना भवन्तीत्यर्थः, 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' इति श्रुतेः, इदमपि षष्ठी लक्षणं ज्ञेयम् ॥ ४ ॥

अन्यदप्याह ।

पूर्णे बोधे समुत्पन्ने मनोबुद्धीन्द्रियादयः ।
अपूर्णाः पूर्णतां यान्ति का वाच्या तस्य पूर्णता ॥ ५ ॥

पूर्ण इति । मनोबुद्धीन्द्रियादयो मनश्च संशयात्मिकान्तःकरणवृत्तिरूपं बुद्धिश्च निश्चयात्मिकान्तःकरणवृत्तिरूपा—इन्द्रियाणि श्रोत्रादीनि शब्दादिज्ञानकरणानि कर्णादिगोलकस्थानि तानि आदीनि येषां देहादीनां ते सर्वे प्याविद्यकत्वात्स्वतो-

ऽपूर्णा अपि पूर्णतां विषयाऽविद्यानाशे सति तेषामप्यात्मत्वा-त्पूर्णतामानन्दरूपत्वेनान्यसुखनिरपेक्षतां यान्ति प्राप्नुवन्ति कस्मिन्सतीत्यतआह पूर्ण इति, पूर्णे आनन्दघनत्वेन परिपूर्णे बोधे ज्ञाने समुत्पन्ने सम्यक्संशयविपर्ययरहितत्वेनोत्पन्न उदिते सति तर्हि तदा तस्य सर्वदा परिपूर्णस्यात्मत्वात्षष्ठ्यारूढस्य पुरुषस्य पूर्णे बोधे समुत्पन्ने सति पूर्णताऽऽनन्दघनान्यसुखनि-रपेक्षता का वाच्या किंकथनीया, इदं च षष्ठ्यारूढलक्षणं ज्ञेयम् ॥५॥

पुनरन्यल्लक्षणमाह ।

तत्सर्वममृतं तस्य यत्खादति पिबत्यपि ।
यत्र तिष्ठति सा काशी स जपो यत्प्रजल्पति ॥ ६ ॥

तदिति । स षष्ठ्यारूढः पुरुषः यदन्नादिकं खादति भक्षति यदपि जलादिकं पिबति प्राश्नाति तद्भक्ष्यं पेयं च सर्व-मपि सकलमपि तस्य षष्ठ्यारूढस्य ज्ञानिन इत्यर्थः, 'यदश्नाति तदस्य हविरि'ति श्रुत्या ज्ञानिनो ज्ञानयज्ञे भक्ष्यस्यैव हविष्ट्वप्र-तिपादनात्तस्य च यज्ञशिष्टत्वेन यज्ञशिष्टामृतभुज इति भगवता गीतायाममृतत्वप्रतिपादनाच्चामृतं भवति अमृतस्य च भोज-नेनामृतत्वप्राप्तिप्रसिद्धेर्ज्ञानिनश्च बाधितत्वेन खानपानयोरात्मदृ-ष्ट्यावलोकितयोर्भोक्तुरप्यात्मत्वान्मरणशून्यत्वेनामृतत्वं भक्ष्यस्य तद्भोजनेनामरत्वमप्यात्मनः प्रसिद्धमेवेति भावः, ननु च तस्य सर्वेषामिव मुक्त्यर्थं काश्यां गमनं विहितमेवातस्तत्कर्तव्यमेवेत्या-शङ्क्याह यत्रेति, स षष्ठ्यारूढो यत्र यस्मिन्स्थाने तिष्ठति व-सति सा तदेव स्थानं काशी वाराणसी जायत इति शेषः, तस्य षष्ठ्यारूढस्य ज्ञानित्वेन 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतेः, 'क्षेत्रज्ञं चापि मां विद्धी'ति स्मृतेश्च, क्षेत्रज्ञस्य तत्साक्षिणश्चैकत्वप्रतिपा-दनाच्च साक्षिब्रह्मणोरेकत्वस्य सिद्धान्तितत्वादीश्वरत्वं तद्वास-

त्वेन तत्सङ्गेन चान्येषामपि ज्ञानप्राप्त्या मुक्तिहेतुत्वाज्ज्ञानिवासस्थानस्य काशीत्वमिति भावः, तथा स षष्ठ्यारूढो यल्लौकिकं वैदिकं वा प्रजल्पति सहजं भाषते स तत्सर्वमपि वचनजातं जपो भवति जपस्यान्तःकरणशुद्ध्या ज्ञानप्रदत्वप्रसिद्धेर्ज्ञानिभाषणस्यापि सर्वेषां स्वस्य चान्तःकरणशोधनेन विवेकजनकत्वेन साफल्याज्जपत्वमिति भावः ॥ ६ ॥

ननु ज्ञानिना तीर्थयात्रादिकं त्ववश्यं कर्त्तव्यमित्याशङ्क्याह।

संचारस्तीर्थसंचारः समाधिः शयनं मुनेः।
यं पश्यति स विश्वेशः शृणोत्युपनिषच्च सा ॥ ७ ॥

सञ्चार इति। तस्य षष्ठ्यारूढस्य ज्ञानिनः सञ्चारः स्वाभाविकं गमनं तीर्थसञ्चारस्तीर्थानां पुष्करादीनां शुद्धिकारणानां सञ्चारो गमनं भवति ज्ञानिनो ब्रह्मरूपत्वेनेश्वरत्वात्सर्वतीर्थानां चेश्वरचरणस्थितिकत्वप्रसिद्धेर्ज्ञानीश्वरचरणस्थिततीर्थानां गमनं ज्ञानिगमनेनैव भवतीति भावः, यद्वा ज्ञानिनाऽत्मसुखपरिपूर्णत्वेन निरपेक्षत्वाद्।

'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्।
अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभि'रिति ॥

श्रीभागवते ज्ञानिगमनानुगमनं स्वस्य भगवतैवोक्तमतो ज्ञानिगमने भगवच्चरणस्थितसर्वतीर्थसञ्चारः सम्भाव्य इति भावः, ननु तर्हि मा करोतु ज्ञानी तीर्थगमनं समाधिस्तु चित्तविक्षेपपरिहाराय कर्त्तव्य एव तस्येत्याशङ्क्याह समाधिरिति, मुनेर्मननवतः षष्ठ्यारूढस्य शयनं निद्रापि मननेनैव जाग्रदवस्थायां सर्वद्वैतजातस्य बाधितत्वाज्जाग्रतीवात्मसुखस्फूर्तेः सत्त्वाद्द्वैतास्फुरणस्यैव लोके समाधित्वप्रसिद्धेर्निद्रा समाधिर्भवति किं पुनर्ज्जाग्रत्स्वप्नसमाधीनां तस्य समाधित्वं भवतीति वक्तव्यमिति भावः, ननु ज्ञानिवासस्य वि-

श्वेश्वरत्वाभावे तत्र कथं काशीत्वं तत्राह यमिति, ज्ञानी यं पटघटपृथिव्यादिकं यं यं पदार्थं पश्यति अवलोकयति स पदार्थो नामरूपयोर्बाधितत्वात्तद्दृष्टेरपि बाधितत्वाच्च स्वात्मनो विश्वेश्वररूपत्वेन सर्वत्र सर्वदैवावलोकनाद्विश्वेशो विश्वस्येश्वर आत्मा जगदीश्वरो भवति एवं च ज्ञानिनः सर्वत्र सर्वदैव विश्वेश्वरदर्शनात्तद्वासस्थानस्य काशीत्वं निःसन्देहं सम्भाव्यमिति भावः, ननु ज्ञानिनस्तूपनिषच्छ्रवणं विहितमतस्तत्कर्तव्यमेवेत्याशङ्क्याह शृणोतीति, ज्ञानी यां वाणीं लौकिकीं वैदिकीं तिरश्चां वा शृणोति अवधारयति सा चोपनिषदुप समीपे तस्मिंस्तस्मिन्वाक्ये ध्वनौ वा तच्छ्रवणे तच्छ्रोतर्यपि निषण्णं त्रिपुटीनामरूपबाधपर्यवशेषेण स्थितं ब्रह्म यत्र सा तथोक्ता भवति ज्ञानिनः सर्वत्र मनुष्यादिपतङ्गन्तजाते तत्साक्षित्वेन ब्रह्मात्मन एव प्रतीतेर्ज्ञानिश्रोत्रगतशब्दमात्रस्योपनिषत्त्वमिति भावः ॥७॥

ननु तर्हि ज्ञानिनः सर्वत्रानादरेऽपि प्रेमलक्षणभक्तिस्तु कर्तव्यैव तेनेत्याशङ्क्याह ।

पीयते प्रेम पीयूषं श्लिष्यते परमा कला ।
भुज्यते परमानंदो योगिना न स भोगिना ॥ ८ ॥

पीयते इति । योगिना जीवब्रह्मैक्यज्ञानवता षष्ठ्यारूढपुरुषेण प्रेम पीयूषं प्रेमात्मविषयको निरतिशयस्नेहस्तदेव सुखरूपत्वेन नित्यतृप्तिहेतुत्वात्पीयूषमिव पीयूषममृतं पीयते प्राश्यते 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिदृष्ट्या नामरूपात्मकप्रपञ्चस्य सर्वशब्दवाच्यस्य बाधितत्वाल्लोकदृष्ट्या सर्वत्र यत्प्रेम पीयते तत्तद्दृष्ट्या ब्रह्मात्मविषयमेवेति सर्वदैव योगिनः प्रेमामृतसेवनं सिद्धमिति सम्भाव्यमिति भावः, ननु ब्रह्माकारा वृत्तिस्तु कर्तव्यैवेत्याशङ्क्याह श्लिष्यत इति, योगिना परमा कला परं कार्यकारणातीतं ब्रह्म

भाति साक्षादभिन्नतया विषयीकरोति सा परमा ब्रह्मविषया कला शुद्धसत्त्वान्तःकरणवृत्तिरहंब्रह्मास्मीत्येवं रूपा श्लिष्यत आलिङ्ग्यते यावद्वृत्तीनां सर्वविषयबाधेन ब्रह्मण एव शेषितत्वात्सर्ववृत्तीनां ब्रह्मविषतया ब्रह्माकारत्वाद्योगिनः षष्ठ्यारूढस्य ब्रह्माकारवृत्तिप्रवाहः सर्वदैव सिद्ध इति न तत्कर्तव्यता तस्येति भावः, ननु तर्हि ब्रह्मसुखानुभवस्तु कर्तव्य एवेत्याहशङ्क्याह भुज्यते इति, योगिना परमानन्दः परमो निरतिशय आनन्दः सुखं भुज्यतेऽनुभूयते सर्वसुखानां ब्रह्मप्रतिबिम्बत्वेन ब्रह्माभिन्नत्वान्नामरूपात्मकसर्वपदवाच्यस्य प्रपञ्चस्य बाधितत्वाच्च ज्ञानिना यत्सुखमनुभूयते तद्ब्रह्मसुखमेवेति षष्ठ्यारूढस्य सदैव परमानन्दानुभवान्नतत्प्रयासः पृथगपेक्षित इति भावः, भोगिषु तु तस्यागेन तत्कर्त्तव्यताद्दृढत्वाय तदभावमाह नेति, स परमानन्दो भोगिना भोग्यसत्त्वनिश्चयपूर्वकस्वभोक्तृसत्त्वप्रतीतिमता पुरुषेण न भुज्यते नैवानुभूयते तस्य तु प्रपञ्चसुखदुःखानुभव एव न ब्रह्मसुखानुभव इति भावः ॥ ८ ॥

ननु षष्ठ्यारूढस्य परमानन्दनित्यानुभवसत्त्वे किं लक्षणं तत्राह ।

संप्राप्ते परमानन्दे न शोचति गतं वयः ।
भूतं भवद्भविष्यच्च सर्वमानन्दतां गतम् ॥ ९ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे
ज्ञानषष्ठभूमिकानिर्णयः ॥ ७ ॥

सम्प्राप्त इति । षष्ठ्यारूढः पुरुषः परमानन्दे निरतिशयभूमाख्यसुखे सम्प्राप्ते लब्धे सति गतमतीतं वय आयुः सफलत्वात्तस्य न शोचति न धिक्करोति—इदमेकं चिन्हं, द्वितीयं त्वाह भूतमिति, भूतमतीतं जन्मादि भवद्वर्तमानं भविष्यच्च भाव्यमपि

सर्वं सुखदुःखादिकारणं फलभूतसुखदुःखाभ्यां सहानन्दतां सुखरूपतां गतं प्राप्तं न तु तस्य सुखदुःखादि किं चिदपि सत्त्वेन प्रतीयत इति भावः ॥ ९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिकाभेदभास्करार्थप्रकाशे षष्ठीनिर्णयार्थप्रकाशः सप्तमः ॥ ७ ॥

---

एवं षष्ठीं सलक्षणां निरूप्येदानीं नवश्लोकां सप्तमीं निरूपयितुमाह अथेति।

## अथ सप्तमी।

अथ षष्ठीनिरूपणानन्तरं सप्तमी सप्तमी भूमिका निरूप्यते इति शेषः, तत्र तावत्षष्ठ्यारूढस्य षष्ठ्युल्लङ्घन पूर्वं सप्तमीप्राप्तिमाह।

ततः षष्ठीमतिक्रम्य तुरीयां याति सप्तमीम्।
महाकक्षेति सैवोक्ता सैव गूढसुषुप्तिका ॥ १ ॥

तत इति। ततः षष्ठ्यारोहणानन्तरं षष्ठीं पदार्थाभाविनीनाम्नीं भूमिकामतिक्रम्योल्लङ्घ्य योगी तुरीयां व्यावहारिकजाग्रदाद्यवस्थात्रयापेक्षया तुरीयां चतुर्थीं सर्वज्ञानभूमीनां तुर्यत्वापेक्षया तु तुरीयातुरीयां पूर्वज्ञानभूमिषट्कापेक्षया सप्तमीं याति प्राप्नोति। तस्या एव नामान्तराणि स्मारयति महाकक्षेति, सैव सप्तम्येव महाकक्षा महती निरावरणाऽऽत्मप्राप्तौ कक्षा द्वारभूताऽतो महाकक्षेत्येवं नाम्नी ग्रन्थान्तर उक्ता कथिता सैव सप्तम्येव गूढसुषुप्तिका गूढाऽऽच्छन्ना सुषुप्तिकाऽल्पसुषुप्तिर्यस्यां सा तथोक्ताऽतो गूढसुषुप्तिरितिनाम्नी ग्रन्थान्तर उक्ता कथिता ॥ १ ॥

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -)' ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 96.*




# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

## BODHSÂR,

A TREATISE ON VEDANTA,

BY

SRI NARHARI,

With a commentary by the author' s pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus IV.*


BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilâs Press,

BENARES.

1905.

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | [illegible] |
| गोलप्रकाशः | २ | ८ | [illegible] |
| गंगालहरी | ० | १ | [illegible] |
| गुरुसारणी | ० | ४ | [illegible] |
| जातकतत्त्वम् | ० | १२ | [illegible] |
| तत्त्वदीप | ० | १ | [illegible] |
| तर्कसंग्रहः | ० | १ | [illegible] |
| दत्तकमीमांसा | ० | ८ | [illegible] |
| धर्म्मशास्त्रसंग्रहः | ० | १ | [illegible] |
| धातुपाठः ( शिला -ꠑ ) | ० | २ | [illegible] |
| धातुरूपावली | ० | २ | ६ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता, | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

योगनिद्रेति सा प्रोक्ता परा काष्ठेति सा स्मृता।
अनुत्तरं च सहजं स्वरूपस्थितिरित्यपि ॥ २ ॥

योगनिद्रेति। सैव सप्तम्येव योगनिद्रेत्येवं नाम्ना पुराणेषूक्ता कथिता तथा सा सप्तम्यवस्था परा श्रेष्ठा काष्ठा स्थितिरित्येवं नाम्ना स्मृता चिन्तिता मुनिभिरितिशेषः, सहजं स्वाभाविकमनुत्तरं नोत्तरं प्रतिवाक्यं यस्मिंस्तत्तथोक्तं सहजानुत्तरनाम्न्यपि सैवोच्यत इत्यर्थः, तथा स्वरूपस्थितिः स्वेनैव रूप्यते प्रकाश्यत इति स्वरूपा सा चासौ स्थितिरवस्थेत्येवं नाम्नापि सोक्ता कथिता ॥ २ ॥

अत एवास्या निरूपणाविषयत्वरूपं लक्षणमाह।

मौनमेवावलम्बन्ते यस्यां हरिहरादयः।
सा तु वर्णयितुं शक्या न केनापि कदाचन ॥ ३ ॥

मौनमिति। यस्यां सप्तमभूमिकायामारूढाः सन्तो हरिहरादयो हरिर्विष्णुर्हरः शिव आदी प्रमुखौ येषां ब्रह्मेन्द्रप्रभृतीनां ते सर्वेपि मौनमेव मननफलभूतं स्वप्रकाशात्मस्वरूपं चिन्मात्रमेव केवलमवलम्बन्त आश्रयन्ते न तु वागादिव्यापारं किञ्चिदपि कुर्वन्तीति भावः, कुत इत्यत आह सात्विति, सा तु सा सप्तमी भूमिका तुपदेनास्याः पूर्वभूमिकाभ्यो वैलक्षण्यं श्रेष्ठत्वं च सूचितं, तदेवाह केनापि, सर्ववेदयोनिना ब्रह्मणापीदं चोपलक्षणं हरिहरादीनां, कदाचन कस्मिन्नपि काले वर्णयितुं वर्णनविषयीकर्तुं न शक्या न संभाव्या, इदं च लक्षणं सप्तम्या ज्ञेयम् ॥ ३ ॥

सप्तम्यारूढस्य बोधेपि निरपेक्षरूपत्वे लक्षणान्तरमाह।

चिदङ्गे कोमले लग्नो दैवादज्ञानकण्टकः।

तं बोधकण्टकेनायं विनिवार्य सुखं स्थितः ॥ ४ ॥

चिदङ्ग इति । कोमल ईषदप्यज्ञानकण्टकासहे चिदङ्गे चिन्मात्ररूपेऽङ्गे स्वरूपे दैवात्काकतालीयतोऽज्ञानकण्टकोऽज्ञानमेव दुःखप्रदत्वात्कण्टक इव कण्टको लग्नः स्पृष्टोऽयं सप्तम्यारूढः पुरुषो बोधकण्टकेन बोधस्तत्त्वमस्यादिवाक्यजन्यं संशयविपर्ययरहितमहं ब्रह्मास्मीत्याकारकमपरोक्षं ज्ञानं जीवब्रह्मैक्यविषयं स एवाज्ञानलक्षणकण्टकनिष्कासनोपयोगात्कण्टकसादृश्यात्कण्टकस्तेन तमज्ञानकण्टकं विनिवार्य निष्कास्य सुखं यथा भवति तथा स्थितस्तिष्ठतीत्यर्थः, सप्तम्यारूढस्याज्ञानमिव ज्ञानमप्यनादरणीयमेतदपि लक्षणान्तरं सप्तम्यारूढस्येति भावः ॥ ४ ॥

इदानीं सप्तम्यारूढस्य स्थितिं वर्णयति त्रिभिर्वृत्तैः ।

अमृतजलधौ यस्मिन्वार्त्ता न मीनतरंगयो-
र्न च परिचयः पारावारस्थितेरपि कुत्रचित् ।
समरसपरब्रह्मानन्दप्रणुन्नविकल्पनः
सहजगलितद्वैतज्वालः स भाति महामुनिः ॥ ५ ॥

अमृतेति । यथा कस्मिंश्चिद्यस्मिन्विलक्षणे प्रलयवृद्धेऽमृतजलधावमृतमिव मिष्टं जलमुदकं धीयते ध्रियते यस्मान्नाति अमृतजलधिस्तस्मिन्मीनतरङ्गयोर्मीनो मत्स्यस्तरङ्ग ऊर्मिस्तयोर्वार्ता वृत्तान्तः समुद्रस्यागाधत्वेन नास्ति च पुनः कुत्रचित्कस्मिन्नपि भागे तस्मिन्समुद्रे पारावारस्थितेरपि पारा परतरा अवारा अर्वाचीना स्वदृग्गोचरा स्थितिः स्थानं तस्याः परिचयोऽपि अनुभवोऽपि न च नैव विद्यते केवलं तत्र समरसपरब्रह्मानन्दप्रणुन्नविकल्पनः सम एकरूपो रसः सुखं यत्र स चासौ परं का-

र्यकारणातीतं ब्रह्म देशादिभिरपरिच्छिन्नं भूमापरपर्यायं तद्रूप आनन्दश्च सुखं तेन कृत्वा प्रणुन्नं निवारितं बाधितमित्यर्थः, विकल्प्यते विपरीतत्वेन भाव्यतेऽनेनेति विकल्पनमज्ञानं कारणकार्योभयरूपं येन स तथाविधो विकल्पनमित्यत्र करणेल्युट् अत एव सहजगलितद्वैतज्वालः सहजं स्वभावेनैव गलिता नष्टा द्वैतं नानात्वमेव ज्वालेव तापहेतुत्वाज्ज्वाला यत्र स तथोक्तः स पुराणादौ प्रसिद्धो महामुनिर्ब्रह्मा भाति प्रकाशते स्वयमेवेत्यर्थः, प्रस्तुतार्थे तु यथाऽमृतं सुखमेव समुद्रे जलमिव पूर्णं धीयते ध्रियते यत्र सो ऽमृतजलधिरिति मुनिविशेषणं, यद्वा—अमृतं सुखं जडमचलं स्थिरमित्यर्थः, डलयोरभेदाद्धीयते ध्रियतेऽस्मिन्निति स तथोक्तः स्थिरसुखाधारत्वेनोपलक्षित इत्यर्थः, यस्मिंश्च महामुनौ मीनतरङ्गयोर्मीनो मीयत आत्रियत इति मीनो जीवः शिष्यभावापन्नस्तरन्तारकं वाक्यजातं गायति उपदिशतीति तरङ्गो महावाक्योपदेष्टा वेदोच्चारकश्चेश्वरो गुरुभावापन्न ईश्वरश्चेत्यर्थः, तयोर्वार्ता कथनं न न विद्यते च पुनर्यस्मिन्कुत्रचित्कस्मिन्नपि काले देशे वा पारवारस्थितेः पारा कारणरूपा निर्गुणा वाऽवारा कार्यरूपा सगुणा वा या स्थितिरवस्था तस्याः परिचयो भानमपि न च न विद्यते तत्र हेतुः समरसपरब्रह्मानन्दप्रणुन्नविकल्पनः सम एकरूपो रसः सुखं यस्मिन्स चासौ परब्रह्मानन्दः कार्यकारणहीनं भूमशब्दवाच्यं सुखं तेन कृत्वा प्रणुन्नं विकल्पनं विकल्पकारणमज्ञानं येन स तथोक्तोऽत एव सहजगलितद्वैतज्वालः सहजं स्वाभाविकं यथा तथा गलिता नष्टा द्वैतं भेद एव तापकत्वाज्ज्वालेव ज्वाला यस्मिन्स सप्तम्यारूढो महामुनिर्मुनिश्रेष्ठो भाति प्रकाशते, इदं च सप्तमीलक्षणं ज्ञेयम् ॥ ५ ॥

किञ्च।

बंधध्वंसमभीप्सुना सुमनसा जिज्ञासया तीव्रया।
ज्ञाते ब्रह्मणि बाधिताक्षविषये बोधे चमत्कुर्वति।
स्वान्तर्मन्तृविमानमान्यविवृतिव्यावृत्तिनिर्भङ्गको
भाति ज्ञानसुखात्मकः स्वयमयं योग्यापगानां पतिः॥६॥

बन्धेति। बन्धध्वंसं बन्धयतिं अवरोधयति नित्यमुक्तमप्यात्मानमिति बन्धोऽज्ञानं तस्य ध्वंसो नाशस्तमभीप्सत इत्यभीप्सुरिच्छवांस्तेन सुमनसा साधनसंपन्नं यन्मनस्तेन कर्त्रा तीव्रया दृढया जिज्ञासया ज्ञानेच्छया करणभूतया ब्रह्मणि अपरिच्छिन्नात्मवस्तुनि ज्ञाते साक्षादनुभूते सति ततो बाधिताक्षविषये बाधिता निरस्ता अक्षविषया इन्द्रियगोचरा यस्मिन्स तथोक्तस्तस्मिन्बोधे ज्ञाने चमत्कुर्वति सर्वदा प्रकाशमाने सति स्वान्तः स्वेऽन्तःकरणे मन्तृविमानमान्यविवृतिव्यावृत्तिनिर्भङ्गको मन्ताऽधिष्ठानसहितबुद्धिस्थचिदाभासः प्रमाता विपरीतं मन्यतेऽनेनेति विमाना मतिः करणे घञ् मान्यं मन्तव्यमेतत्त्रिपुटीरूपा या विवृतिर्भ्रान्तिस्तस्या व्यावृत्तिर्निवृत्तिस्तया कृत्वा निर्भङ्गको निस्तरङ्गो विक्षेपरहित इत्यर्थः, अत एव ज्ञानसुखात्मको ज्ञानं बोधस्तदभिन्नं सुखमानन्दः स एवात्मा स्वरूपं यस्य स तथोक्तः स्वयं स्वतः सिद्धोऽयं सप्तम्यारूढो योग्यापगानां योगिनोऽत्र पूर्वभूमिकापङ्कस्थिता ग्राह्यास्ते एवापगा नद्य इव नद्यस्तेषामुत्तरोत्तरभूमिकासु वृत्तेर्नदीव सन्ततगमनवत्त्वान्नदीत्वं तासां पतिः पालकः आत्मत्वात्सर्वेषां पालकत्वं सप्तम्यारूढस्य स उक्तलक्षणो भाति स्वयं प्रकाशरूपेण विराजते॥६॥

किञ्च।

वाचा मौनमयी गतिः स्थितिमयी निद्रामयो जागरो
निद्रा बोधमयी निशा दिनमयी नक्तंमयो वासरः।
कर्म ब्रह्ममयं जगत्सुखमयं किञ्चिन्न किञ्चिन्मयं
दुर्लङ्घ्यं गुणवर्त्म लङ्घितवतो वार्त्ता कथं वर्ण्यताम्॥७॥

वाचेति। दुर्लङ्घ्यं दुःखेनातियत्नेन लङ्घितुं योग्यं दुर्लङ्घ्यं गुणवर्त्म गुणानां सत्त्वरजस्तमसां वर्त्म मार्गं लङ्घितवतोऽतिक्रान्तवतः सप्तम्यारूढस्य वार्त्ता वृत्तान्तः कथं केन प्रकारेण वर्ण्यतां वर्णनीया न केनापि प्रकारेण वर्णनीया, उक्तमवर्णनीयत्वमेव विशदयति वाचेत्यादिविशेषणैः तस्य वाचा वाणी मौनमयी मौनरूपा भवति 'नेह नानास्ति किञ्चने'ति श्रुत्या सर्वशब्दवाच्यप्रपञ्चस्य बाधितत्वाद्वक्तृवचनवाच्यरूपप्रपञ्चमिथ्यात्वेन 'यद्वैतन्न वदति वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यद्वदेदि'ति श्रुत्या वचनस्य वक्तुः स्वरूपत्वप्रतिपादनात्ततः पृथगसत्त्वप्रतिपादनाच्च वाच्यस्यापि पृथगसत्त्वाच्च वागभावेन लोके प्रतीयमानाया वाचोपि पारमार्थिकत्वाभावाच्च तस्या मौनत्वं सिद्धमिति भावः, तथा गतिर्गमनं लोके प्रतीयमानापि स्थितिमयी स्थैर्यरूपा भवति 'अपाणिपादो जवनो ग्रहीते' त्यादिश्रुत्या पादराहित्येपि गमनवत्त्वप्रतिपादनात्पादराहित्येन गमनं यत्प्रतीयते तत्पारमार्थिकं न भवतीत्यतो गमनेपि स्थैर्यं संभाव्यमिति भावः, तथा तस्य जागरो जागरणमपि निद्रामयो निद्रारूपो भवति लोके निद्रावस्थायां सर्वत्रिपुटीलयप्रसिद्धेः सप्तम्यारूढस्य त्रिपुटीमिथ्यात्वप्रतीत्या जा-

१ वक्तव्यम्।

गरस्यापि निद्रात्वमिति भावः, तथा तस्य निद्रा सुषुप्तिरपि बोधमयी जागररूपा भवति सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्मरणान्यथानुपपत्त्याऽज्ञानबोधस्य तत्र सत्त्वात्तद्विषयाज्ञानस्य च सत्त्वात्तत्र ज्ञातृज्ञानज्ञेयरूपात्रिपुट्या विद्यमानत्वेन जाग्रल्लक्षणसत्त्वान्निद्राया जागरत्वमिति भावः, तथा तस्य निशा रात्रिर्दिनमयी दिवसरूपा भवति लोकदृष्ट्यान्धकारसत्त्वेपि निशायां सप्तम्यारूढस्य प्रकाशं विनाऽप्रकाशप्रतीत्यनुपपत्त्या तत्प्रकाशकप्रकाशवत्त्वेन रात्रेर्दिनत्वमिति भावः, तथा तस्य वासरो दिवसो नक्तंमयो रात्रिमयो भवति व्यवहारस्य मिथ्यात्वेन तत्प्रतीतेरपि पारमार्थिकत्वाभावे तत्प्रकाशस्यापि तथात्वादन्धकारस्वरूपरात्रित्वं दिनस्य सम्भाव्यमिति भावः, तथा तस्य कर्म क्रियापि ब्रह्ममयं निष्क्रियब्रह्मरूपं भवति कर्तृकरणकार्यरूपत्रिपुट्याः सप्तम्यारूढदृष्ट्या परमार्थिकत्वाभावान्निष्क्रियब्रह्मरूपत्वं कर्मणः सिद्धमिति भावः, यद्वा 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतं ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिने'ति भगवदुक्त्या कर्तृहविरग्नितदर्पणफलेषु नामरूपबाधेन पर्यवशेषितब्रह्मरूपधारणया त्रिपुट्यभावेन ब्रह्मरूपत्वप्रतिपादनात्कर्मण एव समाधित्वप्रतिपादनानुसन्धानेन सप्तम्यारूढस्य कर्मणोपि निष्क्रियब्रह्मरूपत्वमिति भावः, तथा तस्य जगल्लोकप्रसिद्धं दुःखमयं जगद्विश्वं सुखमयं सुखस्वरूपं ब्रह्मैव भवति सप्तम्यारूढदृष्ट्या जगतो मिथ्यात्वानुसन्धानेन तत्र प्रतीयमानस्यापि दुःखस्यात्यन्तासत्वाच्च जगद्गतसुखस्य च केवलब्रह्मसुखाभिन्नत्वानुसन्धानेन च जगतः सुखमयत्वं सिद्धमिति भावः, तथा तस्य किञ्चिद्दृग्विषयजातमेव न किञ्चिन्मयं न किञ्चिद्दृग्गोचर आत्मा तन्मयं तद्रूपं भवति 'सर्वं खल्विदं ब्रह्म नेह ना-

नास्ति किञ्चने'ति श्रुत्यां बाधसामानाधिकरण्यस्य ब्रह्मेदंशब्दयोः प्रतीयमानत्वादृग्गोचरस्य सर्वपदवाच्यस्य जगतोऽत्यन्तासत्त्वेन दृश्यं जगदेवादृश्यं ब्रह्मेति भावः, एवं च सप्तम्यारूढवार्त्तायां वर्णनस्य विरुद्धत्वेन प्रतीयमानत्वाद्वर्णनासम्भव इति भावः ॥७॥

इदानीं सप्तम्यारूढस्य प्रतापनिरूपणेन तल्लक्षणमाह ।

अत्यन्तहीनो बलपौरुषाभ्यामकिंचनो यो गलिताभिमानः।
तेनैव नीता रिपवो विनाशं न ये हतास्तात महेन्द्रमुख्यैः ॥८॥

अत्यन्तेति। लोके तावद्बलवान्धनी साभिमानी शत्रून्नाशयति अत्र त्विदमाश्चर्यं यः पुरुषो बलपौरुषाभ्यां बलं शरीरदार्ढ्यं पौरुषमुद्योगस्ताभ्यामत्यन्तहीनोऽत्यन्तरहितः पुनश्चाकिञ्चनो निष्किञ्चनः पुनश्च गलिताभिमानो गलितो नष्टोऽभिमानो यस्य स तथोक्तो योऽस्ति तेनैव नान्येन पुरुषेण रिपवः शत्रवो विनाशं लयं नीताः प्रापिताः, इदमाश्चर्यं सप्तम्यारूढेऽस्तीति भावः, ननु बलादिहीनेन ये नाशिताः शत्रवस्ते निर्बला एव भवेयुरित्याशङ्क्याह नेति, हे तात हे शिष्य ये शत्रवः कामादयो महेन्द्रमुख्यैर्महेन्द्रो मघवा मुख्यो आदिर्येषु ते तथोक्तास्तैर्न हता न मारिताः प्रत्युत तैः कामादिशत्रुभिरेवेन्द्रादयो जित्वा स्ववशे स्थापितास्तादृशाः प्रबला अपि शत्रवः सप्तम्यारूढेन पौरुषादिहीनेनापि नाशिता इति भावः ॥ ८ ॥

रूपकेण सप्तम्यारूढस्थितिं बुध्यारोहायाह ।

ब्रह्मविद्ब्रह्मविद्यायां भवान्यां पुत्रतां गतः ।
निजाङ्के लालयत्येनं परमात्मा सदाशिवः ॥ ९ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे
ज्ञानसप्तमभूमिकानिर्णयः ॥ ८ ॥

ब्रह्मविदिति। ब्रह्मविद्ब्रह्म देशतः कालतो वस्तुतश्चापरिच्छिन्नं वस्तु वेत्ति जानाति स तथाभूतः पुरुषो ब्रह्मविद्यायां ब्रह्मणो देशादिपरिच्छेदरहितस्य वस्तुनो विद्या ज्ञानमेतन्नाम्न्यामित्यर्थः, भवान्यां पार्वत्यां पुत्रतां पुत्रभावं गतः प्राप्तो यदा तदेत्यध्याहार्यं परमात्मा कार्यकारणातीत आत्मा सदाशिवः सर्वदैव सुखरूपत्वाच्छङ्कर एनं ब्रह्मविदं सप्तम्यारूढमित्यर्थः, निजाङ्के निजं स्वीयमंशत्वादङ्कं शबलं ब्रह्म तस्मिन्नभेदेन लालयति प्रीत्या खेलयति ॥ ९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिकाभेदभास्करार्थप्रकाशे सप्तमभूमिकानिर्णयार्थप्रकाशोऽष्टमः ॥ ८ ॥

---

एवं सप्तविधां सलक्षणां ज्ञानभूमिं प्रतिपाद्येदानीं तासां निर्णयाय भूमिकाशास्त्रार्थनिर्णयाख्यं सप्तदशश्लोकं प्रकरणं वक्तुं प्राह ।

## अथ भूमिकाशास्त्रार्थनिर्णयः ।

अथेति। अथ सप्तभूमिकानिरूपणानन्तरं भूमिकाशास्त्रार्थनिर्णयो भूमिकानां पूर्वोक्तसप्तभूमीनां शास्त्रार्थः शासकवाक्यार्थस्तस्य निर्णयो निश्चयो निरूप्यत इति शेषः, तमेवाह ।

भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ।
तावती साधकावस्था तारतम्येन योगिनाम् ॥ १ ॥

भूमिकेति। पूर्वं जिज्ञासा–विचारा–तनुमानसाख्यं भूमिकात्रितयं भूमिकानामवस्थानां त्रितयं जाग्रज्जागराख्यावस्थोच्यते कथ्यते तथा चतुर्थी सत्त्वापत्त्याख्या भूमिः स्वप्नः स्वप्नावस्थो-

च्यते कथ्यते तावती चतुर्थभूमिपर्यन्ता योगिनां जिज्ञासूनां तारतम्येन न्यूनाधिकत्वेन साधकावस्था साधकत्वरूपाऽवस्था स्थितिरिति ज्ञेया ॥ १ ॥

तत उत्तरावस्थासु सिद्धाऽवस्थात्वं तारतम्येन दर्शयति।

पञ्चमीं तु समारभ्य सिद्धावस्थैव सा त्रिधा।
तिसृणामप्यवस्थानां दृष्टान्तोऽत्र निरूप्यते ॥ २ ॥

पञ्चमीमिति। पञ्चमीमसंसक्तिनाम्नीं भूमिकां समारभ्य सम्यगङ्गीकृत्योत्तरा सिद्धावस्थैव सिद्धस्थितिरेव ज्ञेयाऽऽसमाप्तेः सा सिद्धावस्था त्रिधा त्रिप्रकारा ज्ञेया तद्भेदस्वरूपं दर्शयितुं दृष्टान्तनिरूपणं प्रतिजानीते तिसृणामिति, तिसृणां त्रिसंख्यानामपि अवस्थानां भूमिकानामत्रास्मिन् प्रकरणे दृष्टान्तो युक्त्यपरपर्याय उदाहरणमित्यर्थः, निरूप्यते कथ्यते ॥ २ ॥

प्रतिज्ञातमेव दृष्टान्तमाह द्वाभ्याम्।

सुषुप्तेः प्रथमावस्था तस्यां यत्सुखमाप्यते।
सुषुप्तेर्या घनावस्था तस्यामपि तदेव हि ॥ ३ ॥

सुषुप्तेरिति। सुषुप्तेर्लोकप्रसिद्धनिद्राया या प्रथमा शिथिलाऽवस्था स्थितिस्तस्यामवस्थायां यत्सुखं यत्प्रकारकं सुखमाप्यते लभ्यते तदेव तत्सुखमेव सुषुप्तेर्निद्राया या घनावस्था निविडा स्थितिरस्ति तस्यामप्यवस्थायामाप्यते प्राप्यते हि प्रसिद्धमिदं लोक इत्यर्थः ॥ ३ ॥

सुखं घनसुषुप्तौ तत्सुखं गाढसुषुप्तके।
तुर्यायामपि सप्तम्यामानन्दानुभवः समः ॥ ४ ॥

सुखमिति। यत्सुखं शर्म घनसुषुप्तौ घना निविडा सुषुप्ति-

निद्रा तस्यामस्ति तत्सुखमेवानन्दो गाढसुप्तके गाढं दृढं यत्सुप्तकं निद्रा तस्मिन्नस्ति अतस्त्रिविधसुप्तौ शिथिलघनगाढत्वभेदेन त्रिप्रकारायामपि निद्रायामानन्दानुभव आनन्दस्य सुखस्यानुभवः प्रतीतिः सम एक एव स्याद्भवेद्यथा यद्वत् ॥ ४ ॥

दार्ष्टान्तिके यो जयति ।

तथा य एव पञ्चम्यां षष्ठ्यामपि स एव हि ।
तुर्यायामपि सप्तम्यां ब्रह्मानन्दः स एव हि ॥ ५ ॥

तथेति । तथा तद्वच्च एव विद्वत्प्रसक्तो ब्रह्मानन्दो भूमशब्दवाच्यं सुखं पञ्चम्यामसंसक्तिनाम्न्यां पञ्चमभूमिकायामस्ति स एव हि असावेव ब्रह्मानन्दः षष्ठ्यामपि पदार्थाभाविनीनाम्न्नामप्यवस्थायामस्ति हि प्रसिद्धं तथा यो ब्रह्मानन्दः षष्ठ्यामस्ति स एव हि असावेव प्रसिद्धो ब्रह्मानन्दस्तुर्यायां तुर्याख्यायां सप्तमभूमिकायामपि अस्ति अतस्तिसृष्वप्यवस्थासु ब्रह्मानन्दस्त्वेक एवेति भावः ॥ ५ ॥

नन्वानन्दस्यैकत्वे कुतो भूमिभेदस्तत्राह ।

अभ्यासतारतम्येन तारतम्ये चिरस्थितौ ।
अपरोक्षानुभूतेस्तु तारतम्यं मनाङ्ग हि ॥ ६ ॥

अभ्यासेति । अभ्यासतारतम्येनाभ्यासो विवेकावृत्तिरूपस्तस्य तारतम्यं न्यूनाधिकभावस्तेन चिरस्थितौ चिरं बहु कालं या स्थितिरवस्थानमानन्दाकारता तस्यां तारतम्ये सतीत्यर्थः, अपरोक्षानुभूतेरपरोक्षा प्रत्यक्षा याऽनुभूतिरनुभवस्तस्या मनागीषदपि तारतम्यं न्यूनाधिक्यं न हि नैव विद्यते ॥ ६ ॥

अपरोक्षानुभूतेर्न्यूनाधिक्याभावे दृष्टान्तमाह ।

नास्वादिता सिता यावत्तावन्नास्वादितैव सा ।
एकदास्वादिता चेत्सा नैव नास्वादिता भवेत् ॥७॥

नेति । सिता श्वेतखण्डं यावद्यत्कालपर्यन्तं नास्वादिता न भक्षिता भवति तावत्तत्कालपर्यन्तं सा सिता श्वेतखण्डं नास्वादिता नैव भक्षिता भवेत्स्यात् सा सितैकदास्वादितैकस्मिन्समय एकवारमपि आस्वादिता खादिता स्याच्चेद्भवेद्यदि तर्हि नास्वादिता न भक्षिता नैव भवेन्न स्यादेकदैव भक्षितायां तस्यां वहुवारं वा भक्षितायां च स्वादस्यैकरूपत्वं यथा यद्वत् ॥ ७ ॥

दार्ष्टान्तिकमाह ।

जाता चेत्सा तु जातैव जातु नाजाततां भजेत् ।
कथं भूयो भ्रमत्येष भ्रान्तिरेव गता यदि ॥ ८ ॥

जातेति । तथा सा तु अपरोक्षानुभूतिश्च जाता चेद्‌ उत्पन्ना यदि स्यात्तर्हि जातु कदाचिदपि अजातताममनुत्पन्नतां न भजेन्न व्रजेत्, कुतः इत्यत आह कथमिति, एष पञ्चम्यारूढो जातसाक्षात्करो जीवो यदि यर्हि भ्रान्तिरेव केवलं भ्रमोपि गता निवृत्ता तर्हि भूयः पुनः कथं केन प्रकारेण भ्रमति विक्षिप्यते न कथमपीत्यर्थः ॥ ८ ॥

एवमपरोक्षानुभवस्यैकरूपतां तस्मिंश्च सति पुनर्भ्रान्त्यभावं च प्रदर्श्येदानीं तत्रोपाधिकृतविशेषं दर्शयितुमाह ।

अथ कश्चिद्विशेषः ।

अथेति । अथेदानीमपरोक्षानुभूतौ कश्चित्कोपि विशेषो भेदोऽस्ति स उच्यत इति शेषः, तमेव विशेषं दर्शयति सार्धाभ्याम् ।

तुरीया प्रथमाभासे विद्युदाभासलक्षणा ।
ततश्चञ्चलदीपाभा ततो निश्चलदीपवत् ॥ ९ ॥

तुरीयेति । तुरीया जाग्रदाद्यवस्थात्रयाऽपेक्षयाऽपरोक्षानुभूतिः पञ्चम्यादिभूमिकात्रयरूपा तुरीया चतुर्थी ज्ञेया सा प्रथमाभासे प्रथमः पञ्चमभूमिकायामाभासोनुभवस्तस्मिन् विद्युदाभासलक्षणा विद्युतस्तडित आभासः प्रकाशः स एव लक्षणं चिह्नं यस्यां सा तादृशी ज्ञेया ततोऽनन्तरं षष्ठभूमिकाया आरम्भे चञ्चलदीपाभा चञ्चलो वायुचालितो यो दीपस्तस्याभेवाभा कान्तिर्यस्याः सा तादृशी भवति । ततस्तदनन्तरं षष्ठ्यामेव परिणामेन निश्चलदीपवत्सापरोक्षानुभूतिर्निश्चलः स्थिरो यो दीपस्तद्वत्तस्य प्रभेवेत्यर्थः, सा भवति ॥ ९ ॥

सूर्यप्रभावच्च ततः सप्तमी चिरवर्त्तिनी ।
उदयास्तविहीना सा दिनपक्षर्त्तुवत्सरम् ॥ १० ॥

सूर्येति । ततोनन्तरं सप्तम्यां साऽपरोक्षानुभूतिः सूर्यप्रभावत्सूर्यस्यादित्यस्य प्रभा प्रकाशस्तद्वत्तत्तुल्या भवति च पुनः सप्तमी तुर्याख्याऽपरोक्षानुभूतिश्चिरवर्तिनी चिरं वर्तितुं शीलमस्याः सा तथोक्ता भवति बहुकालस्थिरेत्यर्थः, सा च सप्तम्यऽपरोक्षानुभूतिः परिणता सती दिनपक्षर्तुवत्सरं दिनं दिवसः, पक्षश्च शुक्लकृष्णभेदेन पञ्चदशदिनसमूहात्मकः, ऋतुश्च मासद्वयात्मको वसन्तादिर्वत्सरश्च द्वादशमासात्मकः प्रभवादिः काल एतेषां समहारद्वन्द्वैकवद्भावोऽत्यन्तसंयोगे द्वितीया तेष्वित्यर्थः॥१०॥

पुष्कला निश्चला पूर्णा परमानन्दसुन्दरी ॥ ११ ॥

निश्चला स्थिरेत्यर्थः, अत एव पुष्कला परिपुष्टा पूर्णा सर्वत्र

परिपूर्णा तथा परमानन्दसुन्दरी परमानन्दो निरतिशयसुखं तेन सुन्दरी सर्वेषां कमनीया ॥ ११ ॥

एवमपरोक्षानुभवे तारतम्यं प्रदर्श्येदानीमपरोक्षानुभववतां सामर्थ्यं निरूपयति ।

येषां ध्यानकलायां च लीयन्ते गुणपङ्क्तयः ।
येषां कृपाकटाक्षेण सद्यो मुक्तिरवाप्यते ॥ १२ ॥

येषामिति । येषामपरोक्षानुभविनां जिज्ञासुभिरन्यैः कृतं यद्ध्यानं तस्य कलांशस्तस्यां गुणपङ्क्तयो गुणानां सत्त्वरजस्तमसां तत्कार्याणां कामादीनां च पङ्क्तयः समूहा लीयन्ते लीना भवन्ति तथा येषामपरोक्षानुभववतां कृपाकटाक्षेण कृपया दयया- यः कटाक्ष नेत्रैकदेशेनावलोकनं तेन जिज्ञासूनां सद्यस्तत्कालमेव मुक्तिर्मोक्षोऽवाप्यते प्राप्यते, इदमप्युत्तरभूमित्रयारूढ॰ लक्षणं ज्ञेयम् ॥ १२ ॥

पञ्चम्यादिभूमित्रयारूढस्य पुनर्जन्माभावमाह ।

पञ्चमीमथवा षष्ठीं सप्तमीं वा समाश्रिताः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ १३ ॥

पञ्चमीमिति । ये पुरुषाः पञ्चमीमसंसक्तिनाम्नीं भूमिकामथवा यद्वा षष्ठीं पदार्थाभाविनीनाम्नीं सप्तमीं वा तुर्याख्यां सप्तमभूमिकां वा समाश्रिताऽऽश्रित्य स्थिताः सन्ति तेषां पुरुषाणां कल्पकोटिशतैरपि कल्पानां ब्रह्मदिनानां ब्रह्मायुष्यरूपाणां महाकल्पानां वा शतानि अनन्तानि तैर्व्यतीतैरपि पुनरावृत्तिः पुनः पश्चान्मुक्तेरनन्तरमावृत्ति जन्ममरणरूपा संसृतिर्न न भवति ॥ १३ ॥

एवमुत्तरावस्थात्रये स्थितानां सिद्धावस्थात्वं मुक्तत्वं च प्रतिपाद्येदानीं पूर्वावस्थाचतुष्कस्थितानामपि मरणादिना केनचित्प्रतिबन्धेन तत्त्वज्ञानानुत्पत्तौ मुक्त्यभावेपि जन्मान्तरे पूर्ववदभ्यासेन मुक्तिप्राप्तिमाह सार्धेन ।

पूर्वावस्थाचतुष्के ये स्थिता देहं विहाय ते ।
पुनर्देहान्तरं प्राप्य ब्रह्माभ्यासं प्रकुर्वते ॥ १४ ॥

पूर्वेति । ये मुमुक्षवः पूर्वावस्थाचतुष्के पूर्वाः प्रथमा या अवस्था भूमयो जिज्ञासा विचारा तनुमानसा सत्त्वापत्त्याख्यास्तासां चतुष्कं चतुष्टयं तस्मिन् केन चित्प्रतिबन्धेन तत्त्वसाक्षात्कारालाभेन स्थिता वर्त्तमाना भवन्ति ते पुरुषा देहं शरीरं विहाय त्यक्त्वा पुनर्भूयो जन्मान्तरमन्यज्जन्म प्राप्य लब्ध्वा ब्रह्माभ्यासं ।

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥

इत्युक्तलक्षणं ब्रह्मप्राप्तिसाधनभूतं यत्नं प्रकुर्वते प्रकर्षेणानुशीलयन्ति ॥ १४ ॥

ननु पूर्वभूमिकाचतुष्कस्थितानामन्यजन्मनि मोक्षो भवतीति स्वकपोलकल्पितमित्याशङ्क्याह ।

योगभ्रष्टास्त उच्यन्ते क्रमेण ब्रह्मगामिनः ।
योगिनो योगसिद्धाश्च दत्ताद्या जनकादयः ॥ १५ ॥

योगभ्रष्टा इति । ते पूर्वभूमिकाचतुष्कस्थिता योगभ्रष्टा योगभ्रष्टनामका उच्यन्ते कथ्यन्ते गीतादाविति शेषः, तथा च गीता ।

'प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते ॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकाम्'ति ।

ते च श्रुतिषु क्रमेणोत्तरोत्तरलोकप्राप्तिक्रमेण ब्रह्मगामिनो ब्रह्मप्राप्ता भविष्यन्तीत्युक्तास्तथा च श्रुतिः, ।

'वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृता परिमुच्यन्ति सर्वे' इति ॥

एवं पूर्वभूमिकाचतुष्टयस्थितानां जन्मान्तरे मुक्तिं सम्भाव्येदानीं सिद्धानपि कांश्चिदुत्तरभूमित्रयारूढानुदाहृत्य दर्शयति योगिन इति, ब्रह्मादयस्तु स्वत एव योगिनो योगशब्दवाच्यजीवब्रह्मैक्यज्ञानवन्तः स्वत एवेत्यर्थस्तथा दत्ताद्या दत्तनामाऽत्रिपुत्र आद्यो मुख्यो येषां ते तथोक्तास्तथा जनकादयो जनको मैथिलः स आदिर्मुख्यो येषां ते तथोक्तास्ते सर्वे योगसिद्धा योगेन हठादिना वा तत्फलभूतजीवब्रह्मैक्यज्ञानेन वा सिद्धा मुक्ता जाता इत्यर्थः ॥ १५ ॥

तथा ।

ईश्वरानुग्रहं प्राप्ता अर्वाचीनाश्च के चन ।
स्वरूपानुभवं प्राप्ता मुक्तास्ते सर्व एव हि ॥१६॥

ईश्वरेति । केचन कति चित्पुरुषा अर्वाचीनाश्चेदानीन्तना अपि ईश्वरानुग्रहमीश्वरस्येशनादिशक्तियुक्तस्यानुग्रहमनुग्रहः कृपा तदुपलक्षितं सद्गुरुप्राप्तिसच्छास्त्रसेवनरूपं प्राप्ता लब्धास्तत्प्राप्त्या मोक्षं प्राप्ता इति भावः, तदुक्तं ।

'यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावन्न सद्गुरुं कश्चित्सच्छास्त्रमपि नो लभेदि'ति ॥

सर्व एव त उक्ताः समस्ता अपि पञ्चम्यादिभूमित्रयारूढा इत्यर्थः, मुक्ता मोक्षं प्राप्ता भवन्ति हि विद्वत्स्वेतत्प्रसिद्धमित्यर्थः, तत्र हेतुमाह स्वरूपेति, स्वरूपानुभवं स्वस्यात्मनो रूपं सच्चिदानन्दघनत्वं तस्यानुभवः साक्षात्कारस्तं प्राप्ता लब्धा अतो मुक्ता इत्यर्थः ॥ १६ ॥

एवं सिद्धान्प्रदर्श्येदानीं तेषां भूमिकाभेदसत्त्वेऽपि मुक्तेरेकरूपत्वं दर्शयति ।

सुषुप्तौ केचिदाश्वस्ताः केचिद्धनसुषुप्तके ।
केचिद्गाढसुषुप्तौ च सर्वेषाममृतं समम् ॥ १७ ॥

इति श्रीनरहरिकृतौ बोधसारे भूमिकाभेदभास्करे
भूमिकाशास्त्रार्थनिर्णयः ॥ ९ ॥

सुषुप्ताविति । केचित्सनत्कुमारनारदप्रभृतयो व्यवहारीव कदाचित्प्रवृत्तत्वात्सुषुप्तौ शिथिलसुषुप्त्याख्यायां पञ्चम्यामित्यर्थः, आश्वस्ता विश्वस्ताः, इयमेव परा काष्ठेति निश्चित्य तत्रैव स्थिता इति भावः, केचिद्धनसुषुप्तके केचिद्व्यासवृहस्पतिप्रमुखाः परेच्छया वासनोद्बोधेन व्यवहारे प्रवर्तमाना दृश्यन्तेऽतस्ते घनसुषुप्तके निविडसुषुप्तौ षष्ठ्यामित्यर्थः, आश्वस्ताः कृतार्थत्वं निश्चित्य स्थिता इत्यर्थः, तथा केचिद्ब्रह्मविष्णुप्रभृतयः परमार्थतो व्यवहाराप्रवृत्तेर्गाढसुषुप्तौ गाढा दृढा सुषुप्तिर्निद्रा परकृतबोधेनापि व्युत्थानानर्हा सप्तमी भूमिस्तस्यामाश्वस्ता विश्वस्य स्थिताः, अयं भावः, पञ्चम्यारूढानां कदाचित्स्वत एव प्रपञ्चसत्त्वदृष्ट्या व्यवहारप्रवृत्तिः, षष्ठ्यारूढानां परकृतबोधनेन प्रपञ्चसत्त्वबुद्ध्या कदाचिद्व्यवहारप्रवृत्तिः, सप्तम्यारूढानां तु स्वतः

परतोऽपि प्रपञ्चसत्त्वबुद्ध्या व्यवहाराप्रवृत्तिरिति भेदः, मिथ्यात्वबुद्ध्या तु सर्वेषां व्यवहारप्रवृत्तिस्तुल्यैवेति, तथा सत्यपि अमृतं मोक्षसुखं सर्वेषां भूमित्रयस्थितानां सममेकरूपमस्ति अतः पञ्चम्यादिभूमित्रयं सिद्धावस्थैवेति भावः ॥ १७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ भूमिकाभेदभास्करार्थप्रकाशे सप्तमभूमिकानिर्णयार्थप्रकाशो नवमः ॥ ९ ॥

समाप्तं चेदं प्रकरणम् ।

---

एवं ज्ञानाज्ञानभूमीश्चतुर्दश सलक्षणाः प्रदर्श्येदानीं प्रदर्शितमेव पूर्वप्रकरणार्थं विशदीकर्तुं प्रकारान्तरेणावस्था व्यवस्थापयितुं चावस्थाव्यवस्थाभिधं षट्त्रिंशच्छ्लोकं प्रकरणं प्रवक्तुमाह ।

## अथावस्थाव्यवस्था ।

अथेति । अथ भूमिकाभेदभास्करनिरूपणानन्तरमवस्थाव्यवस्थाऽवस्थानां वक्ष्यमाणानां जाग्रदादीनां व्यवस्था व्यवस्थितिर्मर्यादेत्यर्थः, तन्निरूपकत्वादवस्थाव्यवस्थाख्यं प्रकरणमिति भावः, निरूप्यत इति शेषः । प्रतिज्ञातमेव प्रकरणं निरूपयितुं तच्छ्रवणे शिष्यं प्रेरयति ।

अथावस्थाव्यवस्थाख्यं किञ्चित्प्रकरणं शृणु ।
यस्मिन्परीक्षिते सम्यक्परीक्ष्यं नावशिष्यते ॥१॥

अथेति । हे शिष्य त्वमथातः परं किञ्चित्स्वल्पं संक्षिप्तमित्यर्थः, अवस्थाव्यवस्थाख्यमवस्थानां वक्ष्यमाणलक्षणानां व्यवस्था मर्यादास्ति यस्यामिति अर्शआद्यच् अत एतदाख्यमेतन्नामकं प्रकरणं मया वक्ष्यमाणं शृणु अव-

धारय, नन्वेतच्छ्रवणे किं फलं तत्राह यस्मिन्प्रकरणे सम्यग्यथार्थं परीक्षितेऽवलोकिते सति पुनः पुनर्दृढं विचार्य धृते सतीत्यर्थः, परीक्ष्यमवलोकनीयमन्यन्नावशिष्यतेऽवशिष्टं न विद्यते सर्वत्र परीक्ष्यवस्तुन एतत्प्रकरणप्रतिपाद्यवस्तुमात्रत्वादिति भावः ॥ १ ॥

प्रतिज्ञातप्रकरणनिरूपणार्थैव तत्प्रतिपाद्या अवस्था नामसङ्ख्याभ्यां निर्दिशति।

जाग्रत्स्वप्नः सुषुप्तिश्च तथा मूढसमाधिता।
मूर्च्छा मृत्युस्तुरीयञ्चेत्यवस्थाः सप्त कीर्तिताः ॥२॥

जाग्रदिति। जाग्रज्जागरनाम्न्येकावस्था स्वप्नः स्वप्ननाम्नी द्वितीया तथा सुषुप्तिः सुप्तिनाम्नी तृतीया तथा तद्वन्मूढसमाधिता मूढसमाधिनाम्नी चतुर्थी तथा मूर्च्छा मूर्च्छानाम्नी पञ्चमी तथा मृत्युर्मरणमेतन्नाम्नी च षष्ठी तथा तुरीयं च तुर्यनाम्नी सप्तमी–इति एवं प्रकारेणावस्थाऽन्तःकरणस्थितयः सप्त सप्तसङ्ख्याः कीर्तिता कथिता विद्वद्भिरिति शेषः ॥ २ ॥

ता एव विशदयति।

जाग्रत्स्वप्नः सुषुप्तिश्च व्यक्ता मूढसमाधिता।
मूर्च्छा मृत्युस्तुरीयं च व्यक्ता नित्यानुभूतितः ॥३॥

जाग्रदिति। जाग्रदिन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणावस्था, स्वप्नो लीनेष्विन्द्रियेषु जागरसंस्कारजो विषयाभासः स स्वप्न इत्युक्तलक्षणा स्वप्नावस्था, सुषुप्तिश्च निद्रा विषयाभानरूपा, एतास्तिस्रोऽवस्थाः सर्वत्रोक्तत्वात्सर्वानुभवसिद्धत्वाच्च व्यक्ताः सर्वेषामाबालगोपं प्रकटा एव भवन्त्यतस्तन्नि-

रूपणं न क्रियत इत्यर्थः, मूढसमाधिता मूढसमाधिनाम्न्यवस्था मूर्छा मुग्धेऽर्धसम्पत्तिरिति सूत्रोपदर्शिता मूर्छावस्था मृत्युर्मरणावस्था तुरीयं च तुर्याख्यावस्था चैताश्चतस्रोवस्था नित्यानुभूतितो नित्यानुभवरूपेणात्मचैतन्येनैव व्यक्ताः प्रकाशिता भवन्तीति ज्ञेयाः ॥ ३ ॥

मूढसमाध्यवस्था तु पूर्वमेवोक्ताऽतो नोच्यत इत्याह।

उक्तं मूढसमाधानं भवप्रत्ययसंज्ञकम्।
पुराऽसंप्रज्ञातनामसमाधेर्भेदवर्णने ॥ ४ ॥

उक्तमिति। पुरा योगदीक्षाचिन्तामण्याख्यप्रकरणेऽसंप्रज्ञातसमाधेरसंप्रज्ञातनामसमाधेर्भेदवर्णने भेदनिरूपणप्रसङ्गे भवप्रत्ययसंज्ञकं भवस्य संसारस्य प्रत्ययोनुभवो बीजरूपेणास्मिन्नस्तीति भवप्रत्यय इत्येवं संज्ञा नाम यस्य तत्तथोक्तं मूढसमाधानं मूढसमाधिरुक्तं कथितमतः पुनर्नोच्यत इति भावः ॥ ४ ॥

तदेव बीजरूपेणावस्थानं प्रपञ्चस्य तत्स्थव्यवहारोदाहरणेन विशदयत्यर्धेन।

तत्समाधिस्थिता जित्वेन्द्रादीन्स्वर्गेशतां ययुः।
मृत्युर्मूर्च्छा प्रसिद्धेति तुरीयमभिधीयते ॥ ५ ॥

तदिति। तत्समाधिस्थिताः स एव भवप्रत्ययनामा समाधिस्तत्समाधिस्तस्मिन्स्थिताः स्थिरीभूता ये हिरण्यकशिप्वादयस्ते समाधिव्युत्थानादनन्तरमिन्द्रो मरुत्वानादिः प्रथमो येषामग्नियमादीनां ते तथोक्तास्ताञ्जित्वा युद्धे पराभूय स्वर्गेशतां स्वर्गस्येशतामीश्वरत्वं ययुः प्रापुरतो मूढसमाधौ बीजरूपेण संसारप्रत्ययो विद्यत इति भावः, ननु तर्हि मृत्युमूर्छे एव निरूप्येतामित्याशङ्क्य ते अपि प्रसिद्धत्वान्मुमुक्षूणामनादरणीयत्वाच्च न निरूप्येते इत्याशयेनाह मृत्युरिति, मृत्युर्मरणं मूर्च्छाऽर्धमृतिनाम्ना

प्रसिद्धाऽनुभूतैवेति अतो हेतोस्ते अपि परित्यज्य प्रथमं मुमुक्षूणामादरणीयत्वात्तुरीयं तुर्याख्यैवावस्थाऽभिधीयते निरूप्यत इत्यर्थः ॥ ५ ॥

प्रतिज्ञातामेव तुर्यावस्थां निरूपयति ।

वेदान्तसंप्रदायेन निदिध्यासनदार्ढ्यतः ।
परमात्मनि चित्तस्य लयस्तु तुर्यमुच्यते ॥ ६ ॥

वेदान्तेति । वेदान्तसंप्रदायेन वेदान्तस्योपनिषदादिग्रन्थस्य संप्रदायः परिपाटी तेन तदनुकूलतयेत्यर्थः, निदिध्यासनदार्ढ्यतो निदिध्यासनस्याखण्डैकब्रह्मविषयप्रत्ययावृत्तिरूपस्य दार्ढ्यतो दृढत्वेन परमात्मनि कार्यकारणातीत आत्मनि चित्तस्यान्तःकरणस्य लयस्तद्रूपेणावस्थानं यत्तु तदेव तुर्यं तुरीयनामकमुच्यते कथ्यते विद्वद्भिरिति शेषः ॥ ६ ॥

तस्मिंश्च सति किं फलं तदाह ।

तत्र साक्षात्कृतं ब्रह्म मूलाविद्याविनाशकृत् ।

तत्र प्रश्नः ।

स्वप्नजागरयोस्तुल्यः संसाराडम्बरो मुने ॥ ७ ॥

तत्रेति । तत्र तुर्यावस्थायां ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु स्वस्मिन्नेव साक्षात्कृतं स्वाभिन्नमनुभूतं सन्मूलाविद्याविनाशकृन्मूलाविद्या स्वस्य ब्रह्मणश्चैक्याज्ञानं मूलाविद्या तस्या विनाशः क्षयस्तस्य कृत्कर्तृ भवतीति फलं तुर्यप्राप्तौ ज्ञेयम्, एवं सङ्क्षेपतोवस्थाः सप्तापि प्रदर्श्येदानीं ता एव विस्तरतो वक्तुं प्रश्नावतरणं प्रतिजानीते तत्रेति, तत्रावस्थासु मध्ये प्रश्नोऽनुयोगः क्रियत इति शेषः; तमेवाह स्वप्नेति, हे मुने मननशील हे गुरो संसाराडम्बरः संसाररूपो घटाटोपः स्वप्नजागरयोः स्वप्ने

स्वप्नावस्थायां च जागरे च जाग्रदवस्थायां तुल्यः सम एव सुखदुःखप्रतीतिः समैवोभयत्रेति भावः ॥ ७ ॥

तर्हि केन विशेषेण संज्ञा भेदस्तयोर्वद ।

अत्रोत्तरम् ।

जानीहि प्रथमं तात भेदं विस्मृतिबोधयोः ॥ ८ ॥

तर्हीति । तर्हि तदा केन विशेषेण केन वैलक्षण्येन तयोः स्वप्नजागरयोः संज्ञाभेदः संज्ञयोरभिधानयोर्भेदः पृथक्त्वं तत्कारणं वद ब्रूहीति प्रश्नार्थः ।अस्योत्तरं वक्तुमाह ।

अत्रेति । अत्रोक्तप्रश्न उत्तरं प्रतिवाक्यमुच्यत इति शेषः, तदेवाह जानीहीति, हे तात हे शिष्य त्वं प्रथमं पूर्वं विस्मृतिबोधयोर्विस्मृतिश्च विस्मरणं बोधश्च ज्ञानं तयोर्भेदं पृथक्त्वं जानीहि विद्धि पश्चादनन्तरं स्वप्नजागरयोः स्वप्नश्च जाग्रद्विषयवासनावासितबुद्धौ विषयानुभवाभासलक्षणो जागरश्च जागृतिरिन्द्रियैरर्थोपलब्धिर्ज्जागरितमित्युक्तलक्षणा तयोर्भेदं पृथक्त्वं ज्ञास्यसि वेत्स्यसि अतः पूर्वं तं विस्मृतिबोधभेदं शृणु अवधारय ॥ ८ ॥

एवं शिष्यं निरूप्यमाणभेदश्रवणे संमुखीकृत्येदानीं प्रतिज्ञातमेव भेदं दर्शयति ।

स्वप्नजागरयोर्भेदं पश्चाज्ज्ञास्यसि तं शृणु ।
विस्मृतिर्यन्न भासेत बोधो मिथ्यात्वनिश्चयः ॥९॥
जागरानन्तरं निद्रा तत्र स्वप्नो यदा भवेत् ।
स्वप्ने स्याज्जागराभानं न तु जागरबोधनम् ॥१०॥

विस्मृतिरिति । यत्पदार्थजातं किमपि न भासेत न प्रती-

येत सा विस्मृतिर्विस्मरणं ज्ञेया तथा मिथ्यात्वनिश्चयः पदार्थानां मिथ्यात्वस्यासत्त्वस्य निश्चयोऽध्यवसायः स बोधो ज्ञानमित्युच्यत इदमेव विस्मृतिबोधयोर्वैलक्षण्यं ज्ञेयमिति भावः, एवं विस्मृतिबोधवैलक्षण्यं प्रदर्श्यैदानीं प्रस्तुतजाग्रत्स्वप्नयोर्भेदं दर्शयति जागरेति, जागरानन्तरं जागरो जागृतिस्तस्या अनन्तरं पश्चान्निद्रा सुषुप्तिर्भवतीति स्पष्टमेवाबालगोपं तत्र तस्यां सुषुप्तौ यदा यस्मिन्काले स्वप्नः प्रातिभासिकविषयस्फुरणरूपो भवेत्स्यात्तदा तस्मिन्काले स्वप्ने स्वप्नावस्थायां जागराभानं जाग्रद्दशाया अभानं विस्मृतिर्भवेत्स्याज्जागरबोधनं जागरस्य जाग्रदवस्थाया बोधनं भानं जागरमिथ्यात्वनिश्चय इत्यर्थः, न तु भवेन्नैव स्यात् ॥ ९ ॥ १० ॥

एतदेव स्पष्टमाह ।

जागरोऽयं तु मिथ्येति बुद्धिः स्वप्ने न वर्तते ।
किन्तु जागरविस्मृत्या स्वप्ने स्वप्नार्थदर्शनम् ॥ ११ ॥

जागर इति । अयं प्रत्यक्षतया दृश्यमानो जागरो जागृतिप्रपञ्चो मिथ्या भ्रान्तिरूप इत्येवं प्रकारा बुद्धिर्निश्चयरूपान्तःकरणवृत्तिः स्वप्ने स्वप्नावस्थायां न तु नैव वर्त्तते नैव विद्यत इत्यर्थः, किन्तु किं तर्हि स्वप्ने स्वप्नावस्थायां जागरविस्मृत्याजागरस्य जागरणस्य विस्मृतिरभानं तया स्वप्नार्थदर्शनं स्वप्ने स्वप्नावस्थायां ये प्रातिभासिका अर्थास्तेषां दर्शनं प्रतीतिरस्ति विद्यते जाग्रन्मिथ्यात्वनिश्चयाभावो जागराभानं च स्वप्ने जागृतितो वैलक्ष्यण्यं ज्ञेयमिति भावः ॥ ११ ॥

उक्तं जाग्रतः स्वप्नस्य वैलक्षण्यं निगमयति ।

स्वप्नस्यैतन्निजं रूपं जागरस्याधुना शृणु ।
स्वप्नस्यानन्तरं तात जागरो हि यदा भवेत् ॥ १२ ॥

स्वप्नस्येति । एतदिदमुक्तलक्षणं स्वप्नस्य स्वप्नावस्थया निजं स्वीयं रूपं ज्ञेयम्, एवं जाग्रदशातः स्वप्नस्य वैलक्षण्यं प्रदर्श्येदानीं जागरस्यापि स्वप्नतो वैलक्षण्यं श्रोतुं शिष्यमभिमुखीकरोति जागरस्येति, हे शिष्य अधुनेदानीं जागरस्य जागरणस्य स्वरूपं शृणु श्रोतव्यं, प्रतिज्ञातमेव जाग्रत्स्वरूपनिरूपणं करोति स्वप्नस्येति, हे तात हे शिष्य स्वप्नस्य स्वप्नावस्थाया अनन्तरं पश्चाद्यदा यस्मिन्काले हि प्रसिद्धो जागरो जागरणं भवेत्स्यात् ॥१२॥

स्वप्नमिथ्यात्वबुध्यात्मस्वप्नबोधस्तदा भवेत् ।

अन्यच्च ।

स्वप्ने तु यादृशी तात भवेज्जागरविस्मृतिः ॥१३॥

स्वप्नेति । तदा तस्मिन्समये स्वप्नमिथ्यात्वबुद्ध्या स्वप्नस्य सविषयस्वप्नावस्थाया मिथ्यात्वमसत्त्वं तस्य बुद्धिर्निश्चयात्मिकान्तःकरणवृत्तिस्तयाऽऽत्मस्वप्नबोध आत्मनः स्वप्नद्रष्टुः स्वस्यैव स्वप्नावस्थायां बोधो ज्ञानं भवेत्स्याज्जागरे स्वप्नाविस्मरणं स्वप्नबोधश्चेति स्वप्नतो जागरस्य वैलक्षण्यं सिद्धमिति भावः, अन्यदपि वैलक्षण्यं वक्तुमाहान्यच्चेति, अन्यच्च लक्षणान्तरमपि उच्यत इति शेषः, तदेवाह स्वप्ने त्विति, हे तात हे शिष्य स्वप्ने स्वप्नावस्थायां जागरविस्मृतिस्तु जागरविस्मृतिर्जागराभानमपि यादृशी यद्वद्भवेत्स्यात् ॥ १३ ॥

जागरे तादृशी नास्ति स्वप्नसंसारविस्मृतिः ।

जागरे स्मर्यते स्वप्नस्तस्य मिथ्यात्वदर्शनम् ॥ १४ ॥

जागर इति । जागरे जाग्रदवस्थायां स्वप्नसंसारविस्मृतिः स्वप्ने स्वप्नावस्थायां यः प्रतीयमानः संसारः सुखदुःखजन्ममरणादिरूपस्तस्य विस्मृतिरभानं तादृशी तद्वन्नास्ति न विद्यत

इदं च वैलक्षण्यं स्पष्टमेवेति भावः, अन्यदपि वैलक्षण्यान्तरमाह जागर इति, जागरे जागरावस्थायां स्वप्नः सविषया स्वप्नावस्था स्मर्यतेऽनुसन्धीयते तस्य स्वप्नस्य मिथ्यात्वदर्शनं मिथ्यात्वस्यासत्त्वस्य दर्शनं भानमस्तीति शेषः ॥ १४ ॥

स्वप्ने न स्मर्यते जाग्रन्न तन्मिथ्यात्वदर्शनम् ।
अनेनातिविशेषेण स्वप्नजागरयोर्भिदा ॥ १५ ॥

स्वप्न इति । यथा तथेत्यध्याहार्यं स्वप्ने स्वप्नावस्थायां जाग्रत्सविषया जाग्रदवस्था न स्मर्यते नानुसन्धीयते तन्मिथ्यात्वदर्शनं तस्या जाग्रदवस्थाया मिथ्यात्वमसत्त्वं तस्य दर्शनम पीत्यध्याहार्यं, न नैव विद्यते, उक्तं स्वप्नजाग्रद्भेदनिरूपणमुपसंहरति अनेनेति, अनेनोक्तेनातिविशेषेण त्रिप्रकारेणाप्यतिवैलक्षण्येन स्वप्नजागरयोः स्वप्नश्चोक्तलक्षणा स्वप्नावस्था जागरश्च जागृतिस्तयोर्भिदा भेदः सिद्ध इति भावः ॥ १५ ॥

एवं सप्तावस्थासु मध्ये पूर्वमवस्थाद्वयं भेदेन प्रदर्श्येदानीमुत्तराः पञ्चाप्यवस्था भेदेन प्रदर्शयितुं प्रश्नोत्थापनमवतारयति ।

अथप्रश्नान्तरम् ।

अथेति । अथ पूर्वावस्थाद्वयभेदज्ञानानन्तरं प्रश्नान्तरमन्यो द्वितीयः प्रश्नोनुयोगः प्रश्नान्तरं पूर्वप्रश्नापेक्षया द्वितीयः प्रश्न इत्यर्थः, क्रियत इति शेषः । तमेवाह ।

ननु मूढसमाधौ च मूर्च्छामृत्युसुषुप्तिषु ।
तुरीये च न दृश्यश्रीस्तर्हि तेषां भिदा कुतः ॥ १६ ॥

नन्विति । नन्विति शङ्कायामियं ममाशङ्का जाता मूढसमाधौ पूर्वोक्तलक्षणे मूढसमाधाने भवप्रत्ययनामके पुनश्च मूर्छामृत्युसुषुप्तिषु मूर्छा चार्धमृतिरूपा मुग्धेर्धसम्पत्तिरितिसूत्रोपदर्शिता मृत्युश्च प्राणादिवियोगेन देहपत-

नरूपः प्रसिद्धः सर्वेषु, सुषुप्तिश्चान्तःकरणेन्द्रियादीनां कारणाज्ञानमात्ररूपेणावस्थानं निद्रापरपर्याया तासु तुरीये च तुर्यावस्थायामपि दृश्यश्रीर्दृश्यस्य त्रिपुटीरूपप्रपञ्चस्य श्रीः शोभा न न विद्यते दृश्याभानं पञ्चावस्थास्वपि तुल्यमिति, तदा तर्हि तेषां मूर्च्छादितुर्यान्ताऽवस्थालक्षणानां भिदा भेदः कुतः कुतः कारणादस्ति वैलक्षण्याभावान्न कुतोपि भेदः सम्भवतीति भावः ॥ १६ ॥

एवं प्रश्नं निरूप्योत्तरं वक्तुं प्रतिजानीते ।

अत्रोत्तरम् ।

अत्रेति । अत्र द्वितीये प्रश्न इत्यर्थः, उत्तरं प्रतिवाक्यमुच्यत इति शेषः । तदेवाह ।

सिद्धिकामनया यैस्तु तप उग्रं कृतं महत् ।
देहोपि विस्मृतस्तैस्तु क्रिमिकीटादिभक्षितः ॥ १७ ॥

सिद्धीति । यैस्तु संसाररसिकैर्हिरण्यकशिप्वादिभिः सिद्धिकामनया सिद्धीनामिन्द्रादिपदप्राप्तिरूपाणां कामनेच्छा तया महद्बहूग्रं त्रैलोक्यसन्तापकं तपः शीतोष्णादिक्लेशसहनेन ब्रह्माराधनरूपं कृतमाचीर्णं तैस्तूक्तैर्हिरण्यकशिप्वादिभिर्देहोपि कायोपि विस्मृतो न ज्ञातः, ननु तैर्देहो विस्मृत इति कुतो निश्चितं तत्राह क्रिमिकीटेति, क्रिमिकीटादिभक्षितः क्रिमयश्च पिपीलिकाः कीटास्तद्विशेषा एत त आदयो येषां ते तथोक्तास्तैर्भक्षितो जग्धः स न ज्ञातोऽत एव तेषां भानं देहे नास्तीति निश्चीयत इति भावः ॥ १७ ॥

नेयं मूर्च्छा न रोगोयं न मृत्युर्जीवनादयम् ।
सुषुप्तानन्दविरहान्न सुषुप्तिरिति स्फुटम् ॥ १८ ॥

नेति। इयं विस्मृतिस्तपःपूर्विकाऽतो मूर्छाऽथमृत्याऽख्यावस्था न न भवति कुतो न मूर्छात्वमस्यास्तत्राह नेति, अयं तपःक्लेशो रोगो व्याधिर्न न विद्यते, नन्वस्या मूर्च्छात्वं मास्तु मृत्युत्वं कुतो न स्यादित्याशङ्क्याह नेति, इयं विस्मृतिर्मृत्युर्मरणं न न भवति, कुतो नास्या मृत्युत्वं तत्राह जीवनात्प्राणधारणादित्यर्थः, प्राणवियोगस्यैव मृत्युत्वप्रसिद्धेरिति भावः, नन्वस्य समाधेर्मूर्च्छात्वं मृत्युत्वं च मा भूतां सुषुप्तत्वमस्तु तत्राह सुषुप्तेति, सुषुप्तानन्दविरहात्सुषुप्तं निद्रा तस्मिन्य आनन्दः सुखमस्ति उत्थितस्य पुरुषस्य सुखमहमस्वाप्समिति स्मृत्यन्यथानुपपत्त्यानुमेयं यत्सुखं तेन विरहाद्वियोगान्न सुषुप्तिर्न निद्रा सुप्तौ हि सर्वैः सुखमनुभूयतेऽतस्तद्रहितत्वान्नास्य सुषुप्तित्वमिति भावः, इति एतत्स्फुटं प्रकटमस्ति अत्र न कस्यापि सन्देह इति भावः ॥ १८ ॥

नन्वस्या विस्मृतेर्मास्तु सुषुप्तित्वं तुर्यत्वमस्त्वित्याशङ्क्याह।

स्वरूपलाभविरहान्मूढत्वान्न तुरीयकम्।
दृश्यभानं तु नास्त्यासु तावता न कृतार्थता ॥१९॥

स्वरूपेति। इयं विस्मृतिस्तुरीयकं तुरीयावस्थापि न न भवति, नन्वस्याः कुतो न तुर्यत्वं तत्राह स्वरूपेति, स्वरूपस्य स्वप्रकाशचिन्मात्रस्वभावस्यात्मनो लाभः साक्षादनुभवस्तेन विरहो वियोगस्तस्माद्धेतोः स्वप्रकाशात्मलाभ एव तुर्यशब्दवाच्यः सर्वशास्त्रेषु प्रसिद्धोऽतः परिशेषान्मूढत्वाच्च मूढभावादस्या विस्मृतेर्मूढसमाधित्वं सिद्धमिति ज्ञेयम्। अयं भावः, मौढ्यशेषेण तपःक्लेशेन च देहादिविस्मृतिर्मूढसमाधिरित्युच्यते, रोगादिपीडापूर्विका देहादिविस्मृतिर्मूर्छा, प्राणादिवियोगपूर्विका देहादिविस्मृतिर्मृत्युरित्युच्यते, सुखानुभवपूर्विका मौढ्यविशिष्टा

देहादिविस्मृतिः सुषुप्तिरुच्यते स्वयं प्रकाशात्मलाभपूर्विका मौ-
ढ्यहीना तुर्येति विवेकः, ननु मूढसमाध्यादितुर्यान्तावस्थापञ्चके
दृश्यभानाभावमात्रेणैव मौढ्यशेषेपि मुक्तिसिद्धिः कुतो नेत्या-
शङ्क्य तदर्धाङ्गीकारेण शेषं समाधत्ते दृश्यभानमिति, आसु तू-
क्तपञ्चावस्थास्वपि दृश्यभानं दृश्यस्य जगतो भानमनुभवो नास्ति
न विद्यते सत्यमेतत्परन्तु तावता दृश्यभानाभावमात्रेणैव केवलं
न कृतार्थता कृतकृत्यत्वलक्षणा नित्यतृप्तिर्न न भवेत् ॥ १९ ॥

कुत इयत आह ।

व्युत्थानानन्तरं तेषां संसारोपि यदास्थितः ।

यदात्मदर्शनं नास्ति संसारोऽबाधितस्ततः ॥ २० ॥

व्युत्थानेति । तेषां मूढसमाध्यादिसुषुप्त्यन्तावस्थाचतु-
ष्कस्थितानां व्युत्थानानन्तरं तत्तदवस्थातो व्युत्थानं देहादि-
व्यापारप्रवृत्तिस्तस्मादनन्तरं पश्चात्संसारोपि सुखदुःखजन्म-
मरणादिरूपा संसृतिरपि यद्यतः कारणादास्थितोऽभि-
व्याप्यान्तःकरणं स्थितो विद्यमान इत्यर्थः, दृश्यते इति शेषः ।
ननु मूढसमाध्यादिसुषुप्त्यन्तास्ववस्थास्विव व्युत्थानानन्तरं
दृश्यप्रतीतिस्तुर्येपि समानैवेति पूर्वावस्थाचतुष्कतुर्ययोः को वि-
शेषो येन तुर्यस्य मुक्तिरूपत्वमन्यासां नेत्युच्यत इत्याशङ्क्य व्यु-
त्थानकाले संसारप्रतीतौ समायामपि दृश्यसंसारबाधिताबाधित-
त्वलक्षणं तयोर्वैलक्षण्यं दर्शयति यदिति, यद्यतः कारणान्मूढस-
माध्यादिसुषुप्त्यन्तावस्थाचतुष्क आत्मदर्शनमात्मनः सच्चिदा-
नन्दघनस्य स्वस्य दर्शनं ज्ञानं नास्ति न विद्यते ततस्तस्मा-
त्कारणात्तास्ववस्थासु संसारो जन्मादिरूपोऽबाधितोऽसत्त्व-
दृष्ट्या नावलोकितः स्थितो वर्तत इति शेषः, अतः पूर्वावस्था-
चतुष्के संसारभानाभावमात्रेण न तु सिद्धिः, तुर्ये च तत्सत्त्वेपि

बाधितत्वाद्व्युत्थानादौ तदसत्त्वस्य प्रतीयमानत्वेन सर्वदैव संसाराभावे सति मुक्तिसिद्धिरिति भावः ॥ २० ॥

उक्तार्थे दृष्टान्तकथनं प्रतिजानीते ।

कथयाम्यत्र दृष्टान्तं सावधानमनाः शृणु ।
स्वप्ने तु विस्मृतं जाग्रज्जाग्रत्स्वप्ने न बाधितम् ॥२१॥

कथयामीति । अहं अत्रोक्तार्थे दृष्टान्तमुपमानं कथयामि निरूपयामि त्वं सावधानमना अवधानमुक्तार्थावधानं तेन सह वर्त्तत इति सावधानमुक्तार्थग्रहणक्षमं मनोन्तःकरणं यस्य स तथाभूतः सञ्छृणु अवधारय; प्रतिज्ञातमेव दृष्टान्तं सार्धेनाह स्वप्ने त्विति, स्वप्ने स्वप्नावस्थायां जाग्रज्जागरव्यापारजातं विस्मृतं तु विस्मृतमपि अभातमपीत्यर्थः, लयावस्थयाऽभातं तज्जाग्रज्जागरणं स्वप्ने स्वप्नावस्थायां न बाधितं नासत्त्वेन निश्चितम् ॥ २१ ॥

तस्मादनन्तरं जाग्रत्स्वप्नस्य च यथास्थितम् ।
जागरे बाधितः स्वप्नस्तेन मिथ्यात्वमागतः ॥२२॥

तस्मात्कारणात्स्वप्नस्य स्वप्नावस्थाया अनन्तरं पश्चाद् यथा स्थितं यथा यद्वत्पूर्वं जाग्रदवस्थायां स्थितं वर्तमानं तथा तद्वज्जाग्रज्जागरणं स्थितं विद्यत एवेति सिद्धं सर्वलोकप्रत्यक्षमिदमिति भावः । किञ्च जागर इति, स्वप्नः स्वप्नव्यवहारो जागरे जाग्रदवस्थायां बाधितोऽसत्त्वेन ज्ञातोऽस्ति तेन कारणेन मिथ्यात्वमसत्त्वमागतः प्राप्तो भासमानोपि असन्नेव स इत्यर्थः, यथेति शेषः ॥ २२ ॥

दार्ष्टान्तिकमाह द्वाभ्याम् ।

तथा मूढसमाधौ तु विस्मृतं सकलं जगत् ।
व्युत्थानानन्तरं पश्चाद्यथापूर्वमिवास्थितम् ॥ २३ ॥

तथेति । तथा तद्वन्मूढसमाधौ तूक्तलक्षणे भवप्रत्ययनाम्नि समाधानेपि सकलं सम्पूर्णं जगद्विश्वं विस्मृतमभातमपि न बाधितमसत्त्वबुद्ध्या न निश्चितं यत इत्यध्याहार्यं, अतो हेतोः पश्चात्समाध्युत्थानानन्तरं यथापूर्वं यथा यद्वत्पूर्वं प्राक्समाधेः स्थितं तथा तद्वत्सत्यतयैवावस्थितं बीजरूपेण समाध्यवस्थायामपि स्थितमित्यर्थः, उपलक्षणमेतन्मूर्छामृत्युसुषुप्तीनामपि ॥ २३ ॥

किञ्च ।

तुरीये बाधितं विश्वं तस्मान्मिथ्यात्वमागतम् ।
व्युत्थानेपि मुनेस्तात तन्मिथ्यैव न वास्तवम् ॥२४॥

विश्वं जगत्समस्तत्रिपुटीरूपं तुरीये तुर्यावस्थायां बाधितं मिथ्यात्वनिश्चितमस्ति तस्मात्कारणात्तद्विश्वं मिथ्यात्वमसत्त्वमागतं प्राप्तं यतः कारणाद् अतस्तद्विश्वं व्युत्थानेपि समाधितो व्युत्थाने जागरणे जाते सत्यपि तद्विश्वं प्रतीयमानमपि मिथ्यैवासदेव न वास्तवं नैव सत्यं भवेदिति ज्ञेयमतस्तुर्यारूढानां सर्वदैव तुर्यास्थितिः सिद्धेति भावः ॥ २४ ॥

उक्तार्थमेव द्रढयितुं दृष्टान्तान्तरमाह द्वाभ्याम् ।

रज्जुसर्पं यथा दृष्ट्वा कश्चिद्देशान्तरं गतः ।
यदा पुनः समायाति तदा तस्माद्बिभेत्यसौ ॥ २५ ॥

रज्जुसर्पमिति । यथा कश्चित्पुरुषो देवदत्ताद्यभिधो रज्जुसर्पं रज्जुविवर्त्तं भुजङ्गं दृष्ट्वाऽवलोक्य तत्रैव विचारमकृत्वैव देशान्तरं स्थानान्तरं गतः प्राप्तः । स यदा यस्मिन्समये

पुनर्भूयः समायाति आगच्छति तदा तस्मिन्समये तस्माद्रज्ज्वावर्तसर्पादसौ देवदत्ताद्यभिधः पुरुषो बिभेति भीतिं प्राप्नोति ॥२५॥

नायं सर्प इति ज्ञात्वा यदि देशान्तरं गतः ।
यदा पुनः समायाति तदा तस्माद्बिभेति न ॥२६॥

नायमिति । स देवदत्ताद्यभिधः पुरुषो रज्जुसर्पभ्रान्तिस्थले स्थित्वा दीपादिकमानीय रज्जुं दृष्ट्वाऽयं मद्दृष्टिगोचरः सर्पः सर्पो न भवति किन्तु रज्जुरेवेयमित्येवं ज्ञात्वाऽनुभूय यदि यर्हि देशान्तरमन्यस्थानं गतः प्राप्तः, तत्र च कार्यं कृत्वा यदा यस्मिन्समये पुनर्भूयः समायाति आगच्छति तदा तस्मिन्काले सर्पस्य बाधितत्वान्मिथ्यात्वेनावलोकितत्वान्मिथ्यात्वेनापि स्मृतिमायाते सर्पे प्रतीयमाने मय्यपि तस्मात्सर्पान्न बिभेति भयं न प्राप्नोति यथा यद्वत् ॥ २६ ॥

दार्ष्टान्तिकमाह द्वाभ्याम् ।

तथा मूढसमाधानाद्गतः संसारविस्मृतिम् ।
यदा व्युत्थानमाप्नोति तदा संसारजं भयम् ॥२७॥

तथेति । तथा तद्वन्मूढसमाधानान्मूढत्वपूर्वकं यत्समाधानं भवप्रत्ययसंज्ञकं तस्माद्धेतोः संसारविस्मृतिं संसारस्य जन्ममरणादिरूपप्रपञ्चस्य विस्मृतिं विस्मरणमभानमित्यर्थः, गतः प्राप्तो भवति, स पुरुषो यदा यस्मिन्समये व्युत्थानं प्रपञ्चस्फुरणरूपं जागरणं ततः समाधेराप्नोति आयाति तदेत्यध्याहार्यं तदा तस्मिन्काले संसारजं संसाराज्जन्ममरणादिरूपाज्जातं भयं भीतिं प्राप्नोति ॥ २७ ॥

किञ्च ।

यदि विद्वत्समाधानाद्गतः संसारविस्मृतिम् ।

यदा व्युत्थानमाप्नोति बाधितत्वाद्बिभेति न ॥२८॥

यदीति । स पुरुषो यदि यर्हि विद्वत्समाधानाज्ज्ञानपूर्वं यत्समाधानं समाधिस्तस्माद्धेतोः संसारविस्मृतिं संसारस्य जन्ममरणसुखदुःखादिरूपस्य प्रपञ्चस्य विस्मृतिमभानं गतः प्राप्तो भवति, स च यदा यस्मिन्समये ततः समाधेर्व्युत्थानं प्रपञ्चस्फुरणरूपं जागरणमाप्नोति आयाति तदेत्यध्याहार्यं तदा तस्मिन्समये प्रपञ्चस्य पूर्वसंस्कारेण प्रतीतावपि बाधितत्वादसत्त्वेन निश्चितत्वान्न बिभेति भयं न प्राप्नोति ॥ २८ ॥

ननु प्रपञ्चविस्मरणादेव कृतार्थता न बाधितत्वेनावलोकनादित्याग्रहं कुर्वाणं प्रत्याह ।

यदि विस्मरणादेव मुक्तिर्भवितेति देहिनः ।
सुषुप्तिर्जायते नित्यं तया मुक्तो न किं भवेत्॥२९॥

यदीति । यदीति सम्भावनायां देहाभिमानिनो जीवस्य विस्मरणादेव प्रपञ्चभानाभावादेव केवलं ज्ञानं विना मुक्तिर्मोक्षो भवेदिति सम्भाव्यते, तर्हि तदा नित्यं सर्वदैव सुषुप्तिर्निद्रा जायते भवति तत्र प्रपञ्चविस्मृतिसत्त्वेपि विना बोधतया सुषुप्त्या मुक्तो मोक्षं प्राप्तो न किं भवेत्कुतो न भवेन्न स्याद्यदि विस्मृत्यैव कृतार्थता स्यात्तर्ह्यलं गुरुसेवादिप्रयत्नैरितिभावः ॥ २९ ॥

तस्मात्तुरीया सर्वासामुत्तमा च विलक्षणा ।
षडप्यवस्था एतस्याः कलां नार्हन्ति षोडशीम्॥३०॥

तस्मादिति । तस्मात्कारणात्सर्वासां सर्वावस्थानां मध्ये तुरीया तुर्यावस्थोत्तमा श्रेष्ठा विलक्षणा लक्षणैरपि भिन्नास्ति, तदेवोक्तं तुर्यश्रैष्ठ्यं पुनर्द्रढयति षडपीति, षडपि षड्संख्याका

अपि जाग्रत्स्वप्नसुषुप्तिमूर्च्छामृत्युमूढसमाध्याख्या अवस्था एतस्यास्तुरीयाया अवस्थायाः षोडशीं षोडशसंख्याकां कलामंशं नार्हन्ति नाप्नुवन्ति अतस्तुर्यावस्था सर्वावस्थासु श्रेष्ठेति ज्ञेया॥३०॥

सा च श्रद्धादिसाधनैर्विना कर्मभिस्तत्साध्येषु लोकेषु न लभ्यत इत्याशयेनाह ।

आब्रह्मकल्पं गरुडो यदि धावेत्सवेगतः ।
न चाप्नोति तथाप्येनं दूराद्दूरतरैव सा ॥ ३१ ॥

आब्रह्मेति । गरुडो वैनतेय आब्रह्मकल्पं ब्रह्मणो विरिञ्चेः कल्पं नाशमाऽभिव्याप्येत्याब्रह्मकल्पं द्विपरार्धकालपर्यन्तमित्यर्थः, सवेगतः स्वसंभ्रमेण सह धावेत शीघ्रं गच्छेद्यदि यर्हि तथापि तर्ह्यपि सा तुर्यावस्थैनं गरुडं न चाप्नोति नैव प्राप्नोति च पुनर्दूराद्दूरतरैव दूरतोपि दूरा भवति विना ज्ञानादिसाधनैर्न प्राप्यत इति भावः । तर्हि कैः साधनैः प्राप्यत इत्याशङ्क्य तानि दर्शयति ।

श्रद्धा यद्यस्ति वेदान्ते तीव्रा यदि मुमुक्षुता ।
ध्यानाभ्यासस्तथा गाढः सर्वत्र सुलभैव सा ॥३२॥

श्रद्धेति । कस्यापि पुरुषस्य वेदान्ते वेदान्तशास्त्रे श्रद्धा विश्वासरूपान्तःकरणवृत्तिर्यदि यर्हि स्याद्भवेत्तथैव तद्वदेव तीव्राऽनवच्छिन्ना दृढेत्यर्थः, मुमुक्षुता मोक्षेच्छुत्वं यदि यर्हि स्याद्भवेत्तथा तद्वद्गाढो दृढो निरन्तर इत्यर्थः, ध्यानाभ्यासो ध्यानं विजातीयप्रत्ययानन्तरितसजातीयात्मप्रत्ययप्रवाहरूपं तस्मिन्नभ्यासः पुनः पुनरावर्त्तनरूपो यदि यर्हि स्याद्भवेत्तर्हि सा तुर्यावस्था सर्वत्र स्ववासस्थानेऽन्यत्र ब्रह्मलोकादिनरकान्तस्थाने-

ष्वपि, यद्वा सर्वत्र स्वस्य जाग्रदादिषडवस्थास्वपीत्यर्थः, सुलभैव सुखेन लब्धुं शक्येत्यर्थः, स्वरूपत्वादिति भावः ॥ ३२ ॥

उक्तावस्थासु मध्ये तिसृणां निष्फलतामाह ।

मृत्युमूर्च्छासुषुप्तिश्च न तपस्तेन निष्फलाः ।
रूढमूढसमाधानं तप उग्रं महाफलम् ॥ ३३ ॥

मृत्युरिति। मृत्युर्मरणावस्था पीडादिना देहाद्यज्ञानरूपा मूर्च्छावस्था सुषुप्तिश्च निद्रापि लोकप्रसिद्धा—एतास्तिस्रोऽवस्था न तपः। तप इत्युपलक्षणं पारलौकिककर्माद्यभावेनैहिकसुखसाधनकर्माद्यभावाच्च तेन कारणेन निष्फला निष्प्रयोजना भवन्ति अतस्तासु अतीवानादरः कर्तव्य इति भावः, सांसारिकफलेप्सुभिस्तु मूढसमाधावेवादरो विधेयो न मुमुक्षुभिरित्याशयेनाह रूढेति, रूढमूढसमाधानं रूढं प्राप्तं मूढत्वपूर्वकं समाधानं समाधिरुग्रं शापानुग्रहसामर्थ्यजनकमतो महाफलं महच्छ्रेष्ठं फलं राज्यादिकं यस्मात्तत्तथोक्तं तपस्तपो भवति अतस्तत्र सांसारिकफलेप्सुभिरेवादरो विधेयो न मुमुक्षुभिरिति भावः ॥ ३३ ॥

मुमुक्षुभिस्तु तुर्यायामेवादरो विधेय इत्याशयेन तुर्यास्वरूपं तत्फलं च निरूपयति ।

विद्या विद्वत्समाधिस्तु तेन मोक्षप्रदो हि सः ।
सप्तानामप्यवस्थानामेवंरूपा व्यवस्थितिः ॥ ३४ ॥

विद्येति। विद्वत्समाधिस्तु विदुषां ज्ञानिनां समाधिः समं ब्रह्माऽऽधीयते साक्षात्क्रियतेऽस्मिन्निति समाधिस्तुर्यावस्था तुपदेन मूढसमाधेरस्यातिवैलक्षण्यं सूचितं, विद्या ज्ञानमेवास्ति स विद्वत्समाधिस्तेन विद्यारूपत्वेन मोक्षप्रदो मोक्षस्य मुक्तेः प्रदो दाता भवति हि प्रसिद्धमेतद्विद्वत्सु अतो मुमुक्षुभिरत्रैवादरो

विधेय इति भावः, उक्तमवस्थानिर्णयमुपसंहरति सप्तानामिति, हे शिष्य सप्तानामपि सप्तसंख्याकानामपि अवस्थानां स्थितीनां व्यवस्थितिर्व्यवस्था मर्यादेत्यर्थः, एवंरूपैवमीदृशं रूपं स्वरूपं यस्याः सा तथोक्ता ज्ञेया ॥ ३४ ॥

एवं सप्ताप्यवस्था निरूप्येदानीमेतत्सप्तावस्थानिरूपणं सप्तावस्थावच्चित्तसाक्षिचिन्मात्रज्ञानार्थनिरूपितमिति द्योतयति।

सप्तावस्था इमाः सन्ति चित्तस्यैव चितेस्तु न।
अवस्थाभवनं चित्तमवस्थासाक्षिणी तु चित् ॥ ३५॥

सप्तेति। इमा निरूपिताः सप्त सप्तसंख्या अवस्था भूमयश्चित्तस्यैवान्तःकरणस्यैव सन्ति विद्यन्ते, चितस्तु अवस्थासाक्षिचिन्मात्रस्यात्मवस्तुनस्तुपदेनात्मनोऽन्तःकरणान्महद्वैलक्षण्यं सूचितं, नैव सन्ति। कुतः इत्यत आहावस्थेति, अवस्थाभवनमवस्थानां जाग्रदादितुरीयान्तानां स्थितीनां भवनं क्षेत्रं गृहं वोतत्पादकत्वान्निवासत्वाच्च चित्तमन्तःकरणमस्ति चिच्चैतन्यं तद्विलक्षणाऽस्ति, तदेव वैलक्षण्यमाहाऽवस्थेति, अवस्थासाक्षिण्यवस्थानां सप्तानां भूमीनां साक्षिण्यव्यवधानेन प्रकाशिका ऽस्ति ॥ ३५ ॥

एतत्प्रकरणाभ्यासफलमाह।

अवस्थानां व्यवस्थेयं यदि भूयो विभाव्यते।
अवस्थानां तदा साक्षी साक्षात्प्रत्यक्षमीक्षते ॥ ३६॥

अवस्थानामिति। यदि यर्हीयं निरूपिताऽवस्थानां सप्त संख्याकानां स्थितीनां व्यवस्था व्यवस्थितिर्मर्यादेत्यर्थः, भूयः पुनः पुनर्विभाव्यते विचार्यते तदा तर्हि अवस्थानां जाग्रदादीनां सप्तावस्थानामेतद्विचारकः साक्षी साक्षादव्यवधानेन प्र-

काशकश्चिन्मात्ररूपोऽहमस्मीति साक्षात्प्रत्यक्षमेव स्वयं प्रत्यक्षमपरोक्षं यथा तथेक्षते पश्यति जानातीत्यर्थः, अतो मुमुक्षुभिः सर्वदैवेयं विचार्येति भावः ॥ ३६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपावस्थाऽव्यवस्थार्थप्रकाशः पञ्चदशः ॥ १५ ॥

---

अथमुनीन्द्रदिनचर्या ।

एवमवस्थाऽव्यवस्थां निरूप्येदानीं तत्फलभूतचिन्मात्रस्वरूपेऽवस्थाऽवस्थातत्साक्षिणि मनःस्थिरतासिद्ध्यै मुनीन्द्रदिनचर्यामिषेण तत्स्वरूपं निरूपयिष्यन्मुनीन्द्रदिनचर्याख्यं सार्धद्व्यशीत्युत्तरशतश्लोकं प्रकरणमारभते, तत्र चावान्तरप्रकरणानि जागरण शौच प्रातःस्मरण स्नानकाल स्नान वस्त्रधारण पवित्रादिधारणाचमन प्रातःसंध्या प्राणायामार्घ्यदान गायत्रीजपोपस्थान सहोमाङ्गहोम यज्ञशालादिप्रायश्चित्ताग्न्युद्धरणहोमाहुत्यन्तब्रह्मयज्ञ तर्पण देवपूजा देवपूजोपयुक्तशास्त्रार्थ पञ्चमहायज्ञोपयज्ञ दान मध्यान्हसंध्या वैश्वदेव बलिदान भोजन ताम्बूलग्रहणवामकुक्षिशयन पुराण सायंसंध्या रात्रिकृत्य दिनचर्याफलनिर्णयाख्यानि क्रमेण त्रि चतुः पञ्च त्र्यैकैक सार्धद्व्येक सार्धत्रि षोडश त्रि चतुर्द्वि पञ्चदश पञ्चैक चतुर्दश सप्तैक त्र्यैकैकैकैकैकैक द्वि सार्द्धद्वासप्तति द्वि द्वि त्रीणि श्लोकानि क्रमेणोपन्यस्तानि, तत्र तावत्तां मुनीन्द्रदिनचर्यां प्रतिज्ञातां निरूपयितुं प्रतिजानीते ।

## अथ मुनीन्द्रदिनचर्या ।

अथेति । अथावस्थाऽव्यवस्थानिरूपणानन्तरं मुनीन्द्रदिनचर्या मुनयो मननवन्तस्तेषामिन्द्राः श्रेष्ठास्तेषां दिनं वक्ष्यमाणमहस्तस्य

सम्बन्धिनी चर्याऽऽचारो मुनिसम्बन्धिदिवसे मुनीनामेवाचार इत्यर्थः, निरूप्यत इति शेषः। एवं प्रकरणनिरूपणं प्रतिज्ञायेदानीं मुनीन्द्रदिनचर्यानिरूपणे स्वप्रयोजनमाह।

विचित्राक्षरविन्यासैः पवित्रार्थकथारसैः।
पावयामि निजां वाणीं मुनीन्द्रदिनचर्यया॥ १॥

विचित्रेति। अहं विचित्राक्षरविन्यासैर्विचित्रा अक्षराणां विन्यासा वर्णस्थापना येषु पदेषु तैस्तथा पवित्रार्थकथारसैः पवित्रोऽर्थो यासां कथानां तास्तथोक्ताः कथास्तासां कथानां रसाः सुखविशेषा यत्र विद्यन्ते तथाभूतैः पदैर्युक्तयेति शेषः, मुनीन्द्रादिनचर्यया मुनीन्द्रा मुनिश्रेष्ठाः पञ्चमभूमिकाद्यारूढास्तेषां दिनं स्वात्मनः साक्षात्प्रकाशरूपं तत्र या चर्याऽऽचारस्तया तत्प्रतिपादकेन प्रकरणेनेत्यर्थः, निजां स्वीयां वाणीं भाषां पावयामि पवित्रां करोमि, एतदेव स्वप्रयोजनमिति भावः॥ १॥

एवं स्वप्रयोजनमभिधायेदानीमेतत्प्रकरणस्य प्रामाण्यायैतत्संप्रदायज्ञानाय च गौरीमहेश्वरसंवादेनैतत्प्राकट्यं दर्शयति।

गौरीं महेश्वरः प्राह चिदानन्दमयीं स्थितिम्।
वदामि तन्मतच्छायां दिनचर्यापदेशतः॥ २॥

गौरीमिति। महेश्वरो महान्ब्रह्मादिष्वतिश्रेष्ठः स चासावीश्वरः सर्वनियन्ता सदाशिव इत्यर्थः, गौरीं पार्वतीं प्रति चिदानन्दमयीं चिच्चेत्यरहितं चिन्मात्रं तदभिन्नो य आनदस्तद्रूपां स्थितिमवस्थां प्राधान्ये मयट् प्राहोक्तवानहमपि अत्र प्रकरणे दिनचर्यापदेशतो दिनस्य मुनीन्द्रसम्बन्धिदिवसस्य चर्या मुनीन्द्राणामेवाचारस्तस्या अपदेशो व्याजं तेन कृत्वा सार्वविभक्तिकस्तसिः, तन्मतच्छायां तस्य शिवस्य यन्मतं चिदभिन्नसु-

खनिरूपकाभिप्रायस्तस्य च्छायामंशमात्रमित्यर्थः, वदामि कथयामि अत एतत्प्रकरणनिरूप्यार्थस्य प्रामाण्यमिति भावः ॥ २ ॥

इदानीं मुनीन्द्राणां दिनचर्यां निरूपयितुं मुनीन्द्रदिनबोधनाय तत्प्रातर्जागरणं लक्षयति ।

यस्मिञ्जागरणे प्राप्ते पुनर्निद्रा न जायते ।
सुमङ्गलं मुनींद्राणां प्रातर्जागरणं हि तत् ॥ ३ ॥

इति बो० मुनीन्द्र० प्रातर्जागरणनिर्णयः प्रथमः ॥ १ ॥

यस्मिन्निति । लौकिकार्थस्तावद्यस्मिन्प्रसिद्धे लौकिके जागरण इन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणे जागरिते प्राप्ते लब्धे सति पुनर्भूयस्तद्दिने निद्रा सुषुप्तिरिन्द्रियैः सहान्तःकरणस्य कारणाज्ञानमात्रस्थितिः सुषुप्तिरित्युक्तलक्षणा न जायते न भवति तदुक्तलक्षणं मुनीन्द्राणां श्रेष्ठकर्मशास्त्रज्ञानिनां विधिनिषेधज्ञानवतामित्यर्थः, प्रातर्जागरणं सूर्योदयात्प्रागुपलक्षिते प्रातः प्रभाते जागरणं जागृतिर्ज्ञेयं हि प्रसिद्धमेतत्सर्वजनेष्वित्यर्थः, प्रकृतेर्थे तु यस्मिन्प्रपञ्चप्रसिद्धविलक्षणे जागरणे स्वस्वरूपस्फुरणलक्षणे जागरिते 'यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति यो जागार तमयं सोम आह तवाहमस्मि सख्येन्योकाः, इति श्रुतेः ।

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' ॥ इति ।

स्मृतेश्च, प्राप्ते लब्धे सति सोऽहमिति स्वात्मन्यनुसंहिते सतीत्यर्थः, पुनर्भूयो निद्रा स्वरूपास्फुरणरूपा सुषुप्तिर्लोकप्रसिद्धा निद्रापि न जायते न प्रादुर्भवति सत्त्ववती न भवतीत्यर्थः, मुनीन्द्राणां मननशीलेषु श्रेष्ठानां पञ्चम्याद्या-

रूढानामित्यर्थः, सुमङ्गलं शोभनं मङ्गलं मोक्षरूपं यत्र तदुक्तलक्षणं प्रातर्जागरणं चिदादित्योदयोपलक्षिताहं ब्रह्मास्मीति वृत्तौ भवं प्राभातिकं जागरणं जागृतिर्भवति हि एतद्विद्वत्सु प्रसिद्धमित्यर्थः ॥ ३ ॥

इति श्रीनरहरिशिष्यदि० बोधसारा० मुनीन्द्रदिनचर्यार्थप्रकाशे प्रातर्जागरणार्थप्रकाशः प्रथमः ॥ १ ॥

---

अथ शौचनिर्णयः।

एवं मुनीन्द्राणां जागरणं निर्णीयेदानीं तेषामेव शौचं निर्णेतुं मुनीन्द्रशौचनिर्णयाख्यं चतुःश्लोकं प्रकरणमारभते, तत्रादौ मुनीन्द्राणां शौचं प्रदर्शयितुमशौचकारणमाह।

देहेन्द्रियमनःप्राणबुद्ध्यहङ्कारचेतसि।
अशुचावात्मभावोऽसावशुचित्वस्य कारणम् ॥१॥

देहेति। देहेन्द्रियमनःप्राणबुद्ध्यहङ्कारचेतसि देहश्च कायः, इन्द्रियाणि च श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च शब्दस्पर्शरूपरसगन्धज्ञानकरणानि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च वचनादानगमनविसर्गानन्दाख्यक्रियासाधनानि, मनश्च संशयरूपान्तःकरणवृत्तिः, बुद्धिश्च निश्चयात्मिकान्तःकरणवृत्तिः, अहङ्कारश्चैतेषु तादात्म्यभ्रमरूपान्तःकरणवृत्तिः, चेतश्च स्मृतिप्रत्यभिज्ञानुभवकरणरूपान्तःकरणवृत्तिः, एतेषां समाहारे द्वन्द्व एकवद्भाव एकवचनान्तप्रयोगः, एतस्मिन्समूह आविद्यकत्वेन मलिनत्वादशुचावशुद्धे य आत्मभाव आत्मानं विस्मृत्यात्मनः सत्तां तत्रारोप्य तस्मिन्नात्मप्रतीतिरसौ सोऽनात्मन्यात्मभावोऽशुचित्वस्य परमशुद्धात्मन्यशुद्धतायाः कारणं निमित्तं

भवति अतः शौचमपेक्षितमिति भावः, लोके तावद्देहे विड्मूत्रादिना मलिनद्रव्येण लिप्ते सति अशुचित्वं यत्प्रतीयते, इन्द्रियेषु चाशुचिशब्दादिश्रवणादिनाऽशुचित्वस्फूर्त्याऽशुचित्वं, मनसि प्राणे च तेषामशुचित्वसङ्कल्पादिनाऽशुचित्वं, बुद्धौ च तेषामशुचित्वनिश्चय एवाशुचित्वम्, अहङ्कारे च तेषु आत्मतादात्म्येनाहमशुचिरस्म्यशुचित्वं, चेतसि तु तेषामहङ्कारादिदेहान्तानामशुचित्वानुसन्धानरूपमशुचित्वम्, इदमेव सर्वमशुचित्वस्य कारणं भवति अत एवैतदनुसन्धानाभाव आबालगोपमाशौचाविध्यभावोपि दृश्यत इति भावः ॥ १ ॥

एवमशुचित्वकारणं निरूप्येदानीं शौचं विधत्ते ।

साक्षित्वभावनातोयैस्तथा वैराग्यमृत्स्नया ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ २ ॥

साक्षित्वेति । यथा लोके निर्मलोदकेन शुद्धमृदा च मलमूत्रादिधावनपूर्वकं तद्गन्धनिवृत्तिपर्यन्तं गुदहस्तपादादिप्रक्षालनरूपं शौचमालस्यं परित्यज्य क्रियते तद्वदत्र अतन्द्रितोऽनलसो भूत्वेति शेषः, आलस्यं परित्यज्य प्रवर्त्तमान इत्यर्थः, एतादृशो मुनिः साक्षित्वभावनातोयैर्देहादिचित्तान्तेषु यत्साक्षित्वं साक्षादव्यवधानेन प्रकाशयितृत्वं स्वस्य तस्य भावना चिन्तनमखण्डसच्चिदानन्द आत्माहमितिअनुसन्धानमित्यर्थः, तदेव सर्वमलक्षालकत्वात्तोयानि जलानि तैः कृत्वा तथा तद्वद्वैराग्यमृत्स्नया विगतो रागो यस्मात्स विरागो ब्रह्मलोकान्तसर्वविषयेषु विरसस्तस्य भावो वैराग्यं देहादिचित्तान्तेष्वनात्मपदार्थेषु विरसत्वमित्यर्थः, तदेव तेषु स्वस्य वासनारूपगन्धनिवर्त्तकत्वान्मृत्स्ना प्रशस्ता मृत्तया 'प्रशस्ता तु मृत्स्ना मृत्सा च मृ-

त्तिके'समरसिंहः, गन्धलेपक्षयकरं गन्धस्याहङ्कारचित्तादिदेहा-न्तेषु अनात्मभूतेषु वासना एव गन्धवत्तदाश्रयद्रव्यस्मारकत्वा-द्गन्धस्तस्य लेपः सम्बन्धः स्वस्मिन्तेषां साक्षिभूते पूर्वकालिक-तादात्म्याध्याससंस्कारेण स्फुरणात्तद्रत्त्वप्रतीतिरूपस्तस्य क्षयो नाशस्तस्य करं कारकमिति शौचविशेषणं शौचमनात्मभूतदेहा-दिचित्तान्तपदार्थानां सत्त्वपूर्वकस्फूर्तिनिरासरूपं शुद्धात्मस्फूर्ति-रूपं वा कुर्यात्सम्पादयेद्, यद्वा गन्धलेपक्षयकरमिति क्रियावि-शेषणं तस्मिंश्च पक्षे गन्धलेपक्षयकरं यथा भवति तथा शौचं सम्पादयेदित्यर्थः ॥ २ ॥

एवं पादादिप्रक्षालनरूपशौचवन्मुनीनां पूर्वाङ्गभूतं शौचं निरूप्येदानीं मङ्गलपदार्थदर्शनस्पर्शनलक्षणशौचवच्छौचं मुनि-सम्बन्धि दर्शयति अर्धेन ।

एवं विधेन विधिना यत्सर्वं मंगलार्जनम् ।
एतदेव मुनीन्द्राणां प्रातःशौचं विशुद्धिकृत् ॥३॥

एवमिति । एवं विधेनोक्तप्रकारेण विधिना शौचानुष्ठा-नेन यद्यादृशं सर्वं सर्वशब्दवाच्यं द्वैतजातं व्यवहारकाले स-माधिकाले च तद्बाधेन ब्रह्मैव प्रतीयते तत् 'सर्वं खल्विदं ब्रह्मे'-तिश्रुतिदृष्ट्या ब्रह्मैवेति मङ्गलार्जनं मङ्गलस्य शुभस्यार्जनं सम्पा-दनमेव ज्ञेयं, उक्तं शौचमुपसंहरति एतदेवेति, मुनीन्द्राणां श्रेष्ठमु-नीनां पञ्चम्यादिभूमिकारूढानामित्यर्थः, विशुद्धिकृद्देहादिम-लनिरासकत्वादत्यन्तशुद्धिकारकं प्रातःशौचं लौकिकप्रातःशौ-चवत्प्रातर्ज्ञानसूर्योदयोपलक्षितपञ्चम्यारोहणलक्षणे प्रातः-काले शौचं शुद्धिकारणं कर्मैतदेवोक्तलक्षणमिदमेव ज्ञेयं ना-न्यल्लोकप्रसिद्धं गुदहस्तपादादिप्रक्षालनरूपं दर्पणधेनुसूर्यादि-दर्शनरूपमङ्गलार्जनरूपं वा तत्तु सर्वं लौकिकमात्रमिति भावः॥३॥

एवं हस्तपादादिप्रक्षालनशौचवच्छौचं मङ्गलपदार्थदर्शनस्पर्शनं च मुनीनां निरूप्येदानीं मुखप्रक्षालनं मुनीनामाह ।

ज्ञानयोगप्रसन्नानां मुमुक्षा मुखमुच्यते ।
श्रद्धाजलेन तच्छुद्धिर्मुखप्रक्षालनं हि तत् ॥ ४ ॥

ज्ञानयोगेति । लोके तावत्प्रसिद्धमुखस्यैव प्रसिद्धजलदन्तमार्जनचूर्णादिना शुद्धिः प्रसिद्धा, ज्ञानिनां त्वेतद्विलक्षणा ज्ञानयोगप्रसन्नानां ज्ञानमेव जीवब्रह्मैक्यप्रमारूपं महावाक्यजन्यं ज्ञानमेव जीवब्रह्मयोगकारणत्वाद्योगस्तस्मिन्तेन वा प्रसन्नानां शुद्धान्तःकरणानां वैराग्यपूर्वकतदभ्यासनिष्ठानामित्यर्थः, मुमुक्षा तीव्रा मोक्षेच्छा प्रथमभूम्यारूढचित्तवृत्तिरेव मुखं भोजनसाधनं मुखमिव 'चेतो मुख' इति श्रुतेः, मुक्तिसुखभोजनसाधनत्वान्मुखमुच्यते कथ्यते विद्वद्भिरिति शेषः, एवं ज्ञानिनां मुखं प्रदर्श्येदानीं मुनीन्द्राणां तत्प्रक्षालनमाह श्रद्धेति, श्रद्धाजलेन मुमुक्षाख्यभूम्युत्तरभूमिका विचारणादिकास्तदभ्यासे श्रद्धा विश्वासः सैव मोक्षेच्छानिवृत्तिक्रमेण मोक्षप्राप्त्याऽत्यन्ततत्प्रक्षालकत्वाज्जलमिव जलं तेन तच्छुद्धिस्तस्य मुमुक्षाख्यमुखस्य शुद्धिर्मलनिवृत्तिर्भवतीति शेषः, नित्यमुक्तत्वनिश्चयेन स्वस्मिन्मुक्तीच्छाभाववत्त्वं भवतीत्यर्थः, तदुक्तलक्षणं मुखप्रक्षालनं मुखधावनं हि ज्ञानिषु प्रसिद्धं ज्ञेयं, प्रसिद्धमुखप्रक्षालनं तु व्यवहारयोग्यतामात्रापादकमिति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदि० मुनीन्द्रदिनचर्यार्थप्रकाशे शौचनिर्णयार्थप्रकाशो द्वितीयः ॥ २ ॥

---

अथ प्रातःस्मरणम् ।

एवं मुनीन्द्राणां प्रातःशौचं निर्णीयेदानीं तेषामेव प्रातःस्मरणं

निर्णेतुं प्रातःस्मरणनिर्णयाख्यं प्रकरणं पञ्चश्लोकमभिदधान आह

प्रातः स्मरन्ति मुनयो देवस्य सवितुर्महः ।
वरेण्यं तद्धियः साक्षि तदेवास्मीति संततम् ॥१॥

अथेति । अथ प्रातःशौचनिर्णयानन्तरं प्रातःस्मरणं मुनीन्द्राणामेव प्रातः प्रभाते ज्ञानसूर्योदयात्प्रागुपलक्षिते पञ्चमभूम्युदये तदारूढवृत्तौ स्मरणं चिन्तनं कथ्यत इति शेषः, लोके हि देवताग्रहपुण्यकर्मपुरुषादिस्मरणं क्रियते यथा तथा मुनीनामपि स्मर्तव्येष्टदेवतास्वरूपं निरूपयिष्यन्तत्स्मरणाय श्लोकानुदाहरति, तत्रादौ गायत्र्यर्थद्वारा तत्प्रतिपाद्यसर्वजगत्कारणत्वाद्युपलक्षितब्रह्माभिन्नात्मस्मरणमनुसन्धापयति प्रातरिति, मुनयः पञ्चम्याद्यारूढा जातसाक्षात्कारा इत्यर्थः, प्रातः स्वात्मसूर्योदयोपलक्षितकालात्प्राक्कालः प्रातःकालस्तस्मिन्पञ्चम्यारोहणसमय इत्यर्थः, सवितुर्मायोत्पादनशीलस्य सर्वजगत्कारणस्येत्यर्थः, देवस्यस्वतो द्योतमानस्य स्वयं प्रकाशस्येत्यर्थः, तस्याचिन्मात्ररूपस्यात्मनस्तच्छ्रुतिभिः परोक्षत्वेन निर्दिष्टं वरेण्यं वरणमङ्गीकारस्तद्योग्यं सुखरूपत्वात्सर्वजनप्रार्थनाविषयमित्यर्थः, महश्चिद्रूपत्वात्प्रकाशरूपं तेज इव तेजः कर्मभूतं धियः समष्टिबुद्धेः साक्षि अव्यवहितप्रकाशकं तदेव सर्वजगत्प्रकाशकत्वादिलक्षणैरुपलक्षितमेवातः सर्वबुद्धिसाक्षित्वात्तस्य स्वस्य च व्यष्टिबुद्धिसाक्षित्वेन साक्षिमात्रत्वस्योभयत्रैक्यात्तत्पदलक्ष्यं ब्रह्मचैतन्यमेवाहम्पदलक्ष्यं कूटस्थचैतन्यमस्मि भवामीति एवं प्रकारेण स्मरन्ति अनुसन्दधतीति विद्वत्पक्षेऽर्थः, उपासनापक्षे तु मुनय उपासनाशास्त्रद्वारोपासनाज्ञानवन्त इत्यर्थः, प्रातः सूर्योदयात्प्रागुपलक्षिते प्रभाते तद् 'येनसूर्यज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुने'ति श्रुत्या तमोबाधनसर्वजगत्प्रकाशकत्वादिगुणविशिष्टं निरूपितं वरेण्यं सर्व-

र्व्यवहारिजनैर्व्यवहारोपयोगितयैष्टव्यं यतो धियः साक्षि धियो ज्ञानेंद्रियविशेषस्य चक्षुषः साक्षि साक्षादव्यवधानेन प्रकाशकं सवितुः सूर्यस्य देवस्य प्रकाशरूपस्य महस्तेजस्तदेवोक्तलक्षणमेव तेजोऽहं चक्षुःक्रियाभिमानी द्रष्टा चक्षुषः पृथगसत्त्वेन द्रष्टुरपि तथात्वात्सूर्यतेजोमात्ररूप एव द्रष्टाहमस्मि भवामीत्येवं स्मरन्ति चिन्तयन्ति तेषां फलं सूर्यत्वप्राप्तिरूपं श्रुतिषूक्तं, ज्ञानिनान्तु पूर्वोक्तलक्षणेन स्मरणेन ब्रह्मत्वप्राप्तिरूपं फलं च भवतीति ज्ञेयम् ॥ १ ॥

इदानीं जाग्रत्स्वप्नसुषुप्त्याख्येऽवस्थात्रयेऽभिन्नत्वेन लक्षितेऽहम्पदलक्ष्येऽहम्पदवाच्यचिदाभासैक्यानुसन्धानलक्षणं प्रातःस्मरणं विदुषामाह ।

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।<br>
यदेकं केवलं ज्ञानं तदेवाहमहं हि तत् ॥ २ ॥

अन्वयेति । जाग्रत्स्वप्नसुषुप्तिषु जाग्रच्चेन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणा जागरावस्था, स्वप्नश्च जाग्रद्दृष्टश्रुतानुभूतविषयसंस्कारवासनावासितबुद्धौ प्रपञ्चाभासरूप इत्युक्तलक्षणा स्वप्नावस्था, सुषुप्तिश्च जाग्रत्स्वप्नविषयाकारवृत्तिभिः सहैव बुद्धेर्लयेन कारणाज्ञानमात्रात्मतया स्थितिरित्युक्तलक्षणा निद्रा, एतासु तिसृष्ववस्थासु अन्वयोऽनुवृत्तिर्ज्ञानस्य व्यतिरेको व्यावृत्तिरवस्थानां परस्परं ताभ्यां कृत्वा ज्ञानं विनाऽवस्थाप्रकाशाभावाज्ज्ञानस्यान्वयोऽवस्थासु अन्योन्यस्यामवस्थाऽभावदर्शनादवस्थानां व्यतिरेक इति विवेकस्ताभ्यामेव लक्षितं यत्केवलमभिन्नं ज्ञानमस्ति तदेवावस्थात्रयेण तद्गतत्रिपुटीभिश्चास्पृष्टत्वादभिन्नमत एव सजातीयविजातीयस्वगतभेदरहितं ज्ञानं कूटस्थचैतन्यमस्ति तदेवोक्तलक्षणं कूटस्थचैतन्यमेवाहमहम्प-

दवाच्यो देहद्वयविशिष्टश्चिदाभासोऽस्मि भवामि उपाधिविविक्तस्य चिदाभासस्य कूटस्थज्ञानाभिन्नत्वमुभयोर्लक्षणैक्यादिति भावः, अन्वयमुखेनोक्तं कूटस्थचिदाभासयोरैक्यं व्यतिरेकमुखेनाप्याहाऽहमिति, अहमहम्पदवाच्यश्चिदाभासस्तत्कूटस्थचैतन्यमस्मि भवामि हि एतच्चिदाभासकूटस्थचिदात्मनोरैक्यं यदुक्तं तद्विद्वत्सु श्रुतिष्वपि प्रसिद्धमिति द्योतितं हिपदेन।

'न पृथ्वी न जलं नाग्निर्न वायुर्द्यौर्न वा भवान्।
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये,॥
इत्यादिश्लोकैरयमेवार्थो विद्वद्भिः प्रदर्शितः। श्रुतयश्च,
'जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते।
तद्ब्रह्माऽहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते'।
इत्यादयश्चास्मिन्नर्थेऽनुसन्धातव्याः॥ २॥

इदानीं ज्ञानाज्ञानादिसर्वप्रपञ्चप्रकाशयितृत्वेन तस्मिन्नेवज्ञाने ब्रह्मलक्षणसम्भावनेन स्वस्मिन्नहम्पदवाच्ये चिदाभासे तदभिन्नत्वानुसन्धानरूपं विदुषां प्रातःस्मरणमाह।

ज्ञानाज्ञाने तद्विषयौ तदहङ्कार एव च।
प्रकाश्यन्ते येन भूम्ना तदहं ह्यहमेव तत्॥ ३॥

ज्ञानाज्ञाने इति। ज्ञानाज्ञाने ज्ञानं च घटपटादिप्रतीतिरूपमज्ञानं च पटाद्यभानरूपं ते उभे तद्विषयौ च तयोर्ज्ञानाज्ञानयोर्विषयौ ज्ञानविषयो ज्ञानप्रकाश्यो ज्ञातघटोऽज्ञानविषयोऽज्ञानावृतोऽज्ञातघटस्तौ च च पुनस्तदहङ्कारस्तयोर्ज्ञानाज्ञानयोरहङ्कारो ज्ञान्यहमज्ञान्यहमित्यपि एते सर्वे येन स्वयं प्रकाशत्वेन प्रसिद्धेन भूम्ना व्यापकेन चैतन्येन प्रकाश्यन्ते प्रकाशिता भवन्ति ज्ञानाज्ञानयोस्तत्सन्धौ च ज्ञाताज्ञातविषययोस्तत्सन्धौ

च ज्ञानाज्ञानाहम्भावयोस्तत्सन्धौ च तेषां सर्वेषां प्रकाशयितृत्वेन विद्यमानत्वात्सत्त्वं ज्ञात्रादित्रिपुटीनां तत्सन्धौ च भानरूपेणानुवृत्तत्वाद्व्यापकत्वं च तस्य ज्ञेयं, तद्ब्रह्माख्यं चैतन्यमहमहम्पदवाच्यं साधिष्ठानसाभासचैतन्यं समष्ट्यहम्पदवाच्यचैतन्यतल्लक्ष्यसर्वजगत्प्रकाशकचैतन्ययोरैक्येन तस्य व्यष्ट्यहङ्कारादिसाक्षिचैतन्यस्य च प्रकाशमात्रलक्षणैक्यादभिन्नत्वं साक्षिचैतन्याहम्पदवाच्यचैतन्ययोरपि उपाधिनिरसनेन वास्तवमभिन्नत्वमिति भावः, अस्मि। अन्वयमुखेनोक्तं व्यतिरेकमुखेनाह्ाऽहमिति, अहमेव तदहम्पदवाच्याभिन्नस्तल्लक्ष्यः कूटस्थमात्रं तद्ब्रह्माख्यचैतन्यमस्मि हि प्रसिद्धमिदं विदुषामित्यर्थः ॥ ३ ॥

इदानीं शरीरत्रयतदभिमानित्रयप्रकाशककूटस्थचैतन्यस्य शरीरत्रयनिरासेन तत्स्थचिदाभासस्य चैक्यानुसन्धानरूपं विदुषां प्रातःस्मरणमाह।

विश्वश्च तैजसः प्राज्ञो नास्म्यहं सत्स्वरूपतः।
यतस्ते तु प्रकाश्यन्ते तदहं नास्मि चेतरत् ॥ ४ ॥

विश्व इति। विश्वः स्थूलदेहतादात्म्यापन्नो जाग्रदभिमानी विश्व इत्युच्यते सोऽहं नास्मि न भवामि, तथा तैजसस्तेजोमयान्तःकरणरूपलिङ्गशरीरतादात्म्यापन्नः स्वप्नाभिमानी तैजस इत्युच्यते सोऽहं नास्मि न भवामि, तथा प्राज्ञश्च कारणशरीराभिमान्यहमज्ञ इत्यनुभवत्वात्प्राज्ञ इत्युच्यते स च सोप्यहं नास्मि न भवामि, तत्र हेतुमाह सदिति, सत्स्वरूपतः सत्कालत्रयाबाध्यं स्वं स्वीयं रूपं यस्य स तथोक्तो, यद्वा सत्कालत्र-

१ ह्यहमेव तत्।

यावाध्यं स्वं स्वतः सिद्धं स्वयमेव रूप्यत इति रूपः प्रकाशो यस्य स तथोक्तस्तादृशरूपत्वान्ममाऽतोऽहं ते न भवामीति योऽयं, विश्वादीनामन्योन्यस्मिन्व्यावृत्तत्वात्तत्सन्धौ च तेषामभावात्तदसत्वं मम तु तज्ज्ञत्वेन तेष्वनुस्यूतत्वात्तत्सन्धौ च सन्धिप्रकाशकत्वेन विद्यमानत्वात्सत्त्वमित्युभयोर्वैलक्षण्यस्यानुभूयमानत्वात्तेऽहं न भवामीति भावः, प्रकाश्यप्रकाशकत्वरूपं वैलक्षण्यमप्यनुसन्धत्ते यत इति, ते विश्वतैजसप्राज्ञा उक्तलक्षणा यतो यस्मान्निर्विकारचैतन्यात्प्रकाश्यन्ते प्रकाशिता भवन्ति तत्तु सर्वदेहादिज्ञानविलक्षणं चैतन्यं ब्रह्म विश्ववैश्वानरयोस्तदुपाध्योः समष्टिव्यष्टिस्थूलदेहयोश्च वनवृक्षयोस्तदवच्छिन्नाकाशयोश्चैक्यमिवैक्यात्तैजसहिरण्यगर्भयोश्च तदुपाध्योरपि समष्टिव्यष्टिलिङ्गशरीरयोर्वनवृक्षयोस्तदवच्छिन्नाकाशयोरैक्यवदैक्यात्तथा प्राज्ञेश्वरयोस्तदुपाध्योः समष्टिव्यष्टिकारणशरीरयोरपि तथैक्यात्प्राज्ञादीनां प्रकाशकचैतन्यस्यैव वैश्वानरादीनामपि प्रकाशकत्त्वाद्ब्रह्मत्वमतो ब्रह्माभिन्नं तद्विश्वादिप्रकाशकं कूटस्थचैतन्यमहमहम्पदवाच्यार्थनिरासेनास्मि भवामि, इतरत्कूटस्थचैतन्यादितरद्भिन्नं चिदाभासरूपं विश्वादिरूपं वा तदुपाधिजातं वा तद्भिन्नं ब्रह्म वा ततश्च भिन्नं कूटस्थचैतन्यं वा ब्रह्मप्रकाश्यमीश्वरादि चैतन्यं तदुपाधिभूतं समष्टिशरीरत्रयं वाऽहं नास्मि किन्तु सच्चिदानन्दाखण्डैकरस एवाहमस्मीति भावः, पाठान्तरे व्यतिरेकेणाहम्पदलक्ष्यकूटस्थस्य तत्पदलक्ष्यब्रह्मणश्चाभेदोऽनुसन्धातव्यः ॥ ४ ॥

इदानीं ज्ञानाज्ञानप्रपञ्चतल्लयसाक्षित्वेन सर्वदा स्वसच्चिद्रूपत्वानुसन्धानरूपं विदुषां प्रातःस्मरणमाह ।

ज्ञानाज्ञानप्रपञ्चेऽस्मिञ्ज्ञानाज्ञानेन नाशिते ।

यत्सच्छिष्टं परं ब्रह्म ह्यहं तन्नेतरत्स्मरेत् ॥ ५ ॥

ज्ञानेति । अस्मिंश्चैतन्यात्मनो मम प्रकाश्यत्वेन प्रत्यक्षे ज्ञानाज्ञानप्रपञ्चे ज्ञानं च साभासान्तःकरणवृत्तिरित्युक्तलक्षणमज्ञानं च ज्ञानविरोधिभावरूपमज्ञानमित्युक्तलक्षणं तयोः प्रपञ्चः ज्ञाताज्ञातरूपस्तस्मिञ्ज्ञानाज्ञानेन ज्ञानं च साभासान्तःकरणवृत्तिरूपं तेनाऽज्ञानं च चिदाभासव्यक्तिहीनं ज्ञानविरोधिभावरूपं तेन च समाहारे एकवद्भावो नाशिते नाशं प्रापिते सति ज्ञानाज्ञानयोः परस्परं विरोधाज्ज्ञानेन साज्ञानाज्ञातप्रपञ्चलयोऽज्ञानेन सज्ञानतत्प्रपञ्चलय इति विवेकस्तदा घटादिज्ञानाज्ञानभावाभावावस्थायां घटादिभावाभावावस्थायां दीप इव यदनिर्वचनीयं चित्स्वरूपं शिष्टमुर्वरितं तत्सत्कालत्रयाबाध्यमात्मचैतन्यं तदुक्तलक्षणमहमहङ्कारवृत्तिप्रतिबिम्बितचैतन्यरूपोऽहमस्मि अहङ्कारसाक्षिचैतन्यस्याहङ्कारप्रतिबिम्बितचैतन्यस्य च घटावच्छिन्नाकाशस्य तत्स्थजलप्रतिबिम्बिताकाशस्य चैक्यवच्चैक्यस्य पारमार्थिकत्वादिति भावः, अन्वयोक्तं व्यतिरेकेणापि दर्शयति हीति, अहमहंवृत्तिप्रतिबिम्बितश्चिदाभासस्तदुपाध्यहङ्कारासत्त्वेनाभासस्य च पृथगसत्त्वेन तत्सद्रूपं ब्रह्माभिन्नं कूटस्थचैतन्यमेवाऽस्मि भवामीतरत्कूटस्थचैतन्यादन्यत्किमपि न नास्ति सत्यं न भवतीत्यर्थः, इत्येवं स्मरेदऽनुसन्दध्याद् हि एतत्कूटस्थचैतन्यचिदाभासचैतन्ययोरैक्यं विद्वत्सु प्रसिद्धमिति ह्यर्थः ॥ ५ ॥

इति श्रीनरहरिशिष्यदि० मुनीन्द्रादिनच० प्रातःस्मरणनिर्णयार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

अथ स्नानकालनिर्णयः ।

एवं मुनीन्द्राणां प्रातःस्मरणं निरूप्येदानीं तेषामेव स्ना-

नकालनिर्णयपूर्वकं स्नानविधिं निर्णेतुं द्विश्लोकं स्नानकालनिर्णयाख्यं प्रकरणमारभते, तत्र तावत्स्नानकाल एव स्नानकर्तव्यतावश्यतायां बौधायनस्मृतिमुदाहरति।

अरुणकिरणग्रस्तां प्राचीमवलोक्य

स्नायादिति वचनात्स्नानम्।

अरुणेति। अरुणकिरणग्रस्तामरुणस्य सूर्यसारथेः किरणाः करास्तैर्ग्रस्तां व्याप्तां प्राचीं पूर्वां दिशमवलोक्य प्रदर्श्य स्नायात्स्नानं कुर्यादित्येवं बौधायनवचनात्स्नानं कुर्यादिति शेषः॥ १॥

तथा मुनीनां स्नानयोग्यमरुणोदयकालं निर्णेतुमाह।

तथाहि।

तथाहीति। तथा हि स एव स्नानकालः प्रदर्श्यत इत्यर्थः। तमेवाह।

नश्यन्त्या मोहनिद्रायामन्धकारे गलत्यथ।

आरोहति विचाराद्रिशिखरे ज्ञानभास्करे॥ २॥

मोहनिद्रायामिति। लौकिकार्थे तावत्सर्वप्रपञ्चविस्मारकत्वात्स्वात्मविस्मारकमोह इव निद्रायां सुप्तौ नश्यन्त्यां नाशं प्राप्नुवत्यां सत्यां अथानन्तरमन्धकारे ध्वान्ते गलति नश्यति सति तथा ज्ञानभास्करे ज्ञानस्य रूपविशेषज्ञानकरणस्य चक्षुषः भास्करे प्रकाशके सूर्ये विचाराद्रिशिखरं विचारवद् दिङ्मोहनिवर्तकोऽद्रिः पूर्वाचलस्तस्य शिखरं शृङ्गमारोहति आरोहणं कुर्वति सति, प्रकृतेर्थे तु मोहनिद्रायां मोह एव स्वात्मविस्मारकत्वात्प्रपञ्चस्वप्नकारणत्वान्निद्रा सुप्तिस्तस्यां नश्यन्त्यां

नाशं प्राप्नुवत्यां सत्यामथानन्तरमन्धकारेऽन्धं स्वात्मदर्शनहीनं करोतीति अन्धकार आत्मदर्शनवृत्तिचक्षुर्हीनकर्तेत्यर्थः, तस्मिंस्तादृशेऽज्ञाने गलित नश्यति सति तथा ज्ञानभास्करे ज्ञानमेव सर्वप्रपञ्चप्रकाशकत्वाद्भास्करः सूर्य इव भास्करः सूर्यस्तस्मिन् विचाराद्रिशिखरं विचारो विवेक एवाद्रिरिवाभ्यासेन स्थिरीभूतत्वात्पर्वतो, यद्वा विचार आत्मानात्मविवेक एवात्तीति सर्वानात्मनाशकत्वादद्रिस्तस्य शिखरं पञ्चमषष्ठसप्तमभूमिकारूपं शृङ्गमारोहति आरोहणं कुर्वति सति, यद्वा विचाराख्यस्याद्रेरभ्यासेन स्थिरीभूताया द्वितीयभूमिकायाः शिखरमिव तृतीयचतुर्थभूमिकाख्यमिति व्याख्येयं ततः परं साक्षात्कारादिति भावः ॥ २ ॥

किञ्च।

दिक्षु किंचित्प्रकाशासु दिङ्मोहे गलिते सति।
संदेहकौशिके नष्टे जाते प्रागरुणोदये ॥ ३ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां स्नानकालनिर्णयश्चतुर्थः ॥ ४ ॥

दिक्ष्विति। लौकिकार्थस्तावद् दिक्षु पूर्वादिदिशासु किंचित्स्वल्पं यथा भवति तथा प्रकाशासु प्रकाशो विद्यते यासु तथाभूतासु सतीषु ततो दिङ्मोहे दिग्भ्रमे गलिते नष्टे सति ततः सन्देहकौशिके सन्देहः संशय इवामङ्गलरूपः कौशिक उलूकस्तस्मिन्नष्टे नाशं प्राप्ते सति गमनाशक्ततया क्वापि लीने सतीत्यर्थः, प्रागरुणोदये प्राक्सूर्योदयात्पूर्वमरुणस्य सूर्यसारथेरुदये उर्ध्वागमने जाते भवति सतीत्यर्थः। प्रकृते तु दिक्षु दिश्यते

ब्रह्माऽऽभिरिति ब्रह्मानुभवकारणभूता दिशो गुरूपदेशपूर्वकमहावाक्यजन्याहं ब्रह्मास्मीति प्रमारूपा वृतयस्तासु किञ्चित्प्रकाशासु किञ्चित्स्वल्पः प्रकाशोऽलौकिको ब्रह्मापारोक्ष्यरूपो यासु तासु पञ्चम्यारूढवृत्तिषु सतिस्वित्यर्थः, अत एव दिङ्मोहे दिश्यते ब्रह्माभिस्ता दिशः प्रमारूपा वृत्तयस्तासां मोह आत्मब्रह्मैक्यास्फूर्त्तिरूपस्तस्मिन्गलिते नष्टे सति, यद्वा दिक्षु अन्तःकरणवृत्तिषु किञ्चिद्ब्रह्मस्फुरणरूपासु सतीष्वित्यर्थः, दिङ्मोहे लौकिकं पूर्वादिदिग्ज्ञानं मोहकार्यत्वान्मोहो भ्रम एवेत्यर्थः, तस्मिन् गलिते नष्टे सति । उपासनापक्षे तु विवेकः पूर्वा दिगविवेकः पश्चिमा दिगुभयत्र चिदादित्योदयास्तप्रतीतेः कर्मज्ञानं दक्षिणा दिगुपासनाज्ञानमुत्तरा दिक्पितृलोकदेवलोकप्राप्तिसाधनत्वात् 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतेः, एतज्ज्ञानेन लोकप्रसिद्धदिग्ज्ञानमेव दिग्भ्रमस्तस्मिन्नष्टे सतीत्यर्थः, ततः सन्देहकौशिके सन्देहः संशयोऽहं देहादिभ्यो भिन्नो वाऽभिन्नः, देहादिभिन्नोपि सविकारो वा निर्विकारः, निर्विकारोपि ब्रह्माभिन्नो वा भिन्न इत्यादिरूप स एव कौशिक इवान्धकारचारित्वादमङ्गलरूपत्वाच्चोलूकस्तस्मिन्नष्टे निवृत्ते सति । उपासनापक्षे तु तत्तदुपास्यज्ञानगतसंशय एवोलूकोऽमङ्गलरूपत्वात्ततः प्रागरुणोदये चित्सूर्योदयात्प्रागुपलक्षितकालेऽरुणोदयो यथा सूर्योदयोपलक्षकस्तद्वच्चित्सूर्योदयोपलक्षणभूतानां पञ्चम्यारूढबुद्धौ किञ्चित्साक्षात्कारप्रकाशोदये सति । उपासनापक्षेपि उपास्यविषये किञ्चित्प्रकाश आविर्भूते सतीति योज्यम् ॥ ३ ॥

इति श्रीन० मु० थंप्रकाशे स्नानकालनिर्णयार्थप्रकाशश्चतुर्थः ॥ ४ ॥

---

अथ स्नाननिर्णयः ।

एवं मुनीनां स्नानकालं निर्णीयेदानीं तेषामेव स्नानं निर्णेतुं स्नाननिर्णयाख्यमेकश्लोकं प्रकरणमारभते ।

अथ स्नाननिर्णयः ।

अथेति । अथ स्नानकालनिर्णयानन्तरं स्नाननिर्णयः स्नानस्यावगाहनस्य निर्णयो विचारः क्रियत इति शेषः, तमेवाह ।

ज्ञानगङ्गाह्रदे शुद्धे मग्नो नखशिखावधि ।
यः स्नाति मूलमंत्रेण सर्वदैव स निर्मलः ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां स्नाननिर्णयः पञ्चमः ॥ ५ ॥

ज्ञानेति । लौकिकपक्षे तावदुक्तलक्षणप्रसिद्धारुणोदयकाले गङ्गेति शेषः, शुद्धे निर्मले ज्ञानगङ्गाह्रदे ज्ञानमिव 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति स्मृतेः, ॐ अस्नाविरं शुद्धमपापविद्धमि'ति श्रुतौ च ज्ञानस्य शुद्धत्वमुक्तं द्रष्टव्यं, गङ्गायास्तु पापनिवर्तकत्वं प्रसिद्धमेव पुराणादौ स्वतः पवित्ररूपत्वात्पवित्रकारकत्वाच्च गङ्गा भागीरथ्यस्ति तस्या ह्रदोऽगाधजलोवयवस्तत्र नखशिखावधि नखानि अङ्घ्रिकरजानि शिखा च चूडा ते अवधी मर्यादे यस्यां क्रियायां भवतस्तत्तथाऽऽनखमाशिखमित्यर्थः, मग्नः सदेहं जले प्रविष्टः सन्यः कर्मविशेषज्ञानवान्कर्मकर्ता कश्चित्पुरुषो मूलमन्त्रेण मूलं स्मृतिपुराणादीनां श्रुतिस्तद्रूपमन्त्रेणाक्षरसमूहात्मकवाक्येन 'इमं मे गङ्गे'इत्यादिकेन गायत्रीरूपेण मन्त्रेण वा 'गङ्गागङ्गे'त्यादयः पुराणोक्ताश्च मन्त्रा ग्राह्यास्तैर्जातित्वादेकवचनं सर्वदैव सर्वकालमेव प्रतिदिनमित्यर्थः, स्नाति अवगाहते स पुरुषो निर्मलः शुद्धोस्तीति ज्ञातव्यः । प्रकृते तु यः पञ्चमभूम्याद्यारूढो मुनीन्द्रः शुद्धे ज्ञातृज्ञानज्ञेयाख्यात्रिपुटीरूपमलरहिते ज्ञानगङ्गाह्रदे ज्ञानं महावाक्यज-

न्यमहं ब्रह्मास्मीत्यपरोक्षं तदेव सर्वाविद्यादिमलनिवर्तकत्वाद्गङ्गेव गङ्गा सन्ततप्रवृत्तं तस्या ह्रदोऽगाधजलः स इव निर्विकल्पाख्यः समाधिस्तस्मिन् नखशिखावधि न विद्यन्ते खानीन्द्रियाणि तज्जन्यज्ञानानि तद्विषयाश्च तेषामपीन्द्रियमात्रत्वात्खमात्रत्वं शिखा वक्ष्यमाणाऽथर्वशीर्षार्थज्ञानरूपा यस्मिन्कर्मणि तद्यथा भवति तथा मग्न आत्माकारतामापन्नः सन् मूलमन्त्रेणाऽहं ब्रह्मास्मि सोहमोङ्कारादिमन्त्रैर्जातित्वादेकवचनं सर्वजगत्कारणभूतब्रह्मतत्त्वप्रतिपादकत्वादेषां मूलमन्त्रत्वं तेन च तदर्थानुसन्धानपूर्वं स्वस्य ब्रह्मभावानुसन्धानेनेत्यर्थः, स्नाति अवगाहते तत्स्वात्मसुखमेवानुसन्धत्त इत्यर्थः, स ज्ञानी सर्वदैव सर्वकालमपि निर्मलोऽविद्यादिमलरहित एवास्तीति निश्चेतव्यम् । उपासना पक्षे तु यः कोप्युपासकः शुद्धे सिद्धिकामनारूपमलहीने ज्ञानगङ्गाह्रदे ज्ञानमत्र परोक्षमुपास्यब्रह्मविषयं तदेव सन्ततमुपास्यब्रह्मविषयसन्मुखप्रवाहवत्त्वेन गङ्गेव तस्या ह्रदोऽगाधजलवत्स्थिरीभूतत्वाद्ध्रद इव ध्यानरूपेण परिणतं तस्मिन् नखशिखावधि प्रत्यक्षनखशिखापर्यन्तं यथा भवति तथा मग्नो लीनः सन् स नखशिखदेहास्फुरणवाञ्जातः सन्नित्यर्थः, यद्वा न न विद्यन्ते खानीन्द्रियाणि शिखाश्चाथर्वशीर्षज्ञानरूपा यस्मिन्तन्नखशिखं तदवधिः सीमा यस्मिन्कर्मणि तद्यथा भवति तथा मग्नो लीनः सन्नित्यर्थः, मूलमन्त्रेण सोहमिति मन्त्रेण सर्वदैव नित्यमेव स्नाति अवगाहते ध्यानेन ध्येयाकारो भवतीत्यर्थः, स उपासको निर्मलः शुद्ध एव ज्ञेयः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थ प्रकाशे स्नाननिर्णयार्थप्रकाशः पञ्चमः ॥ ५ ॥

---

एवं मुनीन्द्राणां स्नानं निर्णीयेदानीं तेषामेव वस्त्रधारणनिर्णयपूर्वकं पूर्वाभिमुखस्थितिं निर्णेतुं वस्त्रधारणनिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह ।

अथ वस्त्रधारणम् ।

अथेति अथ स्नानानन्तरं वस्त्रधारणं निर्णीयत इति शेषः । तदेवाह ।

अथ भक्तिप्रसादाख्ये परिधायांशुके मुनिः ।
यत्रोदयः सैव पूर्वा काष्ठा तस्याश्च सन्मुखः ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदि० वस्त्रधारणनिर्णयः ॥ ६ ॥

अथेति । अथ स्नानानन्तरं मुनिर्मननशीलो मुनीन्द्र इत्यर्थः, भक्तिप्रसादाख्ये भक्तिः प्रेमलक्षणा वृत्तिः प्रसादो रागादिराहित्येन निर्मलत्वं ते आख्ये आह्वे ययोस्ते तथोक्ते ते यथा ज्ञानसाधने तथा कर्मसाधने इत्यर्थः, अंशुके वस्त्रे परिधाय परिधानं कृत्वा यत्र यस्यां दिशि उदयः सूर्याविर्भावो भवति सैव नान्या पूर्वा प्राची काष्ठा दिग् भवति तस्याश्च प्राच्याश्च सन्मुखोऽभिमुखो भवेत् । प्रकृते तु अथोक्तलक्षणस्नानानन्तरं मुनिर्मननवान् पञ्चम्याद्यारूढ इत्यर्थः, भक्तिः प्रेमलक्षणा जीवब्रह्मैक्यविषयान्तःकरणवृत्तिः प्रसादश्च रागादिमलनिवृत्तिपूर्वकद्वैतास्फुरणलक्षणा चित्तस्थिरता ते आख्ये आह्वे ययोस्ते अंशुके वस्त्रे परिधाय सन्धाय यत्र वृत्तावुदयश्चित्सूर्योदयश्चिन्मात्रस्वरूपात्माविर्भावो भवति सैव सा वृत्तिरेव पूर्वा प्रथमा काष्ठा स्थितिरवस्थेत्यर्थः, तस्याश्च स्थितेः सन्मुखोऽभिमुखो भवेदिति शेषः ॥ १ ॥

इति श्रीन० मुनी० वस्त्रधारणनिर्णयार्थप्रकाशः षष्ठः ॥ ६ ॥

---

अथ पवित्रादिधारणनिर्णयः।

एवं मुनीनां वस्त्रधारणनिर्णयं निरूप्येदानीं तेषामेव पवित्रादिधारणं निर्णेतुं पवित्रादिधारणनिर्णयाख्यं सार्धद्विश्लोकं प्रकरणं वक्तुमाह।

## अथ पवित्रादिधारणनिर्णयः।

अथेति। अथ वस्त्रधारणनिर्णयानन्तरं पवित्रादिधारणं पवित्रमादि मुख्यं येषां तिलकादीनां ते पवित्रादयस्तेषां धारणमङ्गीकरणं तन्निर्णीयत इति शेषः। तत्रादौ कुशनिर्णयमाह।

> पवित्राः सूक्ष्मशास्त्रार्थास्तीक्ष्णाग्रा हरिताश्च ये।
> शातना कुत्सितस्यैते कुशा इति निरूपिताः॥ १॥

पवित्रा इति। तत्र तावल्लौकिकपक्षे पवित्राः शुद्धिकारणत्वात्स्वतः पूतास्तथा सूक्ष्मशास्त्रार्थाः शस्त्राण्येव शास्त्राणि स्वार्थेण् सूक्ष्माणि सूक्ष्मधाराणि क्षुरादीनि तेषामर्थः प्रयोजनं येभ्यो जायते ते तथोक्ताः क्षुरादिभ्यश्छेदनमिव कुशेभ्योपि जायमानत्वादित्यर्थः, अत एव तीक्ष्णाग्रास्तीक्ष्णानि तीव्राणि अग्राणि येषां ते तथोक्ता हरिताश्च हरितवर्णाश्चैतादृशा ये प्रसिद्धा भवन्ति त एते कुत्सितस्य पापस्य विघ्नादिरूपस्यामङ्गलस्य शातनाश्छेदका यतो भवन्ति अतः कुशा इत्येवं नाम्ना निरूपिताः कथिताः। प्रकृते तु पवित्रा अज्ञानसंशयादिनिवृत्तिपूर्वकवेदान्ताविरोधेन निर्णीतत्वात्पूता इत्यर्थः, सूक्ष्मशास्त्रार्थाः सूक्ष्माणि सूक्ष्मार्थानि शास्त्राणि तेषां स्थूललौकिकदृगगोचरत्वात्सूक्ष्मा ये शास्त्राणामर्था उपदेशकवाक्यानां निर्णीतार्थास्तेषां तात्पर्यरूपा इत्यर्थः, अत एव तीक्ष्णाग्रास्तीक्ष्णानि तीव्राणि अज्ञानभेदने समर्थानि अग्राणि तात्पर्यपर्यवसानानि येषां ते तथोक्तास्तथा हरिताश्च हरिता नवीनाः सदा बुद्धौ स्फुरिता इत्यर्थः, त एत उ-

त्कलक्षणाः कुत्सितस्य बन्धकत्वादशुभस्य संसारस्य शातना नाशका यतो भवन्ति अतस्ते शास्त्रार्था एव कुशा इत्येवं नाम्ना निरूपिताः कथिता ज्ञेया नान्ये लौकिकाः कुशा इत्यर्थः ॥ १ ॥

यदर्थं कुशनिर्णयः कृतस्तदाह ।

तत्पवित्रकरो भुत्वा मुनिः सव्येन वर्त्मना ।
वेदान्तसुत्रं यत्सूत्रं यस्याथर्वशिखा शिखा ॥ २ ॥

तदिति। तत्पवित्रकरस्तेषां कुशानां पवित्रे करयोर्हस्तयोर्यस्य स तथोक्तस्तथा विधो भूत्वा मुनिः कर्मज्ञानी सव्येन वर्त्मना वामस्कधतो दक्षिणकुक्षौ स्थितेन वेदान्तसूत्रं यथा ज्ञानसाधनं तद्वत्कर्मसाधनं सूत्रं यज्ञोपवीतं तत्सूत्रं धृत्वा तथा तद्वदथर्वशिखाऽथर्वशीर्षवच्छिखा शिखा चूडा कर्मठपक्षेयमर्थः । प्रकृते तु मुनिर्ज्ञानी पञ्चम्याद्यारूढ इत्यर्थः, तत्पवित्रकरस्तैश्चोक्तैः शास्त्रार्थरूपैः कुशैः पवित्रौ वेदान्तार्थाविरुद्धौ करौ साङ्ख्ययोगाख्यौ हस्तौ यस्य वेदान्तनिष्ठावतो ज्ञानिनः स तादृशो भूत्वा सव्येन वर्त्मनाऽद्वैततात्पर्यरूपेण शङ्करोक्तरीत्येर्थः, यत्प्रसिद्धं वेदान्तसूत्रं वेदान्ता उपनिषदस्तेषां सूत्राणि उपनिषदर्थसंग्राहकाणि व्यासप्रणीतानि शारीरकसूत्राणि जातावेकवचनं तदर्थधारणमेव यज्ञोपवीतधारणमित्यर्थः, शिखामाह यस्येति, यस्य ज्ञानिनोऽथर्वशिखाऽथर्वशीर्षाणां मन्त्राणामर्थः शिखा चूडाऽस्ति ॥ २ ॥

तिलकनिर्णयमाह ।

जिज्ञासा दीर्घतिलको ब्रह्मकर्म समारभेत् ।

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां पवित्रादिधारणनिर्णयः ॥ ७ ॥

जिज्ञासेति । कर्मिपक्षे जिज्ञासा ज्ञानेच्छैव दीर्घस्तिलको यस्य स तथोक्तो ब्रह्मकर्म ब्रह्म वेदस्तदुक्तं कर्म संध्यादि कर्म समारभेत्कुर्याद् । ज्ञानिपक्षे जिज्ञासा ऽऽत्मज्ञानेच्छैव दीर्घो लम्बायमानस्तिलको यस्य स तथोक्तो ब्रह्मकर्म 'ब्रह्मार्पणं ब्रह्म हविरि'ति स्मृत्युक्तं कर्म समारभेत्कुर्यादित्यर्थः ॥ ३ ॥

इति श्रीन० दि० बो० मुनीन्द्रदिन० पवित्रादिधारणनिर्णयार्थ-
प्रकाशः सप्तमः ॥ ७ ॥

---

अथाचमननिर्णयः ।

एवं पवित्रादिधारणं निर्णीयेदानीं मुनीनामाचमनं वक्तुमाचमननिर्णयाख्यं प्रकरणमेकश्लोकमभिदधान आह ।

अथाचमननिर्णयः ।

अथेति । अथ पवित्रादिधारणनिर्णयानन्तरमाचमनं मुनीन्द्राणामाचमनमाचामो निर्णीयत इति शेषः । तदेवाह ।

जडं करतले कृत्वा समुद्रमिव कुंभजः ।
यदाचामति योगीन्द्रस्तदाचमनमुत्तमम् ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायामाचमन-
निर्णयोऽष्टमः ॥ ८ ॥

जडमिति । योगीन्द्रो युज्यते संयोगं प्राप्यते कर्मफलेन स योगः कर्म स येषामस्तीति योगिनस्तेषामिन्द्रस्तेषु श्रेष्ठ इत्यर्थः, कर्मठो जडं डलयोरभेदाज्जलं करतले करस्य हस्तस्य तलमुपरिभागस्तस्मिन् कृत्वा सन्धार्य कुम्भजः कुम्भात्कलशाज्जातः कुंभजोऽगस्त्यः समुद्रं सागरमिव यत्प्रसिद्धमाचामति पिबति तत्तादृशमाचमनमाचाम उत्तमं श्रेष्ठमित्यर्थः । प्रकृतेर्थेतु योगीन्द्रो योगो जीवब्रह्मैक्यं तज्ज्ञानं च तद्येषामस्ति ते योगिनः प्रथमादिचतुर्थ्यन्तभू-

मिकासु आरूढास्तेषामिन्द्रस्तेषु श्रेष्ठ इत्यर्थः, पञ्चम्याद्यारूढो जातसाक्षात्कार इति भावः, जडं 'तदेतज्जडं मोहात्मकं मायामात्रमि'ति श्रुतेः, मायारूपं तत्कार्यं च करतले करोति आत्मानात्मविवेचनमिति करः सांख्यं स एव त्याज्यद्वैतत्यागसाधनत्वाद्धस्त इवेत्यर्थः, तस्य तलमिव तलं करोपरितनभागस्तद्वत्पुरुषोपि साङ्ख्यहस्तोपरितनभागत्वात्करतलं तस्मिन् कृत्वा तद्भोग्यत्वेन जगतः 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति श्रुतेः, स्वप्नपदार्थभोक्तरि स्वप्नपदार्थजातमिव तदभिन्नत्वेनालोक्येत्यर्थः, कुम्भजोऽगस्त्यः समुद्रं सागरमिव पुरुषमात्रावशेषं यथा भवति तथा यद्यादृशं मुनिप्रत्यक्षमाचामति पिबति तत्तादृशमाचमनमाचाम उत्तमं श्रेष्ठमित्यर्थः। जगत्करतले–इति पाठे कर्मठपक्षे गच्छति व्रजति पुनः पुनः स्वक्रियायामिति जगत्तल्लक्षणः करो हस्तस्तस्य तले जलमित्यध्याहार्यं। ज्ञानिपक्षे तु 'अम्भो मरीचीर्मरमाप' इति श्रुतेः, जलकार्यत्वप्रतिपादनात्कार्यकारणयोरभेदाच्च जगदेव जलमन्यत्तु पूर्ववत् ॥ १ ॥

इति श्रीनरहरिशिष्यदिवा० बोध० मुनीन्द्रदि० आचमननिर्णयार्थप्रकाशोऽष्टमः ॥ ८॥

---

अथ प्रातःसन्ध्यानिर्णयः।

एवं मुनीनामाचमनं निरूप्येदानीं मुनीनां प्रातःसन्ध्यानिर्णेतुं प्रातःसंध्यानिर्णयाख्यं सार्धत्रिश्लोकं प्रकरणमाह।

अथ प्रातःसंध्यानिर्णयः।

अथेति। अथाचमननिर्णयानन्तरं प्रातःसंध्यानिणयः प्रभाते या संध्या तस्य निर्णयो विचारः क्रियत इति शेषः। तमेव प्रतिजानीते।

अथोपयुक्तः क्रियते प्रातःसन्ध्याविनिर्णयः ।
मनोजन्म जगज्जन्म मनोनाशो जगल्लयः ॥ १ ॥

अथेत्यर्धेन। अथाचमननिर्णयानन्तरमुपयुक्तः प्रातःसन्ध्योपयोगी प्रातःसन्ध्याविनिर्णयो मुनीनां प्रातः प्रभाते या संध्या कर्म तस्या विनिर्णयो विचारः क्रियते निरूप्यत इत्युभयत्राप्येक एवार्थः, प्रतिज्ञातामेव मुनीनां प्रातःसंध्यां निर्णेतुं प्रातःसंधिमाह मन इति, कर्मठानां तु प्रातःसन्धिः स्पष्ट एवेति तमुपेक्ष्य मुनीनामेव तं निर्णीय दर्शयति मनोजन्मेति, मनसः संकल्पविकल्पात्मकान्तःकरणवृत्तेर्जन्माविर्भावः स एव तत्संकल्पितस्य जगतो जन्माविर्भावो मनःकल्पितस्य जगतो मनोमात्रत्वान्मनोजननमेव जगज्जननमिति भावः, अन्वयमुखेनोक्तं व्यतिरेकमुखेनाप्याह मनोनाशो मनसः संकल्पविकल्परूपांतःकरणवृत्तेर्नाशो लयः स एव जगल्लयो जगतो विश्वस्य लयो नाशः सुषुप्त्यादौ मनोलये सति सर्वप्रपंचलयदर्शनाज्जाग्रति च मनस उदयेनैव सर्वप्रपंचोदयदर्शनाच्चेति भाव ॥ १ ॥

तत्र हेतुमाह ।

तस्योन्मेषनिमेषाभ्यामुदयप्रलयौ यतः ।
समाध्यभ्यासशीलस्य पूर्वसंस्कारकारणात् ॥ २ ॥

तस्येति । यतो हेतोस्तस्य मनस उन्मेषनिमेषाभ्यामुन्मेषः संकल्परूपेणाप्रपञ्चसन्मुखत्वं निमेषश्च संकल्पत्यागेन प्रपञ्चविमुखत्वं ताभ्यां जगत उदयप्रलयावुदय उत्पत्तिः प्रलयो नाशस्तौ भवतोऽतो मनस आविर्भावे जगत आविर्भावस्तल्लये च तल्लय इति भावः। तत्र समाधिरूपप्रपञ्चलयस्य जाग्रदादिरूपप्रपञ्चोद्भवस्य च मनोलयमनोजन्मनोः संधिरेव संध्याकालो मुनीनामित्याह ।

समाधीति । समाध्यभ्यासशीलस्य मनोजन्ममनोलयमात्रिचैतन्याकारपरिणामो मनसः समाधिस्तस्य योऽभ्यासः पुनः पुनस्तत्र वृत्तेः स्थिरीकरणं तदेव शीलं स्वभावो यस्य तस्य पुरुषस्य मनसो वा पूर्वसंस्कारकारणात्पूर्वं प्रागयत्प्रपञ्चाकारवृत्तित्वं तस्य संस्कारो वासनारूपः स एव कारणं निमित्तं व्युत्थाने तस्माद्धेतोः ॥ २ ॥

यदुत्थानं समाधानात्स सन्धिः सन्धिरत्र हि ।
तत्रापि प्राप्ततत्त्वानां गुरूणामुपदेशतः ॥ ३ ॥

समाधानात्समाधितो यत्प्रसिद्धमुत्थानं प्रपञ्चे जागरणं जागर्ते स प्रपञ्चलयस्य प्रपञ्चाविर्भावस्य च मनोलयस्य मनआविर्भावस्य च वा मध्यरूपो सन्धिः सम्यग्धीयते चिन्त्यते निरुपाधित्वेनात्मा यत्र स संधिशब्दवाच्यः कालोऽत्र मुनीन्द्रसंध्याकर्मणि विहितः कालः संधिः संधिनामको ज्ञेयः, हि प्रसिद्धश्चायं शास्त्र उक्तः, तथोक्तं ।

'निद्रादौ जागरस्यान्ते निद्रान्ते जागरोदये ।
लयो भवति चित्तस्य कार्यं तत्रात्मचिन्तनमिति' ॥ ३ ॥

एवं संधिमुक्त्वा संध्यामाह ।

खण्डितं नानुसन्धानं सा सन्ध्येत्युच्यते बुधैः॥४॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिन० मुनीन्द्रप्रातःसन्ध्यानिर्णयो नवमः ॥ ९ ॥

तत्रापीति । गुरूणां महावाक्यार्थद्वारा स्वस्मिन्ब्रह्मत्वोपदेष्टृणामुपदेशत उपदेशेन सार्वविभक्तिकस्तसिः, प्राप्ततत्त्वानां प्राप्तं लब्धं तत्त्वमनारोपितात्मस्वरूपं यैस्ते तथोक्तास्तेषां तत्रापि उत्थाने जातेपि ॥ ३ ॥

अनुसंधानं स्फुरणं स्वात्मस्फुरणमित्यर्थः, न खण्डितं न भग्नं यदि तर्हि सा स्वात्मानुसंधानरूपा संध्येति प्रपञ्चसाक्षिणः प्रपञ्चोद्भवस्य च सन्धिभवत्वात्स्वात्मानुसन्धानवृत्तेः सन्ध्यात्वमिसेवं बुधैर्विवेकिभिरुच्यते कथ्यते ॥ ४ ॥

इति श्रीन० मुनी० मुनीन्द्रप्रातःसन्ध्यानिर्णयार्थप्रकाशो नवमः ॥ ९ ॥

---

अथ प्राणायामनिर्णयः।

एवं मुनीन्द्राणां सन्ध्यां निर्णीयेदानीं तेषामेव प्राणायामं निर्णेतुं प्राणायामनिर्णयाख्यं षोडशश्लोकं प्रकरणमारभमाण माह।

## अथ प्राणायामनिर्णयः।

अथेति। अथ प्रातःसन्ध्यानिरूपणानन्तरं प्राणायामो मुनीन्द्राणां प्राणायामो निर्णीयत इतिं शेषः। तमेव निर्णयमाह।

शरीराभ्यन्तरो वायुः प्राणापान इतीरितः।
स एव गतिभेदेन संज्ञादशकमागतः ॥ १ ॥

शरीरेति। शरीराभ्यन्तरः शरीरस्य वपुषोऽभ्यन्तरः शरीरावच्छिन्नो वायुर्मारुतः प्राणापानः प्रकर्षेणानिति जीवयति देहेन्द्रियादिसंघातं स प्राणोऽपानिति निःसृत्य बहिः पारयति[1] देहेन्द्रियादिसंघातं सोऽपान इत्येवं नाम्नेरितः कथितः, ननु शारीरस्य वायोर्दशविधत्वं तत्र तत्र शास्त्रेषु दृष्टं तत्कथमत्र द्वैविध्यमेवोच्यते तत्राह स एवेति, स एव प्राणापानाख्यः शारीरो वायुरेव गतिभेदेन गतिर्गमनं तस्या भेदेनोर्ध्वाध इत्यादिस्थानैश्चलनभिन्नत्वेन संज्ञादशकं संज्ञानां नाम्नां दशकं दशत्वमागतः प्राप्तः प्राणापानव्यानोदानसमाननागकू-

---

१ मारयतीति वा पाठः।

मेकृकरदेवदत्तधनंजयाख्यां प्राप्त इत्यर्थः ॥ १ ॥

ननु तर्ह्यत्र द्वैविध्यमेव कुत उक्तं तत्राह।

ऊर्ध्वाधोगतिमुख्यं द्विरूपं तस्य गतिद्वयम्।

ऊर्ध्वं गच्छन्भवेत्प्राणस्त्वपानः स्यादधश्चलन्॥ २॥

ऊर्ध्वाध इति। तस्य शारीरस्य वायोरूर्ध्वं चाधश्चोर्ध्वाध ऊर्ध्वाधश्च ते गती च गमने ते मुख्ये प्रधाने यस्य तत्तथोक्तं गतिद्वयं गत्योर्गमनयोर्द्वयं युग्मं द्विरूपं द्वयो रूपयोः समाहारो द्विरूपमस्तीति शेषः, ननु कया गत्या किं नाम तस्येत्यत आहोर्ध्वमिति, ऊर्ध्वमुपरि गच्छश्चलन् सन् स शारीरो वायुः प्राणः प्राणनामा भवेदुपरितनभागे नासाग्रसमवर्तिषोडशान्तस्थाने चलन्प्राणो भवेदित्यर्थः, तथा स एव शारीरो वायुरधः षोडशान्तादधो हृदयकमलान्तं चलन्गच्छन्सन्नपानोऽपाननामा स्याद्भवेत् ॥ २ ॥

ननु प्राणरूपेणापानरूपेण वा शरीर एव कुतस्तिष्ठति बहिः कुतो न गच्छति तत्राह।

अपानः कर्षति प्राणं प्राणोऽपानं च कर्षति।

अनयोः शृङ्खला देहे तेन जीवो न निश्चलः॥ ३॥

अपान इति। अपानोऽधोगत्युपलक्षितः शारीरो वायुविशेषः प्राणमूर्ध्वगमनशीलं शारीरं वायुं कर्षति आकर्षति ततः प्राणः प्राणनामा वायुरपानमपाननामानं वायुं चापि कर्षति आकर्षति, नन्वधऊर्ध्वगतिमतोर्वाय्वोः परस्परमाकर्षणं परस्परकृतं कथं सम्भवतीत्याशङ्क्याहानयोरिति, अनयो प्राणापानयोर्देहे शरीरे शृङ्खला शृङ्खलेव परस्परं बन्धनं ग्रन्थिरि-

त्यर्थः, अस्तीति शेषः; तयोः परस्परं शृङ्खलासत्त्वे चिन्हमाह तेनेति, तेन प्राणापानशृङ्खलासत्त्वेन जीवो जीवोपाधिश्चित्तं ननिश्चलो न स्थिरो भवति अतः प्राणापानयोर्बन्धनमस्तीति निश्चेतव्यमिति भावः, अतः प्राणापानावरोधं विना चित्तस्थैर्यं न स्यादिति भावः ॥ ३ ॥

तत्रापि मतभेदमाह ।

चले वाते चलं चित्तं निश्चले निश्चलं भवेत् ।
चित्ते चले चलः प्राणो निश्चले निश्चलो भवेत् ॥४॥

चल इति । वाते प्राणवायौ चले चञ्चले सति चित्तमन्तःकरणं जीवोपाधिभूतं चलं चञ्चलं भवेत्स्यात्तस्मिन्नेव प्राणवायौ निश्चले स्थिरे सति चित्तमन्तःकरणं निश्चलं स्थिरं भवेत्स्यादिति केषांचिन्मतं । तथा केषांचिन्मते चल इति, चित्ते जीवोपाधिभूतेऽन्तःकरणे चले संकल्पविकल्परूपेण चलायमाने सति प्राणः शरीरावच्छिन्नो वायुश्चलश्चञ्चलो भवेत्स्यात्तस्मिन्नेव जीवोपाधिभूतेऽन्तःकरणे निश्चले संकल्पविकल्पत्यागेन स्थिरीभूते सति स एव शारीरो वायुर्निश्चलः स्थिरो भवेत्स्यादित्येवं केषांचिन्मतं ज्ञेयम् ॥ ४ ॥

मतभेदमेव किंचित्स्पष्टीकुर्वन्नाह ।

कश्चित्प्राणजयेनैव मनोनिश्चलतां भजेत् ।
कश्चिन्मनोजयेनैव प्राणनिश्चलतां भजेत् ॥ ५ ॥

कश्चिदिति । कश्चित्कोपि हठयोगीत्यर्थः, प्राणजयेनैव प्राणः शरीराभ्यन्तरो वायुस्तस्य जयः स्थैर्येण स्वाधीनीकरणं तेनैव केवलं मनोनिश्चलतां मनसोन्तःकरणस्य निश्चलतां स्थैर्यं भजेत्प्राप्नुयात्तथाऽन्यः सांख्यः पातञ्जलश्चेत्यर्थः, मनोजयेनैव मनसो

ऽन्तःकरणस्य जयः स्थैर्यसम्पादनं तेनैव केवलं प्राणनिश्चलतां प्राणस्य शरीरावच्छिन्नस्य वायोर्निश्चलतां स्थिरत्वं भजेत्प्राप्नुयात् ॥ ५ ॥

अन्यदपि मतमाह ।

कश्चिद्द्वयजयेनैव मनोनिश्चलतां भजेत् ।
इति योगगतिज्ञानां त्रिविधा योगिनां गतिः ॥६॥

कश्चिदिति । कश्चित्कोऽपि मुनिर्मननवान्वेदान्तीत्यर्थः, द्वयजयेनैव द्वयं मनःप्राणयोर्द्वयं युग्मं तस्य जयः स्वाधीनीकरणं स्थैर्यसम्पादनमित्यर्थः, तेनैव निश्चलतां स्वात्मनि स्थैर्यं भजेत्प्राप्नुयाद्, उक्तं मतभेदमुपसंहृत्य निगमयतीतीति, इत्येवं प्रकारा योगगतिज्ञानां योगस्य जीवब्रह्मैक्यज्ञानस्य गतिः प्राप्तिस्तां जानन्ति विदन्ति ते तथोक्तास्तेषां योगिनां योगवतां गतिर्गमनं योगप्रापकं साधनमित्यर्थः, त्रिविधा त्रिप्रकाराऽस्तीति शेषः, अन्तःकरणशुद्धिद्वारा जीवब्रह्मैक्यकारणं त्रिप्रकारं ज्ञेयमिति भावः ॥ ६ ॥

नन्वेतानि केषां मतानीति ज्ञानापेक्षायामाह ।

प्राणद्वारा मनः साध्यं मतं हि हठयोगिनाम् ।
मनसैव मनः साध्यमिति विज्ञानयोगिनाम् ॥७॥

प्राणद्वारेति । प्राणद्वारा प्राणावरोधनद्वारभूतेन प्राणायामादिरूपेण हठेन मनः स्वान्तं साध्यं स्थिरत्वेन स्वाधीनं कार्यं हि एतद् हठयोगिनां हठयोगवतां मतं निश्चितमस्तीति शेषः, तथा मनसैव विवेकरूपेण मनोंशेनैव केवलं मनः संकल्पविकल्परूपो मनोंशः साध्यं संकल्पविकल्पलयेन स्थिरं कार्यमिति एवं रूपं मतं निश्चितं विज्ञानयोगिनां पातञ्जलसांख्यादीनामस्ति । तत्र

केवलविवेकेनैव मनःस्थैर्यं न भवति किन्तु प्राणावरोधेनैव योगिष्वेव तत्स्थैर्यस्य दृश्यमानत्वादिति हठमतं, केवलप्राणायामादिना कृतेपि प्राणावरोधे मनोमौढ्यावशेषाद्बीजरूपेण मनोवशिष्टमिति सुप्तिमूर्छादिष्विव न मनोलयरूपः पुरुषार्थः सिद्ध्यतीति विवेकेनैव केवलं मन्तव्यमिथ्यात्वप्रतीतौ दृढतरायां सत्यां मनसः शैथिल्येन क्रमाल्लयरूपः पुरुषार्थः सिद्ध्येदिति ज्ञानिनां मतमिति विवेकः ॥ ७ ॥

वेदान्तमतमाह ।

मनःप्राणद्वययुजस्ते तु श्रेष्ठतराः स्मृताः ।
चेच्छुष्कहठिनो मूढास्ते भण्डा न तु योगिनः॥८॥

मनःप्राणेति । ये तूक्तोभयविलक्षणा इति तुपदार्थः, तदेव वैलक्षण्यमाह मन इति, मनश्चान्तःकरणं प्राणश्च शारीरो वायुस्तयोर्द्वयं युग्मं तद्युञ्जन्ति लीनं स्वात्मनि कुर्वन्तीति ते तथोक्तास्ते श्रेष्ठतरा अतिश्रेष्ठा इत्यर्थः, स्मृता उक्ता मुनिभिरिति शेषः, विनैव गुरुदीक्षां स्वबुद्ध्या हठे प्रवृत्तान्निन्दति चेदिति, मूढा हठक्रियाज्ञानशून्या गुरुशिक्षारहिता इत्यर्थः, अत एव शुष्कहठिनो निष्फलहठाभ्यासरताश्चेद्यदि भवन्ति तर्हि ते शुष्कहठाभ्यासिनो भण्डा हठक्रियाविनोदिन एव ज्ञेयाः, तु पुनस्ते योगिनो हठयोगाभ्यासिनो न न भवन्ति हठमिषेण ते लोकवञ्चका ज्ञेया इति भावः ॥ ८ ॥

इदानीं सिद्ध्यनादरेण मुक्तावादरं विधातुं सिद्धिकामेन हठेप्रवृत्तानां क्षुद्रत्वं दर्शयति ।

ते त्वर्धयोगिनः प्रोक्ताः क्षुद्रसिद्ध्यर्थयोगिनः ।
पिङ्गलेडा सुषुम्णा च मुख्यास्तिस्रस्तु नाडिषु॥९॥

ते त्विति। ये तु तुपदेन गुरुशिक्षया हठाभ्यासिषु पूर्वेभ्यः श्रैष्ठ्यं सूचितं, क्षुद्रसिद्ध्यर्थयोगिनः क्षुद्रास्तुच्छाः परकायप्रवेशाकाशगमनादिका मोक्षविघ्नभूता याः सिद्धयस्ता एवार्थः प्रयोजनं तस्मै तत्प्राप्तुं योगिनो योगाभ्यासिनो भवन्ति तेऽर्थयोगिनोऽलौकिकसिद्धिकारणयोगवत्त्वाद्योगिनोपि प्रधानफलभूतमोक्षाभावात्तेषां क्षुद्रत्वाच्चार्थयोगिनः प्रोक्ताः कथिता मुमुक्षुभिस्तत्रादरो न कर्तव्य इति भावः, अत्र पतञ्जलिरप्याह 'ते समाधावुपसर्गा व्युत्थाने सिद्धय' इति। अस्यार्थः, याः सिद्धयोऽन्तर्धानादयस्ते समाधौ मुक्तावुपसर्गा विघ्नभूता भवन्ति, ननु समाधावन्तःकरणलये सति कथं सिद्ध्यनुभवस्तत्राह व्युत्थान इति, समाधितो व्युत्थानेन प्रपंचोद्भवे सति य एव सिद्धयः सिद्धिशब्दवाच्योर्थ इत्यर्थः, स एव विघ्नभूतो ज्ञेय इति, अतः सिद्ध्यादरं परित्यज्य मुक्तिहेतुकं योगमभ्यसितुं योगाङ्गभूतं प्राणायामं निरूपयिष्यन्तदुपोद्घातत्वेन नाडीभेदमाह पिंगलेति, नाडिषु द्वासप्ततिसहस्रसंख्यासु देहान्तर्वर्तिनीषु नाडिषु मध्ये मुख्याः प्रधानास्तिस्रस्तु त्रिसंख्याका नाड्यो भवन्ति तदधीनत्वात्सर्वासामिति भावः, तुपदेन द्वासप्ततिसहस्रनाडीभ्यस्तिस्रोऽतिविलक्षणा इति सूचितं, ता एव नामतो निर्दिशति पिङ्गलेति, पिङ्गला पिङ्गलानाम्न्येकेडेडानाम्नी द्वितीया सुषुम्णा च सुषुम्णानाम्न्यपि तृतीया भवति ॥ ९ ॥

स्थानतोपि ता निर्दिशति।

> इडा वामा पिङ्गलान्या सुषुम्णा मध्यवर्तिनी।
> वामदक्षिणमार्गेण सदा वहति मारुतः ॥ १० ॥

इडेति। वामा वामभागे प्रवर्तमानेडेडानाम्नी ज्ञेया, अन्या दक्षिणा दक्षिणभागे प्रवर्तमाना नाडी पिङ्गला पिङ्गला-

नाम्नी भवति, तथा मध्यवर्तिनी मध्ये प्रवर्तमाना नाडी सुषुम्णा सुषुम्णानाम्नी ज्ञेया, यदर्थं नाडीभेद उक्तस्तमाह वामेति, मारुतः शारीरो वायुर्वामदक्षिणमार्गेण वामः सव्यो दक्षिणोऽपसव्यो मार्गो नाडीच्छिद्रं तेनेडापिङ्गलानाडीभ्यामित्यर्थः, सदा नित्यं वहति चलति ॥ १० ॥

तर्हि सुषुम्णायां कदा चलतीत्यत आह ।

यदा द्वावपि रुध्येते प्राणमार्गौ सुयोगिना ।
तदान्यत्सर्पवत्प्राणो रन्ध्रमाविशति स्वयम् ॥ ११ ॥

यदेति । सुयोगिना सम्यग्योगाभ्यासवता पुरुषेण द्वावपीडापिङ्गलानामानावुभावपि प्राणमार्गौ प्राणस्य शरीरावच्छिन्नस्य वायोर्मार्गौ पन्थानौ रुध्येते रुद्धौ भवतो यदा यस्मिन्काले तदा तस्मिन्काले प्राणः शारीरो वायुः सर्पवद्यथा सर्पः सर्वेषु छिद्रेषु रुद्धेषु सत्सु तदन्यत्सूक्ष्ममपि च्छिद्रं प्रविशति तद्वदन्यदिडापिङ्गलाभ्यां भिन्नं रन्ध्रं छिद्रं तृतीयं सुषुम्णाख्यं स्वयं स्वत एवाविशति प्रविशति, इडापिङ्गलारोधनमेवापेक्षितं न तु ततोन्यः सुषुम्णायां वायोः प्रवेशने प्रयत्नोऽपेक्षित इति भावः ॥ ११ ॥

सुषुम्णाप्रवेशनक्रममेवाह ।

स्थिता कुण्डलिनी मूले जीवशक्तिरनुत्तमा ।
तामुत्थाप्य तया सार्धं सुषुम्णां प्राण आविशेत् ॥ १२ ॥

स्थितेति । मूले मूलाधाराख्यचक्रे गुदस्थान इत्यर्थः, अनुत्तमा न विद्यत उत्तमा श्रेष्ठा यस्याः सा तथाभूताऽतिश्रेष्ठेत्यर्थः, जीवशक्तिर्जीवस्य साधिष्ठानबुद्धिस्थचिदाभासस्येत्यर्थः, शक्तिः सामर्थ्यरूपा कुण्डलिनी कुण्डलिनीनाम्नी

जाग्रदादिमोक्षपर्यन्तजीवसंसारजनयित्रीत्यर्थः, स्थिता वर्तमानाऽस्तीति शेषः, अस्तु किं तत इत्यत आह तामिति, प्राणः शारीरो वायुः प्राणायामाभ्यासेनावरुद्धस्तां कुण्डलिनीमुत्थाप्यान्तर्मुखीं कृत्वा जीवस्य यत्पारमार्थिकं शिवस्वरूपं तदभिमुखीं कृत्वेत्यर्थः, तया जीवशक्त्या सार्धं सह सुषुम्णां ब्रह्मनाडीमाविशेत्प्रवेशं कुर्यादेवं प्राणस्य सुषुम्णाप्रवेशक्रमो ज्ञेयः ॥ १२ ॥

ततः किमित्यत आह ।

सुषुम्णावाहिनि प्राणे ब्रह्मरन्ध्रं गते सति ।
तत्र निश्चलतां याते मनो निश्चलतां व्रजेत् ॥ १३ ॥

सुषुम्णेति । प्राणे प्राणवायौ सुषुम्णावाहिनि सुषुम्णा ब्रह्मनाडी तस्यां वाहिनि प्रवेशवति सति ततस्तया नाड्या ब्रह्मरन्ध्रं भ्रमरगुहानामकं स्थानं प्रति गते प्राप्ते सति ततश्च तत्र ब्रह्मरन्ध्रे निश्चलतां स्थिरतां याते प्राप्ते सति ततो मनः सङ्कल्पविकल्पात्मकं जीवोपाधिभूतमन्तःकरणं निश्चलतां स्थैर्यं व्रजेत्प्राप्नुयात् ॥ १३ ॥

एवं हठक्रमेण मनोलयप्रकारमुक्त्वेदानीं ज्ञानक्रमेणापि तमाह ।

मनो यदि निरुध्येत केवलं ज्ञानयोगिना ।
प्राणापानौ नश्यतस्तु मनोनाशेन तत्क्षणात् ॥ १४ ॥

मन इति । ज्ञानयोगिना ज्ञानयोगाभ्यासवता केवलं प्राणोपाधितो विविक्तं सद्यदि यर्हि विवेकेन मनः सङ्कल्पविकल्पात्मकमन्तःकरणं सङ्कल्पविकल्परूपांशं संत्याज्य निरुध्येतावरुध्यात्तर्हि तदा मनोनाशेन सङ्कल्पविकल्पांशमनसो नाशेन लयेन तत्क्षणात्सद्य एव प्राणापानौ प्राणापाननामानौ वायू

नश्यतो नष्टौ भवतो निद्रामूर्च्छादौ मनोलये सति प्राणापानप्रवाहस्य विद्यमानत्वेपि बाधादर्शनादिति मनोलयेनैव तयोर्नाश इति भावः ॥ १४ ॥

एवमुभयमतं निरूप्येदानीं मुमुक्षुग्राह्यं वेदान्तमतमाह ।

तस्मात्सिद्धान्त एवैको हठविज्ञानयोगिनोः ।
शास्त्रोक्तमिति विज्ञाय निर्णयं प्राणचेतसोः ॥ १५ ॥

तस्मादिति । हठविज्ञानयोगिनोर्हठयोगज्ञानयोगाभ्यासवतोस्तस्मान्मनोलयस्यैवोभयत्र साध्यत्वाद्धेतोः सिद्धान्तो निश्चय एक एव सम एव भवतीत्येवं शास्त्रोक्तं वेदान्तशास्त्रोक्तं प्राणचेतसोः शरीरावच्छिन्नस्य वायोर्मनसश्च निर्णयं सिद्धान्तं विज्ञाय ज्ञात्वा ॥ १५ ॥

प्राणायामं मुनिः कुर्यान्मनोलयसमन्वितम् ॥ १६ ॥

इतिश्रीन० बो० मुनीन्द्र० प्राणायामनिर्णयो दशमः ॥ १० ॥

मुनिर्मननवान् सन् विवेकपूर्वकमित्यर्थः, प्राणायामं प्राणानां शारीरवायूनामायाममवरोधनं मनोलयसमन्वितं मनसः सङ्कल्पविकल्पात्मकवृत्तेर्लयो नाशस्तेन समन्वितं सहितं यथा भवति तथा कुर्यात्क्रियतामित्यर्थः, केवलप्राणायामेन प्राणस्थैर्येपि विवेकाभावेन बीजनाशाभावान्मनोनाशाभावः केवलविवेकेन मनोनिरोधे प्राणायामाभावात्पुनः पुनस्तदुदयान्मनोनाशाभाव इति मनोमलनिवृत्त्यै प्राणायामोपेक्षितस्ततो विवेकेनोत्पन्नेन मनोलयो भवतीति निश्चयोयं मुमुक्षुभिर्ग्राह्य इति भावः ॥ १६ ॥

इति श्रीनरहरिशिष्यदिवाक० बो० मुनीन्द्रदिनचर्यार्थप्रकाशे प्राणायामनिर्णयार्थप्रकाशो दशमः ॥ १० ॥

अथार्घदाननिर्णयः ।

एवं प्राणायामनिर्णयमभिधायेदानीं मुनीनामर्घदानं निर्णेतुमर्घदाननिर्णयाख्यं प्रकरणं त्रिश्लोकमारभमाण आह ।

## अथार्घदानम् ।

पूर्णाञ्जलिमयास्त्र्यर्घा भावनागाङ्गवारिणा ।
सर्वपापविशुद्ध्यर्थं प्रदेयाः कर्मसाक्षिणे ॥ १ ॥

अथेति । अथ प्राणायामनिर्णयानन्तरमर्घदानमर्घाणां दानं समर्पणं निर्णीयत इति शेषः, तत्र लौकिकार्घदाने तु प्रसिद्धजलपूर्णेनाञ्जलिना प्रसिद्धेनैव त्रयोऽर्घा दीयन्ते । ज्ञान्यर्घदाने तु जलं किमञ्जलिश्च कः प्रयोजनं च किं कस्मै देयश्च तत्सर्वमाह पूर्णेति, मुनिना पूर्णाञ्जलिमयाः पूर्णं ब्रह्म तदेव जलस्थानीयं रसरूपत्वाद् 'रसो वै स' इति श्रुतेः, अञ्जलिश्चोभयकरसंहतिरूपः प्रसिद्धो लोके, अत्र तु वक्ष्यमाणसाङ्ख्ययोगाख्यकरयोरविरोधज्ञानरूपोऽञ्जलिः पूर्णस्य ब्रह्मणोऽञ्जलिः साङ्ख्ययोगयोरविरोधबोधरूपस्तन्मयास्तत्प्रचुराः 'एकं साङ्ख्यं च योगं च यः पश्यति स पश्यती'ति भगवदुक्तत्वात्, सङ्ख्यामाह त्र्यर्घा इति, त्रिसङ्ख्याका अर्घाः, जलमाह भावनेति, भावनागाङ्गवारिणा साङ्ख्ययोगयोरविरोधस्य भावना चिन्तनं तदेव गाङ्गं वारि गङ्गाजलं तेन, फलमाह सर्वेति, सर्वपापविशुद्ध्यर्थं सर्वं सर्वपदवाच्यं द्वैतमेव पापं दुःखकारणत्वात्तस्य विशुद्धिः 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्यर्थबोधेन सर्वपदवाच्यद्वैतबाधनाद्ब्रह्मत्वप्रतीतिरूपा तदर्थं तादृशप्रयोजनाय देवतामाह प्रदेया इति, कर्मसाक्षिणे लोके तावत्सूर्यायार्घो दीयते, एते त्वर्घाः कर्मसाक्षिणे कर्मणः क्रियायाः साक्षिणे साक्षात्प्रकाशकाय चिदादि-

त्याय प्रदेयाः समर्प्याः ॥ १ ॥

प्रतिज्ञातमर्घत्रित्वं स्पष्टयति सार्धेन ।

इदं दृश्यमहंद्रष्टा प्रथमोर्घो मनीषिणाम्

ब्रह्म सत्यं जगन्मिथ्या द्वितीयोर्घस्ततः परः ॥ २ ॥

इदमिति । इदमहङ्कारादिदेहान्तं त्वम्पदलक्ष्यकूटस्थचैतन्यभास्यं तथा देहादिमायान्तं सर्वं तत्पदलक्ष्यब्रह्मचैतन्यभास्यं तयोर्ब्रह्मचैतन्यकूटस्थचैतन्ययोर्घटाकाशमहाकाशयोरिव वास्तवाभेदात्तत्सर्वं ब्रह्माभिन्नकूटस्थस्य मम दृश्यं प्रकाश्यमस्ति अहं ब्रह्माभिन्नः कूटस्थोऽहं तस्य सर्वस्य दृश्यजातस्य द्रष्टा भासकोऽस्मीत्येवं बोधो मनीषिणां विवेकिनां प्रथम आद्योऽर्घो ज्ञेयः, द्वितीयं दर्शयति ब्रह्मेति, ब्रह्मदेशकालवस्तुकृतपरिच्छेदशून्यं वस्तु भूमशब्दवाच्यं सत्यं कालत्रयेप्यबाधितत्वात्परमार्थरूपमस्ति जगच्चञ्चलस्वभावं मायातत्कार्यं चान्योन्यस्मिन्व्यावृत्तत्वान्मिथ्याऽसत्यमित्येवं बोधस्ततः प्रथमादर्घात्परोऽन्यो द्वितीय इत्यर्थः, अर्घोऽर्घ्यमस्तीति ज्ञेयः ॥ २ ॥

एवं द्वितीयमर्घं निरूप्येदानीं तृतीयमर्घं निरूपयति ।

नेदमस्त्यहमेवास्मि तृतीयोर्घः परात्परः ।

एवं त्रिधार्घदानेन चिदादित्यः प्रसीदति ॥ ३ ॥

इति श्रीनरह० बो० मुनीन्द्रदिनचर्यायामर्घदाननिर्णयः ॥ ११ ॥

नेदमिति । इदं सर्वं दृश्यजातं नास्ति नैव विद्यते किं तु अहमेव ब्रह्माभिन्नः कूटस्थचैतन्यरूपस्त्वम्पदलक्ष्य एव केवलमस्मि भवामि 'नेहनानास्ति किञ्चने'ति श्रुतेर्द्वैतजातस्य बाधितत्वादिति भावः, इत्येवं बोधः परादृद्वितीयात्परोऽन्यस्तृतीयोर्घोऽर्घ्यं ज्ञेयं, फलमाहैवमिति, एवं त्रिधार्घदानेनैवं-

विधानामुक्तलक्षणानामर्घाणामर्घानां दानेनात्मनः पृथगसत्त्वनिश्चयरूपसमर्पणेन चिदादित्यश्चेत्यरहितश्चिन्मात्र आत्मैवादित्यः सूर्यः सर्वजगत्प्रकाशकत्वात्प्रसीदति निर्मलः सन्स्वयं प्रकाशते ॥ ३ ॥

इति श्रीनरहरिशिष्य द्वि० बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशेऽर्घदाननिर्णयार्थप्रकाश एकादशः ॥ ११ ॥

---

अथ गायत्रीजपनिर्णयः ।

एवं मुनीन्द्राणामर्घदानं निर्णीयेदानीं तेषामेव गायत्रीजपं निर्णेतुं गायत्रीजपनिर्णयाख्यं चतुःश्लोकं प्रकरणं वक्तुकाम आह ।

## अथ गायत्रीजपनिर्णयः ।

अथेति । अथार्घदाननिर्णयानन्तरं गायत्रीजपो मुनीन्द्राणां गायत्र्या गायत्रीमन्त्रस्य जपो निर्णीयत इति शेषः । तमेवाह ।

अखण्डमण्डलाकारं देवं ज्योतिर्मयं स्मरन् ।
उपदेशात्सदाऽऽवृत्तिरिति वेदान्तसूत्रतः ॥ १ ॥
तिष्ठेज्जपेच्च गायत्रीमष्टोत्तरशतत्रयम् ।
गायन्तं त्रायते यस्माद्गायत्री तेन सा स्मृता ॥ २ ॥

अखण्डेति । मुनिरखण्डमण्डलाकारमखण्डमेकरसं मण्डलं विम्बमाकार आकृतिर्यस्य स तथोक्तस्तं देवं ज्योतिर्मयं चिन्मात्रस्वरूपं देवं स्वप्रकाशमात्मानं स्मरन्ननुसन्दधानः सन् तिष्ठेदासीत, अत्र प्रमाणमाहोपदेशादिति, 'उपदेशात्सदावृत्तिरि'ति वेदान्तसूत्रेण उपदेशादुपदेशादारभ्य सदा नियमावृत्तिरावर्तनमुपदिष्टार्थस्य जीवब्रह्मैक्यरूपस्यानुसन्धानपूर्वक-

मुपदेशकवाक्यजातस्य पुनः पुनः श्रवणाद्यावर्त्तनमित्यर्थः, कर्त्तव्येति शेषः, इत्येवं वेदान्तसूत्रप्रामाण्याद्धेतोर्गायत्रीं च जपाख्यां जपेदावर्त्तयेद्, जपसंख्यामाहाष्टोत्तरशतत्रयमष्टावष्टौ चोत्तराणि अधिकानि येषु शतेषु तेषां त्रयं त्रिकं यथा तथा जपश्चतुर्विंशत्यधिकानि त्रिशतानीत्यर्थः, उपलक्षणमेतत् षट् शताधिकैकविंशतिसहस्रसङ्ख्याया अजपायाः, नित्यं गायत्रीजपस्य चतुर्विंशत्यधिकत्रिशतसंख्याकस्य नित्यकर्मत्वेन पापनिवृत्तिफलकत्वाद्, अजपाया अपि षट्शताधिकैकविंशतिसहस्राया अपि आत्मानुसन्धायकत्वेनान्तःकरणशोधकत्वात्सर्वद्वैतरूपपापनिवृत्त्या सर्वदुःखनिवर्तकत्वाद् नित्यकर्मत्वाच्च चतुर्विंशत्यधिकत्रिशतसंख्यगायत्रीजपस्य षट्शताधिकैकविंशतिसहस्रजपस्य च साम्यत्वमात्मानुसन्धायकत्वेनाजपाया एव जप्यत्वं मुनीन्द्राणां, ननु अजपाया गायत्रीत्वं कुत इत्यत आह गायन्तमिति, गायन्तमात्मानुसन्धानपूर्वकं स्वमुच्चरन्तं यस्माद्यतः कारणात्त्रायते रक्षति साऽजपा तेन कारणेन गायत्री गायत्रीनाम्नी स्मृतोक्ता मुनिभिरिति शेषः ॥ १ ॥

ननु गायत्र्यर्थस्याजपार्थस्य च भिन्नत्वात्कथमजपाया गायत्रीत्वमित्याशङ्क्य गायत्र्यर्थमजपायां सम्भावयितुं गायत्र्यर्थं तावदाह ।

अन्तर्यामिस्वरूपेण सर्वधीवृत्तिनोदकम् ।
सवितृमण्डले ध्येयं गायत्र्यर्थपरं महः ॥ ३ ॥

अन्तर्यामीति । अन्तर्यामिस्वरूपेण'यः पृथिव्यां तिष्ठन्नि'त्यादि यः सर्वेषु तिष्ठन्सर्वान्यमयती'श्रुत्या सर्वान्तर्याम्युक्तः स स्वरूपं यस्य तत्तथोक्तं तेन कृत्वा सर्वधीवृत्तिनोदकं सर्वपदवाच्यं यद्द्वैतजातं तदाकारा या धीवृत्तयो बुद्धिवृत्तयस्तासां नोदकं प्रे-

रकं गायत्र्यर्थपरं 'तत्सवितुरि'ति प्रसिद्धगायत्रीमन्त्रार्थतात्पर्यभूतं महस्तेजः सर्वप्रकाशकं चिन्मात्रमित्यर्थः, सवितृमण्डले सवितुर्मायातत्कार्यप्रसवितुः शवलाख्यस्य जगत्कारणभूतस्य ब्रह्मणो मण्डले बिम्बभूते चिन्मात्रे ततः पृथगसत्त्वाद्बिम्बभूतमेव तद्ध्येयं चिन्तनीयम्। अजपायामपि तदहंशब्दवाच्यस्य तच्छब्दवाच्यस्य च परोक्षप्रत्यक्षादिविरुद्धांशत्यागेन भागलक्षणया लक्षितं जीवब्रह्मैक्यं लक्षयन्त्यां गायत्र्यर्थवत्त्वेन गायत्रीत्वं संभाव्यमिति भावः ॥ ३ ॥

ननु त्र्यक्षराया अजपाया गायत्रीत्वे लोकप्रसिद्धगायत्र्यां चतुर्विंशत्यक्षरपाठगौरवं किमर्थमित्याशङ्क्याह ।

चतुर्विंशत्यक्षरया गायत्र्या ब्रह्मविद्यया ।
चतुर्विंशतितत्त्वानां लयकृद्ब्राह्मणः शुचिः ॥ ४ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां गायत्रीजपनिर्णयो द्वादशः ॥ १२ ॥

चतुर्विंशतीति । चतुर्विंशत्यक्षरया चतुर्विंशतिसंख्यान्यक्षराणि वर्णा यस्यां सा तथोक्ता तया ब्रह्मविद्यया ब्रह्मोपासनाङ्गमन्त्ररूपया, यद्वा ब्रह्मज्ञानार्थवत्त्वाद्ब्रह्मविद्यात्वं गायत्र्यास्तथा चतुर्विंशतितत्त्वानामष्टौ प्रकृतयः षोडशविकाराश्चेत्येवं चतुर्विंशतिसंख्यानां सांख्योक्ततत्त्वानां लयकृन्नाशकृत्प्रकृतितत्कार्यलये कृते सति पुरुषस्यासङ्गसच्चिदानन्दब्रह्मलक्षणवत्त्वज्ञानेन स्वस्यापि ब्रह्माभिन्नत्वज्ञाने सति ब्राह्मणो ब्रह्मविद्भवति अत एव स शुचिर्निर्मलो जायत इति शेषः, इदमेव प्रयोजनं चतुर्विंशत्यक्षरप्रयोगे ज्ञेयम् ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे गायत्रीजपनिर्णयार्थप्रकाशो द्वादशः ॥ १२ ॥

---

अथोपस्थाननिर्णयः ।

एवं गायत्रीजपनिर्णयं निरूप्येदानीं मुनीन्द्राणामुपस्थानं निर्णीय प्रदर्शयितुमुपस्थाननिर्णयाख्यं द्विश्लोकं प्रकरणं कथयन्नाह ।

## अथोपस्थाननिर्णयः ।

अथेति अथ गायत्रीजपनिर्णयनिरूपणानन्तरमुपस्थाननिर्णयः क्रियत इति शेषः, तमेव निरूपयितुं हस्तौ निर्णीय दर्शयति ।

मुनिः प्रसार्य सरलौ प्रलम्बौ सपवित्रकौ
सांख्ययोगौ निजौ बाहू उपतिष्ठेत भास्करम् ॥ १ ॥

मुनिरिति। लोके तावत्प्रसिद्धावेव करौ प्रसिद्धकुशपवित्रसहितावुपरि लम्बायमानौ कृत्वा प्रसिद्धसूर्यसन्मुखं स्थित्वा 'मित्रो जनान्यातयती'त्यादि मन्त्रैरुपस्थानं क्रियते । अत्र तु हस्तादिविशेषसहितमुपस्थानविशेषमाह मुनिर्मननशीलो ज्ञानीत्यर्थः, सरलौ प्रकृतितत्कार्यमत्त्वजीवानेकत्वेश्वरताटस्थ्यरूपविरोधत्यागेन वेदान्तानुकूलौ प्रलम्बौ जीवब्रह्मैक्यबोधपर्यन्तौ सपवित्रकावुक्तसर्वसूक्ष्मशास्त्रार्थरूपकुशपवित्रसहितौ सांख्ययोगौ सांख्यशास्त्रयोगशास्त्राख्यौ निजावात्मीयौ बाहू हस्तावनात्मत्यागस्यात्मग्रहणस्य च साधनत्वात्प्रसार्य वेदान्तादरेण तयोरादरशैथिल्येन शिथिलौ कृत्वेत्यर्थः, भास्करं भा जगत्प्रकाशस्तस्य करं कर्त्तारं 'तस्य भासा सर्वमिदं विभाती'तिश्रुतेश्चिदात्मानामित्यर्थः, उप समीपे पारमार्थिकात्मस्वरूपेण व्यावहारिकचिदाभासस्य बाधितत्वदृष्ट्या व्यवहारनिर्वाहकत्वात्समीपवर्तित्वमिति ज्ञेयं, तिष्ठेत स्थितिं कुर्यात् ॥ १ ॥

मन्त्रमाह ।

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ॥ २ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायामुपस्थान-
निर्णयस्त्रयोदशः ॥ १३ ॥

नम इति । सवित्रे मायायास्तत्कार्यस्य च जनकायेति तटस्थलक्षणलक्षितायेत्यर्थः, स्वरूपलक्षणेन लक्षयति जगदिति, जगदेकचक्षुषे जगतो द्वैतजातस्यैकं मुख्यं चक्षुर्दर्शनसाधनभूतं चक्षुरिव चक्षुश्चिन्मात्रं तस्मै जगत्प्रकाशकायेत्यर्थः, पुनस्तटस्थलक्षणेन लक्षयति जगदिति, जगत्प्रसूतिस्थितिनाशहेतवे जगतो द्वैतजातस्य प्रसूतिरुत्पत्तिः स्थितिः स्थानं नाशो लयस्तेषां हेतुः कारणं तस्मै यं विना जगदुत्पत्तिस्थितिलया न भवन्तीत्यर्थः, पूर्वत्र मायातत्कार्ययोरधिष्ठानत्वेन कारणत्वमत्र तूपादानकारणत्वमिति विवेकः, अत एव त्रिगुणात्मधारिणे त्रयो गुणाः सत्त्वरजस्तमोभिधास्तानात्मनि धारयतीति तच्छीलायाऽत एव विरिञ्चिनारायणशङ्करात्मने विरञ्चिर्ब्रह्मा नारायणो विष्णुः शङ्करो रुद्रस्तेषामात्मनेऽन्तर्यामिरूपिणे, यद्वा विरञ्चिर्ब्रह्मा नारायणो विष्णुः शङ्करो रुद्रस्त्रयाणां गुणानां रजःसत्त्वतमसामभिमानिनस्त एवात्मानो देहा यस्य तथा विधायेत्यर्थः, अत एव त्रयीमयाय त्रयी वेदत्रयी तन्मयाय तद्योनित्वेन सर्वज्ञत्वादिलक्षणलक्षिताय, यद्वा त्रयी वेदत्रयी तन्मयाय वेदत्रयप्रतिपाद्यायेत्यर्थः, तथाहि सूत्रं 'शास्त्रयोनित्वादि'ति ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसा० मुनीन्द्रदिनचर्यार्थप्रकाश उपस्थाननिर्णयार्थप्रकाशस्त्रयोदशः ॥१३॥

---

अथ सहोमाङ्गहोमनिर्णयः।

एवमुपस्थाननिर्णयं निरूप्येदानीं होमाङ्गसहितं होमं निर्णेतुं सहोमाङ्गहोमनिर्णयाख्यं सार्धचतुर्दशश्लोकं प्रकरणमारभमाण आह।

अथ सहोमाङ्गहोमनिर्णयः।

एवं समाप्य विधिना प्रातः संध्याविधिं मुनि।
होमस्यावसरं ज्ञात्वा यज्ञशालां ततो विशेत् ॥ १ ॥

अथेति। अथोपस्थाननिर्णयानन्तरं सहोमाङ्गहोमनिर्णयो होमस्य हवनस्याङ्गानि यज्ञशालाप्रायश्चित्तादीनि तैः सहितस्य होमस्य हवनस्य निर्णयः सिद्धान्तः क्रियत इति शेषः, तत्रादावितिकृसमाहैवमिति, एवमुक्तप्रकारेण विधिना विधानेन प्रातःसन्ध्याविधिं प्रातःकालीना या सन्ध्योक्तलक्षणा सन्ध्याख्या क्रिया तस्या विधिमनुष्ठानं समाप्य समाप्तं कृत्वा मुनिर्मननवान् होमस्य वक्ष्यमाणलक्षणहोमस्यावसरं समयं यत्र कालेऽहन्ताममते बाधकत्वेन स्फुरतस्तं कालमित्यर्थः, ज्ञात्वाऽवगत्य ततोऽनन्तरं यज्ञशालामिज्यते पूज्यत आत्मानेनेति यज्ञः समाधिस्तस्य शाला स्थानं वक्ष्यमाणमाविशेत्प्रविशेत्। लौकिकपक्षे तु मुनिः कर्मकाण्डविवेकवानेवमनेन प्रकारेण विधिना विधानेन प्रातःसन्ध्याविधिं प्रातःकालीना या सन्ध्या सन्धिभवा क्रिया तस्या विधिमनुष्ठानं समाप्य समाप्तं कृत्वा ततः सन्ध्याकर्मानन्तरं होमस्य गार्हपत्यहोमस्यावसरं समयं सूर्योदय-

कालमित्यर्थः, ज्ञात्वाऽवलोक्य यज्ञशालां यज्ञस्य यजनस्य शालां गृहं विशेत्प्रविशेत् । प्रकृते तु यज्ञशाला वक्ष्यमाणा ज्ञेया ॥ १ ॥

लोके तावत्प्रसिद्धा यज्ञशालाऽत्र तु विशिष्टां तामेवाहार्धेन ।

यज्ञशाला भूमिका स्यात्तृतीया तनुमानसा ।
सव्याहान्सव्यतः कुर्यादसव्याहानसव्यतः ।
संचरेत तथा नैव प्रायश्चित्तीयते यथा ॥ २ ॥

यज्ञशालेति । तृतीया भूमिका भूमिस्तनुमानसा तनुमानसा तनुमानसानाम्नी तनवः सूक्ष्मा मानसा मनोधर्माः सङ्कल्पविकल्परागद्वेषेच्छाकामादयो यत्रेति तन्नाम्नीत्यर्थः, यज्ञशाला ज्ञानियज्ञस्य शाला विशिष्टं गृहं स्यात्प्रवेत्तां प्रविशेदिति पूर्वत्रान्वयः, ततः किंकुर्यादित्यत आह सव्याहानिति । लोके तावदयमर्थः, सव्याहान्सव्ये वामाङ्गेऽर्हान्योग्यान्पदार्थान्होमसामग्रीभूतान्सव्यतः सव्ये वामभागे कुर्यात्स्थापयेत्तथाऽसव्याहानसव्येऽपसव्ये दक्षिणभाग इत्यर्थः, अर्हान्योग्यान्पदार्थान्होमसामग्रीभूतानसव्यतोऽसव्येऽपसव्ये दक्षिणभाग इत्यर्थः, उभयत्र सप्तम्यन्तात्तसिः, यथा येन प्रकारेण प्रायश्चित्तीयते प्रायश्चित्ती भवति तथा तेन प्रकारेण नैव सञ्चरेत नैव वर्तेतेत्यर्थः । प्रकृते तु सव्याहानऽद्वैतं मोक्षसाधनत्वात्सव्यं तत्राहान्योग्यान्विवेकादीन् सव्यतोऽद्वैतात्मस्वरूपप्राप्तिसाधनत्वादात्मनः पृथक्सत्त्वरहितत्वाच्चाद्वैत आत्मनि कुर्यात्स्थापयेदद्वैतात्मवत्तानपीष्टत्वेनाङ्गीकुर्यादिति भावः, तथाऽसव्याहानसव्येऽपसव्यवत्पितृलोकप्राप्तिकारणत्वेन कर्मनिर्वाहकं द्वैतं तत्राहान्योग्यान्यज्ञादिधर्मान्साधनैः सहितानसव्यतोऽपसव्ये द्वैतरूपसंसारे कुर्यात्तत्कारणत्वेन विभाव्य तत्रोपेक्षां कुर्यादित्यर्थः,

एवं साधनानि द्वैताद्वैतोपयोगेन विविच्य यथा येन प्रकारेण प्रायो बहुशश्चित्तीयते चित्तं द्वैतकार्यसाधनरतमन्तःकरणं तस्याचरणमिवाचरणं क्रियते यथा तथा तेन प्रकारेण नैव सञ्चरेत संप्रवर्तेत केवलाद्वितीयात्मप्राप्तिसाधनेषु विवेकादिष्वेव प्रवर्तेतेति भावः ॥ २ ॥

तथापि पूर्ववासनया कदाचिच्चित्तस्य चित्तधर्मेषु प्रवृत्तौ सत्यां तन्निवर्त्तकचित्तधर्माङ्गीकाररूपं प्रायश्चित्तं विधत्ते।

अथ कर्मातिपातः स्याद्दुर्गत्वाद्ब्रह्मकर्मणः।
प्रायश्चित्तविधिं ज्ञात्वा तच्च सद्यः समाचरेत् ॥३॥

अथेति। अथऽथापि चित्तधर्मेषु चेतः प्रवृत्तौ रुद्धायामपीत्यर्थः, ब्रह्मकर्मणो ब्रह्मस्वरूपभूतकर्मणः समाधिरूपस्येत्यर्थः, दुर्गत्वाद्दुःसाध्यत्वात्कर्मातिपातः कर्मणो ब्रह्मस्वरूपभूतस्य कर्मणः समाधेरित्यर्थः, अतिपातो नाशः प्रपञ्चव्युत्थानरूप इत्यर्थः, स्याद्भवेत्तदा प्रायश्चित्तविधिं प्रायो बहुशश्चित्तविधिं चित्तनाशविधिं वक्ष्यमाणं ज्ञात्वाऽवलोक्य निश्चित्येत्यर्थः, तच्च तदपि चित्तधर्मनिवर्त्तकचित्तधर्मविशेषाङ्गीकरणरूपं प्रायश्चित्तमित्यर्थः, सद्यस्तत्कालमेव नोपेक्षया विलम्बः कर्त्तव्य इति भावः, समाचरेत्कुर्वीत। लौकिकार्थस्तावदथाथापि सावधानतया प्रवृत्तौ सत्यामपीत्यर्थः, ब्रह्मकर्मणो ब्रह्म वेदस्तदुक्तस्य कर्मणो दुर्गत्वाद्दुःसाध्यत्वात्कर्मातिपातः कर्मणः क्रियाया अतिपातो विघातः स्याद्भवेत्तदा प्रायश्चित्तविधिं प्रायश्चित्तानां कर्मातिपातजन्यदोषनिवर्तककर्मणां विधिं प्रकारं ज्ञात्वा निश्चित्य तच्च प्रायश्चित्तमपि सद्यस्तत्कालं समाचरेत कुर्वीत नतूपेक्षां कुर्यादिति भावः ॥ ३ ॥

सद्यः प्रायश्चित्तकर्तव्यतायां बोधायनस्मृतिमुदाहृति।

'कर्मातिपाते प्रायश्चितं

तत्कालमि'ति वचनात्प्रायश्चित्तानि ॥ ४५ ॥

कर्मेति । कर्मातिपाते कर्मणो विघाते सति प्रायश्चित्तं कर्मातिपातजन्यदोषनिवर्तककर्मरूपं तत्कालं तदानीमेव कर्तव्यमितिशेषः, इति वचनादित्येवं बौधायनवाक्याद्धेतोः ॥ ४ ॥

लौकिकप्रायश्चित्तविलक्षणानि मुनीनां प्रायश्चित्तानि वक्तुमाह ।

अथ प्रायश्चित्तानि ।

अथेति । अथ प्रायश्चित्तकर्तव्यतायां प्रमाणनिरूपणानन्तरं प्रायश्चित्तानि मुनीनां कर्मातिपातजन्यदोषनिवर्तकानि चित्तधर्माङ्गीकरणरूपाणि उच्यन्त इति शेषः, तान्येवाह ।

क्षमयैव जयेत्क्रोधं सत्येनैवानृतं जयेत् ।

अश्रद्धां श्रद्धया जित्वा दानैः कृपणतां जयेत् ॥५॥

क्षमयेति । क्षमयैव क्षान्त्यैव केवलं नान्येनोपायेन क्रोधं कोपं जयेन्नाशयेत्तथाऽश्रद्धां गुरुवेदान्तवाक्येष्वश्रद्धारूपं कर्मातिपातजं दोषं श्रद्धया गुरुवेदान्तवाक्येषु विश्वासेनैव जयेन्नाशयेत्तथा दानैरुदारचित्ततया सत्पात्रसमर्पितैरर्थैः कृत्वा कृपणतामनुदारतारूपं समाधिरूपब्रह्मकर्मातिपातजं दोषं जयेन्नाशयेत् ॥ ५ ॥

अत्रोक्तेर्थे प्रमाणतां साधयत्यर्धेन ।

इतीमे सेतुसामोक्ताश्चत्वारः सेतवो दृढाः ।

उपलक्षणमेवैतदन्यानपि तथा जयेत् ॥ ६ ॥

इतीति । इत्येवमिम एते चत्वारश्चतुःसंख्या दृढा बलिष्ठाः

सेतवो मार्गाः सेतुसामोक्ताः सेतवो मार्गास्तत्प्रतिपादकं साम 'सेतूं-स्तरेदि'त्यादिगीतिरूपं तस्मिन्नुक्ताः कथिता ज्ञेयाः, अत एतद-प्रामाणिकं न मन्तव्यमिति भावः, नन्वेते किञ्चत्वार एव नेत्याह्रो-पलक्षणमिति, एतच्चतुःसेतुनिरूपणमुपलक्षणमुपलक्षकमन्येषा-मपि एव निश्चेतव्यं तथा तथासति उपलक्षणत्वे सतीत्यर्थः, अ-न्यानपि कर्मातिपातजान्दोषाञ्जयेन्निवारयेत् ॥ ६ ॥

तानेव दर्शयति।

उत्थानेन जयेन्निद्रां कामं सङ्कल्पवर्जनात्।
सन्तोषेण जयेल्लोभं मोहं बोधदृशा जयेत् ॥ ७ ॥

उत्थानेनेति। उत्थानेनोत्थानं निद्रानिवृत्त्यै स्थानान्त-रगमनादिकं तेन निद्रां सुषुप्तिं जयेन्नाशयेत्तथा सङ्कल्पवर्जना-त्सङ्कल्पस्य गुणबुद्ध्या चिन्तनरूपस्य वर्जनं त्यागस्तस्मात्कामं मनसोभिलाषरूपां वृत्तिं जयेन्नाशयेत्तथा लोभं लोभरूपां वृत्तिं सन्तोषेण सन्तोषोऽलंबुद्धिस्तया जयेन्नाशयेत्तथा बोधदृशा बोधो ज्ञानं सैव दृग्दृष्टिः स्वात्मस्मृतिरित्यर्थः, तया मोहमात्म-साक्षात्कारसाधनानवधानरूपं स्वात्मविस्मृतिरूपं वा जयेन्ना-शयेत् ॥ ७ ॥

मदमत्सरमुख्यांश्च सर्वभूतात्मभावनात्।
अन्यानपि जयेद्दोषान्नित्यानित्यविचारणात् ॥ ८ ॥

मदेति। मदमत्सरमुख्यांश्च मदः सर्वगुणैः स्वस्मिन्नाधि-क्यबुद्धिर्मत्सरः परोत्कर्षासहनं तौ मुख्यौ येषां कामादीनां ते तथोक्तास्तानपि सर्वभूतात्मभावनात्सर्वाणि समस्तानि यानि भूतानि पृथिव्यादीनि तत्कार्याणि च तेषु आत्मनोऽस्ति-भातिप्रियरूपेण स्वस्य भावनं नाम चिन्तनं नामरूपासत्त्वप्र-

तीतिपूर्वकं सच्चिदानन्दरूपेण चिन्तनं ततस्तेनेत्यर्थः, जयेन्नाशयेत्तथाऽन्यानपि उक्तदोषेभ्योतिरिक्तानपि दोषान्स्वसाक्षात्कारविघ्नरूपान्नित्यानित्यविचारणान्नित्यमात्मरूपं सच्चिदानन्दरूपेण सर्वत्र नामरूपात्मकेषु स्थितमनित्यं चानात्मरूपमसज्जडरूपं दुःखरूपं च माया तत्कार्यं चानयोर्विचारणाद्विविच्य दर्शनाज्जयेन्नाशयेदात्मानात्मविचारणादिति पाठेपि स एवार्थः ॥ ८ ॥

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ९ ॥

लय इति । लये सुषुप्तौ लीने सति चित्तं मनः प्रबोधयेद्योगेन समाधौ निरुध्यमानं चेतो विषयेभ्यो व्यावृत्तमपि लयाभिमुखं चेत्तदानीमुत्थापनप्रयत्नेन, यद्वा लयकारणनिरासेन तत्सम्यगुत्थापयेद्, लयकारणानि पातञ्जल उक्तानि 'लयहेतवो निद्राशेषोऽजीर्णबह्वशनश्रमा' इति। अस्यार्थः, लयस्य लयाभिमुखस्य चेतसो लयसन्मुखत्वे हेतवः कारणानि निद्राशेषो निद्राया अपूर्णतैकः, अजीर्णं भक्षितान्नस्योदरे परिपाकाभावो द्वितीयो, बह्वशनं स्वाहारादधिकान्नभक्षणं तृतीयः, श्रमश्च चतुर्थ इत्येवंरूपाश्चत्वारो हेतवो भवन्ति तन्निवारणेन जाग्रदभिमुखं कृत्वा ततः समाधौ निरुन्ध्यादिति भावः। ततो लयादुत्थापितं चित्तं यदि विक्षिप्तं स्यान्नित्यं जाग्रद्विषयप्रतीत्यभ्यासवशात्कामभोगेषु विक्षिप्तं विक्षेपं प्राप्तं भवेच्चञ्चलं भवेदित्यर्थः, तर्हि पुनर्भूयोपि शमयेद्विवेकिप्रत्यक्षभोग्यवस्तुस्थितसर्वप्रकारदुःखानुसन्धानेन शास्त्रार्थानुसन्धानेन जन्मादिविकाररहिताद्वितीयात्मानुसन्धानेन वा भोग्यावस्तुत्वनिश्चयेन

वा शमयेन्निर्वासनं कुर्यात्ततश्च तच्चित्तं सकषायं कषायस्तीव्रचित्तदोषस्तीव्ररागद्वेषादिवासना तया ग्रस्तं यदि भवेत्तर्हि तद्विजानीयात्कदाचित्समाधिस्थितमिव लयविक्षेपशून्यं दुःखैकाग्रमवतिष्ठते तादृशं चित्तं विजानीयात्समाहितचित्ताद्विविच्य जानीयादित्यर्थः, असमाहितमिदमिति निश्चित्य कषायप्रतीकारं कुर्यादिति भावः, तथा समप्राप्तं समं ब्रह्म 'समं सर्वेषुभूतेष्वि'त्यादिस्मृतेः, तत्प्राप्तं तदाकारं यदि भवेत्तर्हि तच्चित्तं कषायलयग्रस्तत्वभ्रमेण ततो न चलितं कुर्यात्समे ब्रह्मणि चित्ते स्थापिते सति तत्रैव स्थिरं तत्कुर्यादिति भावः ॥ ९ ॥

ततोपि किं कार्यमित्यत आह।

नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्।
विशेदेकाग्रया बुद्ध्या सिद्धिमेवमवाप्नुयात् ॥१०॥

नेति। तत्र समे ब्रह्मणि चेतसि स्थापिते सति परमानन्दाविर्भावः स्यात्तत्र तस्मिन्परमानन्दाविर्भावे सति रसमानन्दं नास्वादयेन्नानुभूयाद् 'रसो वै स' इति श्रुतेः,।

ननु 'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियमि'ति स्मृतेः।
समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्।
न शक्यते वर्णयितुं तदा गिरा स्वयं तदन्तःकरणे न गृह्यते॥

इति श्रुतेश्च, समाधावाविर्भूतस्य ब्रह्मानन्दस्य श्रुतिस्मृतिभ्यां बुद्धिग्राह्यत्वमुक्तं भवता तु तद्विरुद्धं बुद्ध्यग्राह्यत्वं कथमुच्यत इति चेन्नायं दोषः समाधिविरोधिव्युत्थानकारणभूतवृत्तिविषयकसुखास्वादनिषेधाद्, यथा ग्रीष्मदिनेषु मध्याह्ने जाह्नव्यादिनदीजलनिमग्नेनाप्यनुभूयमानं शैत्यसुखं तदा वक्तुमशक्यं पश्चात्ततो निःसृतेनोच्यते, यथा वा

सुषुप्तावविद्यावृत्तिभिरतिसूक्ष्माभिरनुभूयमानमपि स्वरूपसुखं तदानीं सविकल्पेनान्तःकरणेन गृहीतुमशक्यमपि प्रबोधकाले तु स्पष्टं तत्परामृशति, तथा समाधौ वृत्तिरहितेन संस्कारमात्रशेषतया सूक्ष्मेण चित्तेन सुखानुभवः श्रुतिस्मृतिविवक्षितः, अस्माभिस्तु महदिदं समाधिसुखमनुभूतमिति व्युत्थितस्य स्मृतिविषयः सविकल्पो रसास्वादशब्देनानन्दोभिहितः स च प्रतिषिध्यतेऽतो न विरोधः। एतदभिप्रायं विशदयितुमाह निःसङ्ग इति, प्रज्ञया प्रकृष्टं सविकल्पकं ज्ञानं प्रज्ञा तया निःसङ्गः सङ्गः सम्बन्धस्तद्रहितो भवेत्स्याद्,यद्वा धृतिगृहीता बुद्धिः प्रज्ञा तया निःसङ्गः समाधिसुखनिरूपणाद्यासक्तिरहितो भवेत्स्यादित्यर्थः, यद्वा प्रज्ञया समाधिरूपवृत्त्या निःसङ्गस्तात्त्विकसम्बन्धहीनः शुद्धचिन्मात्रो भवेदित्यर्थः, एतदभिप्रायेणाप्याह विशेदिति, एकाग्रयैकं स्वगतादिभेदरहितमग्रं पर्यवसानं यस्याः सा तथोक्ता स्वलयेन ब्रह्ममात्ररूपयेत्यर्थः, बुद्ध्या निश्चयात्मिकान्तःकरणवृत्त्या विशेल्लीनो भवेद्ब्रह्माकारो भवेदित्यर्थः, ततः किं तत्राह सिद्धिमिति, एवं प्रकारेण सिद्धिं मुक्तिमवाप्नुयात्प्राप्नुयान्नान्यथोक्तलक्षणब्रह्मकर्मफलसिद्धिरिति भावः॥ १०॥

एवं होमविघातकानि प्रायश्चित्तानि निरूप्येदानीं होमाङ्गेतिकर्तव्यतामाह।

उद्धृते गार्हपत्याग्नौ तत्तत्संस्कारसंस्कृते।
सत्यरूपः स्वयं यज्वा श्रद्धा पत्नी पतिव्रता॥ ११॥

उद्धृत इति। गार्हपत्याग्नौ वक्ष्यमाणे गार्हपत्यनामन्यग्नावुद्धृते वक्ष्यमाणलक्षणेनोद्धरणेनोद्धृते बहिर्निष्कासिते सति तत्तत्तत्संस्कारसंस्कृते ते ते तच्छुद्धिकारणभूताः संस्कारा जीवस्य ये विवेकिप्रसिद्धाः शान्त्यादयस्तैः संस्कृते शोधिते सति

जीवरूपेऽग्नौ सत्यरूपस्त्वंपदलक्ष्यः शुद्धजीवः स्वयमात्मा यज्वा होमकर्त्ता भवति पतिव्रता पत्युरात्मनो व्रतं स्वसुखचित्सन्मात्रस्थितिरूपं व्रतं यस्याः सा तथोक्ता श्रद्धा गुरुवेदान्तवाक्येषु विश्वासरूपा वृत्तिः सा पत्नी यज्वपत्नी भवति ॥ ११ ॥

लोके तावद्गार्हपत्योग्निः प्रसिद्ध एवात्र तु गार्हपत्यशब्दनिरुक्त्या तं विशिष्टं लक्षयति।

गृहं देहः पतिर्जीवश्छादितो मोहभस्मना।
जीवस्य गार्हपत्याग्नेस्तदुद्धरणमुत्तमम् ॥ १२ ॥

गृहमिति। देहः शरीरं गृहं गृह्यत आत्मभ्रान्त्याङ्गीक्रियत इति गृहं मन्दिरं जीवो जीवयति शरीरमिति जीवः, यद्वा जीवति प्राणान्धरतीति जीवः पतिः पाति रक्षतीति पतिः शरीरस्य जीवकत्वात्प्राणधारकत्वाच्चास्ति स मोहभस्मना मोहोऽज्ञानं जीवाग्न्याच्छादकत्वाद्भस्मेव भस्म तेनाच्छादित आवृतो भवति तत्ततो मोहभस्मतो जीवस्य जीवरूपस्य गार्हपत्याग्नेः शरीरगृहपालकस्य तत्प्रकाशत्वाच्चाग्नेः। यद्वा तत्त्वज्ञानेन शरीरगृहदाहकत्वेनाग्नेस्तस्य च सत्त्वसमर्पणेन पालकस्य चोद्धरमुद्धार उत्तमं श्रेष्ठमतिश्रेष्ठमित्यर्थः, नान्यल्लौकिकमग्न्युद्धरणं श्रेष्ठमिति भावः ॥ १२ ॥

द्वे आहुती जुहोत्येते अग्निहोत्रविधानतः।
ममतां प्रथमं हुत्वाहन्तां च जुहुयात्ततः ॥ १३ ॥

द्वे आहुती जुहोतीति। श्रुति प्रामाण्येन लौकिके गार्हपत्याग्नौ द्वे आहुती प्रक्षिप्येते अतोत्राप्येनत्प्रामाण्येनैतदाहुतिद्वयविलक्षणमाहुतिद्वयमाह द्वे इति, अग्निहोत्रविधानत उक्तलक्षणेनाग्निहोत्रविधानेनैते वक्ष्यमाणे द्वे द्विसङ्ख्ये आहुती मुनिर्ष-

ननवाञ्जुहोति प्रक्षिपति ते एतार्धेन दर्शयति ममतामिति, प्रथममादौ ममतां ममत्वं हुत्वा प्रक्षिप्य ततोऽनन्तरमहन्तां चाहन्त्वमपि जुहुयात्प्रक्षिपेद्बुद्ध्यादौ शरीरान्तेषु आत्मनस्तादात्म्यबुद्धिं सजेदित्यर्थः ॥ १३ ॥

नन्वेतदाहुतिद्वयं जीवस्वरूपे गार्हपत्याग्नौ प्रक्षिप्यते चेत्ततः किं फलं भवेत्तत्राह ।

हुते चेदाहुती एते सर्वमेतद्धुतं भवेत् ।
श्रद्धापत्नीसमेतानां मुमुक्षागृहवासिनाम् ॥१४॥
अग्निहोत्रमिदं नित्यमकृत्य प्रत्यवैति यत् ।
इ० न० बो० मु० होमांगसहितहोमनिर्णयः ॥१३॥

हुते चेदिति । एते उक्तप्रकारे आहुती हुते चेदुक्तलक्षणे गार्हपत्याग्नौ प्रक्षिप्ते यदि ततस्तर्हि एतत्सर्वं दृश्यमानं सर्वं जगद्धुतमग्नावुक्तलक्षणे प्रक्षिप्तं भवेत्स्याद्, नन्विदमग्निहोत्रं न क्वाप्युक्तमित्याशङ्क्य तैत्तिरीयकोपनिषदि 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी'त्यादिनोक्तत्वान्नैवमित्याह श्रद्धेति, श्रद्धापत्नीसमेतानां गुरुवेदान्तवाक्येषु विश्वासबुद्धिरेव श्रद्धा सैव पत्नी भार्या तया समेतानां संयुक्तानां मुमुक्षा गृहवासिनां मुमुक्षा मोक्षेच्छा सैव गृहं मन्दिरं तत्र वस्तुं वासं कर्तुं शीलं येषां तेषां 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः, इदमेतदुक्तविधमित्यर्थः, अग्निहोत्रमग्निहोत्राख्यं कर्म कार्यमवश्यकर्तव्यं विहितमित्यर्थः, यदिदं प्रसिद्धं ज्ञान्यग्निहोत्रमकृत्य परित्यज्य प्रत्यवैति प्रत्यवायी भवति अतोऽग्निहोत्रमिदं नित्यं कर्तव्यमिति भावः ॥ १४ ॥ १५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे होमाङ्गसहितहोमनिर्णयार्थप्रकाशस्त्रयोदशः ॥ १३ ॥

एवं होमनिर्णयं परिसमाप्येदानीं ज्ञानिनां ब्रह्मयज्ञं निर्णेतुं ब्रह्मयज्ञनिर्णयाख्यं प्रकरणं पञ्चश्लोकमभिदधान आह।

## अथ ब्रह्मयज्ञनिर्णयः।

अथेति। अथ होमनिर्णयानन्तरं ब्रह्मयज्ञो विदुषां ब्रह्मयज्ञो निरूप्यत इति शेषः, तत्र तावल्लौकिकब्रह्मयज्ञे प्रसिद्धहस्तयोः सम्पुटीकरणं विहितं तद्वदत्र ज्ञानिविहितब्रह्मयज्ञे लौकिकहस्तविलक्षणहस्तयोर्लौकिकसम्पुटीकरणविलक्षणं सम्पुटीकरणमाह।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
इति पञ्चाङ्गुलिमयो यमनामा तु सत्करः॥१॥

अहिंसेति। अहिंसा हिंसात्यागः, सत्यं सत्यवचनादिग्रहः, यद्वाऽसद्वस्तुत्यागेन सद्वस्तुग्रहः, अस्तेयं स्तेयं चौर्यं तत्यागः, ब्रह्मचर्यापरिग्रहौ ब्रह्मचर्यमष्टाङ्गमैथुनत्यागरूपम्, अपरिग्रहश्च योगप्रतिकूलविषयासंग्रहः, एतेषां फलान्यपि सूत्रितानि पतञ्जलिना 'अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः, सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्, अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानं, ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः, अपरिग्रहस्थैर्ये जन्मकथन्ता सम्बोध' इति पञ्चयमफलानि क्रमेण प्रतिपादितानीत्येवं पञ्चाङ्गुलिमयः पञ्च पञ्चसङ्ख्या अङ्गुलयस्तन्मयस्तत्प्रचुरो यमनामा यमान्नामयति स्वाङ्गमुख्यत्वेन प्रगटयतीति यमनामा साङ्ख्याख्यः सत्करः सन्मोक्षार्थोपयोगी करो

हस्तो यमानां साङ्ख्य एव प्रधानत्वात्तुपदेन लौकिकहस्ततोऽस्य हस्तस्य वैलक्षण्यं सूचितम् ॥ १ ॥

द्वितीयं करं निर्दिशति ।

शौचं संतोषः स्वाध्यायस्तप इश्वरधारणा ।
इति पञ्चाङ्गुलिमयो नियमो नाम सत्करः ॥२॥

शौचमिति । शौचं बाह्यं स्नानादि आन्तरं रागादित्यागरूपमुभयं, सन्तोषो यथालब्धेषु भोगेष्वलंबुद्धिः, स्वाध्यायः स्वात्मनिरूपकवेदांतग्रन्थानां विचारपूर्वकः पाठः, तपः स्वस्ववर्णाश्रमविहितकर्माचरणनिमित्तं शीतवातादिक्लेशसहनरूपं स्वरूपप्राप्तिसाधननिमित्तं क्लेशसहनमिति च द्विविधम्, ईश्वरधारणा सर्वत्रास्तिभातिप्रियरूपेण सच्चिदानन्देश्वरप्रतीतिरूपा तद्व्यतिरिक्तनामरूपासत्त्वनिश्चयपूर्विका, इत्येवं पञ्चाङ्गुलिमयः पञ्च पञ्चसङ्ख्या अङ्गुलय इवाङ्गुलयः करशाखास्तन्मयस्तत्प्रधानो नियमो नाम नियम इति प्रसिद्धो योगे नियमानां प्राधान्यान्नियमप्रधानाङ्गैरुपलक्षितो योग इत्यर्थः, सत्करः सन्मोक्षरूपार्थसाधनभूतः करो हस्तोऽस्ति । एतेषामपि फलानि सूत्रितानि पतञ्जलिना 'शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः, सत्त्वशुद्धिः सौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि चेति; संतोषादनुत्तमसुखलाभः, कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः, स्वाध्यायादिष्टदेवतासंप्रयोगः, समाधिसिद्धिरीश्वरप्रणिधाना'दिति क्रमेण नियमानां फलानि ज्ञेयानि ॥ २ ॥

एवमङ्गुलिभिरुपलक्षितौ हस्तौ निर्णीय तयोः सम्पुटीकरणं विशिष्टमाह ।

संपुटीकृत्य हस्तौ द्वौ मुनिर्नियमसंयमौ ।

ब्रह्मस्तुतिमयं साक्षाद्ब्रह्मयज्ञं समाचरेत् ॥ ३ ॥

सम्पुटीकृत्येति। मुनिर्ज्ञानी नियमसंयमौ नियमाः पञ्च प्रोक्तास्तदुपलक्षितो योगः संयमश्चोक्तपञ्चयमोपलक्षितश्च साङ्ख्यस्तौ द्वौ द्विसङ्ख्यौ हस्तौ करौ द्वैतत्यागाद्वैतग्रहणसाधनौ सम्पुटीकृत्यान्योन्यानुकूल्येनाखण्डैकरसवस्तुपर्यवसितौ कृत्वा साक्षाद्वाच्यार्थत्यागेन प्रत्यक्षं यथा भवति तथा ब्रह्मस्तुतिमयं ब्रह्मणः सच्चिदानन्दरूपस्य स्तुतिः प्रशंसा यत्र वाक्ये तन्मयं तत्प्रधानं वाक्यार्थवृत्तिरूपं ब्रह्मयज्ञं ब्रह्मेज्यतेऽनेनेति ब्रह्मयज्ञो वेदान्तपाठस्तं चरेत्कुर्यात् ॥ ३ ॥

नन्वीदृशब्रह्मयज्ञनिरूपणे किंप्रमाणमित्याशङ्क्याह।

तदुक्तं पातंजले।

तदिति। तद्ब्रह्मयज्ञाख्यं कर्म पातञ्जले पतञ्जलिप्रणीते योगशास्त्र उक्तं कथितं केन वाक्येनेत्यपेक्षायां तद्वाक्यमुदाहरति।

‘स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्।

योगस्वध्यायसंपत्त्या परमात्मा प्रकाशत’ इति ॥४॥

स्वाध्यायादिति। स्वाध्यायात्स्वस्यात्मनोऽध्यायः प्रतिपादको ग्रन्थो वेदान्तशास्त्रं तत्पाठः कर्तव्यस्तस्मिंश्चित्तस्यौदासीन्यमालक्ष्य ततः योगं चित्तवृत्तिनिरोधमासीताभ्यसेत्तत्रापि चित्तस्यौदासीन्यमालक्ष्य योगाद्योगाभ्यासाच्चित्तं निवर्त्य स्वाध्यायं स्वस्यात्मनः प्रतिपादकं शास्त्रमामनेद्विचारयेत्कामादिवृत्तीनामवसरं न दद्यादिति भावः ॥ १० ॥

एवं कृते किं स्यात्तदाह।

वेदशास्त्रपुराणेषु यद्यत्पुण्यफलं स्मृतम्।

सर्वस्मादपि संप्रोक्तं ब्रह्मयज्ञफलं महत् ॥ ५ ॥

इति श्रीनर० बोध०मुनीन्द्र० ब्रह्मयज्ञनिर्णयः ॥ १५ ॥

योगेति। योगस्वाध्यायसंपत्त्या योगश्चित्तवृत्तिनिरोधलक्षणः स्वाध्यायश्च विचारपूर्वकं वेदान्तपाठस्तयोः सम्पत्त्या सिद्ध्या सम्पादनेनेत्यर्थः, परमात्मा कार्यकारणातीत आत्माऽखण्डैकरस आत्मा प्रकाशते स्वयमेव प्रकाशितो भवतीतीत्थं पातञ्जले प्रोक्तमस्तीत्यर्थः ॥ ४ ॥

एतस्य विद्वद्ब्रह्मयज्ञस्य फलमाह।

वेदेति। वेदशास्त्रपुराणेषु वेदः स्वतः प्रमाणत्वेनान्यप्रमाणनिरपेक्षोऽपौरुषेयवाक्यकदम्बरूपः शास्त्राणि मुनिप्रणीतानि वेदार्थप्रतिपादकानि वेदान्तमीमांसादीनि पुराणानि च व्यासादिप्रणीतानि भागवतादीनि सेतिहाससयुक्तिकवेदशास्त्रार्थसंग्राहकाणीत्यर्थः, तेषु विचारपूर्वं पठितेषु सत्सु यत्र यत्र तत्रोक्तं पुण्यफलं पवित्रकारकं फलं प्रयोजनं स्मृतं कथितं तस्मात्सर्वस्मादपि फलात्समूहीभूताद्ब्रह्मयज्ञफलमेतस्य विद्वद्विहितब्रह्मयज्ञस्य फलं प्रयोजनमात्मप्राप्तिरूपत्वान्महच्छ्रेष्ठं संप्रोक्तं कथितमतोयमेव ब्रह्मयज्ञः कर्तव्यो विद्वद्भिरिति भावः ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे ब्रह्मयज्ञनिर्णयार्थप्रकाशः पञ्चदशः ॥ १५ ॥

---

अथ तर्पणनिर्णयः।

एवं मुनीनां ब्रह्मयज्ञं निरूप्येदानीं तत्प्रसङ्गात्तेषामेकश्लोकं तर्पणनिर्णयाख्यं प्रकरणं निरूपयन्नाह।

## अथ तर्पणनिर्णयः।

अथेति। अथ ब्रह्मयज्ञनिर्णयनिरूपणानन्तरं तर्पणनिर्णयस्तर्प-

णस्य मुनीन्द्रतर्पणस्य निर्णयो निश्चयः क्रियत इति शेषः, तत्रैवाह।

देवर्षिपितृभूतेभ्यो दत्तो येन जलाञ्जलिः।
ब्रह्मैवास्मीतिमंत्रेण तर्पणं तत्सुतर्पणम् ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनींद्रदिनचर्यायां तर्पणनिर्णयः ॥१६॥

देवर्षीति। देवर्षिपितृभूतेभ्यो यथा लोके देवर्षिपितृभूतेभ्यो जलाञ्जलिर्दीयते तद्वदत्रापि देवा इन्द्रियाधिष्ठातारः समष्टिव्यष्टिरूपा ऋषयश्च ब्रह्मादयः पितरश्चाग्निष्वात्तादयः स्वपितरश्च भूतानि वियदादीनि भौतिकाः प्रेतादयश्च सर्वे प्राणिनस्तेभ्यो ब्रह्मैवास्मीतिमन्त्रेणाहं सच्चिदानन्दलक्षणस्योभयोरविशिष्टत्वाद्ब्रह्मास्मि भवामि नान्योऽहंपदवाच्यो जीवोस्मीत्यर्थानुसन्धानपूर्वकमनेन मन्त्रेण कृत्वा जलाञ्जलिर्जडस्य जडभागस्योभयोः पदयोर्वाच्यांशस्य विरुद्धस्याधेयाधारत्वेन सम्बन्धरूपोञ्जलिः साङ्ख्ययोगहस्तयोरेकार्थपर्यवसानरूपोऽञ्जलिर्दत्तः समर्पितः स्वसम्बन्धं परित्यज्य देवर्षिपितृभूतसम्बन्धत्वेनानुभूत इत्यर्थः, तन्निषेधस्यापि तत्सम्बन्धवत्त्वमेवेति भावः, सदेतदज्ञानिनां परोक्षमपि ज्ञानिनां त्वपरोक्षमित्यर्थः, तर्पणं तृप्तिजनकं कर्म सुतर्पणं नित्यतृप्तिजनकं नान्यन्नित्यतृप्तिजनकमतो विद्वद्भिरेतदेव कर्तव्यमिति भावः ॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे तर्पणनिर्णयार्थप्रकाशः षोडशः ॥ १६ ॥

---

अथ देवपूजानिर्णयः।

एवं तर्पणं निरूप्येदानीं मुनीनां देवपूजां वक्तुं देवपूजानिर्णयाख्यं चतुर्दशश्लोकं प्रकरणं निरूपयन्नाह।

## अथ देवपूजाचतुर्दशी ।

अथेति । अथ तर्पणनिरूपणानन्तरं देवपूजाचतुर्दशी देवपूजायाश्चतुर्दशी चतुर्दशश्लोकसमाहाररूपं प्रकरणं निरूप्यत इति शेषः । तत्र तावज्ज्ञानिनां पूजां निरूपयितुं तत्पूज्यदेवतातत्त्वानुसन्धानं कृत्वा पूज्यपूजानिरूपणं प्रतिजानीते ।

> मायाशक्तिविलासतो नगणितब्रह्माण्डभाण्डोदरे
> क्रीडाकौतुकसंभ्रमात्मकमपि प्रत्यक्प्रकाशात्मकम् ।
> ध्यात्वा किंचिदचिन्त्यचिद्घनरसं स्वानंदसत्ताद्वयं
> सिद्धांतस्वरसेन पूजनविधिं वक्ष्यामि विश्वात्मनः॥१॥

मायेति । मायाशक्तिविलासतो मायानाम्नी शक्तिर्जगज्जननसामर्थ्यरूपा तस्या विलासतो विलासरूपे सप्तम्यन्तात्तसिल्, नगणितब्रह्माण्डभाण्डोदरे नगणितानि अनन्तानि यानि ब्रह्माण्डरूपाणि भाण्डानि पात्राणि तेषामुदरे जठरे क्रीडाकौतुकसंभ्रमात्मकमपि क्रीडायां विलासे यत्कौतुकमाश्चर्यं तस्य संभ्रम आवेशः स एवात्मा स्वरूपं यस्य तत्तादृशमपि लौकिकदृष्ट्या तादृशं प्रतीतमपीत्यर्थः, प्रत्यक्प्रकाशात्मकं प्रत्यक्सर्वप्रकाशकत्वेनान्तश्चित्प्रकाशः स आत्मा स्वरूपं यस्य तत्तथोक्तमस्तीति शेषः, तदेव किञ्चित्सत्त्वासत्त्वादिना केनापि प्रकारेण निर्देशानर्हमचिन्त्यचिद्घनरसं स्वानन्दसत्ताद्वयं न चिन्त्यश्चिन्तनस्य ध्यानस्य विषयो भवितुमर्हः स चासौ चिदेव चिन्मात्रं तद्रूपेण घनः सघनो निबिड इत्यर्थः, रसः सारो यत्र स तादृश आनन्दः स्वरूपभूत आनन्दस्तस्य सत्ता भावस्तयाऽद्वयं भेदरहितमिष्टदेवतास्वरूपं ध्यात्वा चिन्तयित्वा तदेवाहमित्यनुभूयेत्यर्थः, अहं सिद्धान्तस्वरसेन सिद्धान्तः सर्व-

वेदान्तलक्ष्यो य स्वरस आत्मस्वरूपसुखं तेनैव केवलं वि-श्वात्मनः सर्वात्मशिवस्य पूजनविधिं पूजनस्यार्चनस्य विधिं प्रकारं वक्ष्यामि कथयिष्यामि ॥ १ ॥

एवं प्रकारनिरूपणं प्रतिज्ञायेदानीं विशिष्टमावाहनं लक्षयति ।

सेव्यः श्रीगुरुवेदवाक्यजनितश्चिद्बोध आवाहनं
सर्वव्यापकताविनिश्चयमतिः पूर्णं पवित्रासनम् ।
त्वत्तोनान्यदवैमि किंचिदिति तत्पुण्याम्बु पादोदकं
त्वय्येवास्त्वचला ममेश मतिरित्यर्घोस्तु ते सुंदरः॥ २॥

सेव्य इति । श्रीगुरुवेदवाक्यजनितः श्रीगुरोर्वैराग्याद्यै-श्वर्ययुक्तस्य गुरोर्देशिकस्योपदेशवाक्यैर्वेदवाक्यैः कृत्वा ज-नित उत्पन्नश्चिद्बोधश्चितश्चिन्मात्ररूपस्यात्मनो बोधो ज्ञानं सेव्योऽङ्गीकार्यः सोङ्गीकार एवात्र ज्ञानिपूजायामावाहन-मावाहनरूपोपचारो भवतीति शेषः, एवमावाहनमुक्त्वा ऽऽसन-माह सर्वेति, सर्वव्यापकताविनिश्चयमतिस्तस्यैवात्मशिवस्य सर्वत्र व्यापकताऽस्तिभातिप्रियरूपेण विद्यमानता तस्या विनिश्चयो-ऽध्यवसायस्तद्रूपा मतिर्मननरूपान्तःकरणवृत्तिः पूर्णं तत्र स्था-तुर्देवस्यात्मशिवस्य योग्यं पवित्रासनं पवित्रं निर्मलमासनं ज्ञेयं, पाद्यमाह त्वत्त इति, त्वत्तः सच्चिदानन्दरूपादात्मनोऽन्यद्भिन्नं किञ्चित्किमपि नावैमि न जानामीत्येतद्यज्ज्ञानं तदेतस्यां पू-जायां पुण्याम्बु अन्तःकरणोपाधिमलनिवर्तकत्वात्पुण्यं पवित्र-मम्बु जलं पादोदकं पादाभ्यामङ्घ्रिभ्यामुदकं जलं पाद्यमि-त्यर्थः, ज्ञेयम्, अर्घ्यमाह त्वयीति, हे ईश हे शिव ममान्तःकरणा-वच्छिन्नस्य साधिष्ठानचिदाभासस्य मतिर्मननरूपा वृत्तिस्त्वय्येवो-पाधिं निरस्याखण्डैकरसे भवतु केवलमस्तु स्यादिति

एवं प्रकारा प्रार्थनरूपा वृत्तिः सुन्दरः सुखजनकत्वात्कम-नीयस्ते स्वात्मशिवार्थमर्घोऽर्घ्यमस्तु भवतु ॥ २ ॥

मधुपर्कमपि विशिष्टमाह ।

शीतोष्णं कटुतिक्तमम्लमधुरं क्षारं विचित्रं रसै
र्यत्तस्यास्य समत्वभावमधुना पर्कः कृतश्चेद्यदि ।
मुख्योऽयं मधुपर्क उत्तमरसस्तेनामुना सादरं
पूज्यानामपि पूज्य एष परमो देवः सदा पूज्यताम्॥३॥

शीतोष्णमिति । रसैः सुखविशेषैः शीतोष्णं शीतं शीत-गुणवदुष्णं च तापकं समाहारे एकवद्भावस्तथा कटुक-षायरसवत्तिक्तं तीक्ष्णरसवदम्लमधुरमम्लमम्लरसवन्मधुरं मधुररसवद्गुडादिकमत्रापि समाहारैकवचनं क्षारं क्षाररसवद्-यत्पदार्थजातं तदाकारमन्तःकरणं च विचित्रं विचित्ररसव-त्प्रतीयते तस्योक्तस्यानेकरससहितस्यान्तःकरणस्यास्य सा-क्षिणो मम प्रकाश्यस्य समत्वभावमधुना समत्वमस्तिभाति-प्रियरूपेण समत्वान्नामरूपयोरपि पृथगसत्त्वाच्च सर्ववस्तुनस्तदा-कारान्तःकरणस्य च समत्वं तस्य भावो भावना तदेवोत्कृष्ट-पारमार्थिकरसरूपत्वान्मधु तेन पर्कः लेपः स्वात्मशिवे कृतः सम्पादितो यदि चेद्यदि भवेत्तर्हि अयं विवेकिनां प्रसिद्ध उ-त्तमरस उतम उद्गतं निवृत्तं तमोऽज्ञानं तत्कृतमावरणं च य-स्मात्तथाभूतो रसः सुखं यत्रात एव मुख्यः प्रधानो मधु-पर्कः मधुना पर्को लेपो भवति तेनोक्तलक्षणेनामुना मम सा-क्षिणः प्रत्यक्षेण मधुपर्केण पूज्यानामपि पूज्याः सर्वजगत्पूज्या ब्रह्मादयस्तेषामपि पूज्यः पूजा परिचर्या तदर्ह एष प्रत्यक्प-रोक्षरहितो ब्रह्माभिन्नप्रत्यगात्मरूपः परम कार्यकारणरहितो

देवश्चित्स्वरूप आत्मा सदा सर्वावस्थासु निरन्तरमित्यर्थः, पूज्यतां पूज्यः ॥ ३ ॥

एवं मधुपर्कं निरूप्य स्नानमाह।

सर्वाङ्गीणसुखावहं मुहुरहो यज्जन्मनो मज्जनं
शुद्धे बोधसुधाम्बुधौ शुचितरे स्नानं विशुद्धिप्रदम्।
आभानं स्फुरति द्वितीयमिव यत्तत्सर्वमाचम्यता
मित्युक्तो गुरुभिस्तदेष विधृतश्चित्ते स एवाचमः॥४॥

सर्वाङ्गीणेति। यत्प्रसिद्धं ज्ञानिनां जन्मनः जन्मकारणादज्ञानात्तत्कार्याज्जीवत्वाच्च निःसृत्येति शेषः, शुद्धे कार्यकारणातीते शुचितरेऽन्तःकरणस्यातीवशोधकत्वात्स्वतश्च मायाविद्यामलरहितत्वाच्चातीव शुद्धे 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यत' इति स्मृते र्बोधसुधाम्बुधौ बोधो जीवात्मैक्यज्ञानं महावाक्यजन्यमहं ब्रह्मास्मीतिसाक्षात्काररूपं स एव सुधाऽमृतं सुखरूपं जलस्थानीयं तस्याम्बुधिः समुद्र इवाधारः स्वरूपानन्दस्तस्मिन्स्नानमवगाहनं मुहुर्भूयो भूयस्तत्सर्वाङ्गीणसुखावहं सर्वं सर्वपदवाच्यं द्वैतं तदेवाङ्गं शरीरं तत्र भवं सर्वाङ्गीणं यत्सुखं तस्यावहं प्रापकं द्वैतजातेपि आत्मसुखप्रतीतिकारकमित्यर्थः, अहो इत्याश्चर्ये, स्याद्भवेद्विशुद्धिप्रदमन्तःकरणमलनिवृत्त्यात्यन्तशुद्धिकरं भवति, आचमनमाह आभानमिति, द्वितीयमिवात्मभानादन्यदिव यत्प्रसिद्धमाभानमा—ईषद्भानं चिदाभासरूपं जगत्प्रकाशकं स्फुरति भासते तत्सर्वमाचम्यतां तत्सकलमपि प्राश्यतामात्मनः पृथङ्नास्तीत्येवं बाध्यतामित्यर्थः, इत्येवंप्रकारेण गुरुभिर्महावाक्यार्थोपदेष्टृभिरुक्त उपदिष्टस्तदेष उक्तलक्षण उपदेश श्चित्ते चेतसि विधृतोऽङ्गीकृतः

स एवास्यां पूजाया माचम आचमनं भवति ॥ ४ ॥

वस्त्राण्यलङ्कारांश्चाह ।

श्रद्धा निर्ममता विरागशुचिता निःसङ्गता पूर्णता
भक्तिप्रेमरसप्रसादपरमानन्दादयो ये गुणाः ।
वस्त्रालङ्करणानि तत्र विदुषा देयानि विश्वम्भरे
सोहंभावमनोहरेण विधिना यद्यद्यथा रोचते ॥५॥

श्रद्धेति । श्रद्धा गुरुवेदान्तवाक्येषु विश्वासबुद्धिर्निर्ममता ममत्वराहित्यं विरागशुचिता विरागेण वैतृष्ण्येन सहिता शुचितान्तःकरणनिर्मलत्वं निःसङ्गताऽलिप्तत्वं पूर्णता व्यापकत्वनिश्चयो भक्तिप्रेमरसप्रसादपरमानन्दादयो भक्तिः साकारध्यानसेवादिरतिः प्रेमरसो निरतिशयसुखात्मविषयकनिरतिशयस्नेहसुखं प्रसादः प्रसन्नता परमानन्द आत्मसुखानुभव एतदादयो ये योगिषु प्रसिद्धा गुणाः सत्त्वगुणात्तयः सन्ति ते सर्वे विदुषा ज्ञानिना वस्त्रालङ्करणानि वस्त्राणि अलङ्काराश्च तत्र तस्मिन्विश्वम्भरे जगदाधारे आत्मनि यद्यद्वस्त्रं वाऽलङ्करणं वा तदन्यत्किमपि सुगन्धादि द्रव्यं वा यथा यद्द्रोचते प्रियं भवति तत्तथा सोहंभावमनोहरेण स इति परोक्षः परमात्मा ऽहमहंपदलक्ष्यः प्रत्यक्ष आत्मा तयोः प्रत्यक्परोक्षतात्यागेन भागलक्षणया लक्षितमखण्डैकरसात्मानुभवपूर्वकं तदर्थप्रतिपादकेन सोहमितिमन्त्रेण मनोहरेण मनःप्रीतिकरेण विधिना विधानेन देयानि समर्प्याणि ॥ ५ ॥

चन्दनमाह ।

अद्वैतप्रतिपत्तिरात्मविषया सा सामरस्याञ्चिता
गात्रालेपनचारुचन्दनमिदं देवस्य देयं प्रियम् ।

शान्तिः क्षान्तिरलोलता सरलता निर्मत्सरत्वादयः
शास्त्रार्था यदि न क्षताश्च वितुषाः शुद्धास्त एवाक्षताः॥६॥

अद्वैतेति। आत्मविषयाऽऽत्मा ब्रह्माभिन्नः प्रत्यगात्मा विषयो गोचरो यस्याः सा तथोक्ताऽद्वैतप्रतिपत्तिरखण्डैकरसात्मानुभूतिः सोक्तलक्षणा सामरस्याञ्चिता सामरस्यं द्वैताद्वैतभेदनिरासेनैकरस्येनाञ्चिता युक्ता चेद्भवति तर्हीदमुक्तलक्षणं विद्वत्प्रसक्षं गात्रालेपनचारु गच्छति लयमिति गा जगद्दृष्टिस्तां त्राति रक्षतीति गात्रं सच्चिदानन्दघनं तस्यालेपनं लक्ष्यलक्षकत्वेन किञ्चित्सम्बन्धार्हं तेन चारु सुन्दरं चन्दनमाल्हादकं देवस्य चित्स्वरूपस्य प्रियमिष्टं देयं समर्पणीयम्, अक्षतानाह शान्तिरिति, शान्तिरन्तःकरणनिर्वासनता क्षान्तिः सहनताऽलोलतान्तःकरणस्य स्थैर्यं सरलता निष्कापट्यं निर्मत्सरत्वमीर्ष्यारहितत्वमादि प्रथमं येषां तेऽक्रोधादयस्ते शास्त्रार्थाः शास्त्राणां वेदान्तादीनामर्थास्ता[illegible]न-यदि यर्हि न क्षता वेदान्तानुकूल्येनाखण्डमनुसन्धिता[illegible]श्चेत्तर्हि ते एवात्रास्यां पूजायां वितुषा भेदतुषरहिता अ[illegible] एव शुद्धा निर्मला अक्षता अबाधितत्वादक्षता ज्ञेयाः॥ ६॥

पुष्पाण्याह।

संफुल्लैर्निजभावशुद्धकुसुमैः सद्वासनासुन्दरैः
संपूज्यो हि महेश्वरः सुमनसां सा धन्यता वर्णिता।
कर्मज्ञानमयो यदिन्द्रियगणः क्षिप्तो विरागानले
देवस्यास्य दशाङ्गदाहसुरभिर्धूपः सदा वल्लभः॥७॥

संफुल्लैरिति। संफुल्लैः प्रसन्नतासहितैः सद्वासनासुन्दरैः

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| [illegible]न्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| सर्वे [illegible]नमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| तत्र [illegible]यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| [illegible]क्यपदीयम् खण्डानि ४ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड १ ) | ४ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*No. 101.*




# बोधसारः

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

# BODHASÂR,

A TREATISE ON VEDANTA,

BY

ŜRI NARHARI,

With a commentary by the author's pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus V.*

BENARES.
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,
BENARES.
1905.

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ४ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |

सत आत्मस्वरूपस्य वासनाः संस्कारास्ताभिः सुन्दरैः शोभायमानैर्निजभावशुद्धकुसुमैर्निजः स्वीय आत्मीयो भावस्तादात्म्यं तेन शुद्धैर्निर्मलैः कुसुमैः पुष्पैः सुमनसां सुष्ठु शोभनं मनोन्तःकरणं येषां तेषां निर्मलमनसामित्यर्थः, महेश्वर ईश्वरत्वारोपाधिष्ठानं ब्रह्म सम्पूज्यः सम्यक्पूजनीयः सा सैव धन्यता कृतकृत्यता वर्णिता कथिता शास्त्रेष्विति शेषः, धूपमाह कर्मेति, कर्मज्ञानमयः कर्म क्रिया ज्ञानं शब्दादिविषयो बोधस्तन्मयस्तज्जनको यदिन्द्रियगणो यः प्रसिद्ध इन्द्रियाणां करणानां गणः समूहो दशेन्द्रियाणीत्यर्थः, विरागानले विरागो वैतृष्ण्यं तदेवानलोऽग्निस्तस्मिन् क्षिप्तः समर्पितश्चेत्तर्हि सोयं प्रसिद्धो ज्ञानिनामस्य प्रत्यगात्मनो देवस्य चिन्मात्ररूपस्य दशाङ्गदाहसुरभिर्दशानां दशसङ्ख्यानामङ्गानामवयवानामिन्द्रियरूपाणामित्यर्थः, । दाहो दहनं नाश इत्यर्थः, तेन सुरभिः सुगन्धिः, सदात्मवासनावत्त्वाद्धूपो धूपरूपोपचारः सदा नित्यं वल्लभः प्रियो भवति ॥ ७ ॥

दीपमाह ।

यस्मिन्नुज्ज्वलिते न तिष्ठति तमो बाह्यं न चाभ्यन्तरं
सोयं ज्ञानमयः प्रकाशपरमो दीपः समुज्ज्वाल्यताम् ।
यद्भक्ष्यं प्रियमस्य यस्य परमा तृप्तिर्भवेद्भक्षणे
द्वैतं तत्तु निवेदनीयममितं नैवेद्यमत्युत्तमम् ॥ ८ ॥

यस्मिन्निति । यस्मिञ्ज्ञानरूपे दीप उज्ज्वलिते सति प्रज्वालिते सति बाह्यं ब्रह्मविषयं जगत्पदार्थविषयं च तमोऽज्ञानं न तिष्ठति न स्थितिं प्राप्नोति आभ्यन्तरं च प्रत्यगात्मविषयमहङ्कारादिविषयं च तमोऽज्ञानं न तिष्ठति न स्थितिं प्राप्नोति स

उक्तलक्षणो ज्ञानिप्रत्यक्षोयं प्रकाशपरमप्रकाशेन श्रेष्ठः 'यस्य भासा सर्वमिदं विभाति, येन सूर्यस्तपति तेजसेद्ध' इत्यादिश्रुतेः, ज्ञानमयो ज्ञानरूपो दीपो दीपयति प्रकाशयति स्वात्मानमिति दीपः समुज्ज्वालयतां प्रज्वालयतां नैवेद्यमाह यदिति, अस्य विद्वत्प्रत्यक्षस्य देवस्य चिन्मात्ररूपस्यात्मनो यत्प्रसिद्धं भक्ष्यं भक्षितुं योग्यं प्रियमिष्टं भवति यस्य भक्ष्यस्य भक्षणे भोजने कृते सति अस्य देवस्य परमा तृप्तिर्निरंकुशाख्या तृप्तिर्भवेत्स्यात्तत्तु द्वैतं तदुक्तलक्षणं द्वैतं सर्वं जगत्तुपदेनाज्ञानिपूजानैवेद्याद्वैति विलक्षणत्वमस्य नैवेद्यस्य सूचितम्, अमितमपरिमितमनन्तमित्यर्थः, एनमेवात्र पूजायां निवेदनीयं समर्पणीयं नैवेद्यं नैवेद्यरूपोपचारमत्युत्तममतिश्रेष्ठं वदन्ति मुनय इति शेषः ॥ ८ ॥

आचमनीयमाह ।

पश्चादाचमनीयमत्र विहितं सद्यो विशुद्धिप्रदं
सन्तोषामृतमेव पूजनविधौ पानीयमानीयताम् ।
यन्मैत्र्यादिचतुष्टयं मुनिमते पातञ्जले वर्णितं
ताम्बूलं वदनप्रसादजनकं देवाग्रतः स्थाप्यताम् ॥ ९ ॥

पश्चादिति । अत्रास्मिन्पूजाविधावात्मशिवस्य पूजाविधाने विहितं योग्यं सद्यस्तत्कालमेव विशुद्धिप्रदं विशुद्धी रागादिराहित्येन निर्मलता तां प्रददाति प्रयच्छति तत्तथोक्तं सन्तोषामृतमेव सन्तोषो विषयेषु अलम्बुद्धिस्तदेवामृतं सुखरूपत्वाज्जलं तदेवाचमनीयमाचमनाय हितं पानीयं च प्राशने हितं च, आत्मसुखलाभे सति विषयसुखेच्छाऽभावात्पूर्णकामत्वाच्च विषयेषु दुःखदर्शनाधिक्याच्च विषयालम्बुद्धिः सन्तोषशब्दार्थः, आनीयतां स्वात्मशिवे समर्प्यतां ताम्बूलमाह यदिति, मुनिमते

मुनीनां योगिनां मते विवेकिनां च मते मान्ये चित्तवृत्तिनिरोधद्वारा ब्रह्मज्ञापकत्वात्पातञ्जले पतञ्जलिप्रोक्ते शास्त्रे यत्प्रसिद्धं मैत्र्यादिचतुष्टयं मैत्री स्वसमेषु मित्रताऽऽदिर्यासां करुणामुदितोपेक्षाणां तासां चतुष्टयं चतुष्कं वर्णितं कथितं तत्तदेव, तत्र च करुणा दया स्वन्यूनेषु जिज्ञासुषु, मुदिता प्रसन्नता स्वाधिक्यदर्शने, उपेक्षोदासीनता स्ववाक्येऽश्रद्धालुषु मूढेषु वदनप्रसादजनकं वदनं मुखमात्मानन्दभोजनसाधनं शुद्धचेतः 'चेतो मुख' इति श्रुतेः, तस्य प्रसादो निर्मलत्वेन शोभायमानत्वं तस्य जनकमुत्पादकं लोकेपि ताम्बूलभक्षणस्य मुखशोभाकारित्वप्रसिद्धेः, तदेव ताम्बूलं देवाग्रतो देवस्यात्मशिवस्याग्रतोऽग्रभागे स्थाप्यतामर्प्यताम, आनन्दानुभवाकारवृत्तिनैर्मल्यमात्मशिवस्य सदास्फुरणविषयं यथा तथा क्रियतामिति भावः ॥ ९ ॥

फलार्पणमाह ।

निष्कामोत्तमधर्मसंभ्रमजुषां जन्मावलीनां फलं
भक्तिः सा परमेश्वरस्य पदयोरावेदनीया मया ।
सर्वस्वं मम तत्किलेति स मया क्लृप्तस्य पूजाविधेः
पूर्णत्वाय निवेदितो निजमनश्चिन्तामणिर्दक्षिणा ॥ १० ॥

निष्कामेति । निष्कामोत्तमधर्मसंभ्रमजुषां निष्कामाः कामनारहिता अत एवोत्तमाः श्रेष्ठाः ये धर्मा नित्यनैमित्तिककर्माणि तेषु संभ्रमः प्रीत्युल्लासस्तं जुषन्ते सेवन्ते तास्तथोक्तास्तासां जन्मावलीनां जन्मनामावल्यः पङ्क्तयस्तासां फलं फलरूपाऽनन्तजन्मनां फलभूतेत्यर्थः, भक्तिरीश्वरचरणविषयकप्रेमरूपा वृत्तिः सा सैव फलरूपत्वेन परमेश्वरस्य परम ईश्वरत्वाधिष्ठानरूपेणातिश्रेष्ठ ईश्वरो ब्रह्माभिन्नः प्रत्यगात्मा तस्य पदयो-

रारोपापवाददृयाधिष्ठानत्वेन कल्पितांशयोगवेदनीया मया साधिष्ठानबुद्धिस्थचिदाभासरूपेण पूजकेनावेदनीया समर्पणीया तत्रैव सा द्रष्टव्या नात्मनीति भावः, दक्षिणामाह सर्वस्वमिति, मम साधिष्ठानबुद्धिस्थचिदाभासस्य पूजकस्य मे तत्सर्वविवेकिषु प्रत्यक्षं मनः सर्वस्वं सर्वजगद्रूपं स्वं धनं किल निश्चयेन निजमनश्चिन्तामणिर्निविजं स्वीयं मनः संकल्पविकल्पान्तःकरणवृत्तिरूपं तदेव चिन्तामणिश्चिन्तनद्वारा फलप्रदत्वात्स मया क्लृप्तस्य कल्पितस्य पूजाविधेः स्वात्मशिवपूजाविधानस्य पूर्णत्वाय समाप्तिसिद्ध्यर्थमन्यथा पूजाविधानासमाप्तिरेवेति भावः, दक्षिणा दक्षिणोपचारो निवेदितः समर्पितः ॥१०॥

स्तुतिमाह ।

यावन्त्येव भुवां रजांस्यगणितब्रह्माण्डकोटिस्पृशां<br>
तावद्भी रजसां गणैर्गणयितुं शक्या गुणा यस्य न ।<br>
त्वं तादृग्गुणवांस्तथापि मुनिभिर्यन्निर्गुणः स्तूयसे<br>
तत्किं स्तौमि महेश हे शिव भवद्रूपं विदूरं धियाम् ॥११॥

यावन्तीति । ब्रह्माण्डकोटिस्पृशां ब्रह्मणो वस्तुतो ब्रह्मरूपस्य जीवस्य जन्मकारणभूतानि पक्षिणामण्डानीवाण्डानि ब्रह्माण्डानि तेषां कोटयः कोटिसंख्या अमितान्यण्डानीत्यर्थः, ताः स्पृशन्तीति तास्तथोक्तास्तेषु ब्रह्माण्डेषु स्थिता इत्यर्थः, तासाम्भुवां पृथ्वीनां यावन्त्येव यावत्संख्याकान्येव रजांसि धूलीकणाः सन्ति तावद्भिस्तावत्परिमितै रजसां धूलीकणानाङ्गणैः समूहैर्गणयितुं गणनां कर्तुं यस्य स्वात्मशिवस्य गुणा जगदुत्पादनादिधर्मा न शक्याः शक्या न भवन्ति हे महेश हे ईश्वरत्वाधिष्ठानभूत त्वं तादृशा ये गुणाः सत्वरजस्तमोविकारास्ते विद्यन्ते यस्मिंस्त्वयि

तथाविधस्त्वमसि वर्त्तसे तथापि तवेदृशगुणवत्त्वे सत्यपि मुनिभिर्मननशीलैर्विवेकिभिरित्यर्थः, यद्यतः कारणान्निर्गुणो गुणास्पृष्ट एव स्तूयसे प्रतिपाद्यसेऽनुभूयसे तत्ततः कारणाद्धे शिव हे सुखात्मन्नहं परिच्छिन्नो जीवो धियां बुद्धिवृत्तीनां विदूरमगोचरं भवद्रूपमुभयमपि तव स्वरूपं किं स्तौमि किं वर्णयामि वचनविषयत्वाभावादिति भावः ॥ ११ ॥

नमस्कारमाह ।

श्वेतं श्याममिति प्रकाशयति चेदर्कः स किं श्यामतां
श्वेतत्वं च दधाति तद्वदितरो मुग्धेषु बुद्धेषु यः ।
द्वैताद्वैतविकल्पजालकलनातीताय शुद्धात्मने
जाग्रत्स्वानुभवप्रकाशमहसे देवाय तस्मै नमः ॥१२॥

श्वेतमिति । स आकाशस्थोऽर्कः सूर्यः सामान्यरूपेण प्रकाश्यप्राणिनेत्रस्थविशिष्टरूपेणच श्वेतं शुक्लं सुधारूप्यादिद्रव्यमिदं शुक्लमित्येवं प्रकाशयति व्यक्तीकरोति चेद्यदि तथा श्यामं नीलं कज्जलादिद्रव्यं श्याममित्येवं प्रकाशयति व्यक्तीकरोति चेद्यदि तर्हि स आकाशस्थश्चक्षुष्ठो वा सूर्यः श्यामतां नीलत्वं श्वेतत्वं च शुक्लत्वमपि दधाति धरति किं नैव दधातीत्यर्थः, चक्षुष्ठः सूर्योऽपि परमार्थतः श्वेतत्वं श्यामत्वं वा न दधाति चक्षुष्ठसूर्यस्यापि आकाशस्थसूर्यमात्रत्वात् किं पुनराकाशस्थसूर्यो न दधातीति वक्तव्यमिति भावः, तद्वत्तथा मुग्धेषु अज्ञानिषु बुद्धेषु ज्ञानिषु इतरो भिन्नो ज्ञानाज्ञानयोः सामान्यप्रकाशरूपोऽपीदं ज्ञानमिदमज्ञानमिति विशेषप्रकाशकतया स्थितोऽपि य आत्मास्ति स सामान्यप्रकाशकरूपो विशेषप्रकाशकरूपो वा ज्ञानाज्ञानाभ्यां तद्वद्भ्यां च भिन्नोऽस्ति ज्ञान्यज्ञानित्वे चिदाभा-

सेऽपि परमार्थतो न स्तः किं पुनर्वक्तव्यं न चिदात्मनीति भावः, य एवं भूतस्तस्मै द्वैतविकल्पजालकलनातीताय द्वैतं कल्पितं जगदद्वैतं तन्निषेधकं कल्पितं शबलं ब्रह्म तयोर्विकल्पः सच्चिदानन्दलक्षणलक्षितात्मविपरीतत्वेन कल्पना तदेव जालमावरकत्वात्तस्य कलना कल्पना तस्या अतीताय मुक्तायात एव शुद्धात्मने मायातत्कार्यास्पृष्टरूपाय जाग्रत्स्वानुभवप्रकाशमहसे जाग्रद्रूपप्रकाशमानः स्वोऽसाधारणोऽनुभवो यत्र तत्तथोक्तं तथाभूतं प्रकाशरूपं महस्तेजो यस्य तस्मै देवाय चिन्मात्रस्वरूपायात्मशिवाय नमो नमस्कारोऽस्तु स्वात्मनश्चिदाभासस्य पृथक्त्वाभाव एव नमस्कारः कल्पनीय इति भावः ॥१२॥

क्षमापनमाह ।

संप्राप्यापि पदारविन्दपदवीमद्वैतविद्यावता-
मेतावन्तमनेहसं न तु वयं लीनाः सदा ब्रह्मणि ।
मुक्तानामपि मोहतः समरसत्वज्ञानपूर्णात्मना-
मस्माकं ह्यपराध एव परमः क्षन्तव्य एवं प्रभो ॥१३॥

संप्राप्येति । अद्वैतविद्यावतामद्वैतं भेदरहितमात्मवस्तु तस्य विद्या ज्ञानं सा येषां विद्यते ते तथोक्तास्तेषां ज्ञानिनामित्यर्थः, पदारविन्दपदवीं पदं पादः स एवारविन्दं कमलं सैव पदवी पद्धतिर्मोक्षस्य मार्गभूता तां संप्राप्यापि उपलभ्यापि वयमेतावन्तमद्यपर्यन्तमनेहसं कालं ब्रह्मणि अखण्डैकरसे सच्चिदानन्दे सर्वदैव निरन्तरं न तु नैव लीनास्तदाकारा न जाता इत्यर्थः, ननु तर्हि द्वैतादर्शनाभावे मुक्तिसुखानुभवो न स्यात्तत्राह मुक्तानामिति, मोहतोऽज्ञानान्मुक्तानामपि मोक्षं प्राप्तानामपि ज्ञानमात्रेणाज्ञाननिवृत्तेर्मोक्षसिद्धिस्तु जातैवेति भावः,

ननु तर्हि द्वैतरूपदुःखानिवृत्तौ वैषयिकसुखेच्छया परमसुखानुभवो न स्यादित्याशङ्क्याह समरसेति, समरसत्वद्भावपूर्णात्मनां समः सर्वैकरूपो रसं सुखं यत्र तादृशो यस्त्वद्भावस्त्वत्स्वरूपत्वं तेन पूर्णात्मनां नित्यतृप्तमन्तःकरणं येषां तादृशानामस्माकं ज्ञानेन बाधिते द्वैते प्रतीयमानेपि अबाधिताद्वैतसुखानुभवो भवत्येवेति भावः, अस्माकं त्वत्पूजकानां साधिष्ठानबुद्धिस्थचिदाभासरूपाणामित्यर्थः, हि प्रसिद्ध एषोऽयमेव परमोऽतिश्रेष्ठोऽपराधोऽन्यायो हे प्रभो हे समर्थ हे शिव त्वया क्षन्तव्य एव क्षम्यतामेव प्रारब्धक्षयपर्यन्तं विद्यमानस्य द्वैतजातस्य तत्क्षये क्षयसम्भवात्तत्क्षयपर्यन्तं सहनमेवोचितमिति भावः ॥१३॥

पुष्पाञ्जलिमाह ।

आत्मैवायमनन्तचिद्घनरसो नित्यं विमुक्तः स्वयं
को बन्धः किमु बन्धनं कथमसौ बद्धो विमुक्तः कथम् ।
सानन्दाश्रु सगद्गदं सपुलकं चिद्बोधपूजाविधौ
देवस्यास्तु मदीयविस्मयमयः संपूर्णपुष्पाञ्जलिः ॥१४॥

इति श्रीनरहरि० बो० मु० देवपूजानिर्णयः ॥ १७ ॥

आत्मैवायमिति । अयमधिष्ठानसहितो बुद्धिस्थश्चिदाभासः साक्षिणो मम प्रत्यक्ष आत्मनः परमार्थतोऽभिन्नत्वादात्मैव सच्चिदानन्दलक्षणः प्रत्यगभिन्नः परमात्मैवानन्तचिद्घनरसो यतोऽनन्ता देशकालवस्तुकृतपरिच्छेदरहिता चिच्चेतना तया घनो निविडो यो रसः सुखं तद्यस्मिन्विद्यते स तथोक्तोऽर्श आद्यच्, अथवा घनो निविडो रसः सुखरूपोऽत एव स्वयं स्वतो नित्यं सर्वदा विमुक्तो बन्धनरहितोऽस्ति अतोस्य को बन्धः कीदृशोऽवरोधोऽनतन्त्वादेव बन्धासिद्धेर्न कोपि बन्ध इत्यर्थः, य-

न्धकारणाभावादपि बन्धाभावमाह किम्विति, बन्धनं बध्यतेने-नेति बन्धनं बन्धसाधनं रज्ज्वादीव गुणास्तत्कार्यं वा किमु किमस्ति न किमपीत्यर्थः, धर्म्यत्यन्तामत्त्वेन धर्मासत्वादिति भावः, अतोमावात्मा कथं केन प्रकारेण बद्धो न केनापि प्र-कारेण बद्ध इत्यर्थः, अतोमावात्मा विमुक्तो बन्धरहितः कथं केन प्रकारेण न मुक्तोपीत्यर्थः, बन्धसापेक्षत्वान्मुक्तेर्मोक्षोप्या-त्मनि नैव वास्तव इति भावः, एवं मदीयविस्मयमयो मम सा-धिष्ठानबुद्धिस्थचिदाभासरूपस्य पूजकस्य विस्मय आश्चर्यानु-भवस्तन्मयस्तेन प्रचुरोऽन्तःकरणवृत्तिसमूह एव चिद्बोधपूजा-विधौ चिच्चिन्मात्र आत्मैव तस्य बोधो ज्ञानमेव पूजाविधिः पूजाप्रकारस्तस्मिन् सानन्दाश्रु आनन्दस्यात्मसुखानुभवस्याश्रु जलं तेन सह यथा भवति तथा, तथा सगद्गदं गद्गदः कण्ठाव-रोधेनाक्षरशैथिल्यं तेन सहितं यथा भवति तथा, तथा सपुलकं पुलको रोमाञ्चस्तेन सहितं यथा भवति तथाऽस्य देवस्य स-दैव प्रत्यक्षस्यात्मशिवस्य सम्पूर्णपुष्पाञ्जलिः सम्पूर्णाय पूजा-पूर्णतायै पुष्पाञ्जलिः साङ्ख्ययोगाख्यहस्तयोरेकार्थानुकूल्य-रूप उक्तवृत्तिपुष्पाणामञ्जलिरिवाञ्जलिरस्तु भवतु ॥ १४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मु-नीन्द्रदिनचर्यार्थप्रकाशे देवपूजानिर्णयार्थप्रकाशः सप्तदशः ॥१७॥

---

## अथ देवपूजोपयुक्तशास्त्रार्थनिर्णयः ।

एवं देवपूजां निरूप्येदानीं देवपूजाज्ञानसिध्यै देवपूजो-पयुक्तशास्त्रार्थं निर्णेतुं देवपूजोपयुक्तशास्त्रार्थनिर्णयाख्यं सप्त-श्लोकं प्रकरणमभिदधान आह अथेति ।

## अथ देवपूजोपयुक्तशास्त्रार्थनिर्णयः ।

अथ देवपूजानिर्णयानन्तरं देवपूजोपयुक्तशास्त्रार्थनिर्णयो देवस्य चिन्मात्रस्वरूपस्यात्मनः पूजोक्तलक्षणार्चा तस्यामुपयुक्त उपयोगी यः शास्त्रार्थः सिद्धान्तस्तस्य निर्णयो विचारः क्रियत इति शेषः, तत्र तावदज्ञानपूजात्यागेन ज्ञानपूजैवाङ्गीकार्येत्याह ।

त्यक्त्वा मोहमयीं पूजां पूजां बोधमयीं कुरु ।
चन्दनैरर्चनीयोऽयं न तु पङ्केन शंकरः ॥ १ ॥

त्यक्त्वेति । हे शिष्य त्वं मोहमयीमज्ञानप्रचुरां पूजां लोकप्रसिद्धां परिचर्यां त्यक्त्वा विसृज्य बोधमयीं बोधो ज्ञानं तत्साधनं वाऽद्रोहादिकं गीतोक्तं तन्मयीं तत्प्रधानां पूजामर्चां कुरु विधीयतां कुत इत्यत आह चन्दनैरिति, अयं प्रत्यक्षो ज्ञानिपूज्यः शङ्करः स्वयं सुखरूपः समस्तजगदानन्दकरश्चास्ति अतश्चन्दनैरानन्दानुभवरूपैर्वृत्तिविशेषैरर्चनीयः पूजनीयो भवतेति शेषः, न तु पङ्केनाज्ञानकार्यत्वाद्दुःखरूपत्वाच्च पङ्केन स्वस्वरूपलेपकारणभूतेन लोकप्रसिद्धचन्दनादिद्रव्यार्पणरूपपूजनेन न तु नैव पूज्योऽतोऽज्ञानपूजां त्यक्त्वा ज्ञानपूजैवाङ्गीकार्येति भावः, चन्दनैरित्यत्र चादधातोः करणे ल्युट् ॥ १ ॥

ज्ञानाभावे देवपरिचयाभावेन पूजैव न स्यादित्याह ।

परिचीय पुरा देवं देवपूजापरो भव ।
देवे परिचयो नास्ति वद पूजा कथं भवेत् ॥ २ ॥

परिचीयेति । हे शिष्य त्वं पुरा प्रथमं देवं चिन्मात्ररूपमात्मानं परिचीय ज्ञात्वा ततो देवपूजायां परो रतः सन्भव तिष्ठ, ननु देवपूजा देवपरिचयाभावे सति कुतो न स्यादित्याशङ्क्याह देव इति, देवे पूज्ये चिदात्मनि परिचयो ज्ञानं नास्ति न विद्यते चेत् पूजा-

ऽर्चा कथं कीदृशी स्याद्भवेत्तद्वद कथय, परिचयाभावे देवस्य पूजैव न स्यादिति भावः ॥ २ ॥

कुतः परिचयाभावे पूजा न स्यात्तत्राह।

तावत्पूजां न मनुते यावत्परिचयो न हि।
जाते परिचये देवः पूजामपि न काङ्क्षति ॥ ३ ॥

तावदिति। देवश्चिन्मात्र आत्मा यावद्यत्कालपर्यन्तं परिचयो ज्ञानं न हि न विद्यते तावत्तत्कालपर्यन्तं कृतामपि पूजामर्चां न मनुते नैवाङ्गीकरोति तर्हि ज्ञात्वैव तं देवं पूजा कर्तव्या तत्राह जात इति, देवश्चिन्मात्र आत्मा परिचयेऽनुभवे जात उत्पन्ने सति पूजामपि अर्चामेव न काङ्क्षति नेच्छति स्वस्य सुखरूपत्वप्रतीतौ सत्यां तत्सुखप्रतीतिप्रतिपक्षत्वाद् दुःखरूपस्य पूज्यपूजकभावस्यानङ्गीकारादेव तत्साध्यपूजेच्छाभाव इति भावः ॥ ३ ॥

ननु तर्हि ज्ञाने पूजाऽसम्भवादज्ञानपूजैव कर्त्तव्येत्याशङ्क्याह।

पक्षद्वयेपि पश्यामि पूजां देवस्य दुर्घटाम्।
पूज्यपूजकता न ज्ञे मूर्खस्त्वज्ञानसूतकी ॥ ४ ॥

पक्षद्वय इति। हे शिष्य अहं पक्षद्वयेपि पक्षयोर्ज्ञानाज्ञानपक्षयोर्द्वयं युग्मं तस्मिन् देवस्य चिन्मात्रस्यात्मनः पूजामर्चां दुर्घटां दुःसंपादां पश्यामि जानामि कुत उभयपक्षेपि पूजाया दुःसंपादत्वं तत्राह पूज्यपूजकता पूजितुं योग्यः पूज्यः पूजार्ह ईश्वरभावः पूजति अर्हति स पूजको जीवभावः पूजाकर्त्ता तयोर्भावः सत्ता न नास्ति अतो ज्ञानवति पूजाऽभावः सिद्ध इति भावः। मूर्खस्तु अज्ञानी तु अज्ञानसूतकमज्ञानं ज्ञानविरोधिभावरूपं तदेव सूतकमाशौचं विद्यतेऽस्य स तथोक्तः सूतकिनः पूजानिषेधः कृ-

मेकाण्डे प्रसिद्ध एव तुशब्देनाऽज्ञानिनो ज्ञानितोऽतीव वैलक्षण्यं सूचितमिति ज्ञेयम् ॥ ४ ॥

ज्ञानिविहितदेवपूजायां धूपदीपादीनामप्यपेक्षा नास्तीत्याह।

न जाने क्व पलायन्ते धूपदीपाक्षतादयः।
अस्माकं देवपूजायां देव एवावशिष्यते ॥ ५ ॥

नेति। अस्माकं नो ज्ञानिनामित्यर्थः, देवपूजायां देवस्य चिदात्मशिवस्य पूजार्चा तस्यां क्रियमाणायां सत्यामित्यर्थः, धूपदीपाक्षतादयः=कर्मज्ञानमयो यदिन्द्रगण इत्यत्रोक्तलक्षणो धूपो लौकिकोऽपि, दीपश्च यस्मिन्नुज्ज्वलिते न तिष्ठति तम इत्यत्रोक्तलक्षणो लोकप्रसिद्धोऽपि, अक्षताः शान्तिः क्षान्तिरलोलता सरलता इत्यत्रोक्तलक्षणा लोकप्रसिद्धा अपि, आदयो मुख्या येषां नैवेद्यादीनामुक्तलक्षणानां लोकप्रसिद्धानामपि ते तथोक्तास्ते क्व कुत्र पलायन्ते गच्छन्तीत्यहं न जाने नैव जानामि तर्हि सर्ववृत्तीनां शून्यत्वे शून्यपरिशेषः स्यान्नेत्याहास्माकमिति, सर्वोपचाराभावेऽपि अहं ब्रह्मास्मीतिवृत्तेर्विषयभूतो देव एव केवलं चिन्मात्र आत्माऽवशिष्यतेऽवशिष्टो भवति ॥ ५ ॥

अन्यत्र लोकप्रसिद्धपूजायां पूजाक्रमविस्मृतिस्तु विघातायैव भवति। अत्र तु सैव पूजाफलरूपेत्याह।

देवानुसंधानधिया विस्मृते पूजनक्रमे।
पूजायां जायते विघ्नः पर्णपजाफलं हि तत् ॥ ६ ॥

देवेति। देवानुसन्धानधिया देवश्चिन्मात्रस्वरूप आत्मा तस्यानुसन्धानं तद्विषयकविजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपं तद्रूपा धीर्बुद्धिस्तया पूजनक्रमे पूजनस्योक्तलक्षणस्योक्तलक्षणे क्रमे विस्मृते विस्मृतिविषये जाते सति पूजा-

यामुक्तपूजाकल्पनायां विघ्नो विघातो जायते भवति हि प्रसिद्धमेव सर्वेषामेतत्,तद्विघ्नरूपं लोकदृष्ट्या यत्तत्पूर्णपूजाफलं पूर्णब्रह्माकाररूपत्वात्पूर्णं पूजाया उक्तलक्षणायाः पूजायाः फलं प्रयोजनं ज्ञेयं लौकिक्या अपि तज्ज्ञेयं तस्मिंश्च सति नोभयविधपूजायां प्रयासः कार्य इति भावः ॥ ६ ॥

ननु भवदुक्तपूजाधिकारिणि विदुषि पूज्यपूजकता न ज्ञ इत्यनेनोभयभावो निषिद्धः, तथा त्यक्त्वा मोहमयीं पूजामित्यत्र बोधमयपूजने प्रवर्तितव्यं नाज्ञानपूजायामिति अतः पूर्वापरं विरोधोऽतोऽस्यां पूजायां पूज्यपूजकत्वाभावे कथं पूजायां प्रवृत्तिर्ज्ञानिनः स्यादित्याशङ्क्य प्रारम्भे जिज्ञासायां सत्यामज्ञानांशेन पूज्यपूजकत्वसम्भवात्तत्र प्रवृत्तिः पूर्णे ज्ञानेऽज्ञानांशस्य निवारितत्वात्पूज्यपूजकत्वाभावो ज्ञानिनि सम्भवत्यतो न विरोध इत्याशयेनाह ।

आनन्दघनगोविन्दपूजनारम्भकर्मणि ।
बोधे स्फुरति मोहात्मा यजमानः पलायितः ॥ ७ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां देवपूजोपयुक्तशास्त्रार्थनिर्णयः ॥ १८ ॥

आनन्देति । आनन्दघनगोविन्दपूजनारम्भकर्मणि आनन्दो निरतिशयसुखं 'यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति श्रुतौ यद्भूमशब्दवाच्यं सुखं तेन घनो निबिडो निश्छिद्र इत्यर्थः, स तादृश एव गोविन्दो 'धियो यो नः प्रचोदया'दिति गायत्र्यास्तृतीयपादे बुद्धिप्रेरकत्वेन निर्दिष्टः स्वसत्त्वदानेन गां बुद्धिं विन्दति रक्षतीति धातूनामनेकार्थत्वाद्गोविन्दो बुद्धिसाक्षी ब्रह्माभिन्नः प्रत्यगात्मा तस्य पूजनं पूजाऽऽरभ्यते प्रक्रियतेऽस्मिंस्तच्च तत्कर्म क्रिया तस्मिन् बोधे केवलात्मज्ञाने स्फुरति

प्रकाशमाने सति मोहात्मा मोहोऽज्ञानं तत्कार्यरूपो भ्रमश्चाऽऽत्मा स्वरूपं यस्य स तथोक्तो यजमानः पूजको जीवभावः पलायितो गतो नष्ट इत्यर्थः, अखण्डैकरसात्माशत्रपूजारम्भे केवलबोधस्फुरणेनाज्ञानरूपस्वकारणनाशेन तत्कार्यभूतपूजकलयसम्भवाल्लौकिकपूज्यपूजकलयोपि सम्भाव्य इति भावः ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपी मुनीन्द्रदिनचर्यार्थप्रकाशे देवपूजोपयुक्तशास्त्रार्थनिर्णयार्थप्रकाशोऽष्टादशः ॥ १८ ॥

---

अथ पञ्चमहायज्ञनिर्णयः ।

एवं ज्ञानिनां देवपूजां सशास्त्रार्थां निर्णीयेदानीं तेषामेव पञ्चमहायज्ञान्निर्णेतुं पञ्चमहायज्ञनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

अथ पञ्च महायज्ञाः ।

अथेति । अथ देवपूजोपयुक्तशास्त्रार्थनिर्णयानन्तरं पञ्च पञ्चसंख्या महायाज्ञा महान्तः श्रेष्ठा यज्ञाः क्रतवो निर्णीयन्त इति शेषः, तानेवाह ।

ज्ञाननिष्ठा क्षमा सत्यं विवेकः परिपूर्णता ।
एते पञ्च महायज्ञाः संमता ब्रह्मवेदिनाम् ॥ १ ॥

इति नर० बोध० मुनीन्द्र० पञ्चमहायज्ञनिर्णय ॥ १९ ॥

ज्ञाननिष्ठेति । ज्ञाननिष्ठा ज्ञाने भागत्यागलक्षणया महावाक्यजन्याहंब्रह्मास्मीतिसाक्षात्काररूपे निष्ठा सहजप्रीतिरेकः, क्षमा सुखदुःखादिद्वन्द्वानां सहनता द्वितीयः, सत्यं सत्यप्रतिज्ञा सत्यभाषणादि च तृतीयः, विवेको विविच्यते आत्मानात्मपदार्थावनेनेति विवेको विचारश्चतुर्थः, परिपूर्णता सर्वत्र स्वपरिपूर्णत्वनिश्चयः पञ्चमः, एत इमे पञ्च पञ्चसङ्ख्याः महायज्ञा श्रेष्ठा

यज्ञा ब्रह्मवेदिनां ब्रह्मज्ञानिनां संमता इष्टा ज्ञातव्याः ॥ १ ॥
इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पञ्चमहायज्ञनिर्णयार्थप्रकाश एकोनविंशः ॥ १९ ॥

---

अथोपयज्ञनिर्णयः।

एवं ज्ञानिनां पञ्चमहायज्ञान्निरूप्येदानीं तेषामुपयज्ञान्निर्णेतुमुपयज्ञनिर्णयाभिधं त्रिश्लोकं प्रकरणमभिदधान आह।

## अथोपयज्ञनिर्णयः।

अथेति। अथ पञ्चमहायज्ञनिरूपणानन्तरमुपयज्ञा नैमित्तिका यज्ञाः क्रतवो निरूप्यन्त इति शेषः, तत्र तावज्ज्ञानिनामुपयज्ञकर्तव्यतां विधत्ते।

एतस्यां दिनचर्यायां प्राप्ते पर्वणि पर्वणि।
मध्ये मध्ये चोपयज्ञाः कर्तव्या दीक्षितेन हि ॥१॥

एतस्यामिति। एतस्यामुक्तलक्षणायां विवेकिप्रत्यक्षायां दिनचर्यायां मुनीन्द्रदिनव्यवहृतौ पर्वणि पर्वणि उक्तलक्षणदिनव्यवहारतद्विरुद्धव्यवहारयोः सन्धौ सन्धौ प्राप्ते लब्धे सति मध्ये मध्ये तदन्तरान्तरे चोपयज्ञा नैमित्तिका यज्ञा दीक्षितेन गुरूपदेशरूपदीक्षावता मुमुक्षुणा कर्तव्याः कार्या हि एते चोपयज्ञा ज्ञानिषु प्रत्यक्षाः ॥ १ ॥

तानेव विशिष्टान्दर्शयति।

यत्पुरोडशतां याति कालखण्डं मनः पशोः।
कर्तव्यास्तादृशा यज्ञा देवेन्द्रप्रीतिहेतवे ॥ २ ॥

यदिति। मनः पशोः सङ्कल्पविकल्परूपान्तःकरणपशोः, वक्ष्यति हि

चित्ताहङ्कृतिबुद्धिमानसमयैर्युक्तं चतुर्भिः पदै-
श्छित्वान्तः करणं पशुं परशुना बोधेन तीक्ष्णेन यः ।

इत्यादि, कालखण्डं कालस्यापि मनसा कल्पितत्वान्मनः पशुसम्बन्धिकाल एव खण्डं शकलमंश इत्यर्थः, यत्पुरोडाशतां येषां ज्ञानियज्ञानां तेषामपि ज्ञानरूपत्वात्पुरोडाशतां पुरोडाशो यजमानभक्षणीयो हुतशेषस्तस्य भावस्तत्ता तां याति प्राप्नोति; वक्ष्यति हि, कालेन भक्षितं विश्वं कालो बोधेन भक्षित इत्यादिना तादृशास्तादृग्लक्षणवन्तो यज्ञाः क्रतवो देवेन्द्रप्रीतिहेतवे देवानामिन्द्रियवदधिष्ठातृवद्विषयरूपाणां चैतन्यानामिन्द्रोऽन्तःकरणावच्छिन्नः साधिष्ठानश्चिदाभासस्तस्य प्रीतिः सन्तोषो नित्यतृप्तिरित्यर्थः, तस्या हेतवे तदर्थं कर्त्तव्याः कार्या मुमुक्षुभिरिति शेषः ॥ २ ॥

तादृशा इत्युक्त्या तेषां लक्षणज्ञानमपेक्षितमिति तल्लक्षणज्ञानाय ज्ञानिविहितसुपर्णचयनलक्षणं तत्फलं चान्ययज्ञलक्षणानि ज्ञातुमाह

एकीकृत्य सुपर्णौ द्वौ चीयते चेत्सुपर्णचित् ।
जीयते तन्मुनीन्द्रेण शतस्याग्निचितां फलम् ॥ ३ ॥

इति श्रीनरहरिकृतौ बो० मुनी० उपयज्ञनिर्णयो विंशः ॥ २० ॥

एकीकृत्येति । द्वावुभौ सुपर्णौ व्यावहारिकदृष्ट्या द्वित्वेन प्रतीतौ सु शोभनौ पर्णौ पक्षौ ययोस्तौ सुपर्णौ जीवस्य धर्माधर्माविष्टानिष्टगतिसाधनत्वात्पक्षौ, ईश्वरस्य तु जगत्पालनादि सर्वांत्तसाधनं मायाख्य एकः, द्वितीयः स्वरूपस्थितिसाधनभूतो ज्ञानरूप इति विवेकः, सुपर्णत्वं च हंसत्वमनयोः श्रुत्योपासनार्थमुक्तं तथा च श्रुतिः 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती'ति, एतावेकीकृत्योभयोर्विरुद्धांशत्यागेन चिन्मात्रत्वस्योभयोरविशिष्टत्वा-

देहत्वं संपाद्यानयोरेकत्वं च तदुत्तरश्रुत्यैवोक्तत्वात्पारमार्थिक-मिति निश्चितोऽर्थः, तथा च तदुत्तरमन्त्रः ।

'एकः सुपर्णः स समुद्रमाविवेश । स इदं विश्वम्भुवनं वि-चष्ट'इत्यादिः ।

समुद्र इति वाचो नाम वाक्प्रतिपाद्यत्वाद्वाङ्मात्रं जग-दित्यर्थः, चीयते एकीभावेनावलोक्यते मुनिना चेद्यदि तर्हि सु-पर्णचित् सुपर्णचयननामा यज्ञो जायत इति शेषः, तत्तर्हि मुनी-द्रेण मननवत्सु श्रेष्ठेनोक्तलक्षणसुपर्णचयनकृता पुरुषेणाग्नि-चितां लोकप्रसिद्धानामग्निचयनानां शतकस्य फलं पुण्यं जी-यते प्राप्यते ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे उपयज्ञनिर्णयार्थप्रकाशो विंशतितमः ॥ २० ॥

---

अथ नित्यदाननिर्णयः ।

एवमुपयज्ञान्निर्णीयेदानीं नित्यदानं निर्णेतुं नित्यदान-निर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह ।

## अथनित्यदानम् ।

अथेति । अथोपयज्ञनिरूपणानतरं नित्यदानं मुनीनां नित्यदानं निर्णीयत इति शेषः, तदेवाह ।

> समाधितीर्थे मुनिना ग्रहणे चंद्रसूर्ययोः ।
> दत्तमात्मसमं हेम पात्राय परमात्मने ॥ १ ॥

इति श्रीन० बा० मुनी० नित्यदाननिर्णय एकविंशः ॥ २१ ॥

समाधितीर्थ इति । लोके तावन्नित्यदानं कांस्यपात्रसुव-र्णघृतादिकं दीयते तत्प्रसिद्धमेव तदपि देशकालतीर्थभेदेन नि-

मित्तभेदेन च पुण्यप्रदं तारतम्येन भवति तीर्थभेदेन पुष्करादि-निमित्तेन देशभेदेन कुरुक्षेत्रादौ कालभेदेन संक्रान्तिग्रहणादौ निमित्तभेदेन पुत्रजन्मादौ दानं च तुलादिकं श्रोत्रियाय पात्राय दीयत इति प्रसिद्धम्। अत्र तु तत्सर्वमलौकिकं, तद्यथा मुनिना मननवता ज्ञानिनेत्यर्थः, समाधितीर्थे सम्यगाधीयते चिन्त्यते ब्रह्म यस्मिन्स समाधिः, यद्वा समं ब्रह्माऽऽधीयते लक्ष्यतेस्मिन्निति समाधिः, यद्वा समा ब्रह्माकारा आधय मानसदुःखानि अस्मिन्निति समाधिः स एवतीर्थं सर्वमलनिवर्तकत्वात्तस्मिन् निमित्तमाह ग्रहण इति, चन्द्रसूर्ययोश्चन्द्रश्चन्दयति आल्हादयतीति चन्द्र आत्मसुखानुभवः, सूर्यः प्रकाशकत्वादात्मस्वरूपस्य सूर्यो विवेकस्तत्फलरूपोऽनात्मबाधस्तयोर्ग्रहणेऽङ्गीकारे कृते सति, यद्वा चन्द्रोऽपानः सूर्य प्राणः, 'अपानश्चन्द्रमा प्रोक्तः प्राणः सूर्यः प्रकीर्तित' इत्युक्तेस्तयोर्ग्रहणं वशीकारस्तस्मिन्सतीत्यर्थः, पात्रमाह परमात्मन इति, परमात्मने परः कार्यकारणातीत आत्मेश्वरस्तस्मै पात्राय पात्रभूताय ब्रह्माभिन्नः प्रत्यागात्मैवात्र पात्रं ज्ञेयं, देयमाह दत्तमिति, आत्मसममात्मनः प्रत्यगात्मनः समं सदृशं चिदाभासरूपं हेम सुवर्णवत्तेजोरूपं प्रकाशबहुलमित्यर्थः, दत्तं समर्पितं तदभिन्नमनुभूतमित्यर्थ ॥ १ ॥

इति श्रीनरह० बोध० मुनीन्द्रदिन० नित्यदाननिर्णयार्थप्रकाश एकविंशः ॥ २१ ॥

---

अथ मध्याह्नसन्ध्यानिर्णयः।

एवं नित्यदानमुक्त्वा मध्याह्नसन्ध्यां निर्णेतुं मध्याह्नसन्ध्यानिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह।

## अथ मध्याह्नसन्ध्या ।

अथेति । अथ नित्यदाननिर्णयानन्तरं मध्याह्नसंध्याऽह्नो दिनस्य मध्यं मध्याह्नं तस्य सन्धिस्तत्र भवा मध्याह्नसन्ध्या मध्याह्नसन्ध्याख्या क्रिया निर्णीयत इति शेषः, तामेवाह ।

दर्शनस्पर्शनघ्राणरसनश्रवणादिषु ।
यश्चैतन्यचमत्कारो मुनेर्माध्याह्निकं तु तत् ॥ १ ॥

दर्शनेति । दर्शनस्पर्शनघ्राणरसनश्रवणादिषु लौकिकं माध्याह्निकं प्रसिद्धमेव, इदं त्वलौकिकं ज्ञानभास्करोदयाद्युपलक्षितस्य ज्ञान्यह्नो मध्यता तीव्रप्रकाशोपलक्षितः कालस्तदा च दर्शनं चक्षुर्द्वारानिर्गतान्तःकरणवृत्त्या नीलपीतादिरूपसाक्षात्कारः, स्पर्शनं त्वक्द्वारा निर्गतान्तःकरणवृत्त्या शीतोष्णमृदुकाठिन्यादिस्पर्शसाक्षात्कारः, घ्राणं घ्राणद्वारा निर्गतान्तःकरणवृत्त्या सुगन्धदुर्गन्धादिविषयसाक्षात्कारः, रसनं रसनाद्वारानिर्गतान्तःकरणवृत्त्या मधुरकटुतीक्ष्णादिरससाक्षात्कारः, श्रवणं श्रोत्रद्वारा निर्गतान्तःकरणवृत्त्या शब्दविषयसाक्षात्कारः, एतानि आदीनि प्रथमतो येषां तेषु आदिपदेनात्र वचनादानादिकर्मेन्द्रियव्यापारा ग्राह्यास्तेषु विद्यमानेषु व्यवहारकाले सत्स्वपि यः सर्वत्रिपुटीबाधपूर्वं यः प्रसिद्धो योगिषु चैतन्यचमत्कारश्चैतन्यस्य चिदात्मनः सामान्यरूपेण चमत्कारः स्फुरणं भवति तत्तदेव मुनेर्मननवतो ज्ञानिन इत्यर्थः, माध्याह्निकं मध्यस्थज्ञानभास्करोपलक्षितदिवसमध्यभवं कर्म ज्ञेयमिति शेषः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे मध्याह्नसन्ध्यानिर्णयार्थप्रकाशो द्वाविंशः ॥ २२ ॥

———

अथ वैश्वदेवनिर्णयः ।

एवं मध्याह्नसन्ध्यां निर्णीयेदानीं मुनीनां वैश्वदेवाख्यं कर्म निर्णेतुं वैश्वदेवनिर्णयाख्यमेकश्लोकं प्रकरणं वक्तुमाह ।

अथ वैश्वदेवः ।

अथेति । अथ मध्याह्नसन्ध्यानिरूपणानन्तरं वैश्वदेवो वैश्वदेवाख्यं कर्म निर्णीयत इति शेषः, तमेवाह ।

आत्मा विश्वस्य देवोयं विश्वेन हविषेज्यते ।
तत्कर्म वैश्वदेवाख्यं सर्वसूनानिवृत्तये ॥ १ ॥

इति श्रीन० बोधसारे मुनींद्रदिनचर्यायां वैश्वदेवनिर्णयस्त्रयोविंशः ॥ २३ ॥

आत्मेति । अयं विवेकिषु अस्मदादिषु प्रत्यक्षत्वपरोक्षत्वरहितत्वेन स्वयं प्रकाशमानः प्रत्यक्ष आत्मा प्रत्यगभिन्नः परमात्मा विश्वस्य समस्तस्य जगतो देवश्चिन्मात्ररूपेण प्रकाशकः स विश्वेन समस्तजगता हविषा होमद्रव्येणेज्यते हूयते तत्समस्तजगद्धोमद्रव्येणात्मपूजनरूपं कर्म क्रिया वैश्वदेवाख्यं विश्वदेवाख्यं विश्वदेव आत्मा तस्येदं विश्वदेवसम्बन्धीत्यर्थः, तस्येदमिति तद्धितोण्, वैश्वदेव आख्या आह्वा यस्य तत्तथोक्तं ज्ञेयं, यद्वा विश्वदेवायात्मने हितमिति व्याख्येयं तस्मै हितमिति, तद्धितोण् । फलमाह सर्वेति, सर्वसूनानिवृत्तये 'सर्वं खल्विदं ब्रह्मेति' श्रुतिदृष्ट्या सर्वपदवाच्यस्य द्वैतस्य या सूना हिंसा तन्निवृत्तये तत्परिहाराय भवतीति प्रयोजनं दर्शितं, यद्वा सर्वदोषपरिहारयेति प्रसिद्ध एवार्थः ॥ १ ॥

इति श्रीनर० बोधसारे मुनींद्र० वैश्वदेवनिर्णयार्थप्रकाशस्त्रयोविंशः ॥ २३ ॥

---

अथ बलिदाननिर्णयः ।

एवं वैश्वदेवं निर्णीयेदानीं तेषामेव बलिदाननिर्णेतुं बलिदाननिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

## अथ बलिदानम् ।

अथेति । अथ वैश्वदेवनिर्णयानन्तरं बलिदानं बलेर्भूतबलेर्दानं समर्पणं निर्णीयत इति शेषः, तदेव लौकिकबलिदानविलक्षणं मुनीनां बलिदानं दर्शयति ।

नवद्वारां पुरीमेतामाश्रितेभ्यो दयालुना ।
भूतेभ्योपि बलिर्देयः खानपानादिलक्षणः ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रदिनचर्यायां बलिदाननिर्णयश्चतुर्विंशः ॥ २४ ॥

नवद्वारामिति । एतां सर्वजनप्रत्यक्षां नवद्वारां नव नवसंख्यानि द्वाराणि छिद्राणि यस्यां सा तथोक्ता द्वे श्रोत्रच्छिद्रे द्वे नयनच्छिद्रे द्वे नासा च्छिद्रे एकं मुखच्छिद्रमित्युपरि सप्त, एकं गुदच्छिद्रमेकं शिश्नच्छिद्रमिति द्वे अध, एवं नव द्वाराणि ज्ञेयानि, पुरीं नगरीं 'नवद्वारे पुरे देही'ति गीतोक्तामाश्रितेभ्य आश्रित्य स्थितेभ्यो भूतेभ्योपि वियदादिभ्यो भूतेभ्योऽपिशब्दात्तत्कार्येभ्य इन्द्रियेभ्यो दयालुना दयावता पुरुषेण एतानि भूतानि किमेतैर्ममेति नोपेक्षा कर्त्तव्या तेषां तद्ग्रासदानाभावे तत्क्षोभेण वृत्तिस्थैर्यं न स्यादिति भावः, खानपानादिलक्षणः खानमन्नादेर्भक्षणं पानं च जलादेः प्राशनं ते आदिनी येषामिन्द्रियभोगादीनां श्रवणाद्यनुकूलानां तान्येव लक्षणानि यस्य स तथोक्तो बलिः पूजा देयो दातुं योग्यः ॥ १ ॥

इति श्रीन० बोध० मुनीन्द्रदिनचर्यार्थ० बलिदाननिर्णयार्थप्रकाशश्चतुर्विंशः ॥ २४ ॥

अथ भोजननिर्णयः।

एवं मुनीनां भूतबलिं निर्णीयेदानीं तेषामेव भोजनविधिनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह।

## अथ भोजनविधिः।

अथेति। अथ बलिदाननिर्णयानन्तरं भोजनविधिर्मुनीनां भोजनस्य विधिर्विधानं निर्णीयत इति शेषः, तमेव निर्णीय दर्शयति।

गुरुभिश्च सतीर्थ्यैश्च शिष्यैश्च सहितस्तथा।
सुरसं चारु भोक्तव्यं ज्ञानपीयूषमुत्तमम्॥ १॥

इति श्रीनरहरिकृतौ बोधसारे मुनीन्द्रादिनचर्यायां भोजननिर्णयः पञ्चविंशः॥ २५॥

गुरुभिरिति। लोके हि पितृभिः पितृव्यैश्च स्वपुत्रभ्रातृभिश्च सह मिष्टान्नं भुज्यते तद्वदत्रापि गुरुभिः स्वस्य महावाक्योपदेष्टृभिः पितृस्थानीयैः सतीर्थ्यैश्च समानमेकं तीर्थं गुरुर्येषां ते तथोक्ता गुरुबन्धव इत्यर्थः, तैरपि पितृव्यस्थानीयैरित्यर्थः, चकारात्स्वसतीर्थ्याः स्वगुरुबन्धवोऽपि स्वभ्रातृस्थानीया ग्राह्याः, तथा तद्वच्छिष्यैश्च स्वशिष्यैः पुत्रस्थानीयैः सहितो युक्तः सन्मुनिना सुरसं सुष्ठु शोभनो रसः सुखं यत्र तत्तथोक्तं 'रसो वै स' इति श्रुतेः, उत्तमं श्रेष्ठमुद्गतं निरस्तं तमोऽज्ञानलक्षणं यतस्तत्तथोक्तं ज्ञानपीयूषं ज्ञानं महावाक्यजन्यं जीवब्रह्मैक्यविषयकमपरोक्षं तदेव पीयूषममृतमिव मरणानिवर्तकत्वादहं ब्रह्मास्मीति साक्षात्काररूपमित्यर्थः, नित्यतृप्तिजनकत्वान्मोक्षसाधनत्वाच्चामृतत्वं ज्ञानस्येति भावः, चारु सप्रेम संशयविपर्ययादिरहितं यथा तथा भोक्तव्यमनुभाव्यमिदमेव विदुषां भोजनं नान्यदिति भावः॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थ० मुनीन्द्रदिनचर्यार्थप्रकाशे भोजनविधिनिर्णयार्थप्रकाशः पञ्चविंशः॥ २५॥

अथ ताम्बूलग्रहणनिर्णयः ।

एवं मुनीन्द्राणां भोजनविधिं निर्णीयेदानीं तेषामेव ताम्बूलग्रहणं निर्णेतुं ताम्बूलग्रहणनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

अथ ताम्बूलग्रहणनिर्णयः ।

अथेति। अथ भोजनविधिनिर्णयानन्तरं ताम्बूलग्रहणनिर्णयस्ताम्बूलस्य ग्रहणं सेवनं तस्य निर्णयो विचारः क्रियत इति शेषः, तदेव ज्ञानिनामलौकिकं ताम्बूलं दर्शयति ।

सत्यं प्रियं च पथ्यं च ब्रह्मचर्चात्मकं वचः ।
ताम्बूलग्रहणं कार्यं वदनं येन राजते ॥ १ ॥

सत्यमिति। सत्यं प्रामाणिकं केवले सत्यवचसि अप्रियता च सम्भवति अतस्तां निराकरोति प्रियं चेति, प्रियं च परोक्षतया प्रियं सत्यप्रियं वचसि परिणामे दुःखमपि क्वचिद्दृश्यतेऽतस्तदपि निराकरोति पथ्यं चेति, पथ्य च दुःखपरिणामहीनमेतद्विशेषणविशिष्टवाक्यं स्पष्टं निर्दिशति ब्रह्मचर्चात्मकमिति, ब्रह्मचर्चात्मकं ब्रह्मणो देशकालवस्तुकृतपरिच्छेदहीनस्यात्मनश्चर्चा वाच्यार्थतया निरूपणं यत्र तदात्मा स्वरूपं यस्य तत्तथोक्तं वचो वचनं ब्रह्मणः सद्रूपत्वात्तन्निरूपकवचसः सत्यत्वं तथा ब्रह्मणः सुखरूपत्वात्तत्प्रतिपादकवचसः प्रियत्वं तथा ब्रह्मणः परिणामहीनत्वात्तत्प्रतिपादकवचसो दुःखपरिणामहीनत्वं तादृशं वचनमेव ताम्बूलग्रहणं ताम्बूलस्य ग्रहणं सेवनं कार्यं मुनिभिः कर्त्तव्यं, ननु ब्रह्मचर्चात्मकवचसः कुतस्ताम्बूलत्वमित्याशङ्क्य वदनशोभाकारित्वस्योभयत्र साम्यादित्याशयेनाह वदनमिति, येनोक्तलक्षणताम्बूलग्रहणेन वदनं मुखं राजते शोभते, 'यद्वा चेतो मुख,' इति श्रुतेर्ब्रह्मसुखानुभवकरणरूपान्तःकरणवृत्तिं प्रमा-

रूपैव भोजनसाधनं मुखमिव ब्रह्मसुखामृतभोजनसाधनत्वाद्वदनं राजते स्वयं प्रकाशतया शोभत इत्यर्थः, अतोत्र विदुषामिदमेव ताम्बूलग्रहणमुचितमिति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे ताम्बूलग्रहणनिर्णयार्थ-प्रकाशः षड्विंशः ॥ २६ ॥

---

अथ वामकुक्षिशयननिर्णयः ।

एवं मुनीनां ताम्बूलग्रहणं निर्णीयेदानीं प्रसङ्गप्राप्तं तेषामेवं विशिष्टं वामकुक्षिशयनं निर्णेतुं वामकुक्षिशयननिर्णयाख्यं द्विश्लोकं प्रकरणमारभमाण आह ।

## अथ वामकुक्षिशयननिर्णयः ।

अथेति । अथ ताम्बूलग्रहणनिर्णयानन्तरं वामकुक्षिशयननिर्णयः वामे सव्ये भागे कुक्षिस्तमधः कृत्वा यच्छयनं निद्रा मुनिविहिता विशिष्टा तन्निर्णयस्तस्य विचारः क्रियत इति शेषः, तत्र तावदादौ शयनार्थं निश्चिन्तताऽपेक्षिताऽतस्तन्निर्णयं करोति ।

> यावच्छरीरपतनं प्राचीनैः कर्मभिः कृतौ ।
> योगक्षेमौ न चिन्त्यौ हि निर्योगक्षेम आत्मवान् ॥ १ ॥

यावदिति । हि यतः कारणाद्योगक्षेमौ योगोऽप्राप्तपदार्थानां प्राप्तिरूपः क्षेमश्च प्राप्तपदार्थपरिरक्षणरूपस्तौ द्वावपि यावच्छरीरपतनं यावत्कालं शरीरपतनं शरीरस्य देहस्य पतनं पातो भवति तावत्तत्कालपर्यन्तं शरीरनाशावधीत्यर्थः, प्राचीनैः पूर्वजन्मभवैः कर्मभिरेतच्छरीरारम्भकैः प्रारब्धाख्यैः कर्मभिः कृतौ सम्पादितावित्येवं निश्चित्य तौ नानुसन्धातव्यौ किन्तु

आत्मनानाऽऽत्मा प्रत्यगात्मा ब्रह्माभिन्नोऽश्चिन्त्यतया विद्यते यस्य स तथाविधो भूत्वा निर्योगक्षेमो योगक्षेमचिन्तारहितो भवेदिति शेषः, इयमेव निश्चिन्तता वक्ष्यमाणशयनोपयोगिनी नान्येति भावः ॥ १ ॥

एवं शयनोपयोगिनीं निश्चिन्ततां निर्णीयेदानीं शयनोपयोगिनामग्रीनिर्णयपूर्वकं शयनं निर्णीय दर्शयति ।

समाधिशयने शुभ्रे सुखनिद्रां विधाय च ।
क्षणं विश्रम्य तत्पश्चात्पुराणश्रवणं चरेत् ॥ २ ॥

समाधीति । लोके तावच्छुभ्रे निर्मलवस्त्रैर्निर्मिते श्वेते समाधिशयने समाधिर्योगाकारान्तःकरणवृत्तिपरिणामः स यथा सुखसाधनभूतस्तद्वच्छयनं शेतेऽस्मिन्निति शयनं पर्यङ्कस्तस्मिन्, यद्वा समा आधय मानसव्यापारा यत्र भवन्ति तथाभूते शयने पर्यङ्के सुखनिद्रां सुखाय निद्रा सुषुप्तिस्तां विधाय कृत्वा च पुनस्ततः पश्चादनन्तरं क्षणं क्षणकालं विश्रम्य यावदालस्यक्षयं तत्र पर्यङ्के विश्रामं कृत्वेत्यर्थः, पश्चादनन्तरं पुराणश्रवणं पुराणानां भागवतादीनां श्रवणं चरेत्कुर्यात, प्रकृते तु शुद्धे शुभ्रे निर्विकल्प इत्यर्थः, समाधिशयने समाधिरेव शयनं पर्यङ्कस्तस्मिन् सुखनिद्रां भूमशब्दवाच्यसुखस्वरूपां निद्रां प्रपञ्चास्फूर्तिरूपां सुप्तिं विधाय कृत्वा च पुनस्ततत उत्थाने तत्र क्षणं क्षणपरिमाणकालं विश्रम्य विश्रामं कृत्वा पश्चादनन्तरं पुराणश्रवणं पुराणानां भारतादीनां श्रवणं वक्ष्यमाणलक्षणं श्रवणमित्युपलक्षणं मननादीनां चरेत्कुर्यात् ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे वामकुक्षिशयननिर्णयार्थप्रकाशः सप्तविंशः ॥ २७ ॥

अथ पुराणश्रवणनिर्णयः ।

एवं वामकुक्षिशयनं निर्णीयेदानीं ततोत्र विहितं पुराणश्रवणं निर्णेतुं पुराणश्रवणनिर्णयाख्यं सार्द्धद्विसप्ततिश्लोकं प्रकरणमारभमाण आह ।

## अथ पुराणश्रवणनिर्णयः ।

अथेति। अथ वामकुक्षिशयननिर्णयानन्तरं पुराणश्रवणनिर्णयः पुराणानां भारतादीनां श्रवणं वक्ष्यमाणलक्षणं तस्य निर्णयो विचारः क्रियत इति शेषः, मुनिभिः कथं पुराणादि श्रोतव्यं तन्निर्णीयत इत्यर्थः, तत्र तावत्प्रसिद्धान्यस्मिन्समये भारतभागवतरामायणानि अतस्तेषामेव प्रथमं निर्णयः क्रियते, तत्र च तावत्सर्वधर्मसंग्रहत्वाद्भारतमेव प्रथमं निर्णीयते चतुर्भिः श्लोकैः, तदेव प्रतिजानीते ।

## अथ भारतश्रवणनिर्णयः ।

अथेति । अथ पुराणश्रवणनिर्णयप्रतिज्ञानानन्तरं भारतश्रवणनिर्णयो भारतस्य भारताख्यशास्त्रस्य श्रवणं तस्य निर्णयो विचारः क्रियत इति शेषः, तत्र तावज्जिज्ञासूनां श्रोतव्यतया विहितं भारतमभिनीय दर्शयति ।

अष्टादशाध्यायमयी यत्र गीता निरूपिता ।
सर्वोपनिषदां तत्त्वं तन्महाभारतं शृणु ॥ १ ॥

अष्टादशेति । यत्र यस्मिन्नर्थे जीवब्रह्मैक्यरूपेऽष्टादशाध्यायमय्यष्टौ च दश चाष्टादशाष्टादशसंख्या येऽष्टादशपर्वस्थानीया अध्यायास्तन्मयी तन्मुख्या गीता श्रीभगवताऽर्जुनाय शिष्याय गीता कथिताऽतो गीतानाम्नी वाक्यसंहतिरूपा निरूपिता कथिता सा च सर्वोपनिषदामुप समीपे निषण्णं श्रेयो मोक्षरूपं यासु ता उपनिषदः सर्वा समस्ता या उपनिषदः—

'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
ऐतरेयं च च्छान्दोग्यं बृहदारण्यकं दश'ति ॥

दशसंख्याका उक्तास्तासां तत्त्वं तात्पर्यरूपमस्ति तदुक्तलक्षणं महाभारतं भारतोऽर्जुनस्तदर्थं निरूपितत्वान्महतो मोक्षरूपार्थस्य प्रतिपादकत्वाच्च महाभारतं शृणु श्रोतव्यं त्वयेति शेषः ॥ १ ॥

ननु शतसहस्रसंख्ये भारते गीतैव श्रोतव्या चेद्भारतकर्त्रा व्यासेनेतिहासैः कुतो विस्तारः कृत इत्याशङ्क्याह ।

भारते व्यासमुनिना कथानां विस्तरः कृतः ।
कथामात्रमिदं विश्वमिति तेन प्रकाशितम् ॥ २ ॥

भारत इति । भारते भारतनाम्नि ग्रन्थे व्यासमुनिना व्यासनाम्ना विवेकिना कथानां कथनीयार्थानां विस्तरो विस्तारेण वर्णनं कृत उक्तस्तेन कथाविस्तारेण कृतेनेदं सर्वेषां प्रत्यक्षं विश्वं जगत्कथामात्रं कथा कथनं वाक्तन्मात्रं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति श्रुतेरित्येवं प्रकाशितं सर्वेषामनुभवगोचरं कृतं सर्वस्य भारस्यानेकराजमुनीतिहासनिरूपकत्वादनेकेषां राजमुन्यादीनां तत्र तत्र वर्णनीयार्थाश्रितानामिदानीं दृग्विषयत्वाभावाच्च तेषां कथनमात्रत्वेन जगतोपि तल्लक्षणवत्त्वाद्वाङ्मात्रत्वं निश्चित्य मुमुक्षुभिस्तत्रादरं परित्यज्य गीताश्रवण एवादरः कर्त्तव्य इतीममर्थं बोधयितुं कथाविस्तारः कृत इति भावः ॥ २ ॥

किञ्च भारतान्ते रचितेन शान्तिपर्वाख्यप्रकरणेनापीदमेव सूचितमित्याह ।

समाप्ते भारते ग्रन्थे शान्तिपर्व निरूपितम् ।
तदुक्तं सर्वशास्त्राणां शान्तौ परिसमापनम् ॥ ३ ॥

समाप्त इति । भारते भारतनाम्नि ग्रन्थे समाप्ते ग्रथ्यते शास्त्रार्थोऽनेनेति ग्रन्थः शास्त्रं तस्मिन् समाप्त्युपसन्ने सति व्यासमुनिना शान्तिपर्वाख्यं प्रकरणं निरूपितं तत्तेन शान्तिपर्वरचनेन सर्वशास्त्राणां सर्वेषां समस्तानां शास्त्राणामुपदेशकग्रन्थानां शान्तौ वासनालयात्मनि मोक्षे परिसमापनं तात्पर्यपर्यवसानमुक्तं कथितं।

'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत'इति स्मृतेः, अतो भारतविस्तारश्रवण आदरं परित्यज्य शान्तिसाधनज्ञानप्रतिपादकगीताश्रवण एवादरो विधेय इति भावः ॥ ३ ॥

ननु भारते तत्र तत्र वर्णधर्मा आश्रमधर्मा राजधर्मादयश्चोक्ता दृश्यन्ते तत्कथं तच्छ्रवणं परित्यज्य गीतैव श्रोतव्येत्यभिधीयते तत्राह।

नानाख्यानैर्महारम्या मोक्षधर्मा निरूपिताः ।
तदुक्तं सर्वधर्माणां मोक्षधर्मा परा मताः ॥ ४ ॥

इति श्रीन० बोध० मु० पु० भारतश्रवणनिर्णयः प्रथमः ॥ १ ॥

नानेति । मोक्षधर्मा मुक्तिसाधनभूता धर्मा निष्कामधर्मा भारते तत्र तत्र व्यासेन नानाख्यानैरनेकैरितिहासैर्महारम्या अतिरमणीया निरूपिताः कथितास्तत्तेन मोक्षधर्मविस्तारनिरूपणेन सर्वधर्माणां समस्तानां धर्माणां मध्ये मोक्षधर्मा मुक्तिसाधनभूता धर्माः पराः श्रेष्ठा ममेत्यध्याहार्यं मम धर्मनिरूपणकर्त्तुर्मता निश्चिता इत्येवमुक्तं कथितं व्यासेनेति ज्ञेयम्, अतो मोक्षधर्मप्रतिपादकत्वादपि गीतैव श्रोतव्या नान्यत्र भारतश्रवण आदरः कर्तव्य इति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशान्तर्गतो भारतश्रवणनिर्णयार्थप्रकाशः प्रथमः ॥ १ ॥

अथ भागवतश्रवणनिर्णयः।

एवं भारतश्रवणनिर्णयमभिधायेदानीं मुनीन्द्राणां भागवतश्रवणं निर्णेतुं भागवतश्रवणनिर्णयाख्यं पञ्चश्लोकं प्रकरणमारभमाण आह।

## अथ भागवतश्रवणनिर्णयः।

अथेति। अथ भारतश्रवणनिर्णयनिरूपणानन्तरं भागवतश्रवणनिर्णयो भागवतस्य ब्रह्मणो भगवता प्रोक्तस्य प्रतिपादकत्वाद्भागवताभिधस्य शास्त्रस्य 'तेन प्रोक्त'मित्यण्, यद्वा भगवत इदं भागवतं 'तस्येद'मित्यण् भगवत्स्वरूपनिरूपकत्वाद्भगवत्सम्बन्धिशास्त्रस्य श्रवणं कर्तव्यतया विहितं तस्य निर्णयो विचारः क्रियत इति शेषः, तत्र तावद्दशमः श्रोतव्यतया प्रधानः श्रीभागवतमाहात्म्य उक्तस्तत्रापि रासपञ्चाध्याय्याः प्राधान्यमतस्तत्र गोपीभिः सह भगवतः क्रीडा निरूपिता तस्यास्तात्पर्यमाह।

वृत्तिगोपीजनैः क्रीडन्ब्रह्मचर्यं न मुञ्चति।
यत्रान्तरात्मा गोपालस्तद्भागवतमुत्तमम्॥ १॥

वृत्तिगोपीजनैरिति। यत्र भागवते भगवत्प्रतिपादिते ज्ञानशास्त्रे वृत्तिगोपीजनैर्वृत्तयोऽन्तःकरणवृत्तयस्ता एव गोपस्य सर्वेन्द्रियपालकस्याहङ्कारस्य स्त्रियस्तासां वृत्तिगोपीनां जनाः समूहास्तैः सह क्रीडन्रममाणः सन्नपि अन्तरात्मा सर्वभूतभौतिकप्रकाशत्वेन सर्वान्तर्यामिरूप आत्मा ब्रह्माभिन्नः प्रत्यगात्मा गोपालो गा बुद्धिवृत्तीः पालयतीति स्वसच्चित्सुखदानेन रक्षतीति गोपालः साधिष्ठानबुद्धिस्थचिदाभासो ब्रह्माभिन्नप्रत्यगात्माभिन्नश्चिदाभास इत्यर्थः, 'नान्योतोस्ति द्रष्टे'त्यादिश्रुतेः—

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारते'त्यादिस्मृतेश्च, अन्तरात्मैव गोपालो नान्य इति भावः, ब्रह्मचर्यं ब्रह्मणि तत्पदलक्ष्ये जगत्कारणेऽभिन्नत्वेन चरितुं स्थातुं शीलत्वं न मुञ्चति न त्यजति व्यवहारसमये सर्वान्तःकरणवृत्तिसम्बद्धोऽपि परमार्थतस्तदस्पृष्टो ब्रह्माभिन्नः प्रत्यगात्मैव चिदाभासः समष्टिव्यष्टिरूपः सिद्धान्तित इति भावः, तदुक्तलक्षणार्थप्रधानमेव भागवतं भगवता ब्रह्मण उक्तं ज्ञानशास्त्रं उत्तममुद्गतं निवृत्तं तमो यस्मात्तत्तथोक्तं ज्ञेयमतस्तदेव श्रोतव्यतया विहितं ज्ञानिनामिति भावः, लौकिकार्थस्तावद् यत्र भगवद्गुणवर्णनप्रधाने शास्त्रेऽन्तरात्मा सर्वान्तर्यामी परमात्मैव गोपालो भूत्वा वृत्तिगोपीजनैः सर्वं गृहकृत्यं परित्यज्य रासक्रीडायां वृत्ताः प्रवृत्ता अतो वृत्तयश्च ता गोप्यो गोपस्त्रियस्तासां जनाः समूहास्तैः सह क्रीडन्नमाणः सन्नपि ब्रह्मचर्यं ब्रह्मचारिधर्मं जितेन्द्रियत्वमित्यर्थः, न मुञ्चति न त्यजति तदुक्तार्थप्रधानं भागवतं भगवद्गुणवर्णनप्रधानं शास्त्रमुत्तमं श्रेष्ठं ज्ञेयं नान्यद्देवीभागवतादिकमिति भावः ॥ १ ॥

एवं रासक्रीडातात्पर्यमुक्त्वा पूतनावधनिरूपणतात्पर्यमाह।

बालानां भक्षिका भीमा पूतना दुष्टवासना।
कृष्णेन रुधिरं पीत्वा प्रापिता सापि तत्पदम् ॥२॥

बालानामिति। तत्रादौ मुनिग्राह्योऽर्थो निरूप्यते बालानामज्ञाततत्त्वानामविवेकिनामित्यर्थः, भक्षिका भक्षणकर्त्री भीमा तेषामेव भयजनयित्री पूतना पूतं पवित्रं रागादिहीनमन्तःकरणं नाशयति रागादिभिर्मलिनीकरोतीति पूतना 'अन्येष्वपि दृश्यते' इति नशेर्डो डित्वाट्टिलोपः, एतादृशी दुष्टवासना दुष्टा विषयैर्मलिना वासना सूक्ष्मा विषयेच्छासंस्काररूपा वृत्तिरस्ति या सापि

उक्तमलैरयनन्तं मोक्षायोग्यापि कृष्णेन ब्रह्माभिन्नेन सुखस्वरूपेण चिदात्मना तदभिन्नत्वानुसन्धानवता चिदाभासेनेत्यर्थः, तदुक्तं

'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥ इति ।

रुधिरं तस्या आवरणं स्वस्मिन्यत्तत्पीत्वा प्राश्य स्वस्मिन्कालत्रयेऽप्यसत्त्वमावरणस्यानुसंधायेत्यर्थः, तत्पदं तद्ब्रह्माभिन्नमात्मरूपं पदं स्वरूपं प्रापिता तत्स्वरूपत्वेन संपादिता प्रत्यगात्मनः पृथक्सत्त्वात्तस्याः सा त न्मात्रत्वेनावलोकिता, लौकिकार्थस्तु दुष्टवासना दुष्टा बालघातविषया वासनेच्छा यस्याः सा तथोक्ताऽत एव बालानामर्भकाणां भक्षिका भक्षणकर्त्री भीमा भयङ्करा पूतना पूतनानाम्नी राक्षसी तस्या रुधिरमसृक्पीत्वा प्राश्य कृष्णेन गोपालेन सापि एतादृशीदुष्टापि तत्पदं तत्कृष्णाख्यं पदं स्वरूपं प्रापिता स्वस्मिँल्लीना कृतेत्यर्थः ॥ २ ॥

कालियदमनस्यापि तात्पर्यमाह ।

अबलानां स्वनाथानाममृतत्वाय विष्णुना ।
ताडितः कालसर्पोऽपि सर्वमानन्दितं जगत् ॥ ३ ॥

अबलानामिति । अबलानां नास्ति सामर्थ्यं कस्मिन्नपि कार्ये स्वतो येषां ते तथोक्तास्तेषामत एव स्वनाथानां स्वयमात्मैव नाथः स्वामी पालको येषां ते तथोक्तास्तेषां स्वसच्चित्सुखदानेन पालितानां चिदाभासानामित्यर्थः, अमृतत्वायाऽमृतत्वं मोक्षस्तदर्थममृतत्वं प्रापयितुमित्यर्थः, विष्णुना सामान्यरूपेण व्यापकेन प्रत्यगात्मना कालसर्पोऽपि कलयति क्षोभयति जगदिति कालः सर्पति गच्छति सर्वत्रेति कालसर्पो गुणक्षोभकत्वेन मृत्युरूपेण च सर्वत्र विद्यमानत्वात् स तादृशरूपोऽपि ताडितो दण्डितः स्वस्मा-

त्पृथमसत्त्वबुद्ध्या बाधित इत्यर्थः, यदा तदेत्यध्याहार्यं, तदा सर्वं समस्तं जगद्विश्वं देहाद्यहङ्कारान्तमान्तरं बहिश्चेश्वरपर्यन्तमानन्दितमानन्दः सुखं सञ्जातोऽस्य तदानन्दितं सुखितमित्यर्थः, 'तदस्य सञ्जातं तारकादिभ्य इतजि'तीतज्, आत्मज्ञानेनात्मनो मृत्योः पृथगसत्त्वे निश्चिते सति परमानन्दो जीवानां स्यादिति कालियदमनतात्पर्यं ज्ञेयमिति भावः, लौकिकार्थस्तु अबलानां निर्बलानां स्वयं कृष्ण एव नाथः स्वामी येषां तेषां वत्सगोगोपालानाममृतत्वाय मरणनिवृत्तये विष्णुना श्रीकृष्णेन कालसर्पोपि कालः श्यामः सर्पो भुजङ्गोपि कालियनामा सर्प इत्यर्थः, ताडितो दण्डितो यदा तदा सर्वं यमुनाजलजीवि जगत्प्राणिजातमानन्दितं सुखितम् ॥ ३ ॥

अघासुरवधतात्पर्यमाह ।

ब्राह्मणा इव ता गावस्तीरस्था वन्यवृत्तयः
मोहाजगरनिर्गीर्णा गोविन्देन समुद्धृताः ॥ ४ ॥

ब्राह्मणा इति । यथा ब्राह्मणा ब्रह्मविदस्तीरस्थाः प्रपञ्चनदीपारतटं निर्विकारस्वरूपं तत्र स्थिता वन्यवृत्तयो वन्यं सम्भजनीयं जीवब्रह्मैक्यं तदाकारा वृत्तयोऽहंब्रह्मास्मीत्येवं रूपा येषां ते तथोक्तास्ते कदाचिन्मोहाजगरनिर्गीर्णा मोहो जीवब्रह्मैक्याज्ञानं मूलाज्ञानं तेन निर्गीर्णा गिलिता यदा भवन्ति तदा गोविन्देन स्वासङ्गसच्चिदानन्ददात्रा प्रत्यगात्मना समुद्धृता मोहाजगरोदरात्पुनर्निष्कास्य जीवब्रह्मैक्यनिश्चये स्थापिता भवन्ति तद्वत्ता ब्रह्मवित्सम्बन्धिन्यो गावो वृत्तयो वन्यं सेव्यं ब्रह्मसुखं तत्र वृत्तिः प्रवृत्तिर्यासां ता मोहाजगरनिर्गीर्णा मोहोऽज्ञानं स एव सर्वजगद्ग्रसनशीलत्वादजगरो महासर्पस्तेन निर्गीर्णा आवृता यदि भवन्ति तर्हि गोविन्देन बुद्धेः

स्वामङ्गसच्चित्सुखत्वदात्रा प्रत्यगात्मना समुद्धृता मोहसर्पोद-राग्निष्काश्य स्वस्मिन्स्थिरीकृताः भवन्तीत्यघासुरवधतात्पर्यं ज्ञेयं, लौकिकार्थस्तु यथा ब्राह्मणा ब्रह्मजिज्ञासवस्तपस्विन-स्तीरस्था गङ्गादितटस्था वन्यवृत्तयो वने भवं वन्यं कन्दमू-लादिकं वृत्तिर्जीविका येषां ते तथोक्ता मोहाजगरनिर्गीर्णा मोहोज्ञानं तदेवाजगरो महासर्पस्तेन निर्गीर्णा गिलिता ते गो-विन्देन तेषां बुद्धिसाक्षिणा प्रत्यगात्मना समुद्धृता मोहान्नि-ष्कास्य स्वानुसन्धाने स्थापिता भवन्ति तथा ता व्रजस्था गावो धेनवस्तीरस्था तीरं यमुनातटं तत्र स्था वन्यवृतयो वने भवं वन्यं तृणपर्णादिकं वृत्तिर्जीविका यासां तास्तथोक्ता मोहव-द्बहुग्रासेनाजगरसर्पेणाघासुरेण निर्गीर्णा गिलितास्ते गोविन्देन गोपालेन समुद्धृतास्तदुदरान्निष्काश्य जीवायितेत्यर्थः ॥ ४ ॥

कंसवधतात्पर्यमाह ।

स मूर्त्तिमानहङ्कारः कंसो नाम महाबलः ।
स्वयमुत्पत्य कृष्णेन धृत्वासौ विनिपातितः ॥५॥

स इति । यः प्रसिद्धो भागवते कंसो नाम कंसनाम्ना वर्णितो महाबलो महज्ज्ञानं विनान्यसाधनैरनिवार्यं बलं सामर्थ्यं यस्य स तथोक्तः स कं सुखं स्यति खण्डयतीति व्युत्पत्त्या मूर्ति-मानाकारवानहङ्कार एव ज्ञेयोऽसावहङ्कारः स्वयमा-त्मनैव कृष्णेन ब्रह्माभिन्नेन परमानन्दरूपेणोत्पत्याहङ्कारादुड्डी-याखण्डसच्चिदानन्दरूपो भूत्वा धृत्वा स्वात्मनि कल्पितनिश्च-येन सन्धार्य विनिपातितो मारितो बाधित इत्यर्थः। लौकिका-र्थस्तु यो भागवते प्रसिद्धः कंसो नाम कंसनाम्ना प्रसिद्धो म-हाबलो महत्सहस्रगजानां बलं सामर्थ्यं यस्य स तथोक्तः स कंसो मूर्तिमान्साकारोऽहङ्कार एव ज्ञेयः, स कृष्णेन वासुदे-

वेन स्वयं स्वत एवोत्पन्नोऽङ्गीयाऽसौ कंसौ धृत्वा केशेषु संगृह्य विनिपातितो मारित एवमन्यलीलानामपि तात्पर्यमुन्नेयम् ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशान्तर्गतो भागवतश्रवणनिर्णयार्थप्रकाशो द्वितीयः ॥ २ ॥

---

अथ रामायणश्रवणनिर्णयः ।

एवं भागवतश्रवणं निर्णीयेदानीं रामायणश्रवणं निर्णेतुं रामायणश्रवणनिर्णयाख्यं पञ्चश्लोकं प्रकरणमभिदधान आह ।

## अथ रामायणश्रवणनिर्णयः ।

अथेति । अथ भागवतश्रवणनिर्णयानन्तरं रामायणश्रवण निर्णयो रामायणस्य रामचरितस्य श्रवणं तस्य निर्णयो विचारः क्रियत इति शेषः, आत्मनोन्यस्य सर्वस्य जडत्वे चिदाभासानामपि तथात्वाविशिष्ट्या 'तदेतज्जडं मोहात्मकं मायामात्रमि'ति श्रुतेश्चिदाभासानामपि जडत्वेन देहादिजगतः प्रकाशकत्वासम्भवादात्मनस्त्वसङ्गत्वेन देहादिप्रकाशकत्वायोगाच्च कथं प्रकाशकं विना प्रकाश्यनिर्वाह इति शङ्कापनोदायाहिल्योद्धारलीला कृतेति द्योतनाय तत्रादौ अहिल्योद्धरणतात्पर्यमाह ।

> आभासरेणुभिस्तद्वज्जडं देहादि चेतति ।
> अहिल्यापि शिला यद्वद्रामस्य पदपांसुभिः ॥ १ ॥

आभासेति । यद्वद्यथा रामस्य दाशरथेः पदपांसुभिः पदयोरङ्घ्र्योः पांसुभिर्धूलीकणैः शिलापि गौतमशापेन शिलीभूतापि अहिल्याऽहिल्यानाम्नी गौतमस्त्री चेतिता चेतनीकृता तद्वत्तथा रामस्येति पुनर्योज्यं रामस्य रमन्ते योगिनोस्मिन्निति रामोऽधिकरणे घञ् योगिनां हृदि वा रमतेऽसौ रामः सुख-

स्वरूप आत्मेत्यर्थः, तस्याभासरेणुभिरा—ईषद्भासन्ते प्रकाशन्त इत्याभासाश्चिदाभासा इत्यर्थः, ते एव रेणव इव वायुरूपोपाधिनाकाशप्रसरणोपलक्षिता इव हृदयाकाशप्रसरणशीलत्वाद्धूलीकणास्तैरात्मनोन्यस्य सर्वस्य जडत्वनिर्णयाद्देहादि सर्वं जडं स्वतोऽप्रकाशरूपं जडैरप्याभासैश्चेतति स्वस्वविषयं प्रकाशयति एवं संभाव्यमिति भावः ॥ १ ॥

एवमहिल्योद्धरणतात्पर्यमुक्त्वा हनूमत्कृतसमुद्रोल्लङ्घनतात्पर्यमाह ।

वानरो यत्प्रसादेन संतीर्णः क्षारसागरम् ।
नरः किं तत्प्रसादेन न तरेद्भवसागरम् ॥ २ ॥

वानर इति यत्प्रसादेन यस्य रामस्य प्रसादो दया तेन कृत्वा वानरो वा विकल्पेन नरोऽर्धमृगार्धनराकार इत्यर्थः, स हनूमान् क्षारसागरं क्षारजलपूर्णं सगरपुत्रैश्च संवर्धितं समुद्रं संतीर्णः सम्यक्तीर्त्वा परतीरं गतस्तेनेदं सूचितं नरो न राति आदत्ते सत्यत्वबुद्ध्या विषयानिति नरो वैराग्यादिसाधनसम्पन्नश्चिदाभासो वेदान्तश्रवणाद्यधिकारी जीव इत्यर्थः, स तत्प्रसादेन तस्य रामस्यात्मन इत्यर्थः, प्रसादः 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिदृष्ट्या सर्वशब्दवाच्यद्वैतबाधेन सर्वस्य ब्रह्मत्वे सिद्धे रामेपि प्रत्यगात्मनि तद्ब्रह्मत्वं पूर्वमेव सिद्धमिति निश्चय एव प्रसादस्तेन कृत्वा भवसागरं संसारसमुद्रं न तरेत्किं किन्तु तरेदेवेत्येवं सम्भावनाजननाय हनूमत्कृतसमुद्रोल्लङ्घनं निरूपितमिति भावः ॥ २ ॥

एवं हनूमत्कृतसमुद्रोल्लङ्घनतात्पर्यमुक्त्वा सेतुनैव समुद्रतरणतात्पर्यमाह ।

प्राह रामस्तरन्सिन्धुं शिलारूपेण सेतुना ।
संसारसिन्धुतरणं निर्विकल्पसमाधिना ॥ ३ ॥

प्राहेति । रामो दाशरथिः शिलारूपेण शिलाः पाषाणा एव रूपमाकारो यस्य स तथोक्तस्तेन सेतुना वारिबन्धेन सिन्धुं समुद्रं तरल्लँङ्घमानः सन्प्राहोक्तवान् किमुक्तवांस्तदाह संसारेति, संसारसिन्धुतरणं संसारो भवः स एव सिन्धुः समुद्रस्तस्य तरणमुत्तारो निर्विकल्पसमाधिना निर्गता निवृत्ताः विपरीता विविधाश्च कल्पाः कल्पना यत्र स तथाभूतः समाधिरसंप्रज्ञातनामा तेन भवेत्स्यादिति ज्ञेयम् ॥ ३ ॥

सीतानयनरावणवधरामायणानां तात्पर्यमाह ।

शान्तिसीता समानीता निहतो मोहरावणः ।
आत्मारामेण रामेण तद्रामायणमुत्तमम् ॥ ४ ॥

शान्ति सीतेति । शान्तिर्निर्वासना ब्रह्मसुखानुभूतिरूपान्तःकरणवृत्तिरेव सीता सीतयति तापत्रयनिवृत्तिं करोतीति सीता तालव्यादिर्दन्त्यादिश्चायं शब्दः समानीताऽङ्गीकृता रामेणेति शेषः, तथा तेनैव मोहरावणो मोहो मूलाज्ञानं जीवब्रह्मैक्यास्फुरणरूपं स एव रावणो दशेन्द्रियदशमुखो निहतो मारित आत्मारामेणात्मन्येवासंगसच्चिदानन्दरूप आत्मन आक्रीडत इत्यात्मारामस्तेन रामेण 'आत्मक्रीड आत्मरति'रिति श्रुत्युक्तलक्षणो रामो रमन्ते योगिनो यस्मिन्निति रामो योगिनां च हृदि रमते स रामो ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेर्ज्ञानिनो ब्रह्मरूपत्वप्रतिपादनाद्ब्रह्मणश्च सर्वयोगिनामारामत्वप्रसिद्धेश्च सर्वयोगिशुद्धहृदयारामत्वाज्ज्ञानिरामेण मोहरावणं हित्वाऽस्य शान्त्याख्यसीतानयनं यत्राभिहितं तत्तादृशार्थवदेव रामायणं सर्व-

योग्यारामभूतस्य ब्रह्मात्मनोऽयनं प्रापकं मार्गभूतमित्यर्थः, उत्तमं श्रेष्ठं ज्ञेयं नान्यल्लौकिकार्थवद्रामायणं श्रेष्ठमित्यर्थः ॥ ४ ॥

एवं रामायणाभिप्रायमुक्त्वा तमेवार्थं सम्भावयितुं रामशब्दार्थं स्पष्टमाह ।

रमन्ते योगिनो यस्मिन्रमते योगिनां हृदि ।
तारकं ब्रह्म रामाख्यं रमतां हृदये मम ॥ ५ ॥

इतिश्रीन०बो०मु०पु० रामायणश्रवणनिर्णयः ॥ ३ ॥

रमन्त इति । योगिनो जीवब्रह्मैक्यज्ञानवन्तो योगाभ्यासवन्तश्च यस्मिन् ब्रह्मणि रमन्ते क्रीडन्ति तदेव योगिनां जीवब्रह्मैक्यज्ञानिनां हृदि चेतसि सर्वदा रमते क्रीडति समाधिमतां च समाधिसमये रमते क्रीडति तत्तारकं ब्रह्म तारकः प्रणवस्तद्वाच्यं देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु रामाख्यं प्रत्यगभिन्नं ब्रह्मोक्तार्थवत्त्वेन राम इत्याख्या यस्य तत्तथोक्तं ज्ञेयं तन्मम मे ब्रह्मात्मन इत्यर्थः, हृदयेऽन्तः करणे रमतां क्रीडतु इति प्रार्थना ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थ० मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशान्तर्गतो रामायणश्रवणनिर्णयार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

अथाष्टादशविद्यास्थाननिर्णयः ।

एवं रामायणतात्पर्यमभिधायेदानीमष्टादशविद्यास्थानतात्पर्यं निर्णेतुमष्टादशविद्यास्थाननिर्णयाख्यं सार्द्धसप्तषष्टिश्लोकं प्रकरणमारभमाण आह ।

अथाष्टादशविद्यास्थाननिर्णयः ।

अथेति । अथ रामायणश्रवणनिर्णयानन्तरमष्टादशविद्या-

स्थाननिर्णयोऽष्ट च दश चाष्टादश यानि विद्यास्थानानि ज्ञानाश्रयभूतानि शास्त्राणि तेषां निर्णयो विचारः क्रियत इति शेषः, तत्र तावत्प्रथमं निरूपयिष्यमाणाष्टादशविद्यास्थानज्ञापिकां याज्ञवल्क्यस्मृतिं निरूपयितुमाह ।

तदुक्तं याज्ञवल्क्यस्मृतौ ।

तदिति । तद्विद्यास्थानानामष्टादशत्वं याज्ञवल्क्यस्मृतौ याज्ञवल्क्यस्य स्मृत्याख्ये वाक्य उक्तं कथितं, तामेव स्मृतिमुदाहरति ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥१॥

पुराणेति । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः पुराणानि भागवतादीनि, न्यायो न्यायशास्त्रं गौतमप्रणीतं, मीमांसा कर्मकाण्डार्थनिर्णायको जैमिन्यादिरचितो ग्रन्थकदम्बः, धर्मशास्त्रं मन्वादिभिः संग्राहितो धर्मनिर्णायकः स्मृतिवाक्यकदम्बः, अङ्गानि षट् शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाख्यानि, तत्र पुराणं पञ्चलक्षणमित्युक्तेः सर्गप्रतिसर्गवंशमन्वन्तरतद्वंश्यानुचरितनिरूपकाणि पञ्चलक्षणानि, न्यायः षोडशपदार्थविवेचको ग्रन्थः, एतैर्मिश्रिता युक्ता वेदाश्चत्वारोऽपौरुषेयवाक्यकदम्बरूपाः स्वतः प्रमाणभूता ऋग्यजुःसामाथर्वाख्याः, एवं चतुर्दश चत्वारश्च दश च चतुर्दशसंख्यानि विद्यानां ज्ञानानां धर्मस्य च धर्मस्यापि स्थानानि आधारभूतानि मन्दिराणीत्यर्थः, ज्ञेयानीति शेषः ॥ १ ॥

आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकमिति ॥ २ ॥

तथाऽऽयुर्वेदः आयुषो ज्ञानसाधनं चिकित्साशास्त्रं, धनु-

वेदो धनुर्योपलक्षितसर्वशस्त्रप्रयोगज्ञानसाधनं शास्त्रं, गान्धर्वं गानज्ञानसाधनं शास्त्रम् । अर्थशास्त्रकं चाऽर्थानां द्रव्यादीनां प्राप्तिज्ञानसाधनं शास्त्रं नीत्याख्यमेवं चत्वारि, पूर्वचतुर्दशभिः सहितान्येतानि चत्वारि मिलित्वाष्टादश भवन्तीति ज्ञेयानि ॥२॥

अथ पुराणनिर्णयः ।

एवमष्टादश विद्यास्थानान्यभिधायेदानीं तानि क्रमेण निर्णेतुं प्रथमं पुराणनिर्णयाख्यं द्विश्लोकं प्रकरणमभिदधान आह ।

तत्र प्रथमं पुराणनिर्णयः ।

तत्रेति । तत्र निरूपयिष्यमाणेषु अष्टादशविद्यास्थानेषु प्रथममादौ पुराणनिर्णयः पुराणानां भागवतादीनां निर्णयो विचारः क्रियत इति शेषः, तमेवाह ।

न घना प्रीतिरुत्पन्ना पुराणपुरुषे यदि
तदाष्टादशभेदेन पुराणश्रवणेन किम् ॥ १ ॥

नेति । यदि यर्हि पुराणपुरुषे जन्मादिविकाररहितः सर्वजगतः प्राक्कालीनः पुरुषः परिपूर्णो ब्रह्माभिन्नः प्रत्यगात्मा तस्मिन्घना निबिडा प्रीतिः प्रेमा नोत्पन्ना न जाता चेत्तदा तर्हि अष्टादशभेदेन अष्टदशसङ्ख्याभेदभिन्नेन पुराणश्रवणेन पुराणानां भागवतादीनां श्रवणेन कृतेनापि किं फलं न किमपीत्यर्थः, पुराणश्रवणं तत्प्रतिपाद्याखण्डैकरसे ब्रह्माभिन्ने प्रत्यगात्मनि प्रेमोत्पादनार्थं तदभावे ईश्वरं वाऽतस्तदभावे पुराणश्रवणं कृतमपि निष्फलप्रयास एवेति भावः ॥ १ ॥

पुराणश्रवणशब्दार्थप्रतिपादनेनापि तमेवार्थं द्रढयति ।

पुराणोऽपि न जीर्णो यः स पुराणस्तु न श्रुतः ।

काय: पुराणतां प्राप्तः पुराणश्रवणेन किम् ॥ २ ॥

इति० बो० मुनी० अष्टादश० पुराणनिर्णयः प्रथमः ॥ १ ॥

पुराणोपीति । यः पुराणेषु प्रतिपादितः पुराणोपि सर्वेजगत्कारणत्वेन जगतः प्राक्कालीनोपि न जीर्णो जरादिविकारैर्न विकृतः स तु पुराणो लौकिकपुराणविलक्षणो न श्रुतः पुराणश्रवणेन वृत्तिगोचरीकृतः, किञ्च पुराणश्रवणं कुर्वतस्तव कायः शरीरं पुराणतां जीर्णतां प्राप्तो यातस्तर्हि पुराणश्रवणेनाष्टादशभेदभिन्नपुराणानां श्रवणेन कृतेन किं फलं सम्पादितं न किमपि सम्पादितमित्यर्थः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ मुनीन्द्रदिनचर्यार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतः पुराणनिर्णयार्थप्रकाशः प्रथमः ॥ १ ॥

---

अथ न्यायशास्त्रनिर्णयः ।

एवं पुराणनिर्णयमभिधायेदानीं क्रमप्राप्तं न्यायशास्त्रं निर्णेतुं न्यायशास्त्रनिर्णयाख्यं पञ्चश्लोकं प्रकरणमभिदधान आह ।

अथ न्यायशास्त्रनिर्णयः ।

अथेति । अथ पुराणनिर्णयानन्तरं न्यायशास्त्रनिर्णयो न्यायशास्त्रस्य मुनिविहितस्य निर्णयो विचारः क्रियत इति शेषस्तमेव वेदान्तानुकूलं न्यायं लक्षयति ।

यदात्मतत्त्वे विमले विश्रान्तिरचला भवेत ।
स एव न्याय इत्युक्तः शेषं त्वन्यायलक्षणम् ॥१॥

यदिति। यद्येन या विवेकिनां प्रत्यक्षा विमले निर्मले मायाऽविद्यादिमलरहित इत्यर्थः, आत्मतत्त्वे आत्मस्वरूपे तत्त्वेऽनारोपिते वस्तुनीत्यर्थः, अचला स्थिरा विश्रान्तिर्विश्रामरूपा वृत्तिर्भवेत्स्यात् स एवात्मविश्रान्तिसाधनभूत एव न्याय इत्युक्तो न्यायनाम्ना कथितो विद्वद्भिरिति शेषः, शेषं तु तद्व्यतिरिक्तं न्यायशास्त्रगन्यायलक्षणमात्मविश्रान्तिविघातकत्वादन्यायस्यापराधस्य लक्षणं चिन्हं ज्ञेयमतस्तन्मुमुक्षुभिर्नाङ्गीकार्यमिति भावः ॥ १ ॥

ननु षोडशपदार्थविवेचकत्वेनात्मविश्रान्तिफलकत्वान्न्यायशास्त्रस्य कथमन्यायत्वमित्याशङ्क्योक्तन्यायविदां तत्षोडशपदार्थचिन्तनमनिष्टमेव केवलात्मविश्रान्तिरेवेष्टेत्यन्यायत्वं तस्येत्याशयेनाह।

अचिन्तनं पदार्थानां न्यायं न्यायविदो विदुः।
अन्यायमार्गरसिकः स कथं न्यायशास्त्रवित् ॥२॥

अचिन्तनमिति। न्यायविद उक्तन्यायविदो वेदान्तानुकूलन्यायवेत्तार इत्यर्थः, पदार्थानां नामरूपमात्राणां षोडशपदार्थानामचिन्तनमस्मरणमन्यानन्तरितमात्मस्फुरणमित्यर्थः, न्यायं नीतिं विदुर्जानीयुः, ननु तर्हि षोडशपदार्थविवेचनप्रधानन्यायशास्त्राभ्यासिनामेव न्यायशास्त्रवेत्तृत्वं कुत उच्यते लोक इत्याशङ्क्याह अन्यायेति, स षोडशपदार्थविवेचकन्यायशास्त्राभ्यास्यन्यायमार्गरसिकोऽनात्मपदार्थनिर्णायकत्वादात्मविश्रान्त्यभावाच्चान्यायस्यापराधस्य मार्गः प्राप्तिसाधनभूतः षोडशपदार्थविवेकस्तत्र रसिको रसज्ञोऽतः कथं न्यायशास्त्रविन्न्यायोपदेशकग्रंथज्ञः कथं केन प्रकारेण भवति नैव स न्यायशास्त्रवेत्त्यर्थः ॥ २ ॥

किञ्च तेषां विरुद्धभाषित्वादपि तेषां मतं मुमुक्षुभिर्नैव मन्तव्यमित्याह ।

स्वयं यत्तार्किकः प्राह तर्कोऽनिष्टप्रसञ्जनम् ।
तत्तार्किकस्य तर्केण कथमिष्टं प्रसज्ज्यते ।

स्वयमिति। यद्यतः कारणात्तार्किकस्तर्कं वेत्ति स तार्किको गौतमः स्वयं तर्कशास्त्रप्रणेतापि तर्कोऽनिष्टप्रसञ्जनम् 'अनिष्टप्रसञ्जनलक्षणत्वान्तर्कः' इति तर्कलक्षणप्रतिपादकं सूत्रं प्राह कथितवान्तत्ततः कारणात्तार्किकस्येदानींतनतर्काभ्यासवतः कृतेन तर्केणानुमानेन श्रुतिविरुद्धतर्केणेत्यर्थः, इष्टं मुमुक्षूणां मोक्षाख्यं प्रियं सुखमित्यर्थः, कथं केन प्रकारेण प्रसज्यते प्रसक्तं भवति न कथमपीत्यर्थः, अतः श्रुतिविरुद्धं तर्कं परित्यज्य श्रुत्यर्थानुकूलतर्क एवादरो विधेय इति भावः ॥ ३ ॥

ननु श्रुतिविरुद्धतर्कस्यैव कुतस्त्याज्यत्वमित्याशङ्क्यानात्मगोचरत्वेन निष्फलश्रमत्वादित्याशयेनाह ।

न तर्कितं परं ब्रह्म मेधया तीक्ष्णतर्कया ।
तदा कुतार्किकस्यास्य तर्ककर्कशता वृथा ॥ ४ ॥

नेति। तार्किकेण तीक्ष्णतर्कया तीक्ष्णोऽज्ञानभेदने तीव्रस्तर्कोनुमानं यस्याः सा तथोक्ता तया मेधया धारणावत्या बुद्धिवृत्त्या परं ब्रह्म कार्यकारणातीतं देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु तर्कितं न तर्कगोचरं न कृतं यदा तदा तर्हि अस्य षोडशपदार्थविवेचकस्य लोकप्रसिद्धतार्किकस्य कुतार्किकस्य कुत्सितस्य तर्काभ्यासिनो वृथा व्यर्थं निष्फलेत्यर्थः, तर्ककर्कशता तर्केऽनुमाने कर्कशता कठोरता ज्ञेया ॥ ४ ॥

ननु षोडशपदार्थविवेचकस्य तर्कस्य कुतो नैष्फल्यमित्या-

शङ्क्य षोडशपदार्थविवेचनेपि तर्कानवस्थादोषसत्त्वादित्याह ।

षोडशापि पदार्थास्ते त्वया तार्किक तर्किताः ।
तर्को नवस्थितस्तर्हि तर्कातीते मनः कुरु ॥ ५ ॥

इतिश्रीनर० बो० मु० अष्टादश० न्यायशास्त्रनिर्णयः ।

षोडशेति । हे तार्किक हे तर्कज्ञ त्वया तर्काभिनिवेशवता भवता ते तर्कशास्त्रे प्रतिपादिताः षोडश षोडशसङ्ख्याः पदार्थास्तत्त्वानि तर्किता अपि तर्कविषयीकृता यद्यपि तथापि तर्कोऽनुमानं नावस्थितोऽवस्थितिं न प्राप्तो यदि तर्हि तदा तादृशं तर्कं परित्यज्य मनश्चित्तं तर्कातीते तर्कागोचर आत्मनि विषये कुरु स्थापय मननवदन्तःकरणं तर्काभ्यासपरित्यागेनात्मविषयमनननेनात्मनि लीनं कुरुष्वेतिभावः ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयप्रसङ्गितर्कशास्त्रार्थनिर्णयार्थप्रकाशो द्वितीयः ॥ २ ॥

---

अथ वैशेषिकादिनिर्णयः ।

एवं न्यायशास्त्रनिर्णयमभिधायेदानीं तत्प्रसङ्गाद्वैशेषिकसाङ्ख्यपातञ्जलानां निर्णयमभिदधान आह ।

अथ तर्कप्रसङ्गेन निर्णयः क्रियतेधुना ।
वैशेषिकस्य सांख्यस्य तथा पातञ्जलस्य च ॥ १ ॥

अथेति । अथ न्यायशास्त्रनिर्णयानन्तरं तर्कप्रसङ्गेन तर्कस्य तर्कशास्त्रस्य प्रसङ्गेन प्रसङ्गादधुनेदानीं वैशेषिकस्य षट्पदार्थविवेचनप्रधानस्य शास्त्रस्य, तथा साङ्ख्यस्य सम्यक्ख्यायन्ते प्रकथ्यन्ते तत्त्वानि प्रकृत्यादीनि अस्मिन्निति साङ्ख्यं

तस्य, यद्वा तत्त्वानां सङ्ख्या पञ्चविंशतिषड्विंशत्यष्टाविंशत्याद्यास्तत्प्रतिपादकत्वात्सङ्ख्यं सङ्ख्या अस्मिन्सन्तीति व्युत्पत्त्या मत्वर्थेऽर्श आद्यच् ततः स्वार्थेऽण्, तथा पातञ्जलस्य च तद्वत्पतञ्जलिप्रोक्तस्य योगशास्त्रस्य निर्णयो विचारः क्रियते निरूप्यते, एतेषां तर्कस्य चाङ्गाङ्गित्वात्तर्कप्रसङ्गादेतन्निर्णयः कथ्यत इति भावः ॥ १ ॥

तत्रादावष्टश्लोकं वैशेषिकनिर्णयाख्यं प्रकरणं वक्तुकाम आह ।

## तत्र प्रथमं वैशेषिकनिर्णयः ।

तत्रेति । तत्र प्रतिज्ञातेषु मध्य आदौ प्रथमं वैशेषिकनिर्णयो वैशेषिकस्य विशेषनिरूपणप्रधानस्य शास्त्रस्य निर्णयो विचारः क्रियत इति शेषः, तत्रादौ सविशेषपदार्थनिरूपण एव कुशलो वैशेषिको न निर्विशेषब्रह्मनिरूपण इत्याह ।

सविशेषाः पदार्था ये तत्र वैशेषिकः कृती ।
निर्विशेषं परं ब्रह्म तत्र वैशेषिकस्य किम् ॥ १ ॥

सविशेषा इति । ये संसारे प्रसिद्धाः सविशेषा विशेषेण वैलक्षण्येन सह वर्त्तमानाः पदार्थाः पदानि नामानि अर्था स्तद्वाच्यानि रूपाणि तत्र तत्रैव तेषु पदार्थेषु वैशेषिको वैशेषिकशास्त्राभिनिवेशवान्कणादाद्यः पुरुषः कृती कृतकृत्यो भवेदिति शेषः, नान्यत्र ब्रह्मणीत्यर्थः, कुतो ब्रह्मणो वैशेषिकाविषयत्वं तत्राह निर्विशेषमिति, अस्माकं मुक्त्यर्थिनां त्विष्टं परं कार्यकारणत्वधर्मरहितं ब्रह्म देशकालवस्तुकृतपरिच्छेदरहितमात्मवस्तु निर्विशेषं निर्गतो निवृत्तो विशेषो भेदो यतस्तत्तथोक्तमस्ति अतस्तत्र तस्मिन्ब्रह्मणि विषये वैशेषिकस्य वैशेषिकशास्त्रस्य तज्ज्ञस्य वा किं किङ्कार्यं न किमपि कार्यं

तत्र तस्येत्यर्थः ॥ १ ॥

ननु तत्त्वज्ञानं वैशेषिके निरूप्यते भवतोपीष्टं तत्त्वज्ञानमतो वैशेषिकस्य सप्रयोजनत्वमस्त्वित्याशङ्क्याह ।

मुक्तं साधर्म्यवैधर्म्यैस्तत्त्वज्ञानं हि मुक्तये ।
साधर्म्यवैधर्म्यकृतं तत्त्वज्ञानं न मुक्तये ॥ २ ॥

मुक्तमिति । साधर्म्यवैधर्म्यैः सह वर्त्तते धर्मैः तत्सधर्मं तस्य भावः साधर्म्यं विगतो धर्मो यस्मात्तद्विधर्मं तस्य भावो वैधर्म्यं धर्मरहितत्वं तैर्मुक्तं हीनं तत्त्वज्ञानं तत्त्वस्यानारोपितस्यात्मतत्त्वस्य ज्ञानं वेदनं हि प्रत्यक्षं तद्विवेकिनां मुक्तये मोक्षाय मुक्तिं प्राप्तुं साधनं भवति साधर्म्यवैधर्म्यकृतं साधर्म्येण वैधर्म्येण च कृतमुत्पादितं यत्तत्त्वज्ञानं साधर्म्यवैधर्म्यविशिष्टतत्त्वानां षट्पदार्थानां ज्ञानं वेदनं मुक्तये मोक्षाय न न भवति अतो वैशेषिकमते मुमुक्षुभिरादरो न कर्त्तव्य इति भावः ॥ २ ॥

वैशेषिकमते मुमुक्षुभिरनादरणीयत्वे हेत्वन्तरमाह ।

श्रुतिः सर्वपदार्थानां विस्मृत्या मुक्तिमाह यत् ।
तर्हि सर्वपदार्थानां चिन्तनैः किं प्रयोजनम् ॥३॥

श्रुतिरिति । यद्यतः कारणाच्छ्रुतिर्वेदवाक् सर्वपदार्थानां सर्वपदवाच्यानां द्वैतजातवस्तूनां नामरूपाणामित्यर्थः, विस्मृत्याऽननुसन्धानेन मुक्तिं मोक्षमाह वदति तर्हि तदा सर्वपदार्थानामस्माकं श्रुतिप्रामाण्यानां मुमुक्षूणां सर्वपदवाच्यद्वैतवस्तुजातानां वैशेषिकनिरूपितपदार्थानामित्यर्थः, चिन्तनैर्विचारैः किं प्रयोजनं किं फलं न किमपीत्यर्थः, अतो वैशेषिकमतस्य मुमुक्षूणां प्रयोजनाभावादनादरणीयत्वमेव नि-

श्चितमिति भावः ॥ ३ ॥

ननु साधर्म्यवैधर्म्ययोस्तत्त्वज्ञानकारणत्वात्तत्प्रतिपादकत्वेन वैशेषिकस्य सप्रयोजनत्वमस्त्वित्याशङ्क्यास्मदीयतत्त्वे साधर्म्यवैधर्म्याभावाद्वैशेषिकस्याप्रयोजनत्वमित्याशयेनाह।

कथं साधर्म्यवैधर्म्ये तत्त्वज्ञानस्य कारणम्।
न च साधर्म्यवैधर्म्यमद्वये परमात्मनि ॥ ४ ॥

कथमिति। साधर्म्यवैधर्म्ये साधर्म्यं सह धर्मधर्मिभाववत्त्वं वैधर्म्यं तद्रहितत्वं चैते उभे तत्त्वज्ञानस्य मोक्षसाधनभूतस्य पारमार्थिकतत्त्वज्ञानस्य कारणं हेतुः कथं केन प्रकारेण भवतो न कथमपीत्यर्थः, कुत इत्यत आह न चेति, अद्वये न विद्यते द्वयं भेदो यत्र तस्मिंस्तथाभूते परमात्मनि कार्यकारणातीत आत्मवस्तुनि साधर्म्यवैधर्म्यं सहधर्मवत्त्वं समानधर्मवत्त्वं च वैधर्म्यं धर्मरहितत्वं विरुद्धधर्मवत्त्वं च तयोः समाहार एकवद्भावः, न चास्ति नैवास्ति अतो वेदान्तप्रतिपाद्ये ब्रह्मणि साधर्म्यवैधर्म्याभावान्न वैशेषिकस्य तत्र सप्रयोजनत्वमिति भावः ॥ ४ ॥

नन्वात्मतत्त्वविवेचनोपयोगितयैव षट्पदार्थविवेचनमस्माभिः क्रियतेऽतः सप्रयोजनत्वं वैशेषिकस्यास्त्वित्याशङ्क्य तदास्मदानुकूल्याद्वैशेषिकसिद्धान्तभङ्गेऽस्माकमिष्टमेव तदित्याशयेनाह।

पदार्थानां विवेकेन परमात्मा प्रकाशते।
इति चेद्वदसि प्राज्ञ तर्हीदं मम संमतम् ॥ ५ ॥

पदार्थानामिति। पदार्थानां वैशेषिकप्रतिपादितानां षट्पदार्थानां नामरूपात्मकानां विवेकेन विवेचनेन भिन्नत्वज्ञानेन

परमात्मा कार्यकारणत्वहीन आत्मा प्रकाशते स्फुटं प्रतीतो भवति अतो वेदान्तानुकूल्याद्वैशेषिकमतमङ्गीकार्यमित्येवं वदसि कथयसि चेद्यदि तर्हीदं मतं मम मुमुक्षोः संमतमिष्टमेव न त्वयं वैशेषिकसिद्धान्तः किन्त्वस्मदीय एवेति भावः ॥ ५ ॥

ननु वैशेषिकैस्तार्किकैश्च नानात्मत्वं प्रतिपाद्यते वेदान्तिभिस्तु तद्विरुद्धमैकात्म्यमतः कथमविरोध इत्याशङ्क्य व्यवहारदशायां बद्धमुक्तव्यवस्थायै नानात्मत्वस्य तैरङ्गीकृतत्वाद्वेदान्तिभिरपि व्यावहारिकनानात्मत्वस्य मायिकस्याङ्गीकृतत्वात्पारमार्थिकमैकात्म्यमुभाभ्यामपि सिद्धान्तितमतो न विरोध इत्याशयेनाह।

बद्धमुक्तव्यवस्थायां नानात्मानो न वस्तुतः।
नानात्मानो व्यवस्थान इत्याह मुनिगौतमः॥ ६॥

बद्धमुक्तेति। बद्धमुक्तव्यवस्थायां बद्धानां मुक्तानां च व्यवस्था मर्यादा तस्यां निमित्तभूतायां सत्यां तन्निमितमित्यर्थः, नानात्मानो नानाऽनेक आत्मानो जीवाः सन्ति वस्तुनः परमार्थतो नानेके सन्तीत्यर्थः, इत्येवं तार्किकाणां वैशेषिकाणां च मतं तद्वेदान्तिनामप्यनुकूलमिति भावः, ननु तार्किकवैशेषिकयोर्मते बद्धमुक्तव्यवस्थायायेव नानात्मत्वं न परमार्थत इति कुतो ज्ञातं भवतेत्याशङ्क्य गौतमप्रणीतसूत्रादेवेत्याशयेन गौतमसूत्रोदाहरणेन गौतमाशयं प्रदर्शयति नानात्मान इति, नानात्मानो नाना बहवो आत्मानो जीवाः सन्ति व्यवस्थाने व्यवस्थानं व्यवस्था बद्धमुक्तानां मर्यादेत्यर्थः, तस्मिन्तन्निमित्तमित्यर्थः, चर्मणि द्वीपिनं हन्तीति वन्निमित्ते सप्तमी, इत्येवं मुनिगौतमो मुनिर्मननवान्गौतमनाम ऋषिराह प्रोक्तवानतो स्माभिर्ज्ञातमिति भावः ॥ ६ ॥

किञ्च तेषां मते कल्पनालाघवं साध्यते तदपि तेषां कल्पनागौरवमेव सिध्यति, वेदान्ते तु मायाङ्गीकारे कल्पनालाघवं सिध्यत्यतस्तेषामपि मायातत्त्वाङ्गीकार इष्टएवेति वेदान्ताङ्गीकारः कर्त्तव्य इत्याशयेनाह ।

कल्पनागौरवं दोषः कल्पनालाघवं गुणः ।
इति यत्तार्किकैरुक्तं तदेव मम रोचते ॥ ७ ॥

इति० बो० मु० अष्टा० वैशेषिकनिर्णयः ॥ ३ ॥

कल्पनेति । कल्पनागौरवं कल्पनानां गौरवमाधिक्यं दोषोऽचातुरी कल्पनालाघवं कल्पनानां लाघवं न्यूनत्वं गुणश्चातुर्यमित्येवं यत्प्रसिद्धं तार्किकैरुक्तं न्यायशास्त्रविद्भिः कथितमेव केवलं न तु अङ्गीकृतं मायाङ्गीकारं विना तत्र न सिध्यतीति भावः, मम तु मायातत्त्वाङ्गीकर्तुस्तदेव कल्पनालाघमेव रोचत इष्टं भवति अतस्तर्कवैशेषिकमतादरं परित्यज्य वेदान्त एवादरो विधेय इति भावः ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ मुनीन्द्रदिनचर्यार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो वैशेषिकनिर्णयार्थप्रकाशस्तृतीयः ॥ ३ ॥

---

अथ सांख्यनिर्णयः ।

एवं वैशेषिकनिर्णयमभिधायेदानीं प्रसङ्गप्राप्तं सांख्यनिर्णयाख्यं चतुःश्लोकं प्रकरणमभिदधान आह ।

## अथ सांख्यनिर्णयः ।

अथेति । अथ वैशेषिकनिर्णयानन्तरं सांख्यनिर्णयः सांख्यस्य सांख्याभिधशास्त्रस्य निर्णयो विचारः क्रियत इति शेषः, तत्र

तावत्प्रथमं संख्यातीतस्य ब्रह्मणः केवलतत्त्वसंख्यामात्रनिर्णायकसांख्यविषयत्वाभावात्सांख्यस्य निष्फलश्रमत्वं देशयति ।

असंख्याः सांख्य तत्त्वानां संख्याः संख्यातवानसि ।
किं सांख्य संख्यया ब्रह्म संख्यातीतं विचिन्तय ॥१॥

असंख्या इति। हे सांख्य सम्यक्ख्यायन्ते प्रकथ्यन्ते तत्त्वान्यस्मिन्तत्सांख्यं तद्वेत्ति अधीते वा सांख्यस्तस्य सम्बोधने हे सांख्य त्वं तत्त्वानां प्रकृतिपुरुषादीनामसङ्ख्या नविद्यन्ते सङ्ख्या गणना यासां तास्तथोक्ताः सङ्ख्या गणनाः पञ्चविंशतिषड्विंशत्यादिरूपाः सङ्ख्यातवान्निरूपितवानसि विद्यसे तर्हि साङ्ख्यसङ्ख्यया साङ्ख्यशास्त्रनिरूपितया सङ्ख्यया गणनया किमस्माकं मुमुक्षूणां किं फलं न किमपि फलमित्यर्थः, अतः साङ्ख्यस्यापि निष्फलश्रमत्वात्साङ्ख्यादरं परित्यज्य ब्रह्मचिन्तने प्रवर्तितव्यमिति साङ्ख्यं प्रेरयति ब्रह्मेति, त्वं ब्रह्म देशकालवस्तुकृतपरिच्छेदरहितमात्मवस्तु विचिन्तय स्मर, ननु साङ्ख्यविचारेणापि ब्रह्मैव चिन्त्यत इति चेन्नेत्याह सङ्ख्यातीतमिति, सङ्ख्यातीतं साङ्ख्योक्तसङ्ख्यया विषयीकृतं न भवति ब्रह्माऽतः साङ्ख्यस्य निष्प्रयोजनश्रममात्रत्वात्तत्त्यक्त्वा परं ब्रह्मैव चिन्तनीयमिति भावः ॥ १ ॥

ननु तत्त्वज्ञानं मोक्षसाधनत्वेन भवतामपीष्टं साङ्ख्यं च तत्त्वज्ञानप्रतिपादकं तत्कुतः साङ्ख्य नाङ्गीक्रियते भवद्भिरित्याशङ्क्याह ।

तत्त्वज्ञानं त्वया प्रोक्तं तत्त्वज्ञानं मतं मम ।
तत्त्वातीतस्य विज्ञानं तत्त्वज्ञानं हि मुक्तये ॥२॥

तत्त्वज्ञानमिति । हे साङ्ख्य त्वया भवता तत्त्वज्ञानं तत्त्वानां

प्रकृतिपुरुषादीनां ज्ञानं बोधनं प्रोक्तं कथितं मम मे मुमुक्षो-स्तत्त्वज्ञानं तत्त्वबोधनमेव मतामिष्टं तथापि त्वत्प्रतिपादितं त-त्त्वज्ञानं न मोक्षसाधनं तर्हि तत्कीदृशं मोक्षसाधनं तत्त्वज्ञानं तत्राह तत्त्वातीतस्येति, तत्त्वातीतस्य तत्त्वेभ्यो भवदुक्तप्रकृतिपु-रुषादितत्त्वेभ्योऽतीतस्य भिन्नस्य तत्त्वास्पृष्टस्येत्यर्थः, विज्ञा-नमनुभवस्तत्त्वज्ञानं तत्त्वस्यानारोपितस्वरूपस्य जीवब्रह्मैक्यल-क्षणस्य ज्ञानं बोधनमस्माकमिष्टं तदेव मुक्तये मुक्त्यर्थं भवति न त्वत्प्रोक्तं मुक्तये तत्त्वज्ञानं भवतीत्यर्थः, अतस्तन्नाङ्गीक्रियते-ऽस्माभिरिति भावः ॥ २ ॥

ननु तत्त्वविवेचनं पुरुषज्ञानार्थमस्माभिः कृतमित्याशङ्क्या-ङ्गीकरोति ।

पुरुषस्य परीक्षार्थं मया संख्या निरूपिता ।
सांख्य एवं यदि प्राह तर्हीदं मम संमतम् ॥ ३ ॥

पुरुषस्येति । पुरुषस्य प्रकृतिविकृतिविलक्षणस्यासङ्गस्या-त्मनः, तदुक्तं ।

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति ॥

परीक्षार्थं ज्ञानार्थं मया साङ्ख्यशास्त्रप्रणेत्रा सङ्ख्या तत्त्वानां प्रकृत्यादीनां पञ्चविंशतिषड्विंशत्याद्या निरूपिता प्रतिपादिते-वमनेन प्रकारेण यदि यर्हि साङ्ख्यः साङ्ख्यशास्त्रप्रणेता कपिलस्तदध्ययनवान्तज्ज्ञो वाऽन्यः कोपि प्राह वक्ति तर्हि तदेदं वचनं साङ्ख्यापसिद्धान्तापातेन त्वंपदार्थशोधनमात्रो-पयोगितया च मम मुमुक्षोः संमतमिष्टं भवति भवान्साङ्ख्यसि-द्धान्तं परित्यज्य वेदान्त आगत इति भावः ॥ ३ ॥

तर्हि तत्त्वसङ्ख्यायाः पुरुषपरीक्षामात्रोपयोगित्वाङ्गीकारे

तत्रैवाभिनिवेशो न कर्त्तव्य इत्याह ।

पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः ।
पुरुषं पश्य रे सांख्य संख्यया किं प्रयोजनम् ॥ ४ ॥

इ० बो० मु० अष्टा० सांख्यनिर्णयश्चतुर्थः ॥ ४ ॥

पुरुषादिति । पुरुषादसङ्गसच्चिदानन्दपरिपूर्णरूपादात्मनः परं श्रेष्ठं किञ्चित्किमपि न न विद्यते सैव काष्ठा सर्वसुखावधिरूपा सोक्तलक्षणा परोत्कृष्टा गतिः स्थितिर्ज्ञेया, अरे साङ्ख्य सङ्ख्यायामभिनिवेशित्वान्नीचसम्बोधनं त्वं पुरुषं परिपूर्णरूपमात्मानं पश्यावलोकय तं सत्त्वा सङ्ख्यया तत्त्वानां गणनया किं प्रयोजनं किं फलं न किमपीत्यर्थः, अतः सङ्ख्याभिनिवेशेन व्यर्थश्रमो न कर्त्तव्य इति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतः साङ्ख्यनिर्णयार्थप्रकाशश्चतुर्थः ॥४॥

---

अथ पातञ्जलनिर्णयः ।

एवं साङ्ख्यनिर्णयमभिधायेदानीं पातञ्जलयोगं निर्णेतुं पातञ्जलनिर्णयाख्यं दशश्लोकं प्रकरणमभिदधान आह ।

अथ पातञ्जलनिर्णयः ।

अथेति । अथ साङ्ख्यनिर्णयानन्तरं पातञ्जलनिर्णयः पतञ्जलिना प्रोक्तं पातञ्जलं शास्त्रं तस्य निर्णयो विचारः क्रियत इति शेषः, पातञ्जलमित्यत्र 'तेन प्रोक्तमि'तिसूत्रेणाण्, तत्रादौ योगसिद्धिप्रसक्त्या श्रमहेतुत्वे मुमुक्षूणामादरं स्राजयितुं पातञ्जलस्य दर्शयति ।

योगसिद्धिप्रसक्तोयं पातञ्जलपरिश्रमः ।
कलाकौशलमेवेदं न स्वरूपस्थितिर्हि सा ॥ १ ॥

योगसिद्धीति । अयं पतञ्जलिप्रोक्तो योगाख्यः परिश्रमः सर्वकालं श्रम एव यतो योगसिद्धिप्रसक्तो योगानां धारणाविशेषाणां सिद्धय आकाशगमनाद्यास्तासु प्रसक्तोऽत्यासक्तोऽतः पातञ्जलपरिश्रमः पातञ्जले पतञ्जलिप्रोक्ते शास्त्रे परिश्रम एव केवलं ज्ञेयो न तत्रोक्तसाधनैर्मोक्ष इति भावः, तर्हि किं तत्रत्यसाधनैर्भवतीत्याशङ्क्याह कलेति, इदं पातञ्जलं कलाकौशलमेव कलासु योगसिद्धिषु कौशलं कुशलत्वं चातुर्यमात्रं केवलमित्यर्थः, सा कुशलता न स्वरूपस्थितिः स्वस्यात्मनो रूपं तस्य स्थितिस्तदाकारा स्थितिरित्यर्थः, न न भवति हि एतद्विवेकिनां प्रसिद्धम् ॥ १ ॥

कायव्यूहसिद्धिप्रसक्त्या योगाभ्यासप्रसक्तं प्रत्याह ।

रे योगसिद्ध जीवानां कायव्यूहो न दुर्लभः ।
विदेहमुक्तता सिद्धिः कायव्यूहो न सिद्धये ॥२॥

रे योगसिद्धेति । रे योगसिद्ध रे इति नीचसम्बोधनं योगसिद्धिप्रसक्तत्वान्नीचत्वं हे योगसिद्ध्यासक्त जीवानां जीवत्वं प्राप्तानां कायव्यूहः कायानां देहानां व्यूहः समूहो न दुर्लभो न दुःष्प्रापः किन्तु सुलभ एवेत्यर्थः, ननु योगाभ्यासे न विना जीवानां कायव्यूहो दुर्लभ एवेति चेन्न भ्रमजन्यस्वाप्नमानोरथिकप्रपञ्चादावनन्तदेहानां तदीयत्वेन दर्शनाज्जाग्रत्प्रपञ्चस्यापि विचारदृष्ट्या हिरण्यगर्भस्वप्नत्वात्तैजसहिरण्यगर्भयोरभिन्नत्वस्य पारमार्थिकत्वात्स्वप्नत्वस्य तुल्यत्वे कायव्यूहत्वसिद्धेः सुलभत्वं कायव्यूहस्य जीवानामिति भावः,

ननु तर्हि तत्र तत्र वेदान्ते तत्त्वज्ञानात्सिद्धिरवाप्यत इत्युच्यते तत्कथं सिद्धिर्निन्द्यते भवद्भिरिति चेत्तत्राह विदेहति, विदेह-मुक्तता देहरहितत्त्वेन ब्रह्मरूपतया स्थितिरेव सिद्धिः सिद्धि-शब्देनाभिहिता वेदान्ते कायव्यूहः शरीरसमूहधारणेनाने-कभोगभोगो न सिद्धये मुक्तये न भवतीति तत्र तत्र वेदान्ते निश्चितमिति भावः ॥ २ ॥

एवं कायव्यूहसिद्धिं विदूष्येदानीं परकायप्रवेशरूपां सिद्धिं दूषयन्परकायप्रवेशसिद्धीच्छया योगाभ्यासासक्तं प्रत्याह।

हे योगसिद्ध जानासि परकायप्रवेशनम् ।
परं तु नैव जानासि परकायप्रवेशनम् ॥ ३ ॥

हे योगसिद्धेति । हे योगसिद्ध हे योगधारणया सिद्धं-मन्य त्वं परकायप्रवेशनं परेषामन्यप्राणिनां कायेषु देहेषु प्र-वेशनं प्रवेशयुक्तिं जानासि वेत्सि तथाप्ययमभिमान एव तव परकायप्रवेशनं नैव वेत्सि कुत इत्यत आह परं त्विति, परन्तु तथापि त्वं परकायप्रवेशनं परं परमात्मानं कायति वक्ति भा-गलक्षणयोपदिशतीत्यर्थः, तत्परकायं महावाक्यजातं तत्त्वमस्या-दिरूपं तस्मिन्दृढमोक्षेच्छया प्रवेशनं तदर्थावगाहनं, यद्वा परका-येन महावाक्योपदेशेन प्रवेशनं प्रवेशोऽर्थादात्मनीत्यवगन्तव्यं तन्नैव जानासि नैव वेत्सीति मन्येहम् ॥ २ ॥

ननु मास्तु महावाक्यद्वारात्मनि प्रवेशनमन्यशरीरप्रवेश-रूपा सिद्धिस्तु वर्त्तत एव ममेत्याशङ्क्याह ।

भूतादयोऽपि जानंति परकायप्रवेशनम् ।
सा सिद्धिर्नैव बन्धः सा यद्धि कायप्रवेशनम् ॥२॥

भूतादय इति । भूतादयो भूताः पिशाचा आदयो मुख्या येषां ते रोगज्वरादयोऽप्यादिशब्देन ग्राह्यास्ते परकायप्रवेशनं परेषामन्यप्राणिनां कायेषु प्रवेशनं प्रवेशयुक्तिं जानन्ति विन्दन्ति तद्योनिप्रापकेन क्षुद्रकर्मणापि तादृशयोनिप्राप्त्या मा स्यादेवाऽतस्तदर्थं महांश्चित्तावरोधयोगरूपः प्रयासो नैवापेक्षितोऽतस्तयैव न कृतार्थतेति भावः, ननु परकायप्रवेशरूपा सिद्धिर्योगफलमेवातः कुतो भवद्भिर्निन्द्यत इति चेत्तत्राह सेति, यत्प्रसिद्धं कायप्रवेशनं काये शरीरे प्रवेशनं प्रवेश इति सा कायप्रवेशरूपा नैव सिद्धिर्नैव मुक्तिर्भवति किन्तु सा परकायप्रवेशरूपा बन्धो बन्धनमेव भवति हि प्रसिद्धमिदं सर्वशास्त्रेषु विवेकिषु चातः परकायप्रवेशसिद्धिसाधनभूतयोगधारणासक्तिं परित्यज्य मोक्षसाधनभूते वेदान्तश्रवणादावेव प्रवर्त्तितव्यमिति भावः ॥ ३ ॥

एवं परकायप्रवेशादरं परित्याज्य चिरजीवितसिद्धिकारणभूतयोगधारणासक्तं प्रत्याह ।

अवश्यं मरणं तर्हि कीदृशी चिरजीविता ।
जन्ममृत्युजराध्वंसि त्वं विज्ञानामृतं पिव ॥ ५ ॥

अवश्यमिति । हे योगसिद्ध यत्र चिरजीवनेऽवश्यं निश्चयेन मरणं मृत्युर्भवति तर्हि तदा सा चिरजीविता बहुकालं जीवनता कीदृशी कथं सिद्धा न कथमपीत्यर्थः, यथा जन्मतो मरणान्तं रुग्णस्य समाशतं जीवनमपि न तज्जीवनत्वेन गृह्यते विवेकिभिरैहिकपारलौकिकभोगसाधनकर्माचरणाशक्त्या मरणतुल्यत्वात्तथा मरणभीतया योगधारणायां स्थितः सन्चिरजीवित्वं साधितं तत्राप्यन्तेऽवश्यं मरणे सिद्धे निरन्तरं

तत्प्रतीत्या तज्जयेन निरन्तरं धारणायामेव स्थितस्यैहिकभोगसाधनव्यवहारे प्रवृत्त्ययोगेन भोगाभावाद्योगधारणायाश्च चिरजीवित्वसिद्धिफलकत्वे चरितार्थत्वात्तस्या अन्यलोकभोगफलकत्वाभावाच्च तदन्यधर्मादिसाधनाचरणासिद्धेश्च पारलौकिकभोगाभाववत्त्वं तस्या मोक्षसाधनश्रवणाद्यनुष्ठानासिद्धेश्चैतादृशचिरजीवित्वस्य चिररुग्णत्वसाम्याच्चिरमरणमेव तदितिज्ञात्वा तस्मिंस्तद्धारणायां चानादरो मुमुक्षुभिः कर्त्तव्य इति भावः, ननु तर्हि मरणनिवृत्तेरेव मोक्षत्वान्मोक्षस्य च भवतामपीष्टत्वाच्चिरजीवित्वं भवतामपीष्टमतः कुतो निन्द्यते तत्राह जन्मेति । त्वं भव जन्ममृत्युजराध्वंसि जन्म सदद्वैतानृतद्वैतयोरन्योन्यस्मिन्नन्योन्यारोपरूपमन्योन्यधर्मारोपरूपं चेति लक्षितं जन्म तथा मृत्युरपि विवेकेन सदद्वैतानृतद्वैतयोर्विवेचनेन पृथक्त्वावलोकनरूपं मरणमिति लक्षितो मृत्युर्लोकप्रसक्ते जन्ममरणे वा जरा वार्धक्यं तेषां विध्वंसि नाशकं विज्ञानामृतं विज्ञानं जीवब्रह्मैक्यसाक्षात्काररूपं तदेवोभयलक्षणमरणनिवर्त्तकत्वादमृतमिवामृतं मोक्षरूपं तदेवास्माकमिष्टं तत्त्वं पिब प्राशयाङ्गीकुर्वित्यर्थः, मुमुक्षूणामिष्टो मरणनिवृत्तिरूपो मोक्षो ज्ञानेनैव साध्यः स एवात्यन्तमरणनिवृत्तिरूपः परमपुरुषार्थरूपः, ननु एकदेशिकया कयाचिद्योगधारणया चिरजीविताऽतस्तदादरं परित्यज्य मुमुक्षुभिर्वेदान्तश्रवणादिष्वेवादरः कर्तव्य इति भावः ॥ ५ ॥

एवं चिरजीवितसाधनभूतयोगधारणां विदूष्येदानीं परचित्तस्थितवस्तुज्ञतारूपसिद्धिसाधनधारणारतं प्रत्याह ।

परचित्तस्थितं वस्तु त्वया ज्ञातं ततश्च किम् ।

स्वचित्तसंस्थितं वस्तु परं ब्रह्म विलोकय ॥ ६ ॥

परेति । त्वया हे योगिन्भवता धारणावता परचित्तस्थितं परेषामन्यप्राणिनां चित्तान्यतःकरणानि तेषु स्थितं चिन्तयनया वर्त्तमानं वस्तु पदार्थजातं ज्ञातमवबुद्धं ततश्च ततो ज्ञानादपि तत्र किं किं फलं न किमपीत्यर्थः, परमात्मनोन्यत्कल्पितं चित्तं तत्रस्थं वस्त्वपि कल्पितमतस्तत्सर्वेषामप्यस्ति अतस्तावन्मात्रेण कृतार्थता नैव मंतव्या तदर्थं महान्योगरूपः प्रयासश्च नैव कर्त्तव्य इति भावः, तर्हि किंकर्त्तव्यमित्यत आह स्वेति, स्वचित्तसंस्थितं स्वस्य चित्तमन्तःकरणं तत्र संस्थितं वस्तु सत्यरूपं परं ब्रह्म कार्यकारणत्वरहितं देशकालवस्तुकृतपरिच्छेदशून्यमात्मस्वरूपं विलोकय साक्षात्पश्य स्वतः पृथक्तया भ्रान्तिसिद्धं समष्टिव्यष्ट्यन्तःकरणं तत्र स्थितभ्रमरूपजगद्विषयकज्ञानस्यापि भ्रमरूपत्वादस्माकं तेनापि प्रयोजनं नास्ति तर्हि तदेकदेशव्यष्ट्यन्तःकरणस्थपरचित्तस्थितवस्तुज्ञानरूपसिद्ध्या प्रयोजनं नास्तीति किं वक्तव्यमतस्तदादरं परित्यज्य स्वचित्तबोधेन स्वचित्तस्थितब्रह्मसाक्षात्कारसाधनेषु वेदान्तश्रवणादिष्वेवादरो मुमुक्षुभिः कर्त्तव्य इति भावः ॥ ६ ॥

इदानीं दूरश्रवणदर्शनाख्यसिद्धिसाधनभूतधारणाभ्यासरतं प्रत्याह ।

निकटस्थस्यात्मनश्चेन्न स्याच्छ्रवणदर्शनम् ।
का सिद्धिः सा तु या सिद्धिर्दूरश्रवणदर्शनम् ॥७॥

निकटेति । अत्यन्तान्याव्यवहितत्वान्निकटस्थस्यातिसमीपवर्तिन आत्मनः स्वात्मनः स्वात्मवस्तुनः श्रवणदर्शनं श्रवणमित्युपलक्षणं मननिदिध्यासनयोः, तद्द्वारा दर्शनं च साक्षा-

त्कारस्तयोः समाहार एकवद्भावः, न स्याच्चेन्न भवेद्यदि तर्हि या तु योगशास्त्रे प्रसिद्धा दूरश्रवणदर्शनं दूरस्थपुरुषाद्युच्चारितशब्दानां श्रवणं तथा दूरास्थितपदार्थानां दर्शनमवलोकनं चेति सिद्धिर्विभूतिरस्ति सा का न सा सिद्धिर्गणनार्हेत्यर्थः, दूरश्रवणदर्शनरूपसिद्ध्योरनात्मविषयत्वेन मिथ्यात्वात्तदभ्यासस्य च व्यर्थश्रमत्वात्तदादरं परित्यज्यात्मविषयकवेदान्तश्रवणमनननिदिध्यासनेष्वेव प्रयत्नः कर्त्तव्यो नान्यत्रेति भावः ॥ ७ ॥

एवं दूरश्रवणदर्शनाख्ये सिद्धी प्रत्याख्यायेदानीमाकाशगमनाख्यसिद्धीच्छया तत्साधनभूतयोगधारणाभ्यासासक्तं प्रत्याह ।

भवन्ति वायसादीनामपि खेचरतादयः ।
सिद्धिभिर्नैव सिध्येत सिद्धिभिः किं प्रयोजनम् ॥८॥

भवन्तीति । खेचरतादयः खेचरताऽऽकाशगतित्वमादिर्येषामन्तर्धानप्रभृतीनां तास्तथोक्तास्ताः सिद्धयो वायसादीनामपि वायसः काक आदिर्येषां श्येनभासगरुडादीनां तेषामपि विना योगधारणां भवन्ति प्राप्नुवन्ति काकादीनामपि विना योगधारणमाकाशगमनसिद्धेरपिशब्दाद्भूतादीनामपि विना योगधारणामन्तर्द्धानादिसिद्धेः प्रत्युत तेषां योनिप्राप्तेरविहितकर्मफलत्वेन तुच्छत्वान्न तत्रादरो मुमुक्षुभिर्विधेय इति भावः एवमेव सर्वसिद्धीनामपि निष्प्रयोजनत्वं दर्शयति सिद्धिभिरिति, सिद्धिभिः पातञ्जलोक्ताभिराकाशगमनादिरूपसिद्धिभिर्नैव सिद्ध्येत नैव निश्चयेन मुच्येत तर्हि मुमुक्षूणामस्माकं सिद्धिभिः परकायप्रवेशादिरूपाभिः सिद्धिभिः किं प्रयोजनं किं फलं न किमपीत्यर्थः ॥ ८ ॥

ननु योगसिद्धिरेव मुक्तिः सा तु भवतामपीष्टातः कुतः सा निन्द्यत इत्याशङ्क्याह।

न सिद्धिर्योगसिद्धिर्हि बलवीर्यादिसिद्धिकृत्।
एतेन योगः प्रत्युक्त इति वेदान्तभाषितम् ॥९॥

नेति। हि यस्मात्कारणाद्योगसिद्धिर्योगधारणाभिर्या सिद्धिर्जायते सा न सिद्धिर्न मुक्तिर्वेदान्ते मुक्तिरेव सिद्धिपदेनोक्ता नाकाशगमनादिरूपोक्ता सिद्धिशब्देनेत्यर्थः, सा योगसिद्धिस्तु योगधारणया या सिद्धिर्जाता सा बलवीर्यादिसिद्धिकृद्बलं च शरीरदार्ढ्यं वीर्यं च शुक्रभूयस्त्वं मतापभूयस्त्वं च ते आदिनी येषामन्तर्धानोर्ध्वरेतस्त्वादीनां तेषां सिद्धिः प्राप्तिस्तस्याः कृत्कर्त्री भवति नतु मुक्तिकृदित्यर्थः, अतो मुमुक्षुभिस्तत्रासक्तिर्नैव कार्येति भावः, ननु योगप्रत्याख्यानं स्वकपोलकल्पितत्वादप्रमाणमित्याशङ्क्य तत्र श्रीबादरायणसूत्रं प्रमाणयति एतेनेति, 'एतेन योगः प्रत्युक्तः' एतेन साङ्ख्यप्रत्याख्यानेन योगो योगसिद्धान्तः प्रत्युक्तः प्रत्याख्यातो न पृतत्प्रयासः कर्त्तव्य इति भावः, इति एवं वेदान्तभाषितं वेदान्त उपनिषदर्थसंग्राहके शारीरकसूत्रेषु मध्ये भाषितं कथितमस्तीति शेषः, अतो योगमतखण्डनमिदं मुमुक्षुभिः प्रमाणपूर्वमस्तीति ज्ञेयमिति भावः॥९॥

नन्वात्मज्ञानमेव सिद्धिपदवाच्यं योगशास्त्रे प्रतिपादितमन्यसिद्धयस्तत्साधनभूतधारणाविशेषाश्च तत्तज्ज्ञानपूर्वकं तत्त्यागायैवेत्याशङ्क्यैतच्च मतं वेदान्तानुकूल्यादस्माकमिष्टमेवेति योगसिद्धान्तापहतिरित्याशयेनाह।

सिद्धिरात्मपरिज्ञानमन्तरायास्तु सिद्धयः।
इति चेद्योगवित्प्राह मतमस्माकमेव तत् ॥ १० ॥

इ० यो० मु० पु० अष्टा० पातञ्जलनिर्णयः पञ्चमः ॥ ५ ॥

सिद्धिरिति। आत्मपरिज्ञानमात्मनो ब्रह्माभिन्नस्य प्रत्यगात्मनः परिज्ञानं बोधः स एव सिद्धिः सिद्धिशब्देनोक्तः सिद्धयस्तु तदन्याऽऽकाशगमनादिरूपाः सिद्धयोऽन्तराया आत्मज्ञानस्य विघ्नरूपाः सन्ति अतस्तास्तत्र तज्ज्ञानपूर्वं तत्त्यागायैवाभिहिता इति भावः, इत्येवं योगवियोगतात्पर्यवेत्ता कश्चित्प्राह वक्ति चेद्यदि तर्हीदं तदिदं मतं मम वेदान्तिनः संमतमिष्टं न तु योगसिद्धान्तः स इति भावः ॥ १० ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयेऽष्टादशविद्यास्थाननिर्णयप्रकाशान्तर्गतः पातञ्जलनिर्णयार्थप्रकाशः पञ्चमः ॥ ५ ॥

---

अथ मीमांसानिर्णयः।

एवं पातञ्जलनिर्णयमभिधायेदानीं मीमांसानिर्णयमभिधातुं मीमांसानिर्णयाख्यं सप्तश्लोकं प्रकरणमभिधास्यन्नाह।

## अथ मीमांसानिर्णयः।

अथेति। अथ पातञ्जलनिर्णयानन्तरं मीमांसानिर्णयो मीमांसाया निर्णयो विचारः क्रियत इति शेषः, तत्र तावत्प्रथमं तन्मताग्राह्यत्वज्ञापनाय तन्मौढ्यं दर्शयति।

कष्टं कर्मेत्ययं न्यायो मतो मीमांसकस्य चेत्
आत्मनः क्लेशभागित्वं तेनैवांगीकृतं तदा ॥ १ ॥

कष्टमिति। कष्टं कर्मेत्ययं कर्म क्रिया कष्टं दुःखरूपमस्तीति शेषः, अयमुक्तः प्रसक्तो न्यायः सिद्धान्तो मीमांसकस्य मीमांसाशास्त्रज्ञस्य जैमिनेर्मत इष्टश्चेद्यदि भवेत्तदा तर्हि आत्मनः स्वस्य कर्मकर्तृत्वाभिनिवेशवतः क्लेशभागित्वं दुःखभोक्तृत्वं तेनैव मीमांसकेनैव कोशकारक्रिम्यादिनेवाङ्गीकृतं भवेदिति शे

पः, सर्वशास्त्रेषु सुखस्यैवेष्टत्वेन प्रतिपादनात्सर्वजनेषु सुखस्यैवेष्टत्वेनानुभूयमानत्वाच्चाहो मीमांसकस्यातीव मौढ्यं सिद्धं यतः कर्मणो दुःखरूपत्वं निश्चित्य तस्यैवेष्टत्वेनाङ्गीकरणमिति तत्तस्यापि मूर्खत्वमन्येषामपि तद्वचनविश्वासेन तत्र प्रवृत्तानामपि मूर्खत्वमेवेति न तत्रादरो मुमुक्षुभिः कर्त्तव्य इति भावः ॥१॥

ननु तर्हि कष्टं कर्मेति वदतः कोऽभिप्राय इत्याशङ्क्याह।

मीमांसकः सत्यमाह कष्टं कर्मेति कर्मवित्।
तर्हि तस्यापि जिज्ञास्यं ब्रह्मानिष्टनिवृत्तये ॥ २ ॥

मीमांसक इति। मीमांसको मीमांसाशास्त्रप्रणेता जैमिनिः कष्टं कर्मेति कर्म क्रिया कष्टं दुःखमेव केवलमस्तीत्येवमाह कथितवान्यत्तत्सत्यं तथ्यमेव नानृतमित्यर्थः, यतोऽसौ जैमिनिः कर्मवित्कर्मणः क्रियाया वेत्ता ज्ञाताऽस्ति कर्मारम्भकाले दुःखं प्रसिद्धमेव सर्वेषां फलं च दुःखरूपं जन्ममरणरूपं तत्र भोगानामपि ऽप्राप्तौ तत्प्राप्तौ च तद्रक्षणन्यूनत्वनाशस्वतोन्यभोगाधिक्यदर्शनादिभिः दुःखमेवेति तत्रादरो न कर्त्तव्य इत्ययमाशयो जैमिनेरिति भावः, तर्हि तदा कर्मणो दुःखरूपत्वे ज्ञाते सति तस्य मीमांसकस्यापि मुमुक्षूणां किं वाच्यमित्यपेरर्थः, अनिष्टनिवृत्तयेऽनिष्टस्य निवृत्तये नाशाय परमानन्दप्राप्त्या सर्वदुःखानि नाशयितुमित्यर्थः, ब्रह्म भूमशब्दवाच्यं परमानन्दरूपं ब्रह्म केवलं नान्यत्कर्म वा तत्फलं च वा जिज्ञास्यं जिज्ञासितुं योग्यमस्तीति शेषः, अतो मुमुक्षुभिः कर्ममीमांसायां नैवादरः कर्त्तव्य इति भावः॥२॥

ननु कर्मणो विषयजन्यसुखसाधनत्वेनेष्टत्वं स्वतो दुःखरूपत्वेप्यस्तु अतस्तत्रादरो विधेय एवेत्याशङ्क्य जन्ममरणादिरूपकर्मफलस्यातीव दुःखरूपत्वेन सर्वजनेष्वनुभूयमानत्वाद्द्वियया-

णामपि तत्फलभूतानां दुःखग्रस्तत्वेन दुःखरूपत्वाच्च स्वतोऽपि दुःखरूपत्वात्कर्मणो नादरविषयतेत्याशयेनाह ।

कर्मणा संभवेज्जन्म जन्मना कर्मसंभवः ।
तर्हि कर्मजडस्यास्य जन्ममुक्तिः कथं भवेत् ॥ ३ ॥

कर्मणेति । कर्मणा विहितनिषिद्धादिरूपया क्रियया जन्म जननं मरणस्याप्येतदुपलक्षणं सम्भवेत्स्यात्तनश्च जन्मना धृतेन कर्मसम्भवः कर्मणां विहितनिषिद्धादिरूपाणां क्रियाणां सम्भव उत्पत्तिर्भवतीति शेषः, तर्हि जन्ममरणरूपदुःखफलत्वेन कर्मणः स्वतोऽपि दुःखरूपत्वे सिद्धे तत्रैवाभिनिवेशवतो मीमांसकस्य मौर्ख्यस्यातिशयात्कर्मजडस्य कर्मणीष्टानिष्टज्ञानशून्यत्वेन प्रवृत्तस्यास्य मीमांसकस्य जन्ममुक्तिर्जन्ममरणरूपाद् दुःखान्मुक्तिर्मोक्षः कथं केनोपायेन भवेत्स्यान्न केनापीत्यर्थः ॥३॥

ननु कर्मणो जन्मफलकत्वं कुतो ज्ञातमित्याशङ्क्य ज्ञानकर्मणो मोक्षजन्मफलकत्वस्य सिद्धान्तितत्वादित्याशयेनाह ।

मुक्तिप्राधान्यमेवास्ति बोधप्राधान्यवादिनाम् ।
जन्यप्राधान्यमेवास्ति कर्मप्राधान्यवादिनाम् ॥४॥

मुक्तीति । बोधप्राधान्यवादिनां बोधस्य जीवब्रह्मैक्यज्ञानस्य प्राधान्यं मुक्तिहेतुत्वान्मुख्यत्वं वदितुं शीलं येषां ते तथोक्तास्तेषां 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः, तेषां मुक्तिप्राधान्यं मुक्तेर्मोक्षस्य प्राधान्यं मुख्यत्वमस्ति विद्यते न तु जन्मप्राधान्यमित्यर्थः, तथा कर्मप्राधान्यवादिनां कर्मणः क्रियायाः प्राधान्यं मुख्यत्वं ये वदन्ति तच्छीलानामत्रापि णिनिः, तेषां जन्मप्राधान्यं जन्मनो जननस्य प्राधान्यं मुख्यत्वमस्ति विद्यते ॥ ४ ॥

ननु मीमांसकैर्यज्ञाद्यनधिकारिणां निष्कामकर्मणि ज्ञाने वाधिकार इत्युच्यते, तथाहि।

'ये काणबधिरा मूका अन्धपङ्ग्वादयश्च ये।
तेषां निष्कामकर्माणि ज्ञानं वापि विधीयते'॥

इत्यादिनेत्याशङ्क्याह।

यः स्वयं कर्मजाड्येन यज्ञेष्वनधिकारतः।
निष्काममशुचिप्रायं जगाद स कथं शुचिः॥ ५॥

य इति। स्वयं मीमांसकः कर्मजाड्येन कर्मणि क्रियायां यज्जाड्यं मौढ्यं तेन कृत्वाऽन्धादीनां यज्ञेषु सोमचयनादिषु अनधिकारतोऽधिकाराभावाद् व्यङ्गत्वेन निष्कामं कामनारहितमशुचिप्रायं स्वतः प्रायशोऽशुद्धमन्धाद्यधिकारेण तदित्येवं जगाद कथितवान् स कर्मजडः कथं केन प्रकारेण शुचिः शुद्धः स्यान्न कथमपीत्यर्थः, अन्तःकरणशोधककर्मण्यनादरेण न कथमपि शुद्धो भवेदिति भावः॥ ५॥

ननु कर्मणामन्तःकरणशोधकत्वादस्माभिरपि तत्रैव सर्वेषां रुचिमुत्पादयितुं तदाग्रहः क्रियत इत्याशङ्क्यैतदस्मदनुकूलमेवेत्याशयेन कष्टं कर्मेतिन्यायस्य केवलकाम्यकर्मविषयत्वं सिद्धान्तयति।

शुद्धिकृत्कामनिर्मुक्तं कर्म मीमांसितं वदेत्।
तत्काम्यकर्ममीमांसा केवलं कष्टरूपिणी॥ ६॥

शुद्धिकृदिति। कामनिर्मुक्तं कामनावर्जितं कर्म वर्णाश्रमविहितं कर्म शुद्धिकृदन्तःकरणशोधकं भवति अतस्तदेवास्माभिर्मीमांसितं विचारितमिति वदेद्ब्रूयाचेत्तर्हि केवलं निष्कामकर्मवर्जिता काम्यकर्ममीमांसा काम्यकर्माभिशंसकं शास्त्रं कष्टरूपिणी दुःखरूपैव सिद्धा, काम्यकर्माणि ज्योतिष्टोम-

पुत्रेष्ट्यादीनि पारलौकिकैहलौकिकसुखसाधनभूतानि ज्ञेयानि तेषां मीमांसा विचारप्रक्रियाऽतस्तदादरं परित्यज्य मुमुक्षुभिरन्तःकरणमलनिवृत्तिमात्रसाधनं कर्म नित्यनैमित्तिकरूपमङ्गीकार्यमिति भावः ॥ ६ ॥

निष्कामकर्मणोऽन्तःकरणशुद्धिद्वारा मोक्षसाधनज्ञानप्रापकत्वप्रतिपादनेन वेदान्तानुकूल्यं प्रतिपादयति ।

कर्मभिश्चेतसः शुद्धिः शुद्ध्या विज्ञानमाप्यते ।
इति चेत्कर्मठः प्राह तर्हीदं मम संमतम् ॥ ७ ॥

इति० बो० मु० पु० अष्टा० मीमांसानिर्णयः ।

कर्मभिरिति । कर्मभिः स्वस्ववर्णाश्रमविहिताभिः क्रियाभिश्चेतसोन्तःकरणस्य शुद्धी रागादिमलनिवृत्त्या विचारयोग्यत्वरूपा निर्मलता जायत इति शेषः, तया च शुद्ध्याऽन्तः करणमलनिवृत्त्या विज्ञानं जीवब्रह्मैक्यसाक्षात्काररूपमहं ब्रह्मास्मीति ज्ञानमाप्यते प्राप्यत इत्येवं कर्मठो मीमांसकः प्राह वदति चेद्यदि तर्हि तदानीमिदं भाषणं मम मे वेदान्तिनः संमतमिष्टं जातमिति शेषः, अस्माकं वेदान्तिनामेवायं सिद्धान्तो न तु मीमांसासिद्धान्तः,

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने'त्यादिश्रुतेः,

'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यादि स्मृतेश्चेति भावः ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो मीमांसानिर्णयार्थप्रकाशः षष्ठः ॥ ६ ॥

---

अथ धर्मशास्त्रनिर्णयः।

एवं मीमांसानिर्णयमभिधायेदानीं धर्मशास्त्रं निर्णेतुं धर्मशास्त्रनिर्णयाख्यं द्विश्लोकं प्रकरणमभिदधान आह।

अथ धर्मशास्त्रनिर्णयः।

अथेति। अथ मीमांसानिर्णयानन्तरं धर्मशास्त्रनिर्णयो धर्मशास्त्रस्य निर्णयो विचारः क्रियत इति शेषस्तत्र तावद्धर्मशास्त्रविचारेणापि फलबाहुल्यादनायासेन कर्त्तुं शक्यत्वादऽकरणे प्रत्यवायाभावाच्च मोक्षधर्मस्यैव श्रैष्ठ्यं दर्शयति।

धर्मशास्त्रविचारेण मोक्षधर्मो महाफलः।
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो नविद्यते ॥ १ ॥

धर्मशास्त्रेति। धर्मशास्त्रविचारेण धर्मशास्त्रस्य धर्मप्रतिपादकशास्त्रस्य विचारेण विवेकेन कृतेन मोक्षधर्मो मोक्षसाधनभूतो निष्कामधर्मो महाफलो महद्बहु मोक्षरूपं फलं प्रयोजनं यस्य स तथोक्तोऽस्ति अतस्तस्य श्रेष्ठत्वमिति भावः, निष्कामधर्मस्य श्रैष्ठ्ये हेत्वन्तरमाह नेति, इह मोक्षसाधनभूते धर्मेऽभिक्रमनाशोऽभिक्रमस्य पौर्वापर्यक्रमस्य नाशो विघातो ऽनुक्रमनाशजन्यो दोष इत्यर्थः, नास्ति न विद्यतेऽन्यत्र काम्यधर्मेषु क्रमविघाते धर्मनाशोऽस्त्यतोऽस्य श्रैष्ठ्यमिति भावः, हेत्वन्तरमप्याह प्रत्यवाय इति, इहेत्यनुवर्तनीयमिह मोक्षधर्मे प्रत्यवायोऽकरणे दोषो न विद्यते नैवास्तीत्यर्थः, तथा च गीतायामपि भगवतोक्तं।

'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादि'ति ॥

अतोऽत्रादरो मुमुक्षुभिर्विधेय इति भावः ॥ १ ॥

अस्मिन्नर्थे याज्ञवल्क्यवाक्यं प्रमाणयितुमाह।

तथा च याज्ञवल्क्यः।

तथाचेति। तथा च तथैव याज्ञवल्क्यो याज्ञवल्क्यनामा मुनिराहेति शेषः, केन वाक्येनेत्याशङ्क्य तद्वाक्यमुदाहरतीज्येति।

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्।
अयमेव परो धर्मो यद्योगेनात्मदर्शनम् ॥ २ ॥

इ० बो० मु० पुराण० अष्टा०धर्मग्रन्थनिर्णयः ॥ ७ ॥

इज्येति। इज्याचारदमाहिंसादानस्वाध्यायकर्मणामिज्या यागक्रियाऽऽचारः स्वस्ववर्णाश्रमोचितधर्मानुष्ठानं दमो बाह्येन्द्रियाणां स्वाधीनताऽहिंसा सर्वभूतेषु दयालुता दानं सत्पात्रेषु विधिपूर्वकं द्रव्यादेः समर्पणं स्वाध्यायः स्वशाखोक्तव्रतपूर्वकं स्वशाखापाठ एतन्नामकानि यानि कर्माणि तेषां मध्ये परः श्रेष्ठो धर्मो विहितकर्मरूपोऽयमेव, अयं क इत्यतः स्पष्टं दर्शयति यदिति, यद्विवेकिषु प्रत्यक्षं योगेन जीवात्मैक्यज्ञानेनात्मदर्शनमात्मनो ब्रह्माभिन्नप्रत्यगात्मनो दर्शनं दृश्यते ब्रह्माभिन्नः प्रत्यगात्माऽनेनेति दर्शनं साक्षात्कारो भवति सोऽयमित्यर्थः, अन्तःकरणमलनिवृत्तिद्वारा ज्ञानोत्पादको निष्कामधर्म एव श्रेष्ठ इति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थ० मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशान्तर्गताष्टादशविद्यानिर्णयार्थप्रकाशे धर्मशास्त्रनिर्णयार्थप्रकाशस्सप्तमः ॥ ७ ॥

---

अथ श्रौतस्मार्तनिर्णयः।

एवं धर्मशास्त्रनिर्णयमभिधायेदानीं तत्प्रसंगाच्छ्रौतस्मार्त्त-निर्णयं वक्तुं श्रौतस्मार्तनिर्णयाख्यं द्विश्लोकं प्रकरणमभिदधान आह।

## अथ श्रौतस्मार्त्तनिर्णयः।

अथेति। अथ धर्मशास्त्रनिर्णयानन्तरं प्रसङ्गप्राप्तो धर्मशास्त्रनिर्णयप्रसङ्गेन प्राप्तो वर्णनायागतः श्रौतस्मार्त्तनिर्णयः श्रौताख्यकर्मणः स्मार्त्ताख्यकर्मणश्च निर्णयो विचारः क्रियत इति शेषः, तमेवाह।

श्रवणं श्रौतमित्युक्तं स्मरणं स्मार्त्तमुच्यते।
श्रवणं मननं चेति श्रौतस्मार्त्तविनिर्णयः॥ १॥

श्रवणमिति। श्रवणं शारीरकप्रथमाध्यायोक्तश्रुतिसमन्वयेन सर्ववाक्यानां तात्त्पर्यभूतब्रह्मचिन्तनपूर्वकं वेदान्तश्रवणमेव श्रौतनामकं कर्मैवमुक्तं कथितं मुनिभिरिति शेषः, स्मरणं श्रुत्युक्तार्थानुचिन्तनमेव स्मार्तं कर्मैवमुच्यते कथ्यते विवेकिभिरिति शेषः, इत्यतो हेतोः श्रवणं मननं च सर्ववेदान्तवाक्यानामादिमध्यावसानेषु अखण्डैकरसे तात्पर्यावधारणलक्षणं श्रवणं मननं च श्रुतार्थस्य युक्त्या सम्भावितत्वानुसन्धानलक्षणं शारीरकद्वितीयाध्यायोक्तं मननमपि कर्त्तव्यमित्ययं श्रौतस्मार्त्तविनिर्णयः श्रौतस्मार्ताख्यकर्मणो विनिर्णयो विवेकः सिद्धान्त इत्यर्थः, ज्ञेय इति शेषः॥ १॥

प्रकारान्तरेणाप्याह।

श्रुतं श्रीगुरुवक्त्रेभ्यः स्मृतमेव न विस्मृतम्।

श्रौतस्मार्तमिदं येषां श्रौतस्मार्त्तविदो हि ते ॥ २ ॥

श्रुतमिति । श्रीगुरुवक्त्रेभ्यो वैराग्यादिसम्पत्तिमन्तो ये गुरवो महावाक्योपदेष्टारस्तेषां वक्त्रेभ्यो मुखेभ्यः श्रुतं श्रवणेन विषयीकृतं तदेव श्रौतं ज्ञेयं, तत्स्मृतमेव सर्वदानुसन्धत्तमेव न विस्मृतं विस्मरणविषयं नैव कृतं तदेव स्मार्त्तं ज्ञेयम्, इदं श्रवणस्मरणरूपं श्रौतस्मार्त्तं श्रौतस्मार्त्ताख्यं कर्म येषां विवेकिनामस्ति हि ते विवेकिन एव प्रसिद्धाः श्रौतस्मार्त्तविदः श्रौतस्मार्त्ताख्यकर्मवेत्तारो भवन्ति नान्ये ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो श्रौतस्मार्त्तनिर्णयार्थप्रकाशोऽष्टमः ॥ ८ ॥

---

अथ ङ्गानि ।

एवं श्रौतस्मार्त्तनिर्णयमभिधायेदानीमङ्गानि निर्णेतुमङ्गनिर्णयाख्यं प्रकरणमभिदधान आह ।

अथाङ्गानि ।

अथेति । अथ श्रौतस्मार्त्तनिर्णयानन्तरमङ्गानि निर्णीयन्ते शिक्षादीन्यङ्गानि विचार्यन्त इत्यर्थः, तत्रादावङ्गानि संगृह्य दर्शयति ।

शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च

ज्योतिषं च षडङ्गानि तेषामेव निर्णयः ॥ १ ॥

शिक्षेति । शिक्षा शिक्षानामकं पाणिनिकृतमेकं, तथा कल्पः कल्पनामकं श्रुत्यर्थानां कर्मोपासनादिरूपाणां प्रतिपादकं द्वितीयं, तथा व्याकरणं शब्दशास्त्रं तृतीयं, तथा निरुक्तं

निरुक्तनामकं यास्करचितं वेदनिघण्ट्वर्थसंग्राहकं चतुर्थं, तथा च्छन्द एव च च्छन्दोनामकं वैदिकलौकिकच्छन्दोलक्षणज्ञापकं शास्त्रं पिङ्गलनागनिर्मितं पञ्चमं, तथा ज्योतिषं च ज्योतिषनामकं यज्ञार्थकालप्रतिपादकं पञ्चसम्वत्सरमयमित्यादिवाक्यकदम्बरूपं षष्ठम्, एतानि षट् षट्सङ्ख्यानि अङ्गानि वेदस्यावयवरूपाणि तेषामङ्गानामेषो वक्ष्यमाणो विनिर्णयो विचारो ज्ञेयः ॥ १ ॥

अथशिक्षानिर्णयः।

तत्रादौ शिक्षानिर्णयाख्यमेकश्लोकं शिक्षां निर्णेतुं प्रकरणमारभमाण आह।

अथ शिक्षानिर्णयः।

अथेति। अथाङ्गनिरूपणप्रतिज्ञानानन्तरं शिक्षानिर्णयः शिक्षायाः शिक्षातात्पर्यस्य निर्णयो विचारः क्रियत इति शेषः, तमेवाह।

शुद्धो विदेहभावेन शिक्षितः शिक्षया यया।
सा शिक्षा यदि न प्राप्ता शिक्षया शिक्षितं किमु॥२॥

शुद्धेति। यया विवेकिप्रसिद्धया शिक्षया महावाक्योपदेशरूपया शिक्षित उपदिष्टः सन् विदेहभावेन देहासन्तासत्त्वज्ञानेन शुद्धो देहाद्यस्पृष्टो भवति प्राणी सा शिक्षा स उपदेशो यदि यर्हि न प्राप्ता न लब्धा गुरुतस्तर्हि तदा शिक्षया पाणिन्युक्तया शिक्षया यच्छिक्षितं वर्णस्वरस्थानादि ज्ञातमपि तत्किमु अतितुच्छं तदिति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतः शिक्षानिर्णयार्थप्रकाशो नवमः॥ ९॥

एवं शिक्षानिर्णयं निरूप्येदानीं कल्पं निर्णेतुं कल्पनिर्णयाख्यं द्विश्लोकं प्रकरणमारभमाण आह ।

अथ कल्पसूत्रनिर्णयः ।

अथेति । अथ शिक्षानिर्णयानन्तरं कल्पसूत्रनिर्णयः कल्पसूत्राणां निर्णयो विचारः क्रियत इति शेषः, तत्र तावत्सर्वकल्पनाधारभूतं निःशेषविकल्परहितं न ज्ञातं चेत्तत्र कल्पितविषयनिर्णायककल्पसूत्राणां निरर्थकतामाह ।

कल्पानां प्रथमः कल्पो निर्विकल्पमिदं न चेत् ।
विकल्पसंकल्पमयै कल्पसूत्रैः किमर्जितम् ॥ १ ॥

कल्पानामिति । कल्पानां कल्प्यन्ते निरूप्यन्ते कर्माण्युपासनानि च यैस्ते कल्पास्तेषां कल्पाभिधसूत्राणां कल्पनानां चाधारत्वेन कल्पितत्वात्प्रथमः पूर्वः कारणभूत इत्यर्थः, कल्प आत्मा निर्विकल्पं निर्गता विकल्पा विपरीतनामजात्यादिकल्पना यतः कर्माणि यथा भवन्ति तथेदमिति साक्षान्न वेत्ति चेन्न जानाति यदि, यद्वा सर्वकल्पनाधारभूत आत्मैव निर्विकल्पं ब्रह्म तदिदमिति साक्षान्न कृतं चेद्यदीत्यर्थः ।

सर्वकल्पनाधारभूतं ब्रह्मैव निर्विकल्पपदेनोक्तोऽहमादिकल्पनाधारभूतः प्रसगात्मा प्रथमकल्पपदाभ्यामुक्तस्तयोः कल्पितं सर्वं जगदिदमिति पदेनोक्तं तत्र 'नेह नानास्ति किञ्चनातोऽन्यदार्त्तमि'त्यादिश्रुतिभ्यो द्वैतजाते बाधितदृष्टिं कृत्वा 'तत्त्वमसि, प्रज्ञानं ब्रह्माहंब्रह्मास्मि, अयमात्मा ब्रह्मे'त्यादिश्रुतिभ्यस्तत्त्वमादिपदार्थभूतयोः शोधितयोः शुद्धजीवेश्वरयोः प्रत्यक्षपरोक्षत्वादिविरुद्धांशत्यागेन चिन्मात्रस्वरूपत्वेनैक्यमनुभूय यावत्प्रारब्धमाभासमात्रत्वेन दृश्यमानं जगज्जातं 'सर्वं खल्विदं ब्रह्मे'ति-

श्रुतिदृष्ट्या सर्वत्र ब्रह्मदृष्टिर्न कृता चेद्यदीत्यर्थः, तर्हि तदा विकल्पसङ्कल्पमयैर्विकल्पसङ्कल्पप्रचुरैः कल्पसूत्रैः कल्पाभिधैः सूत्रैः किमर्जितं किं सम्पादितं न किमपीत्यर्थः, तैः प्रतिपादितस्यावस्तुत्वादिति भावः ॥ १ ॥

ननु कल्पविचारो विहितस्तत्किं निन्द्यते भवतेत्याशङ्क्य मुमुक्षूणां ब्रह्मभावकल्पस्यैव विहितत्वात्तदभावे निरर्थकत्वं कल्पाभ्यासस्येत्याशयेनाह ।

कल्पको येन कल्पेन ब्रह्मभूयाय कल्पते ।
स कल्पो नैव क्लृप्तश्चेत्कल्पसूत्रं निरर्थकम् ॥ २ ॥

कल्पक इति । कल्पकः कल्पनाकुशलो येन कल्पेनाहंब्रह्मास्मीति अहं ब्रह्मशब्दार्थयोः शुद्धजीवब्रह्मणोर्भागलक्षणया प्रत्यक्षत्वपरोक्षत्वरूपविरुद्धांशत्यागेन चिन्मात्रैक्यलक्षणलक्षितसाक्षात्करणरूपकल्पेन कल्पनारूपेण पृथक्त्वस्य कल्पितत्वादपृथक्त्वस्यापि कल्पितत्वमिति भावः, ब्रह्मभूयाय ब्रह्मभावमङ्गीकर्त्तुं कल्पते योग्यो भवति स उक्तलक्षणः कल्पः कल्प्यते ब्रह्मभावोऽनेनेति कल्पोऽहंब्रह्मास्मीति साक्षात्काररूपः क्लृप्तः प्राप्तो नैव चेन्न विद्यते यदि तर्हि कल्पसूत्रं कल्पसूत्रनामकं वाक्यजातं निरर्थकं व्यर्थं ज्ञेयं कल्पसूत्रप्रतिपादितेर्थे मुमुक्षुप्रयोजनाभावात्तत्र तैर्नाभिनिवेशः कर्त्तव्य इति भावः ॥२॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतः कल्पसूत्रनिर्णयार्थप्रकाशो दशमः ॥ १० ॥

---

अथ व्याकरणनिर्णयः ।

एवं कल्पनिर्णयमभिधायेदानीं व्याकरणं निर्णेतुं व्याकरणनिर्णयाख्यं त्रिश्लोकं प्रकरणमभिदधान आह ।

## अथ व्याकरणनिर्णयः ।

अथेति। अथ कल्पनिर्णयानन्तरं व्याकरणनिर्णयो व्याकरणस्य व्याकरणशास्त्रस्य निर्णयस्तात्पर्यविचारः क्रियत इति शेषः, तत्र तावन्महावाक्यार्थज्ञानाय महावाक्यस्थपदानामर्थस्य च व्युत्पत्तये व्याकरणाभ्यासोऽभिहितस्तदभावे च स व्यर्थ इत्याह।

पदव्युत्पत्तिरन्वेष्या महावाक्यार्थबुद्धये ।
स एव यदि न ज्ञातस्तर्हि व्याकरणेन किम् ॥१॥

पदव्युत्परिति। महावाक्यार्थबुद्धये महान्ति श्रेष्ठानि यानि वाक्यानि तत्त्वमसीत्यादीनि तेषामर्थस्तात्पर्यं तस्य बुद्धिर्बोधस्तस्मै तदर्थमित्यर्थः, पदव्युत्पत्तिः पदानां तत्त्वमसीत्यादीनां व्युत्पत्तिर्ज्ञानमन्वेष्याऽन्वेष्टव्या पदबोधोपयोगितयैव केवलं व्याकरणमध्येतव्यमिति भावः, स एव महावाक्यार्थ एव यदि यर्हि नज्ञातस्तदा व्याकरणे न व्याकरणशास्त्रेण तदध्ययनेनेत्यर्थः । किं कृतमिति शेषः, न किमपि कृतमित्यर्थः, महावाक्यार्थज्ञानाभावे व्याकरणाध्ययनप्रयासो व्यर्थ एवेति भावः ॥ १ ॥

व्याकरणपदनिरुक्त्यापि तमेवार्थं द्रढयति ।

येनेदं व्याकृतं विश्वं तदेव व्याकृतं न चेत् ।
बृहन्नो वेत्ति यत्तर्हि तद्धि व्याकरणेन किम् ॥ २ ॥

येनेति । येन ब्रह्मणेदं विश्वं ज्ञानविषयभूतं प्रत्यक्षं जगद्व्याकृतं विविधाकारवत्कृतं तदेव तद्ब्रह्मैव व्याकृतं जगद्विपरीताकारेणऽखण्डसच्चिदानन्दरूपं साक्षाज्ज्ञातं न चेन्न यदि तर्हि

उक्तमेवार्थं स्पष्टमाह बृहदिति, बृहद्ब्रह्म यद्यदा नो वेत्ति न जानाति तर्हि तदा व्याकरणेन व्याकरणशास्त्राभ्यासेन किं कृतमिति शेषः, न किमपि कृतमित्यर्थः । यद्वा किं फलं न किमपीत्यर्थः, अतः पदव्युत्पत्तिपर्यन्तमेव व्याकरणाभ्यासो विहितस्ततो वेदान्तश्रवणादिप्रयास एव कार्यो मुमुक्षुभिरिति भावः॥२॥

ननु महावाक्यार्थोपयोगितया महावाक्यपदव्युत्पत्तिस्तत्प्रयोजनतयैव व्याकरणोपयोगश्चेत्तत्रान्येपि शब्दाः कुतः साधिता इत्याशङ्क्य प्रकृत्यर्थप्रत्ययार्थज्ञानद्वारा तेषां पदार्थानां स्वरूपेण हेयत्वज्ञानेन तांस्त्यक्त्वा महावाक्यश्रवणादिषु प्रवृत्त्यर्थमित्याशयेनाह ।

यतस्तु परिनिष्पन्नैः शब्दैः शास्त्रान्मुहुर्मुहुः ।
हेयादेयौ न विज्ञातौ तर्हि व्याकरणेन किं ॥ ३ ॥

इति श्रीन० बो० मु० पु० अष्टा० व्याकरणनिर्णयः ॥ १ ॥

यत इति । यस्मादेव व्याकरणाच्छास्त्रात्परिनिष्पन्नैरुत्पन्नैः शब्दैर्नामभिर्मुहुर्मुहुर्वारं वारं हेयोपादेयावनात्मत्वेन हेयस्त्याज्यो मायातत्कार्यरूपः प्रपञ्च आदेयश्चात्माऽऽत्माकूटस्थासङ्ग इत्यादिशब्दानामर्थभूतस्तौ न विज्ञातौ न बुद्धौ यदि तर्हि तदा व्याकरणेन व्याकरणशास्त्राभ्यासेन किं किं फलं भवति न किमपीत्यर्थः, अतो व्याकरणस्यानन्तशब्दसाधकत्वेपि महावाक्यपदसाधनपरतैवेति मुमुक्षुभिस्तदधीत्य महावाक्यार्थनिष्ठैव विधेया न व्याकरणाध्ययनाभिनिवेशः कार्य इति भावः ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थ० मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो व्याकरणनिर्णयार्थप्रकाश एकादशः ॥ ११ ॥

एवं व्याकरणनिर्णयमभिधायेदानीं निरुक्तं निर्णेतुं निरुक्तनिर्णयाख्यमेकश्लोकं प्रकरणमभिधान आह।

## अथ निरुक्तनिर्णयः।

अथेति। अथ व्याकरणनिर्णयानन्तरं निरुक्तनिर्णयो निरुक्तस्य यास्कप्रणीतस्य 'समाम्नायः समाम्नात' इत्यादिवाक्यकदम्बरूपस्य निरुक्ताख्यग्रन्थस्य निर्णयो मुमुक्षुग्राह्यो विचारः क्रियत इति शेषः, तमेव निरुक्तशब्दनिरुक्त्याह।

निरुक्तं चिदवस्थानं निरुक्तं बोधनं चितः।
तन्निरुक्तं न चेद्वेद निरुक्तस्य किमुक्तिभिः॥ १॥

इति श्री०बो०मु०पु०अ०निरुक्तनिर्णयः॥ १२॥

निरुक्तमिति। चिदवस्थानं चितश्चिन्मात्ररूपस्यात्मनोऽवस्थानं स्थितिर्निरुक्तं निर्गतं निवृत्तमुक्तं भाषणं यस्मात्तन्निरुक्तं वचनाविषयमित्यर्थः, अस्तीति शेषः, तथा चितश्चिन्मात्ररूपस्यात्मनो बोधनं बोध्यतेऽनेनेति बोधनमुपदेशस्तन्निरुक्तं वागविषयं 'यतो वाचो निवर्त्तते अप्राप्य मनसा सह, यद्वाचानभ्युदितमवचो नैव प्रोवाच स ह तूष्णीं बभूवे, त्यादिश्रुतेः, तदुक्तविधं निरुक्तं चिदवस्थानं चिदवबोधनरूपं न वेद न वेत्ति चेद्यदि तर्हि निरुक्तस्य यास्ककृतनिरुक्ताभिधग्रन्थस्योक्तिभिर्भाषणैः किं किं फलं मुमुक्षूणां न किमपीत्यर्थः, अतोऽन्यविषयकानिरुक्तादरं परित्यज्यात्मज्ञानविषयकनिरुक्तवाक्यश्रवणाद्येवावर्तनीयमिति भावः॥ १॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो निरुक्तनिर्णयार्थप्रकाशो द्वादशः॥ १२॥

अथ च्छन्दोनिर्णयः ।

एवं निरुक्तनिर्णयं कृत्वा च्छन्दो निर्णयं कर्त्तुं छन्दोनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

अथ च्छन्दोनिर्णयः ।

अथेति । अथ निरुक्तनिर्णयानन्तरं छन्दोनिर्णयश्छन्दः शब्दवाच्यस्याऽर्थस्य निर्णयो विचारः क्रियत इति शेषः, तमेवाह ।

तच्छन्दो यदि न ज्ञातं स्वच्छन्दो येन खेलति ।
यरस्तजभ्नमोपेतैश्छन्दोभिः किं प्रयोजनम् ॥१॥

इ० बोध० मु० पु० अ० छन्दोनिर्णयः ॥ १३ ॥

तदिति । तज्जीवन्मुक्तेषु प्रसिद्धं छन्दः स्वाभाविकव्यवहाररूपं सहजवर्त्तनं न ज्ञातं न विदितं यदि यर्हि तर्हि किं येन स्वच्छन्दचारित्वेन स्वच्छन्दः स्वाधीनः सन् खेलति क्रीडति तदिति योज्यं, तर्हि यरस्तजभ्नमोपेतैः 'लघ्वादिसमन्वितं यकाराख्यमि'ति पिङ्गलसूत्रोक्तलक्षणलक्षितो यो यगणः, तथा रो रगणो 'लघुमध्यमं तु रेफमि'त्युक्तलक्षणः, सः सगणः 'सकारमन्ते गुरुनिबद्धमि'त्युक्तलक्षणः, तस्तगणो 'लध्वन्त्यं हि तकारमित्युक्तलक्षणः, जो जगणो 'जकारमुभयोर्लघुं विजानीयादि'त्युक्तलक्षणः, भो भगण 'आदिगुरुं च भकारमि'त्युक्तलक्षणः, नो नगणो 'नकारमिह पैङ्गले त्रिलघुमित्युक्तलक्षणः, मो मगणः 'त्रिगुरुं विद्धि मकारमि'त्युक्तलक्षणः, एतैरुक्तलक्षणैर्गणैरुपेतानि युक्तानि तैश्छन्दोभिरार्यादिवृत्तादिविशेषोपलक्षितैश्छदःशब्दवाच्यैः पद्यविचारैरित्यर्थः, किं प्रयोजनं किं फलं मुमुक्षूणां न किमपीत्यर्थः,छन्दःशास्त्रादरं परित्यज्य मुमुक्षुभिर्वेदान्तश्रवणादिष्वेवादरो विधेय इति भावः ॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपतौ

मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशोऽष्टादश-
विद्यास्थाननिर्णयार्थप्रकाशान्तर्गतश्छन्दोनिर्णयार्थप्र-
काशस्त्रयोदशः ॥ १३ ॥

---

अथ ज्यौतिषनिर्णयः ।

एवं छन्दोनिर्णयमभिधायेदानीं ज्यौतिषं निर्णेतुं ज्यौतिषनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

## अथ ज्यौतिषनिर्णयः ।

अथेति । अथ च्छन्दोनिर्णयानन्तरं ज्यौतिषनिर्णयो ज्यौतिषस्य ज्यौतिषशास्त्रस्य निर्णयो मुमुक्षुविहितो विचारः क्रियत इति शेषः, तमेवाह ।

ज्योतिषा येन सूर्यादि ज्योतिर्भाति न वेत्ति तत् ।
यदि येन तदा तेन ज्योतिर्ग्रन्थेन किं कृतम् ॥ १ ॥

इति श्रीनरहरकृतौ बो॰मु॰ पु॰ अ॰ ज्योतिःशास्त्रनिर्णयः ।

ज्योतिषेति । येन विदुषां प्रत्यक्षभूतेन ज्योतिषा स्वयं प्रकाशरूपेण चिद्रूपेण 'तदेव ज्योतिषां ज्योतिः, आत्मैवास्य ज्योतिर्भवती'त्यादिश्रुतिभ्यः, सूर्यादि सूर्य आदिस्र आदिर्यस्याग्निचन्द्रवाग्रूपस्य ज्योतिषस्तत्तथोक्तं ज्योतिर्व्यवहारप्रकाशसाधनं सूर्यादिरूपं भाति प्रकाशते सूर्यादीनां ज्योतिष्ट्वे श्रुतयस्तावत्'सूर्य एवास्य ज्योतिर्भवति, चन्द्रमा एवास्य ज्योतिर्भवति अग्निरेवास्य ज्योतिर्भवति वागेवास्य ज्योतिर्भवती'त्यादयः, तदात्मरूपं ज्योतिर्येन ज्यौतिषशास्त्रेण न वेत्ति न जानाति यदि यर्हि तदा तर्हि तेन लोकप्रसिद्धज्योतिषा सूर्यादेर्निरूपणप्रधानेन ज्योतिर्ग्रन्थेन ज्यौतिषशास्त्रेण किं कृतं किं

सम्पादितं न किमपीत्यर्थः, तत्साध्यस्य सर्वार्थस्यानात्मत्वादिति भावः, सूर्यादिज्योतिष आत्मज्योतिःप्रकाश्यत्वे श्रुतयस्तावद् 'येन सूर्यस्तपति तेजसेद्धः, तस्य भासा सर्वमिदं विभाति, आत्मनैव ज्योतिषास्ते'इत्याद्याः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो ज्यौतिषनिर्णयार्थप्रकाशश्चतुर्दशः ॥ १४ ॥

---

अथ वेदनिर्णयः ।

एवमङ्गानिनिर्णीयाङ्गिनो वेदान्निर्णेतुमाह ।

अथ वेदाः ।

अथेति । अथाङ्गनिर्णयानन्तरं वेदा ऋगाद्याश्चत्वारो वेदा निर्णीयन्त इति शेषः, तेष्वादावृग्वेदं निर्णेतुमृग्वेदनिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह ।

तत्रादावृग्वेदनिर्णयः ।

तत्रेति । तत्र वेदनिर्णय आदौ प्रथममृग्वेदनिर्णय ऋगुपलक्षितमन्त्रसमूहस्य वेदस्य ज्ञानसाधनभूतस्य निर्णयो मुमुक्षूपयोगी विचारः क्रियत इति शेषः, तमेवाह ।

यः परानन्ददः स्वात्मा तं त्वा वयं यजामहे ।
इत्याहुतो न विश्वात्मं ऋचा हौत्रिण किं तदा ॥ १ ॥

इति श्रीन० बो० मु० पु० अ० ऋग्वेदनिर्णयः ॥ १५ ॥

य इति । यो विवेकिषु प्रसिद्धः परानन्ददः परो निरतिशयो य आनन्दः सुखं तं ददाति यच्छति स तथोक्तः 'एष

ह्येवानन्दयाती'तिश्रुतेः, स्वात्मा स्वरूपभूत आत्माऽस्तीति तमुक्तलक्षणं त्वा त्वामात्मरूपं यजामह इदंममास्पदसर्वविषयाहुत्या पूजयाम इत्येवं विश्वात्मा विश्वस्य जगत आत्मा स्वरूपभूतो न आहुतः सर्वजगदाहुत्या न तर्पितो यदि यर्हि तदा तर्हि ऋचा ऋगुपलक्षितेन 'इत्थं भूतलक्षणे' इति तृतीया, हौत्रेण हौत्राख्यकर्मणा किं किं फलं मुमुक्षूणां न किमपीत्यर्थः, सर्वर्ग्वेदमन्त्राणामात्मज्ञानमेव फलमतोन्यकर्मप्रतिपादकमन्त्राननाहृत्यात्मज्ञानप्रतिपादकमन्त्रसमूह एवादरो विधेय इति भावः॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थ० मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गत ऋग्वेदनिर्णयार्थप्रकाशः पञ्चदशः ॥ १५ ॥

---

अथ यजुर्वेदनिर्णयः ।

एवमृग्वेदं निर्णीयेदानीं यजुर्वेदं निर्णेतुं यजुर्वेदनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

## अथ यजुर्वेदनिर्णयः ।

अथेति । अथर्ग्वेदनिर्णयानन्तरं यजुर्वेदनिर्णयो यजुर्वेदस्य निर्णयो मुमुक्षूणामुपयोगी विचारः क्रियत इति शेषः, तमेवाह ।

लोहिता धवला कृष्णा प्रजाहेतुरजा यदि ।
नोपालब्धा ब्रह्मसत्रे यजुषाध्वर्यवेण किम् ॥ १ ॥

इति श्रीन०बोध०मु०पु०अ०यजुर्वेदनिर्णयः ॥ १६ ॥

लोहितेति । लोहिता रक्ता रजोगुणवतीत्यर्थः, धवला शुक्ला सत्त्वगुणवतीत्यर्थः, कृष्णा श्यामा तमोगुणवतीत्यर्थः, एतैर्गुणैर्जगज्जननप्रकाशावरणस्वभावेतिभावः, प्रजाहेतुः प्रजा-

यन्त उत्पद्यन्त इति प्रजा महदाद्याः प्रकृतिविकृतिरूपास्तासां हेतुः कारणभूता जगज्जनयित्रीत्यर्थः, अजा मायात्वादेवानुत्पन्ना गुणसाम्यावस्थारूपा शक्तिर्ब्रह्मसत्रे ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु व्यापकं तदेव सत्रमिव सत्रं सर्वसत्रफलरूपत्वाद् ब्रह्मरूपं सदात्मवस्तु त्रायते रक्ष्यतेऽस्मिन्निति सत्रं 'ब्रह्मार्पणं ब्रह्म हवि'रित्यादिनोक्तलक्षणं तस्मिन्निति वा, नोपालब्धा लौकिकयज्ञे प्रसिद्धाऽजेव न हिंसिता 'सर्वं खल्विति, नेह नानास्ती'त्यादिश्रुतिदृष्ट्या न बाधितेत्यर्थः, यदि तर्हि तदा यजुषा यजुर्मन्त्रैर्निर्वाहितेनाध्वर्यवेणाध्वर्युकृतेन कर्मणा किं किं फलं न किमपीत्यर्थः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो यजुर्वेदनिर्णयार्थप्रकाशः षोडशः ॥ १६ ॥

---

अथ सामवेदनिर्णयः ।

एवं यजुर्वेदं निर्णीयेदानीं सामवेदं निर्णेतुं सामवेदनिर्णयाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

## अथ सामवेदनिर्णयः ।

अथेति । अथ यजुर्वेदनिर्णयानन्तरं सामवेदनिर्णयः सामवेदस्य गीतिप्रधानस्य वेदस्य निर्णयो विचारो मुमुक्षुग्राह्यः क्रियत इति शेषः, तमेवाह ।

छान्दोग्येनोपनिषदा प्रेमगद्गदया गिरा ।
साम्ना गीतं न चेद्ब्रह्म सामोद्गात्रेण किं तदा ॥१॥

इति श्रीन० बो० मु० पु० अ० सामवेदनिर्णयः ॥ १ ॥

छान्दोग्येनेति । च्छान्दोग्येन च्छान्दोग्यनाम्नोपनिषदोप निषण्णं समीपे स्थितं विचारद्वारा श्रेयो मुक्तिरूपं यस्यां सोपनिषत्तया, आविष्टलिङ्गत्वेन विशेषणविशेष्यभावस्तदुक्तं ।

'लिङ्गसङ्ख्याविभेदेपि विशेषणविशेष्यता ।

विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ॥

आविष्टलिङ्गं तत्प्रोक्तमि'ति । प्रेमगद्गदया गिरा प्रेम्णा निरतिशयस्नेहेन कृत्वा गद्गदयाऽवरुद्धकण्ठनिःसृतया गिरा वाण्या ब्रह्म देशकालवस्तुकृतपरिच्छेदहीनमात्मवस्तु गीतं गानविषयीकृतं न चेन्न यदि तदा तर्हि सामौद्गात्रेण सामप्रोक्तेनौद्गात्राख्यकर्मणा किं किं फलं भवेन्न किमपीत्यर्थः, अतोऽनात्मविषयकं सर्वं साम परित्यज्यात्मविषयकमेव साम श्रोतुं मन्तुं निदिध्यासितुं गातुमादरो विधेयोमुमुक्षुभिरिति भावः॥१॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतः सामवेदनिर्णयार्थप्रकाशः सप्तदशः ॥ १७ ॥

---

अथाथर्वणवेदनिर्णयः ।

एवं सामवेदनिर्णयमभिधायेदानीमथर्वणवेदं निर्णेतुमथर्वणवेदनिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह ।

## अथाथर्वणवेदनिर्णयः ।

अथेति । अथ सामवेदनिर्णयानन्तरमथर्वणवेदनिर्णयोऽथर्वणवेदस्याथर्वणनाम्नो वेदस्य निर्णयः मुमुक्षूपयोगी विचारः क्रियत इति शेषः, तमेवाह ।

आथर्वणी ब्रह्मविद्या पिप्पलादमुखाच्च्युता ।

चमत्कृता न हृदये किं फलं तर्ह्यथर्वभिः ॥ १॥

इति श्रीनर० बो० मु०पु०अ० अथर्वणवेदनिर्णयः ॥ १२ ॥

आथर्वणीति । आथर्वण्यथर्वणवेदोद्भवा ब्रह्मविद्या पिप्पलादमुखाच्च्युता पिप्पलफलानि अत्ति भक्षयतीति पिप्पलाद एतेन वैराग्यातिशयो ध्वनितः, तस्य मुखाद्वदनाच्च्युता निःसृताऽनेन मुमुक्षुभिरत्यादरणीयत्वं ध्वनितं, ब्रह्मविद्या ब्रह्मणो देशकालवस्तुकृतपरिच्छेदरहितस्यात्मवस्तुनो विद्या ज्ञापिका ब्रह्मज्ञानप्रतिपादयित्रीत्यर्थः, हृदयेन्तःकरणे चमत्कृताऽऽविर्भूता न चेन्न यदि तर्हि तदाऽथर्वभिरन्यैरथर्वणप्रयोगैः किं फलं किं प्रयोजनं न किमपीत्यर्थः, ब्रह्मज्ञानेतरविषयप्रतिपादकमथर्वणवाक्यसमूहमनादृत्य ब्रह्मज्ञानविषयकाथर्वणवाक्यसमूहश्रवणादिष्वेव प्रवृत्तिर्मुमुक्षुभिः कर्त्तव्येति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतोऽथर्वणवेदनिर्णयार्थप्रकाशोऽष्टादशः ॥ १८ ॥

---

अथायुर्वेदनिर्णयः ।

एवं वेदनिर्णयमभिधायेदानीमायुर्वेदं निर्णेतुमायुर्वेदनिर्णयाख्यमेकश्लोकं प्रकरणं वक्तुकाम आह ।

## अथायुर्वेदनिर्णयः ।

अथेति । अथाथर्ववेदनिर्णयानन्तरमायुर्वेदनिर्णय आयुषो वेदस्य ज्ञानस्य ज्ञानसाधनस्य चिकित्साशास्त्रस्येत्यर्थः, निर्णयो मुमुक्षूपयोगी सिद्धान्तः क्रियत इति शेषः, तमेवाह ।

ज्ञानामृतं न चेत्पीतममृतत्वं न साधितम्।
मृत्युरेव पुनः प्राप्त आयुर्वेदो निरर्थकः॥ १॥

इति श्रीन० बो० पु० अ० आयुर्वेदनिर्णयः॥ १९॥

ज्ञानामृतमिति। ज्ञानामृतं ज्ञायते ब्रह्मानेनेति ज्ञानं महावाक्यजन्यं साक्षात्काररूपमहं ब्रह्मास्मीत्याकारं तदेवामृतं पीयूषं जरामरणादेर्निवर्त्तकत्वात् तत्पीतं प्राशितं न नास्ति चेद्यदि तर्हि तदाऽमृतत्वं न मृतं ब्रह्म तस्य भावस्तत्त्वं न साधितं न संपादितं स्यात्तदा तर्हि पुनर्भूयो मृत्युरेव मरणमेव प्राप्तो लब्धस्तदाऽऽयुर्वेद आयुषः साधनभूतं यज्ज्ञानं तत्प्रतिपादको ग्रन्थो निरर्थको व्यर्थ इत्यर्थः, अत आयुर्वेदादरं परित्यज्य मोक्षसाधनभूतज्ञानसाधनवेदान्तश्रवणादिष्वादरो मुमुक्षुभिः कर्त्तव्य इति भावः॥ १॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकशान्तर्गत आयुर्वेदनिर्णयार्थप्रकाश एकोनविंशः॥ १९॥

---

अथ धनुर्वेदनिर्णयः।

एवमायुर्वेदं निर्णीयेदानीं धनुर्वेदं निर्णेतुं धनुर्वेदनिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह।

## अथ धनुर्वेदनिर्णयः।

अथेति। अथायुर्वेदनिर्णयानन्तरं धनुर्वेदनिर्णयो धनुषो धनुरुपलक्षितस्य शस्त्रास्त्रसमूहस्य वेदः प्रेरणाकर्षणादिज्ञानप्रतिपादकं शास्त्रं तस्य निर्णयो मुमुक्षुसंमतः सिद्धान्तः क्रियत इति शेषः, तमेवाह।

प्रणवेनैव धनुषा प्रबोधेन शरेण च।
लक्ष्यं ब्रह्म न चेद्विद्धं धनुर्वेदो निरर्थकः॥ १॥

इति न० बो० मु० पु० अ० धनुर्वेदनिर्णयः॥ २०॥

प्रणवेनेति। प्रणवेनैवोङ्कारेणैव धनुषा बाणासनेन करणेन प्रबोधेन ज्ञानेन 'ॐमित्येतदक्षरमिदꣳसर्वं भूतं भवद्भविष्यच्च सर्वमोङ्कार एवे'त्यादिमाण्डूक्योपनिषदुक्तप्रकारज्ञानरूपेण शरेण च सायकेनापि बाह्यकरणेन तस्य बोधस्य प्रणवद्वारकत्वात्प्रणवस्य धनुष्ट्वं ज्ञानस्य च शरत्वं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु लक्ष्यं लक्षितुं योग्यं तस्य बोधबाणस्य लक्षणावृत्त्या विषयत्वाद्वेधार्हमुच्यते श्रुत्येति शेषः, कथ्यते। तथा च श्रुतिः।

'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदि'ति॥

लक्ष्यं लक्षणावृत्त्या बोधविषयं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यमखण्डसच्चिदानन्दरूपं वस्तु विद्धं वेधितं बुद्धमित्यर्थः, न नास्ति चेद्यदि तर्हि तदा धनुर्वेदो धनुरुपलक्षितं सर्वशस्त्रास्त्रप्रयोगाकर्षणज्ञानप्रतिपादकं शास्त्रं निरर्थको निष्प्रयोजन इत्यर्थः, तत्र मुमुक्षुविषयाभावादिति भावः॥ १॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो धनुर्वेदनिर्णयार्थ प्रकाशो विंशः॥ २०॥

---

अथ गान्धर्वनिर्णयः।

एवं धनुर्वेदनिर्णयमभिधायेदानीं गान्धर्वनिर्णयाख्यमेकश्लोकं प्रकरणं निरूपयिष्यन्नाह।

## अथ गान्धर्ववेदनिर्णयः।

अथेति। अथ धनुर्वेदनिर्णयानन्तरं गान्धर्वनिर्णयो गान्धर्वस्य गानज्ञानप्रतिपादकस्य शास्त्रस्य निर्णयः सिद्धान्तो मुमुक्षुग्राह्यः क्रियत इति शेषः, तमेवाह।

> आत्मा कलेन गीतेन गान्धारेण स्वरेण हि।
> न चेद्गन्धर्ववद्गीतो गान्धर्वेण कृतं किमु ॥ १ ॥

इति श्रीनर० बोध० मुनीन्द्र० पुराण० अष्टादश० गान्धर्वनिर्णयः ॥ २१ ॥

आत्मेति। गान्धर्वेण गन्धर्वकर्मभूतेन स्वरेण जातित्वादेकवचनं निषादादिस्वरैः कृत्वा कलेन मधुरेण गीतेन गानेनात्मा सच्चिदानन्दलक्षणो ब्रह्माभिन्नः प्रत्यगात्मा गन्धर्ववत् यथा गन्धर्वा गायन्ति तद्वद्गीतो गीनेन लक्ष्यीकृतो न नास्ति चेद्यदि तदा गान्धर्वेण गान्धर्ववेदाभ्यासेन किमु कृतं किं संपादितं न किमपीत्यर्थः, आत्मनो व्यतिरिक्तविषयस्य गान्धर्वस्य निष्प्रयोजनत्वात्तदादरं परित्यज्यात्मविषयकगान्धर्ववेदमात्र आदरो विधेय इति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिननचर्यार्थप्रकाशे पुराणश्रवणनिर्णयार्थप्रकाशेऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतो गान्धर्वनिर्णयार्थप्रकाश एकविंशः ॥ २१ ॥

---

अथार्थशास्त्रनिर्णयः।

एवं गान्धर्वनिर्णयमभिधायेदानीमर्थशास्त्रं निर्णेतुमर्थशास्त्रनिर्णयाख्यमेकश्लोकं प्रकरणमारभमाण आह।

## अथार्थशास्त्रनिर्णयः।

अथेति। अथ गान्धर्वनिर्णयानन्तरमर्थशास्त्रनिर्णयोऽर्थस्य

धनादेः साधनभूतज्ञानप्रतिपादकं शास्त्रं ग्रन्थस्तस्य निर्णयो मुमुक्षुविहितः सिद्धान्तः क्रियत इति शेषः, तमेवाह ।

अनर्थाः सर्वे एवार्थाः सदर्थः परमार्थदृक् ।
परमार्थो न लब्धश्चेदर्थशास्त्रं निरर्थकम् ॥ १ ॥

इति श्रीनर० बो० मु० पु० अ० अर्थशास्त्रनिर्णयः ॥ २२ ॥

अनर्था इति । सर्वे लोकप्रसिद्धा धर्मार्थकामाख्या अर्था अनर्था एव दुःखास्पदत्वादर्थशून्या एव केवलं ज्ञेयाः, कस्तर्ह्यर्थ इत्यत आह सदर्थ इति, परमार्थदृक्परमः कार्यकारणरहितो योऽर्थः सद्रूप आत्मा तस्य दृक् ज्ञानं तदेव सदर्थः संश्वासानर्थश्च कालत्रयाबाध्योऽर्थः सुखरूपत्वात्प्रयोजनरूपो ज्ञेयः स परमार्थः सच्चित्सुखात्मरूपोऽर्थो न लब्धो न प्राप्तश्चेद्यदि तर्हि अर्थशास्त्रमर्थप्राप्तिसाधनबोधकं शास्त्रं नीत्याख्यं शास्त्रमित्यर्थः, निरर्थकमर्थशून्यं ज्ञेयमत आत्मरूपार्थान्यार्थप्राप्तिसाधनबोधकार्थशास्त्र आदरं परित्यज्य मोक्षाख्यार्थप्राप्तिसाधनभूतज्ञानोपदेशके वेदांतशास्त्र एवादरो विधेयो मुमुक्षुभिरिति भावः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ मुनीन्द्रदिनचर्यार्थप्रकाशे पुरानश्रवणनिर्णयार्थप्रकाशेणऽष्टादशविद्यास्थाननिर्णयार्थप्रकाशान्तर्गतोऽर्थशास्त्रनिर्णयार्थप्रकाशो द्वाविंशः ॥ २२ ॥

इति पुराणनिर्णयार्थप्रकाशोऽष्टाविंशः ॥ २८ ॥

———

अथ सायंसन्ध्यानिर्णयः ।

एवं पुराणनिर्णयं सविशेषं निरूप्येदानीं मुनीनां सायंसन्ध्यानिर्णयाख्यं द्विश्लोकं प्रकरणमारभमाण आह ।

## अथ सायंसन्ध्यानिर्णयः ।

अथेति। अथ पुराणश्रवणनिर्णयानन्तरं सायंसन्ध्यानिर्णयो मुनीनां सायंकालीना या सन्ध्या सन्ध्याख्यं कर्म तस्या निर्णयः सिद्धान्तो मुमुक्षुविहितः क्रियत इति शेषः, तत्र तावत्पूर्वोक्तदिनाचाराचरणेनोक्तलक्षणदिनस्यान्ते सायं कालप्राप्तिमाह ।

इत्थं ज्ञानविनोदेन वेदशास्त्रकुतूहलैः ।
दिवसं सकलं यातं सायंसन्ध्या समागता ॥ १ ॥

इत्थमिति । इत्थमुक्तप्रकारेण ज्ञानविनोदेन ज्ञानरूपेण विनोदेन परिहासेनोपलक्षितं वेदशास्त्रकुतूहलैर्वेदानामृगादीनां शास्त्राणां न्यायादीनां कुतूहलैरुक्तलक्षणैः कौतुकैः कृत्वा सकलं समस्तं दिवसं दिनं यातं व्यतीतं ततश्च सायंसन्ध्या सायंकालीना सन्ध्या तदुपलक्षितः काल इत्यर्थः, समागता प्राप्ता ज्ञेया ॥ १ ॥

तत्र मुनीनां सायंसन्ध्यां निर्णीय दर्शयति ।

एवमेव कियत्कालं व्यवहारावलोकिनः ।
पुनः समाधौ सन्धानं सायंसन्ध्या हि सा स्मृता ॥२॥

इति श्रीनर० बो० मु० सायंसन्ध्यानिर्णयः ॥ २९ ॥

एवमेवेति । एवमेवानेनोक्तप्रकारेणैव कियत्कालं यावदस्मिन्नुक्तलक्षणे विनोदे रुचिस्तावत्पर्यन्तं कालं व्यवहारावलोकिन उक्तलक्षणं व्यवहारमवलोकयितुं शीलमस्य स तथोक्तस्तस्य मुनेः पुनर्भूयः समाधौ समाधिविषयकं संधानं स्मरणं यद् हि विदुषामनुभवविषया सोक्तलक्षणा सायङ्कालीना सन्ध्या स्मृता कथिता मुनिभिरिति शेषः, उक्तलक्षणव्यवहारोपसंहारात्सायंकालत्वं तस्योपसंहारस्य, उक्तलक्षणदिनसमा-

धिरात्र्योः सन्धिभवत्वादनुसन्धानस्य सन्ध्यात्वं ज्ञेयमिति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यायां सायंसंध्यानिर्णयार्थप्रकाश एकोनत्रिंशः ॥ २९ ॥

---

अथ निशाव्यवहारनिर्णयः ।

एवं सायंसन्ध्यां निर्णीयेदानीं मुनीनां निशाकृत्यं निर्णेतुं निशाव्यवहारनिर्णयाख्यं द्विश्लोकं प्रकरणं निरूपयिष्यन्नाह ।

## अथ निशाव्यवहारनिर्णयः ।

अथेति । अथ सायंसन्ध्यानिर्णयानन्तरं निशाव्यवहारो निशायां रात्रौ यो व्यवहारो व्यवहृतिः कृत्यमित्यर्थः, निर्णीयत इति शेषः, तमेवाह द्वाभ्याम् ।

यातेऽथ व्यवहारनाम्नि दिवसे भुक्ते च सन्ध्यासुखे
जातायां निशि निश्चलेन मनसा दत्वा कपाटार्गलाः ।
पीत्वा संप्रति शुद्धबोधमधुरं क्षीरं यथेष्टं युवा
पर्यङ्के सुसमाधिनामनि मुहुः काञ्चिद्भुनक्ति प्रियाम् ॥ १ ॥

यात इति । व्यवहारनाम्नि व्यवह्रियतेस्मिन्निति व्यवहार उक्तलक्षणस्तदेव नाम यस्य तस्मिन्दिवसेऽहनि याते व्यतीते सति अथानन्तरं सन्ध्यासुखे पूर्वोक्तज्ञानिव्यवहार उदासीनतयोपसंहृतेऽनन्तरं पूर्वोक्तज्ञानिव्यवहारोपलक्षितदिवसस्य समाध्युपलक्षितरात्रेश्च सन्धिभवं यत्पूर्वमुक्तं सन्ध्याख्यं कर्म तस्य सुखं वासनानन्दापरपर्यायं तस्मिन्भुक्तेऽनुभूते

सतीदमेव सायंभोजनं मुनीनामित्यर्थः, ततो निशि पूर्वोक्त-व्यवहारार्हपदार्थास्फुरणलक्षणायां रात्रौ समाधिरूपायां रात्रा-वित्यर्थः, जातायां प्राप्तायां सत्यामाविर्भावोन्मुखायां सत्या-मित्यर्थः, निश्चलेन स्थिरीभूतेन मनसा चेतसा कपाटार्गलाः कं सुखं पाटयन्ति खण्डयन्तीति कपाटानीन्द्रियाणि तेषाम-र्गलाः शृङ्खलावद्रोधकत्वात्प्रत्याहारलक्षणाः शृङ्खला दत्वा प्र-दाय प्रत्याहारं कृत्वेत्यर्थः, इदमेव कपाटबन्धनं मुनीनां ज्ञेयं, संप्रति तात्कालिकं तात्कालिकस्यैव दुग्धस्य वैद्यके पौष्टिकत्वो-क्तेर्वक्ष्यमाणबोधलक्षणस्य पयसोपि तत्कालभवस्यैव मुक्तिहे-तुत्वोक्तेश्च संप्रतीत्युक्तं, शुद्धबोधमधुरं शुद्धो मायाविद्याख्यम-लरहितो यो बोधश्चिद्धन आत्मैव सुखरूपत्वान्मधुरं मिष्टं त्रिविधमायारहितं शुद्धात्मस्वरूपसुखमेवेत्यर्थः, क्षीरं स्वानुस-न्धानवती क्षरति स्रवत्यात्मसुखमिति क्षीरं पयो यथेष्टमातृप्ति यथा भवति तथा निःसंशयसाक्षात्कारेण नित्यतृप्तिपर्यन्तमि-त्यर्थः, पीत्वा प्राश्याहंब्रह्मास्मीत्यनुभवमपि स्वस्मिन्विलीये-त्यर्थः, युवा यौवनसम्पन्न आत्मनि स्थैर्योत्साहशक्तिमानि-त्यर्थः, मुनिर्मननवान् ज्ञानीत्यर्थः, सुसमाधिनामनि सुशो-भनो निर्विकल्पाख्यः समाधिः स एव नाम वाचकमभिधानं यस्य स तथोक्तस्तस्मिन्पर्यङ्के मञ्चे परितः सर्वतोऽङ्कं चिह्नं सच्चिदानन्दरूपं यत्र स्फुरति तत्रेत्यर्थः, काञ्चिदनिर्वचनीयां सत्त्वेन तावन्न निर्वक्तुं शक्या 'नेह नानास्ति किञ्चन, अतोन्य-दार्त्तमि'त्यादिश्रुतिभिर्विद्वदनुभवेन च शक्तिमतः पृथगसत्त्वस्य शक्तेरनुमितत्वेन च बाधितत्वस्य सर्वत्र शास्त्रेषु दृश्यमानत्वाद्, न चासत्त्वेन कार्यरूपेण तत्कारणरूपेण चानुभूयमानत्वात् स-त्त्वासत्त्वयोश्च परस्परं विरुद्धत्वात् काञ्चिदित्युक्तं, प्रियां सुख-

रूपत्वादिष्टां प्रीतिविषयामित्यर्थः; भुनक्ति अनुभवति आत्मनः सच्चिदानन्दरूपां शक्तिमेवानुभवतीति भावः ॥ १ ॥

तामेव विशेषणैर्निरूपयन्प्राप्तं भोगित्वं मुनौ निवारयति ।

तन्वङ्गीं तरुणीं विलासरसिकां चित्ते चमत्कारिणीम्
जाते प्रेमणि नित्यमेव सुखदामानन्दलीलामयीम् ।
खेलन्तीमुरसि प्रियां निजकलामालिङ्ग्य तत्सङ्गमा
द्भोगीन्द्रत्वमुपागतः सुखनिधिर्योगीन्द्रचूडामणिः ॥ २ ॥

तन्वङ्गीमिति । तन्वङ्गीं तनु सूक्ष्ममङ्गं स्वरूपं यस्या बुद्ध्याद्यगोचराकारामित्यर्थः, तरुणीमात्मपुरुषेच्छानुरूपजगदुत्पादने स्वात्मसुखानुभवे वा सामर्थ्यवयोन्वितां विलासरसिकां विलासे प्रपञ्चनिर्माणरूपे तल्लयेन स्वात्ममात्रपरिशेषरूपे वा रसिकां रसवतीमत एव चित्ते स्वात्मपुरुषोपाधिभूते चेतसि चमत्कारीणीं चिदाभासचमत्कारिणीं परमार्थतस्त्वात्मरूपाविर्भावलक्षणचमत्कारकारिणीं प्रेमणि स्नेहे जाते स्वात्मशक्तिप्रियायां स्वात्मपुरुषचितस्नेह उत्पन्ने सतीत्यर्थः, नित्यमेव सर्वदैव सुखदामानन्ददात्रीमानन्दलीलामयीमानन्दः सुखं तद्रूपा लीला क्रीडा तन्मयीं तद्रूपां खेलतीं क्रीडन्तीं निजकलां निजां स्वीयां कलामंशरूपां प्रियां सुखरूपत्वादिष्टामुरसि परमार्थतः स्वाभिन्ने व्यवहारदृष्ट्या तत्कल्पितैकदेशलक्षणे स्वाङ्गविशेष आलिङ्ग्य परिरभ्य स्वाभिन्नामवलोक्येत्यर्थः, तत्सङ्गमात्तस्या उक्तलक्षणमायाशक्तेः सङ्गमाल्लौकिकदृष्ट्या संयोगाद्भोगीन्द्रत्वं भोगिन आनन्दमयकोशोपाधिका व्यष्टिजीवास्तेषामिन्द्रत्वमीश्वरत्वं प्रेरकत्वमित्यर्थः, उपागतः प्राप्तोपि योगीन्द्रचूडामणिर्योगिनो जीवब्रह्मैक्यसाक्षात्कारवन्तो जीवन्मुक्ता वा-

धितप्रपञ्चा इत्यर्थः, तेषामिन्द्रा जीवन्मुक्तश्रेष्ठा ब्रह्मादीश्वरान्तास्तेषामप्याधारशुद्धब्रह्मरूपत्वाच्चूडामणिरिव भवतीति ज्ञेयः, उभयत्र हेतुः सुखनिधिः सुखानां वैषयिकमानुषादिसुखानां बिम्बभूतसुखरूपत्वान्निधिः समुद्र इवाऽतो भोगीन्द्रत्वं योगीन्द्रचूडामणित्वं चोभयमप्येकत्र सम्भाव्यमिति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यायां रात्रिकृत्यार्थप्रकाशस्त्रिंश ॥ ३० ॥

---

अथ मुनीन्द्रदिनचर्याविचारफलनिरूपणम् ।

एवं मुनीन्द्राणां रात्रिकृत्यं निर्णीयेदानीं मुनीन्द्रदिनचर्याफलं निर्णेतुं मुनीन्द्रदिनचर्याफलनिरूपणाख्यं त्रिश्लोकं प्रकरणं वक्तुकाम आह ।

## अथ मुनीन्द्रदिनचर्याविचारफलनिरूपणम् ।

अथेति । अथ रात्रिकृत्यनिर्णयानन्तरं मुनीन्द्रदिनचर्याफलनिरूपणं मुनीन्द्रदिनचर्यायाः फलस्य प्रयोजनस्य निरूपणं प्रतिपादनं क्रियत इति शेषः, तदेवाह ।

मुनीन्द्रदिनचर्येयं चिन्तनीया दिनेदिने ।
न चिराच्चिन्तनेनास्या नरो निश्चिन्ततां व्रजेत् ॥ १ ॥

मुनीन्द्रेति । हे शिष्य इयं निरूपिता मुनीन्द्रदिनचर्या मुनीनां मननवतां मध्ये य इन्द्राः श्रेष्ठास्तेषां दिनचर्याऽऽह्निकनिरूपणप्रकरणं दिने दिने प्रत्यहं नित्यमेवेत्यर्थः, चिन्तनीया विचारणीया भवताऽन्यैरपि मुमुक्षुभिः, नन्वस्या विचारणेन किं फलन्तत्राह नेति, नरो न राति आदत्ते विषयानिति नरो वैराग्यादिसाधनसंपन्नः पुरुषोऽस्या मुनीन्द्रदिनचर्याया-

श्चिन्तनेन विचारेण न चिराच्छीघ्रमेव निश्चिन्ततां स्वात्मनिस्थिरतां व्रजेत्प्राप्नुयात् ॥ १ ॥

एतत्प्रकरणविचाररीतिनिरूपणपूर्वकमस्या विचारे विशिष्टं फलं निर्दिशति ।

साध्यसाधनसंबन्धफलसंस्कारयुक्तिभिः ।
ज्ञातायां सम्यगेतस्यां ज्ञातव्यं नावशिष्यते ॥ २ ॥

साध्येति । साध्यसाधनसम्बन्धफलसंस्कारयुक्तिभिः साध्यमखण्डैकरसं ब्रह्मत्वं, साधनानि अस्मिन्प्रकरण उक्तानि रूपकैः प्रातःशौचादिपदवाच्यब्रह्माकारवृत्तिरूपाणि, संबन्धश्च तासां वृत्तीनां तत्साध्यस्य ब्रह्मणश्च साध्यसाधनरूपो लक्ष्यलक्षकरूपो वा, फलं च समाध्युत्थानसमयेपि उक्तलक्षणव्यवहारेण ब्रह्मात्माविस्मृतिरूपं, संस्कारश्चान्तःकरण एतत्प्रकरणनिरूपितवृत्त्यनुसन्धानेन ब्रह्मात्माभेदवासनारूपः, युक्तिश्च ब्रह्मात्मनि चेतसः स्थिरीकरणरूपाऽविरोधशब्दवाच्या, एताभिः साधनभूताभिः सहैतस्यां मुनीन्द्रदिनचर्याख्यप्रक्रियायां ज्ञातायां विचारितायां सत्यां ज्ञातव्यं विचारणीयमन्यत्किमपि शास्त्रं नावशिष्यतेऽवशिष्टं न भवति सर्वमपि ज्ञातं भवतीत्यर्थः, एतत्प्रकरणविचारस्य सर्वशास्त्रविचारफलरूपत्वादिति भावः॥२॥

इदानीं मुनीन्द्रदिनचर्याया मुनीन्द्रवागगोचरत्वनिरूपणपूर्वकं स्वस्य तत्र वाचाटत्वं क्षमापयति ।

मुनीन्द्रदिनचर्येयं मुनीन्द्रैरपि दुर्वचा ।
मम वाचालतां तत्र क्षम्यतां पार्वतीपतिः ॥ ३ ॥

इति श्रीनर० बो० मुनीन्द्रदिनचर्यायां मुनीन्द्रदिनचर्या
विचारफलनिर्णयः ॥ ३१ ॥

मुनीन्द्रेति । इयं मदुक्ता मुनीन्द्रदिनचर्या मुनयो मनन-

शीला: प्रथमादिचतुर्थ्यन्तभूमिकास्थितास्तेषु मध्य इन्द्राः श्रेष्ठाः दशम्यादिसप्तम्यन्तभूमिकासु स्थितास्तेषां दिनचर्याऽऽह्निकनिरूपणाख्या प्रकरणरूपा मुनीन्द्रैरपि श्रेष्ठमुनिभिरपि दुर्वचा निरूपयितुमशक्याऽस्ति, ननु तर्हि भवता कथं निरूपिता तत्राह ममेति, तत्र मुनीन्द्रदिनचर्यानिरूपणे मम तन्निरूपणासमर्थस्य मे वाचालतां वाचाटत्वं पार्वतीपतिः पार्वत्याः पतिः स्वामी शिवः क्षम्यतां सहतु पार्वतीपतिरित्यनेन पूर्वजन्मनि सत्या दक्षकन्यायाः स्वपितृदक्षाध्वरगमननिवारणजनितकोपेन स्वस्मिन्सतीकृतं वाचाटत्वमनुभूयापीह पार्वतीजन्मनि पर्वतस्य जाड्याधिक्येन तत उत्पन्नायाः पार्वत्या अपि जाड्याधिक्यस्यानुमेयत्वात्तन्मूलकस्य वाचाटत्वस्यापि आधिक्येनानुमेयस्य सत्त्वात्तादृशवाचालायाः पार्वत्या अङ्गीकाराच्छिवे वाचालत्वक्षमावत्त्वाधिक्यमस्त्यतो मद्वाचालत्वं क्षन्तु योग्यः शिव एवेति भावः ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मुनीन्द्रदिनचर्यार्थप्रकाशे मुनीन्द्रदिनचर्याफलनिरूपणार्थप्रकाश एकत्रिंशः ॥ ३१ ॥

इति मुनीन्द्रदिनचर्यार्थप्रकाशः षोडशः ॥ १६ ॥

---

अथ निरञ्जनपञ्चाशत्कम्।

एवं मुनीन्द्रदिनचर्यां निरूप्येदानीमात्मनः सर्वधर्मैरलिप्तत्वं साक्षात्कारयितुं जिज्ञासूनां निरञ्जनपञ्चाशत्काख्यं पञ्चाशच्छ्लोकं प्रकरणमभिदधान आह।

## अथ निरञ्जनपञ्चाशत्कम्।

अथेति। अथ मुनीन्द्रदिनचर्यानिरूणानन्तरं निरञ्जनपञ्चाशत्कमुच्यतेनेनेऽञ्जनमुपाधिर्माया सर्वसम्बन्धकारण-

त्वात्स निर्गतो निवृत्तो यस्मात्स निरञ्जनो निरुपाधिक आत्मा तस्य पञ्चाशत्कं पञ्चाशतां पञ्चाशच्छ्लोकानां समूहः पञ्चाशत्कं समूहे कन्,अस्य प्रकरणस्य तत्प्रतिपाद्यात्मनश्च निरूप्यनिरूपकभावरूपः सम्बन्धोऽतोस्य प्रकरणस्याभिधानमपि निरञ्जनपञ्चाशत्कं तन्निरूप्यत इति शेषः, तत्रादावेवैतत्प्रकरणस्य प्रामाण्यसिद्धये प्रामाण्यहेतुज्ञापनपूर्वं निरूपयितव्यप्रकरणविषयनिरूपणं प्रतिजानीते ।

यत्र प्रमाणं वेदान्ता अनुभूतिस्तथा सताम् ।
देवो निरञ्जनः सोयं बोधसारे निरूप्यते ॥ १ ॥

यत्रेति । यत्र यस्मिन्देवे वेदान्ता वेदशिरोभागा उपनिषद इत्यर्थः, प्रमाणं प्रमास्ति तथा तद्वत्सतां सदर्थं मोक्षं प्राप्तानां जीवन्मुक्तानामित्यर्थः, अनुभूतिरनुभवो यत्र देवे प्रमाणमस्ति उक्तद्विविधप्रमाणसिद्धः सोऽयं मद्बुद्धिवृत्तिप्रत्यक्षो देवश्चिन्मात्रस्वरूप आत्मा निरञ्जन उपाधिरहितोऽत्रास्मिन्प्रकरणे विविच्य सर्वोपाधिभ्यः पृथक्कृत्य प्रदर्श्यते मुमुक्षूणामनुभवगोचरो यथा भवति तथा प्रकर्षेण निरूप्यत इत्यर्थः ॥१॥

तत्र तावदादौ अज्ञत्वाभिमानरूपोपाधेरात्मानं विविच्य दर्शयति ।

अहमज्ञो न जानामि मामहं कोहमित्युत ।
अज्ञानप्रभवो भाव आत्मा शुद्धो निरञ्जनः ॥२॥

अहमिति । अहमहमाकारच्छिन्नश्चिदाभासोऽहं कः—अहं चिद्रूपोऽचिद्रूपो वा ससङ्गो निःसङ्गो वा जीवो ब्रह्म वेत्युतेत्यपि मां मा न जानामि न वेद्मि अतोहमज्ञोऽहमज्ञान्यस्मीत्यनुभवरूपो भावः पदार्थोऽज्ञानप्रभवोऽज्ञानं ज्ञानविरुद्धं

भावरूपमज्ञानमिति लक्षणलक्षितादविद्यापरपर्यायात्प्रभव उत्पत्तिर्यस्य स तथोक्तोऽस्ति आत्मा ब्रह्माभिन्नः प्रत्यगात्माऽज्ञानस्य तज्जन्याहङ्कारस्याऽहमज्ञ इति भावस्य च प्रकाशकत्वात्ताभ्यां भिन्नो निरञ्जनः स्वयंप्रकाशरूपत्वादज्ञानतत्कार्यरूपोपाधेरात्मन्यसम्भवान्निरुपाधिकोऽत एव शुद्धो मायाऽविद्यामलरहितस्तत्साक्षित्वरूपमलरहितश्चाऽस्ति एवं सर्वदा चिन्तनीयमिति भावः ॥ २ ॥

एवमज्ञानतदहङ्काराभ्यां विविच्यात्मानं दर्शयित्वा जीवस्य ब्रह्मविषयकध्येयत्वभ्रमोपाधेरात्मानं विविच्य दर्शयति ।

यदियं ब्रह्मविषया जीवस्य ध्येयतामतिः ।
स हि भ्रान्तिमयो भाव आत्माशुद्धो निरञ्जनः ॥३॥

यदिति । यद्या ध्यानिषु प्रत्यक्षेयं साक्षिचैतन्यप्रकाश्या ब्रह्मविषया ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं ब्रह्म शबलं तद्विषयो ध्येयं यस्याः सा तथोक्ता जीवस्य प्राणोपाधिकस्य साधिष्ठानबुद्धिस्थचिदाभासस्य जीवसम्बन्धिनीत्यर्थः, ध्येयतामतिर्ध्यानविषयत्वनिश्चयरूपा वृत्तिरस्ति तस्याः साक्षिप्रकाश्यत्वाद्ब्रह्मणोऽविषयत्वे सति विषयत्वेनाङ्गीकाराच्च तस्मिन्नेव परमार्थतो ब्रह्मस्वरूपे सति जीवत्वनिश्चयाच्च स उक्तो भावः पदार्थो भ्रान्तिमयो भ्रान्तिरेव केवलमस्ति अतस्तत्साक्षी—आत्मा ब्रह्माभिन्नो प्रत्यगात्मा निरञ्जनोऽज्यतेनेनेत्यञ्जनमुपाधिरुक्तभ्रान्तिरूपः स निर्गतो निवृत्तो यस्मात्स तथोक्तोऽत एव शुद्धो निर्मलो भ्रान्तिसाक्षित्वमलरहित इत्यर्थः, अस्तीति शेषः, विद्यते एवं निश्चेतव्यमिति भावः ॥ ३ ॥

एवमुक्तलक्षणं भ्रान्तेरात्मानं विविच्य दर्शयित्वेदानीं

गुणत्रयात्तत्कृतबन्धनात्तदभिमानाच्चात्मानं विविच्य दर्शयति ।

त्रिभिर्गुणैर्निबद्धोहं संसारे संसराम्यहम् ।
इत्याद्याः प्राकृता भावाः आत्मा शुद्धो निरञ्जनः ॥४॥

त्रिभिरिति । अहमन्तःकरणस्यान्तरा वृत्तिरहमिति तद्विषयोहं तद्भिन्नो ब्रह्माभिन्नः प्रत्यगात्मा परमार्थतः सन्नपि अन्तःकरणविषयत्वेन प्रतीयमानः सोऽहं त्रिभिस्त्रिसङ्ख्याकैर्गुणैः सत्त्वरजस्तमोभिधैर्निबद्धो बन्धनं प्राप्तोऽस्मि अतः सत्त्वगुणबद्धत्वादहं ज्ञानीतिप्रतीतिरहं शमवाञ्जितेन्द्रियो विरक्तो मुमुक्षुरित्यादिप्रतीतिश्च स्वस्मिन्करोति, रजोगुणबद्धत्वादहङ्कामी कर्त्ता लोभीत्यादिप्रतीतिं स्वस्मिन्करोति, तमोगुणबद्धत्वादहमज्ञानी क्रोधी स्तब्ध इत्यादिप्रतीतिं स्वस्मिन्करोतीत्यतस्त्रिगुणबद्धत्वमिति भावः, अत एव संसारे सम्यक्सरति प्रसरतीति संसारः प्रपञ्चोऽज्ञानतत्कार्यरूपस्तस्मिन्नेव संसरामि वर्त्ते ऽहं साधिष्ठानबुद्धिस्थचिदाभासो जन्ममरणादिसंसारमङ्गीकरोमीत्यर्थः, इत्याद्या एवमादय भावा साक्षिदृश्याः पदार्थाः प्राकृताः प्रकृतिसम्भवाः प्रकृतेस्त्रिगुणात्मत्वात्तेषां धर्माणां च गुणकार्यत्वमिति ज्ञेयम्, आत्मा तत्साक्षी निरञ्जनः प्रकृतितद्गुणतद्बद्धोपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयम् ॥ ४ ॥

एवं प्रकृतितद्गुणतत्कृतबन्धनतद्बद्धोपाधिभ्य आत्मानं विविच्य दर्शयित्वेदानीमन्तःकरणचतुष्टयरूपोपाधेरपि तं विविच्य दर्शयति ।

मनोबुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ।
अन्तःकरणजा भावा आत्मा शुद्धो निरञ्जनः ॥५॥

मन इति । मनः संकल्पविकल्पात्मिकान्तःकरणवृत्तिः, बुद्धिर्निश्चयरूपान्तःकरणवृत्तिः, अहङ्कारस्तयोरात्मतादात्म्यप्रतीतिरूपान्तःकरणवृत्तिः, चित्तं चानुभवप्रत्यभिज्ञास्मृतिधर्मरूपान्तःकरणवृत्तिरित्येवं चतुष्टयं चतुष्कं यदास्ति तत्स भावः पदार्थोऽन्तःकरणः पञ्चभूतसत्त्वगुणभागकार्यरूपं द्रव्यं तस्माज्जात उत्पन्नोऽन्तःकरणविकृतिरूपो ज्ञेय आत्मा ब्रह्माभिन्न प्रत्यगात्मा निरञ्जनोऽन्तःकरणतद्वृत्तिचतुष्कोपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयम् ॥ ५ ॥

एवमन्तःकरणचतुष्टयोपाधेरात्मानं विविच्य दर्शयित्वेदानीं मनोवृत्तिभ्योपि तं विविच्य दर्शयति ।

यच्च सङ्कल्प्यते पूर्वं सङ्कल्प्य च विकल्प्यते ।
एते मनोभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ६ ॥

यच्चेति । यत्सर्वेषु प्रसिद्धं पूर्वं प्रथमतः संकल्प्यत इदं समीचीनमिति सम्यक्तया चिन्त्यते तत्संकल्प्य सम्यक्तया विचिन्त्य विकल्प्यते च विपरीतत्वेनासमीचीनत्वेन चिन्त्यतेऽपि एते उक्ताः संकल्पविकल्परूपा भावा विकारा मनोभवा मनसो मनोनाम्न्या अन्तःकरणवृत्तेर्भवा उत्पन्ना मनोवृत्तय इत्यर्थः, ज्ञेय आत्मा ब्रह्माभिन्नः प्रत्यगात्मा निरञ्जनो मनस्तद्वृत्त्युपाधिभिन्नस्तदस्पृष्ट इत्यर्थः, अत एव शुद्धो मनस्तद्वृत्तिसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयम् ॥ ६ ॥

एवं मनोवृत्तिभ्योप्यात्मानं विविच्य दर्शयित्वेदानीं बुद्धिवृत्तिभ्योप्यात्मानं विविच्य दर्शयति ।

इदमित्थमिदंनेत्थमिति निश्चीयते तु यत् ।
स हि बुद्धिमयो भाव आत्मा शुद्धो निरञ्जनः ॥ ७ ॥

इदमिति । इदं घटादि द्रव्यं पुरो दृश्यमानमित्थमेतादृशं घटादिरूपमेव तथेदं रज्ज्वादि द्रव्यं नेत्थं नेतादृशं सर्पादिरूपं नैव भवतीत्येवं यत्प्रसिद्धं निश्चीयते निश्चयेन ज्ञायते स हि स उक्तो हि प्रसिद्धो भावो विकारो बुद्धिभवो बुद्धिजन्योऽस्तीति ज्ञेयम्, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनो निर्गतं सर्वदा निवृत्तमञ्जनं बुद्धितद्वृत्त्युपाधिर्यस्मात्स तथाभूतो ऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयम् ॥ ७ ॥

इदानीमहङ्कारवृत्तिभ्योऽप्यात्मानं विविच्य दर्शयति ।

ज्ञत्वकर्तृत्वभोक्तृत्ववध्यघातकतादयः ।
अहङ्कारभवा भावा आत्मा शुद्धो निरञ्जनः ॥८॥

ज्ञत्वेति । ज्ञत्वकर्तृत्वभोक्तृत्ववध्यघातकतादयो ज्ञत्वं ज्ञानेन्द्रियव्यापारकर्तृत्वाभिमानित्वं कर्तृत्वं कर्मेन्द्रियव्यापारकर्तृत्वाभिमानित्वमेतदुभयं विज्ञानमयाभिमानजन्यं, भोक्तृत्वमहं भोक्तेत्येवमभिमानित्वमेतदानन्दमयकोशाभिमानवृत्तिः, वध्योऽहमेतस्य वधार्ह इत्येवं स्थूलशरीराभिमानित्वं, घातकता घातकोऽहमेतस्येत्यभिमानस्तस्य भावस्तत्ताऽऽदिर्येषां ते तथा भूतास्ते सर्वेऽपि भावा विकारपदार्था अहङ्कारादुद्भव उत्पत्तिर्येषां ते तथा भूता ज्ञेया आत्माऽहङ्कारतद्वृत्तिसाक्षी प्रत्यक्चैतन्यरूपो निरञ्जनोऽहङ्कारतद्वृत्त्युपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ८ ॥

इदानीं चित्तवृत्तिरूपोपाधिभ्य आत्मानं विविच्य दर्शयति ।

स्मृतिः पूर्वानुभूतस्य प्रत्यभिज्ञा च तादृशी ।
एते चित्तभवा भावा आत्मा शुद्धो निरञ्जनः ॥९॥

स्मृतिरिति । पूर्वानुभूतस्य पूर्वं पूर्वकाले कदाचिदनुभूतो

नुभवगोचरः कृतो यः पदार्थस्तस्य घटादिपदार्थस्य स्मृतिः स्मरणं, तादृशी तद्वत्प्रत्यभिज्ञा चानेकवृत्तिविषयाणामनेकवृत्तीनामेकविषयत्वपूर्वकमेकवृत्तित्वप्रतीतिरिति लक्षणलक्षिता सा प्रत्यभिज्ञाख्या वृत्तिः, एताभ्यामनुभवाख्या वृत्तिरपि ग्राह्या, एते स्मृत्यादयो भावाः पदार्था विकारा इत्यर्थः, चित्तभवाश्चित्ताच्चिताख्याया अन्तःकरणवृत्ते र्भव उत्पत्तिर्येषां ते तथोक्ता ज्ञेया, आत्मा चित्ततद्वृत्तिसाक्षी प्रत्यगात्मा निरञ्जनश्चित्ततद्वृत्तिरूपोपाधिरहितोऽत एव शुद्धश्चित्ततद्वृतिसाक्षित्वमलरहितोऽस्तीत्यनुसंधेयम् ॥ ९ ॥

एवमन्तःकरणचतुष्टयतद्वृत्युपाधिभ्य आत्मानं विविच्य दर्शयित्वेदानीं शरीरत्रयतदभिमानिभ्योप्यात्मानं विविच्य दर्शयति ।

ये विश्वतैजसप्राज्ञा जाग्रत्स्वप्नसुषुप्तिषु ।
अवस्थाभेदजा भावा आत्मा शुद्धो निरञ्जनः ॥ १० ॥

ये इति । जाग्रत्स्वप्नसुषुप्तिषु जाग्रतीन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षाणायां जाग्रदवस्थायां स्वप्ने च जाग्रदवस्थावत्सर्वेन्द्रियेषु सुप्तौ लीनेषु सत्सु जाग्रत्संस्कारजः प्रत्ययः स स्वप्न इत्युक्तलक्षणायां स्वप्नावस्थायां च सुषुप्तौ च सर्वेन्द्रियाणां स्वकारणाज्ञाने लयेन स्वकारणाज्ञानमात्रत्वमित्युक्तलक्षणायां सुषुप्त्यवस्थायां क्रमेण ये प्रसिद्धा लोके च शास्त्रे च तत्तदवस्थाभिमानिनो विश्वतैजसप्राज्ञा विश्वश्च जाग्रदभिमानी विश्वाभिधस्तैजसश्च स्वप्नावस्थाभिमानी तैजसनामा प्राज्ञश्च सुषुप्त्यभिमानी प्राज्ञनामकः सन्ति ते सर्वेप्येतेऽवस्थाभेदजा अवस्थानां जाग्रदाद्यवस्थानां ये भेदा वैलक्षण्यानि सन्ति तेभ्यः

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ४ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड १ ) | ४ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A.,C. I. E.

AND

G. THIBAUT, Ph. D.

*No. 105.*



# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

## BODHASÂR,

A TREATISE ON VEDANTA,

BY

ŜRI NARHARI,

With a commentary by the author' s pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus VI.*

BENARES.

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilàs Press.

BENARES.

1905.

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहित | २ | ० | ० |

जाता उत्पन्ना भावा विकारा ज्ञेयाः, एषां भिन्नत्वप्रतीतावव-स्थावैलक्षण्यमेव तदभावे तदभावदर्शनादिति भावः, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनोऽवस्थात्रयतदभिमानिविश्वा-दित्रयोपाध्यतीतोऽत एव शुद्धस्तत्साक्षित्वमलास्पृष्टोऽस्तीत्य-नुसन्धेयः ॥ १० ॥

एवमवस्थात्रयतदभिमानिविश्वादित्रयरूपोपाधेरात्मानं वि-विच्य दर्शयित्वेदानीं तमस्तद्वृत्तिरूपोपाधिभ्योप्यात्मानं वि-विच्य दर्शयति ।

निद्रालस्यं प्रमादश्च परिमोहो विषादकः ।
एते तमोभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ११ ॥

निद्रेति । निद्रा सुषुप्तिरालस्यं कर्त्तव्याकर्त्तव्ययोरनु-त्साहपूर्वमुपेक्षा, तत्र प्रमादश्च कर्तव्यास्फूर्तिस्तद्विपरीतस्फूर्तिर्वा, परिमोहः केवलास्फुरणमेव हिताहितयोर्विषादको विपरी-तकृत्यं कृत्वानुखेदः, एते प्रसिद्धा लोकेषु भावा विकारास्ते तमोभवास्तमसस्तमोगुणाद्भव उत्पत्तिर्येषां ते तथोक्ता ज्ञेयाः, आत्मा तमस्तद्भवविकारसाक्षी प्रत्यगात्मा निरञ्जनस्तमस्तद्वि-कारोपाधिरहितोऽत एव शुद्धस्तमस्तद्विकारसाक्षित्वमलर-हितोऽस्तीत्यनुसन्धेयः ॥ ११ ॥

सत्त्वगुणतद्वृतिभ्योपि तं विविच्य दर्शयति ।

शमो विवेकः सौम्यत्वं प्रकाशश्च प्रसन्नता ।
एते सत्त्वमया भावा आत्मा शुद्धो निरञ्जनः ॥ १२ ॥

शम इति । शमः श्रवणादिव्यतिरिक्तविषयेभ्य इन्द्रिय-व्यावृत्तिरिति लक्षणलक्षितः शान्तिनामको भावोन्तःकरणस्य, विविच्येते आत्मानात्मानावनेनेति विवेको विचारः, सौ-

म्यस्त्वं विक्षेपरहितता, प्रकाशश्च पदार्थानां यथावत्स्फुरणरूपो-ऽन्तःकरणविकारः, प्रसन्नता क्षोभराहित्येनात्मसुखस्फुरणं, एते विवेकिषु दृश्यमाना भावाः पदार्थविकाराः सत्त्वमयाः स-त्त्वस्य सत्त्वगुणस्य विकारा ज्ञेयाः, आत्मा सत्त्वगुणतद्वृत्ति-साक्षी प्रत्यगात्मा निरञ्जनः सत्त्वतद्विकाररूपोपाधिरहितोऽतः शुद्धः सत्त्वतद्विकाराणां मायाकार्यत्वात्तत्साक्षित्वमलरहितोऽ-स्तीत्यनुसन्धेयः ॥ १२ ॥

इदानीं रजोगुणतद्विकारोपाधिभ्योप्यात्मानं विविच्य दर्शयति।

लोभश्चचलताक्षाणामारंभः कर्मणामपि।
एते रजोभवा भावा आत्मा शुद्धो निरञ्जनः ॥ १३॥

लोभ इति। लोभः प्राप्तेष्वपि विषयेषु सत्सु अपरितृप्ति-रूपा वृत्तिरक्षाणामिन्द्रियाणां चञ्चलता स्वस्वविषयेष्वस्थैर्यं, कर्मणां व्यापाराणामारम्भोपि आरम्भोत्साहोपि, एते व्यव-हारे प्रसिद्धा भावा अन्तःकरणविकारपदार्था रजोभवा रजोगुणाद्भव उत्पत्तिर्येषां ते तथोक्ता ज्ञेयाः, आत्मा रजोगु-णतद्विकारसाक्षी प्रत्यगात्मा निरञ्जनो रजोगुणतद्विकारोपा-ध्यतीतोऽत एव शुद्धो रजोगुणतद्विकारसाक्षित्वमलरहितो-ऽस्तीत्यनुसन्धेयः ॥ १३ ॥

एवं गुणत्रयतद्विकारोपाधिभ्य आत्मानं विविच्य दर्शयि-त्वेदानीं कर्तृत्वतदभिमानतत्कल्पितभावोपाधिभ्योप्यात्मानं विविच्य दर्शयति।

विधिश्च च प्रतिषेधश्च धर्माधर्मौ शुभाशुभम्।
कर्तृत्वभाविता भावा आत्मा शुद्धो निरञ्जनः ॥ १४ ॥

विधिरिति। विधिश्च विधीयते प्रवर्त्यतेऽनेनेति विधिः स्वविहितकर्मणि प्रवर्त्तकं शास्त्रवाक्यं 'ब्राह्मणो बृहस्पतिसवेन यजेत, क्षत्रियो राजसूयेन, वैश्यः सोमेने'त्यादिरूपं, तथा प्रतिषेधश्च प्रतिषिध्यते निवार्यतेनेनेति प्रतिषेधोऽविहितकर्मतो निवर्तकं वाक्यं 'ब्राह्मणं न हन्यादि'त्येवं रूपं, धर्माधर्मौ धर्मश्च स्ववर्णाश्रमविहितोऽधर्मश्च तद्विपरीतस्तौ, तथा शुभाशुभे शुभं च धर्मफलं पुण्यमशुभं चाधर्मफलं पापम्, एते प्रसिद्धा भावा विकाराः कर्तृत्वभाविताः स्वस्मिन्यदध्यस्तं कर्तृत्वं तेन सहकृतेन स्वयं भाविताः सन्तीति ज्ञेयम, आत्माऽध्यस्तकर्तृत्वतत्कल्पितभावसाक्षी प्रत्यगात्मा निरञ्जनः कर्तृत्वतत्कल्पितधर्मोपाधिरहितोऽत एव शुद्धः कर्तृत्वतत्कल्पितसाक्षित्वमलरहितोऽस्तीत्यनुसंधेयः ॥ १४ ॥

इदानीं क्रियातत्करणादिरूपोपाधिभ्योप्यात्मानं विविच्य दर्शयति।

कृतिः कार्यं च करणं तत्र चेष्टाः पृथग्विधाः।
कर्तृत्वस्यानुगा भावा आत्मा शुद्धो निरञ्जनः॥ १५॥

कृतिरिति। कृतिः क्रिया गमनादिरूपा, कार्यं क्रियाविषयः करेण तृणं छिन्नमित्यत्र च्छिदिक्रियाव्याप्तं तृणं, करणं च तत्रैव च्छिदिक्रियासाधनं कररूपमेतद्विकारजातं पृथग्विधं पृथग्भिन्ना विधा प्रकारो यस्य तत्तथाभूतं तत्र तेषु सत्सु पृथग्विधाः पृथग्विधा प्रकारो यासां तास्तथोक्ताश्चेष्टाः स्थानगमनागमनोत्थानादिरूपाः सन्ति ते एते सर्वे भावा विकाराः कर्तृत्वस्य स्वस्मिन्नध्यस्तं यत्कर्तृत्वं तस्यानुगा अनु पश्चाद्गच्छन्तीत्यनुगाः कर्तृत्वोपजीविन इत्यर्थः, सन्तीति ज्ञेयाः, आत्मा कर्तृत्वतदनुवृत्तभावसाक्षी प्रत्यगात्मा निरञ्जनः कर्तृत्वतदनुसा-

रिभावोपाधिभ्यो भिन्नोऽत एव शुद्धः कर्तृत्वतदनुगभावसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ १५ ॥

एवं कर्तृत्वभोक्तृत्वतज्जन्यभावोपाधिभ्य आत्मानं विविच्य दर्शयित्वेदानीं पञ्चभूतोपाधिभ्यस्तं विविच्य दर्शयितुं तद्गुणभूतशब्दादिविषयोपाधिभ्यस्तं विविच्य दर्शयति ।

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
पञ्चभूतोद्भवा भावा आत्मा शुद्धो निरञ्जनः॥१६॥

शब्द इति । शब्द आकाशगुणत्वेन प्रसिद्धः, स्पर्शो वायुगुणत्वेन प्रसिद्धः सामान्यरूपः, रूपं च तेजोगुणत्वेन प्रसिद्धं सामान्यरूपं, रसो जलगुणत्वेन प्रसिद्धः सामान्यरूपः, पञ्चमः पञ्चसङ्ख्यापूरको गन्धश्च पृथ्वीगुणत्वेन प्रसिद्धः सामान्यः, एते सर्वे भावा विकाराः पञ्चभूतोद्भवाः पञ्चसङ्ख्यानि यानि भूतानि वियदादीनि तेभ्य उद्भव उत्पत्तिर्येषान्ते तथोक्ता ज्ञेयाः, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनः शब्दाद्युपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ १६ ॥

एवं शब्दाद्युपाधिभ्यो विविच्यात्मानं दर्शयित्वेदानीं तदाधारभूतपञ्चभूतोपाधिभ्योऽप्यात्मानं विविच्य दर्शयति ।

आकाशमनिलस्तेजस्तोयमुर्वी च पञ्चमी ।
पञ्चभूतमया भावा आत्मा शुद्धो निरञ्जनः॥ १७ ॥

आकाशमिति । आकाशं वियदनिलोवायुस्तेजोऽग्निस्तोयं जलं पञ्चमी पञ्चसङ्ख्यापूरकोर्वी च धरा चैते सांख्ये लोकेषु च प्रसिद्धा भावा विकाराः पञ्चभूतमयाः पञ्चसङ्ख्यानि यानि भूतानि वियदादीनि तन्मयास्तद्रूपाः सन्तीति ज्ञेयाः, आत्मा पञ्चभूतसाक्षी प्रत्यगात्मा

निरञ्जनः पञ्चभूतोपाधिरहितोऽत एव शुद्धः पञ्चभूतसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ १७ ॥

एवं पञ्चभूतोपाधिभ्य आत्मानं विविच्य दर्शयित्वेदानीं तत्कार्यत्वेन प्रसिद्धज्ञानेन्द्रियोपाधिभ्योप्यात्मानं विविच्य दर्शयति ।

श्रोत्रं त्वङ्नयनं जिह्वा गंधग्राहश्च पञ्चमः ।
ज्ञानेन्द्रियमया भावा आत्मा शुद्धो निरञ्जनः॥१८॥

श्रोत्रमिति । श्रोत्रं श्रूयते ज्ञायते शब्दोनेनेति श्रोत्रमाकाशकार्यमाकाशगुणभूतशब्दज्ञानकरणं, त्वग्रोमकूपेषु स्थितं कार्यं वायोस्तद्गुणस्पर्शज्ञानकरणं, नयनं नीयते प्राप्यते रूपमनेनेति नयनं तेजःकार्यन्तद्गुणरूपज्ञानकरणं जिह्वा मुखस्थं जलकार्यं तद्गुणरसज्ञानकरणं पञ्चमः, एतेषां चतुर्णां पञ्चसङ्ख्यापूरको गन्धग्राहश्च गृह्यतेङ्गीक्रियतेनेनेति ग्रहो गन्धस्य पृथ्वीगुणत्वेन प्रसिद्धस्य ग्रहो ग्रहणकरणभूतो ग्रह एव ग्राहः स्वार्थेण्, यद्वा गन्धं गृह्णातीति गन्धग्राहः 'कर्मण्यण्' शब्दज्ञानकरणमित्यर्थः, एते सर्वे ज्ञानेन्द्रियमया ज्ञानक्रियाकरणभूतानि ज्ञानेन्द्रियाणि तन्मयास्तद्रूपा भावा विकाराः सन्ति आत्मा पञ्चज्ञानेन्द्रियसाक्षी प्रत्यगात्मा निरजनः पञ्चज्ञानेन्द्रियरूपोपाध्यतीतोऽत एव शुद्धः पञ्चज्ञानेन्द्रियसाक्षित्वमलरहितोऽस्तीत्युनुसन्धेयः ॥ १८ ॥

एवं पञ्चभूतकार्यभूतकर्मेन्द्रियोपाधितोप्यात्मानं विविच्य दर्शयति ।

वाक्पाणिपादौ पायुश्च तथोपस्थश्च पञ्चमः ।
कर्मेन्द्रियमया भावा आत्मा शुद्धो निरञ्जनः॥१९॥

वागिति । वागुच्यतेऽनया सा वाक्शब्दोच्चारक्रियाकरणं पाणिपादौ पाणिश्च हस्तगोलकस्थमादानक्रियात्याग-

क्रिययोः करणं, पादश्च पादगोलकस्थङ्गमनागमनादिक्रियाकरणं, पायुश्च गुदस्थं मलोत्सर्गक्रियाकरणं, तथा पञ्चमः पञ्चसंख्यापूरक उपस्थश्च शिश्नभगगोलकस्थं मैथुनक्रियातज्जन्यसुखप्राप्तिक्रिययोः करणम्, एते सर्वे भावा विकाराः कर्मेन्द्रियमया कर्माणि क्रियास्तत्करणभूतानीन्द्रस्येमानीन्द्रियाणि साधिष्ठानबुद्धिस्थचिदाभासस्य भोक्तुः सम्बन्धीनीन्द्रीयाणि तन्मयास्तद्रूपा भावा विकारा ज्ञेयाः, आत्मा पञ्चकर्मेन्द्रियसाक्षी प्रत्यगात्मा निरञ्जनः कर्मेन्द्रियोपाधिरहितोऽत एव शुद्धः पञ्चकर्मेन्द्रियसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ १९ ॥

एवं दशेन्द्रियोपाधित आत्मानं विविच्य दर्शयित्वेदानीं तद्विषयेभ्योपि तं विविच्य दर्शयति पञ्चभिः, तत्रादौ शब्दतद्भेदोपाधिभ्य आत्मानं विविच्य दर्शयति।

ध्वनिर्वर्णविभेदा य आहतानाहतादयः।

शब्दभेदमया भावा आत्मा शुद्धो निरञ्जनः ॥२०॥

ध्वनिरिति। ध्वनिरव्यक्तनादो मध्यमात्राग्रूपो ये च वर्णविभेदा ये प्रसिद्धा वर्णानामकचटतादयस्तेषां विभेदाः संयुक्तवर्णाद्या स्कस्तादयो ये चाऽऽहतानाहतादय आहता भेर्यादिजनिता अनाहताश्च स्वत उत्पन्नाः पंचभूतोद्भवाः कर्णस्य पिधाने कृते सति श्रूयमाणास्त आदयः प्रथमा येषां ते तथोक्ता आदिपदेन मेघादिजनिताः शब्दा ग्राह्याः, सर्वे त एते लोकेऽनुभूयमानाः शब्दभेदमयाः शब्दस्याकाशगुणत्वेन प्रसिद्धस्य यो भेदः पार्थक्यं तन्मयास्तद्रूपा ज्ञेयाः, आत्मा शब्दतद्भेदसाक्षी कूटस्थो निरञ्जनः शब्दतद्भेदविकारोपाधिरहितोऽत एव शुद्धः शब्दतद्भेदविकारसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २० ॥

एवं शब्दतद्भेदरूपोपाधेरात्मानं विविच्य दर्शयित्वेदानीं मध्यमाशब्दवाच्यध्वनिभेदज्ञापनपूर्वकं ततोऽप्यात्मानं विविच्य दर्शयति।

निषादर्षभगान्धारषड्जमध्यमधैवताः।
स्वरभेदमया भावा आत्मा शुद्धो निरञ्जनः॥ २१॥

निषादेति। निषादर्षभगान्धारषड्जमध्यमधैवता निषादो निषादनामक एक, ऋषभो ऋषभनामको द्वितीयः, गान्धारो गान्धारनामकस्तृतीयः, षड्जः षडजनामकश्चतुर्थः, मध्यमो मध्यम नामकः पञ्चमः, धैवतो धैवतनामा षष्ठः, अनुक्तोपि पञ्चमनामा सप्तमः, एते भावा विकाराः स्वरभेदमयाः स्वरोऽव्यक्तनादस्तस्य भेदः पार्थक्यं तन्मयास्तद्रूपा ज्ञेयाः, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनः स्वरतद्भेदोपाधिरहितोऽत एव शुद्धः स्वरतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः॥ २१॥

एवं स्वरतद्भेदोपाधित आत्मानं विविच्य दर्शयित्वेदानीं वायुगुणभूतस्पर्शतद्भेदोपाधितोप्यात्मानं विविच्य दर्शयति।

शीतोष्णमृदुकाठिन्यतीक्ष्णरूक्षादिभेदतः।
स्पर्शभेदमया भावा आत्मा शुद्धो निरञ्जनः॥ २२॥

शीतेति। शीतोष्णमृदुकाठिन्यतीक्ष्णरूक्षादिभेदतः शीतः शीतल उष्णस्तापको मृदुः कोमलः काठिन्यः कर्कशस्तीक्ष्णो दाहको रूक्षः शुष्कः, एत आदयो येषां ते तथोक्ता ये भेदा भेदवन्तः स्पर्शा सार्वविभक्तिकस्तसिः, ते सर्वे भावा विकाराः स्पर्शभेदमयाः स्पर्शस्य वायुगुणत्वेन प्रसिद्धस्य सामान्यस्पर्शस्य ये भेदाः पञ्चीकृतत्वेनानेकत्वं तन्मयास्तद्रूपा ज्ञेयाः, आत्मा स्पर्शतद्भेदसाक्षी प्रत्यगात्मा निरञ्जनः स्पर्शतद्भे-

दरूपोपाध्यतीतोऽत एव शुद्धः स्पर्शतद्भेदसाक्षित्वमलरहितो-ऽस्तीत्यनुसन्धेयः ॥ २२ ॥

इदानीं रूपभेदतोपि तं विविच्य दर्शयति।

रक्तं पीतं सितं कृष्णं हरितं चित्रमित्यपि।
रूपभेदमया भावा आत्मा शुद्धो निरञ्जनः ॥२३॥

रक्तमिति। रक्तं शोणितं पीतं हरिद्राभं सितं श्वेतं कृष्णं नीलं हरितं पालाशं चित्रं किर्मीरमित्येवमपिशब्दादन्यदपि एते भावा विकारा रूपभेदमया रूपस्य तेजोगुणत्वेन प्रसिद्धस्य सामान्यरूपस्य यो भेदः पृथक्त्वं तेजसः पञ्चीकृतत्वेन तद्गु-णस्यापि पृथक्त्वं तन्मयास्तद्रूपा ज्ञेयाः, आत्मा त-त्साक्षी कूटस्थो निरञ्जनो रूपतद्भेदोपाध्यतीतोऽत एव शुद्धो रूपतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २३ ॥

इदानीं रसभेदोपाधितोपि तं विविच्य दर्शयति।

कटुः कषायो मधुरो लवणोम्लश्च तिक्तकः।
रसभेदमया भावा आत्मा शुद्धो निरञ्जनः॥२४॥

कटुरिति। कटुः कटुत्वविशिष्टः, कषायः कषायरसः, मधुरो मिष्टरसः, लवणः क्षाररसः, अम्लश्चाऽम्लरसः,तिक्तकस्तिक्तरसश्च, एते सर्वेभावा विकारा रसभेदमया रसस्य जलगुणत्वेन प्र-सिद्धस्य सामान्यरसस्य जलस्य पञ्चीकृतत्वेन भेदः पृथक्त्वं त-न्मयास्तद्रूपा ज्ञेयाः, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनो रसतद्भेदविकारोपाध्यतीतोऽत एव शुद्धो रसतद्विकारसाक्षि-त्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २४ ॥

इदानीं गन्धतद्भेदरूपोपाधितोपि तं विविच्य दर्शयति।

चित्राः परिमलामोदसौरभासौरभादयः ।
गन्धभेदमया भावा आत्मा शुद्धो निरञ्जनः॥२५॥

चित्रा इति । परिमलामोदसौरभासौरभादयः परिमलो जनमनोहरो गन्धः, आमोदो दूरगामी गन्धः, सौरभः सुगन्धः, असौरभो दुर्गन्धः, एत आदयः प्रथमा येषां ते तथोक्ताश्चित्रा विचित्ररूपाः, यद्वा चित्रापरिमलेतिपाठे चित्रगन्धोपि व्यञ्जनादीनां ग्राह्यः, अपरिमलश्च सामान्यसुगन्धः, एते भावा विकारा गन्धभेदमया गन्धः पृथ्वीगुणत्वेन प्रसिद्धः सामान्यस्तस्य यो भेदः पञ्चीकृतत्वेनानेकत्वं तन्मयास्तद्रूपा ज्ञेयाः, आत्मा-गन्धतद्भेदविकारसाक्षी प्रत्यगात्मा निरञ्जनो गन्धतद्विकारोपाधितो भिन्नोऽत एव शुद्धो गन्धतद्विकारसाक्षित्वमलरहितोऽस्तीति ज्ञेयः ॥ २५ ॥

एवं पञ्चभूततद्गुणोपाधित आत्मानं विविच्य दर्शयित्वेदानीं पञ्चीकृतभूतजन्यस्थूलदेहयोनिभेदोपाधितोप्यात्मानं विविच्य दर्शयति ।

जरायुजाण्डजस्वेदसंभवोद्भिज्जकादयः ।
प्राणिभेदमया भावा आत्मा शुद्धो निरञ्जनः॥२६॥

जरायुजेति । जरायुजाण्डजस्वेदसंभवोद्भिज्जकादयो जरायुजा गर्भोपरिवेष्टनजालं जरायुस्तस्माज्जाताः, अण्डजा अण्डेभ्यो जाताः पक्ष्यादयः, स्वेदसम्भवाः स्वेदो घर्मस्तस्मात्सम्भवो जन्म येषां ते तथोक्ता यूकामत्कुणादयः, उद्भिज्जका उद्भिद्य पृथिवीं जाता उत्पन्नास्त उद्भिज्जकाः, एत आदयो येषां ते तथोक्ताः, एते भावा विकारा योनिभेदभवा योनेः कारणस्य यो भेदः पार्थक्यं तस्माद्भवा उत्पन्ना ज्ञेयाः, आत्मा

योनितद्भेदतदुद्भवदेहसाक्षी प्रत्यगात्मा निरञ्जनो योनितद्भेदतदुद्भवदेहाद्युपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २६ ॥

तत्र योनिभेदोत्पन्नेषु मध्ये प्राणिषु नीचत्वेनाण्डजानुपेक्ष्य जरायुजभेदोद्भवोपाधितोऽप्यात्मानं विविच्य दर्शयति।

ससुरासुरगन्धर्वयक्षरक्षोनरादयः।
जीवजातिमया भावा आत्मा शुद्धो निरञ्जनः ॥२७॥

ससुरेति। ससुरासुरगन्धर्वयक्षरक्षोनरादयः सुरैर्देवैः सहिताः ससुरा असुरा दैत्याः, गन्धर्वा देवगायकाः, यक्षाः किंनराः, रक्षांसि राक्षसाः, नरा मनुष्याः, आदय प्रथमा येषां ते सर्वे भावा विकारा जीवजातिमया जीवानां कल्पितदेहजातिरूपा ज्ञेयाः, आत्मा जीवतत्कल्पितदेहजातिसाक्षी प्रत्यगात्मा निरञ्जनो जीवतत्कल्पितदेहजात्युपाध्यस्पृष्टोऽत एव शुद्धो जीवतत्कल्पितदेहजातिसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २७ ॥

एवं स्थूलजातिरूपोपाधित आत्मानं विविच्य दर्शयित्वेदानीं स्थूलदेह उपास्यभेदेन कल्पितजात्युपाधितोऽप्यात्मानं विविच्य दर्शयति।

शैववैष्णवसावित्रशाक्तगाणपतादयः।
इष्टदैवतजा भावा आत्मा शुद्धो निरञ्जनः ॥ २८॥

शैवेति। शैववैष्णवसावित्रशाक्तगाणपतादयः शैवाः शिवोपासकाः, वैष्णवा विष्णूपासकाः, सावित्रा सूर्योपसकाः, शाक्ताः शक्त्युपासकाः, गाणपता गणेशोपासकाः, एत आदयो मुख्या येषां ते तथोक्तास्त एत इष्टदैवतजा इष्टं प्रियं य-

दैवतं देवता ततो जाता उत्पन्नास्ते तथोक्ता भावा विकारा ज्ञेयाः, आत्मा—इष्टदैवततदुपासनतत्कर्तृरूपोपाधिसाक्षी प्रत्यगात्मा निरञ्जन इष्टदैवततदुपासकोपाधिरहितोऽत एव शुद्ध इष्टदैवततदुपासकसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २८ ॥

एवमुपास्यतज्जन्यविकारोपाधित आत्मानं विविच्य दर्शयित्वेदानीमृषितत्कुलतद्गोत्रप्रवरोपाधिभ्य आत्मानं विविच्य दर्शयति ।

वासिष्ठगार्ग्यशाण्डिल्यभार्गवाङ्गिरसादयः ।
गोत्रप्रवरजा भावा आत्मा शुद्धो निरञ्जनः ॥ २९ ॥

वासिष्ठेति । वासिष्ठगार्ग्यशाण्डिल्यभार्गवाङ्गिरसादयो वासिष्ठो वसिष्ठस्य गोत्रापत्यं पुमान्वासिष्ठो वसिष्ठकुलजत्वाद्वसिष्ठगोत्र इत्यर्थः, गार्ग्यो गर्गस्य गोत्रापत्यं पुमान्गार्ग्यो गर्गकुलोद्भवत्वाद्गार्ग्य इत्यर्थः, शाण्डिल्यः शाण्डिल्यकुलोत्पन्नः, भार्गवो भृगोर्गोत्रापत्यं पुमान्भार्गवो भृगुकुलोत्पन्नत्वाद्भार्गव इत्यर्थः, आङ्गिरसोऽङ्गिरसो गोत्रापत्यं पुमानाङ्गिरसोऽङ्गिरःकुलोत्पन्न इत्यर्थः, एते भावा विकारा गोत्रप्रवरजा गोत्राणि प्रवराश्च तेभ्यो जाता उत्पन्ना विज्ञेयाः, आत्मा गोत्रप्रवरतदुत्पन्नभावसाक्षी प्रत्यगात्मा निरञ्जनो गोत्रप्रवरतज्जभावोपाध्यतीतोऽत एव शुद्धो गोत्रप्रवरतदुत्पन्नभावोपाधिसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ २९ ॥

इदानीं विद्यातद्वृत्तिभावोपाधिभ्योऽप्यात्मानं विविच्य दर्शयति ।

पौराणिकच्छान्दसिकज्योतिर्विद्भिषगादयः ।
विद्यावृत्तिभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ३० ॥

पौराणिकेति । पौराणिकच्छान्दसिकज्योतिर्विद्भिषगा-

दयः पौराणिकः पुराणान्यधीते वेत्ति वा पौराणिकः पुराणविद्योपजीवी, छान्दसिकश्छन्दो वेदमधीते वेद वा स च्छान्दसिको वेदोपजीवी, उभयत्र 'तदधीते तद्वेदे'ति तद्धितष्ठक्, 'ठस्येक' इतीकः, ज्योतिर्विज्ज्योतिर्ज्योतिःशास्त्रं वेत्तीति ज्योतिर्विज्ज्योतिःशास्त्रोपजीवी, भिषग्वैद्यो वैद्यविद्योपजीवी, एत आदयो मुख्या येषां शिल्पी शास्त्रीयादीनां ते तथोक्तास्ते सर्वे भावा विकारा विद्यावृत्तिभवा विद्या ज्ञानसाधनभूतशास्त्राणि, यद्वा विद्या पुराणाद्यास्ताभ्यो या वृत्तिर्जीविका ततो भवा उत्पन्ना ज्ञेयाः, आत्मा विद्यातद्वृत्तितज्जन्यभावानां साक्षी प्रसगात्मा निरञ्जनो विद्यातद्वृत्तितज्जन्यभावोपाधिरहितोऽत एव शुद्धो विद्यातद्वृतिसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ३० ॥

इदानीं यागजन्यभावोपाधितोप्यात्मानं विविच्य दर्शयति।

प्राच्यौदीच्यप्रतीच्याद्या दाक्षिणात्यादयः परे ।
यागभेदोद्भवा भावा आत्मा शुद्धो निरञ्जनः॥३१॥

प्राच्येति । प्राच्यौदीच्यप्रतीच्याद्याः प्राच्या यज्ञेप्राग्दिग्द्वाराधिकारिणः, औदीच्या उदग्द्वाराधिकारिणः, प्रतीच्याः पश्चिमद्वाराधिकारिणः, एत आद्याः प्रथमा येषां ते तथोक्ताः परेऽन्येपि दाक्षिणात्यादयो दाक्षिणात्या दक्षिणद्वाराधिकारिण आदयः प्रमुखा येषां ते तथाभूताः, त एते सर्वे भावा विकारा यागभेदभवा यागो यज्ञस्तन्निमितको यो द्वारभेदस्तस्माद्भवो जन्म येषां ते तथाभूता ज्ञेयाः, आत्मा यागतद्द्वारतद्भेदतज्जभावसाक्षी प्रसगात्मा निरञ्जनो यागतद्वारनिमित्तोद्भवभावोपाध्यस्पृष्टोऽत एव शुद्धो यागादिविकारसाक्षित्वमलरहितोस्तीत्यनुसन्धेयः ॥ ३१ ॥

इदानीं क्रियातज्जन्यभावोपाधितोप्यात्मानं विविच्य दर्शयति ।

> चित्रकृल्लेखकस्तक्षा वाचकः पाठकः परे ।
> क्रियाभेदभवा भावा आत्मा शुद्धो निरञ्जनः ॥३२॥

चित्रकृदिति । चित्रकृच्चित्रक्रियोपजीवी, लेखको लेखक्रियोपजीवी, तक्षा काष्ठतनूकरणादिक्रियोपजीवी, वाचको वचनक्रियोपजीवी, पाठकः पठनक्रियोपजीवी, परेऽन्येपि गन्तास्थात्रादयो ग्राह्याः, एते भावा विकाराः क्रियाभेदभवाः क्रियाणां कृतीनां यो भेदः पार्थक्यं तस्माद्भवा उत्पन्नाः ज्ञेयाः, आत्मा तत्तत्क्रिया–तत्तत्कर्तृ–तत्तद्भेदसाक्षी प्रत्यगात्मा निरञ्जनो क्रिया–तत्कर्तृ–तद्भेदोपाध्यतीतोऽत एव शुद्धः क्रिया तत्कर्तृतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेय ॥ ३२ ॥

इदानीं शरीरसुन्दरताजन्यविकारोपाधितोप्यात्मानं विविच्य दर्शयति ।

> हेमगौरविशालाक्षसिंहसंहननादयः ।
> कायसौन्दर्यजा भावा आत्मा शुद्धो निरञ्जनः॥३३॥

हेमगौरेति । हेमगौरविशालाक्षसिंहसंहननादयो हेमगौरो हेम सुवर्णं तद्वद्गौरः पीतवर्णः, 'पीतो गौरो हरिद्राभ' इत्यमरः, विशालाक्षो विशाले आकर्णान्तं विस्तीर्णे अक्षिणी नेत्रे यस्य स तथोक्तो विशालनयन इत्यर्थः, सिंहसंहननः सिंहो मृगेन्द्रस्तद्वत्संहननं गमनं यस्य स तथोक्तः, यद्वा सिंहवत्संहननमुच्चस्कन्धोच्चवक्षस्थलत्वादिरूपं सौन्दर्यं यस्य स तथोक्तः, एत आदयो मुख्या येषां ते तथोक्ताः, भावा विकाराः कायसौन्दर्यजाः कायस्य देहस्य यत्सौन्दर्यं कमनीयत्वं तस्माज्जाता उत्पन्ना ज्ञेयाः, आत्मा शरीरतत्सौन्दर्यतज्जविकारसाक्षी प्रत्यगात्मा निर-

अतः शरीरतत्सौन्दर्यतदुत्पन्नविकारोपाध्यस्पृष्टोऽत एव शुद्धः शरीरतत्सौन्दर्यतदुत्पन्नभावसाक्षित्वमलरहितोऽस्तीत्य-नुसन्धेयः॥ ३३॥

इदानीं शरीरविरूपत्वतज्जन्यभावोपाधितोऽप्यात्मानं विविच्य दर्शयति।

मूकान्धपङ्गुबधिरकाणकञ्जाक्षकादयः।
कायवैरूप्यजा भावा आत्मा शुद्धो निरञ्जनः॥३४॥

मूकेति। मूकान्धपङ्गुबधिरकाणकञ्जाक्षकादयो मूको गतवाग्,अन्धश्चक्षुर्हीनः, पङ्गुः पादरहितो, बधिरः श्रोत्रहीनः, काणो गतैकनेत्रः, कञ्जाक्षको विडालाक्षः, केकरतेति पाठे तिर्यङ्नेत्रः, एत आदयः प्रथमभूता येषां कुब्जादीनां ते तथोक्ताः, त एते सर्वे भावा विकाराः कायवैरूप्यजा कायस्य देहस्य यद्वैरूप्यमसौन्दर्यं तस्माज्जाता ज्ञेयाः, आत्मा शरीरतद्वैरूप्यतदुत्पन्नविकारसाक्षी प्रत्यगात्मा निरञ्जनः शरीरतद्वैरूप्यतज्जभावोपाध्यस्पृष्टोऽतः शुद्धः शरीरतद्वैरूप्यतदुत्पन्नभावसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः॥ ३४॥

सप्तलोकोपाधितोऽप्यात्मानं विविच्य दर्शयति।

पातालं वसुधा स्वर्गो महस्तपो जनादयः।
लोकभेदभवा भावा आत्मा शुद्धो निरञ्जनः॥३५॥

पातालमिति। पातालमधोभुवनं, वसुधा नरलोकः, स्वर्गो देवलोकः, महो महर्लोकः, तपस्तपोलोको, जनो जनलोकः,आदिः प्रथमो येषां सत्यगोलोकादीनां ते तथोक्ताः, लोकभेदभवा लोकानां स्थानानां यो भेदः पृथक्त्व तस्माद्भव उत्पत्तिर्येषां ते तथाभूता भावा विकारा ज्ञेयाः, आत्मा लोकतद्भेदसाक्षी कूटस्थो

निरञ्जनो लोकतद्भेदोपाध्यतीतोऽत एव शुद्धो लोकतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ३५ ॥

इदानीं स्थूलदेहोपलक्षितं यत्पशुत्वं तद्भेदोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

सिंहव्याघ्रवराहर्क्षहरिणप्लवगादयः ।
पशुभेदभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ३६ ॥

सिंहेति । सिंहव्याघ्रवराहर्क्षहरिणप्लवगादयः सिंहः केसरी, व्याघ्रः शार्दूलः, वराहः सूकरः, ऋक्षो भल्लूकः, हरिणो मृगः, प्लवगो वानरः, एत आदयः प्रथमा येषां ते तथोक्ताः, एते सर्वे भावा विकाराः पशुः पशुत्वं तस्य भेदो भिन्नत्वं तस्माद्भवा उत्पन्ना ज्ञेयाः, आत्मा पशुतद्भेदसाक्षी प्रत्यगात्मा निरञ्जनः पशुत्वतद्भेदोद्भवविकारोपाध्यतीतोऽत एव शुद्धः पशुत्वतद्भेदोद्भवसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ३६ ॥

इदानीं धातुतद्भेदोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रादयः परे ।
धातुभेदभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ३७ ॥

त्वगिति । त्वक्त्वचा, असृग्रुधिरं, मांसमामिषं, मेदस्त्वगन्तरस्थितशुक्लत्वगाकृतिः, अस्थि शरीरशुक्तयः, मज्जाऽस्थिलग्नः सूक्ष्मत्वगाकृतिः, शुक्रं रेतः, एत आदयो मुख्या येषु ते तथोक्ताः, परेऽन्येऽपि भावा विकरा धातुभेदभवा धातूनां शरीरधारकाणां त्वगादीनां यो भेदः पृथक्त्वं तस्माद्भवा उत्पन्ना ज्ञेयाः, आत्मा धातुतद्भेदसाक्षी प्रत्यगात्मा निरञ्जनो धातुतद्भेदोपाध्यतीतोऽत एव शुद्धो धातुतद्भेदतज्जविकारसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ३७ ॥

इदानीं शारीरवायुतद्भेदोपाधितोऽप्यात्मानं विविच्य दर्शयति

प्राणापानसमानाश्चोदानव्यानौ च पञ्च ते।
प्राणभेदभवा भवा आत्मा शुद्धो निरञ्जनः॥३८॥

प्राण इति। प्राणः प्रकर्षेणानिति जीवयति शरीरेन्द्रियादिकं स प्राण एतन्नामको वायुः, अपानोऽपानिति शरीरेन्द्रियादिकं परित्यज्य गच्छति, यद्वा शरीरादिकं तर्पयति सोऽपानो वायुः, समानः समं यथा भवति तथाऽऽनयति प्रापयति सर्वशरीरनाडीषु भक्षितमन्नपानादिकं स समान एतन्नामको वायुः, चापि उदानव्यानौ चोदान उदूर्ध्वमनितीत्युदान उत्क्रमणवायुः, व्यानश्च विशेषेणानिति सर्वं शरीरं व्यापको भूत्वा जीवयति सर्वशरीरमिति व्यानः, त एत पञ्च पञ्चसंख्याकाः, उदानो व्यानश्च पञ्चम इति पाठे पञ्च संख्यापूरको व्यानोपीति व्याख्येयम्, एते भावा विकाराः प्राणभेदभवाः प्राणः शारीरो वायुस्तस्य यो भेदः पृथक्त्वं तस्माद्भवा उत्पन्नाः, आत्मा पञ्चप्राणवृत्तितद्भेदसाक्षी प्रत्यगात्मा निरञ्जनः पञ्चप्राणतद्भेदोपाध्यस्पृष्टोऽत एव शुद्धः पञ्चप्राणतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः॥ ३८॥

इदानीमुपप्राणतद्भेदोपाधितोऽप्यात्मानं विविच्य दर्शयति।

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः।
उपप्राणमया भावा आत्मा शुद्धो निरञ्जनः॥३९॥

नाग इति। नागो नागनामा वायुर्नेत्रोन्मीलनकरः, 'नाग उन्मीलनकर' इत्युक्तेः, कूर्मश्च कूर्मनामा वायुर्निमीलनकरः, 'कूर्मः स्यात्तु निमीलने' इत्युक्तेः, कृकरः क्षुत्करो वायुः, 'क्षुत्करस्तु कृकर' इत्युक्तेः, देवदत्तो देवदत्तनामा जृम्भणकरो वायुः, 'देवदत्तस्तु

जृम्भणे' इत्युक्तेः, धनञ्जयः पोषणकरो वायुः,मृतं शरीरं संव्याप्य गते प्राणेपि तिष्ठति धनञ्जयः' इत्युक्तेः, एते भावा विकारा उपप्राणभवा उपप्राणा प्राणानुसारिणस्ततो भवा उत्पन्ना ज्ञेयाः, आत्मा उपप्राणतद्भेदसाक्षी प्रत्यगात्मा निरञ्जन उपप्राणतद्भेदोपाध्यतीतोऽतः शुद्ध उपप्राणतद्भेदसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ३९ ॥

इदानीं ज्वरादिरोगोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

ज्वरापस्मारकुष्ठानि वातपित्तकफादयः ।
धातुवैषम्यजा भावा आत्मा शुद्धो निरञ्जनः॥४०॥

ज्वरेति । ज्वरापस्मारकुष्ठानि ज्वरस्तापरोगः, अपस्मारो मूर्छारोगः, कुष्ठं चाष्टादशभेदभिन्नश्वेतकुष्ठादिकं, वातपित्तकफादयो वातो वायुः, पित्तं पित्तनामधातुः, कफः श्लेष्मा, आदयो मुख्या येषां ते तथोक्ताः, एते भावा विकारा धातुवैषम्यजा रेतआदिधातूनां वैषम्यं क्षोभो वातपित्तकफरूपस्ततश्च जाता ज्ञेयाः, आत्मा धातुतद्वैषम्यतदुत्पन्नविकारसाक्षी प्रत्यगात्मा निरञ्जनो धातुतद्वैषम्यतदुत्पन्नरोगरूपोपाध्यस्पृष्टोऽत एव शुद्धो धातुतद्वैषम्यतज्जरोगसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥४०॥

इदानीं नाडीभेदोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

पिङ्गलेडा सुषुम्णा च गान्धारी हस्तिकादयः ।
नाडीभेदभवा भावा आत्मा शुद्धो निरञ्जनः ॥४१॥

पिङ्गलेति । पिङ्गला दक्षिणनासापुटे प्रवहतीनाडी पिङ्गलाख्या, इडा वामनासापुटे प्रवहती नाडी–इडाख्या, अन्या सुषुम्णा च क्षणं वामनासापुटे क्षणं दक्षिणनासापुटे प्रवहती नाडी

सुषुम्णाख्या, गान्धारी गान्धारीनाम्नी नाडी, हस्तिका-ए-तन्नाम्नी नाडी, आदिः प्रथमा यासां तास्तथोक्ता एते सर्वे-भावा विकारा नाडीभेदभवा नाडीनां पिङ्गलादिनाडीनां भेदः पृथक्त्वं तस्माद्भव उत्पत्तिर्येषां ते तथोक्ता ज्ञेयाः, आत्मा नाडी-तद्भेदोद्भवविकारसाक्षी प्रत्यगात्मा निरञ्जनो नाडीत-द्भेदोपाधिशून्योऽत एव शुद्धो नाडीतद्भेदसाक्षित्वमलरहितो-ऽस्तीत्यनुसन्धेयः ॥ ४१ ॥

इदानीं गतितद्भेदतदुद्भवविकारोपाधितोऽप्यात्मानं वि-विच्य दर्शयति।

उत्क्रान्तिगत्यागतयो याः स्वर्गनरकप्रदाः।
लिङ्गभेदोद्भवा भावा आत्मा शुद्धो निरञ्जनः ॥४२॥

उत्क्रान्तीति। उत्क्रान्तिगत्यागतय उत्क्रान्तिरुदानगत्या शरीरपरित्यागसन्मुखता, गतिर्लोकान्तरं प्रति गमनम्, आगतिर्न-रक इह लोके वाऽऽगमनम्, एता याः शास्त्रेषु प्रसिद्धाः स्वर्ग-नरकप्रदाः स्वर्गस्य स्वर्गसुखस्य नरकस्य नरकदुःखस्य च प्रदा दातारस्त एते भावा विकारा लिङ्गभेदोद्भवा लिङ्गश-रीरस्य यो भेदः सत्त्वादिगुणोद्रेकेण पूर्वपूर्वगृहीतभावत्यागपु-रःसरमन्यभावाङ्गीकरणरूपस्तस्मादुद्भवा उत्पन्ना ज्ञेयाः, आत्मा लिङ्गतद्भेदतदुद्भवभावसाक्षी प्रत्यगात्मा निरञ्जनो लिङ्गत-द्भेदतदुद्भवोपाधिशून्योऽत एव शुद्धो लिङ्गतद्भेदतदुद्भवसाक्षि-त्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ४२ ॥

इदानीं वर्णतद्भेदोपाधितोऽप्यात्मानं विविच्य दर्शयति।

ब्राह्मणः क्षत्रियो वैश्यः शूद्र इत्येवमादयः।
वर्णभेदभवा भावा आत्मा शुद्धो निरञ्जनः ॥४३॥

ब्राह्मण इति । ब्राह्मणो ब्रह्मवृत्त्युपजीविकः, क्षत्रेण क्षत्रं वा चरति क्षत्रियः क्षत्रधर्मेण प्रवर्त्तते क्षत्रकर्म वाऽऽचरतीत्यर्थः, क्षत्रधर्मोपजीवीत्यर्थः, वैश्यो विशा वैश्यवृत्त्या चरति स वैश्यो वैश्यवृत्त्युपजीवीत्यर्थः, शूद्रः शूद्रवृत्त्युपजीवी, इत्येवमेतेचादयो येषां ते तथोक्ता भावा विकाराः, आदिपदेन सूततक्षचर्मकारसुवर्णकाराद्या ग्राह्याः, वर्णभेदभवा वर्णानां गुणकृतस्वभावानां यो भेदः पृथक्त्वं तस्माद्भवा उत्पन्ना ज्ञेयाः, आत्मा वर्णतद्भेदतदुद्भवविकारसाक्षी प्रत्यगात्मा निरञ्जनो वर्णतद्भेदतदुद्भवविकारोपाध्यतीतोऽत एव शुद्धो वर्णतद्भेदतज्जविकारसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ४३ ॥

इदानीमाश्रमभेदोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमात् ।
आश्रमप्रभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ४४ ॥

ब्रह्मचारीति । ब्रह्मचारी ब्रह्मचर्यव्रतनिष्ठः स चोपकुर्वाणो नैष्ठिकश्च द्विविधोऽपि, गृही गृहस्थधर्मवान्, वानप्रस्थो वानप्रस्थधर्मवान्, भिक्षुः संन्यासी, इति एवं क्रमात्क्रमेण ज्ञेया ते भावा विकारा आश्रमप्रभवा आश्रम्यतेस्मिन्निस्याश्रमस्तस्मात्प्रभवा उत्पन्ना ज्ञेयाः, आत्माऽऽश्रमतद्भेदसाक्षी प्रत्यगात्मा निरञ्जन आश्रमतद्भेदरूपोपाध्यतीतोऽत एव शुद्ध आश्रमतद्भेदसाक्षित्वमलहीनोऽस्तीत्यनुसन्धेयः ॥ ४४ ॥

इदानीं पाखण्डतद्भेदतदुपाधितोऽप्यात्मानं विविच्य दर्शयति ।

कापालिकाः क्षपणकाः स्वेच्छाचारा दिगम्बराः ।
पाखण्डप्रभवा भावा आत्मा शुद्धो निरञ्जनः ॥ ४५ ॥

कापालिका इति । कापालिका एककर्णेऽस्थिकुण्ड-

लधारिणो मुण्डमालां च विधृतवन्तो विशिष्टवेषाः प्रसिद्धाः, क्षपणकाः परमारणक्रियानिष्ठाः संन्यासधर्मरहितसंन्यासवेषधारिणः स्वेच्छाचाराः स्वस्येच्छयैवाचारो येषां ते वेदविहितान्यवेषाचारधारिणः कञ्चुकाचारिण इति प्रसिद्धाः, दिगम्बरा माध्यमिकनामानो नास्तिकाः, ते एते सर्वे भावा विकाराः पाखण्डप्रभवाः पापस्य दुःकृतस्य खण्डं चिह्नं तस्मात्प्रभव उत्पत्तिर्येषां ते तथोक्ता ज्ञेयाः, आत्मा पाखण्डतद्भेदोद्भवविकारसाक्षी प्रत्यगात्मा निरञ्जनः पाखण्डतद्भेदतदुद्भवविकारोपाधिरहितोऽत एव शुद्धः पाखण्डतद्भेदतदुद्भवविकारसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ४५ ॥

इदानीं ममत्वनिर्ममत्वाभ्यां तदभिमानतोप्यात्मानं विविच्य दर्शयति ।

ममता संमता मूढैर्न मता समतास्थितैः ।
सोप्यहन्ताभवो भाव आत्मा शुद्धो निरञ्जनः ॥ ४६ ॥

ममतेति । मूढैर्मूर्खैर्ममता ममत्त्वरूपो भावः सा संमतेष्टीकृता, समतास्थितैः समतायां समत्त्वे गुणसाम्यरूपायां प्रकृताविसर्थः, स्थितैरमूढैर्न मता नेष्टीकृता सोपि ममत्वेष्टीकरणानिष्टीकरणरूपोपि भावो विकारोऽहन्ताभवोऽहन्ताया अहङ्काराद्भव उत्पत्तिर्यस्य स तथोक्तो ज्ञेयः, आत्मा ममत्त्वाममत्त्वसाक्षी प्रत्यगात्मा निरञ्जनो ममत्वनिर्ममत्वरूपोपाध्यतीतोऽत एव शुद्धो ममत्वनिर्ममत्वसाक्षित्वमलरहितोऽस्तीत्यनुसंन्धेयः ॥ ४६ ॥

ननु तर्हि ममतैव त्याज्याऽहन्तायां को दोषो येनासौ त्यज्यते तत्राह ।

अहन्ताममते धीमन्नुभे मातृसुते अपि ।
ते परस्परकुट्टिन्यौ तदेकामपि मा स्पृश ॥ ४७ ॥

अहन्तेति । हे धीमन् हे विवेकिन् उभे द्वे अहन्ताममते अहङ्कारममकारत्वे मातृसुते अपि अहङ्कृतिर्ममताया माता तस्यास्तत उद्भवान्ममतापि अहंकृतेर्माता तस्या अपि तत उद्भवादेवमन्योन्यसुतात्वमप्युभयोर्ज्ञेयं, तथापि ते अहन्ताममते परस्परकुट्टिन्यावन्योन्ययोः कुट्टिन्यौ दूतिके स्तः, तत्तस्मात्कारणादुभयोर्मध्य एकामपि अहन्तां ममतां वा मा स्पृश माङ्गीकुरु एकाङ्गीकारे उभयोरप्यङ्गीकारः स्यादिति भावः ॥४७॥

इदानीं सर्वभावलयोपलक्षितबोधरूपोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

सर्वे भावाः प्रलीयन्ते यस्मिन् भावे समुद्गते ।
सोऽपि बोधमयो भाव आत्मा शुद्धो निरञ्जनः॥४८॥

सर्वे इति । यस्मिन्विद्वत्प्रसिद्धे भावे विकारे समुद्गते सति समुत्पन्ने सति सर्वे समस्ता भावा विकाराः प्रलीयन्ते नाशं प्राप्नुवन्ति सोऽपि सर्वलयलक्षणलक्षितोऽपि भावो विकारो बोधमयो ज्ञानस्वरूपो ज्ञेयः, आत्मा सत्त्वतत्कार्यबोधसाक्षी प्रत्यगात्मा निरञ्जनः सत्त्वतत्कार्यरूपबोधोपाधिशून्योऽत एव शुद्धः सत्त्वतत्कार्यबोधसाक्षित्वमलरहितः ॥ ४८ ॥

इदानीं बोधतद्विषयजगदभावोपलक्षितशून्यरूपोपाधितोऽप्यात्मानं विविच्य दर्शयति ।

यत्र बोधमयो भावो नास्ति भावे समुद्गते ।
स हि शून्यमयो भाव आत्मा शुद्धो निरञ्जनः॥४९॥

यत्रेति। यत्र यस्मिन्प्रत्यक्षे भावे विकारे समुद्गत उत्पन्ने सति बोधमयो ज्ञानरूपो भावो विकारो नास्ति न विद्यते बोधमयाभावग्रहणेन तद्विषयभूतजगदभावोऽपि ग्राह्यः, जगदपि नास्ति न विद्यते सोऽपि बोधतद्बोध्यजगदभावोपलक्षितो भावो विकारः शून्यरूपो ज्ञेयः, आत्मा शून्यसाक्षी कूटस्थश्चिन्मात्रस्वरूपो निरञ्जनः शून्यत्वोपाधिरहितो अत एव शुद्धः शून्यसाक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ४९ ॥

ननु तर्हि देहादिसमस्तजगत्पदार्थानां तदभावाख्यस्य शून्यस्य च तद्बोधस्यापि प्रतीयमानस्य सर्वस्यानात्मत्वेन निषेधे कृते सति तद्रहितस्तदन्यश्चात्मा क इत्याशङ्क्याह।

शून्याशून्ये समे यस्मिन् भावे च समातां गते।
स भावस्त्वमसि प्राज्ञ आत्मा शुद्धो निरञ्जनः ॥ ५० ॥

शून्याशून्ये इति। यस्मिन् विद्वत्प्रत्यक्षे भावे सम एकरूपे भावे पारमार्थिकसद्रूप आत्मनि शून्याशून्ये शून्यं जगदभावरूपमशून्यं च जगद्भावरूपं ते उभे द्वे अपि समतां गते समतामेकरूपतां गते प्राप्ते भवतः स भावः शून्याशून्योभयसाम्यप्रकाशको भावः प्राज्ञः प्रकर्षेण ज्ञः प्रज्ञः प्रज्ञ एव प्राज्ञः सर्वज्ञ इत्यर्थः, स्वार्थेऽण्प्रज्ञशब्दात्कर्त्तव्य, ततश्च प्राज्ञशब्दः सर्वज्ञवाचकः सिद्धः, आत्मा स्वयं सद्रूपेण सर्वत्र सन्ततो व्यापक इत्यर्थः, निरञ्जनो शून्याशून्यतत्साम्यलक्षणोपाधिरहितोऽतः शुद्धः शून्याशून्यतत्साम्यसाक्षित्वमलरहितो यः स त्वमसि त्वत्प्रकाश्यत्वेन सर्वपूर्वोक्तोपाध्यनुभवाद्भवानेवात्मेत्यर्थः, 'न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यताम्' इत्युक्तत्वाद्, 'नासदासीन्नो सदासीद्' इति श्रुत्या सदसतोर्निषिद्धत्वात्तत्साम्यस्यापि तदुपक्षितत्वासिद्धेस्तत्प्रकाशकमात्मस्वरूपं पारमार्थिकं निश्चेतव्यमिति भावः ॥ ५० ॥

इदानीमेतत्प्रकरणविचारफलमाह ।

निरञ्जनस्य देवस्य पञ्चाशत्कविचारतः ।
निरञ्जनस्य देवस्य निरञ्जनपदं व्रजेत् ॥ ५१ ॥

इति श्रीनरहरिकृतौ बोधसारे निरञ्जनपञ्चाशत्कं सप्तदशः ॥ १७ ॥

निरञ्जनस्येति । निरञ्जनस्योपाधिरहितस्य देवस्य चिन्मात्ररूपस्यात्मनः पञ्चाशत्कविचारतः पञ्चाशतां पञ्चाशत्संख्यानां श्लोकानां समूहः पञ्चाशत्कं समूहे कन्प्रत्ययः, एतत्प्रकरणस्य विचारतो विवेकान्निरञ्जनस्योपाधिरहितस्य केवलस्येत्यर्थः, देवस्य चिन्मात्रस्वरूपस्यात्मनो निरञ्जनपदं निरुपाधिकं यत्पदं स्वरूपं तद्व्रजेत्प्राप्नुयात् ॥ ५१ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ निरञ्जनपञ्चाशत्कप्रकाशः सप्तदशः ॥ १७ ॥

---

अथ यमुनाष्टकम् ।

एवं निरुपाधिकमात्मस्वरूपं सर्वोपाधिभ्यो विविच्य दर्शयित्वेदानीं तस्यैव लक्षणैर्लक्षितानि लक्षणानि तैर्लक्षयितुं यमुनासादृश्येन तदेव निरूपयिष्यन्यमुनाष्टकाख्यमष्टश्लोकं प्रकरणमारभमाण आह ।

अथ यमुनाष्टकम् ।

अथेति । अथ निरञ्जनपञ्चाशत्कनिरूपणानन्तरं यमुनाष्टकं यमुनाष्टकाख्यं प्रकरणं निरूप्यत इति शेषः, तत्र तावदादौ यमुनाचितोः समानधर्मनिरूपणे सादृश्यं प्रदर्शयति ।

उज्ज्वला मधुरा शीता पवित्रा यमुनेव चित् ।
विविच्य दृष्टा हि मया श्यामिका याऽत्र स भ्रमः ॥ १ ॥

उज्ज्वलेति। उज्ज्वला निर्मलजला पवित्रा पवित्रयति जनान्सा पवित्रा स्वतश्च पवित्रा, मधुरा मिष्टजला, शीता शीतलगुणा, यमुनेव यथा यमुना कालिन्दी नदी तथा चिच्चेतनापि उज्ज्वला निर्मला मायाऽविद्याविमलरहिता मधुरा सुखरूपत्वान्मिष्टेति यावत्, शीता तापत्रयनिवर्त्तकत्वाच्छीतलगुणा, पवित्रा पवित्रयति रागाविरहितं करोत्यन्तःकरणं स्वाविर्भावेनेति पवित्राऽस्तीति शेषः, ननु यमुनेव चिदस्तीति कुतो ज्ञातं तत्राह विविच्येति, हि यस्मात्कारणान्मया तव त्वत्स्वरूपोपदेशकेन विविच्य सर्वोपाधितो विवेचनेन पृथक्कृत्य दृष्टाऽनुभूता, एवं च सर्वैरपि मदन्यैः सर्वोपाधितो विविच्यैवैतादृशी ज्ञातुं शक्येति भावः, ननु दृष्टान्तदार्ष्टान्तिकयोरुज्ज्वलत्वधर्मे समाने प्रतीयमाना श्यामिका कुतस्सा तत्राह श्यामिकेति, या प्रत्यक्षा सर्वेषां श्यामिका नीलता नैल्यमित्यर्थः, अत्र यमुनायां चिति च यमुनायां नीलत्वं चिति त्वज्ञानरूपं नैल्यमिति विवेकः, स भ्रमः सा भ्रान्तिरेवेति निश्चेतव्यम्, अतो यमुनाचितोः साम्याद्यमुनादृष्टान्तेन चिति तल्लक्षणलक्षितानि लक्षणानि योज्यानीति भावः ॥ १ ॥

एवं यमुनाचितोरुज्ज्वलत्वादिगुणैः सादृश्यं प्रतिपाद्येदानीं स्थूणानिखननन्यायेन तदेव द्रढयितुमाक्षिप्य समाधत्ते चतुर्भिः, तत्रादावुज्ज्वलत्वमाक्षिप्यसमाधत्ते।

यत्त्वं वदसि चिद्देवी नीरूपा तूज्ज्वला कथम्।
तया प्रक्षालितं पश्य निर्मलं हृदयं मम ॥ २ ॥

यदिति। हे शिष्य त्वं भवान् यद्यस्मात्कारणाच्चिद्देवी चिन्मात्रस्वरूपा देवी स्वयंप्रकाशमाना तु दृष्टान्तीकृतयमुनाविलक्षणा, तदेव वैलक्षण्यं स्पष्टमाह नीरूपेति, नीरूपा निर्गतं रूपं

यस्याः सा तथोक्ताऽस्ति तत्ततः कारणादुज्ज्वला स्वच्छा कथं केन प्रकारेण स्यादित्येवं वदसि पृच्छसि तर्हि त्वं तया चिता प्रक्षालितं स्वाविर्भावेन धौतं मम मे हृदयमन्तःकरणं निर्मलं मलरहितं रागादिहीनमित्यर्थः, पश्याऽवलोकय । तथा चात्रायं प्रयोगः, चिदुज्ज्वला भवितुमर्हति मदन्तःकरणनिर्मलकारित्वाद् यन्नैवं न तदेवं यथा मलिनजलादि तथा च तन्नान्य मलनिवर्त्तकमपि भवति अतस्तदुज्ज्वलमपि न भवतीत्यादिः॥२॥

एवमुज्ज्वलत्वं प्रसाध्येदानीं चिति मधुरत्वमाक्षिप्य समाधत्ते ।

यत्त्वं वदसि चिद्देवी नीरसा मधुरा कथम् ।
आस्वादयन्ति तां नित्यं रसिकाः शङ्करादयः॥३॥

यदिति । हे शिष्य यद्यस्मात्कारणात्त्वं भवाश्चिद्देवी चेत्यरहितचिन्मात्ररूपा स्वयंप्रकाशमाना नीरसा निर्गतो रसो रस्यत इति रसो मधुरत्वादिरसो वैषयिकसुखमित्यर्थः, यस्याः सा तथोक्ता, रसनेन्द्रियरहितत्वाद्वा नीरसा रसज्ञानरहिताऽस्ति तत्ततो हेतोः सा मधुरा मिष्टा कथं केन प्रकारेण ज्ञेयाइत्येवं वदसि तर्हि शृणु रसिका रसं जानन्ति ते रसिकाः शङ्करादयः शङ्करः सुखकरः शिव आदिः प्रथमो येषां विष्णुब्रह्मादीनां ते सर्वे तां चितिं नित्यं सर्वदाऽऽस्वादयन्ति अनुभवन्ति अतस्ते जगत्सुखप्रदा ज्ञेयाः, सुखप्रदत्वे हेतुः स्वानन्दानुभवः, तेन च सुखरूपत्वे सुखप्रदत्वमपि, सुखप्रदत्वात्सुखरूपत्वाच्च रसिकत्वं तेषु विष्ण्वादिषु, रसिकत्वेन च तेषां स्वयं प्रकाशचिन्मात्रात्मरूपे रमणं चिति सुखरूपत्वं निश्चाययतीति भावः । अत्राप्ययं प्रयोगः, चिन्मधुरा भवितुमर्हति रसिकशङ्करादिप्रीतिविषयत्वाद्यन्नैवं न तदेवं यथा दुःखं तद्रसिकप्रीतिविषयं न भ-

वति अतस्तत्सुखरूपमपि न भवतीति ॥ ३ ॥

एवं मधुरत्वं सम्भाव्येदानीं शीतलत्वमप्याक्षिप्य सम्भावयति।

यत्त्वं वदसि चिद्देवी निःस्पर्शा शीतला कथम्।
पश्य तस्याः प्रसादेन गतं तापत्रयं मम ॥ ४ ॥

यत्त्वमिति। हे शिष्य यद्यस्मात्कारणात्त्वमाक्षेपको भूत्वा चिद्देवी चेत्यरहितचिन्मात्ररूपा देवी स्वयंप्रकाशरूपेण द्योतमाना निःस्पर्शा त्वगिन्द्रियरहितत्वेन स्पर्शगुणरहिताऽस्ति तत्ततो हेतोः शीतला शैत्यगुणवती कथं केन प्रकारेण सम्भाव्या–इत्येवं वदसि कथयसि यदि तर्हि शृणु तस्याश्चितः प्रसादेनाविर्भावलक्षणेनानुग्रहेण मम मे तापत्रयमाधिभौतिकाधिदैविकाध्यात्मिकानां तापानां दुःखानां त्रयं त्रिकं गतं नष्टं त्वं पश्यावलोकय त्वगिन्द्रियविषयत्वाभावेऽपि चिति शीतलत्वमन्तःकरणतापत्रयनिवर्तकत्वानुपपत्त्याख्यलक्षणलक्षितलक्षणया सम्भाव्यमिति भावः। अत्रायं प्रयोगः, चिच्छीतला भवितुमर्हति अस्पर्शत्वे सति चेतस्तापनिवर्तकत्वाद्यन्नैवं न तदेवं यथा जलादि द्रव्यं तच्चास्पर्शत्वे सति चेतस्तापनिवर्त्तकं न भवति अतः पारमार्थिकं शीतलमपि न भवति। एवं चात्मचिदेव पारमार्थिकी शीतलाऽन्यत्तु प्रातिभासिकं शीतलं ज्ञेयम् ॥ ४ ॥

एवं शीतत्वं सम्भावयित्वा पवित्रत्वमपि आक्षिप्य सम्भावयति।

यत्त्वं वदसि चिद्देवी निर्गुणा पावनी कथम्।
तत्पवित्रीकृतान्पश्य कचदत्तशुकादिकान् ॥ ५ ॥

यदिति। हे शिष्य त्वं पृच्छको भूत्वा चिच्चेत्यरहितचिन्मात्रा देवी द्योतमाना स्वयंप्रकाशेत्यर्थः, निर्गुणा गुणरहिताऽस्ति

यद्यतोऽतः पावनी पावनस्यापि गुणत्वात्सा पावनी पावनं पवित्रकरणरूपो गुणः सो स्याऽस्तीति पावनी कथं केन प्रकारेण सम्भाव्या–इत्येवं वदसि ब्रूषे चेत्तर्हि त्वं तत्पवित्रीकृतान्तयैव चिना स्वाविर्भावेन पवित्रीकृतान्मायाविद्यारागादिमलनिरासेन शुद्धीकृतान्कचदत्तशुकादिकान्कचो बृहस्पतेः पुत्रः, दत्तो ऽत्रेः, शुको व्यासपुत्रः, एते आदयो मुख्या येषामार्षभादीनां ते तथोक्तास्तान् त्वं पश्यावलोकय।अत्रायं प्रयोगः, चित्पावनी भवितुमर्हति निर्गुणत्वे सत्यन्येषां पावनत्वाद्यन्नैवं नतदेवं यथा वाय्वादिः स निर्गुणत्वे सत्यन्यपावको न भवति अतः स्वतोपि पावनो न भवति अतश्चिदेव परमार्थतः पावनी वाय्वादिषु यत्पावनज्ञानं तद्भ्रान्तमेवेति भावः ॥ ५ ॥

अतः परं शिष्यप्रश्नमवतारयितुमाह ।

अथ शिष्यः पृच्छति ।

अथेति । अथानन्तरं शिष्यः पृच्छति प्रश्नं करोति, तमेव प्रश्नमुदाहरति ।

गुरो लाक्षणिकैरेव किं लक्षयसि लक्षणैः ।
लक्षणैर्लक्षय स्वामिंस्तल्लक्ष्यं लक्ष्यते यथा ॥ ३ ॥

गुरो इति । हे गुरो गृणाति हितमुपदिशतीति गुरुस्तस्य संबोधने हे गुरो हे देशिक लाक्षणिकैरेव लक्षणैर्लक्षणया बोधितैरेव केवलं लक्षणैश्चिन्हैस्तदात्मरूपं लक्ष्यं लक्षणैर्बोद्धुं योग्यं वस्तु किं कुतो लक्षयसि बोधयसि हे स्वामिन्हे गुरो तदात्मस्वरूपं लक्ष्यं लक्षणैर्ज्ञाप्यं वस्तु लक्षणैश्चिन्हैर्यथा यद्वल्लक्ष्यते ज्ञायते तथा तद्वल्लक्षय बोधय ॥ ६ ॥

अस्य प्रश्नस्योत्तरं दातु माह ।

अत्रोत्तरम् ।

अत्रेति । अत्रास्मिन्प्रश्ने उत्तरं प्रतिवाक्यमुच्यत इति शेषः, तदेवोत्तरमुदाहरति ।

लक्ष्ये लक्षणवल्लक्ष्यमिह लक्ष्ये न लक्षणम् ।
विलक्षणमिदं लक्ष्यं लक्षणैवात्र लक्षणम् ॥ ७ ॥

लक्ष्य इति । लक्ष्येऽन्यलक्षणैर्बोध्ये वस्तुनि लक्षणवद्यथा लक्षणानि सन्ति तद्वदिहात्मस्वरूपे लक्ष्ये लक्षणैर्बोध्ये वस्तुनि लक्षणं चिन्हं न लक्ष्यं न लक्षितुं योग्यं कुत इत्यत आह विलक्षणमिति, इदमात्मस्वरूपं लक्ष्यं लक्षणया बोद्धुं योग्यं वस्तु विलक्षणमन्यलक्ष्यविपरीतलक्षणवल्लक्षणहीनं चास्ति निर्गुणत्वादरूपत्वात्स्वप्रकाशत्वाच्चातो लक्षणैव केवलं भागलक्षणैवात्रास्मिंल्लक्ष्ये लक्षणं बोधाय चिह्नं भवति नान्यद्, अन्यलक्ष्ये तु लक्षणसंभवात्परप्रकाश्यत्वाच्च लक्षणं संभवत्येवेति भावः ॥ ७ ॥

एवं प्रश्नं समाधायेदानीं दृष्टान्तदार्ष्टान्तिकयोः श्यामिकापदवाच्यमप्यर्थं बोधयंस्तन्निषेधति ।

पयस्यमलगम्भीरे श्यामिका भ्रान्तिरूपिणी ।
ब्रह्मण्यमलगम्भीरेप्यविद्या भ्रान्तिरूपिणी ॥ ८ ॥

इति०न०बो०यमुनाष्टकम् ॥ १८ ॥

पयसीति । अमलगम्भीरेऽमलं च तद्गम्भीरं चागाधं तस्मिन्पयसि जले श्यामिका कालिमा या प्रदृश्यते सा भ्रान्तिरूपिणी भ्रान्तिर्भ्रम एव रूपं स्वरूपं यस्यास्तथाभूतास्तीति ज्ञातव्या न तु सा वास्तवीत्यर्थः, श्यामत्वभासने हेतुरगाधत्वं तदसत्वसम्भवे हेतुर्निर्मलत्वमिति विवेकः । दार्ष्टान्तिकेप्याह ब्रह्मणीति, अमलगम्भीरे न विद्यते मलोऽविद्यादिरूपो

यस्मिंस्तदमलं गम्भीरं चानन्तत्वादगाधमेतादृशे विशेषणद्वयवति ब्रह्मणि देशकालवस्तुकृतपरिच्छेदशून्य आत्मनि अविद्यापि अज्ञानमपि भ्रान्तिरूपिणी भ्रान्तिर्भ्रम एव रूपं स्वरूपं यस्याः सा तथाभूताऽस्ति न तु वास्तवीत्यर्थः, अत्रापि चेत्यरहितचिन्मात्रानन्तत्वमविद्याप्रतीतौ हेतुः, निर्मलस्वप्रकाशचिन्मात्रत्वमविद्यासत्वे हेतुरिति विवेकः, अतो दृष्टान्तदार्ष्टान्तिकसाम्यं सिद्धमिति भावः ॥ ८ ॥

इति श्रीनरह० दि० बो० यमुनाष्टकप्रकाशोऽष्टादशः ॥ १८ ॥

---

अथ शिलाषट्कम् ।

एवं यमुनासादृश्येनात्मस्वरूपं निरूप्येदानीं तदेव पुनः शिलाधेनुरूपेण निरूपयञ्छिलाधेनुषट्काख्यं प्रकरणं षट्श्लोकमारभमाण आह ।

## अथ शिलाषट्कम् ।

अथेति । अथ यमुनाष्टकनिरूपणानन्तरं शिलाधेनुषट्कं शिलाधेनोः षट्कं षण्णां श्लोकानां समूहरूपं प्रकरणं निरूप्यत इति शेषः, तत्र तावदादौ शिलाधेनोः स्वस्य साक्षात्कारोस्तीत्याह ।

> अनन्तकोटिचन्द्राणां चन्द्रिकाभिः कृता किमु ।
> आह्लादरूपिणी दृष्टा मया धेनुः शिलामयी ॥ १ ॥

अनन्तेति । अनन्तकोटिचन्द्राणामनन्ता अपरिमिताः कोटयः कोटिसंख्या ये चन्द्रा निशाकरास्तेषामनन्तकोटिब्रह्माण्डापेक्षया चन्द्राणामप्यनन्तकोटित्वं ज्ञेयं, तेषां चन्द्रिकाभिर्ज्योत्स्नाभिरुपादानभूताभिः कृता निर्मिता किमु किमित्युत्प्रेक्षा, चन्द्रिकाकार्यत्वोत्प्रेक्षणे निमित्तमाहाऽऽह्लादरूपिणीति,

आह्लादो हर्ष एव रूपमाकारो यस्याः सा तथोक्ता शिलामयी शिलारूपा चेत्यरहितचिन्मात्ररूपत्वाच्चितेर्जडशिलासादृश्यं ज्ञेयम्, धेनुर्धिनोति प्रीणाति जगदिति धेनुः सकलजगदानन्दकरत्वाद्धेनुत्वम्, 'एष ह्येवानन्दयाती'ति श्रुतेः, मया तत्स्वरूपनिरूपणकर्त्रा दृष्टा साक्षादनुभूताऽतो मत्कृततन्निरूपणेऽप्रामाण्यं न शङ्कनीयमिति भावः ॥ १ ॥

ननु धेनुत्वे तस्या धावनखानपानाद्यपेक्षा लोकधेनोरिव स्यादित्याशङ्क्य तां वारयन्नर्धेन ।

न धावति न हन्त्येव न खादति पिबत्यपि ।
स्वभावनिर्मला सेयं हृष्टिपुष्टिमती स्थिता ॥ २ ॥

नेति। न धावति न गच्छति 'अपाणिपाद'इति श्रुतेः, पादरहितत्वाद्गन्तव्यदेशाभावाच्च, तथा न हन्त्येव नैव हिंसति हिंस्यस्यान्यस्याभावात्कर्तृत्वस्यापि बाधितत्वाच्च, न खादति न भक्षति आनन्दरूपत्वेन नित्यतृप्तत्वाद्भोज्यद्वैतासत्त्वाच्चाऽपि च निर्विकारत्वेन भोक्तृत्वविकारासम्भवाच्च, न पिबत्यपि आनन्दरूपत्वेन नित्यतृप्तत्वादेव न पानाद्यपेक्षेति भावः, स्वभावनिर्मला स्वभावेनैव स्वत एव निर्मला शुद्धाऽत एव नित्यं सर्वदैव हृष्टिपुष्टिमती हृष्टिर्हर्षः पुष्टिः पुष्टत्वं तद्वती स्थिता तिष्ठतीति ज्ञेया ॥ २ ॥

कामधेनोर्विश्वामित्रदण्डाय निःसृतानि रोमभ्यः सैन्यानीति पुराणेषु प्रतापः श्रूयते यस्ततोऽप्यस्यामाधिक्यं प्रतापस्य दर्शयति ।

रोमरेखासु विभ्रान्तास्तस्या ब्रह्माण्डकोटयः ।
अपर्यन्ता स्थिता धेनुः सा काश्मीरशिलामयी ॥३॥

रोमरेखास्विति । तस्याः शिलाधेनो रोमरेखासु रोमकूपेषु ब्रह्माण्डकोटयो ब्रह्मण्डानां त्रिलोकानां कोटयोऽपरिमितकोटिकोटिसमूहा विभ्रान्ता विपरीततया विशिष्टरूपेण च भ्रान्ता भ्रमरूपास्तिष्ठन्तीति शेषः, शबलब्रह्मणामत्र रोमरेखास्थानीयत्वं तत्रैव ब्रह्माण्डानां कल्पितत्वादिति भावः, तस्या महत्त्वमपि अन्यसामान्यधेनुकामधेनुभ्योऽप्यधिकं दर्शयति अपर्यन्तेति, सोक्ता धेनुः सर्वप्राणितर्पणकर्त्री गौरपर्यन्ता न विद्यते परितोऽन्तः परिच्छेदो यस्याः सा तथोक्ताऽनन्तेत्यर्थः, स्थिता तिष्ठति सा च काश्मीरशिलामयी काश्मीर उत्पन्ना शिला स्फटिकाख्या तन्मयी तद्रूपेत्यर्थः, अस्तीति शेषः, स्वच्छत्वेन चेत्यरहितचिन्मात्रत्वाज्ज्ञानाभावेन च काश्मीरशिलारूपत्वं निरूपितमिति भावः ॥ ३ ॥

तस्याः स्फटिकमयत्वं यदुक्तं तत्प्रयोजनमाह ।

आयान्ति यान्ति धावन्ति नृत्यन्ति च हसन्ति च ।
प्रतिबिम्बा जीवरूपास्तस्याः सा तु यथा स्थिता ॥ ४ ॥

आयान्तीति । तस्याः काश्मीरशिलामयधेनोर्जीवरूपा जीवाकृतयः प्रतिबिम्बा आभासा आयान्ति आगच्छन्ति यान्ति गच्छन्ति धावन्ति त्वरितं वेगेन गच्छन्ति अपि च पुनर्नृत्यन्ति हर्षेण नटवदनन्तरूपैर्नृत्यं कुर्वन्ति च पुनर्हसन्ति वैषयिकसुखोद्भवे सुखित्वाभिमत्या हास्यमपि कुर्वन्ति एवंविधजीवविविधाकारेषु प्रतीयमानेष्वप्रतीयमानेषु च सत्सु अपि अनेकविधप्रतिबिम्बेषु प्रतीयमानेष्वपि स्फटिक इव सा तु काश्मीरशिलाधेनुश्च यथा स्थिता यथा पूर्वं निर्विकारा तथैव स्थिता तिष्ठति ॥ ४ ॥

ननु पाषाणमयत्वे नीरसत्वं स्यादित्याशङ्क्य स्थूलदृष्ट्या नीरसत्वेऽपि तस्या रसरूपत्वमस्तीत्याह ।

नीरसापि सुधामिष्टा निर्गुणापि प्रिया सताम्।
नीरूपाप्यातिकान्ता सा मया दृष्टा न तु श्रुता ॥५॥

नीरसेति। नीरसापि यद्यपि रसः सुखं वैषयिकषड्विधो रसश्च निर्गतो निवृत्तो यस्याः सा तथोक्ताऽस्ति तथापि 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति, विज्ञानमानन्दं ब्रह्म, रसो वैसः' इत्यादिश्रुतिभिः सुखस्वरूपत्वप्रतिपादनात्,सुखरूपत्वादेव- सुधामिष्टा सुधामृतं तद्वन्मिष्टा मधुराऽस्ति, तथा निर्गुणापि निर्गता निवृत्ता गुणाः सत्त्वरजस्तमोरूपास्तत्कार्याणि च सुशीलत्वादयो यस्यां सा तथोक्ताऽस्ति यद्यपि सतां तत्त्वस्वरूपनिश्चयवताम्'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि'तिश्रुतेः, प्रिया प्रीतिविषयेष्टेत्यर्थः, भवतीति शेषः, तथा नीरूपापि निर्गतं रूपं यस्याः सा तथोक्ता निराकारेत्यर्थः, अस्ति यद्यपि तथापि सा धेनुरतिकान्ताऽत्यन्तकमनीया भवति प्रीतिविषयत्वादतिकमनीयत्वमपि सुखरूपत्वादेव ज्ञेयम्, ननु एतादृशी धेनुर्भवता दृष्टा वा श्रुता श्रुता चेद्वञ्चकैर्मिथ्याभ्रामितत्वेन तद्वचनजन्यं ज्ञानं ग्लावप्लववाक्यवद्भ्रान्तमेवातोऽप्रामाण्येनाग्राह्यं स्यादित्याशंक्याद्यानङ्गीकारेणैव द्वितीयमवष्टभ्याह मयेति, मया त्वदुपदेशकेन दृष्टा साक्षादनुभूता न तु श्रुता केवलश्रुतस्यापि शिलाप्लववाक्यजन्यज्ञानस्य भ्रान्तत्ववत्क्रान्तत्वं निवारयितुं दृष्टत्वं मप्यङ्गीकार्यमित्युभयोर्ग्रहणमित्यनवद्यमिति भावः ॥ ५ ॥

नन्वन्यधेनुदुग्धपानवत्तद् दुग्धपानेच्छोर्मम कथं तल्लाभः स्यादित्याशङ्क्याह।

स्रवन्तीममृतं नित्यं जिह्वया ब्रह्मविद्यया।

वत्सः शिलामयो भूत्वा पिब धेनुं शिलामयीम् ॥६॥

इतिश्रीन० बो० शिलाधेनुषट्कम् ॥ १९ ॥

स्रवन्तीमिति। हे शिष्य त्वं भवान् शिलामयः शिलावत्सम-कूटस्थचिद्रूपस्तत उभयोर्जात्यैक्येन वत्स इव धेनोः साजात्येन वत्सो यथा तथा भूत्वा ब्रह्मधेनुबालत्वं स्वस्मिन्संपाद्येति भावः, ब्रह्मविद्यया स्वस्य ब्रह्माभिन्नत्वज्ञानरूपया जिह्वया रसनया तात्त्विकसुखरसानुभवकरणत्वाद्ब्रह्मविद्याया रसनारूपत्वं ज्ञेयम्, अमृतं सुखं यत्पयःस्थानीयं नित्यं सर्वकालमपि स्रवन्तीं दुहन्तीं शिलामयीं शिलावत्समरूपां ब्रह्मरूपामित्यर्थः, पिब प्राश्नीहि अनुभवेत्यर्थः ॥ ६ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ शिलाधेनुषट्कार्थप्रकाश एकोनविंशः ॥ १९ ॥

---

अथ निद्रापञ्चकम् ।

एवं शिलाधेनुरूपकेणात्मस्वरूपं निरूप्येदानीं तदेव निद्रारूपकेण निरूपयितुं निद्रापञ्चकाख्यं पञ्चश्लोकं प्रकरणमारभमाण आह ।

## अथ निद्रापञ्चकम् ।

अथेति। अथ शिलाषट्कनिरूपणानन्तरं निद्रापञ्चकं निद्राया निरूपकं पञ्चकं पञ्चश्लोकानां समूहरूपं प्रकरणं निरूप्यत इति शेषः, तत्र तावल्लौकिकनिद्राया एतत्प्रकरणे वर्णयिष्यमाणनिद्राया वैलक्षण्यं दर्शयितुमाह ।

न सन्ति यस्यां निद्रायां जाग्रत्स्वप्नसुषुप्तयः ।
अवस्थात्रयरूपिण्यः सर्वद्वन्द्वविवर्जनात् ॥ १ ॥

नेति। यस्यां विद्वदनुभवगम्यायां निद्रायां सुषुप्तौ सर्वप्रपञ्च-

लयाधारत्वाद्ब्रह्मैव निद्रारूपेण प्रतिपादितमत्र ज्ञेयम्, अत्रस्थात्रयरूपिण्योऽवस्थाः स्थितयस्तासां त्रयं त्रिकं तदेव रूपमाकृतिर्यासां तास्तथोक्ता जाग्रत्स्वप्नसुषुप्तयो जाग्रच्चेन्द्रियैर्विषयोपलब्धिर्जागरितमित्युक्तलक्षणा जाग्रदेतन्नाम्न्येका, स्वप्नश्च जाग्रत्संस्कारवासनावासितबुद्धौ जाग्रत्संस्कारजः प्रत्ययः स्वप्न इत्युक्तलक्षणा स्वप्नावस्था द्वितीया, सुषुप्तिश्चाज्ञानमात्रविषया तदावृतसुखविषया चेतिलक्षणलक्षिता निद्रा च तृतीया, एता न सन्ति न विद्यन्ते तत्र हेतुः सर्वद्वन्द्वविवर्जनात्सर्वाणि समस्तानि यानि द्वन्द्वानि सुखदुःखादीनि तेषां विवर्जनादसन्ताभावात् ॥१॥

नतु निद्रात्वे तस्यास्तामसत्वं स्यात्तत्राह ।

> गुणातीततया तत्र तमोलेशो न विद्यते ।
> स्वयंप्रकाशरूपत्वादप्रकाशोपि नास्ति हि ॥ २ ॥

गुणातीततयेति । तत्रोक्तनिद्रायां गुणातीततया तस्या गुणातीतत्वात्तमोलेशस्तमसस्तमोनाम्नो गुणस्य लेशोंऽशो न विद्यते नैवास्ति, ननु मास्त्वस्यां तमस्तथापि निद्रात्वेनास्यामन्यसुप्तौ जगदप्रकाश इवाप्रकाशः स्यात्तत्राह स्वयंप्रकाशरूपत्वादिति, निद्रायास्तस्याः स्वयंप्रकाशरूपत्वाद् अवेद्यत्वे सत्यपरोक्षत्वं स्वप्रकाशत्वमित्युक्तलक्षणः स्वयंप्रकाश एव रूपं यस्याः सा तथोक्ता तस्या भावस्तत्त्वं तस्मादेव हेतोः, अन्यनिद्रायां च वेद्यत्वं प्रत्यक्षसिद्धमतः परप्रकाश्यत्वेन तस्यां स्वप्रकाशाभावोऽस्ति, अत्र तु स्वप्रकाशत्वादेवाप्रकाशोपि नास्ति अपि शब्दाद् दृश्यत्वमपि नास्ति हि विदुषामेतदनुभवसिद्धमित्यर्थः ॥ २ ॥

ननु तर्हि निद्रात्वेनास्याः प्राप्तिः सहजा निष्फला च स्यात्तत्राह ।

> यत्प्राप्तये महापुण्यास्तपस्यन्ति तपस्विनः ।

विचारयन्ति विद्वांसो वेदान्तवचनानि च ॥ ३ ॥

यत्प्राप्तय इति । महापुण्या महद्बहु अन्तःकरणशोधकं पुण्यं पवित्रं कर्म येषां ते तथोक्ता अत एव तपस्विनस्तपसि रताः पुरुषा यत्प्राप्तये यस्या निद्रायाः प्राप्तिर्लाभस्तस्यै तदर्थं तपस्यन्ति तपः कुर्वन्ति तेषां विवेकिनां यत्तपआद्यनुष्ठानं तदुक्तलक्षणनिद्रालाभायैवेति भावः, किञ्च विद्वांसो विवेकिनो वेदान्तवचनानि च वेदान्ता वेदशिरोभागा उपनिषद इत्यर्थः, तेषां वचनानि वाक्यानि तानि अपि विचारयन्ति जीवब्रह्मैक्यतात्पर्यतयावलोकयन्ति अतोस्याः सुलभत्वं निष्फलत्वं च न मन्तव्यमिति भावः ॥ ३ ॥

नन्वन्यनिद्रायामपि सुखभोगः फलमस्ति तद्वदत्रापि अतः कोस्यां विशेष इत्याशङ्क्याह ।

सुखभोगः फलं नात्र सैवानन्दस्वरूपिणी ।
पुरुषार्थस्वरूपत्वान्न कालक्षेपरूपिणी ॥ ४ ॥

सुखभोग इति । हे शिष्य अत्रास्यां निद्रायां सुखभोगः सुखस्यानन्दस्य भोगोऽनुभवः फलं प्रयोजनं न न विद्यते किन्तु सैव सोक्तलक्षणा निद्रैवाऽऽनन्दस्वरूपिणी—आनन्दः सुखमेव स्वमसाधारणं रूपं यस्याः सा तथोक्ताऽस्ति लौकिकनिद्रायां चाज्ञानावृतसुखानुभवस्तत्रानुभवित्रनुभवानुभाव्यरूपुत्रिपुट्या विद्यमानत्वात्तस्य खण्डितत्वेन वृत्तिविषयत्वेन चापारमार्थिकत्वम्, अस्यास्तु सुखरूपत्वात्त्रिपुटीरहितत्वाच्चानन्दरूपत्वं पारमार्थिकमिति भावः, ननु अन्यनिद्राया इवास्याः कालक्षेपमात्रत्वं स्यादित्याशङ्क्यास्यां तन्निवारणपूर्वं विशेषं दर्शयति पुरुषार्थेति । हे शिष्य इयं सुषुप्तिः पुरुषार्थस्वरूपत्वात्पुरु-

पार्थो मोक्षस्वरूपः स एव स्वरूपमात्मा यस्यास्तस्या भाव-स्तत्ता ततो हेतोरन्यनिद्रावत्कालक्षेपरूपिणी कालस्य सम-यस्य क्षेपोऽतिक्रमणं तदेव रूपं यस्याः सा तथोक्ता न न-विद्यते ॥ ४ ॥

ननु तर्ह्यन्यनिद्रेव साधारणतया सर्वेषां तत्प्राप्तिः कुतो नेत्याशंक्य तस्या दुष्प्रापत्वनिरूपणपूर्वकं तत्प्राप्तावपि वि-शेषं दर्शयति ।

सुलभा शुद्धबोधानां दुर्लभा विषयात्मनाम् ।
सहजा माधवादीनां सा निद्रा तु महाफलम् ॥ ५ ॥

इति श्रीन० बो० निद्रापञ्चकम् ॥ २० ॥

सुलभेति हे । शिष्य शुद्धबोधानां शुद्धो भागत्यागलक्षण-या विरुद्धांशत्यागेन शुद्धात्मविषयको यो बोधः स शुद्धबोधो ज्ञानं येषां तेषां पुरुषाणां सा निद्रोक्तलक्षणा सुलभा सुख-प्राप्याऽस्ति, किंच विषयात्मनां विषयेषु भोग्यबुद्ध्या जगत्प-दार्थेषु आत्मा मनो येषां ते तथोक्तास्तेषां सा निद्रा दुर्लभा दुःष्प्राप्याऽस्ति, किंच माधवादीनां माधवो लक्ष्मीपतिरादि-र्मुख्यो येषान्ते तथोक्ताः शिवादयस्तेषां सोक्तलक्षणा निद्रा सहजा स्वाभाविकी तेषां शुद्धसत्त्वोपाधित्वात्सा निद्रा-तत्प्रकृतिरेवात एव सैव योगनिद्रेति नाम्ना शास्त्रेषु कथ्यते-ऽतः सर्वप्रकारेण सोक्तलक्षणा तु लोकनिद्राविलक्षणा म-हाफलं सर्वकर्मणां सर्वोपासनानां च ज्ञानस्यापि फलभूतेय-मतो महाफलरूपा ज्ञेया ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ निद्रापञ्चकार्थप्रकाशो विंशः ॥ २० ॥

---

एवं निद्रारूपकेणात्मस्वरूपस्थितिं निरूप्येदानीं स्वानुभवं निरूपयितुं परमकृपयानुभवनवकाख्यं नवश्लोकं प्रकरणमारभमाण आह ।

## अथानुभवनवकम् ।

अथेति । अथ निद्रापञ्चकनिरूपणानन्तरमनुभवनवकमनुभवस्यात्मानुभवस्य निरूपकं नवकं नवानां श्लोकानां समूहरूपं प्रकरणं समूहे कन् निरूप्यत इति शेषः, तत्र तावदादौ गुरोरनुभवस्य स्वस्वरूपस्य स्वानुभववृत्तेः स्वानुभवविषयस्य चैकरूप्यं स्वानुभूतं शिष्यनिश्चयाय निरूपयति ।

स्वानन्दबोधगुरुभिर्गुरुभिर्निरुक्तं
स्वानन्दबोधघनमेव मम स्वरूपम् ।
स्वानन्दबोधघनया कलया कया चि-
त्स्वानन्दबोधघनमेव मयानुभूतम् ॥ १ ॥

स्वानन्देति । स्वानन्दबोधगुरुभिः स्व आत्मस्वरूपो य आनन्दः सुखं 'यो वै भूमा तत्सुखमि'तिश्रुत्युक्तस्तदभिन्नो यो बोधो ज्ञेयरहितं ज्ञानं तेन गुरवः श्रेष्ठास्तैर्गुरुभिर्मद्धितोपदेशकैर्निरुक्तं महावाक्यद्वारा भागत्यागलक्षणयोपदिष्टं कथमित्यत आह स्वानन्देति, स्वानन्दबोधघनमेव स्व आत्मस्वरूपो य आनन्दः सुखं निरतिशयानन्द इत्यर्थः, तदभिन्नो यो बोधश्चेत्यरहितश्चिन्मात्रस्तेन घनं निविडं निश्छिद्रमित्यर्थः, केवलं मम मे स्वरूपं स्वमसाधारणं रूपमाकृतिर्यस्य तत्तथोक्तम्, एवमुपदिष्टमिति योज्यम्, ततो गुरूपदिष्टरीत्यैव मया त्वद्गुरुरूपेण स्वानन्दबोधघनया स्व आत्मरूपो य आनन्दः सुखं

तदभिन्नो यो बोधो ज्ञानं तेन घना निबिडा तया कया चित्सत्त्वेनासत्त्वेन वा केनापि निर्देष्टुमशक्यया कलयान्तःकरणवृत्त्या तन्मम मे स्वरूपमसाधारणाकारः स्वानन्दबोधघनमेव स्व आत्मस्वरूपो य आनन्दः सुखं तदभिन्नो यो बोधो ज्ञानं निरतिशयसुखस्वरूपचैतन्यमित्यर्थः, तेन घनं निश्छिद्रमखण्डैकरसमित्यर्थः, अनुभूतं साक्षात्कृतम् ॥ १ ॥

नन्वेतादृगनुभवः कथमन्येषां मादृशानां स्यादित्याशङ्क्याह।

श्रद्धाभक्तिभृतां विशेषविदुषां शिक्षावतां योगिनां
मिथ्यावस्तुनि वस्तुतां विजहतां त्यागे गते गाढताम्।
सत्ये सत्यतया स्फुरत्यविरतं चित्ते चमत्कारिणि
स्वैरं स्फूर्जति निर्विकल्पपरमानन्दस्वरूपो हरिः ॥ २ ॥

श्रद्धेति। श्रद्धाभक्तिभृतां श्रद्धा च गुरुवेदान्तवाक्येषु विश्वासरूपान्तःकरणवृत्तिः, भक्तिश्च 'श्रवणं स्मरणं विष्णोरर्चनं पादसेवनं स्तवनं कीर्त्तनं ध्यानं सख्यमात्मनिवेदनमि'ति नव लक्षणलक्षितान्तःकरणवृत्तिः, यद्वा 'सा परानुरक्तिरीश्वरे,।

देवानां गुणलिङ्गानामानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु ये'ति ॥

शाण्डिल्यसूत्रभागवतवचनाभ्यां लक्षिता पराभक्तिरत्र ग्राह्या, ते उभे बिभ्रति धारयन्ति ते तथोक्तास्तेषाम्, अत एव विशेषविदुषां कर्मभक्तिज्ञानेषु मध्ये यो विशेष आधिक्यं पूर्वस्मात्पूर्वस्मादुत्तरोत्तरे श्रैष्ठ्यमित्यर्थः, तद्विदन्ति जानन्ति ते तथोक्तास्तेषां, तत्र हेतुः शिक्षावतां गुरुतः शिक्षां प्राप्तानां न तु स्वमत्यैवायथार्थज्ञाने प्रवृत्तानामित्यर्थः, अत एव गुरूपदेशक्रमेणैव मिथ्यावस्तुनि मिथ्याभूते द्वैतपदार्थे वस्तुतां सत्यसत्त्वं-

त्वमतिमित्यर्थः, विजहतां विशेषेण त्यागं कुर्वतां ततश्च तस्मिन्त्यागे जगदसत्त्वप्रत्ययलक्षणे त्यागे गाढतां दृढत्वं गते प्राप्ते सति योगिनामुक्तलक्षणयोगाभ्यासिनां चमत्कारिणि आत्मस्फुरणलक्षणचमत्कारवति चित्तेऽन्तःकरणे सत्ये सत्यात्मरूप आत्मनि सत्त्वतया सत्त्वरूपेणाऽर्थादसद्रूपे जगति असद्रूपेण चाऽविरतं विरामरहितं यथा भवति तथा निरन्तरमित्यर्थः, स्फुरति प्रकाशमाने सति तस्मिन्नेव चित्ते निर्विकल्पपरमानन्दस्वरूपो निर्गता निवृत्ता विकल्पा विपरीता विविधा वा कल्पना यतः स तथाभूतो यः परमो निरतिशयः आनन्दः सुखं स एव स्वमसाधारणं रूपमात्मा यस्य स तथोक्तः, अत एव हरिः सर्वद्वैतहरणशीलोऽद्वैतानन्दरूप इत्यर्थः, स्वैरं स्वेच्छयैव स्फुर्जति प्रकाशते श्रद्धाद्युपायैरन्तःकरणे शोधितेऽन्तःकरणे स्वप्रकाशनित्यसिद्धात्मसाक्षात्कारो जात इव प्रतीयते न तु जायते वास्तवसाधननिरपेक्षत्वात्स्वसिद्धाविति भावः ॥ २ ॥

नन्वेतादृशोनुभवो मम केनोपायेन स्यादित्याशङ्क्य तानेवोपायान्दर्शयति।

तृष्णां संहर संहरेन्द्रियचयं संहृत्य सर्वाः क्रिया-<br>
श्चेतः संहर संहरान्यधिषणां खादप्यणुस्त्वं भव।<br>
अन्तः संप्रविशात्मधामनि मनागासादिते तत्पदे<br>
सर्वाज्ञानकपाटभञ्जनपटुर्भावः स्थिरः स्थास्यति ॥ ३॥

तृष्णामिति। हे शिष्य त्वं तृष्णां प्राप्तेष्वप्राप्तेष्वपि पदार्थेषु अतृप्तिरूपां वृत्तिं संहर संरोधय ततः इन्द्रियचयमिन्द्रियाणां दशसंख्यानां श्रोत्रादीनां चयः समूहस्तं संरोधय प्रत्याहारं कुर्वित्यर्थः, ततश्च सर्वाः समस्ताः क्रिया इन्द्रियव्यापारान् सं-

हृत्यऽवरुध्य ततश्च चेतोऽन्तःकरणं संहर संरोधय ततश्चान्य-श्चिषणामन्यद्वैतं तत्सत्त्वविषयां निश्चयरूपां वृत्तिं संहर नाशय लीनां कुर्वित्यर्थः, ततस्त्वमेतेष्वभिमन्ता भवान् खादपि अभिम-न्तव्यविषयलयेनाकाशादपि आकाशस्य धर्मद्वयवत्त्वेन स्थूलत्वं तस्मादपि अणुः सूक्ष्म एकरूपत्वादित्यर्थः, भवाऽमि तत आत्म-स्वरूपे धामनि स्थानेऽन्तस्तन्मध्ये तदभेदेनेत्यर्थः, संप्रविश लीनो भवेत्यर्थः, ततो मनागीषत्तत्पदे तस्मिन्नात्मरूपे पदे स्वरूप आसादिते प्राप्ते सति सर्वाज्ञानकपाटभञ्जनपटु सर्वं समस्तं यदज्ञानं तदेव क-पाटमिव आत्मदर्शनविरोधकत्वात्कपाटपट्टमिव तस्य भञ्जनमु-द्घाटनं तस्मिन्पटुः कुशलो भावः स्वरूपस्फूर्तिलक्षणः पदार्थः स्थिरो निश्चलः स्थास्यति स्थितो भविष्यति ॥ ३ ॥

ननु भवद्भिः समाधिः केनोपायेन सम्पादितस्तमुपायं वदेत्यपेक्षायामाह ।

> किं मां पृच्छसि सादरेण मनसा साधो समाधिक्रमं
> नूनं निर्गतमेव मोहतिमिरं जातः प्रकाशो महान् ।
> आत्मस्नेहघनां दशामुपगते बोधप्रदीपे मयि
> द्रागुड्डीय पतन्ति वृत्तिनिवहा नष्टुं पतङ्गा इव ॥ ४ ॥

किमिति । हे साधो हे समाधिसाधनेच्छो त्वं भवान्सा-दरेण समाधिसाधनादरवता मनसान्तःकरणेन समाधिक्रमं क्र-म्यते साध्यतेऽनेनेति क्रमः साधनजातं समाधेर्मम निर्वि-कल्पसमाधेः क्रमं साधनमुपायमित्यर्थः, किं पृच्छसि किमर्थं पृ-च्छसि समाधिसाधनसिद्धेः साधकेच्छापेक्षत्वान्मयि तु तत्सहज-त्वात्तदिच्छाभावेन तदभावे तत्पृच्छैवायुक्तेति तत्कथनमपि मयि नैव सम्भाव्यमिति भावः, ननु भवत्समाधौ सहजत्वे तद-

सम्भवः स्यात्तदेव कथंसम्भवं तत्राह नूनमिति, मोहतिमिरं मोहो जीवब्रह्मैक्याज्ञानमेव तिमिरं तमो नूनं निश्चयेन निर्गतमेव नष्टमेव तथा महान्निरावरणः प्रकाशः प्रकाश्यते ज्ञायतेऽनेनेति प्रकाश आत्मविषयकं निरावरणं ज्ञानमित्यर्थः, जात उत्पन्नः, ननु भवति प्रकाशोत्पत्तौ तिमिरनाशे च किं निमित्तमित्याशङ्क्य निमित्तं दर्शयितुं रूपकमाहाऽऽत्मेति, मयि अहंपदवाच्ये साधिष्ठानबुद्धिस्थचिदाभासे बोधप्रदीपे बोधो ज्ञानं तत्स्वरूपे प्रदीपे दीपकरूप आत्मस्नेहघनामात्मनि ब्रह्माभिन्ने प्रत्यगात्मनि यः स्नेहो निरतिशयं प्रेम तेन तैलस्थानीयेन घनां निविडार्द्रां दशामवस्थां वर्तिस्थानीयामुपगत आरूढ आश्रिते सतीत्यर्थः, वृत्तिनिवहा वृत्तीनामन्तःकरणवृत्तीनां निवहा समूहाः पतङ्गा इव शलभादयो यथा किञ्चिदुड्डीय नष्टुं दीपे पतन्ति तथा द्रागीषद्यावत्प्रारब्धक्षयं विद्यमानस्य वृत्तिसमूहचाञ्चल्यस्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य' इति श्रुत्या क्षणिकत्वोक्तेः, ईषत्कालेनेपत्त्वम्, उड्डीयोत्पत्य नष्टुं नाशाय पतन्तिमाप्नुवन्ति अतो मत्समाधेः सहजत्वान्न साधनापेक्षेति त्वत्प्रश्नोऽनुपपन्न एवेति भावः ॥ ४ ॥

ननु निर्विकल्पसमाधेरष्टाङ्गसाधनसाध्यत्वात्साधनानां च भवत्सु अदृश्यमानत्वात्तैर्विना कथं तत्सिद्धिः सम्भाव्या भवत्सु इत्याशङ्क्यानुपयोगित्वं साधनानां स्वस्मिन्दर्शयति ।

> गाढं वाऽस्तु विलीनमस्तु न घृतं साधो घृतत्वाद्गतं
> चैतन्यस्य चमत्कृतिः किल तथा चित्तं तदेवाद्वयम् ।
> तस्माच्चित्तलयस्य साधनमसौ तत्त्वे तु साक्षात्कृते
> प्रत्याहारपरिश्रमोऽपि स मया संत्यक्त एवाधुना ॥५॥

गाढमिति । हे साधो साध्नोति समाधिसाधनानीति साधुस्तस्य सम्बोधने हेसाधो घृतं सर्पिर्गाढं दृढमस्तु भवतु शीतयोगेन घनीभूतमस्त्वित्यर्थः, वा यद्वा विलीनमुष्णयोगेन रसीभूतमस्तु तद्घृतं घृतत्वात्सर्पिष्ट्वान्न गतं न निवृत्तं घृतभावादन्यभावं न प्राप्तं तद्गुणस्योभयत्राप्येकरूपत्वेनानुभवाद् गाढघृते लीनघृते वा घृतप्रतीतेरेकरूपान्न घृतत्वहानिरिति भावः, यथा यद्वत्तथा तद्वच्चैतन्यस्य चैतन्यरूपस्यात्मनश्चमत्कृतिर्घनीभावरूपश्चमत्कारश्चित्तं मनोऽस्ति अतः प्रतीतौ भेदे प्रतीयमानेपि वास्तवं घृतत्वं घृतद्वयेऽभिन्नमिव तदेव तच्चैतन्यमेव चित्तमतोऽद्वयं भेदरहितं ब्रह्मचैतन्यमेवास्ति तस्मात्कारणाद्दसावसन्निकृष्टो मत्तो दूरे वर्त्तमान इत्यर्थः, चित्तलयस्य योगमतेन सद्रूपस्य चित्तस्य मनसो यो लयो नाशः स्वरूपप्रतीत्यभावरूपस्तस्य साधनं साधनभूतोऽतो मयाऽऽत्मयाथार्थ्यज्ञानवता तुपदेन योगिज्ञानात्स्वज्ञानस्यातीव वैलक्षण्यमस्तीति सूचितं, तत्त्वे चितस्य पारमार्थिके रूपे साक्षात्कृतेऽपरोक्षतयानुभूते सति प्रत्याहारपरिश्रमोपि प्रत्याहारः स्वस्वविषयेभ्य इन्द्रियपरावृत्तिरूपः प्रत्याहारोपलक्षितानि ध्यानादीन्यपि ग्राह्याणि, स परिश्रमः साधनकाले रक्षणकाले नाशकाले फलकाले च सर्वदा श्रमो दुःखरूप एवाऽतः स योगसाधनसमूहोऽधुनेदानीं सन्त्यक्त एव सम्यग्निःसंशयं विसृष्ट एव निष्प्रयोजनत्वात्तस्येति भावः ॥ ५ ॥

ननु तर्हि साधनैर्विना कथं समाधिलाभ इत्याशङ्क्य तस्यापि सहजत्वान्निद्राद्यवस्थावदवस्थात्वाविशेषात्तदपेक्षाभावेपि मयि अवस्थान्तरवत्स प्राप्नोत्येवेति मम तत्राप्यनादरोस्तीत्याशयेनाह ।

जाते विद्वदनुग्रहेण सहजानन्दागमे साधकै-

रौदास्येन यथा यथा परिहृतः कष्टः स योगोद्यमः ।
आश्चर्यं न मनीषितापि निबिडा निद्रा यथेयं बला-
दायात्येव तथा तथा मुनिमतो गाढः समाधिः क्रमः॥६॥

जात इति । विद्वदनुग्रहेण विदुषां ज्ञानिनामात्मसाक्षात्का-रवतामित्यर्थः, अनुग्रहः कृपा तेन सहजानन्दागमे सहजः स्वा-भाविक आनन्दो निरतिशयं सुखं तस्यागमो लाभस्तस्मि-ञ्जात उद्भूते सति साधकैः पूर्वं साधकावस्थावद्भिरस्माभिः स योगशास्त्रोक्तो योगोद्यमो योगः समाधिस्तत्साधनभूत उद्यम उद्योगः कष्टः खेदरूप एवेति हेतोरौदास्येन तत्साधनेषु तत्र च यदौदास्यमुदासीनत्वं तेन यथा यथा यावद्यावदित्यर्थः, परिहृत उपेक्षितस्तथा तथेत्यावृत्तिविशेषेणोतरत्र योज्यं तावत्तावदि-त्यर्थः, न मनीषितापि मयानीप्सितापि निबिडा सघनेयं लो-कप्रसिद्धा निद्रा सुषुप्तिर्बलाद्धठात्स्वयमेवायाति प्राप्नोति तथा तद्वन्मुनिमतो मुनिभिर्व्यासकपिलपतञ्जलिप्रभृतिभिर्विवेकिभि-मत इष्टत्वेनादृतो गाढो दृढः समाधिक्रमः समाधेर्वेदान्तिमत-स्वात्मरूपसमाधेः क्रमः प्रापकः साधनभूतो निरोधाख्यः स-माधिः स्वयमयत्नमेव बलाद्धठादेवायाति प्राप्नोति एतदाश्चर्यम-वलोकयेति शेषः ॥ ६ ॥

ननु भवतां सहजसमाधिर्येनोपायेन जातस्तमुपायं ब्रूही-त्याशङ्क्य फलसहितमुपायं वदति ।

ध्यानामृतार्णवनिमग्नसमस्तमूर्त्या
तन्व्या धिया निगमिते निगमान्ततत्त्वे ।
आलोकितेष्वथ तटस्थधियाऽखिलेषु
भावेषु बोधघनता सहजा भ्युपैति ॥ ७ ॥

ध्यानेति। ध्यानामृतार्णवनिमग्नसमस्तमूर्त्या ध्यानमात्मनिषयकवृत्तिप्रवाहोनात्मविषयप्रत्ययानन्तरितस्तदेवामृतं समुद्रमग्नस्य सर्वत्रामृतप्राप्तिरिवामृतं ब्रह्मसुखं तत्प्रापकत्वादमृतार्णवस्तस्मिन् निमग्ना प्रविष्टा समस्ता संपूर्णा मूर्तिराकारो यस्याः सा तथोक्ता तयाऽत एव तन्व्या सूक्ष्मया धिया बुद्ध्या 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि'ति श्रुतेः, निगमान्ततत्त्वे निगमो वेदस्तस्यान्ते वेदान्ते यन्निरूपितं तत्त्वमनारोपितस्वरूपं तस्मिन्, यद्वा निगमानां वेदानामन्तः परिसमाप्तिर्यस्मिन्तस्मिंस्तत्त्वेऽनारोपितात्मस्वरूपे ब्रह्माभिन्ने प्रत्यगात्मनीति यावद्निगमिते बोधिते साक्षादनुभाविते सति अथानन्तरमेवाखिलेषु भावेषु पदार्थेषु तटस्थधिया यथा तटस्थः पुरुषः स्वदृष्ट्या नदीप्रवाहपतितानि तृणकाष्ठयादीनरादीनि प्रतिबिम्बितान्वृक्षादीनपि पश्यति तथा मायानदीतटस्थस्वसाक्षात्कारधिया बुद्धिवृत्त्याऽऽलोकितेषु साक्षाद्दृष्टेषु सत्सु सहजा स्वाभाविकी बोधघनता बोधस्यात्मनो धनता निविडता प्रपञ्चरहितत्वेन चिद्घनस्वरूपतेत्यर्थः, अभ्युपैति प्राप्नोति, यद्वा तटस्थधिया नद्यादितटस्थितवृक्षादिषु जलगतप्रतिबिम्बरूपेण द्विधाप्रतीयमानेष्वपि तद्विषयैकत्वनिश्चयवृत्तिरिवानेकधाप्रतीयमानेष्यात्मनि एकत्वनिश्चयरूपया वृत्त्येति योज्यम् ॥ ७ ॥

एवं सहजसमाधेः प्राप्तिं ससाधनां निरूप्येदानीमेतस्या मधुमतीविद्यात्वं साधयति ।

> एषा मधुमती विद्या सर्वत्र मधुदर्शनात् ।
> स्वशरीरार्कवृक्षेपि दृष्टं यत्पुष्कलं मधु ॥ ८ ॥

एषेति । एषा सहजसमाधिरूपा मधुमतीविद्या मधुमती

नाम्नी विद्योपासना ज्ञेया, कुत एतस्या मधुमतीत्वं तत्राह सर्वत्रेति, सर्वत्र सर्वपदार्थेषु मधुदर्शनान्मधुनो ब्रह्मसुखस्य दर्शनात्साक्षात्काराद्, ननु अस्मात्सर्वत्र मधुदर्शनं जातमित्येतत्कुतोनिश्चेयं तत्राह स्वशरीरेति, यद्यस्मात्कारणात्स्वशरीरार्कवृक्षेपि स्वस्यात्मनः शरीरं स्वतो विशीर्णस्वभावमत एव दुःखदत्वान्मरणप्रदत्वाच्च तापहेतुत्वाच्च वृश्चनीयत्वाच्चार्कवृक्षस्तस्मिन्नपि मधु ब्रह्मसुखं पुष्कलमत्यन्ततृप्तिकर्तृत्वाद्बहु दृष्टं साक्षादनुभूतमतः सर्वपदार्थेषु तद्दृष्टमेवेत्यतो मधुमतीत्वमेतस्याः सम्भाव्यमिति भावः, मधुमतीविद्याप्रतिपादको मन्त्रस्तावद्, 'मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तुनः पिता मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्यः माध्वीर्गावो भवन्तु नः' इति । अस्यार्थः, वाता वायवः शारीराः प्राणादयो विराट्शारीरा आवहप्रवहादय एते सर्वे पञ्चीकृता अपञ्चीकृताश्चाकाशकार्यरूपास्ते सर्वे ते तव ऋताय ऋतं ब्रह्म सुखं प्राप्तुं भवन्तु 'ऋतꣳ सत्यं परं ब्रह्मे'ति श्रुतेः, शाखान्तरे ऋतायते–इत्येकं पदं तदा मधु ब्रह्मसुखरूपाः सन्त ऋतायते ऋतं सत्यमिवाऽऽचरन्तीति तादृशा भवन्तु, तथा सिन्धवः समुद्रा मधु ब्रह्मसुखं क्षरन्ति स्रवन्तु लोडर्थे लट् अत्र सिन्धुशब्देन पञ्चीकृतजलराशिरूपा अपञ्चीकृतजलं च शारीराः कुक्षयश्च तदभिमानिन्यो देवता अपि ग्राह्याः, ओषधीरोषध्यो यवादिरूपा नोऽस्माकं माध्वीर्ब्रह्मसुखप्रदाः सन्तु भवन्तु आत्मसुखप्राप्तिपर्यन्तं शरीरस्य श्रवणाद्युपयोगित्वात्तादृशशरीरोपजीवनानुकूलतया निर्विघ्नप्राप्तिरेव धान्यानां मधुप्रदत्वं ज्ञेयमिति भावः, नक्तं रात्रिरपि मधु ब्रह्मसुखरूपं भवतु ब्रह्मसुखप्राप्तिसाधन-

विचारादावनुकूलं नो भवतु इत्यर्थः, तथोपसि उतोपस्यपि प्रभातेपि नोऽस्माकं मधु ब्रह्मसुखं स्फुरत्विति शेषः, ब्रह्मसुखस्फुरणेऽनुकूलता प्रभातेस्त्वित्यर्थः, उषस इत्यपि शाखान्तरे पाठः, अर्थः स एव, पार्थिवं पृथिव्या इदं पार्थिवं पृथ्वीसम्बन्धि रजो रेणुस्तज्जन्यं घटाद्यपि पृथिवी च मधुमन्मधु ब्रह्मसुखं विद्यते यत्र तथाभूतमस्तु ब्रह्मसुखभानपूर्वकं तत्सर्वं भातु वा ब्रह्मसुखसाधनं भवतु इत्यर्थः, न इत्यनुवर्तनीयं, तथा पिता पालकः सर्वप्राणिपालनशीलेत्यर्थः, द्यौः स्वर्गोपि मधु ब्रह्मसुखलक्षकं नोऽस्माकमस्तु भवतु द्यौःपदेनाकाशोपि ग्राह्यस्तथा वनस्पतिः पुष्पं विना फलवानश्वत्थादिर्वनोपलक्षितौषधीस्वामी चन्द्रोपि मधुमान्मधुसुखं विद्यतेऽस्मिन्निति मधुमान्ब्रह्मसुखविशिष्टस्तत्प्रदश्च नोऽस्माकमस्तु भवतु सूर्यस्तपनो ब्रह्मसुखप्रदो भवतु तथा गावो धेनवो वाचश्चेन्द्रियाणि च बुद्धिश्च यज्ञश्च दिशश्च वज्रं बाणाश्चेत्यादिजातं सकलं नोऽस्माकं ब्रह्मसुखानुसन्धानवतां माध्वीर्ब्रह्मसुखानुरूपा भवन्तु प्रतीयन्तु सर्वत्र प्रार्थनायां लोट् ॥ ८ ॥

इदनीं स्वस्याज्ञानावस्थातो ज्ञानावस्थायां स्थितस्य महदन्तरं दर्शयति ।

विष्णोर्मे दर्शनं भूयादेवमासीन्मनोरथः ।
इदानीं कृपया विष्णोः सर्वं विष्णुमयं जगत् ॥९॥

इति श्रीनरहरिकृतौ बोधसारेऽनुभवनवकमेकविंशम् ॥ २१ ॥

विष्णोरिति । हे शिष्य पूर्वं ज्ञानप्राप्तिपूर्वकालेऽज्ञानावस्थायामित्यर्थः, मे मम विष्णोर्व्यापकस्य परमात्मनो दर्शनं साक्षात्कारो भूयाद्भवतु एवमित्थं मे—इत्यावर्तनीयं, मम मनोरथोऽभिलाष आसीदभूत्, केवलाज्ञानावस्थायां तु विष-

येष्वेवेच्छाऽऽसीत्, ततश्च तदर्थं कर्मोपासनाद्यनुष्ठानेनान्तःकरणे किञ्चिच्छुद्धे निष्कामपूर्वं तदनुष्ठानेन वेवेष्टि व्याप्नोति जगत्स विष्णुर्गुरुः ।

'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नम' ॥ इति ।

वृद्धवचनादत्रैव च ।

मदमोहाभिधक्रूरमधुकैटभजिष्णवे ।
मोक्षलक्ष्मीनिवासाय नमः श्रीगुरुविष्णवे ॥

इति चोक्तत्वाद्गुरोर्व्यापकत्वं च सर्वत्र सर्वहितोपदेष्टृत्वसंभवेन ज्ञेयम्, इदानीमधुना ज्ञानप्राप्तौ सत्यां विष्णोर्जगद्व्यापकस्य गुरोः कृपा दया तया सर्वं समस्तं जगद्विश्वं विष्णुमयं विष्णुर्व्यापक आत्मा गुरुश्च तन्मयं तद्रूपं दृश्यत इति शेषः, 'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन, पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं, विश्वं नारायण' इत्यादि श्रुतिद्वारा गुरोरुपदेशरूपकृपया वाचारम्भणश्रुत्युक्तयुक्त्या च पर्यालोचनेन कार्यस्य कारणव्यतिरिक्तसत्ताभावाज्जगतो ब्रह्ममात्रत्वं तदभिन्नगुरुदृष्ट्या च गुरुमात्रत्वं लोकप्रसिद्धविष्णुदृष्ट्या च विष्णुमात्रत्वं च साक्षात्कृतमित्यर्थः ॥ ९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपिकायामनुभवनवकार्थप्रकाश एकविंशः ॥ २१ ॥

---

अथ विद्वत्प्रभावनवकम् ।

एवं स्वानुभवं निरूप्येदानीं ज्ञानिनां प्रतापं वर्णयितुं विद्वत्प्रभावनवकाख्यं प्रकरणं नवश्लोकं निरूपयिष्यन्नाह ।

## अथ विद्वत्प्रभावनवकम् ।

अथेति । अथेदानीं स्वानुभवनवकनिरूपणानन्तरं विद्वत्प्र-

भावनवकं विदुषां विवेकिनां प्रभावः प्रतापस्तस्य निरूपकं नवकं नवानां श्लोकानां समूहो नवकं विद्वत्प्रभावनवकाख्यं प्रकरणं निरूप्यत इति शेषः, तत्रादौ तावदेतत्प्रकरणनिरूपयिष्यमाणविषयमत्र निर्दिशति ।

अभावो यत्र भावानां स भावो यत्र वर्णितः ।
स्वभावसुखदं तात प्रभावनवकं शृणु ॥ १ ॥

अभाव इति । यत्र यस्मिन् भावे भावानां कार्यकारणरूपाणां जगद्गतपदार्थानामभावोऽत्यन्तासत्त्वमस्ति स भावः सच्चिदानन्दरूपो भावः पदार्थ आत्मा यत्र प्रकरणे वर्णितो निरूपितो हे तात हे शिष्य स्वभावसुखदं स्वभाव आत्मसत्ता तदभिन्नं सुखं तत्प्रददातीति तत्तथोक्तं प्रभावनवकं प्रभावस्य विद्वत्प्रतापस्य निरूपकं नवकं नवश्लोकसमूहरूपं प्रकरणं शृणु अवधारय ॥ १ ॥

इदानीं विदुषो विषयदर्शनेन कामाद्युत्पत्तौ सत्यामपि तदस्पर्शं ज्ञानिषु दर्शयन्कामादिविकाराणां शक्तितिरस्करणरूपं प्रतापं निरूपयति ।

अयं विहाय कामादीन्क्षुद्रान्दूरगतो मुनिः ।
पश्यत्यपि कदाचित्तान्न चैनं प्राप्नुवन्ति ते ॥२॥

अयमिति । अयं यत्प्रतापवर्णनमारब्धं सोयं ज्ञानी क्षुद्रान्कामादीन्क्षुद्रान्तुच्छान् मायिकपदार्थविषयान् कामादीन् कामोऽभिलाष आदिः प्रथमो येषां ते तथोक्तास्तान् क्रोधादीन् षड्रिपून् विहाय परित्यज्य दूरगतो दूर आराद्गतः स्थितो मुनिर्मननं विवेकोऽस्याऽस्ति स मुनिः प्रारब्धभोगकाले तान्विषयान्तद्विषयकान्कामादींश्च पश्यत्यपि यद्यप्यवलोकयति तथापि ते कामा-

दयस्तद्विषयाश्चैनं ज्ञानिनं न च नैव प्राप्नुवन्ति सम्बध्नन्ति कामादीनां विकारत्वादसत्त्वाच्च विदुषो 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतेर्निर्विकारसच्चिदानन्दब्रह्मरूपत्वादुभयोर्विरुद्धस्वाभाव्येन कामादिविकारसम्बन्धो विवेकिनि पारमार्थिको नैव संभवति एवं विद्वत्प्रभावो ज्ञेय इति भावः ॥ २ ॥

इदानीं द्वैतादर्शनरूपं प्रतापं दर्शयति ।

न यान्ति नूनं तज्ज्ञस्य सम्मुखे द्वैतदृष्टयः ।
दुष्टा दुष्टतया ज्ञाता दर्शयन्ति मुखं कथम् ॥ ३ ॥

नेति । तज्ज्ञस्य तदात्मस्वरूपं जानातीति तज्ज्ञ आत्मयाथार्थ्यवेत्ता तस्य सम्मुख आत्मयाथार्थ्यवेदनरूपवृत्यग्र इत्यर्थः, द्वैतदृष्टयो द्वैतं जगदृश्यत आभिस्ता द्वैतदृष्टयो जगद्विषयका वृत्तय इत्यर्थः, न यान्ति नूनं निश्चयं नागच्छन्ति अत्र सन्देहो नैव कर्त्तव्य इति भाव, तत्रोपपत्तिमाह दुष्टा इति । दुष्टाः स्वत एवासत्त्वदुःखप्रदत्वपरिणामादिभिर्दोषैर्दूषिता अतो दुष्टतया दुष्टत्वेन ज्ञाता अवगताः सन्तस्ते विषया मुखं वदनं कथं केन प्रकारेण दर्शयन्ति न कथमपीत्यर्थः, लोकेपीदं दुष्टैः स्वदोषज्ञानिनामग्रे स्वमुखदर्शनं न क्रियत इति प्रसिद्धमेवेति भावः ॥ ३ ॥

इदानीं मायाया अपि ज्ञान्यग्रे स्थातुमशक्तिकत्वमित्येवंविधं प्रतापं दर्शयति ।

माया मायेति विज्ञाता सर्वाकारविकारिणी ।
गता कुत्राप्यनावृत्यै संस्थितो निर्मलो मुनिः ॥ ४ ॥

मायेति । माया प्रकृत्यपरपर्याया जगदुत्पादनशक्तिः सत्त्वासत्त्वादिवचनैरनिर्वाच्या सर्वाकारविकारिणी सर्वे समस्ता य आकारा रूपाणि त एव विकाराः परिणामरूपा विद्यन्ते यस्यां

सा तथोक्ता । एवं लक्षणैर्लक्षितेयं मायार्थशून्या सती प्रतीयमानेत्येवं विज्ञाता साक्षादनुभूता सती मुनिनेति शेषः, अत एव सा कुत्रापि क्वापि मिथ्यापदार्थलयस्थानस्यापि सत्त्वासत्त्वादिभिरनिर्वचनीयतया कुत्रापीत्युक्तम्, अनावृत्त्यायपुनरागमनाय गता निवृत्ताऽतो मुनिर्मननवान्ज्ञानी निर्मलो मायाविद्यादिमलास्पृष्टः शुद्ध इत्यर्थः, संस्थितस्तिष्ठतीत्यर्थः, लोकेऽपि दुष्टस्त्रिया दुष्टत्वे ज्ञाते सा लज्जया पुरःस्थातुमशक्ता सती विषादिभक्षणेन पुनरदर्शनरूपं मरणं प्रसिद्धं तद्वदत्रापीत्यर्थः ॥४॥

इदानीं विद्वत्समीपे विषयाणां प्रसरणाशक्तिनिरूपणमिषेण विद्वत्प्रतापं दर्शयति ।

निर्जिता विषया नूनं चपेटाभिश्च ताडिताः ।
नोपसर्पन्ति ते तस्मादस्मानेष हनिष्यति ॥ ५ ॥

निर्जिता इति । विषयाः शब्दादयस्तत्समूहरूपाश्च स्त्रीपुत्रधनगृहादयो नूनं निश्चयेन ज्ञानिना निर्जिताः पराभूताः कृताः, च पुनश्चपेटाभिर्दोषदृष्टिरूपाभिश्चपेटाभिस्ताडिता दण्डिताश्च मुनिभिरिति शेषः, यतो यस्मात्कारणात्तस्मात्कारणात्ते विषया एष मुनिरस्मान्नो हनिष्यति मारयिष्यतीति हेतोर्नोपसर्पन्ति न मुनिसमीपं गच्छन्ति अयमपि मुनिप्रतापो विषयेषु भीतिरूपो ज्ञेयः ॥ ५ ॥

इदानीं तुच्छविषयतृष्णारूपशल्यनिराकरणेन स्वात्मानुभवे सति नित्यतृप्त्योत्तरोत्तरक्षणं स्वरूपे स्थैर्याधिक्यं ज्ञानिनां दर्शयन्तन्मिषेणापि ज्ञानिप्रभावं निरूपयति ।

तृष्णां विहाय तुच्छेभ्यो मुनिर्निःशल्यतां गतः ।
स्वरसायनतृप्तात्मा दिनानुदिनमेधते ॥ ६ ॥

तृष्णामिति । मुनिर्ज्ञानी तुच्छेभ्यस्तुच्छविषयेभ्यस्तृष्णां लोभवृत्तिं विहाय परित्यज्य निःशल्यतां शरीरेऽवशिष्टं शस्त्रादिखण्डं शल्यं तद्वद्दुःखप्रदत्वाद्विषयवासनैवाशिष्टाऽन्तःकरणे श ल्यपदेन ग्राह्या तद्रहिततां निर्वासनतां गतः प्राप्तः सन्नत एव स्वरसायनतृप्तात्मा स्व आत्मा स एव सुखं 'रसो वै स' इति श्रुतेः, तस्यायनं प्राप्तिसाधनमखण्डाकाराकारिता प्रमारूपा वृत्तिस्तेन तृप्तः संतुष्ट आत्मान्तःकरणं यस्य स तथाभूतः सन्, यद्वा स्व आत्मैव रसानां हैरण्यगर्भसुखादिमानुषानन्दपर्यन्तानां वैषयिकसुखानामयनमाश्रयस्तेनैव तृप्तः सन्तुष्ट आत्मान्तःकरणं यस्येत्यर्थः, सन्दिनानुदिनमेतदुपलक्षणं पूर्वपूर्वक्षणादुत्तरोत्तरक्षण इत्यर्थः, एधते वर्धतेऽत्र स्वानुभवे स्थैर्यसंपादनरूपो ज्ञानिप्रभावो वर्णितो ज्ञेयः ॥ ६ ॥

इदानीं ज्ञानिनामविद्याया अस्फुरणमेवोत्प्रेक्षते ।

> पूर्वां मां वल्लभां त्यक्त्वा रमते विद्ययाऽधुना ।
> इत्यविद्या लज्जितेव नायाति मम संमुखम् ॥ ७ ॥

पूर्वामिति । यथा काचित्स्त्री पूर्वं स्वपतिप्रियाऽनन्तरं तत्र दोषदर्शनेनान्यां स्त्रियं विवहति ततस्तया सहैव रमते च तां ज्ञात्वा स्वस्यां दोषदृष्ट्यानादरमपि ज्ञात्वा ततस्तस्य पत्युः संमुखमपि लज्जया नायाति, तथा पूर्वां ज्ञानोदयात्पूर्वकाले वल्लभामतीव प्रियां मामविद्याख्यां स्त्रियन्त्यक्त्वा दोषदृष्ट्या परित्यज्याऽधुनेदानीं वेदान्तश्रवणादिविधिना तामङ्गीकृत्येदानीं विद्यया विद्यानाम्न्या स्त्रिया सह मामनादृत्य रमते क्रीडतीति हेतोरविद्या माया मम मे तद्दोषज्ञानिन इत्यर्थः, सन्मुखं ब्रह्माकारवृत्तिदृष्टिविषयत्वं नायाति नागच्छतीव नागच्छति किमु, तत्र हेतुर्लज्जिता लज्जा त्रपा सञ्जाताऽस्याः सा तथोक्ता, एव-

मविद्याया अपि लज्जोत्पादनरूपः प्रभावो ज्ञानिनां ज्ञेयः ॥७॥

इदानीमज्ञानिषु ब्रह्मवक्तृताशक्यतावज्ज्ञानिनामपि तद्वक्तृताशक्यतायामपि सत्यामवचनेनैव ब्रह्मवक्तृत्वरूपं महत्त्वं प्रदर्शयति।

ब्रह्म वक्तुं न जानाति यथात्यन्तजडो जनः ।
तथैवात्यन्तबोधात्मा ब्रह्म वक्तुं न बुध्यते ॥ ८ ॥

ब्रह्मेति। यथा यद्वदत्यन्तमतिशयं जडो मूर्खो जनः पुरुषो ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं सच्चिदानन्दलक्षणं वस्तु कर्मभूतं वक्तुं वचनेन प्रतिपादयितुं न जानाति न वेत्ति अज्ञत्वाद् विषयाज्ञाने तन्निरूपणाशक्तौ श्रुतिस्तावद्' यन्मनसा ध्यायति तद्वाचा वदती'ति, अतो मनसा ज्ञातस्यैव वाचा निरूपयितुं शक्यत्वादज्ञानां ब्रह्मनिरूपणासामर्थ्यमेव सिद्धमिति भावः, तथा तद्वदत्यन्तबोधात्माऽत्यन्तमतीव यो बोधो बुध्यते ज्ञायते जगदनेनेति बोधश्चिन्मात्र आत्मान्तःकरणं यस्य स तथाविध आत्माकारपरिणतान्तःकरणो ब्रह्माभिन्नस्वसाक्षात्कारवानित्यर्थः, ब्रह्म देशाद्यपरिच्छिन्नमात्मवस्तु वक्तुं वचनद्वारा निरूपितुं न बुध्यते न जानाति बुधेर्दिवादिपाठात्कर्तरि लटि दिवादिभ्य श्यन्निति श्यनि च स्वरितेत्त्वाल्लटस्तङ्, 'अवचनेनैव प्रोवाच, स ह तूष्णीं बभूवे'ति श्रुतेः, अज्ञानिवद्ब्रह्मवक्तृत्वाभावेपि तूष्णीभावेनैव ब्रह्मवक्तृत्वशक्तिमत्त्वाज्ज्ञानिनो वचनाविषयत्वेपि ब्रह्मनिरूपणरूपः प्रभावो दर्शितः ॥ ८ ॥

इदानीमालस्यस्याविद्वत्सु कार्यघातकत्वेपि ज्ञानिषु प्राप्तव्याभावादविघातकत्वं प्रत्युत केवलसहजसमाधेर्द्वैतारुचिप्रतिपादनपूर्वकतद्विस्मृतिकारकत्वात्तस्याऽऽत्मास्थितिवृद्धिसाधनत्वेनेष्टत्वं दर्शयति।

नूनमालस्यदोषो हि शक्रस्यापि श्रियं हरेत्।

यथा यथाऽलसो ज्ञानी वर्धतेऽसौ तथा तथा ॥९॥

इति श्रीनरहरिकृतौ बोधसारे विद्वत्प्रभावनवकं द्वाविंशं ॥ २२ ॥

नूनमिति। शक्रस्यापि आलस्यवतस्त्रैलोक्यराज्यं प्राप्तस्यापीन्द्रस्याऽपिशब्दात्किमन्यस्य वक्तव्यमित्यर्थः, श्रियं सम्पदं हरेन्नाशयेद्यः सोयं प्रसिद्ध आगोपालमालस्यदोषोऽलसस्य भाव आलस्यं कार्योपेक्षारूपा बुद्धिवृत्तिस्तद्दोषो दूषणं नूनमस्ति विद्यतेऽत्र संशयो नास्तीत्यर्थः, तथापि ज्ञानी—आत्मसाक्षात्कारवान्यथा यथा पूर्वपूर्वकालादुत्तरोत्तरकालं यादृशोऽलस आलस्यवृद्धिमान् भवति तथा तथा पूर्वपूर्वक्षणादुत्तरोत्तरक्षणमसावलसो ज्ञानी वर्द्धते स्वरूपस्थितिवृद्ध्युपलक्षितो भवति अज्ञानिकार्यनाशकस्यालस्यस्य ज्ञानिकार्यसाधकत्वसंपादनरूपोयं ज्ञानिमतापोत्र दर्शितो ज्ञेयः ॥ ९ ॥

इति श्रीनरह० बोधसा० विद्वत्प्रभावनवकार्थप्रकाशो द्वाविंशः॥ २२ ॥

---

अथ निर्वाणदशकम्।

एवं विद्वत्प्रभावनवकं निरूप्येदानीं तेषामेव तात्त्विकं निर्वाणात्मरूपमन्येषां जिज्ञासूनामवबोधयितुं निर्वाणदशकाख्यं दशश्लोकं प्रकरणमारभमाण आह।

## अथ निर्वाणदशकम्।

अथेति। अथ विद्वत्प्रभावनवकनिरूपणानन्तरं निर्वाणदशकं निर्वाणस्य निरुपाधिकेवलात्मरूपस्य निरूपकं दशकं दशश्लोकसमूहात्मकं प्रकरणमुच्यत इति शेषः, तत्रादौ निर्वाणात्मस्वरूपस्य वचनाविषयत्वेपि शिष्यकृपयैव केवलं स्वस्य तन्निरूपणे प्रवृत्तिरिति शिष्यं प्रत्याह।

न शक्यं वक्तुमेवेदं तथापि कृपया तव ।
कया चित्कलया वत्स निर्वाणदशकं ब्रुवे ॥ १ ॥

नेति । हे शिष्य इदं वक्ष्यमाणं मद्बुद्धिप्रत्यक्षं निर्वाणदशकं निर्वाणस्याखण्डचिन्मात्रस्वरूपस्य निरूपकं दशकं दशश्लोकसमूहात्मकं प्रकरणं वक्तुं वचनेन प्रतिपादयितुं शक्यं शक्तिविषयं नैवास्ति नैव विद्यते यद्यपि तथापि वक्तुमशक्यत्वेपि तव ते कृपया दयया तव साधनसंपन्नत्वेनाधिकारित्वं यदस्ति तेन हेतुना मय्युत्पन्ना या दया तयेत्यर्थः, हे वत्स अनेन सम्बोधनेन गोवत्स इव मत्कृपापात्रस्त्वमिति सूचितं, कया चित्सत्त्वेनासत्त्वेन सदसत्त्वेन वा केनापि निर्देशेन निर्देष्टुमशक्यया कलयति आत्मानमिति कला आत्मसाक्षात्कारवृत्तिस्तयाऽहं निर्वाणात्मस्वरूपसाक्षात्कारवान्त्वदुपदेष्टा निर्वाणदशकं निर्वाणात्मनो निरूपकं दशश्लोकसमूहरूपं प्रकरणं ब्रुवे कथयामि ॥ १ ॥

एवं सविषयं प्रकरणनिरूपणं प्रतिज्ञायेदानीमेतत्प्रकरणनिरूपयिष्यमाणात्मस्वरूपविषये जाग्रत्त्वं सम्भाव्योत्तरार्धेन तन्निषेधति ।

मोहनिद्रा न तत्रास्ति तेनायं जागरो महान् ।
भावादयो न भासन्ते तेनायं नैव जागरः ॥ २ ॥

मोहनिद्रेति । हे शिष्य तत्र निर्वाणात्मनि मोहनिद्रा मोहोऽज्ञानमेव निद्रा सुषुप्तिः स्वरूपास्फोरकत्वात्सुषुप्तित्वं मोहस्य ज्ञेयं नास्ति न विद्यते तेन मोहनिद्राभावहेतुनाऽयं मद्बुद्धिगोचर आत्मप्रकाशः प्रकृतो महानखण्डो लोकप्रसिद्धजागरस्य निद्राभिः खण्डितत्वादमहत्त्वमेतस्य तु मोहनिद्रा-

दिभिरखण्डितत्वान्महत्वं, जागरो जागृतिरस्तीति सम्भाव्यते तत्रेत्यावर्त्तनीयं तत्र निर्वाणात्मस्वरूपे भावादयो भावो घटादिपदार्थानां विद्यमानत्वं स आदिर्येषामभावानां ते तथोक्ता घटादिपदार्थभावाभावा इत्यर्थः, लौकिकजाग्रतीव न भासन्ते न प्रतीयन्ते तेन घटादिपदार्थभावाभावप्रत्ययाभावेन हेतुनाऽयं मद्बुद्धिप्रत्यक्षो आत्मप्रकाशो जागरो जागृतिर्नैवास्ति नैव सम्भाव्यते ॥ २ ॥

इदानीं तत्रैव स्वप्नत्वं सम्भाव्य निषेधति ।

अपूर्वं भासते वस्तु तेन स्वप्नोयमुत्तमः ।
दृश्यं न भासते तत्र तेन स्वप्नो न चैव सः ॥३॥

अपूर्वमिति । तत्रेत्यावर्त्तनीयं तत्र निर्वाणात्मस्वरूपेऽपूर्वं सत्त्वासत्त्वाभ्यामनिर्वचनीयं चमत्कारकारि वस्तु पदार्थजातमात्मवस्तु वा भासते प्रतीयते तेनापूर्ववस्तुभानस्वप्नलक्षणसत्त्वेन हेतुनाऽयं मद्बुद्धिप्रत्यक्ष आत्मप्रकाश उत्तमः श्रेष्ठः स्वप्नोऽस्ति विद्यत इति सम्भावनीयम्, एवं स्वप्नत्वं सम्भाव्येदानीं तन्निषेधति दृश्यमिति, यत्रात्मप्रकाशे दृश्यं लौकिकस्वप्ने यथा दृश्यं भासते तथा दृश्यं दृष्टिविषयं घटादिविषयजातं न भासते न प्रतीयते तेन दृश्यभानाभावेन हेतुना स्वप्नः स्वप्नावस्था न चैव नैवास्ति हीति प्रसिद्धं सर्वेषां स्वप्ने दृश्यभानमिति द्योतितम् ॥ ३ ॥

एवमात्मप्रकाशे स्वप्नत्वं निषेध्येदानीं सुषुप्तित्वं सम्भाव्य निषेधति ।

अभावात्सा पदार्थानां सुषुप्तिः सुखरूपिणी ।
न जाड्यं न तमस्तत्र सुषुप्तिरपि नैव सा ॥ ४ ॥

अभावादिति। पदार्थानां नामरूपात्मकानां घटपटादिपदार्थानां तत्र निर्वाणात्मनि अभावादविद्यमानत्वात्सुखरूपिणी सुखमात्मस्वरूपमेवानन्दरूपं रूप्यते प्रकाश्यतेऽत्रेति सा-तथोक्ता सुखप्रतीतिरूपेत्यर्थः, अत एव सा स्थितिः सुषुप्तिर्निद्रा ज्ञेया, एवं निद्रात्वं सम्भाव्येदानीं तदपि निषेधति नेति, तत्रात्मनि जाड्यमज्ञानं न नास्ति तत्र हेतुमाह नेति, तत्रात्मस्वरूपे तम आवरणस्वरूपं तमोगुणतत्त्वं न न विद्यतेऽतः साऽऽत्मस्थितिः सुषुप्तिरपि निद्रापि नैव नास्त्येव ॥ ४ ॥

अवस्थात्रयरहितत्वेन तुर्यत्वमात्मनि सम्भावयति।

अवस्थात्रयनिर्मुक्तं तुरीयमिति कीर्तितम्।
नैवैकद्वित्रिविज्ञानं तुरीयं किमपेक्षया ॥ ५ ॥

अवस्थेति। तदात्मस्वरूपं यतोऽवस्थात्रयनिर्मुक्तमवस्थानां जाग्रत्स्वप्नसुषुप्त्याख्यानां स्थानानां त्रयं त्रिकं तेन निर्मुक्तं हीनमिति अतो हेतोस्तुरीयं चतुर्थमवस्थानं 'चतुर्थं मन्यन्ते स आत्मा स विज्ञेय'इति श्रुतेः, कीर्तितमुक्तम्, एवं तुर्यत्वं सम्भाव्येदानीं तदपि निषेधति नैवेति, यत्रात्मस्वरूप एकद्वित्रिविज्ञानमेकस्य द्वयोस्त्रयाणां चैकत्वद्वित्वत्रित्वानामित्यर्थः, विज्ञानमनुभवो नैवास्ति नास्त्येव तत्तुरीयं चतुर्थं किमपेक्षया कस्यापेक्षा किमपेक्षा तया किमपेक्षया भवेन्नैव भवेदित्यर्थः, संख्याया अन्योन्यसापेक्षत्वादिति भावः ॥ ५ ॥

इदानीं तत्रात्मनि जीवत्वं सम्भावयति।

जीवस्यैतन्निजं रूपं तेन जीवोऽयमुच्यते।
जीवचेष्टा न तत्रास्ति तेन निर्जीवता स्फुटा ॥६॥

जीवस्येति। एतच्चतुरवस्थाप्रकाशकं चैतन्यं जीवस्य बु-

द्ध्यादिप्रतिविम्बितं साधिष्ठानं प्राणाद्युपाधिमच्चैतन्यं जीव इत्युच्यते जीव प्राणधारण इति धातुप्रकृतिकत्वात्तस्य निजं स्वीयं रूपं स्वरूपमस्ति तेनैतस्य जीवपारमार्थिकरूपत्वेनायं मद्बुद्धिप्रत्यक्ष आत्मप्रकाशो जीवो जीवनामोच्यते कथ्यते, एवं जीवत्वं सम्भाव्य तदिदानीं निषेधति जीवेति, तत्रात्मनि जीवचेष्टा जीवस्य प्राणोपाधिमच्चैतन्यस्य चेष्टा कर्तृत्वभोक्तृत्वादिरूपा नास्ति न विद्यते तेन जीवचेष्टाभावेन हेतुना स्फुटा प्रत्यक्षा निर्जीवता जीवस्य भावो जीवता निर्गता निवृत्ता जीवता जीवभावो यस्याः सा तथोक्ता जीवभावरहितत्वं भासते ॥ ६ ॥

ननु तदात्मरूपं ब्रह्मैवास्तीत्याशङ्क्य तदपि वाचामविषयत्वान्न शक्यते वक्तुमित्याह ।

सच्चिदानन्दरूपत्वाद्ब्रह्म चेन्नापि तद्भवेत् ।
यो वेद स तु न ब्रूते यो न वेद गिरास्य किम्॥७॥

सच्चिदिति । तदात्मचैतन्यं सच्चिदानन्दरूपत्वात्सत्कालत्रयाबाध्यं, चिज्ज्ञप्तिरूपम्, आनन्दः सुखम्, एतत्त्रयमभिन्नं रूपं यस्य तत्तथोक्तं तस्य भावस्तत्त्वं तस्माद्धेतोः 'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतेः, ब्रह्मलक्षणस्य सच्चिदानन्दत्वप्रतिपादनाद्ब्रह्म भवतीति चेद्यदि ब्रूषे तर्हि तदपि न भवेन्न स्यात् कुत इत्यत आह य इति, यः कश्चित्तद्ब्रह्म वेद जानाति तस्य ब्रह्मरूपत्वाद्ब्रह्मणश्च वागविषयत्वात्त्रिपुटेर्बाधितत्वाच्च स तु ब्रह्मवित्र ब्रूते ब्रह्मादिशब्दैर्न प्रतिपादयति तुशब्देन तस्य वक्तृत्वाद्भिन्नत्वं सूचितं, किंच यः कोपि पुरुषो न वेद न वेत्ति अस्य ज्ञानिनः पुरुषस्य गिरा वाचा किं तद्वाच्यं भवति न भवत्येवेत्यर्थः ॥ ७ ॥

अत्रार्थे श्रुतिं विद्वदनुभवं स्वानुभवं च प्रमाणयति ।

तस्माच्छ्रुतिः प्राह सत्यमवाङ्मनसगोचरम् ।
यथानुभूतं मुनिभिस्तथैवेदं न संशयः ॥ ८ ॥

तस्मादिति । हे शिष्य तस्माद्ब्रह्मणोऽनिर्वचनीयत्वाच्छ्रुतिः 'यद्वाचानभ्युदितं येन वागभ्युद्यते, यतो वाचो निवर्त्तन्त'इत्यादिका वेदवागवाङ्मनसगोचरं वाचो मनसश्चागोचरमविषयं ब्रह्म यत्प्राह कथितवती तत्सत्यं प्रमाणमेव, किं च मुनिभिर्मननशीलैर्यथा यादृशं मनोवागगोचरत्वलक्षणलक्षितमनुभूतं ज्ञातमिदं मद्बुद्धिप्रत्यक्षं ब्रह्म तथैव तादृशमेवास्ति अत्र संशयः सन्देहो मम न विद्यते मयापि तादृशमेवानुभूतमिति भावः ॥ ८ ॥

इदानीमेतदात्मस्वरूपमेव सर्ववेदान्तविषय इत्याह ।

एतदन्तः समाम्नाय एतदन्ता तपस्विता ।
उपदेशोप्येतदन्त एतदन्ता विवेकिता ॥ ९ ॥

एतदन्त इति । हे शिष्य समाम्नायः सम्यगाम्नायते तत्त्वमस्मिन्निति समाम्नाय आत्मतत्त्वप्रतिपादको ग्रन्थसमूहो वेदान्त एतदन्त एतदात्मस्वरूपमन्तस्तात्पर्यमवसानं वा यस्य स तथोक्तोऽस्ति अत्रैव सर्ववेदान्तानामवसानमित्यर्थः, 'सर्वे वेदा यत्पदमामनन्ती'तिश्रुतेः, 'तं त्वौपनिषदं पुरुषं पृच्छामी'तिश्रुतेश्च, यद्वा—एष आत्माऽन्तो लयाधिष्ठानं यस्य स तथोक्तो वाचोऽविषयत्वाद् 'यतो वाचो निवर्त्तन्त'इति श्रुतेः, अत्रैव सर्वे वेदा लीना भवन्ति वाचारम्भणमात्रत्वेन निरर्थका भवन्तीत्यर्थः, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यादिश्रुतेः, 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुने'ति स्मृतेश्चात्मनः पृथक्सत्ताकत्वाभावाद्गुणानां गुणकार्याणां च

तिपादकस्य वाङ्मात्रस्यार्थशून्यत्वप्रतिपादनात्, किञ्च तप-
वता तपो वर्णाश्रमधर्मनिष्ठतया शरीरे शीतोष्णादिक्लेशसहनं
तपो यस्यास्तीति तपस्वी तस्य भावस्तत्वैतदन्तैतदा-
स्वरूपं तज्ज्ञानं चान्तोऽवसानं फलरूपं यस्याः सा त-
क्ताऽस्ति 'तपांसि सर्वाणि च यद्वदन्तीति'श्रुतेः, यत्फलका
क्रिया सा तत्सिद्धौ समाप्यत इति लोकप्रसिद्धेश्च तपः-
क्रियाया अन्तःकरणशुद्धिद्वारा ज्ञानप्राप्तिसिद्धावत्रैवान्त-
स्या इति भावः, किञ्चोपदेशोपि गुरुकृतस्तत्त्वमस्यादिवा-
योपदेश उपासनाद्युपदेशोपि एतदन्त एतदात्मस्वरूपं
ज्ज्ञानं चान्तः फलरूपेण नाशरूपं यस्य स तथोक्तोऽस्ति
पदेशविषयस्यात्मनस्तज्ज्ञानस्य वा प्राप्तावुपदेशक्रियायां नै-
रर्थक्येन नाशरूपमात्मैवेति भावः, किञ्च विवेकिता विविच्येते
आत्मानात्मानावनेनेति विवेकः सोऽस्मिन्विद्यते विवेकी स
स्य भावस्तत्ता विवेकित्वं सैतदन्तैतदात्मस्वरूपं तज्ज्ञानमन्तो
नाशो यस्याः सा तथोक्ताऽस्ति विवेकस्यापि क्रियात्वात्तत्फ-
प्राप्तौ तस्या अप्रयोजनत्वेनात्मसाक्षात्कार एव नाशो ज्ञेय
ति भावः, इतीदमेव तत्त्वज्ञानमिति निश्चेतव्यम् ॥ ९ ॥

इदानीं सर्ववेदश्रवणं शिष्ये संपन्नमिति शिष्यं प्रत्याह ।

श्रोतव्यं श्रुतिवाक्येन सर्वं ब्रह्म त्वया श्रुतम् ।
भवितव्यं यदि ब्रह्म तर्हि ब्रह्मैव भूयताम् ॥ १० ॥

इति नरहरिकृतौ बोधसारे निर्वाणदशकं त्रयोविंशम् ॥ २३ ॥

श्रोतव्यमिति । हे शिष्य त्वया भवता श्रुतिवाक्येन श्रु-
तिरूपं यद्वाक्यं तेन श्रोतव्यं श्रवणविषयत्वेन विहितं सर्वं स-
मस्तं ब्रह्म देशादिपरिच्छेदशून्यमात्मवस्तु श्रुतं श्रवणेनावगतम्,
अतोनन्तरं यदि यर्हि त्वया ब्रह्म देशादिपरिच्छेदशून्यं वस्तु

भवितव्यं भवितुं विहितं चेत्तर्हि ब्रह्मेव भूमैव भूयता-मास्यताम् ॥ १० ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपि-निर्वाणदशकार्थप्रकाशस्त्रयोविंशः ॥ २३ ॥

---

अथ बोधदीपपञ्चकम् ।

एवं निर्वाणात्मस्वरूपनिरूपकं निर्वाणदशकं निरूप्येदानीं तदेव विलक्षणदीपकरूपेण निरूपयितुं बोधदीपपञ्चकाख्यं पञ्चश्लोकं प्रकरणमारभमाण आह ।

## अथ बोधदीपपञ्चकम् ।

अथेति । अथ निर्वाणदशकनिरूपणानन्तरं बोधदीपपञ्चकं बोधो ज्ञानं स एव प्रकाशकत्वाद्दीप इव दीपस्तस्य निरूपकं पञ्चकं पञ्चश्लोकसमूहरूपं प्रकरणं निरूप्यत इति शेषः, एतत्प्रकरणप्रतिपाद्यस्य दीपस्य लौकिकदीपाद्वैलक्षण्यं दर्शयति पञ्चभिः श्लोकैः, तत्रादौ लौकिकदीपस्येवाधारपात्रतैलवर्तिकज्जलाद्यपेक्षाभावरूपं लौकिकदीपाद्वैलक्षण्यं क्रमेण चतुर्भिः पादैरेतस्य दर्शयति ।

नाधारपात्रमादत्ते न च तैलमपेक्षते ।
न वर्तिकामाश्रयते न धत्ते कज्जलं मनाक् ॥ १ ॥

नाधारेति । हे शिष्य अयं बोधदीपो लौकिकदीप इव तैलसंग्रहार्थं मृण्मयपात्रमिवाऽऽधारपात्रमाध्रियन्ते तैलं वर्तिका दीपश्च यस्मिन्निति आधारस्तद्रूपं पात्रं लौकिकं मृण्मयादिपात्रं नादत्त इति स्पष्टमेव वस्तु तस्तु लौकिकदीपे तैलवर्तिदीपाधारभूतं मृण्मयादिपात्रमिव समष्टिव्यष्ट्यन्तःकरणमेव श्रुतिभिः प्रतिपादितमात्माश्रयरूपं तदेव विषयस्नेहस्य तैलस्थानीयस्याह-

ङ्कारस्य वर्त्तिस्थानीयस्य चाधारत्वात्पातीति व्युत्पत्त्या बोधदी-परक्षकत्वेन लोके प्रतीतत्वादाधारपात्रमिव तन्नापेक्षते स्वस्थित्य-र्थं नेच्छति बोधदीपस्यानारोपितत्वेन सत्यत्वादन्तःकरणस्य तु आरोपितत्वेन मिथ्यात्वाच्च बोधादीपान्तःकरणयोर्नाधाराधेयत्वं पारमार्थिकमिति नाधारपात्रापेक्षा स्वतःसिद्धस्वयंप्रकाशबो-धदीपस्येति भावः, ननु तर्हि आधारपात्रापेक्षाभावेनाधारपात्रा-नङ्गीकारे दीपापेक्षितं तैलं तज्जीवनभूतं क्व स्यात्पयमित्याशङ्क्य त-दपेक्षाप्येतस्य नास्तीत्याह न चेति, हे शिष्य अयं बोधदीपो लो-किकदीप इव तैलं तिलानां विकारस्तैलमित्युपलक्षणं घृतादिस्ने-हानां तैलघृतादिस्नेहद्रव्यं दीपजीवनकारणं किमपि स्वस्य नि-त्यत्वात्स्वयंप्रकाशत्वाच्च नापेक्षते स्वजीवनाय नेच्छति वस्तुतस्तु बोधदीपस्य स्वतःस्वयंप्रकाशनित्यपूर्णस्वरूपत्वात्स्नेहविषया-णामपि मिथ्यात्वेन तैलस्थानीयस्य तत्स्नेहस्यापि मिथ्यात्वे सति बोधदीपजीवनहेतुत्वाभावाच्च न बोधदीपस्य विषयस्नेहतैलापे-क्षेति भावः, ननु तर्हि बोधदीपस्य तैलापेक्षाभावे कथं वर्त्तिका-श्रयेण तिष्ठेदित्याशङ्क्य तदपेक्षापि लौकिकदीपस्येव तस्य ना-स्तीत्याह नेति, हे शिष्य अयं बोधदीपो लौकिकदीप इव वर्तिका कार्पासादिद्रव्यजन्यां सूत्रादिरूपां दशां नाश्रयते सत्यस्वयंप्रका-शरूपस्य प्रबोधदीपस्य विकृतत्वेन मिथ्यारूपवर्त्तिकायाश्चाश्रयाश्र-यित्वाभावान्नाश्रितो भवतीति स्पष्ट एवार्थः, वस्तुतस्तु लौकिकदीपे तैलाकर्षणं वर्त्तिकयैव दीपकृतमनुभूयते यथा तद्वत्तैलस्थानीयस्य विषयस्नेहसम्बन्धस्यात्मन्यप्रतीयमानत्वाच्च बोधदीपस्याहङ्कारव-र्त्याश्रयत्वं प्रतीतमपि अहङ्कारस्य कल्पितत्वेन मिथ्यात्वाद्बोध-दीपस्य च तत्कल्पनाधारत्वेनाकल्पितत्वेन च सत्यत्वाच्चोभयो-र्नाश्रयाश्रयित्वं पारमार्थिकमिति नापेक्षा बोधदीपस्य वर्त्तिका-

भयण इति भावः, इदानीं कज्जलाभाववत्त्वेन लोकदीपतोस्य बोधस्य वैलक्षण्यं दर्शयति न धत्त इति, हे शिष्य अयं बोधदीपो मनागीषदपि कज्जलं कार्ण्यं लौकिकदीप इव न धत्ते न धारयति कार्ष्ण्यजनकवर्तितैलादिद्रव्याभावादेवास्य कज्जलाधारकत्वमिति स्पष्टार्थ एव, वस्तुतस्तु कज्जलं कुत्सितजलं डलयोरभेदाज्जडमविद्यातत्कार्यरूपं मनागीषदपि तत्त्वतो न धत्ते न बिभर्तीति व्याख्येयम् ॥ १ ॥

अन्यच्च वैलक्षण्यमाह

न तापकर्त्ता कस्यापि वायुना न च कम्पते।
न विनाशमवाप्नोति तमः सर्वं निहन्ति च ॥ २ ॥

न तापकर्तेति। कस्यापि पुरुषस्य तापकर्त्ता तापस्य कर्त्ता लौकिकदीप इव कारको न भवति स्वतः सुखरूपत्वेन तापत्रयरहितत्वादन्येषामपि तापत्रयनिवर्त्तकत्वाच्चेति भावः, किञ्च वायुना पवनेन न च नैव कम्पते चलति लौकिकदीप इवात्र दीपे वायोरसत्त्वादस्य स्थिरत्वाच्च न चञ्चलत्वमिति भावः, किञ्चायं दीपो विनाशं लयं लौकिकदीप इव नावाप्नोति न प्राप्नोति नित्यस्वरूपत्वादस्येति भावः, नाशसाक्षिणो नाशाङ्गीकारे असाक्षिकस्य नाशस्याप्यसिद्धेरिति च भावः, किञ्च लौकिकदीपस्तु किञ्चिद्गृहैकदेशवर्ति तमो निहन्ति नाशयति न तु सर्वम्, अयं दीपस्तु सर्वं गृहान्तवर्ति बाह्यं च। वास्तवार्थेऽन्तःप्रत्यक्चैतन्यावरकं तमोऽज्ञानं बाह्यं च तत्त्वंपदार्थयोरैक्याज्ञानरूपं घटादिपदार्थाज्ञानरूपं च निहन्ति नाशयति ॥ २ ॥

वैलक्षण्यान्तरमाह।

एकरूपाः प्रकाशन्ते सर्वे भावा यदर्चिषा।

यदग्रे न प्रकाशेत च्छाया माया स्वरूपिणी ॥ ३ ॥

एकरूपा इति । यदर्चिषा यस्य दीपस्यार्चिषा ज्वालया प्रकाशेनेत्यर्थः, सर्वे समस्ता भावाः पदार्था एकरूपा एकमेकमेव रूपं येषां ते तथोक्ताः सन्तः प्रकाशन्ते दीप्यन्ते लौकिकदीपप्रकाशेन तु अनेकरूपा घटपटादयः प्रकाशन्त इति लौकिकदीपादतिवैलक्षण्यमस्येति भावः, अन्यदपि वैलक्षण्यान्तरमाह यदग्र इति, लौकिकदीपस्य पुरतोधः स्थिता च्छाया दृश्यते तद्वद् यदग्रे यस्य बोधदीपस्याग्रे पुरो देशे माया स्वरूपिणी माया सदसद्भ्यामनिर्वचनीया जगज्जननसामर्थ्यरूपा शक्तिरेवाऽऽत्मनः पृथगसत्त्वेन जगज्जननानुपपत्त्याख्ययुक्त्यानुमेया माया सैव स्वमसाधारणं रूपं विद्यतेऽस्याः सा तथोक्ता च्छाया प्रतिभा न प्रकाशेत नैव प्रतीयेताऽतो लौकिकदीपादस्येदमपि वैलक्षण्यान्तरं ज्ञेयम् ॥ ३ ॥

अन्यदपि वैलक्षण्यं दर्शयति ।

यश्चक्षुषामविषयो रूपाकारविवर्जितः ।
मनसोप्यप्रकाश्यश्च रूपाकारप्रकाशकः ॥ ४ ॥

य इति । यो बोधदीपो लौकिकदीप इव चक्षुषां लोकचक्षुरिन्द्रियाणामविषयो विषयो गोचरो न भवति कुत इत्यत आह रूपेति, रूपाकारविवर्जितो रूपं स्वरूपमाकारश्चाकृतिस्ताभ्यां विवर्जितो हीनोऽतश्चक्षुर्विषयो न भवतीति भावः, ननु चक्षुषोऽविषयत्वेपि स्वर्गादिवत्परोक्षत्वेन मनोविषयत्वमस्यास्त्वित्याशङ्क्याह मनस इति, आकाररहितत्वादेव मनसोप्यन्तःकरणस्यापि अप्रकाश्यः प्रकाशाविषयो भवति स दीपः, ननु रूपाकाररहितत्वेनास्य चक्षुर्मनसोर्विषयत्वाभावे कथं स-

द्भावोवगन्तव्य इत्याशङ्क्याह रूपेति, अयं प्रकृतो दीपो रूपाकारप्रकाशको रूपाणि नीलपीतादिभेदभिन्नानि आकाराश्चाकृतयस्तेषां प्रकाशकः प्रकशयिताऽस्ति सर्वरूपाकारज्ञानान्यथानुपपत्याऽस्य दीपस्य सत्त्वमभ्युपगन्तव्यमिति भावः ॥ ४ ॥

वैलक्षण्यान्तरनिरूपणपूर्वकमस्य दीपस्य स्थानं दर्शयति ।

कदाचित्क्वचिदेवासौ तात केनापि हेतुना ।
प्रवर्तते बोधदीपः सतां हृदयमन्दिरे ॥ ५ ॥

इति श्रीनहरिकृतौ बोधसारे बोधदीपपञ्चकं चतुर्विंशं ॥ २४ ॥

कदाचिदिति । कदाचित्कस्मिन्नपि समये लौकिकदीपवद्भूतवर्तमानभविष्यत्कालः परिच्छेदकोस्य दीपस्य प्रवृत्तेर्नास्ति कालस्यास्माद्दीपात्पृथक्सत्त्वाभावादिति भावः, क्वचिदेव कस्मिंश्चिदाधारेऽस्य दीपस्य सर्वाधारत्वादाधारनिरपेक्षत्वादाधारस्य च कल्पितत्वेनानिर्वचनीयत्वेन क्वचिदित्युक्तं, हे तात हे शिष्य केनापि हेतुना केनापि कारणेनास्य दीपस्य सर्वहेतुत्वात्स्वतो निर्हेतुकत्वाच्च स्वतः परिपूर्णत्वेन प्रयोजनाभावादपि न कारणं निश्चेतुं शक्यमतः केनापीत्युक्तं कारणनियमाभावोस्येति भावः, असावुक्तलक्षणो बोधदीपो ज्ञानस्वरूपः सर्वजगत्प्रकाशकत्वाद्दीप इव दीपः सतामात्मज्ञानवतां जीवन्मुक्तानामित्यर्थः, हृदयमन्दिरे हृद् 'नेह नानास्ति किञ्च ने'त्यादिश्रुतिभिः सर्वद्वैतबाधो द्वैतापवाद इत्यर्थः, तमयते प्रकाशयतीति हृदयं सर्वद्वैतबाधपूर्विकाहंब्रह्मास्मीत्याकारा प्रमा रूपा वृत्तिस्तदेव मन्दिरं गृहं तस्मिन् प्रवर्तते तिष्ठति एतदपि न पारमार्थिकमुपलब्धिस्थानत्वेनोक्तं ज्ञेयम् ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ बोधदीपपञ्चकार्थप्रकाशश्चतुर्विंशः ॥ २४ ॥

अथोपदेशषोडशी ।

एवं दीपरूपेणात्मस्वरूपं निरूप्येदानीं शिष्याय तदेवोपदेष्टुमुपदेशषोडश्याख्यं षोडशश्लोकं प्रकरणमभिदधान आह ।

## अथोपदेशषोडशी ।

अथेति । अथ बोधदीपपञ्चकनिरूपणानन्तरमुपदेशषोडश्युपदेशस्यादेशस्य प्रतिपादिका षोडशी षोडशश्लोकानां समाहाररूपैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इतिशेषः, तत्र तावदादौ स्वरूपस्थिरतायां दुःसंपाद्यत्वबुद्ध्या शिष्यचित्ते तदनादरं लक्ष्यीकृत्य तत्रादरं विधातुं तस्याः सुसंपाद्यत्वं संभावयति ।

युक्त्यैव वृत्तिभिः पूर्णं रिक्तीकुरु मनो घटम् ।
न कश्चिद्भविता तात ब्रह्मणा पूरणे श्रमः ॥ १ ॥

युक्त्येवेति । हे तात हे शिष्य वृत्तिभिर्जगद्विषयचिन्तनरूपाभिर्वृत्तिभिः पूर्णं भरितं मनोघटं मनोऽन्तःकरणमेव घटः कुंभस्तं युक्त्यैवान्वयव्यतिरेकाख्ययुक्तिभिरेव घटे घटाकारवृत्तौ च वृत्तितद्विषयमभ्यत्कासम्यक्तरूपस्फुरणेन मनसोऽन्वयः, तत्रैव मनसि पटतद्वृत्त्योर्व्यतिरेकः, एवं पटे तदाकारवृत्तौ च तत्सम्यक्तासम्यक्तस्फुरणरूपेण मनसोऽन्वयः, तत्रैव मनसि घटविषयकवृत्तेर्व्यतिरेकः, एवमन्वयव्यतिरेकाख्ययुक्त्यैव रिक्तीकुरु व्यवहारकालेऽरिक्तमपि बुद्ध्यारिक्तत्वं तस्यानुभव ततस्तस्मिन् मनोघटे ब्रह्मणाऽपरिच्छिन्नेनात्मवस्तुनाऽऽकाशस्थानीयेन घट इव पूरणे पूरणक्रियायां तत्र घट आकाश इव सर्वदा स्थितत्वात्कश्चित्कोपि स्वल्पोपीत्यर्थः, श्रमः खेदो न भविता नैव भविष्यति अतो ब्रह्मणि चित्तस्थैर्यं सुकरमेवेति भावः॥१॥

ननु चिन्तारूपवृत्तिभिः पूर्णं मनः कथं रिक्तं कार्यं तत्राह ।

त्यज चिन्तां महाबुद्धे भज निश्चिन्ततासुखम् ।
त्वयार्जितामिमां चिन्तां वद कोन्यः परित्यजेत् ॥२॥

त्यजेति । हे महाबुद्धे महत्यपरिच्छिन्ना ब्रह्माकारा बुद्धिर्मतिर्यस्य स तथोक्तस्तस्य सम्बोधने हे महाबुद्धे त्वं चिन्तां जगद्विषयकां चिन्तनरूपां वृत्तिं त्यज जहि, ननु जगद्विषयकचिन्तावृत्तित्यागे मनसो जीवनोपायः क इत्याशङ्क्याह भजेति, हे शिष्य त्वं निश्चिन्ततासुखं निर्गता निवृत्ता चिन्ता चिन्तनरूपा वृत्तिर्यस्मात्तत्तादृशं त्रिपुटीरहितं ब्रह्मसुखं तस्य भावस्तत्ता तज्जन्यं यत्सुखं विद्यानन्दापरपर्यायं भजाऽङ्गीकुरु अयमेव मनसो जीवनोपाय इति भावः, ननु चिन्तात्यागोतिदुष्करः स एव मम कथं स्यात्तत्राह त्वयेति, हे शिष्य त्वया भवताऽर्जितां सम्पादितामिमां प्रसिद्धां चिन्तां जगद्विषयचिन्तनरूपां वृत्तिमतस्तामन्यस्त्वत्तोन्यो भिन्नः कः पुरुषः परित्यजेज्जह्यात्तद्वद ब्रूहि न कोपीत्यर्थः, लोकेपि अन्यसम्पादितगृहादेरन्यत्याज्यत्वादर्शनादिति भावः ॥ २ ॥

ननु तर्हि चिन्तात्याग उपायो वक्तव्य इत्याशङ्क्य तमेव दर्शयति ।

चिन्तनीयं त्वया वस्तु चिन्तारोगस्य भेषजम् ।
अथ वा तात चिन्ताख्यं रोगमेव परित्यज ॥ ३ ॥

चिन्तनीयमिति । हे शिष्य त्वया भवता चिन्तारोगस्य चिन्ता जगद्विषयचिन्तारूपा वृत्तिरेव रोगो रुज्यते पीड्यतेऽनेनेति रोगः पीडाहेतुर्व्याधिर्दुःखप्रदत्वात्तस्य निवर्त्तकत्वाद्भेषजमौषधमिव वस्तु कालत्रयाबाध्यत्वात्पारमार्थिकसद्रूपं ब्रह्म चिन्तनीयं स्मरणीयं तेन चिन्तारोगनिवृत्तेः स ए-

वोपाय इति भावः, तदशक्तावुपायान्तरमाहाथवेति, हे तात हे शिष्य अथवा तदसम्भवे सतीत्यर्थः, त्वं चिन्ताख्यं चिन्तेत्याख्याहा यस्य स तथोक्तस्तं रोगमेव व्याधिमेव केवलं परित्यज सर्वदाऽसत्त्वबुद्ध्या पश्य ततोपि स निवृत्तः स्यादिति भावः ॥ ३ ॥

ननु चिन्तारोगनिवर्त्तकमात्मवस्तुचिन्तनं कर्त्तुमशक्यं चिन्तारोगत्यागेपि द्वितीय उपायोऽस्वाधीनत्वादुष्कर एवेत्याशङ्कमानं प्रत्याह ।

वर्धिता वर्धते चिन्ता त्यक्ता नश्यति सत्वरम् ।
ईदृशेनापि रोगेण दुर्धियो मरणं गताः ॥ ४ ॥

वर्धितेति । चिन्ता जगद्विषयकस्मृतिरूपा वृत्तिर्वर्धिता वृद्धिं प्रापिता सती वर्धत एधते सा त्यक्ता हाता सती सत्वरं शीघ्रं नश्यति नष्टा भवति चिन्ताया वृद्धिक्षयोत्पत्त्यादिभावा न चिन्ताधीनाश्चेत्यत्वेन जडत्वात्तस्याः किं तु चेतनाधीना एव त इति भावः, इदं चागोपालं प्रसिद्धमेव तथा सतीदृशेनापि स्वाधीनेनापि रोगेण चिन्ताख्यव्याधिना मरणमसदाकाररूपं देहात्मत्वमेव मरणं नाशं प्राप्ता ये ते दुर्धियो विषयविदूषितमतयो ज्ञेयाः, यथा लोके प्रज्वलितगृहे स्वनिर्गमाय मार्गे सत्यपि धनपुत्रवस्त्रादिलोभदूषितमतयस्तत्रैव मरणं प्राप्नुवन्ति तद्वदिति भावः ॥ ४ ॥

एवं चिन्तात्यागे स्वाधीनतां प्रदर्शयित्वाऽनीं विषयलोभग्रस्तबुद्धेस्तत्राप्यशक्तिमालक्ष्य तच्चिन्तायां दोषं दर्शयति ।

कर्कशा कलहा कृत्या वन्ध्या नित्यममङ्गला ।
त्यज्यतां कामना चण्डी भुज्यतां मुक्तिसुन्दरी ॥ ५ ॥

कर्कशेति । कर्कशाऽकोमलस्पर्शा तत्स्पर्शेनान्तःकरणे दुःखानुभवात्, कलहा कलिरूपा कलहमूलत्वात, कृत्या मारका स्वस्पृष्टपुरुषस्य मृतिहेतुत्वाद्, वन्ध्या निष्फला सुखस्वरूपपुत्राजनकत्वाव, नित्यं सर्वदाऽमङ्गला न विद्यते मङ्गलं शुभं यस्याः सा- तथोक्ताऽभद्रहेतुत्वाद्, एतादृशी कामनेच्छारूपा चण्डी क्रोधवती स्त्री त्यज्यतां विसृज्यतां ततः किंकर्त्तव्यमित्यत आह मुक्तीति, मुक्तिसुन्दरी मुक्तिर्मोक्षरूपा सुन्दरी सुखरूपत्वात्कमनीयरूपा स्त्री भुज्यतां भोक्तव्या मुक्तिसुन्दरीति विशेषणेन पूर्वाण्येव विशेषणानि विपरीततयास्यामपि योज्यानि; तद्यथा, अकर्कशा सुखस्पर्शाऽकलहा कलहनिवर्तकाऽकृत्या मृतिहेतुभूता न भवति अवन्ध्या सुखपुत्रजनयित्री नित्यं मङ्गला शोभनाऽकामना कामनानिवर्त्तकेति ॥ ५ ॥

मुक्तिसुन्दरीभोगो येन साधनेन साध्यते तत्पाण्डित्यं साधयितुं तत्र रुच्युत्पादनाय तत्र सुखाधिक्यं सम्भावयति ।

जनैः पण्डित इत्युक्तः प्राप्नोषि परमं सुखम् ।
मनसा कर्मणा वाचा भव पण्डित एव तत् ॥ ६ ॥

जनैरिति । हे शिष्य त्वं जनैर्लोकैः स्वतोऽपण्डितोपि मूढैः पण्डित इत्युक्तः पण्डितो विद्वानित्येवमुक्तः कथितः सन्परममुत्कृष्टं सुखं शर्म प्राप्नोषि प्राप्तो भवसि किं तत इत्याह मनसेति, पण्डितनाममात्रेण सुखोत्पत्तेरनुभूयमानत्वात्ततः कारणान्मनसाऽहं पण्डितो भवामीति संकल्परूपेणान्तःकरणेन कर्मणा समदर्शनरूपक्रियया वाचा समदृष्टिप्रतिपादकवचनेनापि एभिः कृत्वा पण्डित एव विद्वानेव भव भूयाः, पण्डितनाममात्रेण मूढजनैः कल्पितेनापि स्वस्मिंस्तदभावेपि तत्त्वनिश्चयेन भ्रान्तज्ञानेन सुखप्रतीतौ पारमार्थिकपाण्डित्यसंपादने

स्वस्मिन्परमार्थसुखाविर्भावः स्यादित्यत्र कः सन्देह इति भावः ॥६॥

इदानीं विधिमुखेन प्रत्यक्षमेव बोधयति।

नित्यमेव स्फुरद्रूपो ननु त्वं चित्स्वरूपतः।
स्फूर्त्तिमूर्त्तेस्तवैवेयं का चित्स्फूर्त्तिरिदं जगत् ॥७॥

नित्यमिति। हे शिष्य त्वं साधनसम्पन्नो बोधाधिकारी नित्यमेव सर्वदैव स्फुरद्रूपः स्फुरत्स्वयं प्रकाशमानं रूपमाकृतिर्यस्य स तथोक्तोऽसि, ननु ममस्वरूपं स्वयं प्रकाशमानमिति कुतः सम्भाव्यमित्यत आह चिदिति, चित्स्वरूपतश्चिन्मात्रस्वरूपत्वाद्, एवं स्वस्फूर्तिरूपत्वे हेतुमुक्त्वा तत्र स्फूर्तिरूपत्वसम्भावनायैव जगत्स्फूर्त्यन्यथानुपपत्त्या स्फूर्त्तिरूपत्वमेव दृढयति स्फूर्त्तिमूर्त्तेरिति, स्फूर्तिमूर्तिः स्फूर्तिः प्रकाश एव मूर्तिराकृतिर्यस्य तस्य तव भवत इदं दृश्यं जगद्विश्वमियं प्रत्यक्षा काचिदनिर्वचनीया स्फूर्तिरेव प्रकाश एव त्वत्स्वरूपस्फूर्त्यभावे जगत्स्फुरणमेव न स्याद्, 'यदेष आकाश आनन्दो न स्यात्कोह्येवान्यात्कः प्राण्यादी'त्यादिश्रुतेः, आसमन्तात्काशते प्रकाशत इत्याकाशः स्वयंप्रकाशमान इति व्युत्पत्त्या स्वयं प्रकाशत्वप्रतिपादनादिति भावः ॥ ७ ॥

ननु मम स्फूर्त्तिरूपत्वे मुक्त एवाहं किं मम ज्ञानेनेत्याशङ्क्य ज्ञानं विना भ्रमनिवृत्तेर्नेत्याशयेनाह।

भास्वतो मम भामात्रमिति ज्ञाते भ्रमे गते।
क्व द्वितीयं क्व संसारः क्व माया तत्कृतं किमु ॥८॥

भास्वत इति। भास्वतः प्रकाशस्वरूपस्य मम मे भामात्रं-प्रकाशमात्रं स्वरूपमस्तीत्येव ज्ञाते बुद्धे सति तेन च ज्ञानेन-भ्रमे चिज्जडरूपे जगतिः स्वात्मतादात्म्यप्रतीतिरूपे भ्रमे भ्रान्तौ गते निवृत्ते सति ततो द्वितीयमज्ञानं जगत्कारणं क्व कुत्रा-

ऽऽत्मनि स्वयंप्रकाशे नैव सम्भवतीत्यर्थः, स्वस्मिन्नपि असद्रूपत्वान्न सम्भवति निराधारत्वादसत्त्वाच्च तन्नास्त्येवेति भावः, तदभावे च किं स्यादित्यत आह क्वेति, संसारः संसरणं तत्कारणस्यैवाज्ञानस्याभावात्कारणं विना प्रतीयमानस्यापि संसारस्य वन्ध्यापुत्रादेरिवासत्त्वात्स नात्मनि प्रकाशरूपे सम्भाव्य इति भावः, नापि स्वस्मिन्नपि सम्भवति अतो निराधारत्वादसत्त्वाच्च न क्वापीत्यर्थः, अतस्तत्कारणरूपा मायापि नैव क्वापि सम्भवतीत्याह क्वेति, माया सदसद्भ्यामनिर्वचनीया जगज्जननशक्त्यपरपर्याया कार्यासत्त्वेन तत्कारणभूतशक्तेरप्यसत्वात् क्व कुत्र न कुत्रापीत्यर्थः, न कारणस्य कार्याधारत्वमनुत्पन्नत्वेन पृथगसत्त्वेन च कार्यस्य, नात्माधारत्वमपि तस्याः सदसतोराधाराधेयत्वायोगाद्यतः सा क्वापि न सम्भवतीति भावः, अत एव तत्कृतबन्धनस्याप्यभाव एवेत्याशयेनाह तत्कृतमिति, तत्कृतं तस्या मायायाः कृतं कार्यमावरणविक्षेपादिकं बन्धनं किमु किम्भवति न किममीत्यर्थः। 'तुच्छमिदं रूपमस्ये'ति श्रुत्या तुच्छत्वप्रतिपादनात्तुच्छमेव तन्नातिशयमात्मनि जनयितुं क्षममिति भावः॥ ८॥

ननु स्वप्रकाशात्मनो जाड्यसहानुभूयमानत्वात्कथं चिन्मात्रज्ञानेनात्मनि प्रतीयमानजाड्यनिरास इत्याशङ्क्य सर्वत्र जडचैतन्ययोरुभयोरपि प्रतीयमानत्वात्तत्र चिन्मात्रात्मरूपविचिन्तनेन तदितरजडानादरे कृते जाड्यनिरासः स्यादित्याशयेनाह।

ज्ञत्वं कर्तृत्वभोक्तृत्वे जडचैतन्यदृष्टयः।
स्फुरणानि स्वकीयानि मणिर्भूत्वा विलोकय॥९॥

ज्ञत्वेति। ज्ञत्वं कर्तृत्वभोक्तृत्वे जडचैतन्यदृष्टयो ज्ञत्वं ज्ञानित्वं ज्ञानेन्द्रियवृत्तिमत्त्वमित्यर्थः, कर्तृत्वं कर्मेन्द्रियवृत्तिमत्वं, भोक्तृत्वं भोगक्रियाफलवत्त्वम्, एता अन्याश्च जडचैतन्यदृष्टयो जडं

जाड्यमुपाधिश्चैतन्यं च चिदाभासरूपं तदुभयमिलिता दृष्टयो दृश्यन्तेऽनुभूयन्ते स्वस्वविषया आभिस्ता दृष्टयो वृत्तय इत्यर्थः, सन्ति तासु वृत्तिषु स्वकीयानि स्वस्य चिद्रूपस्यात्मनो धर्मभूतानि स्फुरणानि ज्ञानानि, एवं केवलं तान्येव त्वं मणिर्यथा माणिक्यादिः स्वयंप्रकाशोन्यदीपादिप्रकाशापेक्षारहित एव स इव भूत्वा चेत्यरहितश्चिन्मात्रो भूत्वाऽवलोकय पश्य जडं व्यावर्त्य सर्वत्र चिन्मात्ररूपं स्वात्मधर्ममेवानुभवन्स्थितश्चेत्स्वचिन्मात्रत्वानुभवो जाड्यनिरासश्च भवेदिति भावः ॥९॥

उक्तात्मचिन्मात्रे स्वात्मस्थैर्यायोपायं दर्शयति द्वाभ्याम् ।

परस्परमविज्ञाता जाग्रत्स्वप्नसुप्तयः ।
त्वया तिस्रः स्त्रियो भुक्तास्तुरीयां सुन्दरीं भज॥ १०॥

परस्परमिति । त्वया भवता परस्परमन्योन्यत्राविज्ञाता नावलोकिता जाग्रत्स्वप्नसुषुप्तय उक्तलक्षणा जाग्रदवस्था स्वप्नोप्युक्तलक्षण उक्तलक्षणा सुषुप्तिश्चैतास्तिस्रस्त्रिसङ्ख्याकाः स्त्रियो वनिता इव भुक्ता अनुभूता अत इदानीं तुरीयां तुर्याख्यां सुन्दरीं कमनीयरूपां केवलसुखरूपत्वात्तामेवान्या अनादृत्य भजानुभव ॥ १० ॥

ननु जाग्रत्स्वप्नसुप्त्याख्यास्तिस्रः स्त्रियोनुभवगोचराः सर्वदैव भवन्ति अतस्तत्रैव वृत्तिप्रवाह स्वाभाविकः, तुर्यायां तु स न स्वाभाविकस्तस्या अनुभवागोचरत्वादतस्तं स्वाभाविकमनुभवं परित्यज्य ताश्च परित्यज्य स्वाभाविकेन वृत्तिप्रवाहेन कथं साऽनुभाव्या स्यादित्याशङ्क्य गृहस्थानां परस्त्रीभोगसुखे सुलभेपि नरकप्राप्तिहेतुत्वज्ञानेन तत्परित्यज्य स्वस्त्रीभोगजन्यसुखस्यौचित्यं विहितत्वं पारलौकिकसुखहेतुत्वमिव जाग्रत्स्वप्नसुप्त्याख्यस्त्रीषु परस्त्रीत्वाद्दुःखहेतुत्वाच्च संसारनरकप्राप्तिकारण-

त्वाच्च तद्भोगसुखमनादृत्य तुरीयस्वस्त्रीभोगसुख एवादरो वृत्तिरोधेन विहितत्वान्मुक्तिसुखहेतुत्वाच्च विधेय इत्याशयेनाह ।

जाग्रत्स्वप्नसुषुप्तानि पुनस्तानि त्वमीक्षसे

तुरीयं तव धामैव न तत्किमिति पश्यसि ॥ ११ ॥

जाग्रदिति । हे शिष्य त्वं भवाञ्जाग्रत्स्वप्नसुषुप्तानीन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणा जाग्रदवस्था, स्वप्नो जाग्रत्संस्कारवासनावासितबुद्धौ प्रातिभासिकविषयप्रतीतिरित्युक्तलक्षणा स्वप्नावस्था, सुषुप्तं विषयेन्द्रियैः सहान्तःकरणस्य तत्कारणाज्ञानमात्राकारेणावस्थानं सुषुप्तिरित्युक्तलक्षणा सुषुप्त्यवस्था, एतानि परगृहिणीतुल्यानि प्रकृतिकार्यत्वप्राधान्यात् पुनर्वारं वारमीक्षसे पश्यसि परस्त्रीतुल्यानां तेषां भोगः परस्त्रीभोग इव निन्द्यत्वात्त्याज्य एवातस्तत्रासक्तिः किमर्थं तवेति भावः, किञ्च तुरीयं तुरीयावस्थानं तवैव स्वयंप्रकाशसुखस्य प्राधान्याद्धाम निवासस्थानमस्ति तत्तुरीयं किमिति किमर्थं न पश्यसि नानुभवसि तुर्यसुखभोगस्तु स्वस्त्रीभोग इव विहितत्वेनानिन्द्यत्वात्सुखरूपत्वाच्च स एवावश्यं कर्तव्य इति भावः ॥ ११ ॥

ननु सुखसाधनत्वेन प्रतीते द्वैतजात आसक्तिर्योग्यैवेत्याशङ्क्य तत्रत्यसुखस्याभासमात्रत्वात्तुर्यस्थसुखस्य च पारमार्थिकत्वाच्च तत्र स्थैर्ये यत्सुखं तदेव सुखं नान्यत्रेत्याशयेनाह ।

मा धाव सुखहेतोस्त्वं धावतां न सुखं सखे ।

सुखरूपे निजे रूपे सुखं तिष्ठ सुखी भव ॥१२॥

मा धावेति । हे शिष्य हे मित्र अनेन सम्बोधेन स्ववचने विश्वासः कर्तव्य इति सूचितं, त्वं भवान्सुखहेतोः सुखं शर्म

तदेव हेतुः प्रयोजनं तस्मात्तन्निमित्तमित्यर्थः, मा धाव शीघ्रमागच्छ कुत इत्यत आह धावतामिति, हे मित्र धावतां सर्वत्र शीघ्रं भ्रमतां न सुखं न शर्मेति स्पष्टमेवागोपालम्, अतस्तदर्थं न भ्रमितव्यमिति भावः, तर्हि किं कर्त्तव्यं येन सुखं स्यात्तत्राह सुखरूप इति, सुखरूपे सुखं शर्मैव रूपमाकृतिर्यस्य तत्तथोक्तं तस्मिन् निजे स्वीये रूप आकारे सुखं यथा स्यात्तथा तिष्ठ वस ततश्च त्वं सुखयाऽऽनन्दी भवाऽऽस्वेति कृपयाऽऽशीर्वादो दत्तो गुरुणेति ज्ञेयम् ॥ १२ ॥

एवं शिष्यं स्वरूपे स्थिरतां कर्तुं प्रबोध्येदानीं तत्रैव स्थिरं कर्तुं शिष्यमज्ञानामभिसारिकां नायिकां प्रकल्प्य स्वात्मानंदूतीरूपं च प्रकल्प्य शृङ्गारश्लोकैः प्रबोधयितुमाह ।

अत्र श्लोकाः ।

अत्रेति । अस्मिन्नेवार्थे स्वात्मनि स्थैर्यसंपादनबोधन इत्यर्थः, श्लोकाः शृङ्गाररसाभासाः श्लोकाः पद्यानि सन्तीति शेषः, तान्यत उच्यन्त इति योज्यं, तत्रादौ वरयोग्यवयसि स्त्रीणां वरं विना स्थितिर्न भवति तद्वदधिकारिदेहप्राप्तौ ज्ञानेप्सूनामपि आत्मस्वरूपप्राप्तिं विना स्थानमनुचितमेवेत्याहार्धेन ।

वरयोग्यासि कल्याणि न स्थास्यसि वरं विना ।
वरणीयो वरस्तादृग्यो भवेदजरामरः ॥ १३ ॥

वरयोग्येति । लौकिकार्थस्तावद् हे कल्याणि हे शोभने अनेन सम्बोधनेन मातृपितृकुलस्य वक्ष्यमाणोपदिष्टाचरणेन शोभनकारित्वे योग्यत्वं दूत्या नायिकायामस्तीति नायिकायाः सूचितं, त्वमिदानीं वरयोग्या वरः पतिस्तस्मिन्योग्या पुरुषेण सह भोगसुखे योग्यवयस्का तरुणीत्यर्थः, असि विद्यसेऽतः

पितृगृहे पूर्ववदितः परं वरं विना स्वं वृणुतेऽङ्गीकरोत्यसौ वरो भर्त्ता तं विना—ऋते पतिरहितेत्यर्थः, न स्थास्यसि नैव स्थिता भविष्यसि अत इतस्ततः केन चित्पुरुषेण सह रमणे मातृपितृकुलदूषणं स्यादतो भवत्या तादृक्तादृशगुणवान्वरः पतिर्वरणीयो विवाहेनाङ्गीकर्त्तव्यः कीदृग्गुणवानित्यत आह य इति, यः पतिरजरामरो न जरा वार्धक्यं यस्य स चासौ न विद्यते मरो मरणं यस्य स तथोक्तो भवेत्स्याद्वृद्धपुरुषविवाहे स्वकामापूरणेन परपुरुषेण रमणात्तदेव पूर्वोक्तमुभयकुलदूषणं तन्मृतौ च तदेवेति पुरुषायुःपर्यन्तं वार्धक्यमरणरहितपतिवरणे पितृमातृकुलभूषणं स्वस्योभयकुलजानां च शोभनमपि स्यादिति भावः। प्रकृतार्थस्तु हे कल्याणि कल्याणं मङ्गलमस्या विद्यते सा तथोक्ता तस्याः सम्बोधने हे कल्याणि अनेन सम्बोधनेन त्वयि मङ्गलं भवितेति सूचितं, त्वं भवतीदानीं वरयोग्या वृणोति व्याप्नोति जगदिति वरं ब्रह्म त्वं तस्मिन्सर्वश्रेष्ठे योग्यार्हाऽसि भवसि अतः परं ब्रह्मभावं विना—ऋते न स्थास्यसि नैव स्थातुं शक्ष्यसेऽत उपास्यब्रह्मभावं परोक्षत्वकृतकत्वादिदोषदुष्टं मा वृणु तादृग्वरस्तादृशगुणवान्वरः श्रेष्ठो ब्रह्मभावो वरणीयः साक्षादहंब्रह्मास्मीतिगुरूपदेशपूर्वमहावाक्यार्थविचारद्वाराङ्गीकार्यः कीदृश इत्यत आह य इति, यो वरो ब्रह्मभावोऽजरामरो न विद्यते जरावार्धक्यविकारो यत्र स तथोक्तोऽमरश्च न विद्यते मरो मरणं यत्र स तथोक्तो जरामरणहीन इत्यर्थः, भवेत्स्यात्तादृश इत्यर्थः। ज्ञानेनैव ब्रह्मभावोऽङ्गीकार्यो न तूपासनेन तस्य कृतकत्वेन विनाशित्वादिति भावः। अत्रोक्तं विद्यारण्यस्वामिभिः।

'ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयत' इति ॥१३॥

ननु भवदुपदिष्टवरवरणे मम मनः प्रवृत्तमपि पुनः पुनस्ततो निवर्त्तते निश्चयेन तत्रैव न प्रवृत्तं भवति अतो मनसस्तत्रैव प्रवृत्तौ क उपायो विधेय इत्याशङ्क्य वैषयिकस्त्रीपुरुषभोगादिवार्ताश्रवणेनैव कामवृद्धेः प्रत्यक्षसिद्धत्वात्तस्याश्च पुरुषभोगे प्रवर्त्तकत्वात्तादृशवार्ताश्रवणमेवोपाय इत्याशयेनाह।

न शृणोषि वरं यावत्तावत्ते कम्पते मनः।
पश्चान्महोत्सवैर्भद्रे स्वामिनं त्वं वरिष्यसि ॥१४॥

नेति। हे भद्रे हे कल्याणि यावद्यत्कालपर्यन्तं त्वं भवती वरं पतिं पत्या सह सम्भोगवार्तामित्यर्थः, पतिसम्भोगसुखज्ञामुखात्र शृणोषि न श्रोत्रेणावधारयसि तावत्तत्कालपर्यन्तं ते तव मनश्चित्तं कम्पते चलति तत्र प्रवृत्तिनिवृत्तिरूपं चाञ्चल्यं भजत इत्यर्थः, पश्चात्तच्छ्रवणानन्तरं महोत्सवैर्महान्तो दीर्घाः फलपर्यन्तमनवच्छिन्ना इत्यर्थः, ये उत्सवाः संकल्परूपा उल्लासा इत्यर्थः, तैः कृत्वा स्वामिनं पतिं वरिष्यसे परिणेष्यसि अतस्तद्गुणतत्सम्भोगवार्ताश्रवणमेव पत्या सह भोगेच्छाजननेन तत्र प्रवर्त्तकत्वादुपायो नान्य इति भावो लोकप्रसिद्धेऽर्थे। प्रकृतेऽर्थे तु, ननु त्वदुपदिष्टवरब्रह्मभावाङ्गीकरणे प्रवृत्तमपि मे मनः पुनः पुनस्ततो निवर्त्तते तत्रैव दृढनिश्चयेन न प्रवर्ततेऽतस्तत्र दृढनिश्चयेन तत्प्रवृत्तौ क उपाय इत्याशङ्क्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिश्रुत्या जीवब्रह्मैक्यज्ञानसाधनभूतविचाराधिकारिणस्तत्प्राथमिकसाधनभूतत्वेन श्रवणविधानात्तज्ज्ञगुरुमुखात्तच्छ्रवणमेवोपायो नान्य इत्याशयेनाह नेति, हे भद्रे इति सम्बोधनेन वक्ष्यमाणोपायेनावश्यं कल्याणं तव भावीति सूचितं, त्वं यावद्यत्कालपर्यन्तं वरं श्रेष्ठं जीवब्रह्मैक्यं महावाक्यद्वारा गुरुमुखेन न शृणोषि ताव-

धारयसि श्रोत्रेण तावत्तत्कालपर्यन्तं ते तव मनोन्तःकरणं कम्पते चलति असम्भावनादिदोषैश्चलायमानं भवति पश्चाच्छ्रवणे कृते तत्परिपाकादनन्तरं महोत्सवैरतीव हर्षैः स्वागमनं स्वं ब्रह्माभिन्नं प्रत्यगात्मानमामनोति उपदिशति असौ स्वामी महावाक्यार्थो गुरुवाक्यार्थो वा तं वरिष्यसि अङ्गीकरिष्यसि अखण्डैकरसमात्मानं ब्रह्माभिन्नमङ्गीकरिष्यसीति भावः ॥ १४ ॥

ननु पतिसम्भोगादिवार्ताया अश्रवणे इदानीं तद्भोगेच्छावत्या मया किङ्कार्यं तत्राह ।

परेण पुरुषेणाद्य रमस्व वचनान्मम ।

सखि पश्चात्स्वतश्चित्तं कुरु यत्राधिकं सुखम् ॥ १५ ॥

परेणेति । हे सखि हे मित्र अनेन सम्बोधनेन स्ववचने विश्वासः कर्तव्य इति सूचितं, त्वमद्येदानीं तद्गुणश्रवणात्पूर्वं वर्तमानसमय इत्यर्थः, मम त्वत्कल्याणेच्छोर्मे वचनाद्वाक्येन विश्वासं कृत्वा परेण स्वमातृपितृकुलजेष्वतिपरिचयात्तदन्यकुलजत्वेन परिचयाभावादन्यतया मतेन पुरुषेण स्वपतिना सह रमस्व क्रीडस्व पश्चादनन्तरं यत्र पत्या सह रमणे वा भ्रात्रादिभिः सह रमणेऽधिकमुत्कृष्टं सुखं शर्म भवति तत्स्वतो ज्ञात्वा तव चित्तं मनः कुरु कर्तव्यं । प्रकृतेर्थे तु स्वात्मसाक्षात्कारहेतुभूतदृढश्रवणाभावे ततः पूर्वं मया ब्रह्मसुखप्राप्तीच्छावता तत्प्राप्तये किं कर्तव्यं तत्राह परेणेति, हे सखि हे मित्र अनेन सम्बोधनेन तव मद्वचने विश्वासः कर्तव्य इति सूचितम्, अद्येदानीं ब्रह्माभिन्नस्वसाक्षात्कारहेतुभूतश्रवणात्पूर्वं मम त्वद्गुरोर्मे वचनाद्वाक्यान्मद्वचने विश्वासं कृत्वेत्यर्थः, परेण कार्यकारणातीतेन पुरुषेण परिपूर्णस्वरूपेणात्मना सह रमस्व क्रीडस्व भूमशब्दवाच्यसुखरूपब्रह्मणा सहैकीभूय रमस्वेत्यर्थः, प-

श्चादनन्तरं यत्र ब्रह्माभेदे भेदे वाऽधिकमुत्कृष्टं सुखं शर्मा-ऽस्ति तज्ज्ञात्वाऽधिकं सुखं यत्र स्यात्तत्र स्वतः स्वयमेव चित्तमनुसन्धानरूपामन्तःकरणवृत्तिं कुरु स्थापय स्वात्मसाक्षात्कारात्पूर्वं गुरुवचने विश्वास एव विहित इति भावः ॥ १५ ॥

इदानीं मदुपदिष्टकार्यविलम्बेनायुषो व्यर्थमेव व्ययो भवेदतः शीघ्रमेव पतिभोगे प्रतिबन्धभूतलज्जात्यागेन पत्या सह भोगं कर्तुं त्वरयति ।

यातं दिनं न पुनरेति नवं वयस्ते
लज्जां विहाय भज तं रमणीयरूपम् ।
बाले परः पुरुष एष यदा समेतः
स्वर्गेण किं किमु तदा नृसुखेन वा ते ॥ १६ ॥

यातमिति। हे बाले स्वहिताज्ञानित्वादज्ञे हे नवयौवने यात-मतीतं दिनमह इत्युपलक्षणं क्षणलवादेः पुनर्भूयो नैति नायाति किञ्च ते तव नवं नूतनं वयस्तारुण्यावस्थाऽस्ति अतस्तत्र लज्जाधिक्यमस्मिन्वयसि योग्यपुरुषभोगप्रतिबन्धकमतस्तां लज्जां त्रपां विहाय परित्यज्य रमणीयरूपं रमणीयं सुन्दरं रूपं यस्य तं सुन्दराकृतिमित्यर्थः, भजाङ्गीकुरु। ननु पति भोगे कः सुखातिशयो येन तत्र प्रवृत्तिर्मया कर्तव्येत्यत आह बाल इति, परस्त्वन्मातृपितृकुलभिन्नकुलजत्वात्त्वत्परिचयाभावाच्चान्यत्वेन मतः पुरुषो नर एष पुरोवर्ती पर्यङ्के त्वदिच्छया स्थितो यदा यस्मिन्समये समेतस्त्वया सह मिलितो भवेत्तदा तस्मिन्समये ते तव नृसुखेन सार्वभौमसम्पत्तिसुखेन किं भवति न किमपीत्यर्थः, वा यद्वा स्वर्गेण स्वर्गसुखेनापि ते तव किमु किं भवति न किमपीत्यर्थः, ते उभे अपि पतिसम्भोगसुखादति तुच्छे इत्यर्थः,

अतस्तव पतिसम्भोगजसुखेनैव कृतार्थता स्यादिति भावः । प्रकृतार्थे तु इदानीं विलम्बनेन मुक्तिसुखानुभवं विना व्यर्थमायुर्व्ययो न कार्य इत्याशयेनाह यातमिति, दिनमित्युपलक्षणं निमेषादेर्दिनं निमेषादिः कालो यातं गतं पुनर्भूयो नैति नायाति किञ्च ते तव वयधातोर्गत्यर्थत्वाद्ये गत्यर्थास्ते ज्ञानार्था इत्युक्तेर्वयो ज्ञानं नवं नूतनं कोमलमित्यर्थः, जातिकुलधर्मैषणावत्त्वात्संशयैर्दूषितत्वाच्च ज्ञानस्य कोमलत्वमिति भावः, अतो लज्जां त्रपां लोकलज्जां विहाय परित्यज्य तं कार्यकारणातीतं रमणीयरूपं रन्तुं योग्यं रमणीयं सुखस्वरूपत्वाद्रूपमाकृतिर्यस्य तं तथोक्तं भज सोहमस्मीत्येवमभेदेनाङ्गीकुरु, ननु तादृशपरमात्मस्वरूपस्य सोहमित्यभेदेनाङ्गीकारे कः सुखातिशयो येन तत्रैव मया प्रवर्तितव्यं तत्राह बाल इति, हे बाले नवयौवने पूर्णविवेकाऽभावाद्बालत्वं ज्ञेयम्, एष मदनुभवेन प्रत्यक्षः परः कार्यकारणातीतः पुरुषः परिपूर्ण आत्मा यदा यस्मिन्काले समेतस्त्वया प्राप्तोऽभिन्नत्वेनाङ्गीकृत इत्यर्थः, तदा तस्मिन्समये ते तव नृसुखेन 'युवा स्यात्साधुयुवा अध्यापक'इत्यादिकया 'स एको मानुष आनन्द'इत्यन्तया श्रुत्या प्रतिपादितेन मानुषसुखेन किं किंप्रयोजनं न किमपीत्यर्थः, किञ्च स्वर्गेण गन्धर्वानन्दादिहैरण्यगर्भानन्दान्तेन सुखेन 'ते ये शतं मानुषा आनन्दा'इत्यादिकया 'स एको ब्रह्मण आनन्द'इत्यन्तया श्रुत्या प्रतिपादितेन शर्मणा वाऽपि किमु किं प्रयोजनं न किमपीत्यर्थः, सर्वसुखानामात्मसुखप्रतिबिम्बत्वादात्मसुखप्राप्तौ तेषां तुच्छत्वाच्च न तेष्वपेक्षोदयो ज्ञानिनामिति भावः॥ १६॥

इति श्रीन० बोध० उपदेशषोडश्यर्थप्रकाशः पञ्चविंशः ॥ २५ ॥

---

अथ ब्रह्मचर्याविंशतिः ।

एवमुपदेशषोडशीं निरूप्येदानीं शिष्यस्य ब्रह्मस्वरूपं बो-

धयितुं ब्रह्मचर्चाविंशत्याख्यं विंशतिश्लोकं प्रकरणमभिधास्यन्नाह।

अथ ब्रह्मचर्चाविंशतिः।

अथेति। अथोपदेशषोडशीनिरूपणानन्तरं ब्रह्मचर्चाविंशतिर्ब्रह्मण श्चर्चा कथनं यत्र विंशतौ सा तथोक्ता विंशतिर्विंशतिश्लोकात्मकं प्रकरणं निरूप्यत इति शेषः, तत्रादौ ब्रह्मचर्चायां रुच्युत्पादनाय ब्रह्मचर्चामाहात्म्यनिरूपणपुरःसरं तन्निरूपणं प्रतिजानीते।

अर्चालक्षाधिका प्रोक्ता चर्चैव परमात्मनः।
अतः शिष्यप्रबोधाय ब्रह्मचर्चा निरूप्यते॥ १॥

अर्चेति। परमात्मनः परः कार्यकारणातीतो य आत्मा तस्य चर्चैव संवाद एवाऽर्चालक्षाधिकाऽर्चानां पूजानां यल्लक्षं नियुतं ततोप्यधिकोत्कृष्टा लक्षशब्दोत्रानन्त्यपरोऽनन्तपूजनफलदात्रीत्यर्थः, प्रोक्ता कथिता 'क्षणमेकं क्रतुशतस्यापी'ति श्रुतेः, आत्मचिन्तनक्षणस्यानन्तयज्ञफलप्राप्तिकारणत्वप्रतिपादनात्तच्चिन्तनं विना तत्कथनासम्भवस्य 'यन्मनसा ध्यायति तद्वाचा वदती'ति श्रुत्या प्रतिपादनादिति भावः, यतः कारणादतो हेतोः शिष्यप्रबोधाय शिष्यस्य जिज्ञासोः प्रबोधाय ज्ञानाय ब्रह्मचर्चा ब्रह्मणो देशकालवस्तुकृतपरिच्छेदरहितस्यात्मवस्तुनश्चर्चा संवादो वचनविलास इत्यर्थः, यत्र प्रकरणे सा निरूप्यते॥ १॥

तत्रादौ ब्रह्मणः सर्वाधारत्वनिरूपणपूर्वकं तन्निराधारत्वं वास्तवं दर्शयति।

आधारः सर्वभूतानां तस्याधारो न कश्चन।
निराधारस्वरूपं चेन्नास्ति ब्रह्म तदा क्वचित्॥ २॥

आधार इति । सर्वभूतानां सर्वाणि समस्तानि यानि भूतानि वियदादीनि तत्कार्याणि च ब्रह्माण्डादिकीटकान्तानि प्राणिजातानि तेषामाधार आध्रियतेऽस्मिन्नित्याधारोऽधिष्ठानं ब्रह्मास्ति अधिकरणे घञ् तस्य सर्वाधारस्य ब्रह्मण आधारोऽधिष्ठानं सद्रूपब्रह्मणो भिन्नस्यासत्त्वाद्ब्रह्मणोप्यानन्त्येनाधेयत्वायोगाच्च कश्चन कोपि न न विद्यते, ननु ब्रह्मणो निराधारत्वे ब्रह्म क्वापि नेत्येवं प्रयोगः स्यात्ततश्च ब्रह्म क्वापि नास्तीत्यर्थत्वेन ब्रह्मणः शून्यत्वमायातमित्याशङ्कते निराधारेति, ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु निराधारस्वरूपं निर्गतो निवृत्त आधारोऽधिष्ठानं यस्य तत्तादृशं स्वरूपं यस्य तत्तादृशाकारमस्ति चेद्यदि स्यात्तदा तस्मिन्पक्षे ब्रह्म देशाद्यपरिच्छिन्नं वस्तु क्वचित्कुत्रापि नास्ति न विद्यते ब्रह्मण शून्यत्वं सिद्धमिति भावः ॥ २ ॥

न ब्रह्मणोऽसत्त्वं तत्कार्यस्य जगतो निरधिष्ठानत्वेनासत्त्वे सत्त्वभानानुपपत्तेरित्येवं समाधत्ते ।

अधिष्ठानं विना कार्यं न तिष्ठति कदाचन ।<br>
सर्वाधिष्ठानरूपं हि कथं ब्रह्म न कुत्र चित् ॥३॥

अधिष्ठानमिति । हे शिष्य ब्रह्मणः सर्वाधिष्ठानस्यासत्त्वाङ्गीकारेऽधिष्ठानमाधारं विना—ऋते कदाचन कस्मिन्नपि काले कार्यं लोकप्रसिद्धं घटादिरूपं कल्पितं रज्जुसर्पादिकमपि स्वाधारं मृदादिकं रज्ज्वादिकं च वर्जयित्वेत्यर्थः, न तिष्ठति नैव स्थितिं प्राप्नोतीति लोके प्रसिद्धमेव तर्हि तद्ब्रह्म सर्वाधारस्वरूपं सर्वस्य जगत आधारोऽधिष्ठानं स्वमसाधारणं रूपमाकारो यस्य तत्तथाभूतमस्ति तदसत्त्वे निरधिष्ठानस्य जगतोप्यसत्त्वेन

भानं स्यात्तु सत्सदिति प्रतीयतेऽतो ब्रह्म देशाद्यपरिच्छिन्नं वस्तु कुत्र चित्क्वापि न नास्ति न विद्यते कथं केन प्रकारेण न कथमपि किं त्वस्त्येवेत्यर्थः ॥ ३ ॥

ननु तर्हि जगदाधारत्वेन स्वतो निराधारत्वेन च जगतो वैलक्षण्यात्तद्ब्रह्म जगतः पृथगेवास्त्विति शङ्कते ।

सर्वस्मात्तत्पृथग्ब्रह्म त्विति वक्तुं न शक्यते ।
यदात्मकमिदं सर्वं सर्वस्मात्तत्पृथक्कथम् ॥ ४ ॥

सर्वस्मादिति । तद्ब्रह्म सर्वाधारं स्वतो निराधारं चेत्येतैर्लक्षणैर्लक्षितं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु सर्वस्मात्समस्तजगतः पृथग्भिन्नमस्तीति चेदिति तु एवमपि वक्तुं कथितुं न शक्यते नैव शक्यं जायते कुत इत्यत आह यदिति, इदमेतत्सर्वं समस्तं जगद्यदात्मकं यद्ब्रह्मैवात्मा स्वरूपं यस्य तत्तथोक्तमस्ति तद्ब्रह्म ततो जगतः पृथक्त्वेनाविद्यमानात्सर्वस्मात्सर्वशब्दवाच्यात्समस्तजगतः पृथग्भिन्नं कथं केन प्रकारेण स्यान्न कथमपीत्यर्थः, वस्तुगतभेदासिद्धेस्तत्प्रतियोगिवस्तुसत्त्वसापेक्षत्वाद्ब्रह्मगतभेदासिद्धिर्जगतः पृथगसत्त्वादिति भावः ॥४॥

ननु तर्हि सर्वाभिन्नत्वाद्ब्रह्म सर्वरूपमस्त्विति शङ्कते ।

सर्वस्मादपृथग्ब्रह्म वक्तुमित्यपि नार्हसि ।
सर्वस्मात्पृथगेवेदमनुभूतं महर्षिभिः ॥ ५ ॥

सर्वस्मादिति । सर्वस्मात्समस्ताज्जगतो ब्रह्म देशाद्यपरिच्छिन्नं वस्तु अपृथगभिन्नं सर्वरूपमेवेत्यर्थः, अस्त्विति चेद्यदि वदसि तर्ह्येवमपि वक्तुं कथितुं नार्हसि योग्यो न भवसि कुत इत्यत आह सर्वस्मादिति, इदं ब्रह्म महर्षिभिर्महान्तोऽतिश्रेष्ठाः य ऋषयः सनकादिनस्तैः सर्वस्मात्समस्ताज्जगतः स्वतोऽसत्त्वेन लक्षितात्पृ-

थगेव भिन्नमेव सत्त्वेनानुभूतं ज्ञातमतस्तत्स्वरूपं वक्तुं न शक्यमिति भावः ॥ ५ ॥

ननु तर्ह्यात्मरूपं तद्ब्रह्मास्त्विति शङ्कते ।

आत्मरूपमिदं वाच्यमिति तर्कस्त्वया कृतः ।
अनात्मरूपं किं न्वस्ति स्वात्मरूपं यतश्चिदम्॥६॥

आत्मरूपमिति । हे शिष्य इदं प्रस्तुतं ब्रह्मात्मरूपमात्मैव रूपमाकारो यस्य तत्तथोक्तं वाच्यं वक्तव्यमस्ति चेद्यदीत्येवं तर्कोऽनुमानं त्वया भवता कृतः साधितो यदि तर्हि तदा ऽनात्मरूपं न विद्यत आत्मा तात्त्विकं रूपमाकारो यस्य तत्तथोक्तं किं नु किं वस्तु निश्चितं वितर्कितं वाऽस्ति विद्यते हि प्रसिद्धं विवेकिनापि, इदं प्रकृतं ब्रह्म देशाद्यनवच्छिन्नं बृहदात्मरूपमात्मा व्यापकं रूपमाकृतिर्यस्य तत्तथोक्तं स्यात्तद्भवेदिति शेषः, ब्रह्मणो व्यतिरिक्तस्य सर्वस्यानात्मत्वेनासत्त्वात्तन्निषेधकात्मशब्दार्थयोरपि तथात्वान्नात्मशब्दवाच्यत्वं ब्रह्मणो वास्तवं मन्तव्यमिति भावः ॥ ६ ॥

ननु तर्हि वेदान्ते 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते, ज्ञात्वा देवं सर्वपाशापहानिः, तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिशतैर्ब्रह्मज्ञानस्यैव मोक्षहेतुत्वेन मुमुक्षूणां विहितत्वप्रतिपादनाद्ब्रह्मणो ज्ञानविषयत्वमस्त्विति शङ्कते ।

ज्ञानस्य ब्रह्म विषय इति वक्तुं न शक्यते ।
ज्ञानस्वरूपं तद्ब्रह्म ज्ञानस्य विषयः कथम् ॥ ७

ज्ञानस्येति । ब्रह्म देशाद्यपरिच्छिन्नमात्मवस्तु ज्ञानस्य ज्ञायते वेद्यतेऽनेनेति ज्ञानं साभासान्तःकरणवृत्तिरूपं तस्य विषयो

गोचरोऽस्तु एवं वदसि चेद्यदि तर्हीति एवमपि वक्तुं कथितुं न शक्यते न युज्यते कुत इत्यत आह ज्ञानस्वरूपमिति, तत्प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु ज्ञानस्वरूपं ज्ञानं चेतनं तदेव स्वमसाधारणं रूपमाकृतिर्यस्य तत्तथोक्तमस्ति अतस्तद्ब्रह्म ज्ञानस्य साभासान्तःकरणवृत्तिरूपचेतनस्य विषयो गोचरो ज्ञेयमित्यर्थः, कथं केन प्रकारेण भवति लोकेऽपि ज्ञानविषयो घटादिः स्वतो जडत्वेन प्रसिद्धो ब्रह्मणस्तु चिन्मात्रत्वेन स्वयंप्रकाशरूपत्वान्न ज्ञानविषयत्वमिति भावः ॥७॥

ननु तर्हि ब्रह्मणो ज्ञानस्वरूपत्वमेवास्त्विति शङ्कते ।

ज्ञानस्वरूपमेवास्तु ब्रह्मेति यदि मन्यसे ।
ज्ञेयमेव न यत्रास्ति ज्ञानत्वं तस्य कीदृशम् ॥८॥

ज्ञानेति । ब्रह्म प्रकृतं देशादिकृतपरिच्छेदशून्यं वस्तु ज्ञानस्वरूपं ज्ञानं चेतनं तदेव स्वमसाधारणं रूपमाकारो यस्य तत्तादृशमस्तु भवतु इत्येवं यदि यर्हि मन्यसेऽङ्गीकुरुषे तर्हि तदपि न सम्भवतीत्याह ज्ञेयमिति, यत्र ब्रह्मणि ज्ञेयमेव ज्ञानविषयो जगदेव नास्ति न विद्यते तस्य ब्रह्मणो ज्ञेयविषयाभावाज्ज्ञानत्वं ज्ञानरूपत्वं कीदृशं कथं स्यादिति शेषः, ज्ञेयसापेक्षं ज्ञानं लोके प्रसिद्धं तर्हि ज्ञेयाभावे ब्रह्मणो ज्ञानरूपत्वं नैव सम्भवतीति भावः ॥ ८ ॥

ननु तर्हि तद्ब्रह्म ज्ञात्रेवास्त्विति शङ्कते ।

ज्ञातृस्वरूपमेवास्तु ब्रह्मेति यदि कल्प्यते ।
स्वयंप्रकाशरूपे हि ज्ञानस्याश्रयता कथम् ॥ ९ ॥

ज्ञात्रिति । तत्प्रकृतं ब्रह्म देशकालवस्तुपरिच्छेदशून्यं वस्तु ज्ञातृस्वरूपं ज्ञाता साधिष्ठानबुद्धिस्थचिदाभासो ज्ञानेन्द्रियैः सहितः

स एव स्वमसाधारणं रूपमाकारो यस्य तत्तादृशमस्तु भवतु इत्येवं यदि यर्हि कल्प्यते निरूप्यते तर्हि तन्न भवति कुत इत्यत आह स्वयमिति, हि प्रसिद्धं विदुषाम्, स्वयंप्रकाशरूपमवेद्यत्वे सत्यपरोक्षत्वं स्वप्रकाशत्वमित्युक्तलक्षणं स्वयंप्रकाशं ज्ञानाविषयत्वेनापरोक्षतया प्रकाशमानं रूपमाकृतिर्यस्य तस्मिन्ब्रह्मणि ज्ञानस्य साभासान्तःकरणवृत्तिरूपस्याश्रयताऽऽश्रयत्वं ज्ञानक्रियावत्त्वमित्यर्थः, कथं केन प्रकारेण सम्भाव्या सम्भावनार्हा न कथमपीत्यर्थः ॥ ९ ॥

ननु तर्हि 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः सर्वरूपत्वमेव भूयोप्यस्त्विति ब्रह्मणः शङ्कते ।

सर्वरूपमिदं ब्रह्म वक्तुं कः शक्नुयादिति ।
सदैकरूपमेवेदं यतः शाश्वतमुच्यते ॥ १० ॥

सर्वरूपमिति । इदं प्रकृतं ब्रह्म देशाद्यपरिच्छिन्नं वस्तु सर्वरूपं सर्वमनेकरूपं जगदेव रूपमाकृतिर्यस्य तत्तथोक्तमस्तु भवतु इति चेदित्येवं वक्तुं कथितुं कः पुरुषः शक्नुयात्समर्थो भवेन्न कोपीत्यर्थः, कुत इत्यत आह सदेति, इदं प्रकृतं ब्रह्म सदा नित्यमेवैकरूपमेकं स्वगतसजातीयविजातीयभेदरहितं सच्चिदानन्दघनमस्ति 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्या सर्वपदेदंपदयोर्वाच्यार्थांशपरित्यागेनाविरुद्धेन ब्रह्मपदार्थेन सह सामानाधिकरण्येनैक्यबोधनादिति भावः, कुत एकरूपत्वमित्यत आह यत इति, यतः कारणाच्छाश्वत इत्युच्यते कथ्यते नित्यस्यानेकत्वासम्भवादिति भावः ॥ १० ॥

ननु तर्ह्येकरूपत्वमेव तल्लक्षणमस्त्विति शङ्कते ।

एकरूपमिदं ब्रह्म न वक्तुमिति शक्यते ।

निर्गुणं तत्परं ब्रह्म स्यादेकत्वं यतो गुणः ॥ ११ ॥

एकरूपमिति । इदं प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेद-शून्यं वस्तु एकरूपमेकमेकसंख्या रूपमाकृतिर्यस्य तत्तथोक्तमस्तु भवतु इति चेन्न कुत इत्यत आह वक्तुमिति, इत्येवं वक्तुं कथितुं न शक्यते नैव युज्यते कुत इत्यत आह निर्गुणमिति, त-त्प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु परं कार्य-कारणातीतमत एव निर्गुणं निर्गता निवृत्ता गुणा यस्मा-त्तत्तथोक्तमस्ति, अस्तु निर्गुणं तस्यैकत्वं कुतो नेत्यत आह स्या-दिति, यतो यस्मात्कारणादेकत्वमेकस्य भाव एकत्वं गुणः स्याद्गुणो भवेद्गुणकार्यमित्यर्थः, तार्किकैरपि संख्यायागुणेषु गृहीतत्वादिति अतो नैकरूपं ब्रह्मेति वक्तुं युक्तमितिभावः॥११॥

ननु तर्हि निर्गुणत्वमेव लक्षणमस्तु ब्रह्मण इति शङ्कते ।

निर्गुणं तत्परं ब्रह्म नूनमेतदसांप्रतम् ।
अनन्तेनैव गीयन्ते ह्यनन्ता एव तद्गुणाः ॥१२॥

निर्गुणमिति। तत्प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु परं कार्यकारणाभ्यां परमतो निर्गुणं निर्गता निवृत्ता गुणाः सत्त्वरजस्तमोभिधा यस्मात्तत्तथाभूत मस्तु भवतु, गु-णकार्याण्यप्येकत्वादीनि गुणशब्देन ग्राह्याणीति चेन्नेत्याह नू-नमिति, एतद्ब्रह्मणो निर्गुणत्वप्रतिपादनमसांप्रतमसमञ्जसं नूनं निश्चयेनास्ति कुत इत्यत आहानन्तेनेति, अनन्तेनैव न विद्यतेऽन्तो यस्य तेनैव शेषेणाहङ्कारेण वा वेदेनवा 'अनन्ता वै वेदा'इति वचनाद्वेदस्यानन्तत्वं, शेषस्य तु प्रसिद्धं ना-मैवानन्त इति, अहमस्त्वनन्तत्वं ज्ञानं विना नाशाभावादिति ज्ञेयम्, तद्गुणाः कीर्त्यादयो गुणकार्याणि सृष्ट्यादयश्च तस्य

ब्रह्मणो गुणा अनन्ता एव नान्तः संख्यापरिच्छेदो येषां ते तथोक्ता एव गीयन्ते वर्ण्यन्तेऽतोनिर्गुणत्वमपि ब्रह्मणो वक्तुमयुक्तमिति भावः ॥ १२ ॥

ननु तर्हि केनापि लक्षणेन वचनाविषयत्वेऽवस्तुत्वेनासत्त्वमेव ब्रह्मणोऽस्तु इति शङ्कते।

ब्रह्म नास्तीति को याद्भातीदं यस्य सत्त्वतः।
तर्ह्यस्ति ब्रह्मेत्यपि नो नातः सत्ता पृथग्यतः ॥१३॥

ब्रह्मेति। ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु वचनाविषयत्वान्नास्ति न विद्यत इति चेन्नेत्याहेतीति–इत्येवं ब्रह्म नास्तीति वचनं कः सन्नसन्वा पुरुषो ब्रूयात्कथयेत्सन्निति चेन्न ब्रह्मणोऽसत्त्वे तद्व्यतिरिक्तस्य वक्तुरप्यसत्त्वं स्या‘न्नान्योऽतोस्ति द्रष्टे’त्यादिश्रुत्या कर्तुर्ब्रह्मणो भिन्नसत्त्वाभावप्रतिपादनादतो ब्रह्मभिन्नत्वेनासिद्धस्य वक्तुर्ब्रह्मासत्त्वेन तदसत्त्वस्यापि सिद्धेर्न तादृशवक्तुर्ब्रह्मासत्त्ववचनसिद्धिरिति भावः, द्वितीये तु स्पष्टैव साऽतो ब्रह्मणोऽसत्त्ववचनं परास्तमेव तदेव स्पष्टं निरूपयति भातीति, यस्य ब्रह्मणः सत्त्वतः सत्यत्वेनेदं वक्तृवचनवाच्यादित्रिपुटीरूपं जगद्भाति प्रकाशते तदसत्त्वे वक्तुरेवासत्त्वापत्तिरिति भावः, ननु तर्हि घटोस्तीत्यत्र घटस्य सत्ताश्रयत्वमिव ब्रह्मास्तीति प्रयोगे ब्रह्मणोपि सत्ताश्रयत्वमेवास्तु इति शङ्कते तर्हीति, तर्हि तदा ब्रह्मसत्त्वासिद्धावित्यर्थः, ब्रह्मदेशकालवस्तुकृतपरिच्छेदशून्यं वस्तु अस्तीति सत्ताश्रयमेवास्तु इति चेन्नेत्याहेतीति–इत्यपि एवमपि ब्रह्मणः सत्ताश्रयत्वमपि नो नास्ति कुत इत्यत आह नेति, यतो यस्मात्कारणादतोऽस्माद्ब्रह्मणः पृथग्भिन्ना सत्ता न नास्ति अतो ब्रह्मणः सत्ताश्रयत्वं नेति भावः ॥ १३ ॥

ननु सत्तादिना केनापि रूपेण वचनाविषयत्वे ब्रह्मणः स्वरूपाभाववत्त्वेन शून्यतास्त्वित्याशङ्क्ते ।

अस्वरूपमिदं ब्रह्म विद्वानिति कथं वदेत् ।
स्वस्वरूपमिदं ब्रह्म प्रत्यक्षमनुभूयते ॥ १४ ॥

अस्वरूपमिति । इदं प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेद-शून्यं वस्तु अस्वरूपं न विद्यते स्वरूपमाकृतिर्यस्य तत्तथोक्त-मस्तु इति चेन्नेत्याह विद्वानिति, विद्वाञ्ज्ञानी चेत्तर्हीत्येवं कथं केन प्रकारेण वदेद्ब्रूयान्नैव वदेदित्यर्थः, अज्ञानी वदेच्चे-त्तद्वाक्यस्योन्मत्तप्रलपिततुल्यत्वेनाप्रामाण्यमेवेति न तद्विचारः कर्तव्यतया विहित इति भावः, ननु ब्रह्मास्वरूपमिति कुतो-न ब्रूयात्तत्राह स्वस्वरूपमिति, इदं प्रकृतं ब्रह्म देशकालवस्तुकृ-तपरिच्छेदशून्यं वस्तु स्वस्वरूपं स्वस्यात्मनः स्वमसाधारणं रू-पमाकृतिर्यस्य तत्तथोक्तं, यद्वाऽऽत्मनः स्वपदवाच्यस्य स्वं स्वीयमभिन्नमित्यर्थः, रूपं रूप्यते प्रकाश्यते जगदनेनेति रूपं प्रकाशो यस्य तत्तथोक्तं त्वंपदलक्ष्यप्रत्यगात्माभिन्नं ब्रह्मेत्यर्थः, इत्येवं प्रत्यक्षमपरोक्षतया ज्ञानिनाऽनुभूयते साक्षाज्ज्ञायते स ज्ञानी—अस्वरूपं ब्रह्मेति कथं ब्रूयान्नैव ब्रूयादिति योज्यम् ॥१४॥

ननु तर्हि स्वस्वरूपत्वेनैव वचनविषयं ब्रह्म भवतु इति शङ्क्ते ।

स्वस्वरूपमिदं ब्रह्म चेदित्यप्ययथातथम् ।
तत्र को नु स्वशब्दार्थो यत्स्वरूपमिदं भवेत्॥१५॥

स्वस्वरूपमिति । इदं ब्रह्म प्रकृतं देशकालवस्तुकृतपरिच्छेद-शून्यं वस्तु ज्ञानिना स्वस्वरूपत्वेनानुभूयमानत्वात्स्वस्वरूपं स्वस्या-त्मनः स्वरूपं स्वमभिन्नमसाधारणं रूपमाकृतिर्यस्य तत्तथोक्तं तादृशरूपेणैव वचनविषयमस्तु भवतु इति चेन्नेत्याहेतीति,

इत्यपि एवमपि वचनं वाक्यमयाथतथं न यथातथं सत्यं तद्यथातथं यथार्थं न भवतीत्यर्थः, कुत इत्याशङ्क्य तदेव कथयितुं गुरुः पृच्छति तत्रेति, तत्र ब्रह्मस्वस्वरूपमिति वाक्ये—इदं प्रकृतं ब्रह्म देशाद्यपरिच्छिन्नं वस्तु यत्स्वरूपं यस्य स्वशब्दार्थस्य स्वरूपमसाधारणं रूपमाकारो भवेत्स्यात्स स्वशब्दार्थः स्वशब्दस्याऽर्थो वाच्यः पदार्थो को नु ब्रह्म वा तद्भिन्नो वा, नाद्यः पुनरुक्तिदोषापत्तेः, भिन्नश्चेत्तस्यासत्त्वेनैव वैयर्थ्यापत्तेः, अतः स्वशब्दार्थस्याभावात्स्वस्वरूपत्वेनापि ब्रह्मणो विषयत्वमयथार्थमेवेति भावः ॥ १५ ॥

इदानीं पूर्ववादी स्वशब्दार्थं साधयति।

परव्यावर्त्तकं स्वत्वमिति चेत्तर्हि तद्वद।
यत्र स्वपरभावो न ब्रह्म किं तत्र नास्ति हि॥१६॥

परेति। परव्यावर्त्तकं परस्यान्यस्य व्यावर्त्तकं निषेधकं स्वत्वं स्वशब्दार्थो भवतीत्येवं चेद्यदि वदसि तर्हि तदा तस्मिन्पक्षे यदहं पृच्छामि तदुत्तरं वद कथय तमेव प्रश्नमाह यत्रेति, यत्र यस्मिन्काले स्वपरभावो मूर्च्छानिद्रासमाधिषु स्वस्य स्वशब्दस्य परव्यावृत्तिरूपः परस्य च स्वव्यावृत्तिरूपो भावोऽर्थसत्ता न न विद्यते तत्र काले निद्रादौ स्वपरार्थसन्धौ च ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु नास्ति किं न विद्यते किं किन्तु विद्यत एवेत्यर्थः, हि प्रसिद्धमेतद्विदुषामित्यर्थः, मूर्च्छानिद्रासमाधिमृत्युस्वपरसन्धिसत्ताप्रकाशान्यथानुपपत्त्या तत्रापि ब्रह्मसत्त्वाभ्युपगमेन परव्यावर्त्तकस्य स्वशब्दस्य ब्रह्मवाचकत्वानुपपत्तिरिति भावः ॥ १६ ॥

ननु तर्हि 'अहमस्मि ब्रह्माहमस्मी'त्यादिश्रुतिषु ब्रह्माहंश-

ब्दयोः सामानाधिकरण्यस्योपलभ्यमानत्वादहमर्थत्वं ब्रह्मणो-ऽस्त्विति शङ्कते।

अहमेव परं ब्रह्म 'ब्रह्माहमि'ति च श्रुतेः।
कथं भवेदहंब्रह्माहन्ता यत्र न विद्यते॥ १७॥

अहमेवेति। 'अहमस्मि,ब्रह्माहमस्मी'तिश्रुतावहंब्रह्मपदयोः सामानाधिकरण्यदर्शनादहमेवाहंशब्दार्थ एव ब्रह्म देश-कालवस्तुकृतपरिच्छेदशून्यं वस्तु प्रकृतं भवतु इति चेन्न कुत इत्यत आह कथमिति, अहं दृश्याहमर्थभूतं ब्रह्म दे-शकालवस्तुकृतपरिच्छेदशून्यं वस्तु कथं केन प्रकारेण भवेत्स्यान्न कथमपीत्यर्थः, अपरिच्छिन्नादृश्यसद्रूपपरिच्छिन्न-दृश्यासद्रूपयोः परस्परविरोधादिति भावः, तदेव स्पष्टमाहा-हन्तेति, यत्र प्रकृते ब्रह्मणि अहन्ताऽहमो भावोऽहन्ताऽहं-पदवाच्याहङ्कारसत्ता न विद्यते नास्ति 'अहं ब्रह्मे'ति श्रुतावहं-पदवाच्यांशत्यागेन लक्ष्यांशस्य ब्रह्मत्वेन प्रतिपादनाद्यतोऽहमर्थ-बाधेन बाधसामानाधिकरण्यमस्ति न तु मुख्यार्थसामानाधिकर-ण्यमतो नाहन्ताया ब्रह्मरूपत्वमिति भावः॥ १७॥

ननु तर्हि त्वं ब्रह्मेति श्रुतेस्त्वमर्थत्वं स्वसन्निकृष्टस्वभिन्नस्व-प्रत्यक्षलक्षणत्वमस्तु ब्रह्मण इति शङ्कते।

त्वमेव तत्परं ब्रह्म 'त्वं ब्रह्मे'तिश्रुतिर्जगौ।
त्वमेव तत्कथं ब्रह्म त्वंता यत्र न वर्त्तते॥ १८॥

त्वमेवेति। यतः 'त्वं ब्रह्मे'ति श्रुतिस्त्वंपदार्थस्य स्वप्रत्य-क्षस्वसन्निहितस्वभिन्नलक्षणस्य ब्रह्मशब्दार्थस्य च देशकालव-स्तुकृतपरिच्छेदशून्यसच्चिदानन्दघनरूपस्य सामानाधिकरण्ये-नैक्यं जगौ कथितवती तत्तस्त्वमेव त्वंपदार्थ एव स्वप्रत्यक्ष-

स्वभिन्नस्वसन्निकृष्टत्वलक्षणलक्षितः पदार्थ एव ब्रह्म देशाद्यपरिच्छिन्नं परं कार्यकारणातीतं वस्तु भवेत्स्यादित्येवं शङ्कामङ्गीकृत्योत्तरमाह त्वमेवेति, तत्प्रकृतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु त्वमेव त्वमर्थमेव स्वसन्निकृष्टस्वप्रत्यक्षस्वभिन्नत्वलक्षणमेव कथं केन प्रकारेण भवेत्स्यान्न कथमपीत्यर्थः, स्वाभिन्नदेशकालवस्तुकृतपरिच्छेदशून्यस्य ब्रह्मशब्दार्थस्य त्वमर्थस्य च स्वप्रत्यक्षस्वसन्निकृष्टस्वभिन्नत्वलक्षणलक्षितस्य देशादिपरिच्छिन्नजडरूपस्य परस्परं विरुद्धत्वेनैक्यानुपपत्तेरिति भावः, तदेव स्पष्टमाह त्वन्तेति, यत्र प्रकृते ब्रह्मणि त्वन्ता त्वंपदार्थस्य स्वसन्निकृष्टस्वभिन्नस्वप्रत्यक्षत्वरूपस्य भावः सत्ता न विद्यते नास्ति तत्रापि त्वंपदवाच्यांशबाधेन लक्ष्यांशभूतकूटस्थचिदात्मनो ब्रह्मणा सहैक्यप्रतिपादनमिति भावः ॥ १८ ॥

ननु तर्हि 'तद्ब्रह्मे'ति श्रुतेस्तत्पदार्थस्यैव परोक्षत्वादिविशिष्टस्य ब्रह्मत्वमस्तु इति शङ्कते ।

'तद्ब्रह्मे'ति श्रुतेर्वक्तुं तद्ब्रह्मेति न शक्यते ।
अत्यन्ताव्यवधाने हि परोक्षमिव तत्कथम् ॥ १९ ॥

तदिति । 'तद्ब्रह्मे'तिश्रुतेस्तत्पदार्थस्य परोक्षत्वावच्छिन्नस्य ब्रह्मशब्दार्थस्य च देशाद्यपरिच्छिन्नस्य सामानाधिकरण्यस्य प्रतीयमानत्वेनैक्यप्रतीतेस्तत्तत्पदार्थः परोक्षत्वविशिष्ट एव ब्रह्म ब्रह्मशब्दार्थो देशाद्यपरिच्छिन्नत्वलक्षणलक्षितोऽस्तु भवतु इति चेन्नेत्याहेतीति, इत्येवं वक्तुं कथितुं न शक्यते न युज्यते कुत इत्यत आहाऽत्यन्तेति, हि यस्मात्कारणादत्यन्ताव्यवधानेऽत्यन्तमतिशयितमव्यवधानं व्यवधानाभावो यस्मिन्ब्रह्मणि तस्मिन्परोक्षमिव तत्पदवाच्यत्वं परोक्षवत्तत्तदिति

वाचकं पदं कथं केन प्रकारेण युक्तं स्यान्न कथमपीत्यर्थः, ब्रह्मशब्दार्थस्य देशाद्यपरिच्छिन्नस्य तत्पदार्थस्य च परोक्षदेशपरिच्छिन्नस्य परस्परं विरोधात्तत्रापि वाच्यांशपरित्यागे बाधसामानाधिकरण्येन प्रयोगान्न तत्पदार्थब्रह्मणो मुख्यं सामानाधिकरण्यमतो न तत्पदार्थस्य ब्रह्मपदार्थतेति भावः ॥ १९ ॥

ननु तर्हि तद्ब्रह्म किं रूपं तत्कथयेत्याशङ्कायामाह।

नष्टायां मोहनिद्रायां गलिते मानसे मुनेः।
यच्छिष्टं तत्परं ब्रह्म मनोवाचामगोचरम् ॥ २० ॥

नष्टायामिति। मोहनिद्रायां मोहोऽज्ञानमेव निद्रा स्वरूपविस्मृतिहेतुत्वात्प्रपञ्चस्वप्नबीजत्वाच्च सुषुप्तिस्तस्यां नष्टायां विलीनायां सत्यां तथा मुनेर्मननवतो विवेकिन इत्यर्थः, मानसे मन एव मानसं तस्मिन् गलिते नष्टे सति यद्विद्वत्प्रत्यक्षं शिष्टमवशिष्टं तदज्ञानमानसाभावसाक्षित्वेनोपलक्षितं तत्परं कार्यकारणातीतं ब्रह्म देशाद्यपरिच्छिन्नं वस्तु अस्ति तच्च मनोवाचां मनसो वाचाश्चागोचरमरूपत्वान्मनसो वाचश्चाविषयं स्वयंप्रकाशसद्रूपत्वाच्च निर्गुणत्वाच्चास्तीति निश्चेतव्यमिति भावः ॥२०॥

इदानीमेतत्प्रकरणविचारपूर्वं पाठकानाशीर्वादयति।

चर्चितुं योग्यया भूयस्त्वनया चर्चया बुधाः।
चर्चयन्तु परं ब्रह्म तुष्यन्तु च रमन्तु च ॥२१॥

चर्चितुमिति। बुधा विवेकिनश्चर्चितुं संवादयितुं योग्ययाऽर्हयाऽनया तु सर्वमन्यत्कथनं परित्यज्यैतयैव केवलं चर्चया ब्रह्मविषयककथनरूपप्रक्रियया तुपदेनास्या लौकिकवैदिकसर्वचर्चाभ्यो वैलक्षण्यं सूचितम्, अत एवात्रादरो विधेय-

इत्याशयः । भूयः पुनः परं कार्यकारणातीतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु अस्ति तच्च चर्चयन्तु अन्योन्यं संवादयन्तु तेन संवादेन च तुष्यन्तु सन्तोषं प्राप्नुवन्तु रमन्तु चानेन संवादेनैव क्रीडन्तु ॥ २१ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ ब्रह्मचर्चाविंशत्यर्थप्रकाशः षड्विंशः ॥ २६ ॥

---

अथ स्वेच्छाचारचतुष्टयी ।

एवं ब्रह्मचर्चां निरूप्येदानीं तत्रैव
नष्टायां मोहनिद्रायां गलिते मानसे मुने ।
यच्छिष्टं तत्परं ब्रह्म मनोवाचामगोचरमिति ॥

अनेन मोहमनसोर्लयसाक्षित्वेन लक्षणेन यल्लक्षयितुं तत्रैव तदाकारा वृत्तिर्व्यवहारे सति मुमुक्षोरहंकारावशिष्टत्वेन न स्यादितीमामाशङ्कां शिष्यस्यालक्ष्य ज्ञानोत्तरं यावत्प्रारब्धशेषमहंकारस्य विद्यमानत्वेपि क्रमतस्तदनादरेण स्वरूपप्रेमवृद्ध्या तन्नाशोपि स्यादिसर्थं सम्भावयितुं तत्सत्त्वस्य समाध्यविरोधित्वदर्शनाय स्वेच्छाचारचतुष्टय्याख्यं चतुःश्लोकं प्रकरणं वक्तुकाम आह ।

## अथ स्वेच्छाचारचतुष्टयी

अथेति । अथ ब्रह्मचर्चाविंशतिनिरूपणानन्तरं स्वेच्छाचारचतुष्टयी स्वेच्छाचारप्रतिपादकं श्लोकचतुष्करूपं प्रकरणं निरूप्यत इति शेषः, तत्रादौ एतत्प्रकरणश्रवणं तच्छ्रैष्ठ्यनिरूपणपूर्वकमादरकर्त्तव्यतां विधत्ते ।

श्रोतव्या श्रीमता साधो नूनमेकाग्रचेतसा ।
परमार्थस्य सर्वस्वं स्वेच्छाचारचतुष्टयी ॥ १ ॥

श्रोतव्येति। हे साधो पूर्वोक्तब्रह्मणि चित्तस्थैर्यसाधक अनेन संबोधनेनैतत्प्रकरणश्रवणेऽधिकारिता सूचिता, श्रीमता वैराग्यादिसाधनसंपद्वता त्वयान्येनापि वा कर्त्रा—एकाग्रचेतसैकं स्वगतसजातीयविजातीयभेदशून्यं ब्रह्माग्रे पुरोभागे विषयतया विद्यते यस्य तत्तथोक्तं तादृशेन चेतसान्तःकरणेन करणभूतेन परमार्थस्य तात्त्विकार्थस्य सर्वस्वं सर्वसंपद्रूपा स्वेच्छाचारचतुष्टयी स्वेच्छाचारस्य निरूपिका चतुष्टयी चतुर्णां श्लोकानां समूहरूपा—एतदाख्यं प्रकरणमित्यर्थः, श्रोतव्या श्रवणविषया कर्तव्या ॥ १ ॥

प्रतिज्ञातमेव स्वेच्छाचारं रूपकेणाह।

निजं पतिं परित्यज्य गृहस्थैव प्रपञ्चती।
पत्या परेण रमते चतुराख्याभिचारिणी ॥ २ ॥

निजमिति। व्यक्तार्थस्तावन्निजं स्वकीयं पतिं भर्तारं परित्यज्य विहाय गृहस्थैव निजपतिनिर्मिते गृहे स्थिता सत्येव प्रपञ्चती स्वपतिवञ्चनशीला चतुराख्या चतुरेत्येवमाख्याऽऽह्वा यस्याः सा तथोक्ता चतुरानाम्नी काचिदभिचारिणी व्यभिचारिणी स्त्री परेणान्येन पत्या जारेण सह रमते क्रीडति। प्रकृतार्थे तु, निजं स्वीयं पतिं पातीति पतिः 'पातेर्डतिः' बुद्धेः पालकत्वादहङ्कारस्य बुद्धेः पतित्वं तं परित्यज्य विहाय गृहस्थैव गृह्यते स्वात्मतयाङ्गीक्रियत इति गृहं शरीरं तत्र स्था स्थितैव, यद्वा गृहेष्विन्द्रियेषु स्थितैव प्रपञ्चती स्वपतिरहङ्कारस्तद्वञ्चनपरा चतुराख्या चतुरा तुर्या—इत्याख्याऽऽह्वा यस्याः सा तथोक्ता—अभितः सर्वतश्चरितुं गन्तुं शीलमात्मन्यस्याः सा तथोक्ता बुद्धिस्तुर्यानाम्नी जीवन्मुक्तबुद्धिरित्यर्थः, परेण कार्यकारणातीतेन

पत्या पाति स्वसच्चित्सुखदानेन रक्षतीति पतिर्ब्रह्माभिन्नः प्रत्यगात्मा तेन सहैकीभूय रमते क्रीडतीति ॥ २ ॥

किञ्च ।

अहङ्कारं पृथक्कृत्य तुर्यबुद्धिर्दिने दिने ।
पत्या परेण रमते पुंश्चली परसङ्गिनी ॥ ३ ॥

अहङ्कारमिति । तुर्यबुद्धिस्तुर्येव जातिकुलाभिमानशून्या बुद्धिर्मतिर्यस्याः सा तथोक्ताऽत एव पुंश्चली पुरुषेषु चलितुं गन्तुं शीलमस्याः सा तथोक्ता व्यभिचारिणीत्यर्थः, अत एव परसङ्गिनी परस्यान्यपुरुषस्य सङ्गः सम्बन्धो भोगोऽस्याऽस्तीति सा तथोक्ता 'सुप्यजातावि'ति णिनिः, एतादृशी काचित्स्त्री, अहङ्कारं पितृमातृकुलजात्यभिमानं पृथक्कृत्य स्वान्तःकरणान्निरस्य दिने दिने प्रतिदिनं सर्वदेत्यर्थः, परेणान्येन पत्या पुरुषेण जारेणेत्यर्थः, सह रमते क्रीडति यथा । तद्वत्प्रकृतेपि, तद्यथा तुर्यबुद्धिस्तुर्याख्या बुद्धिर्मतिः पुंश्चली पुंसः पुरुषाद्देहाभिमानवतो जीवादिति यावच्चलितुमात्मानं प्रतिगन्तुं शीलमस्याः सा तथोक्ताऽत एव परसङ्गिनी परस्य कार्यकारणातीतस्य ब्रह्माभिन्नप्रत्यगात्मनः सङ्गः समागमो विद्यते यस्याः सा तथोक्ताऽत एव अहङ्कारं देहवर्णाश्रमकुलजात्यभिमानं पृथक्कृत्यात्मनः स्वतश्च भिन्नत्वेनानुभूय दिने दिन इत्युपलक्षणं प्रतिक्षणमित्यर्थः, परेण कार्यकारणातीतेन पत्या पाति स्वसच्चित्सुखदानेन रक्षति बुद्धिमिति पतिः बुद्धिरक्षकः प्रत्यगभिन्नः परमात्मा 'कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादू, एष ह्येवानन्दयातीति श्रुतेः, तेन सह रमते क्रीडते आत्मना सहैकीभूय स्वात्मसुखमनुभवतीति भावः ॥ ३ ॥

ननु स पुरुषः स्वस्त्रीं परपुरुषसङ्गात्कुतो न निवारयति

तद्व्यभिचारं च कथमवलोकयति तत्राह।

पश्चात्तु स्त्रीजितः सोऽपि प्रतिकर्त्तुमनीश्वरः।
अस्याः सम्भोगवेलायां गृहं सन्त्यज्य गच्छति॥ ४॥

पश्चादिति। सोऽपि तदीयपतिरपि स्त्रीजितः स्त्रिया भार्यया वशीकरणेन बलवत्परपुरुषाश्रयणेन वा जितः सामर्थ्यहीनः कृतः सन्पश्चादनन्तरं बलवतीं तां स्त्रीं प्रतिकर्तुं ताडनादिना निवारयितुमनीश्वरोऽसमर्थो भवति तु पुनः अस्य स्वस्त्रियाः सम्भोगवेलायां सम्भोगस्य परपुरुषसङ्गस्य वेलायां समये गृहं मन्दिरं सन्त्यज्य विहाय गच्छति याति न तु तदवलोकयतीति भावः। प्रकृतार्थेतु, सोऽपि अहङ्कारोऽपि आत्मानुसन्धानरतां पूर्वंवन्निवार्य स्वानुसन्धानवतीं कुतो न करोतीति चेत्तत्राह पश्चादिति, सोऽपि अहङ्कारोऽपि स्त्रीजितः शब्दमात्ररूपया बुद्ध्या जितोऽसत्त्वेन तुच्छत्वेन चावलोकितः सन् वाचारम्भणश्रुत्या वाङ्मात्रत्वप्रतिपादनात्स्त्यायतेः शब्दार्थत्वात्तत्प्रकृतिकत्वाच्च स्त्रीशब्दस्य तद्वाच्यतुर्यबुद्धेरपि वाङ्मात्रत्वं पश्चादनन्तरं तां स्त्रियं शब्दमात्रां बुद्धिं प्रतिकर्तुमात्मानुसन्धानान्निवारयितुं स्वानुसन्धानवतीं कर्तुमित्यर्थः, अनीश्वरोऽसमर्थो भवति प्रमाणजन्यज्ञानस्य भ्रमज्ञानेन बाधाशक्तेरिति भावः, तु पुनरस्याः तुर्याख्यबुद्धेः सम्भोगवेलायां सम्भोगस्य स्वात्मानुसन्धानरूपभोगस्य वेला समयस्तस्मिन्विद्यमाने सति गृहं 'शरीरं गृहमुच्यत'इत्याचार्योक्तेः, गृह्यते स्वात्मतयाङ्गीक्रियत इति गृहं शरीरं, तथात्रैव च गृहं देहः पतिर्जीव इत्युक्तेश्च सन्त्यज्य परित्यज्य गच्छति विलीनो भवति अतस्तुर्याख्यबुद्धौ स्वात्मानुसन्धाने स्वेच्छाचारः सिद्ध इति भावः॥४॥

नन्वेतादृशे स्त्रीपुरुषव्यवहारेऽपि पत्युर्गृहत्यागाभावात्संसा-

रजन्यसुखदुःखादिमत्वाच्च पूर्ववद्दंपतीभावः स्यादित्याशङ्क्याह ।

इदृशे व्यवहारे तु दाम्पत्यं वद कीदृशम् ।
दिनैः कतिपयैरेव स्वेछाचारः प्रवर्त्तते ॥ ५ ॥

ईदृश इति । ईदृश उक्तलक्षणे व्यवहारे स्वस्त्रिया सह स्वगृहे वर्तने सत्यपि दाम्पत्यं दम्पत्योर्जायापत्योर्भावः सत्ता कर्म वा दाम्पत्यं स्त्रीपुरुषसङ्गसुखमित्यर्थः, कीदृशं कथं स्यात्तद्वद ब्रूहि येन तदासक्तिर्भवेत्सर्वदा तस्य दुःखमिश्रितत्वात्तद्दुःखमेवेति भावः, अतस्तदनासक्त्यैव तु पुनः कतिपयैरेव कतिचित्सङ्ख्यैरेव दिनैः दिवसैः स्वेच्छाचारः सर्वलौकिकधर्ममनादृत्योभयोरपि स्वेच्छाचारः स्वेच्छापूर्वकमाचरणं यथेष्टाचार इत्यर्थः, प्रवर्त्तते शीघ्रमेव भविष्यतीत्यर्थः, वर्त्तमानसामीप्ये वर्तमानप्रयोगः। प्रकृतार्थे तु अहङ्कारस्य बुद्धेश्च विद्यमानत्वेऽपि तत्सम्बन्धेन कचित्संसारोद्भवोऽपि स्यादित्याशङ्क्याहेदृश इति । ईदृशेऽहङ्कारानादरेणात्मना सह रमणलक्षणे व्यवहारे वर्त्तमाने सति दाम्पत्यं जायत उत्पद्यते संसारोऽस्यामिति जाया बुद्धिः सा च पतिश्च बुद्धिपालकोऽहङ्कारस्तयोः कर्म संसारोद्भावनरूपं दाम्पत्यं कीदृशं कथं स्यात्तद्वद ब्रूहि उभयोरन्योन्यसत्त्याभावे बुद्ध्या तत्तुच्छत्वे च विनिश्चिते न संसारोद्भव इति भावः, किञ्च तु पुनः कतिपयैरेव कतिचित्सङ्ख्यैरपि दिनैर्दिवसैः स्वेच्छाचारः स्वेच्छयाऽऽचारो व्यवहारोऽहङ्कारस्य विधिनिषेधातीतत्वेन बुद्धेश्च तद्बोधकाहङ्कारौदास्य आत्मचिन्तननैरन्तर्यरूपः स्वेच्छापूर्वक एव प्रवर्त्तते भविष्यति ॥ ५ ॥

इदानीमेतत्प्रकरणतात्पर्यं जिज्ञासुबुद्ध्यारोहाय स्पष्टमाह गद्येन।

स्वानुभवानां सत्यपि बाधिता-
हन्कारे समाधिभङ्गो नास्तीत्यर्थः ॥ ६ ॥

इ० न० बो० स्वेच्छाचारचतुष्टयी ॥ २७ ॥

# बनारससंस्कृतसीरीज़्नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां ) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| ...ष्टीका खण्डानि ४ | ४ | ० |

| | | |
|---|---|---|
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा। श्रीमदन्नंभट्टप्रणीता खण्डानि ६ | ६ | ० |
| रसमञ्जरी। व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० ६ | ६ | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिरचिता। | १ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः। | २ | ० |
| श्रीमदणुभाष्यम्। श्रीश्रीवल्लभाचार्यविरचितम्। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्यव्याख्या समेतम्। | ३ | ० |


**ब्रजभूषण दास और कम्पनी**

चांदनीचौक के उत्तर नई सड़क बनारस




# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 108.*





# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।



# BODHASÂR,

A TREATISE ON VEDÂNTA,

BY

ŜRÎ NARAHARI,

With a commentary by the author' s pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus VII.*

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1905.

| | | | |
|---|---|---|---|
| गणपाठः | ० | ४ | |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला ‐) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | १ | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | [illegible] |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

स्वानुभवानामिति । स्वानुभवानां स्वः स्वीय आत्मविषयकोऽनुभवोऽनुभूतिः, यद्वा तस्याप्यात्मनः पृथगसत्त्वात्स्वात्मभूतोनुभवो येषामस्ति ते तथोक्तास्तेषां जीवन्मुक्तानां व्यवहारकाले बाधिताहङ्कारे बाधितोऽसत्त्वेन निश्चितो योऽहङ्कारोऽहङ्कृतिस्तस्मिन्सत्यपि विद्यमानेपि समाधिभङ्गः समाधेः स्वात्माकारवृत्तिलक्षणस्य परपुरुषासक्तस्त्रीपरपुरुषसङ्गसुखाकारवृत्तेरिव स्नेहातिशयाद्भङ्गो नाशो नास्ति न भवतीत्यर्थोस्य प्रकरणस्य ज्ञेयः ॥ ६ ॥

इति श्रीनरह० दि० बोधसारार्थदीप्तौ स्वेच्छाचारार्थप्रकाशः सप्तविंशः ॥ २७ ॥

---

अथाहङ्कारस्याबाधकत्वप्रदर्शनत्रयी ।

एवं स्वेच्छाचारपञ्चकं निरूप्येदानीं ज्ञानिषु व्यवहारकालेऽहङ्कारसत्त्वेपि तस्य बाधितत्वेनाबाधकत्वं दर्शितमेव द्रढयितुं सदृष्टान्तमहङ्कारस्याबाधकत्वप्रदर्शनत्रय्याख्यं त्रिश्लोकं प्रकरणमभिदधान आह ।

## अथाहंकारस्याबाधकत्वप्रदर्शनत्रयी ।

अथेति । अथ स्वेच्छाचारपञ्चकनिरूपणानन्तरमहङ्काराबाधकत्वप्रदर्शनत्रय्यहङ्कारस्याहंकृतेर्यदबाधकत्वमुक्तं तदेव प्रदर्श्यतेऽनया सा तादृशी त्रयी त्रयाणां श्लोकानां समाहारस्त्रयी–एतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः; तत्र तावदादौ दृष्टान्तमाह सार्धेन ।

भित्तिचित्रकृतं सर्पं दृष्ट्वा बालः पलायते ।
केन चिद्बालकेनोक्तं चित्रसर्पोयमित्युत ॥ १ ॥

भित्तीति । बालोऽव्युत्पन्नो डिम्भो भित्तिचित्रकृतं भित्तौ

कुड्ये यानि चित्राणि तेषु कृतं लिखितं सर्पं भुजङ्गं दृष्ट्वाऽव-लोक्य पलायते ततः स्थानात्त्वरयाऽपसर्पति यदा तदा केन-चिदन्येन बालकेन किंचिद्व्युत्पन्नेन पोतेनायं भवद्दृष्टश्चित्रसर्पश्चि-त्ररूपः सर्पो भुजङ्गोऽस्तीत्युक्तेवं प्रकारेणोक्तं कथितम् ॥ १ ॥

ततः प्रभृत्यसौ विद्वांस्तेनैव सह खेलति ।

तथात्मस्थमहंकारं श्रुत्वा मूढः पलायते ॥ २ ॥

तत इति । असौ बालस्ततः प्रभृति तं कालमारभ्य वि-द्वान्सर्पमिथ्यात्वज्ञानवान्ततोन्यत्र सत्यसर्पे सर्पसत्त्वज्ञानवान्-तेनैव मिथ्यात्वेन ज्ञातेन चित्रसर्पेण सहैव साकमेव खेलति क्री-डति यथा । दार्ष्टान्तिकमाह तथेति, तद्वत्तथा मूढोऽज्ञानी-आत्मस्थमात्मनि प्रत्यगात्मनि स्थमधिष्ठितमहङ्कारमहंकृतिं श्रुत्वा शास्त्रोक्तं श्रवणेन निश्चित्य पलायते तद्भयेन समाधौ लीनो भवति ॥ २ ॥

तत्र सद्गुरुणा प्रोक्तं चिदेवास्तीह नेतरत् ।

ततः प्रभृत्यसौ विद्वांस्तेनैव सह खेलति ॥ ३ ॥

इति श्रीनरहरिकृतौ बोधसारेहङ्काराबाधकत्वप्रदर्शनत्रयी ॥ २८ ॥

तत्रेति । तत्राहङ्कारभाने तद्भये च सद्गुरुणा सन्नहङ्कारादि-जगन्मिथ्यात्वज्ञानपूर्वमात्मयाथार्थ्यज्ञानवान्यो गुरुर्महावाक्यद्वा-राऽऽत्मयाथार्थ्यस्वरूपबोधकस्तेनेहाहङ्कारादिजगद्भाने चिदेव चेतनमेव प्रत्यगात्मचैतन्यमेव केवलमस्ति विद्यते नेतर-त्तदन्यत्किमपि अहङ्कारादिकं नास्तीत्येवं प्रोक्तं कथितं यदा तदा ततः प्रभृति तत्कालमारभ्यासावुक्तलक्षणो मूढः पूर्वं स एव विद्वानहङ्कारादिमिथ्याज्ञानपूर्वमात्मयाथार्थ्यवेत्ता ज्ञान्यवस्थायां तेनैवाहङ्कारादिजगतापि सह साकं बाधित-

स्वान्निशङ्कं खेलति क्रीडति बाधिताहङ्कारस्य मुनौ बाधकत्वं नास्तीति भावः ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपावहङ्काराबाधकत्वप्रदर्शनत्रय्यर्थप्रकाशोऽष्टाविंशः ॥ २८ ॥

---

अथ प्रश्नोत्तरमुक्ताफलद्वयम् ।

एवमहङ्काराबाधकत्वप्रदर्शनत्रयीं निरूप्येदानीमात्मचिन्तने स्वनाशभावनया तत्रानादरं जिज्ञासोरालक्ष्य तदभावं दर्शयितुं जीवविषयवासनासम्वादप्रतिपादकं प्रश्नोत्तरमुक्ताफलद्वयाख्यं प्रकरणं द्विश्लोकं निरूपयिष्यन्नाह ।

## अथ प्रश्नोत्तरमुक्ताफलद्वयम् ।

अथेति । अथाहङ्काराबाधकत्वप्रदर्शनत्रयीनिरूपणानन्तरं प्रश्नोत्तरमुक्ताफलद्वयं प्रश्नोनुयोग उत्तरं प्रतिवचनं ते एवमुक्ताफले मौक्तिके तयोर्द्वयं युग्ममेतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तत्रादौ जीवं प्रति विषयवासनाप्रश्नं निरूपयितुमाह ।

तत्र विषयवासनोवाच ।

तत्रेति । तत्रात्मनाशसम्भावनायां विषयवासना विषयाः शब्दस्पर्शादयस्तेषां वासनेच्छोवाच जीवं प्रतीति शेषः, कथयामास । किमुवाच तदाह ।

अहिक्रीडा न कर्त्तव्या कर्त्तव्यं नात्मचिन्तनम् ।
अहो जीव महामूढ मरणं ते भविष्यति ॥ १ ॥

अहिक्रीडेति । हे महामूढ हे महामूर्ख इति स्वेष्टनाशप्रतीत्याऽऽक्रन्दपूर्वकं संबोधनम्, अहो जीव अनेन संबोधनेन स्वजीवनहेतुत्वाज्जीवहितवक्तव्यता स्वस्य सूचिता, त्वयाऽहिक्रीडाऽहिना सर्पेण स्वनाशकारणत्वात्सर्पप्रदर्शेनात्मना सह क्रीडा रति-

जीवनेच्छावता पुरुषेण सर्पेण साकं रतिरिव न कर्तव्या न कार्या तदेव स्पष्टमाहाऽऽत्मचिन्तनमिति, आत्मनः प्रत्यगभिन्नब्रह्मणश्चिन्तनं स्मरणं न कर्तव्यं न कार्यं कुत इत्यत आह मरणमिति, ते तवोभयकरणेन मरणं मृत्युर्भविष्यति भवेदत उभयमपि समानमतो न कार्यमित्याशयः॥ १॥

एवं प्रश्नमभिधायेदानीमुत्तरं वदन्नाह।

स जीव उवाच।

स इति। स उक्तरीत्या विषयवासनया पृष्टो जीवः उवाच साधिष्ठानबुद्धिस्थश्चिदाभासः कथितवान्, किमुवाचेत्यत आह।

अहिनानेन ये दष्टा अमरत्वं गता हि ते।
अस्यामृतमयी दंष्ट्रा तत्क्रीडाम्यमुनाहिना॥ २॥

इति श्रीनरहरि० बो० प्रश्नोत्तरमुक्ताफलद्वयमेकोनत्रिंशः॥ २९॥

अहिनेति। अनेनात्मस्वरूपेणाहिना न हीयते नश्यतीत्यहिरविनाशिस्वरूपो जीवत्वनाशकत्वाद्वाहिरिव तेन ये विरला दष्टा भुक्तास्ते पुरुषाः शुकादयोऽमरत्वं न विद्यते मरो मरणं यत्र तदमरं ब्रह्म तस्य भावस्तत्त्वं ब्रह्मत्वं गताः प्राप्ता ब्रह्माभिन्ना जाता इत्यर्थः, हि प्रसिद्धमेतच्छ्रुतिषु विद्वत्सु च। अथवा न हिनस्ति नाशयतीत्यहिर्जीवस्य जीवनहेतुत्वात् 'को ह्येवान्यात्कः प्राण्यायदेष आकाश आनन्दो न स्यादि'ति श्रुतेः, अन्यत्समानं तत्तस्मात्कारणादमुना प्रत्यक्षेणाहिनाऽविनाशिस्वरूपेण मज्जीवनभूतेन चात्मना सह क्रीडामि रमे, ननु सर्पदंशे मृत्युरेव भवतीति प्रसिद्धिस्तत्कथमेतदहिदंशेऽमरत्वप्राप्तिः सम्भाव्येत्याशङ्क्याहाऽस्येति, अस्यात्मसर्पस्य दंष्ट्रा दंशक्रियाकरणरूपा वृत्तिर्विवेकाख्याऽमृतमयी—अमृतं मरणरहितं ब्रह्मात्मतत्त्वमेव प्रधानं यस्यां सा तथोक्ताऽस्ति अत ए-

तद्दंशेऽमरत्वप्राप्तिर्निश्चेतव्येति भावः ॥ २ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ प्रश्नो त्तरमुक्ताफलद्वयार्थप्रकाश एकोनत्रिंशः ॥ २९ ॥

---

अथ प्रश्नोत्तरचमत्कारत्रयी ।

एवं प्रश्नोत्तरमुक्ताफलद्वयं निरूप्येदानीं पूर्वं ज्ञानिष्वहङ्कारस्याबाधकत्वमुक्तं तत्र ज्ञानिष्वहङ्कारस्य विद्यमानत्वे व्यवहारोऽपि स्यात्तस्मिंश्च सति पूर्ववत्कामादीनां बलं स्यादित्याशङ्क्य तां निराकर्तुं प्रश्नोत्तरचमत्कारत्रय्याख्यं त्रिश्लोकं प्रकरणमभिदधान आह ।

## अथ प्रश्नोत्तरचमत्कारत्रयी ।

अथेति । अथ प्रश्नोत्तरमुक्ताफलद्वयानन्तरं प्रश्नोत्तरचमत्कारत्रयी प्रश्नश्चानुयोग उत्तरं च प्रतिवाक्यं तयोश्चमत्कारः कौतुकं विलास इत्यर्थः, तस्य प्रतिपादिका त्रयी श्लोकत्रयरूपा प्रक्रियैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः । तत्रादौ मोहादीनां कामादीन्प्रति प्रश्नवचनमुदाहरति ।

यथापूर्वं न खेलन्ति यथापूर्वं हसन्ति न ।
कैश्चित्कामादयः पृष्टाः भवन्तः किं हतप्रभाः ॥ १ ॥

यथापूर्वमिति । भो कामादयो भवन्तो यथापूर्वं पूर्वकाले यथा यद्वत्खेलन्तः स्थितास्तथेदानीं न खेलन्ति न क्रीडन्ति, किञ्च भवन्त इदानीं हतप्रभा हता नष्टा प्रभा येषां ते तथोक्ताः किं कुतः कारणादित्येवं कैश्चिन्मोहादिविकारैः कामादयः कामोभिलाष आदिर्मुख्यो येषां ते पृष्टा अनुयुक्ताः ॥ १ ॥

कामादीनामिदानीं मोहादीन्प्रत्युत्तरं वदन्नाह ।

कामादय उचुः ।

कामादय इति । कामादयः कामोभिलाप आदिर्येषां क्रोधादीनां ते तथोक्तास्त ऊचुः कथयामासुः, किमित्यत आह ।

अस्मान्पुष्णाति या नित्यं साऽस्माकं जननी मृता।
सुखलुब्धेन पित्रा नः का चिदन्या कृता वधूः ॥२॥

अस्मानिति । हे मोहाद्यो याऽविद्या नित्यं सर्वदाऽस्मान्कामादिविकारान्पुष्णाति पालयति साऽस्माकं कामादीनां जननी माता मृता नष्टा, ननु भवतां मातरि नष्टायामपि पितुर्नः पालनं भवतु तत्राहुः सुखलुब्धेनेति, नोऽस्माकं सुखलुब्धेन सुखं स्त्रीभोगजन्यं लोके । परमार्थतस्तु विद्यासुखं तस्मिल्लुब्ध आसक्तस्तेन पित्राऽस्मत्पालनमनादृत्य पाति अस्मानिति पिता जनकोहङ्कारस्तेन काचिदपूर्वाऽनिर्वचनीयेति यावदन्या द्वितीया विद्याख्या वधूः स्त्री 'वधूर्जाया स्नुषा स्त्री चे'त्यनेकार्थः, वधयति नाशयति सर्वमविद्याकृतं संसारमिति वधूर्विद्या कृता परिणीता संपादितेत्यर्थः ॥ २ ॥

ननु सा भवतां पालनं कुर्यात्तत्राह ।

अस्मान्द्विष्यति सा नित्यं न पुष्णाति कदाचन ।
दिनैः कतिपयैरेव गृहत्यागो भविष्यति ॥ ३ ॥

इति श्रीनरहरिकृतौ बोधसारे प्रश्नोतरचमत्कारत्रयी त्रिंशा ॥ ३० ॥

अस्मानिति । सा सपत्नी माताऽस्मान्कामक्रोधादिविकारान्नो नित्यं सर्वदैव द्विष्यति द्वेष्टि दोषदृष्ट्याऽवलोकयतीत्यर्थः, किञ्च साविद्याऽस्मान्कामादीनविद्यापुत्रान्नः कदाचन कस्मिन्नपि समये न पुष्णाति नैव पालयति, किञ्चाऽतः कतिपयैः

कतिचित्संख्यैर्दिनैर्दिवसैरस्माकं कामादीनां गृहत्याग एव गृहं मन्दिरं शरीरं च तस्य त्यागो विसर्जनमपि भविष्यति भवेद्विद्ययाऽविद्यानाशे कृतेऽप्यहङ्कारसत्त्वं कामादिपोषकं न भवति प्रत्युत विद्यासुखलोभेन तद्द्वेष एवातः क्रमेण कामादिविकारलय एव सम्भाव्य इति भावः ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ प्रश्नोत्तरचमत्कारत्रय्यर्थप्रकाशस्त्रिंशः ॥ ३० ॥

---

अथ स्तनपानलीलाष्टकम् ।

एवं प्रश्नोत्तरचमत्कारत्रय्याहङ्कारसत्त्वेपि विद्वत्सु क्रमेण दृश्यमानकामादिनाशं सम्भावयित्वेदानीमहङ्कारसत्त्वेप्यहमावच्छिन्नस्य विदाभासस्यापि विद्यायामेव रुचिमुत्पादयितुं स्तनपानलीलाष्टकाख्यमष्टश्लोकं प्रकरणमभिदधान आह ।

## अथ स्तनपानलीलाष्टकम् ।

अथेति । अथ प्रश्नोत्तरचमत्कारत्रयी निरूपणानन्तरं स्तनपानलीलाष्टकं स्तनयोः पानं स्तनपानं दुग्धपानमित्यर्थः, तद्रूपा लीला क्रीडा तस्याः प्रतिपादकमष्टकमष्टश्लोकसमूहरूपं प्रकरणं निरूप्यत इत्यर्थः ।

### श्रीगुरुरुवाच ।

तत्रादौ श्रीगुरुः वैराग्यादिस्वरूपसंपत्तिमान् हितोपदेष्टोवाच कथयामास, किं कथयामास तदाह ।

उपमाता च माता च बाल मातृद्वयं हि ते ।
उपमातुः स्तनरसः कट्वम्लमधुतिक्तकः ॥ १ ॥

उपमातेति । हे बाल हे पुत्र ते तव हि प्रसिद्धं मातृद्वयं मात्रोर्ज-

नन्योर्द्वयं युग्ममस्ति, ननु मातृत्वे समाने तयोर्भेदः किं निबन्धनस्तत्राहोपमातेति, उपमाता च धात्री—एका, माता च जननी च द्वितीया, पालकत्वेन मातृत्वे समानेपि पोषकत्वजनकत्वरूपवैलक्षण्येन भेदो ज्ञेय इति भावः। प्रकृतार्थेतु हे बाल हे मूढ अनेन संबोधनेनोपमातृतुल्याविद्यास्तनरसतुल्यविषयरसासक्त्या मूढत्वं त्वयि विशिष्टमिति द्योतितं, हि प्रसिद्धं ते तव साधिष्ठानबुद्धिस्थचिदाभासस्येत्यर्थः, मातृद्वयं मात्रोः परिच्छेदकारणरूपोपाध्योर्द्वयं द्विकमस्तीति ज्ञेयं, ननु परिच्छेदहेतुत्वं समानं भेदहेतोर्वैलक्षण्याभावात्तदभावे च कथं तयोर्द्वित्वं सम्भाव्यं तत्राहोपमाता चेति, उपमाता चोपमीयते परिच्छिद्यते, यद्वोपमीयत उपमाविषयीक्रियत आत्माऽनयेति उपमाताऽविद्या माता च मीयते साक्षात्क्रियते जीवब्रह्मैक्यमनया सा माता विद्या च चकाराभ्यामत्यन्तं वैलक्षण्यं सूचितम्, एवं मातृभेदं प्रदर्श्येदानीं बालत्वादेवोपमातरि विशेषप्रीतिमालक्ष्य तत्राप्रीतिं मातरि च प्रीतिं जनयितुमुपमातृस्तनरसस्वादं दर्शयति उपमातुरिति, हे बाल तवोपमातुर्धात्र्याः स्तनरसः स्तनयोः कुचयो रसो रस्यत आस्वाद्यत इति रसः पयः कट्वम्लमधुतिक्तकः कट्वम्लमधुतीक्ष्णभक्षणात्कटुरम्लो मधुस्तिक्तश्चानेकरसोऽत एव चित्रद्वैतरसात्मकश्चित्रोऽनेकरसो द्वैतरसो भिन्नास्वादरूपोऽस्ति॥ १॥

स्वरूपं प्रदर्श्य फलमपि दर्शयति।

> जरामरणसंसर्गी चित्रद्वैतरसात्मकः।
> निजमाता तव तु या तन्माहात्म्यं वदाम्यहम् ॥२॥

जरेति। जरामरणसंसर्गी जरा वार्धक्यं तत्सदृशं नैर्बल्यं वा मरणमपि अकालमरणं तत्सदृशं वा धर्मार्थकामोक्षानुपयोगिमूढजीवनं वा ते संसृज्येते प्राप्येते अ-

नेनेति स तथोक्तोऽस्मिन्नस्ति स तादृशो ज्ञेयः । प्रकृतार्थे तु हे बाल हे मूढ त उपमातुरविद्यायाः स्तनरसः स्तन्यन्ते ध्वन्यन्ते नामभिः प्रतिपाद्यन्त इति स्तना इह लोकपरलोकभवा विषयास्तत्प्रापकसाधनप्रतिपादकानि शास्त्राणि च तेषां रसः सुखं तत्प्रतिपाद्यं च सुखं कट्वम्लमधुतिक्तक एवं कटुरम्लो मधुर्मधुरस्तिक्तकस्तीक्ष्ण एवं चित्रद्वैतरसात्मकश्चित्रमाश्चर्यरूपं यद्द्वैतं भेदस्तद्विशिष्टो यो रसः सुखमात्मा स्वरूपं यस्य स तथोक्तोऽस्ति, फलतोपि दोषं दर्शयति जरेति, जरा वार्धक्यं मरणं मृत्युस्ते संसृज्येते प्राप्येते अनेनेति स तथोक्तः सोऽस्मिन्नस्तीति स तथोक्तोऽस्ति अतस्तदादरो नैव कार्य इति भावः, ननु मम मातुस्तर्हि किंस्वरूपं तद्वदेत्याशङ्क्याह निजेति । तव ते तुशब्दोऽत्रोक्तोपमातृतोऽस्या वैलक्षण्यद्योतनार्थः, या त्वज्जातौ प्रसिद्धा निजमाता निजा स्वीया माता जनन्यस्ति तन्माहात्म्यं तस्यास्त्वदीयमातुर्माहात्म्यं महत्त्वं वदामि कथयामि अहं त्वदुपदेष्टा ॥ २ ॥

तत्प्रतिज्ञातमेवाह ।

सैव माता पिता सैव जगतामीश्वरी च सा ।
सा गतिः सा परं तत्त्वं तत्परं नास्ति किञ्चन ॥३॥

सैवेति । सैव तव माता जननीयं धात्री न जननीत्यर्थः, तथा तव सैव जनन्येव पिता पालको जनक इत्यर्थः, जगतां सर्वेषामपि लोकानामीश्वरी धर्मशास्त्रे पूज्यत्वेन प्रतिपादिता सा माता बालानां गतिः शरणमस्ति तथा सा माता परं तत्त्वं बालानामुपास्या परब्रह्मरूपाऽतो बालानां तत्परं ततो मातृतः परमन्यत्सेव्यं श्रेष्ठं नास्ति न विद्यते किञ्चन किमपि । प्रकृतार्थे तु सैव विद्यैव माता मीयते साक्षादनुभूयते

ब्रह्मानया सा माता विद्यैव माता नान्येत्यर्थः, तथा सैव वि-द्यैव पिता पालको मृत्युमुखरूपसंसाराद्रक्षकत्वादित्यर्थः, च पुनर्जगतां समस्तलोकानामीश्वरीश्वरोपाधित्वादीश्वररूपेण पूज्या सा विद्यास्ति सा विद्या गतिर्मुमुक्षूणां शरणमस्ति किं च सा विद्या परं कार्यकारणातीतं तत्त्वमनारोपितं वस्तु अस्ति ब्रह्मेत्यर्थः, तत्परं ततो विद्यायाः परमन्यच्छ्रेष्ठं किञ्च न किमपि नास्ति न विद्यतेऽतोऽविद्यां परित्यज्य त्वया विद्यैवाश्रयणीयेति भावः ॥ ३ ॥

भिन्नजातित्वादपि धात्री त्याग उचित इति दर्शयन्धा-त्रीमात्रोर्जातिभेदमाह ।

उपमाता कुजातिस्ते माता तव सुजातिका ।
तां कुजातिं परित्यज्य सुजातिं मातरं श्रय ॥ ४ ॥

उपमातेति । ते तवोपमाता धात्री कुजातिः कुत्सिता नीचा जातिर्यस्याः सा कुजातिरस्ति तव ते माता जननी सुजातिका सु शोभना जातिर्यस्या सा तथोक्ता श्रेष्ठजात्युत्पन्ने-त्यर्थः, अतस्त्वं तामुक्तलक्षणां कुजातिं कुत्सितजातिं धात्रीं प-रित्यज्य विहाय सुजातिमुत्तमजातिं मातरं जननीं श्रया-श्रितोभव, अन्यथा कुजातिसम्पर्के बुद्धिमालिन्येनाधर्माच-रणान्नरकपातः स्यादिति भावः । प्रकृतार्थे तु हे मूढ ते तवोप-मानोपमीयते परिच्छिद्यतेऽनया सोपमाताऽविद्या कुजातिः कुत्सितो जन्ममरणसुखदुःखादिमाञ्जायत उत्पद्यते यया सा कुजातिर्ज्ञेया, तव ते माता मीयते साक्षादनुभूयते तत्त्वं यया सा तथोक्ताऽहंब्रह्मेत्याकारा प्रमा रूपा वृत्तिरित्यर्थः, सु-जातिका सुष्ठु शोभनो जायते भूयते यया सा तथोक्ता ब्रह्म-

स्वरूपो जायते ययेति भावः, ज्ञेया ऽतस्त्वं मुमुक्षुः कुजातिं सुखदुःखजन्ममरणादियुक्तस्वोत्पादनकर्त्रीं तामविद्यां परित्यज्य विहाय सुजातिं स्वस्य ब्रह्मभावोत्पादनकर्त्रीं मातरं मीयते साक्षाक्रियत आत्मतत्त्वमनया तां विद्यां श्रयाऽऽश्रितो भवाङ्गीकुर्वित्यर्थः, तथा च तव मोक्षोभवेदित्यर्थः ॥ ४ ॥

दुग्धगुणवैलक्षण्यतोपि धात्रीतो जनन्याः श्रैष्ठ्यमविद्यायाश्च विद्यायामपि श्रैष्ठ्य दर्शयति ।

> निजमातुस्तनरसस्त्वद्वैतामृतवर्षणः ।
> जन्मरोगजराध्वंसी सकृत्पीतोपि मृत्युजित् ॥५॥

निजमातुरिति । हे बाल निजमातुर्निजा स्वीया या माता जननी तस्याः स्तनरसः स्तनयोः कुचयो रस्यत आस्वाद्यत इति रसः पयः, तु धात्रीदुग्धाज्जननीदुग्धस्यातिवैलक्षण्यद्योतकः, तदेवाहाऽद्वैतामृतवर्षणो 'यन्नदुःखेन सम्भिन्नमि'त्यादिस्मृतिप्रतिपादितस्य स्वर्गसुखस्य नित्यनिरतिशयनिरुपमत्वप्रतीतेरद्वैतं निरुपमं यदमृतं सुखं स्वर्गसुखमित्यर्थः, तस्य च धर्माधीनत्वाद्धर्मस्य च सुबुद्धिजन्यत्वात्सुबुद्धेश्च कुजातिसम्पर्कपरित्यागेन स्वमातृदुग्धपानजन्यत्वात्परम्परयाऽद्वैतामृतस्य स्वर्गसुखस्य वर्षणः प्रापकोऽस्ति, किञ्च जन्मरोगजराध्वंसी जन्मैव दुःखदत्वाद्रोगः कुबुद्ध्या निषिद्धाचरणेन रोगो जायते जरा चाकालवार्धक्यं तयोर्ध्वंसी नाशकोऽस्ति सुबुद्धिजनकत्वेन रोगजरानाशक इत्यर्थः, किञ्च सकृत्पीतोपि सकृदेकवारमपि पीतः प्राशितो मृत्युजिन्मृत्युलोकस्य मृत्योश्च निवर्त्तको भवति स्वजननीदुग्धपानस्य सुबुद्धिजनकत्वेन तद्द्वाराऽमरत्वप्रापकत्वात्मृत्युलोकमृत्युनिवर्त्तकत्वं ज्ञेयं, प्रकृतार्थे तु निजमातुः

स्वीयसाक्षात्कारकारणभूतविद्यायाः स्तनरसः स्तन्येते ध्वन्येते अध्यारोपापवादौ यैस्ते स्तना उपनिषद्वाक्यानि तेषां रसः सुखं 'रसो वै स' इति श्रुतेर्वेदान्तप्रतिपाद्यं ब्रह्मसुखमित्यर्थः, तुपदेनाविद्यासुखाद्ब्रह्मसुखस्य वैलक्षण्यं सूचितं, सोऽद्वैतामृतवर्षणोऽद्वैतं भेदरहितं यदमृतं सुखं तस्य वर्षणो वृष्टिकर्त्ता भवति, किञ्च जन्मरोगजराध्वंसी जन्म सदद्वैतानृतद्वैतयोरैक्यप्रतीतिरूपं तस्याऽत एव रोगवार्धक्ययोरपि नाशकः, किञ्च स रसः सकृदपि एकवारमपि पीतः प्राशितः सन्मृत्युर्जन्मरणनिवर्त्तको भवतीति ज्ञेयम् ॥ ५ ॥

नन्वेतावत्कालमेतयो र्भेदः कुतो न ज्ञातस्तत्राह ।

न ज्ञातं मूढभावेन पूर्वमन्तरमेतयोः ।
इदानीमन्तरं ज्ञात्वा निजमातुस्तनं पिब ॥ ६ ॥

नेति । उभयपक्षे भवता बालेन मुमुक्षुणा च मूढभावेन मौढ्येन पूर्वं प्रथमं मदुपदेशात्प्रागित्यर्थः, एतयोर्धात्रीमात्रोरविद्याविद्ययोश्चान्तरं वैलक्षण्यं न ज्ञातं न ज्ञानविषयीकृतमिदानीमधुना मदुपदेशेन कृत्वाऽन्तरं भेदं ज्ञात्वा साक्षात्कृत्वा निजमातुः स्वीयजनन्या विद्यायाश्च स्तनं स्तनस्थं दुग्धं स्तन्यत उपदिश्यते ब्रह्म येन स स्तनो ब्रह्मोपदेशकवाक्यसमूहस्तं च पिब प्राश्नीहि अङ्गीकुरु च एवमुभयत्र योज्यम् ॥ ६ ॥

ननु मद्धात्र्या जीवनं मत्कृततत्स्तनपाननिमित्तकाऽन्नवस्त्रादिप्राप्त्या भवति तत्स्तनपाने मया त्यक्ते तत्कथं स्यादिति तत्स्नेहेन तन्नाशमसहमानं प्रत्याह ।

त्वया स्तने परित्यक्ते सा विदीर्य म्रियेत चेत् ।
नश्येत्कुजातिसंसर्गो हितमेव तदा भवेत् ॥ ७ ॥

त्वयेति । हे बाल त्वया भवता स्तने धात्र्याः स्तने धात्री स्तनपाने इत्यर्थः, परित्यक्ते विसृष्टे सति सा धात्री विदीर्य जीवनचिन्तया कृशीभूय म्रियेत मृतिमाप्नुयाच्चेद्यदि तर्हि कुजातिसंसर्गो नीचजातिसंपर्को नश्येन्नष्टो भवेत्तदा तर्हि धर्मेण स्वर्गादिसाधनबुद्धीच्छोस्ते हितमेवेष्टमेव भवेत्स्यात् । प्रकृतार्थस्तु त्वयेति । त्वया मुमुक्षुणाऽविद्यायाः स्तने शब्दे कर्मादिप्रतिपादकवाक्यजाते परित्यक्ते सर्वभावेन तत्फलवासनया सह विसृष्टे सति साऽविद्या विदीर्य कृशीभूय म्रियेत नश्येच्चेद्यदि तर्हि कुजातिसंसर्गः कुत्सितः संसारी जायते यया सा कुजातिरविद्या तद्वासना च तस्याः संसर्गः संपर्को नश्येन्नष्टो भवेत्तदा तर्हि मुमुक्षुत्वात्तव हितमेव मोक्षरूपमिष्टमेव भवेत्स्यात्, अविद्यानाशस्यैवमोक्षत्वप्रतिपादनादितिभावः ॥ ७ ॥

ननु कुजातिसम्पर्के मम काहानिरित्याशङ्क्य पूर्वमेव हानेरुक्तत्वाज्ज्ञानित्वेनाबाधकत्वं मत्वा वक्षि चेन्निष्फलत्वाच्च तदाश्रयस्येत्याशयेनाह ।

मायाब्रह्ममयस्तात किमर्थं वर्णसंकरः ।

मायामेव परित्यज्य शुद्धब्रह्ममयो भव ॥ ८ ॥

इति श्रीनरहरिकृतौ बोधसारे स्तनपानलीलाष्टकमेकत्रिंशम् ॥ ३१ ॥

मायाब्रह्मभय इति । हे तात हे पुत्र मायाब्रह्ममयो माया कापट्यं ब्रह्म च ब्राह्मणकर्म तयोर्विकाररूपः सङ्करोऽन्यजातिसंपृक्तब्राह्मणजातिरूप इत्यर्थः, अत एव वर्णसङ्करो वर्णस्य ब्राह्मणवर्णस्य सङ्करो भ्रष्टत्वं किमर्थं कस्मै प्रयोजनाय कर्त्तव्य इति शेषः, तर्हि किं कर्त्तव्यं तत्राह मायामिति, मायामेव कापट्यं नीचयोनिजन्यसङ्कररूपं परित्यज्य विहाय सर्वभावेन परित्यज्य शुद्धब्रह्ममयः शुद्धमन्यजात्यसंपृक्तं ब्रह्म ब्रा-

ह्मगजातिस्तन्मयः सा प्रधाना यस्य स तथोक्तो भवाऽऽस्व। प्रकृतार्थे तु हे तात हे शिष्य माया जगत्कारणभूता सदसद्भ्यामनिर्वचनीया शक्तिर्ब्रह्म च देशाद्यनवच्छिन्नं प्रत्यगभिन्नः परमात्मा तयोर्विकारभूतो वर्णसङ्करो वर्णयोः शुद्धाशुद्धयोः सङ्करो मेलनं मालिन्यमित्यर्थः, किमर्थः कोऽर्थः प्रयोजनं यस्यां क्रियायां त्वया क्रियत इति शेषः, जीवनस्यान्यथासिद्धत्वात्तत्संपर्कस्य च दोषरूपत्वेन दुःखजनकत्वाच्चेति न कर्त्तव्य एव स इति भावः, अतो मायामेव जगज्जननशक्तिमेव परित्यज्य विहाय शुद्धब्रह्ममयः शुद्धं माययाऽस्पृष्टं ब्रह्म प्रत्यगभिन्नं तन्मयस्तद्रूपो भव स्याः, तथा सति उभयसंयोगरूपसंसारसङ्करो न स्यादिति भावः॥ ८॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ स्तनपानलीलाष्टकार्थप्रकाश एकत्रिंशः॥ ३१॥

---

अथाश्चर्यचतुष्टयी।

एवं स्तनपानलीलानिरूपणमिषेण मायातत्कार्ययो रुचिं परित्याज्य शुद्धब्रह्मणि रुचिमुत्पाद्येदानीं तत्रैव स्थैर्यसम्पादनाय तत्स्वरूपज्ञानमपेक्षितमिति तत्स्वरूपं निरूपयितुमाश्चर्यचतुष्टय्याख्यं चतुश्श्लोकं प्रकरणमभिदधान आह।

## अथाश्चर्यचतुष्टयी।

अथेति। अथ स्तनपानलीलाष्टकनिरूपणानन्तरमाश्चर्यचतुष्टयी आश्चर्यस्याश्चर्यरूपस्य ब्रह्मणो निरूपकत्वात्तत्सम्बधिनी चतुष्टयी चतुःश्लोकसमूहात्मकं प्रकरणं निरूप्यत इति शेषस्तदेव ब्रह्मण आश्चर्यरूपत्वं निरूपयति।

अन्धः पश्यति सर्वं च पङ्गुर्याति पुरात्पुरम् ।
जडः कार्याणि कुरुते नीरसो रसमश्नुते ॥ १ ॥

अन्ध इति । अन्धश्चक्षुर्हीनः सर्वं घटादिजातं पश्यति अवलोकयति, ननु विषयावलोकनमन्धस्य विरुद्धं कथं सम्भाव्यमिति चेन्न 'पश्यत्यचक्षुरि'ति श्रुत्या ब्रह्मणोऽचक्षुष्ट्वेपि अवलोकयितृत्वप्रतिपादनात्तया च श्रुत्याऽचक्षुष्ट्वे प्रतिपादिते 'निष्कलं निष्क्रियमि'ति श्रुत्या च निरवयवत्वे च प्रतिपादिते तं विना जगदवलोकयितृत्वस्य 'नान्योतोऽस्तिद्रष्टे'त्यादिश्रुत्याऽसत्त्वप्रतिपादनाच्चैतन्यं विना जगदवलोकनासिद्धेश्चान्धस्य जगदवलोकयितृत्वमुक्तमविरुद्धं सम्भाव्यं, च पुनः पङ्गुः पादहीनः पुरात्पुरं पूर्वनगरात्पुरान्तरं याति गच्छति, ननु पादहीने गतिः कथं सम्भाव्येति चेन्न 'अपाणिपादो जवनो गृहीते'त्यादिश्रुतेर्ब्रह्मणः पादराहित्येपि गतिमत्त्वप्रतिपादनान्नि'ष्कलं निष्क्रियं शान्तमि'ति श्रुत्या च निरवयवत्वप्रतिपादनाच्च निरवयवत्वेनापि ब्रह्मणः पादराहित्ये सिद्धे सत्यपि गतिमत्त्वप्रतिपादनाद्गन्तुरपि ब्रह्मणो भिन्नस्यासत्त्वप्रतिपादनात्पङ्गुत्वं गतिमत्त्वं च सिद्धं पुरमत्र शरीरं 'नवद्वारे पुरे देही'त्युक्तेः 'पुरमेकादशद्वारमि'ति श्रुतेश्च, परात्परमिति पाठे तु त्वंपदवाच्यार्थत्यागेन लक्ष्यार्थकूटस्थचिन्मात्ररूपिणो 'निष्कलमि'ति श्रुत्या निरवयवत्वप्रतिपादनात्पादराहित्येन पङ्गुत्वं स एव ब्रह्मणोऽभिन्नत्वज्ञानात्स्वस्य परात्कारणादव्यक्तारूपात्परं ततो भिन्नं तस्य कल्पितत्वात्तदस्पृष्टं च परमात्मरूपं याति प्राप्नोतीत्यर्थः, यद्वा लोकप्रसिद्धपुरान्नगरात्पुरं नगरं याति प्राप्नोतीत्यर्थ एवास्तु तस्यापि गन्तुर्ब्रह्मणः पृथगसत्त्वेन ब्रह्मत्वाद्ब्रह्मणश्च 'निष्कलमि'ति निरवयवत्वप्रतिपादनाद'पाणिपाद' इति

श्रुत्या पादराहित्ये गतिमत्त्वप्रतिपादनात्पङ्गुत्वं गन्तृत्वं च सम्भाव्यमिति दिक्, आश्चर्यान्तरमाह जड इति, जडश्चैतन्यात्मनो विविक्तो जीवः कार्याणि कर्त्तव्यतया विहितानि कर्माणि कुरुत आचरति चैतन्याद्भिन्नस्य जाड्यं प्रसिद्धमेव तस्यैव कर्तृत्वमपि सर्वशास्त्रेषु प्रतिपादितं तदधिकारेणैव सर्वशास्त्रविधानाच्चात्मनेपदप्रयोगेण च कर्मफलमपि तन्निष्ठमित्यपि सूचितं, यद्वा चेत्यरहितत्वेन चिदात्मन एव जडत्वाज्जडत्वं कर्मकर्तुरपि ततः पृथगसत्त्वप्रतिपादनाज्जडत्वं कर्मकर्तृत्वं च सम्भाव्यम्, अस्मिन्नपि पक्षे कर्तृत्वजाड्ये ब्रह्मण्येव सर्वाधिष्ठानत्वात्सम्भाव्ये इति भावः, यद्वा जडो मायातत्कार्यरूपः प्रपञ्चो ब्रह्मविष्णुरुद्रादिरूपः कार्याणि कर्माणि उत्पत्त्यादीनि कुरुत आचरति 'तदेतज्जडं मोहमात्रमि'ति श्रुत्या मायाया जडत्वप्रतिपादनात्तत्कार्यस्यापि ब्रह्मादिप्रपञ्चस्य जडत्वं 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'ति श्रुत्या तस्या एव कर्तृत्वप्रतिपादनादात्मनेपदेन च कर्मफलं तन्निष्ठमेवेति ब्रह्मणः कर्तृत्वभोक्तृत्वराहित्यं सूचितमिति भावः, यद्वा मायातत्कार्ययोरुभयोरपि जडत्वात्तस्यास्तत्कार्यजीवेश्वरयोरपि ब्रह्मणोऽभिन्नत्वाद्यद्यतो न भिन्नं तत्तदेवेति लोके शास्त्रे च प्रसिद्धेः परमात्मैव जडस्तं विना कर्त्तारं कार्यनिर्वाहायोगात्स एव कार्याणि आकाशादिब्रह्माण्डान्तानि तदादिपिपीलिकान्तानि च कुरुत उत्पादयति एवं जडे कार्यकारित्वमाश्चर्यमेवेति भावः, आश्चर्यान्तरमाह नीरस इति, रस्यत आस्वाद्यतेऽनेनेति रसना तद्रहित आत्मा रसं माधुर्यादिकमश्नुतेऽनुभवति 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुते रसयितुरात्मन पृथक्सत्त्वाभावप्रतिपादनान्नि'ष्फलमि'ति श्रुतेश्च निरवयवात्मत्वप्रतिपादनाच्च रसनारहितत्वेऽप्यात्मनो रसानुभवितृत्वं सम्भाव्य-

मिति भावः, यद्वा 'रसो वै स' इति श्रुते रसाः सुखानि विषयजन्यानि निर्गतानि निवृत्तानि यस्मात्स नीरसस्ततोपि रसयितुः पृथगसत्त्वप्रतिपादनान्नीरसत्वं रसानुभवितृत्वं चात्मन्येव सम्भाव्यमिति भावः ॥ १ ॥

अन्यान्यप्याश्चर्याण्याह ।

निश्चेता निश्चिनोत्य[1]न्तं विरक्तो भोगमश्नुति ।
सर्वस्पर्शविहीनोपि ब्रह्मसंस्पर्शमश्नुते ॥ २ ॥

निश्चेता इति । निश्चेता निर्गतं निवृत्तं चेतोऽन्तःकरणं यस्मात्स तथोक्त आत्मा सोऽन्तमतिक्रान्तमन्तान्नाशादित्यनन्तं प्रत्यगभिन्नं ब्रह्म निश्चिनोति निदिध्यासति स्वय'मश्रोत्रममनऽस्कमि'ति श्रुत्याऽऽत्मनो निर्मनस्कत्वप्रतिपादनाद्-आत्मनश्च मनसः पृथगसत्वाच्चात्मनो निर्मनस्कत्वं तं विना च केवलमनसो पदार्थनिश्चयाऽशक्तेर्निश्चेतस आत्मन एव परमार्थनिश्चायकत्वं सम्भाव्यमिति भावः, अत्यर्थमिति पाठे तु अर्थं सत्त्वमतिक्रान्तमसज्जगन्निश्चिनोति असत्वेन निश्चयविषयीकरोतीत्यर्थः, अन्यदप्याश्चर्यमाह विरक्त इति, विषयाणां मिथ्यात्वादात्मनः परिपूर्णत्वाच्च विरक्तो रागरहित आत्मा तं विना च भोक्तृत्वासिद्धेः स एव भोगं भुज्यत इति भोगस्तं सुखदुःखाद्यनुभवमश्नुति प्राप्नोति अन्यदप्याश्चर्यमाह सर्वेति, सर्वस्पर्शविहीनोपि सर्वे समस्ता ये स्पर्शाः स्पृश्यन्ते काठिन्यादिविषया यैस्ते स्पर्शास्त्वगिन्द्रियाणि स्पृश्यन्ते त्वगिन्द्रियेणानुभूयन्त इति स्पर्शास्त्वग्विषयास्तैर्विहीनोपि रहितोपि आत्मेन्द्रियणां विषयाणां चात्मनः पृ-

[1] निश्चिनोत्यर्थं ।

थगसत्त्वात्सर्वस्पर्शविहीनत्वमात्मनः सम्भाव्यं, स ब्रह्मसंस्पर्शं ब्रह्मणा देशकालवस्तुकृतपरिच्छेदशून्येन वस्तुना संस्पर्शमैक्यमश्नुते प्राप्नोति ॥ २ ॥

आश्चर्यान्तराण्यप्याह ।

सर्वाहारी निराहारमुदरे धारयत्ययम् ।
मुग्धो भुनक्ति पाण्डित्यं सिद्धान्तं वक्ति मौनवान्॥ ३ ॥

सर्वाहारीति । सर्वाहारी सर्वस्य समस्तस्याहारः भोजनं विद्यते यस्य स तथोक्त आत्मा पृथगसत्त्वमेव जगत आत्मनो भोजनं कालरूपेण वा भोजनं समस्तजगतः सोयमात्मोदरे जठरे निराहारं निर्गतो निवृत्त आहारो भोजनं यस्मात्तद्यथा तथा धारयति स्थापयति सर्वद्वैतस्य मिथ्यात्वात्तदाहारस्यापि तथात्वान्निराहारत्वं ज्ञेयं, सर्वाहारत्वे च श्रुतिः, 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति, अन्यदप्याश्चर्यमाह मुग्ध इति, मुग्धो ज्ञेयस्यासत्त्वात्तद्विषयकज्ञानस्यापि तथात्वात्तदभाववत्त्वेन मुग्धत्वमात्मनो ज्ञेयं, स आत्मा पाण्डित्यं पण्डितस्य भावः पाण्डित्यं वैदुष्यं समदृष्टित्वलक्षणं 'शुनि चैव श्वपाके च पण्डिताः समदर्शिन' इति भगवदुक्तेः, भुनक्ति पालयति अभ्यवहरति वा, अन्यदप्याश्चर्यमाह सिद्धान्तमिति, मौनवान्मौनी सिद्धान्तं वाचां विषयो नेति सर्ववेदान्तसिद्धान्तस्तं वक्ति ब्रूते 'अवचनेनैव प्रोवाच, सह तूष्णीं बभूवे'ति श्रुतेः, यद्वा वागिन्द्रियस्य मिथ्यात्वात्तद्रहितो मौन्यात्मा सः सिद्धान्तं सर्वशास्त्रसिद्धान्तनिर्णयं वक्तुरपि ततः पृथगसत्त्वात्स एव वक्ती इत्यर्थः ॥ ३ ॥

किं चान्यदप्याश्चर्यमाह ।

निर्वैरो जयमाप्नोति निष्कामः पूर्णकामताम् ।
सुप्तो जागर्त्ति विज्ञानी मृतोप्यमृतमश्नुते ॥ ४ ॥

इति श्रीनरहरिकृतौ बोधसार आश्चर्यचतुष्टयी ॥ ३२ ॥

निर्वैर इति । समत्वात्स्वस्य द्वेष्यविषयमिथ्यात्वाच्च निर्वैरो निर्गतं निवृत्तं वैरं विरोधो यस्मात्स तथोक्त आत्मा जयं सर्वोद्योगफलरूपं मोक्षमाप्नोति लभते, आश्चर्यान्तरमाह निष्काम इति, काम्यविषयाणामसत्त्वात्स्वस्य च पूर्णत्वान्निष्कामो निर्गताः कामा यस्मात्स तथोक्तः स एवात्मा पूर्णकामतां पूर्णाः पर्याप्ताः कामा यस्य यस्मिन्वा स तथोक्तस्तस्य भावस्तत्ता तामाप्नोति 'सर्वान्कामान् समश्नुत' इति श्रुतेः, आप्तकामत्वादपीत्यर्थः, किं चान्यदप्याश्चर्यमाह सुप्त इति, विज्ञानी विज्ञानमात्मानुभवः स विद्यते यस्य स तथोक्तः पुरुषः सुप्तः प्रपञ्चस्य बाधितत्वेन तद्विषयकज्ञानस्यापि बाधितत्वादज्ञानत्वेन सुप्तत्वं स जागर्ति जाग्रद्विषयाननुभवति, यद्वा ।

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने'रिति भगवदुक्तेः, ॥

प्रपञ्चे सुप्तत्वं स्वरूपे जाग्रत्वं चेति सुप्ते जाग्रत्वं संभाव्यं, यद्वा जाग्रदवस्थावत एव विश्वस्य स्वस्वरूपे सुप्तत्वात्प्रपञ्चे जागरणं चेति सुप्ते जागृतिसम्भवः सम्भाव्यः, यद्वा लोकदृष्ट्या सुप्तस्यैव जाग्रत्त्वं तत्रापि अज्ञानानन्दवित्पुट्योः सत्त्वेन जाग्रल्लक्षणसद्भावादित्यर्थः, अन्यदाश्चर्यान्तरमाह मृतोपीति, मृतोऽपि जीवत्वनाशं प्राप्तोति अमृतं न विद्यते मृतं मरणं यस्मिंस्तदमृतं ब्रह्माऽश्नुते प्राप्नोति, यद्वा लोकप्रसिद्ध-

मरणवानपि स्वाधारं ब्रह्मैव प्राप्नोति, यद्वेह लोके मृतोपि अन्यलोकेऽमृतं सुधामश्नुते प्राप्नोति पुण्येन कर्मणेत्यर्थः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपावाश्चर्यचतुष्टय्यर्थप्रकाशो द्वात्रिंशः ॥ ३२ ॥

---

अथ तुरीयतुलसीपूजा ।

एवमाश्चर्यचतुष्टयीनिरूपणमिषेणाश्चर्यस्वरूपं ब्रह्म निरूप्येदानीं तत्साक्षात्कारवतस्तुरीयबुद्धिवृत्तिभिस्तत्पूजां निरूपयितुं तुरीयतुलसीपत्रपूजाख्यं षट्श्लोकं प्रकरणमभिदधान आह ।

## अथ तुरीयतुलसीपत्रपूजा ।

अथेति । अथाश्चर्यचतुष्टयीनिरूपणानन्तरं तुरीयतुलसीपत्र पूजा तुरीया जाग्रदाद्यपेक्षया चतुर्थ्यात्मसाक्षात्कारवती बुद्धिः सैव तुलसी विष्णोर्जगद्व्यापकस्यात्मनः प्रियत्वात्तस्याः पत्राणि विशेषभावगर्भवृत्तयस्तैः पूजाऽर्चा तन्निरूपकत्वादस्य प्रकरणस्याप्येतदेव नाम निरूप्यत इति शेषः, तत्रादौ तन्निरूपणमेव प्रतिजानीते ।

तुरीयतुलसीपत्रैर्विष्णुपूजा निरूप्यते ।
प्रेमप्रधानभावेन शृङ्गाररसरूपिणी ॥ १ ॥

तुरीयेति । मया प्रेमप्रधानभावेन प्रेम्णः स्नेहस्य प्रधानो मुख्यो भावः सत्ता यत्र मयि तेन मया शृङ्गाररसरूपिणी शृङ्गारः शुचिर्यो रसो रूप्यते प्रकाश्यतेऽस्यां सा तथोक्ता तुरीयतुलसीपत्रैस्तुरीया स्वात्मसाक्षात्कारवती बुद्धिः सैव तुलसीव विष्णो जगद्व्यापकस्य विष्णोरात्मनः प्रियत्वात्तुलसी तस्याः पत्राणि वृत्तिविशेषास्तैर्विष्णुपूजा विष्णोर्जगद्व्यापकस्यात्मनः पूजाऽर्चा

ध्यानमित्यर्थः, लौकिकपक्षे विष्णुः प्रसिद्धस्तुरीयेव मुक्तिदा सुखदा च तुलसी शेषं समानम ॥ १ ॥

## तत्र गोपीवाक्यम् ।

तत्रोभयलक्षणायां पूजायां गोपीवाक्यं गोपस्य स्त्री गोपी तस्या वाक्यं वचनम् ।

प्रकृतेर्थे गा इन्द्रियाणि पातीति गोपी बुद्धिस्तस्याः वाक्यं वचनं, यद्वा गां महावाक्यरूपां वाणीं पाति रक्षतीति गोपी बुद्धिस्तुर्यस्वरूपा तस्याः शान्त्यादिसखीः प्रति वाक्यं वचनमिन्दं वक्ष्यमाणं ज्ञेयमित्यर्थः, तद्वाक्यमुदाहृत्य दर्शयति ।

दृष्ट्या मया मधुरया कलितोऽधुनायं
यत्कामिनीजनमनोहरणो मुकुन्दः ।
तं चिन्तयामि हृदये न सुखं गृहेस्मिं-
स्तस्मिन्वने भवतु तेन सहैव वासः ॥ २ ॥

दृष्ट्येति । लोके तावदर्थो यः प्रसिद्धः कामिनीजनमनोहरणः कामिनीनां कृष्णेन सह भोगकामवतीनां गोपिकानां जनः समूहस्तस्य मनसो हरणो वशीकर्त्ता मुकुन्दो मुक्तिप्रदः श्रीकृष्णो मया राधाख्यया मधुरया सूक्ष्मप्रेमभावगर्भितया सुखरूपयेत्यर्थः, दृष्ट्या दृशाऽधुनेदानीमयं मत्पुरोवर्त्ती कलितो वशीकृतो दृष्टश्च तं साक्षाद्दृष्टमेव श्रीकृष्णं हृदये मनसि चिन्तयामि स्मरामि अतो मम मेऽतः परमस्मिन्प्रत्यक्षे गृहे वेश्मनि तत्कृत्ये च सुखं शर्म न विद्यते तर्हितः परं किमिच्छसीति चेत्तत्राह तस्मिन्निति, तस्मिन्यत्र दृष्टस्तत्रैव वने वृंदावने तेन श्रीकृष्णेन सहैव साकमेव वासः स्थितिर्भवतु अ-

स्तु इति प्रार्थयामीत्यर्थः। प्रकृतार्थे तु यः प्रसिद्धः 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिषु कामिनीजनमनोहरणः कामोभिलाष आत्मसुखविषयकः स यासु विद्यते ताः कामिन्य आत्मस्नेहवृत्तयस्तासां जनः समूहस्तस्य मन आत्मविषयकसंशयरूपान्तःकरणवृत्तिस्तस्य हरणः स्वविषयकनिश्चयोत्पादनेन नाशकोऽत एव मुकुन्दो मुक्तिप्रदः परमात्मा मया तुर्याख्यया बुद्ध्या मधुरया स्वात्मसुखानुभववृत्त्या सूक्ष्मया च दृष्ट्या दृश्यते साक्षादनुभूयत आत्मा यया सा दृष्टिरहं ब्रह्मास्मीति प्रमा रूपा वृत्तिस्तयाऽयं प्रत्यक्षपरोक्षत्वरहितो भागलक्षणया कलितो ज्ञातः प्राप्तश्च, अतोऽधुनेदानीं व्यवहारसमयेपीत्यर्थः, अहं तुर्या बुद्धिस्तं ब्रह्माभिन्नं प्रत्यगात्मानमेव हृदये हरति सर्वं द्वैतमिति हृदयमपवादस्तमयते प्राप्नोतीति तत्तथोक्तं सर्वद्वैतापवादावधिकान्तःकरणवृत्तिस्तस्मिंश्चिन्तयामि ध्यायामि अत एवास्मिन्प्रत्यक्षे गृहे गृह्यते स्वात्मतयाङ्गीक्रियत इति गृहं शरीरं तन्निमित्तो व्यवहारश्च तस्मिन्सुखं शर्म मम न न विद्यतेऽत इतः परं तस्मिन्नुपनिषदुक्ते वने वनषणसम्भक्तौ—इति प्रकृतिकत्वाद्वनशब्दस्य सम्भजने जीवब्रह्मैक्यचिन्तन इत्यर्थः, मम चिदाभासविशिष्टतुर्याख्यबुद्धेस्तेन प्रत्यगभिन्नपरमात्मना सहैव साकमेव वासः स्थितिर्भवतु अस्तु इति प्रार्थयामीत्येवं भाव एवैकं पत्रमिति भावः॥ २॥

एवं निजेच्छां सख्यग्रे प्रकटीकृत्येदानीं कृष्णसंगात्पूर्ववृत्तान्तमनुस्मृत्य राधिका सख्यग्रे निरूपयति।

गोपालिकास्मि चतुरा न च मे मनीषा<br>
देहाश्रिता विविधगोरसवासना मे।<br>
किम्वा विधेयमिति चिन्तयती स्थिताहं

तावद्बलान्मिलित एव मया मुकुन्दः ॥ ३ ॥

गोपालिकेति। अहं गोपालिकाऽऽभीरकुलोत्पन्ना ग्रामीणेत्यर्थः, अस्मि भवामि तथासत्यपि मे मम मनीषा बुद्धिः चतुरा चातुर्यवती न न विद्यते तत्रापि मे मम विविधगोरसवासना विविधोऽनेकप्रकारो दुग्धदधितक्रनवनीतादिरूपो गोरसस्तस्य वासना गन्धो देहश्रिता देहे शरीरे श्रिताऽऽश्रिताऽस्ति एते सर्वे दोषाः श्रीकृष्णचित्तरञ्जने प्रतिकूला एव मयि सन्ति अतः श्रीकृष्णचित्तरञ्जने मया किं विधेयं किं कर्त्तव्यमित्येवं चिन्तयती चिन्तां कुर्वत्यहं राधिका यावत्कालं स्थिता स्थितवती तावत्तत्कालमेव मुकुन्दो मुक्तिप्रदो भक्तानां श्रीकृष्णो मया सह बलात्स्वेच्छयैव मिलितः प्राप्तः। प्रकृतार्थे तु तुरीया बुद्धिः स्वात्मसाक्षात्कारात्पूर्ववृत्तान्तं स्वस्या अनुस्मरन्ती शान्त्यादिवृत्तीः प्रत्याह गोपालिकेति। अहं बुद्धिः प्रपञ्चनिश्चयात्मिकावृत्तिर्गोपालिका गा इन्द्रियाणि पालयति रक्षति असौ गोपालोऽहङ्कारो मोहो वा तस्य स्त्री तद्भोगकरणत्वाद्गोपालिकाऽस्मि भवामि मोहसंबद्धाऽहङ्कारसंबद्धा वेत्यर्थः, अत एव मे मम मनीषा मतिश्चतुराऽऽत्मानात्मविवेचने कुशला न न विद्यते च पुनर्मे मम विविधगोरसवासना विविधोऽनेकप्रकारो गवामिन्द्रियाणां रसः सुखं तस्य वासनेच्छा देहश्रिता देहे लिङ्गदेहे श्रिता लग्नाऽस्ति तिष्ठति एतादृश्यामात्मसाक्षात्कारप्रतिकूलसामग्र्यां मयि विद्यमानायां साध्ये स्वात्मसाक्षात्कारे मया किं वा विधेयं किं कर्त्तव्यमित्येवं चिन्तयती विचारं कुर्वती यावत्कालपर्यन्तं स्थिता स्थितवत्यस्मि तावत्तत्कालमेव बलात्स्वयमेव मुकुन्दो मुक्तिप्रदः प्रत्यगभिन्न परमात्मा मया तच्चिन्तावत्या तुर्याख्यबुद्ध्या सह मिलित एव प्राप्तः साक्षादनु-

भूत इत्यर्थः, इतीदं द्वितीयं पद्यं ज्ञेयम् ॥ ३ ॥

इदानीं स्वस्याः कृष्णेन सह रतिमदृष्टवतीनामपि सखीनां स्मितमुखान्यवलोक्य तत्र कारणं चानिश्चित्य विस्मितमुखी राधिका प्रियसखीं प्रत्याह।

एकाकिनी बत गतास्मि वने निशीथे
कुञ्जे निलीय रमणस्य रसो गृहीतः।
चित्रं भजामि कलयामि न तत्र हेतुं
सर्वाः प्रसन्नवदना यदिमा वयस्याः ॥ ४ ॥

एकाकिनीति। हे सखि एकाकिन्येकलाऽहं राधिका निशीथेऽर्धरात्रे अर्धरात्रनिशीथौ द्वा वि'त्यमरः' वने वृन्दावने गता यातास्मि बत हर्षेण ततस्तत्र कुञ्जे लताद्यावृतस्थाने 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः, निलीयान्तर्धाय लोकदर्शनाविषयीभूयेत्यर्थः, रमणस्य रतिसुखदातुः श्रीकृष्णस्य रस आनन्दो भोगसुखमिति यावद् गृहीतोऽङ्गीकृतस्तत्र श्रीकृष्णेन सह भोगसुखाङ्गीकारे यद्यस्मात्कारणादिमा एता मत्पुरो दृश्यमानाः सर्वाः समस्ता वयस्या मत्क्रीडासहायिन्यः सख्यः प्रसन्नवदनाः प्रसन्नं हास्यशोभितं वदनं मुखं यासां तास्तथोक्ताः सन्ति तं हेतुं कारणं न कलयामि न जानामि तासां मया सह गमनाभावे मत्कृतसम्भोगस्य तासामदर्शने च कुञ्जेन्तर्हितया मया कृष्णेन सह रतिसुखेऽङ्गीकृते चैतासां तज्ज्ञानं कथं संजातं तज्ज्ञानाभावे च सत्यपि मां दृष्ट्वैतासां मुखे स्मितं दृश्यतेऽतोऽत्र हेतुनिश्चयाभावे केवलं चित्रमाश्चर्यं भजामि सेवामि। प्रकृतार्थे तु इदानीं तुरीया स्वस्या ब्रह्मणा सहैक्यसुखानुभवे तदननुभवित्रीणां शान्त्यादिवृत्तीनां प्रसन्नतां लक्षीकृत्य

तत्कारणं चानिश्चित्य विस्मितवती सविकल्पसमाधिवृत्तिं प्रत्याहैकाकिनीति। हे सखि 'ओं खं ब्रह्मे'ति श्रुत्या ब्रह्मणः खाभिधानेन प्रतिपादनात्सह खेन वर्त्तत इति सखी ब्रह्मणा सह वर्तमाना वृत्तिः सविकल्पसमाध्याख्या तस्याः सम्बोधने हे सखि, वतेति तस्या एव कोमलसम्बोधनात्मकमव्ययं हर्षार्थकं वा, एकाकिन्यसहायिन्यद्वितीयेत्यर्थः, भूत्वेत्यध्याहार्यं, वने सम्भजनार्हे ब्रह्मणि वनधातोः सम्भजनार्थत्वात्तत्प्रकृतिको वनशब्दः, निशीथे गाढान्धकारतया विषयादर्शनमिव ब्रह्मण्यपि द्वितीयाऽदर्शनान्निशीथमिव निशीथं ब्रह्म तस्मिन्गता प्राप्ताऽस्मि भवामि 'या निशा सर्वभूतानामि'ति भगवदुक्तेः, ततः कुञ्जे कुं कुत्सितं मायां तत्कार्यं च जयति वशीकरोतीति कुञ्जमीश्वरतत्त्वं तस्मिन्निलीय तदाकारतां प्राप्य, यद्वा कु क्षेत्रं बुद्ध्यादिकं जयति स्ववशतया स्वस्वकार्ये प्रेरयतीति कुञ्जं ब्रह्माभिन्नं प्रत्यगात्मस्वरूपं तस्मिन्निलीयैकीभूय कुः पृथ्वी सा यथा बीजस्यानेकरूपेणाविर्भूतिकारणा तद्वदात्मनानात्वप्रतीतिसाधना बुद्ध्यादिक्षेत्ररूपा कुशब्देन ग्राह्यात्र, रमणस्य रमयति सुखयति जगदिति रमणं ब्रह्म तस्य 'एष ह्येवानन्दयाती'ति, श्रुतेः, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतेश्च रस आनन्दो 'रसो वै स' इति श्रुतेर्गृहीतोऽङ्गीकृतोऽनुभूत इत्यर्थः, तत्र मम ब्रह्म सुखानुभवे यद्यस्मात्कारणादेतासां शान्त्यादीनां लौकिकवृत्तीनां च मत्सहचारित्वाभावे सति मदनुभूतब्रह्मसुखस्य तासु प्रतीत्यभावे च सतीमा मम ब्रह्माकारायाः प्रकाश्यत्वेन दृश्यमाना वयस्या मत्समवयस्का विवेकसमय एव मत्सहितानां शान्त्यादिवृत्तीनामुत्पत्तेः शान्त्यादिवृत्तयः सर्वाः समाप्ताः प्रसन्नवदनाः प्रसन्नं निर्मलं रागादिहीनं वदनं 'चेतोमुख' इति

श्रुतेर्विषयभोगसाधनमग्रमेवात्र वदनं मुखं यासां तास्तथोक्ताः सन्ति तं हेतुं कारणमहं तुर्याख्या बुद्धिर्न कलयामि न जानामि किं च केवलं चित्रमाश्चर्यं भजामि सेवामि ममात्मसुखानुभवे सति मद्भिन्नानामेतासां कथमानन्दानुभव इति विस्मयामि केवलं तद्धेतुं न जानामीत्येव भावस्तुर्याख्यतुलस्यास्तृतीयं पत्रं ज्ञेयम् ॥४॥

ननु श्रीकृष्णभोगजन्यं सुखं कीदृशं तत्कथयेत्याशङ्क्य तस्यानिर्वचनीयत्वनिरूपणपूर्वकं चिह्नरेव तन्निरूपयति।

किं वर्णयामि पुरतः किल कस्य वर्ण्यं
किं वर्णितेन सखि वर्णयितुं न शक्यं।
अङ्गानि मे विगलितानि सहैव नीव्या
दष्टेऽधरे रतिरसे रतिनायकेन ॥ ५ ॥

किमिति। कस्य पुरतो यस्याग्रे वर्णनीयं तस्य तदनुभवाभावान्न कस्याप्यग्रे वर्णनीयमित्यर्थः, तथा कस्य वर्ण्यं वचनविषयं भवेन्न कस्यापीत्यर्थः, अनुभवितृवक्त्रोः क्रियाभेदेन कर्तृभेदादन्यानुभूतस्यान्येनकथनाशक्तेरनुभवित्रानुभूतस्य सुखस्य वक्तुर्वचनविषयत्वासम्भवादिति भावः, वर्णितेन श्रीकृष्णसंभोगजन्यसुखवर्णनेन कृतेनापि किं किं फलं न किमपि फलमित्यर्थः, अतो हे सखि हे आलि तत्सुखं वर्णयितुं वर्णनं कर्त्तुं न शक्यं न सामर्थ्यविषयमतः किं वर्णयामि कथं वर्णयामि न कथमपि वर्णयामीतियावद्, अत एव लक्षणेनैव तल्लक्ष्यमित्याशयेन श्रीकृष्णभोगसुखाविर्भावेऽस्यां लक्षणानि तत्कालीनान्याहाऽङ्गानीति, रतिनायकेन रतिसुखस्य पुरुषाधीनत्वाद्रतेर्मैथुनसुखस्य नायकः स्वामी श्रीकृष्णस्तेनाधरेऽधरोष्ठे दष्टे चुम्बिते सति ततो रतिरसे रतेर्मैथुनस्य रसः

सुखं तस्मिन्नाविर्भूत इति शेषः, मे मम नीव्याऽम्बरवस्त्र-बन्धेन सहैव साकमेवाङ्गानि हस्तपादादीनि विगलितानि शि-थिलानि जातानि एतनैव लक्षणेन श्रीकृष्णेन सह रतिसुखं जानीहि न तु तद्वचनेन निरूपयितुं शक्यमिति भावः, प्रकृता-र्थेपि तुरीया बुद्धिः स्वसमीपवर्त्तिनीं सविकल्पसमाधिरूपां वृत्तिं प्रति ब्रह्मसुखानुभवस्यावर्णनीयत्वनिरूपणपुरःसरं तत्सुखं स्वानुभूतं स्वस्यां तच्चिह्नैर्लक्षयति किमिति। कस्य पुरतो न क-स्यापीत्यर्थः, ब्रह्मसुखाकाराया मम द्वितीयाभावादिति भावः, तथा कस्य वक्तुस्तत्सुखं वर्ण्यं वर्णनविषयं भवेन्न कस्यापीत्यर्थः, 'यतो वाचो निवर्त्तन्त' इत्यादिश्रुत्या ब्रह्मसुखस्य वागविषयत्व-प्रतिपादना'न्नान्योतोस्ति द्रष्टे'त्यादिश्रुत्या वक्तुरप्यतः पृथगस-त्त्वप्रतिपादनाच्चेति भावः, अत एव किं वर्णितेन तद्वर्णनस्य प्र-लापत्वादुपहासास्पदेन तद्वर्णनेन कृतेनापि किं फलं न किम-पीत्यर्थः, व्यर्थश्रममात्रं तदिति भावः, अतो हे सखि तुर्यानुकू-ल्यान्मित्रत्वेन सविकल्पसमाधिमुद्दिश्य तुर्याख्यबुद्धिकृतं सम्बो-धनं योऽयं तत्सुखं वर्णयितुं वर्णनविषयीकर्तुं न शक्यं न सा-मर्थ्यविषयमस्ति अतः किं वर्णयामीत्युदासीनता वाक्प्रपञ्चे स्वस्याः दर्शिता ब्रह्मसुखानुसन्धानविरोधितया वाक्प्रपञ्च-स्येति दुःखरूपत्वेन निष्फलत्वेन चेति भावः, अतस्तच्चिह्नैनैव दर्शयति अङ्गानीति, रतिनायकेन रते रमणस्य सुखस्येत्यर्थः, नायकेन स्वामिना ब्रह्माभिन्नप्रत्यगात्मना 'एष ह्येवानन्दया-ती'ति श्रुत्या जगदानन्दयितृत्वप्रतिपादनात्सुखस्यात्माधीनत्वे-नात्मनस्तत्स्वामित्वमिति भावः, अपरे 'मनसैवेदमाप्तव्यमि'त्या-दिश्रुत्या वृत्तिव्याप्यत्वप्रतिपादनात्तस्या एव वृत्तेर्ब्रह्मणोऽधः-स्थितत्वात्तुर्याख्यबुद्धेर्ममांशत्वेनाधरत्वं तस्मिन्, यद्वा धातीति

धरः प्रपञ्चधारकोऽविवेकांशस्तस्मिन्दष्टे सति नाशिते सति, वृत्तिपक्षे स्पृष्टे सतीत्यर्थः, स्वैक्ये सम्पादिते सतीति वा, ततो रतिरसे रते रमणस्य प्रत्यगभिन्नब्रह्मज्ञानलक्षणक्रीडाया रसे सुखे निरतिशयानन्द आविर्भूते सतीति शेषः, मे मम तुर्याख्य-बुद्धेर्नीव्या सहैवाधरवस्त्रबन्ध इव वस आच्छादन इति धा-तोर्वस्त्रशब्दनिष्पत्तेस्तस्य चाच्छादनार्थत्वेन शरीरस्याप्यात्मा-च्छादकत्वेन वस्त्रसादृश्यात्तस्यात्मनश्च सम्बन्धहेतुत्वादहङ्कार एव नीवी सादृश्यान्नीवीशब्देनात्र ग्राह्यस्तेन सहैव साकमेवा-ङ्गानि अनुभवित्रनुभवानुभावितव्याख्यानि त्रिपुटीरूपाणि वि-गलितानि नष्टानि अन्यानि प्रसिद्धानि शरीराणि च नष्टानि अनेनैव लक्षणेन तत्सुखमनुमेयमिति भावः ॥ ५ ॥

इदानीं स्वस्याः कृष्णेन सह सम्भोगे पूर्वसुकृतमेव कारणं निश्चित्य सख्यग्रे निवेदयति ।

नन्वेतदेव सुकृतं फलितं मदीयं
यत्कामिनीषु रसलंपट एष कृष्णः ।
लक्ष्मीपतेरितरथा न भवेदकस्मा-
दस्मासु गोपवनितासु कथाप्रसङ्गः ॥ ६ ॥

नन्विति । एतत्कृष्णेन सह भोगफलकं मदीयं ममेदं मदीयं मत्पूर्वकृतमित्यर्थः, सुकृतमेव पूर्वजन्मकृतं पुण्यकर्मैव फलितं श्रीकृष्णभोगरूपेण परिणतं नन्विति वितर्कयामि कुत इत्यत आह यदिति, यद्यस्मात्कारणादेष मत्पुरोवर्त्ती श्रीकृष्णो भूमानन्दरूपं ब्रह्मैवास्ति ।

‘कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते’ ॥

इत्युक्तेस्तस्य च निष्कामेष्वेव साक्षाद्दृश्यत्वोक्तेरस्माकं सर्वदा दृश्यमानः, किञ्च कामिनीषु कामवतीषु अस्मासु मा- कृतस्त्रीषु रसलम्पटो रमः सुखमस्मत्सम्भोगजन्यं सुखं त- स्मिल्लम्पटो लुब्धोऽस्ति तस्मात्कारणादिति योज्यं, तदुक्त- मेव व्यतिरेकेण द्रढयति लक्ष्मीपतेरिति, इतरथाऽन्यथा ऽस्मत्सुकृतोदयाभाव इत्यर्थः, लक्ष्मीपतेरिति हेतुगर्भं विशेषणं स्त्रीलुब्धत्वं यदि श्रीकृष्णे यदि सम्भाव्यं तर्हि सर्वस्त्रीरत्नं ल- क्ष्मीस्तस्या ब्रह्मादिप्रार्थनीयत्वं प्रसिद्धं तथा सति तस्यास्तेषु चा- ञ्चल्यं प्रसिद्धं, तस्या एव श्रीकृष्णे स्थैर्यं दृश्यते शास्त्रेषु च लक्ष्मी- पतित्वं चास्य प्रसिद्धं, किञ्चास्य तस्यामुदासीनत्वादपि तत्स्थैर्य- मिति तस्य श्रीकृष्णस्याकस्माद्विना साधनानुष्ठानं तत्र हेतुर्गोपव- नितासु गोपानामाभीराणां वनितासु स्त्रीषु अस्मासु राधिका- द्यासु कथाप्रसङ्गः कथायां वार्त्तायामपि प्रसङ्गः संबन्धो न भ- वेन्न स्यात् किं पुनर्वक्तव्यं सम्भोगप्रसङ्गो न स्यादिति तस्मात्पू- र्वसुकृतमेव फलितमिति निश्चयः। प्रकृतार्थे तु तुर्या बुद्धिः स्वस्या ब्रह्मैक्याकारवृत्तिजन्यसुखानुभूते पूर्वानन्तजन्मसम्पादितसुकृतमेव कारणं निश्चित्य सविकल्पसमाधिमेव पुरोवर्तिनीं लक्ष्यीकृत्य तदग्रे निवेदयति नन्विति, एतत्स्वस्या जीवब्रह्मैक्यसुखाप्तिरूप- मिदं मदीयं ममेदं मदीयं मयैवानन्तजन्मसु सम्पादितमित्यर्थः, सुकृतं पुण्यमेव सम्पादितं फलितं जीवब्रह्मैक्यभावज्ञानरूपेण त- त्सुखावाप्तिरूपेण च परिणतं नन्वित्येवं निश्चिनोमि कुत इत्यत आह यदिति, एष मत्पुरः साक्षाद्दृश्यमानोऽयं कृष्णो ब्र- ह्मानन्दोऽस्ति।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥

इत्युक्तेस्तस्य तु निष्कामेष्वेवानुभूयमानत्वप्रसिद्धेरस्मासु अहंकारविशिष्टासु अत एव गोपवनितासु गा बुद्धिवृत्तीरात्मसत्त्वारोपेण पातीति गोपो बुद्धिवृत्तिपालकोऽहंकारस्तस्य वनितास्तद्भजनरता वयं तुर्याया अपि अहंकारसम्बन्धवत्त्वाद्गोपवनितात्वमन्यवृत्तिवदेव ज्ञेयं, वनधातोः सम्भजनार्थत्वाद्वनिताशब्दस्य च तत्प्रकृतिकत्वाच्चेतिभावः, तत्रापि कामिनीषु प्रारब्धशेषपर्यन्तं लोकविषयेच्छावतीषु निष्कामेष्वेव ब्रह्मसुखानुभवप्रतिपादनादिति भावः, यद्वा कामयितुं ब्रह्मसुखमर्थयितुं शीलं यासां तास्तथोक्तास्तासु स्वरूपसुखस्य नित्यप्राप्तत्वादपि तदिच्छापि तदनुभवे बाधकैवेति तत्कामवतीष्वपि तत्साक्षात्कारो दुर्लभ इति भावः, तदेव व्यतिरेकेण द्रढयति लक्ष्मीपतेरिति, इतरथाऽन्यथाऽस्मत्सुकृतफलोदयोन्मुखताभावे सतीत्यर्थः, लक्ष्मीपतेर्लक्ष्मीरत्र गुरुवाक्यस्थिता भद्रा ग्राह्या 'भद्रैषां लक्ष्मीर्निहिताधिवाची'ति श्रुतेस्तस्या मोक्षलक्ष्म्याः पतिः पालकः स्वामी परमात्मा तस्य मोक्षलक्ष्मीदातुः परमात्मनो गुरोश्चाकस्माच्छीघ्रं अस्मासु तुर्यादिनाम्नीषु गोपवनितासु बुद्धिवृत्तीरिन्द्रियाणि च पाति रक्षतीति गोपो महामोहोऽहङ्कारो वा तं वनन्ति सम्भजन्तीति गोपवनिता अज्ञानवृत्तयोऽहङ्कारसंबद्धाश्च तादृशीषु प्रारब्धपर्यन्तं सर्ववृत्तिष्वपीत्यर्थः, कथाप्रसङ्गः कथया वार्त्तया प्रसङ्गः संबन्धो न भवेत्तस्याचत्र किं वक्तव्यं साक्षादनुभवो न भवेदिति अतोत्र सर्वदा सर्ववृत्तिषु अस्माकमात्मानुभवेऽस्मत्सुकृतमेव कारणमिति निश्चेतव्यमिति भावः॥६॥

इदानीमेतत्तुरीयतुलसीपत्रैरात्मानुसन्धानलक्षणे पूजने फलितमाह।

तुरीयतुलसीपत्रैर्वनमाली सुपूजितः।

अस्मिन्वने महामिष्टं यत्फलं तत्प्रयच्छति ॥ ७ ॥

इति श्रीनरहरिकृतौ बोधसारे तुरीयतुलसीपत्रपूजा त्रयस्त्रिंशा ॥ ३३ ॥

तुरीयेति। अधिकारिशरीरं प्राप्य पुरुषेण तुरीयतुलसीपत्रैस्तुरीयमिव मोक्षफलदात्री तुलसी तस्याः पत्राणि दलानि तैः कृत्वा वनमाली वनमालाऽऽपादलम्बिनी माला स्रग्विद्यते यस्य स श्रीकृष्ण 'आपादलम्बिनीं मालां वनमालां विदुर्बुधा' इति कोशोक्तेः, सुपूजितः सुष्ठु प्रेम्णा पूजितोऽर्चितश्चेद्यदि तर्हीत्यध्याहार्यम्, अस्मिल्लोकप्रसिद्धे वने कर्माद्युपासनान्तलक्षणे सम्भजने यन्महामिष्टं प्रसिद्धमत्यन्तसुखरूपं फलं सर्वजन्मकृतकर्मणामुपासनानां च फलत्वात्तदेवफलं प्रेमलक्षणं तत्प्रयच्छति ददाति। प्रकृतार्थे तु अधिकारिणा तुरीयतुलसीपत्रैस्तुरीयाऽऽत्मसाक्षात्कारवती बुद्धिरेव तुलसीव विष्णुप्रियत्वादात्मप्रियत्वाच्च तस्याः पत्राणीव तद्वृत्तय उक्तलक्षणास्तै वनमाली वनं तुर्यबुद्ध्याऽऽत्मानुसन्धानलक्षणं भजनं तेन मालाते शोभते इति वनमाली तुर्यानुभूतः परमात्मा सुपूजितो नैरन्तर्येणानुसन्धत्तश्चेत्तर्हि अस्मिन्काण्डत्रयवेदप्रसिद्धे वने कर्मोपासनाज्ञानलक्षणे सम्भजने यद्विवेकिप्रसिद्धं महामिष्टं निरतिशयसुखस्वरूपं मोक्षाख्यं फलं तत्प्रयच्छति ददाति ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपे तुरीयतुलसीपत्रपूजार्थप्रकाशस्त्रयस्त्रिंशः ॥ ३३ ॥

---

अथ हेतुमालाहीरावली।

एवमात्मानुसन्धानरूपां तुरीयतुलसीपत्रपूजां निरूप्येदानीं ज्ञानवतां जन्माभावादिधर्माः शास्त्रेषु कथितास्तेषां हेतून्प्रतिपादयितुं तेषां बहुत्वेन च हीरकघटितमालेव कण्ठशोभा-

कारित्वाद्धेतुमालाहीरावल्याख्यं द्वाविंशतिश्लोकं प्रकरणं प्रारभमाण आह ।

अथ हेतुमालाहीरावली ।

अथेति । अथ तुरीयतुलसीपत्रपूजानिरूपणानन्तरं हेतुमालाहीरावली हेतूनां कारणानां माला स्रगेव हीरावली हीरकस्रगेतदाख्यं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, ननु ब्रह्मणि जन्माभावादिगुणाः श्रुत्युक्ताः सन्ति श्रुतीनां च सर्वप्रमाणशिरोमणित्वात्तदुक्तेऽर्थे प्रामाण्यमेवातः किन्तदर्थहेतुविचारेणेत्याशङ्क्याह ।

श्रुतिप्रामाण्यसिद्धेऽर्थे हेतुभिः किं तथापि हि ।
अपूर्वरचनात्मत्वादलङ्कारो महान्यतः ॥ १ ॥

श्रुतीति । श्रुतिप्रामाण्यसिद्धे श्रुतीनां स्वतः प्रमाणभूतानां वेदवाक्यानां प्रामाण्यं प्रामाणिकत्वं सर्वप्रसिद्धं तेन चोक्ते कथितेऽर्थे पदार्थे आस्तिकानां सर्वेषामपि निश्चयारूढत्वाद्धेतुभिः कारणप्रश्नैस्तन्निरूपणैश्च किं किं प्रयोजनं न किमपीत्यर्थः, तथापि हेतुनिरूपणस्य निष्प्रयोजनत्वेपि हि यतोऽपूर्वरचनात्मत्वादस्य प्रकरणस्यापूर्वा पूर्वाचार्यैर्निरूपितत्वाभावात्संग्रहेण नोक्ता रचना घटना यस्याः सा तथा भूताऽऽत्मा स्वरूपं यस्य प्रकरणस्य तस्य भावस्तत्त्वं तस्मादस्य प्रकरणस्य निरूपणेन साफल्यमस्तीति भावः, हेत्वन्तरमाहालङ्कार इति, यतः कारणादिदं हेतुमालानिरूपणं तद्वचनं च कण्ठे धृतेऽधिकारिणां महानतिश्रेष्ठोऽलङ्कारो भूषणं भवेदतोस्य निरूपणं सफलमेवेति भावः, [१]हेतुमाला निरूप्यत इति

१ हेतुमालायाः ।

वा पाठः, अतो हेतुमाला हेतूनां कारणानां माला स्रगिवैतत्प्रकरणं निरूप्यते प्रतिपाद्यत इत्यर्थः ॥ १ ॥

तत्रादौ ज्ञानिषु जन्माभावकथनस्य हेतुं दर्शयति ।

जन्म नामासतः सत्ता जातसाक्षात्कृतिर्मुनिः ।
सद्रूपतामेव गतस्तेन जन्म न विद्यते ॥ २ ॥

जन्मेति । असतोऽहंकारादेः सत्ता स्वात्मसत्तारोपेण सत्त्वप्रतीतिः स्वात्मतादात्म्यमित्यर्थः, जन्यं जननं नाम प्रसिद्धमस्ति तदुक्तं विद्यारण्यस्वामिभिः ।

सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ।
तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः ॥ इति ।

तथा सति जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिरद्वैतात्मसाक्षात्कारो यस्य स तथाभूतो मुनिर्मननवान्सद्रूपतां सतो ब्रह्मणो रूपमाकारस्तस्य भावस्तत्ता तां गत एव तेन हेतुना तस्य मुनेर्जन्म सदसदैक्यप्रतीतिरूपं जननं न विद्यते नास्तीति प्रतिपादितं श्रुतिभिरिति शेषः सर्वत्र कर्त्तव्यः ॥ २ ॥

इदानीं ज्ञानिषु मरणाभावप्रतिपादने हेतुं दर्शयति ।

प्राप्तवानमृतं ब्रह्म जातसाक्षात्कृतिर्मुनिः ।
अमृतं येन संप्राप्तं स मृतत्वं कथं व्रजेत् ॥ ३ ॥

प्राप्तवानिति । अमृतं न विद्यते मृतं मरणं यत्र तदमृतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु प्रत्यगभिन्नमात्मानमित्यर्थः, प्राप्तवाँल्लब्धवानत एव जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिर्मरणरहितात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञान्यस्ति अतो हेतोर्येन मुनिनाऽमृतं मरणरहितं ब्रह्म संप्राप्तं लब्धं

निःसंशयमहमिति स्वात्मत्वेनाङ्गीकृतमित्यर्थः, स मुनिर्मृतत्वं मरणभावं कथं केन प्रकारेण व्रजेत्प्राप्नुयात् ॥ ३ ॥

तत्रैव प्रकारान्तरेण हेत्वन्तरमाह।

मृतिः शरीरसंत्यागो जातसाक्षात्कृतिर्मुनिः।
शरीरं त्यक्तवान्पूर्वं मृतस्य मरणं किमु ॥ ४ ॥

मृतिरिति। मृतिर्लोकप्रसिद्धा शरीरसन्त्यागः शरीरस्य देहस्य सन्त्यागः सम्यक्त्यागो विसर्जनं प्रसिद्धा तथा सति जातसाक्षात्कृतिर्जातोद्भूता साक्षात्कृतिर्मरणरहितदेहाद्यतीतात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञानी शरीरं देहं पूर्वलोकप्रसिद्धमरणात्प्रागेव त्यक्तवान्विसृष्टवानतो हेतोर्मृतस्य त्यक्तदेहस्य मरणं मृत्युः किमु किमिव कथमिव न कथमपि भवतीत्यर्थः, अतो ज्ञानिनो मरणं नास्तीत्युक्तं ज्ञेयम् ॥ ४ ॥

इदानीं ज्ञानिषु कर्तृत्वाभावोक्तेर्हेतुं दर्शयति।

अहन्तया सहैवायं जातसाक्षात्कृतिर्मुनिः।
कर्तृत्वमत्यजत्तस्मात्कर्मभिर्न स लिप्यते ॥ ५ ॥

अहन्तयेति। जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिरहङ्कारातीतात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञान्ययं प्रकृतोऽहन्तया सहैवाहङ्कारेण साकमेव कर्तृत्वं कर्ता कर्मेन्द्रियैः सहितो विज्ञानमयस्तस्य भावस्तादात्म्यमत्यजत्त्यक्तवान्तस्माद्धेतोः स मुनिः कर्मभिः क्रियाभिर्न लिप्यते लिप्तो न भवतीति ज्ञेयम् ॥ ५ ॥

ननु कर्मभिर्ज्ञानिनां लेपो नास्तीत्युक्तं तत्र पापजनकैः कर्मभिर्लेपो माभूत्पुण्यकर्मभिस्तु स्यादेवेत्याशङ्क्य तैरपि ज्ञानिनां लेपो नास्तीति कथयन्तत्रापि हेतुं दर्शयति।

स्वयमेव पवित्रात्मा जातसाक्षात्कृतिर्मुनिः।
न च पुण्यैः पवित्रोऽसौ तेन पुण्यैर्न लिप्यते ॥६॥

स्वयमेवेति। जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिरात्मसाक्षात्कारो यस्य स तथाभूतो मुनिर्ज्ञानी स्वयमेव स्वत एव पवित्रात्मा पवित्रः पावन आत्मा स्वरूपं यस्य स तथाभूतोऽस्ति असौ ज्ञानी पुण्यैः पुण्यकर्मभिः पवित्रः पावनो न च नैव भवेत्तेन हेतुना पुण्यैः पवित्रकर्मभिर्न लिप्यते न लिप्तो भवति स्वतः पवित्रस्य ज्ञानिनो न पुण्यकर्मकृतपवित्रत्वलेप इति भावः ॥ ६ ॥

ननु तर्हि पापैरेव लेपोस्तु ज्ञानिनस्तत्राह।

अत्यन्तशुद्धरूपोऽसौ जातसाक्षात्कृतिर्मुनिः।
तत्करोति पवित्रं यत्तेन पापैर्न लिप्यते ॥ ७ ॥

अत्यन्तेति। जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिरात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञान्यसौ ज्ञान्यत्यन्तशुद्धरूपोऽत्यन्तमुत्कृष्टं शुद्धं निर्मलं रूपमात्मा यस्य स तद्विधोऽस्ति अतः यत्प्रसिद्धं शास्त्रविहितं कर्म शुद्धं निर्मलमस्ति तत्करोति आचरति तेन स्वतः शुद्धत्वेन हेतुना शुद्धकर्माचरणेन हेतुना च पापैः किल्बिषैर्न लिप्यते न लिप्तो भवति, यद्वा पापकर्मानाचरणं हेतुः शुद्धत्वे शुद्धत्वं च पापालेपे हेतुर्ज्ञेयः ॥ ७ ॥

इदानीं ज्ञानिषु हर्षाभावोक्तेर्हेतुं दर्शयति।

सहजानन्दरूपत्वाज्जातसाक्षात्कृतिर्मुनिः।
येन हृष्यति तन्नास्ति तस्मादेष न हृष्यति ॥ ८ ॥

सहजेति। सहजानन्दरूपत्वात्सहजः स्वाभाविको य आ-

न्दो निरतिशयसुखं स एव रूपं यस्य स तथोक्तस्तस्य भावस्तत्त्वं तस्माद्धेतोर्जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिरानन्दात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञानी येन पदार्थेन हृष्यति हर्षं प्राप्नोति तत्पदार्थजातं नास्ति न विद्यते ज्ञानिदृष्ट्या 'नेह नानास्ति किञ्चने'त्यादिश्रुत्या द्वैतजातस्य समस्तस्य बाधितत्वादिति भावः, तस्मात्स्वतः सुखरूपत्वादन्यस्य सुखकारणविषयस्यासत्त्वाद्धेतोश्चैष प्रकृतो ज्ञानी न हृष्यति हर्षं नाप्नोति स्वाभाविकानन्यरूपत्वं द्वैतासत्त्वं च हर्षाभावे हेतुद्वयं ज्ञेयम् ॥ ८ ॥

इदानीं ज्ञानिषु द्वेषाभावोक्तेर्हेतुं दर्शयति ।

नापकर्त्तुं क्षमः कश्चिज्जातसाक्षात्कृतेर्भवेत् ।
अपकर्त्तुरभावेन स तु न द्वेष्टि कंचन ॥ ९ ॥

नेति । जातसाक्षात्कृतेर्जातोत्पन्ना साक्षात्कृतिः स्वात्मसाक्षात्कारो यस्य स तथाविधस्तस्य मुनेर्ज्ञानिनोऽपकर्त्तुमपकारं कर्त्तुं क्षमः समर्थः कश्चित्कोपि न न विद्यते निर्विकारात्मस्वरूपत्वाज्ज्ञानिनोऽपकर्त्तुरपि पृथगसत्त्वाच्चापकर्तुरप्यात्मत्वाच्चेति भावः, अतोऽपकर्त्तुरभावेनापकारकारिणोऽसत्वेन हेतुना स तु ज्ञानी तु कञ्चन कमपि न द्वेष्टि नाप्रियं मनुते ॥ ९ ॥

इदानीं ज्ञानिनां शोकाभावोक्तेर्हेतुं सोपपत्तिकं दर्शयति ।

अप्राप्यमवशिष्टं किं जातसाक्षात्कृतेर्मुनेः ।
हानिर्नास्ति ततो हेतोर्न शोचति कदाचन ॥ १० ॥

अप्राप्यमिति । जातसाक्षात्कृतेर्जातोत्पन्ना साक्षात्कृतिः सर्वात्मसाक्षात्कारो यस्य तस्य मुनेरप्राप्यं न प्राप्तुं लब्धुं योग्यमप्राप्यमवशिष्टमुर्वरितं किं किं वस्तु अस्ति न किमपी-

त्यर्थः, सर्वात्मप्राप्त्यैव सर्वप्राप्तिसिद्धेरिति भावः, अतो हानिर्नाशो ज्ञानिनो नास्ति न विद्यते ततस्तस्माद्धेतोः कारणात्कदाचन कस्मिन्नपि समये न शोचति शोकं न करोति ॥ १० ॥

इदानीं ज्ञानिषु इच्छाभावोक्तेर्हेतुं दर्शयति ।

केनाप्येष प्रकारेण जातसाक्षात्कृतिर्मुनिः ।
ब्रह्म सर्वात्मकं प्राप्य न कांक्षति किमप्युत ॥ ११ ॥

केनापीति । एष प्रकृतो जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिः स्वात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्मननवान्सर्वात्मकं सर्वस्य द्वैतजातस्यात्मा तत्त्वं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु प्राप्य लब्ध्वा केनापि प्रकारेण केनापि हेतुना किमपि किञ्चिदपि वस्तु न काङ्क्षति नेच्छति ॥ ११ ॥

इदानीं ज्ञानिषु भयाभावोक्तेर्हेतुं दर्शयति ।

न ह्यन्यो बलवान्कश्चिज्जातसाक्षात्कृतेर्भवेत् ।
यस्माद्बिभेति तन्नास्ति तस्मादेष बिभेति न ॥ १२ ॥

नहीति । जातसाक्षात्कृतेः जातोत्पन्ना साक्षात्कृतिर्निर्भयात्मसाक्षात्कारो यस्य तस्याऽन्यो द्वितीयः कश्चित्कोपि बलवान्बली न भवेन्न स्याद्धि प्रसिद्धमेतत्सर्वविवेकिषु यस्मात्पुरुषाद्व्याघ्रादेर्वा बिभेति ज्ञानी भयं प्राप्नोति तत्पुरुषजातं व्याघ्रादिकं वा नास्ति न विद्यते 'नेह नानास्ति किञ्चने'ति श्रुत्या सर्वस्य द्वैतजातस्य बाधितत्वादिति भावः, 'द्वितीयाद्वै भयं भवती'ति श्रुत्या द्वितीयस्य भयहेतुत्वप्रतिपादनाच्चात्मनोन्यस्य निर्बलत्वाच्चेति तस्माद्धेतोरेष ज्ञानी न बिभेति न भयं प्राप्नोति ॥ १२ ॥

इदानीं ज्ञानिषु विषादाभावोक्तेर्हेतुं दर्शयति ।

यदस्य कार्यं परमं जातसाक्षात्कृतेर्भवेत् ।
तत्सर्वमेव संसिद्धं न तस्मात्स विषीदति ॥ १३ ॥

यदिति । अस्य प्रकृतस्य जातसाक्षात्कृतेर्जातोत्पन्ना साक्षात्कृतिः स्वात्मसाक्षात्कारो यस्य तस्य मुनेर्ज्ञानिनो यत्सर्वशास्त्रेषु विद्वत्सु च प्रसिद्धं परमं श्रेष्ठं मुख्यमित्यर्थः, कार्यं कर्त्तव्यं साध्यमित्यर्थः, तत्कार्यं सर्वं समस्तमपि संसिद्धं फलितमेव न त्ववशिष्टं किञ्चिदपि कार्यमस्ति आत्मज्ञाने सर्वकर्मसमाप्तेः, तदुक्तं भगवता ।

'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत' इति ।

तस्मात्सर्वकर्मफलभूतज्ञानोत्पत्तेर्हेतोः स ज्ञानी न विषीदति विषादं न प्राप्नोति ॥ १३ ॥

इदानीं ज्ञानिषु मानाभावोक्तेर्हेतुं दर्शयति ।

मान्यस्तु पद्मजादीनां जातसाक्षात्कृतिर्मुनिः ।
मानितो यदि लोकेन स तु मानं न विन्दति ॥ १४ ॥

मान्यस्त्विति । जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिर्ब्रह्मादिमान्यात्मसाक्षात्कारो यस्य स तथाविधो मुनिर्मननशीलो ज्ञानीत्यर्थः, पद्मजादीनां पद्मात्कमलाज्जात उत्पन्नः पद्मजो ब्रह्मा स आदिर्मुख्यो येषां विष्ण्वादीनां तेषां मान्यस्तु मानितुं योग्य एवास्ति स ज्ञानी लोकेन सामान्यजनेन यदि यर्हि मानितः पूजितस्तर्हि स तु ज्ञानी तु मानं पूज्यत्वाभिमानं न विन्दति न प्राप्नोति नाङ्गीकरोतीत्यर्थः, यथा सूर्यस्य स्वतः प्रकाशरूपस्य लोकैः पूजायां दीपोज्ज्वलने कृतेऽपि तत्प्रकाशानङ्गीकार इव ज्ञानिन आत्मरूपत्वेन ब्रह्मादि-

मान्यत्वस्य स्वतः सिद्धत्वाल्लोककृतपूजाऽन्यमानविकारानङ्गीकरणमिति भावः ॥ १४ ॥

इदानीं ज्ञानिनोऽपमानाभावोक्तेरपि हेतुं दर्शयति ।

मान्य एव सुरेन्द्राणां जातसाक्षात्कृतिर्मुनिः ।
न मानितो यदि जनैरपमानं न विन्दति ॥ १५ ॥

मान्य इति । जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिर्ब्रह्मादिमान्यात्मसाक्षात्कारो यस्य स तथा भूतो मुनिर्ज्ञान्यात्मत्वात्सुरेन्द्राणां सुराणां देवानामिन्द्रा ईश्वरा ब्रह्मादयस्तेषां मान्य एव पूज्य एवास्ति अतो यदि यर्हि जनैः सामान्यलोकैर्न मानितो न पूजितस्तर्हि सोपमानमनादरं न विन्दति न प्राप्नोति ॥ १५ ॥

इदानीं ज्ञानिषु शत्रुमित्रयोः समदृष्टित्वोक्तेर्हेतुं दर्शयति ।

उपकारापकारौ हि जातसाक्षात्कृतेर्मुनेः ।
शक्यौ न केन चित्कर्त्तुं तुल्यो मित्रारिपक्षयोः ॥ १६ ॥

उपकारेति । जातसाक्षात्कृतेर्जातोत्पन्ना शत्रुमित्रत्वरहितात्मसाक्षात्कृतिर्यस्य तस्य मुनेर्ज्ञानिनो हि यस्मात्कारणादुपकारापकारावुपकारः कस्मिंश्चिदपि कार्ये साहाय्यमपकारश्च कस्मिन्नपि कार्ये प्रतिकूलता तौ केन चित्केनापि पुरुषेण कर्त्तुमाचरितुं न शक्यौ न सम्भाव्यावतो ज्ञानी मित्रारिपक्षयोर्मित्रं हितकारि अरिश्चाहितकर्त्ता शत्रुस्तयोः पक्षावनुकूलप्रतिकूलाचरणरूपौ तयोस्तुल्यः समः ॥ १६ ॥

इदानीं स्तुतिनिन्दाजन्यविकारानङ्गीकारोक्तेर्ज्ञानिषु हेतुं दर्शयति ।

गुणदोषदशातीतं जातसाक्षात्कृतिर्मुनिः ।

प्राप्तवान्परमं धाम तुल्यनिन्दास्तुतिर्हि सः ॥ १७ ॥

गुणेति । जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिर्गुणदोषरहितात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञानी गुणदोषदशातीतं गुणाश्चोत्तमाः शौचादयो दोषाश्चाशौचादयो दैवासुरीप्रकृतिरूपास्तेषां दशा अवस्थाः शुचित्वाशुचित्वादिरूपास्ताभ्योऽतीतं विमुक्तमत एव परमं कार्यकारणातीतं धाम स्वरूपं प्राप्तवाँल्लब्धवान् हि यतः कारणात्स ज्ञानी तुल्यनिन्दास्तुतिस्तुल्ये निरर्थकत्वेन समे निन्दा गर्हा स्तुतिश्च प्रशंसनं च यस्य स तथोक्तो भवति ॥ १७ ॥

इदानीं ज्ञानिषु अनिकेतत्वोक्तेर्हेतुं दर्शयति ।

गेहादिममता नास्ति जातसाक्षात्कृतेर्मुनेः ।
तेनानिकेत इत्युक्तो यत्र सायं गृहो मुनिः ॥ १८ ॥

गेहादीति । जातसाक्षात्कृतेर्जातोत्पन्ना साक्षात्कृतिः स्वात्मसाक्षात्कारो यस्य स तथोक्तस्तस्य मुनेर्ज्ञानिनो गेहादिममता गेहं गृहमादि मुख्यं येषु पुत्रदारादिषु तेषु ममता मदीयत्वाभिमानो नास्ति न विद्यतेऽतो मुनिर्ज्ञानी यत्र यस्मिन्स्थाने सायं सायंकालो भवति तत्रैवेत्यध्याहार्यं गृहो गृहं मन्दिरं यस्य स तथोक्तो मतुबर्थेऽच्प्रत्ययः, भवति तेन हेतुनाऽनिकेतो न विद्यते निकेतं गृहं यस्य स तथोक्त इत्येवमुक्तः कथितः ॥ १८ ॥

इदानीं ज्ञानिषु निर्योगक्षेमत्वोक्तेर्हेतुं दर्शयति ।

अप्राप्तं प्राप्तवान्बोधं जातसाक्षात्कृतिर्मुनिः ।
स तु न क्षीयते तेन निर्योगक्षेम आत्मवान् ॥ १९ ॥

अप्राप्तमिति । जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृति-

निर्योगक्षेमात्मसाक्षात्कारो यस्य स तथोक्तो मुनिर्ज्ञान्य-प्राप्तं न प्राप्तो लब्धोऽप्राप्तस्तत्स्वरूपत्वाद्बोधं ज्ञानं प्राप्तवाल्लँ-ब्धवानप्राप्तप्राप्तेरेव योगशब्देन प्रतिपादनादिति भावः, स तु स बोधश्च न क्षीयते न विनश्यति तेन हेतुना प्राप्तपरिर-क्षणस्यैव क्षेमशब्दार्थत्वप्रतिपादनेनेत्यर्थः, आत्मवानात्मसाक्षा-त्कारवान्निर्योगक्षेमो निर्गतौ निवृत्तौ योगक्षेमचिन्ते यस्य स तथाविधोऽस्ति ॥ १९ ॥

ननु ज्ञानिनः स्तुतिनिन्दयोः समत्वे किं तत्स्तुत्या प्रयोजनं तत्रेत्याशङ्क्याह ।

समो यद्यपि सर्वत्र जातसाक्षात्कृतिर्मुनिः ।
तथापि तत्स्तावकस्य मम स्तुतिफलं महत् ॥२०॥

सम इति । जातसाक्षात्कृतिर्जातोत्पन्ना साक्षात्कृतिः स-मात्मसाक्षात्कारो यस्य स तथाविधो मुनिर्ज्ञानी यद्यपि यद्य-पि सर्वत्र स्तुतिनिन्दयोः सर्वपदार्थेषु च सम एकरूप एवाऽस्ति तथापि तथा सत्यपि तत्स्तावकस्य तस्य मुनेः स्तावकस्य स्तु-तिकर्तुर्मम मे स्तुतिफलं मत्कृतस्तवनस्य फलं पुण्यरूपं प्र-योजनं महच्छ्रेष्ठमस्ति मद्भावनयैव तत्सिद्धेः, तथा च श्रुतिः, ‘उपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि’ति ॥ २० ॥

इदानीमस्य प्रकरणस्य प्रयोजनकथनपुरःसरं कण्ठे धा-रणं विधत्ते ।

हेतुमालामयी धार्या कण्ठे हीरावली बुधैः ।
अपूर्वरचनात्मत्वादलङ्कारो महान्यतः ॥ २१ ॥

इति श्रीनरहरिकृतौ बोधसारे हेतुमालाहीरावली चतुस्त्रिंशा ॥ ३४ ॥

हेतुमालामयीति । बुद्धैर्विवेकिभिर्हेतुमालामयी हेतूनां

कारणानां माला पङ्क्तिस्तन्मयी तत्प्रचुरा हीरावली वज्रमणिस्रगियं कण्ठे गले धार्या धर्तुं योग्यास्ति कुत इत्यत आहापूर्वेति, यतः काव्यादपूर्वरचनात्मत्वादपूर्वाऽत्याश्चर्यरूपा रचना घटना सैवात्मा स्वरूपं यस्याः सा तथोक्ता तस्य भावस्तत्त्वं तस्मादयमेतत्प्रकरणरूपो महानतिश्रेष्ठोऽलंकारो भूषणं भवेदत एव तस्याः कण्ठ धारणं विहितमिति भावः ॥ २१ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ हेतुमालाहीरावल्यर्थप्रकाशश्चतुस्त्रिंशः ॥ ३४ ॥

---

अथ कैवल्यकुञ्चिका।

इदानीं श्रीगुरुः परमकारुणिकत्वेन जिज्ञासुजनोद्धरणाय तेषामेव कैवल्यपदप्राप्तये कैवल्यकुञ्चिकाख्यं द्वात्रिंशच्छ्लोकं प्रकरणमारभमाण आह।

## अथ कैवल्यकुञ्चिका।

अथेति। अथ हेतुमालाहीरावलीनिरूपणानन्तरं कैवल्यकुञ्चिका कैवल्यस्य मोक्षस्य कुञ्चिकाऽज्ञानकपाटोद्घाटनाय कारणत्वात्कुञ्चिकेव कुञ्चिकैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तत्रादावेतत्प्रकरणश्रवणे शिष्यं संमुखीकरोति।

कैवल्यकुञ्चिकां तात त्वं सम्यगवधारय।
उद्घाटय कपाटं च बोधरत्नं करे कुरु ॥ १ ॥

कैवल्येति। हे तात हे शिष्य त्वं भवान्कैवल्यकुञ्चिकां कैवल्यस्य मोक्षस्य कुञ्चिकेव कुञ्चिकैतन्नामकं प्रकरणमित्यर्थः, सम्यग्दृढं यथा भवति तथाऽवधारय शृणु भरेत्यर्थः, सम्यग्धृत्वा

च किङ्कार्यं तदाहोद्धाटयेति, त्वं तया कैवल्यकुञ्चिकया कपाटं कं सुखं पाटयति आवृणोति तत्कपाटमज्ञानं, यद्वा कं सुखं पाटयति छिनत्ति तत्कपाटमहंकारस्तमुद्घाटय निवारय ततश्च बोधरत्नं बोधस्वरूपं रत्नं स्वयं प्रकाशरूपं ब्रह्म करे हस्तेऽपरोक्षमित्यर्थः, कुरु कर्त्तव्यमित्यर्थः ॥ १ ॥

एवं शिष्यं संमुखीकृत्य तत्रादौ दृष्टश्रुतानुभूतेषु सर्वपदार्थेषु पञ्चधा शकलीकरणं विधत्ते ।

दृष्ट्या श्रुत्याऽनुभूत्या वा यो यो भावः परिस्फुरेत् ।
तं भावमविलम्बेन पञ्चधा शकलीकुरु ॥ २ ॥

दृष्ट्येति । दृष्ट्या चक्षुषा श्रुत्या श्रवणेनाऽनुभूत्याऽनुभवेन वा यो यो घटः पटो वा पदार्थः परिस्फुरेत्प्रकाशयेत तं तं तमित्यावृत्तिः कार्या तं तं घटपटादिरूपं भावं पदार्थमविलम्बेन स्मरणादिस्फुरणसमकालमेव पञ्चधा पञ्चप्रकारं यथा भवति तथा शकलीकुरु खण्डभावेन सम्पादय ॥ २ ॥

तान्येव शकलानि पञ्च स्वयमेव कृत्वा दर्शयति ।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्म रूपं मायारूपं ततो द्वयम् ॥ ३ ॥

अस्तीति । अस्ति विद्यत इत्येवं शकलमेकं, भाति प्रकाशत इति द्वितीयं शकलं, प्रियं सुखमित्येवं तृतीयं, रूपमाकृतिरित्येवं चतुर्थं, नाम तु नामापि वाचकशब्द इत्येवं पञ्चमोंशः, इत्येवमंशपञ्चकमंशानां शकलानां पञ्चकं पञ्चसमूहस्तत्रैवमंशपञ्चकं प्रदर्श्येदानीं तेषु मायाब्रह्मणोरंशान्विभज्य दर्शयति आद्यमिति, आद्यमादौ प्रथमं भवमाद्यमस्ति भाति प्रियमिति त्रयं त्रिकं ब्रह्मरूपं ब्रह्मणो रूपं स्वरूपं ज्ञेयं ब्रह्मणः

सच्चिदानन्दरूपत्त्वादिति भावः, ततोऽनन्तरं द्वयं द्विकं नामरूपसंज्ञं मायारूपं मायायाः सदसद्रूपशक्ते रूपं स्वरूपमस्तीति ज्ञेयम् ॥ ३ ॥

तत्र नामरूपाभ्यामस्पृष्टं ब्रह्म लक्षयितुं तयोरसत्त्वं दर्शयति।

नामरूपे तु नैव स्तस्तत्र हेतुं वदाम्यहम् ।
नाम तु व्यवहारार्थं कल्पितं न तु वास्तवम्॥४॥

नामेति । नामरूपे तु नाम सर्वपदार्थानामभिधानं रूपं चाकारस्ते द्वे अपि तुपदेन ब्रह्मांशत्रयाद्विविक्तत्त्वं नामरूपयोः सूचितं ज्ञेयं, नैव स्तः सती नैव भवतः कुत इत्याशङ्क्य तत्र हेतुनिरूपणं प्रतिजानीते तत्रेति, तत्र नामरूपासत्त्वे हेतुं कारणमहं वदामि कथयामि तत्र प्रतिज्ञाते नामरूपासत्त्वहेतुनिरूपणे प्रथमं नाम्नोऽसत्त्वहेतुं प्रदर्शयति नाम त्विति, नाम तु रूपतो विलक्षणं विविक्तं सदभिधानं व्यवहारार्थं व्यवह्रियते व्याप्रियतेऽनेनेति व्यवहारो व्यापारः स एवार्थः प्रयोजनं यस्य तत्तथाभूतं कल्पितमारोपितं कल्पनया स्थापितमित्यर्थः, अस्ति न तु वास्तवं नैव सत्यं लोकेपि कल्पितस्य रज्जुसर्पादेरसत्त्वदर्शनादिति भावः ॥ ४ ॥

एवं नामासत्त्वे कल्पितत्वं हेतुं प्रदर्श्य तदेव द्रढयितुं तत्रैव हेत्वन्तरमाह ।

घटो न घो नापि च टस्तावुभौ यत्खमाश्रितौ ।
घः कण्ठ्यष्टश्च मूर्धन्यस्तावुभावपि नैकदा ॥ ५ ॥

घट इति । घटो घटपदवाच्यो मृद्विकारः पृथुबुध्नोदराकारो दृश्यमानो न घो घकारो न न भवति च पुनष्टष्टकारवर्णरूपोपि न न भवति अतो मृद्विकारे घकारटकारयो-

रदृश्यमानत्वात्तद्घटितनाम्नस्तत्र कल्पितत्वं निश्चेतव्यमिति भावः, तत्रैव हेत्वन्तरमाह तावुभाविति, यद्यस्मात्कारणात्तौ घकारटकारावुभौ द्वौ खमाकाशमाश्रितावाश्रित्य स्थितौ तयोर्वाग्रूपत्वाद्वाचश्चाकाशकार्यत्वादाकाशस्यापि शून्यरूपत्वात्तयोरपि तथात्वेनासत्त्वमितिभावः, तयोरपि स्वस्मिन्नेवासत्त्वेऽन्योन्योच्चारसमये व्यावृत्तत्वं दर्शयति घ इति, घः कवर्गीयो घवर्णः कण्ठ्यः कण्ठे गले भवः कण्ठ्यः कण्ठस्थानजन्योऽस्ति टश्च टकारोपि मूर्धन्यो मूर्ध्नि भवो मूर्धास्थानोत्पन्न इत्यर्थः, अत एव तौ घकारटकारावुभावपि द्वावपि एकदैकस्मिन्समये न न विद्येते तयोरन्योन्यत्वाभावे विद्यमाने तद्घटितनाम्नोऽसत्त्वं स्वस्मिन्नपि सिद्धमिति भावः ॥ ५ ॥

उक्तं घटनामासत्त्वमन्यत्राप्यतिदिशति ।

एवं नामानि सर्वाणि रूपमङ्ग विचारय ।
घटस्तु पृथिवीरूपं सा जडा जलरूपिणी ॥ ६ ॥

एवमिति । एवमनेन प्रकारेण सर्वाणि समस्तानि ब्रह्मादिपिपीलिकान्तपदार्थानां नामानि अभिधानानि कल्पितानि ज्ञेयानि, एवं नाम्नोऽसत्त्वं प्रदर्श्येदानीं रूपस्यापि तथात्वं दर्शयितुं तच्छ्रवणे शिष्यमभिमुखीकरोति रूपमिति, हे अङ्ग हे शिष्य त्वमिदानीं रूपमाकारं विचारय वक्ष्यमाणविचारेण जानीहि तमेव विचारमभिनीय दर्शयति घट इति, घटस्तु नाम्नो विविक्तो घटपदवाच्यो घटः पृथुबुध्नोदराकारवान्दृश्यमानः पदार्थस्तस्य च तत्कारणभूतपृथिव्याः सकाशात्पृथगसत्त्वात्पृथिवीरूपं पृथिव्या भूमेरेव रूपमाकृतिरस्ति कार्यस्य कारणानन्यत्वादेवं सर्वत्र, सा पृथिवी जडाऽचिद्रूपा ऽनेना-

प्रकाशरूपेण रूपस्यासत्त्वमुक्तं सर्वरूपोपलक्षणमेतत्सा पृथिवी जलरूपिणी जलमुदकमेव रूपमस्याः सा तथोक्ता जलकार्यत्वात्पृथिव्यास्तत्कारणभूतजलव्यक्तिभिन्नव्यक्त्यभावो ज्ञेय इति भावः, भूमेर्जलकार्यत्वे श्रुतिः 'अद्भ्यः पृथिवी'ति ॥ ६ ॥

ननु जलस्य शुक्लरूपत्वं प्रतीयते तदेव पारमार्थिकमस्तु नेत्याह ।

तेजसो जलमुत्पन्नं तद्वायोः स च खोद्भवः ।
खादि सर्वमहङ्कारात्स च प्रकृतिसम्भवः ॥ ७ ॥

तेजस इति । तेजसोऽग्नेः सकाशाज्जलमुदकमुत्पन्नं जातमास्ति तेजसो जलस्य पृथगसत्त्वं तत्कार्यत्वादिति भावः, तर्हि तेजस एव पारमार्थिकत्वमस्तु तत्राह तदिति, तत्तेजो वायोः सकाशादुत्पन्नं सम्भूतं तस्यापि वायुकार्यत्वाद्वायुव्यतिरिक्तं रूपं नास्तीति भावः, तर्हि वायोरेव पारमार्थिकत्वमस्तु तत्राह स चेति, स च वायुरपि खोद्भवः खादाकाशादुद्भव उत्पत्तिर्यस्य स तथोक्तोऽस्ति तस्यापि शून्यरूपाकाशतः पृथक्सत्त्वं नास्तीति भावः, तर्ह्याकाशस्यैव पारमार्थिकत्त्वमस्त्वित्याशङ्क्याह खादीति, खादि खमाकाशमादि प्रथमं यस्य तत्खादि सर्वं समस्तं जगदहङ्कारादहङ्कारतत्त्वादुत्पन्नमिन्द्रियाणि विषया देवाश्च भूतानि सर्वपदेन ग्राह्यास्ते सर्वे त्रिगुणात्माहङ्कारादुत्पन्ना अहङ्कारात्पृथक्सत्त्वं सर्वेषां नास्तीति भावः, तर्हि तस्यैव सत्त्वमस्तु तत्राह स चेति, स चाहङ्कारोऽपि प्रकृतिसम्भवः प्रकृतेः सर्वजगत्कारणभूतपरमात्मशक्तेः सम्भव उत्पत्तिर्यस्य स तथोक्तोऽस्ति अहङ्कारस्यापि प्रकृतिकार्यत्वान्न तस्य ततः पृथक्सत्त्वमिति भावः ॥ ७ ॥

ननु तर्हि प्रकृतेरेव सत्त्वमस्तु तत्राह ।

---

१ रूपमात्रो

गुणात्मा प्रकृतिर्माया माया मय्येव नास्ति सा।
नामरूपे ततो न स्तोऽथास्तीत्यादि विचारय ॥८॥

गुणात्मेति। गुणात्मेति हेतुगर्भं विशेषणं प्रकृतिः सर्वजगदुपादानभूता परमात्मशक्तिर्गुणात्मा गुणाः सत्त्वरजस्तमोभिधास्त आत्मा स्वरूपं यस्याः सा तथोक्ताऽस्ति तेषां च गुणानामन्योन्यव्यावृत्तत्वेनासत्त्वात्सा प्रकृतिर्माया स्वतोऽसद्रूपत्वेन मायाऽनिर्वचनीयाऽतः सा त्रिगुणसाम्यावस्थारूपा प्रकृतिर्मिथ्याभ्रमरूपाऽतः सा सच्चिदानन्दरूप आत्मनि मयि नास्त्येव नैव विद्यते ब्रह्माभिन्ने प्रत्यगात्मनि तस्या असत्त्वमेवेत्यर्थः, उक्तं नामरूपासत्त्वमुपसंहरति नामरूपे त्विति, ततस्तस्मात्कारणान्नामरूपे नामाभिधानं रूपं चाकारस्ते द्वे न स्तो न विद्यत इति सिद्धमिति भावः, एवं नामरूपासत्त्वं निरूप्येदानीं पूर्वांशत्रयविचारे शिष्यं प्रेरयति अथेति, हे शिष्य त्वमथ नामरूपासत्त्वविचारानन्तरमस्तीत्यादि अस्ति सत्तेत्येवं विभाग आदिर्यस्य तत्तथोक्तमस्तीत्यादित्रिकमित्यर्थः, विचारय विवेचय ॥ ८ ॥

तदेव शकलीकरणं स्वयमभिनीय दर्शयति।

अस्ति सत्ता भाति चिच्च प्रियमानन्दलक्षणम्।
सच्चिदानन्दरूपं तत्कैवल्यमवशिष्यते ॥ ९ ॥

अस्तीति। अस्ति सत्तेत्येवमंश एक स ब्रह्मणः सत्ता ज्ञेया, भातीत्यंशश्चिद्ब्रह्मणश्चेतनता ज्ञेया, प्रियं च प्रियमित्यंशोपि आनन्दलक्षणं ब्रह्मण आनन्दरूपत्वस्य लक्षणं चिह्नं ज्ञेयं, तत्सत्ता चितिः प्रियं चेत्यंशत्रयं सच्चिदानदरूपं सत्कालत्रयाबाध्यं चिच्चेतनमानन्दः सुखं चेत्येतत्त्रयमभिन्नं रूपमाकृतिर्यस्य त-

त्तथोक्तं कैवल्यमखण्डैकरसं ब्रह्मावशिष्यते नामरूपबाधेनावशिष्टमनुभूयते ॥ ९ ॥

इदानीं सच्चिदानन्दलक्षणस्य ब्रह्मणो नामरूपतो विवेचनं यदर्थमुक्तं तदाह।

समाधिस्तत्र कर्त्तव्यो ह्ययमर्थानुवेधितः।
अथ शब्दानुविद्धं तु समाधिं कथयामि ते ॥१०॥

समाधिरिति। तत्र सच्चिदानन्दरूपे ब्रह्मणि समाधिरन्तःकरणवृत्तेः सच्चिदानन्दमात्राकारः परिणामः कर्त्तव्यः कार्यः, एवं लक्षणसमाधेः साध्यतां विधाय तद्भेदं दर्शयितुमुक्तसमाधेरभिधानमाहायमिति, अयमुक्तलक्षणः समाधिरर्थानुवेधितोऽर्थो रूपं तेनानुविद्धत्वादर्थद्वारा वानुविद्धत्वादर्थानुविद्धनामा समाधिर्ज्ञेयः, समाध्यन्तरं निरूपयितुं प्रतिजानीतेऽथेति, अथार्थानुविद्धसमाधिनिरूपणानन्तरं तु ततो विलक्षणं शब्दानुविद्धं शब्दद्वारानुविद्धः सिद्धस्तं समाधिं समाधानं ते तव कथयामि निरूपयामि त्वं शृण्विति शेषः ॥ १० ॥

तमेवाह पञ्चभिः।

नित्य एवास्मि शुद्धोस्मि चिद्रूपोस्मि निरन्तरः।
सहजानन्दरूपोस्मि न मे माया न मे मलः ॥११॥

नित्य इति। अहमहंपदलक्ष्यः कूटस्थचिद्रूपो नित्योऽविनाश्यस्मि भवामि 'अविनाशी वा अरेयमात्मा, नित्यो नित्यानां चेतनश्चेतनानां, नित्यं विभुं सर्वगतं सुसूक्ष्ममपि' इत्यादिश्रुतिभ्यः, अन्यथा नाशस्यापि साक्षिनित्यचैतन्यापेक्षसिद्धिकत्वात्तदसिद्धेस्तस्यापि सिद्ध्याऽऽत्मनित्यत्वमङ्गीकार्यमिति भावः, किञ्चाहमहंपदलक्ष्य आत्मा शुद्ध एवाऽस्मि भवामि अत एव

चिद्रूपश्चिच्चैतन्यं रूपं स्वरूपं यस्य स तथोक्तोऽहमहं पदलक्ष्य आत्माऽस्मि भवामि 'चेतनश्चेतनानामि'ति श्रुतेः, अचेतनस्याहङ्कारादेर्जगतस्तत्प्रकाशकं मां विना प्रकाशानुपपत्तेरिति भावः, किञ्च निरन्तरो निर्गतं निवृत्तमन्तरं भेदो यस्मात्स तथोक्तोऽखण्डैकरस इत्यर्थः, अहंपदलक्ष्य आत्माऽस्मि भवामि भेदकोपाधेरहङ्कारादिजगतः कालत्रयेऽप्यसत्त्वेनाखण्डैकरसत्वमात्मन्यङ्गीकार्यमिति भावः, किञ्च सहजानन्दरूपोऽस्मि सहजः स्वाभाविको य आनन्दः सुखं निरुपाधिक आनन्द इत्यर्थः, स एव रूपमाकृतिर्यस्य स तथाभूतोऽहमहंपदलक्ष्य आत्माऽस्मि भवामि मे मम प्रत्यगभिन्नब्रह्मरूपस्य माया जगज्जननसामर्थ्यरूपाशक्तिर्न न विद्यते तस्या मत्तः पृथक्सत्त्वाभावादिति भावः, किञ्च 'विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानादि'त्यादिश्रुतेरन्यथा जगज्जीवनानुपपत्तेरानन्दरूपत्वमात्मनः सिद्धमिति भावः, आत्मानन्दाभावे जगज्जीवनानुपपत्तौ श्रुतिः 'कोह्येवान्यात्कः प्राण्याद्, यदेष आकाश आनन्दो न स्याद्, एष ह्येवानन्दयातीति' अत एव मे मम मलो रागादिरूपो न न विद्यते स तु अन्तःकरणस्यैवाविवेकिभिरात्मनि व्यर्थमारोप्यत इति भावः ॥ ११ ॥

स्वस्य स्वाधीनकतया जगत्सत्ताप्रदातृतत्संहारकत्वाभ्यामैश्वर्यमनुसन्धत्ते ।

अस्मिन्नसति सत्ता हि चिद्रूपेण मयार्पिता ।
उपसंहृत्य सत्तां तां स्वसत्तायामहं स्थितः ॥ १२ ॥

अस्मिन्निति । एतावत्कालं हि प्रसिद्धाऽस्मिन्प्रत्यक्षेऽसति जगति या सत्ता सद्रूपता सा चिद्रूपेण चिच्चेतनमेव रूपमात्मा यस्य तेन मयाऽर्पिताऽऽरोपिताऽऽरोपस्य चेतनाधीनता लोके प्रसिद्धेति भावः, अतस्तां सत्तां नामरूपात्मकजगदध्यस्तां स-

तामुपसंहृत्य जगतः पृथक्कृत्वाऽहं सच्चिदानन्दस्वरूप आत्मा स्वसत्तायां स्वा स्वात्मरूपा या सत्ता सद्रूपता तस्यामेव स्थितो वर्त्तमानो ऽस्मि ॥ १२ ॥

इदानीमात्मनोऽसङ्गत्वं लक्ष्यीकरोति ।

विकृत्या विकृतिर्नाहं प्रकृत्या प्रकृतिर्न च ।
तथापि जातं मयि चेत्तर्हि जातमजातवत् ॥१३॥

विकृत्येति । अयमहंपदलक्ष्यश्चिदात्मा विकृत्या विकारेण कार्येणेत्यर्थः, विकृता विकारं प्राप्तो न नास्मि पुनश्च प्रकृत्या कारणेन जगत्कारणेनाव्याकृतेन वा प्रकृतिः कारणमव्याकृतं वाऽहमात्मा न न भवामि एवं विकाररहिते मयि प्रत्यगभिन्ने ब्रह्मणि लोकदृष्ट्या जातं कार्यकारणरूपं द्वैतमुत्पन्नं चेद्यदि तर्हि तदा यज्जातमुत्पन्नमुत्पद्यमानस्याद्यन्तयोरसत्त्वेन मध्येप्यसत्त्वादजातवन्न जातं तत्त्वत उत्पन्नं न तदजातं यन्मृगतृष्णाजलादि तद्वन्मिथ्यैवेत्यर्थः ॥ १३ ॥

तस्याप्युपसंहारः स्वाधीन एवेत्याह ।

उपसंहर विश्वात्मन्निति यावद्वदाम्यहम् ।
उपसंहृतमेवेदं दृश्यते नैव तिष्ठति ॥ १४ ॥

उपसंहरेति । हे विश्वात्मन्विश्वस्यात्मा सत्ताप्रदस्तस्य संबोधने हे विश्वात्मंस्त्वं विश्वं जगदुपसंहर लीनं कुरु इत्येवं यावद्यत्कालपर्यन्तं वदामि कथयामि अहमहंपदलक्ष्य आत्मा तावत्तत्कालमेवेदं जगदुपसंहृतमेव लीनमेव दृश्यते प्रतीयते मदग्रे नैव तिष्ठति न स्थितिं प्राप्नोति एतादृश्युत्पत्तिसंहारयोः स्वाधीनता मयि विद्यत इति भावः ॥ १४ ॥

नन्वेतादृशशब्दानां स्वात्मानुसन्धायकत्वेन शब्दानुविद्धस-

माध्यनुकूलत्वेपि तेषां प्रामाणिकत्वाभावेनाश्रद्दधानस्य तत्र स्यादित्याशङ्क्य तेषां प्रामाणिकत्वोपपादनपूर्वं तदर्थचिन्तनेनोक्तसमाधिसिद्धिमाह ।

इत्याद्युपनिषद्वाक्यपदतात्पर्यचिन्तया ।
शब्दानुविद्धनामा हि समाधिर्जायते मुनेः ॥ १५ ॥

इतीति । इत्याद्युपनिषद्वाक्यपदतात्पर्यचिन्तयेति एवमुक्तानि वाक्यानि आदीनि मुख्यानि येषां तानि उपनिषदां वाक्यानि उपनिषण्णं समीपे प्राप्यत्वेन स्थितं श्रेयो मोक्षरूपं यासु ता उपनिषदः स्वतः प्रमाणभूता वेदशिरोभूता ईशाद्यभिधाः श्रुतयस्तासां वाक्यानि तेषां पदानि सर्वज्ञः सर्वान्तर्यामीत्यादीनि तेषां तात्पर्यमर्थोऽखण्डैकरस आत्मा तस्य चिन्तया ध्यानेन करणेन हि प्रसिद्धः प्रकृतः शब्दानुविद्धनामा शब्दानुविद्ध इति नामाभिधानं यस्य स तथाविधः समाधिर्वृत्तेर्ध्येयाकारपरिणामरूपं समाधानं मुनेरुक्तशब्दार्थमननवतो ज्ञानिनो जायते भवति ॥ १५ ॥

एवं समाधिद्वयं ससाधनक्रमं निरूप्येदानीं यदर्थं समाधिद्वयनिरूपणं तमुक्तसमाधिद्वयविलक्षणमुक्तसमाधिद्वयोपसंहारपूर्वकमाह ।

अर्थानुवेधितस्तूक्तस्ततः शब्दानुवेधितः ।
तावुभौ सम्यगभ्यस्य विशेन्निरनुवेधितम् ॥ १६ ॥

अर्थेति । तु प्रथममर्थानुवेधितोऽर्थानुविद्धनामा समाधिरुक्तः कथितस्ततोऽनन्तरं शब्दानुवेधितः शब्दानुविद्धनामा समाधिरुक्तः कथितो नाम तु व्यवहारार्थमित्याविनाऽयमर्थानुवेधित इत्यन्तेन ग्रन्थसन्दर्भेण प्रथमः, द्वितीयस्तु अथ

शब्दानुविद्धं त्वित्यादिना समाधिर्जायते मुनेरित्यन्तेन ग्रन्थेनोक्तो ज्ञेयः, तावुक्तलक्षणौ द्वौ समाधी सम्यग्दृढं यथा भवति तथा अभ्यस्याभ्यासेन स्वाधीनीकृत्य ततो निरनुवेधितमननुविद्धनामानं समाधिं विशेत्प्रविशेव ॥ १६ ॥

पूर्वोक्तसमाधिद्वयस्य साधनत्वे निरनुविद्धसमाधेः साध्यत्वे च दृष्टान्तमाह ।

शर्कराद्वितयं धृत्वा प्रणवो लिख्यते यथा ।
समाधिद्वितयं धृत्वा प्रणवार्थोऽपि लिख्यताम् ॥ १७ ॥

शर्करेति । यथा यद्वदनभ्यासवतो बालस्य प्रणवलेखने शर्कराद्वितयं शर्करयोः सूक्ष्मवर्तुलपाषाणयोर्द्वितयं युग्मं धृत्वा स्थापयित्वा प्रणव ॐकारो लिख्यते रेखाकारेण व्यक्तीक्रियेत तथा तद्वत्समाधिद्वितयं समाध्योरर्थानुविद्धशब्दानुविद्धसमाध्योर्द्वितयं युग्मं धृत्वाऽभ्यस्य प्रणवार्थोऽपि प्रणवस्योङ्कारस्यार्थो लक्ष्यार्थो निरनुविद्धसमाधिरूपोऽपि लिख्यतां ब्रह्माहमस्मीति स्वात्मसाक्षात्कारवृत्तावनुभूयताम् ॥ १७ ॥

तस्मिंश्च सिद्धौ पूर्वसमाधिद्वयानुपयोगमपि दृष्टान्तेनाह ।

पटोः प्रणवलेखेषु ते हि नावश्यके यथा ।
समाधिद्वितयं तद्वत्प्रणवार्थपटोरपि ॥ १८ ॥

पटोरिति । पटोः प्रणवलेखने कुशलस्य प्रणवलेखेषु प्रणवस्योङ्कारस्य लेखा लेखनानि तेषु क्रियमाणेषु हि प्रसिद्धे ते शर्करे नावश्यके उपयोगिन्यौ न भवतो यथा यद्वत्तथा तद्वत्प्रणवार्थपटोः प्रणवस्योङ्कारस्यार्थोऽखण्डैकरसरूप आत्मा तस्मिन्कुशलस्यात्मसाक्षात्कारवतो मुनेः समाधिद्वितयमपि समाध्यो-

द्वितयं युग्ममपि अर्थानुविद्धशब्दानुविद्धनामकं नावश्यकमुपयोगि न भवति ॥ १८ ॥

एतत्प्रकरणविचारस्य फलमाह।

निर्विकल्पसमाधाने निष्ठा सा बोधयोगिनः।
कपाटोद्घाटने हेतुरियं कैवल्यकुञ्चिका ॥ १९ ॥

निर्विकल्पेति। इयं मदुक्ता कैवल्यकुञ्चिका कैवल्यकुञ्चिका नाम प्रकरणं कपाटोद्घाटने कं ब्रह्म पाटयति आवृणोतीति कपाटमज्ञानं तस्योद्घाटन उत्सादने हेतुः कारणं भवति अतोस्य नामापि कैवल्यकुञ्चिकेति, अज्ञाननिवर्त्तकत्वमनिष्टनिवृत्तिरूपं फलमभिधायेदानीमिष्टप्राप्तिरूपं फलं प्रदर्शयितुं विशिनष्टि निर्विकल्पेति, बोधयोगिनो बोधो जीवब्रह्मैक्यज्ञानमेव योगः स्वात्मप्राप्तिसाधनं यस्य विद्यते तस्य सोक्तलक्षणा कैवल्यकुञ्चिका निर्विकल्पसमाधाने निर्विकल्पकसमाधौ निष्ठा स्थितिरेव फलतो ज्ञेया ॥ १९ ॥

एतस्या माहात्म्यमाह।

रहस्यं हि रहस्यानां निधीनां परमो निधिः।
युक्तीनां परमा युक्तिरियं कैवल्यकुञ्चिका ॥२०॥

रहस्यमिति। हि प्रसिद्धेयं कैवल्यकुञ्चिका कैवल्यकुञ्चिकानाम्नी प्रक्रिया रहस्यानां गोप्यानां मध्ये रहस्यं गोप्यमस्ति तत्र हेतुर्निधीनां निधीयन्ते स्थाप्यन्ते द्रव्याणि येषु ते तथोक्ता द्रव्यपूर्णभाण्डानि तेषां मध्ये परमः श्रेष्ठो निधिर्द्रव्यपूर्णं भाण्डं सदात्मद्रव्यपूर्णत्वादतिश्रेष्ठो निधिरित्यर्थः, किञ्च युक्तीनां युज्यते प्राप्यत आत्मा आभिस्ता युक्तयो योगास्तेषां मध्ये परमा श्रेष्ठा युक्तिर्योग इयं कैवल्यकुञ्चिका ज्ञेया ॥ २० ॥

एतस्याः प्रामाण्याय परम्परागतत्वं दर्शयति ।

वसिष्ठव्यासपद्धत्या शङ्कराचार्यमागता ।
सा पुनः शङ्कराचार्यैः करुणारसनिर्भरैः ॥ २१ ॥

वसिष्ठेति । वसिष्ठव्यासपद्धत्या वसिष्ठो ब्रह्मपुत्रो व्यासः पराशरपुत्रस्तावेव पद्धती मार्गौ ताभ्यां जातावेकवचनं, ततः शङ्कराचार्यमागता शङ्कराचार्य एव मार्गः पन्थास्तस्मादागता प्राप्ता केन क्रमेणेत्यत आह सेति, सा शङ्कराचार्य आगता पुनस्तदनन्तरं करुणारसनिर्भरैः करुणा दया सैव रसस्तेन निर्भरैः पूर्णैः शङ्कराचार्यैः सर्वेषां कल्याणकर्तृभिराचार्यैः श्रीमदाचार्यैः ॥ २१ ॥

अर्पितानन्दबोधेभ्यस्तत्क्रमेण बुधैर्धृता ।
अवधार्या विशेषेण सेयं कैवल्यकुञ्चिका ॥ २२ ॥

इति श्रीनरहरिकृतौ बोधसारे कैवल्यकुञ्चिका ॥ ३५ ॥

अर्पितेति । आनन्दबोधेभ्य आनन्दबोधनाम्ने शिष्यायार्पिता समर्पिता दत्तेत्यर्थः, ततो बुधैर्ज्ञानिभिस्तत्क्रमेण स उक्तो यः क्रमस्तेनानन्दबोधात्क्रमेणेत्यर्थः, धृता प्राप्ता सा परम्परया मम प्राप्ता मया तुभ्यमियं प्रत्यक्षा दत्ता हे शिष्य सेयं कैवल्यकुञ्चिका विशेषेणात्यादरेण त्वयाऽवधार्या स्वाधीनीकर्त्तव्या ॥ २२ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ कैवल्यकुञ्चिकार्थप्रकाशः पञ्चत्रिंशः ॥ ३५ ॥

---

अथ बुद्धिप्रशंसा ।

इदानीं मुमुक्षूणां मोक्षस्यैवेष्टत्वात्तस्य च ज्ञानाधीनत्वात्त

ज्ज्ञानं च यतो बुद्ध्यधीनमतो बुद्धावादरं विधातुं बुद्धिमाहात्म्यनिरूपकं बुद्धिप्रशंसानामकं चतुःश्लोकं प्रकरणमारभमाण आह ।

## अथ बुद्धिप्रशंसा ।

अथेति । अथ कैवल्यकुञ्जिकानिरूपणानन्तरं बुद्धिप्रशंसा बुद्धेर्मतेः प्रशंसा स्तुतिरेतन्नाकं प्रकरणं निरूप्यत इति शेषः, तत्र तावदादौ सर्वलौकिकवैदिकव्यवहारस्य कारणत्वं बुद्धेरेवाह ।

> व्यवहारस्य सर्वस्य बुद्धिर्मूलं यथा भवेत् ।
> तद्वत्तु परमार्थस्य निदानं बुद्धिरेव हि ॥ १ ॥

व्यवहारस्येति । सर्वस्य संसारमोक्षकारणभूतो यो व्यवहारस्तस्य बुद्धिरेव मतिरेव मूलं कारणं यथा यद्वद्भवेत्स्यात्तथा तद्वत्परमार्थस्य मोक्षाख्यस्यार्थस्य तु अप्यर्थः, निदानमादिकारणं बुद्धिरेव मतिरेव हि प्रसिद्धमेतद्विवेकिनाम् ॥ १ ॥

ननु बोधरूपस्यात्मनो बुद्ध्यनपेक्षत्वात्कुतो बुद्धेर्महत्त्वमित्याशङ्क्य बुद्धिबुद्धस्यैवात्मनो बुद्धत्वं नाबुद्धस्येति बुद्धेरेव महत्त्वमित्याशयेनाह ।

> यद्बुद्धमप्यबुद्धं तद्बुद्ध्या बुद्धं न चेत्तदा ।
> बुद्ध्या बुद्धं तु यद्बुद्धं तन्नाबुद्धं कदापि च ॥ २ ॥

यदिति । यदात्मचैतन्यं चिन्मात्रत्वाद्बुद्धमपि बोधरूपमपि बुद्ध्याऽज्ञानमात्रनिवृत्तिफलयाऽहं ब्रह्मास्मीति प्रमाख्यया वृत्त्या बुद्धमज्ञाननिरासेन साक्षादनावृतं बुद्धं प्रकाशितं न चेन्न विद्यते यदि तदा तर्हि तदात्मरूपमबुद्धमज्ञातं भवति अज्ञातस्यात्मनः संसृतिकारणत्वान्न मोक्षसिद्धिरिति भावः, एवं बुद्धस्याप्यात्मनो

बुद्धत्वजननेन बुद्धेः श्रैष्ठ्यमभिधायेदानीं बुद्धिवृत्तेः क्षणिकत्वेन बुद्धिवृत्तिनाशे तदुत्पन्नबुद्धत्वनाशादपि पुनरप्यात्मनि संसरणप्रसक्तिरित्याशङ्क्य तां निरस्यन्बुद्धिजन्यस्यात्मनि बुद्धत्वस्य नाशाभावनिरूपणेनापि तच्छ्रैष्ठ्यं दर्शयति यत्त्विति, यत्तु यज्ज्ञानिप्रत्यक्षं बुद्धमात्मचिन्मात्रं बुद्ध्या बुद्धं बुद्ध्याऽज्ञाननिवृत्तिमात्रप्रयोजनयाऽहं ब्रह्मास्मीति प्रमावृत्त्या बुद्धमनावृतं प्रकाशितं चेद्यदि तदनावृतमात्मचिन्मात्रमबुद्धमज्ञातं कदापि कस्मिन्नपि समये वृत्तिभावे तदभावे वा न भवेन्न स्याद्, एकवारं बुद्धिप्रकाशितस्यात्मचैतन्यस्य सर्वदा प्रकाशमानत्वेनापि बुद्धेरेव महत्त्वं तज्ज्ञेयमित्याशयः ॥ २ ॥

इदानीमनात्मबुद्धावात्माप्रकाशे ज्ञबुद्धौ चात्मप्रकाशे च बुद्धेरेव हेतुत्वेन श्रैष्ठ्यमाह।

बुद्ध्या न बुद्धो यो बोधो द्वैतबोधबुधैरपि।
बुद्ध्या बुद्धमिमं विद्धि बुद्धिसाक्षितया बुधैः ॥३॥

बुद्ध्येति। द्वैतबोधबुधैर्द्वैतस्य जगतो यो बोधो ज्ञानं कर्मोपास्तिविषयं तस्मिन्ये बुद्धाः पण्डितास्तैः कर्तृभिर्बुद्ध्या कर्मोपास्तिनिर्णायकप्रज्ञया करणभूतया यो विवेकिप्रत्यक्षो बोधश्चिन्मात्र आत्मा स न बुद्धोऽपि न साक्षात्कृतोऽपि तमिममात्मानमात्मनि बोधरूपं बुधैर्ज्ञानिभिर्बुद्धिसाक्षितया बुद्धेरहं ब्रह्मास्मीति वृत्तेः साक्ष्यव्यवधानेन प्रकाशक आत्मा तस्य भावः सत्ता तया बुद्ध्या प्रज्ञयैव बुद्धं ज्ञातं विद्धि जानीहि ॥ ३ ॥

इदानीमात्मबोधे केनापि प्रकारेणासाद्यमाने सत्यपि तत्र बुद्धेः कुशलतां दर्शयन्बुद्धेः श्रैष्ठ्यमाह।

न बुद्धमपि यद्बुद्धं यच्च बुद्धमबुद्धवत्

बुद्धाबुद्धसमं बुद्ध्या बुद्धाबुद्धविलक्षणम् ॥ ४ ॥

इति श्रीनरहरिकृतौ बोधसारे बुद्धिप्रशंसा षट्त्रिंशी ॥ ३६ ॥

न बुद्धमपीति। यज्ज्ञानिप्रत्यक्षमात्मरूपं न बुद्धमपि चेत्स-रहितचिन्मात्ररूपत्वान्न ज्ञातमपि बुद्धं ज्ञानस्वरूपमस्ति तस्य ज्ञानरूपत्वाभावे जगद्भानानुपपत्तेः, तथा च श्रुतिः–'यदेष आ-काश आनन्दो न स्यात् को ह्येवान्यात्कः प्राण्यादि'ति, किञ्च यच्च यदपि आत्मरूपमबुद्धवद्बुद्धिविषयत्वाभावात्स्वयं प्रकाशमान-त्वाच्चाविज्ञातमिव बुद्धं प्रकाशमानं वस्तुतश्च बुद्धाबुद्धयो-र्ज्ञाताज्ञातयोः समं सदैकरूपं, यद्वा बुद्धाबुद्धयोर्ज्ञान्यज्ञानिनोः समं निर्विशेषं तथा च श्रुतिः ।

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानतामिति ॥

अत एव बुद्धाबुद्धविलक्षणं बुद्धं बुद्ध्या विषयीकृतमबुद्धं बुद्ध्या न विषयीकृतं ताभ्यां विलक्षणं स्वयं प्रकाशमानं बुद्ध्या मया बुद्धं ज्ञातमतो बुद्धेरेव श्रैष्ठ्यमिति भावः ॥ ४ ॥

इति श्रीन० शि० दि० वि० बो० बुद्धिप्रशंसार्थप्रकाशः षट्त्रिंशः॥३६॥

---

अथ रङ्गलीलात्रयी ।

एवं बुद्धिप्रशंसां निरूप्येदानीं जीवन्मुक्ते जगत्प्रतीतेरबा-धकत्वप्रदर्शनाय रङ्गलीलात्रय्याख्यं त्रिश्लोकं प्रकरणमभिधा-स्यन्नाह ।

## अथ रङ्गलीलात्रयी ।

अथेति । बुद्धिप्रशंसानिरूपणानन्तरं रङ्गलीलात्रयी रङ्गस्य लीलाऽनायासेन धारणरूपा तन्निरूपिका त्रयी त्रिश्लोकावय-वैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तत्र ताव-

वस्त्रं यथा यादृग्रङ्गे निक्षिप्यते तादृशं रङ्गं स्वस्मिन्धारयति तथा हृदयमपि यादृशरङ्गे निक्षिप्यते तादृशं रङ्गं धारयतीत्याह।

रञ्जितं रञ्जनैश्चित्रैश्चित्रं जातं हृदम्बरम्।
रङ्गे निरञ्जने क्षिप्तं रङ्गं प्राप्तं निरञ्जनम्॥ १॥

रञ्जितमिति। रञ्जनैः रञ्जयन्ति स्वसंपृक्तं द्रव्यमिति रञ्जनानि अन्तःकरणविचित्रताकारणभूता विषयाश्चित्रैश्चित्रयन्ति हृदयमिति चित्राणि जगत्पदार्थास्तैः कृत्वा रञ्जितं विचित्रितं सद्धृदम्बरं हृद्धृदयमेवाम्बरमाकाशं चित्रं विचित्रमनेकरूपमिति यावत्तज्जातं सम्पन्नं तन्मयेदानीमधुना निरञ्जने निरुपाधिके स्वतः सिद्ध इत्यर्थः, रङ्गे रज्यते प्रकाश्यते जगदनेनेति रङ्गः परमात्मा तस्मिन्क्षिप्तं स्थापितं सन्निरञ्जनं निरुपाधिकं रङ्गं रञ्जकमात्मानमित्यर्थः, प्राप्तं लब्धं जातम्। लौकिकार्थे तावद्रञ्जनैः रञ्जयन्ति विचित्रयन्ति वस्त्रादिकं तानि रञ्जनानि तैश्चित्रैश्चित्रयन्ति स्वसंसृष्टं द्रव्यं तानि रञ्जकद्रव्याणि तैः रञ्जितं चित्रितं सद्धृदम्बरं हृद्धृदयमिवाम्बरं वस्त्रं चित्रं विचित्ररूपं जातं सम्पन्नं तन्मया निरञ्जने निरुपाधिके रङ्गे रञ्जके द्रव्ये स्वतः पीतादिद्रव्ये क्षिप्तं स्थापितं सन्निरञ्जनं निरुपाधिकं पीतादिकं रङ्गं रागं प्राप्तं लब्धं भवतीति॥ १॥

ततश्च किं जातं तदाह।

रङ्गं निरञ्जनं प्राप्तमिदानीं तु हृदम्बरम्।
रञ्जितं रञ्जनैश्चित्रैरपि रङ्गं बिभर्ति न॥ २॥

रङ्गमिति। तद्धृदम्बरं तु हृदयरूपमाकाशमपि निरञ्जनं निरुपाधिकं रङ्गं रज्यते प्रकाश्यते जगदनेनेति रङ्गः प्रकाशरूप आत्मा तं प्राप्तं लब्धं सदिदानीमधुना रञ्जनैः रञ्जकैश्चित्रै-

श्चित्रसदृशैर्जगत्पदार्थैः परस्परविलक्षणै रञ्जितं संपृक्तमपि रङ्गं जगत्पदार्थसम्बन्धं न बिभर्ति न धारयति व्यवहारदशायां जगत्पदार्थसम्बन्धवत्प्रतीतमपि ज्ञानिहृदयं वास्तवं सम्बन्धं न धारयतीति भावः । लौकिकार्थे तावद्धृदम्बरं हृद्धृदयवद्दम्बरं वस्त्रं निरञ्जनं निरुपाधिकं गैरिकादिरञ्जनद्रव्यं प्राप्तं सदिदानीं तादृशरङ्गधारणानन्तरमस्मिन्काले चित्रैरनेकै रञ्जन रञ्जकद्रव्यैरञ्जितमपि संपृक्तमपि रङ्गं रञ्जनं स्वस्मिन्न बिभर्ति न पूर्ववद्धारयतीति ॥ २ ॥

इदानीमेतत्प्रकरणार्थधारणां तद्विचारं च विधत्ते ।

रङ्गलीलाद्वयीमेतां तात चित्तेऽवधारय ।
रङ्गं परीक्षय धिया साञ्जनं च निरञ्जनम् ॥ ३ ॥

इति श्रीनरहरिकृतौ बोधसारे रङ्गलीलात्रयी सप्तत्रिंशा ॥ ३७ ॥

रङ्गलीलेति । हे तात हे शिष्य एतां मदुक्तां रङ्गलीलाद्वयीं रज्यतेऽनेनेति रङ्गः सोपाधिको निरुपाधिकश्च तस्यानायाससिद्धत्वाल्लीला क्रीडा तस्याः प्रतिपादनकर्त्री द्वयी श्लोकद्वयात्मकं प्रकरणं तां त्वं चित्ते चेतसि अवधारय संगृह्णीष्व ततश्च धिया बुद्ध्या साञ्जनं चाज्यतेनेनेत्यञ्जनमुपाधिस्तेन सहितं रङ्गं प्रकाशं निरञ्जनं निरुपाधिकं रङ्गं प्रकाशमात्मानात्मप्रकाशमिति यावत्तत्परीक्षयावलोकय ॥ ३ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ रङ्गलीलात्रय्यर्थप्रकाशः सप्तत्रिंशः ॥ ३७ ॥

---

अथ चन्द्रिकाचन्द्रचमत्कारचतुष्टयी ।

एवं रङ्गलीलात्रय्या जीवन्मुक्ते व्यवहारकाले जगत्प्रतीतावपि

बाधकाभावं प्रदर्श्येदानीं तदेव दृढीकुर्वञ्जगत्प्रकाशचैतन्यात्मचैतन्ययोरभेदं दर्शयितुं चन्द्रिकाचन्द्रचमत्कारचतुष्टय्याख्यं चतुःश्लोकं प्रकरणमारभमाण आह।

## अथ चन्द्रिकाचन्द्रचमत्कारचतुष्टयी

अथेति। अथ रङ्गलीलात्रयीनिरूपणानन्तरं चन्द्रिकाचन्द्रचमत्कारचतुष्टयी चन्द्रिका कौमुदी चन्द्रश्च सोमस्तयोश्चमत्कारो व्यवहारकौतुकं चन्दयति आनन्दयति जगदिति चन्द्रो ब्रह्माभिन्नः प्रत्यगात्माऽऽनन्दरूपत्वात्तस्येयं चन्द्रिका ज्योत्स्ना जगत्प्रकाशिका चेतनेत्यर्थः, तस्याश्चन्द्रस्य च परमसुखरूपत्वाज्जगदानन्दयितुः परमात्मनश्च यश्चमत्कारो भेदे प्रतीयमानेप्यभिन्नत्वाव्यभिचाररूपस्तस्य प्रतिपादयित्री चतुष्टयी श्लोकचतुष्टयरूपा प्रक्रिया निरूप्यत इति शेषः, तत्र तावदादौ सर्वदा चन्द्रचन्द्रिकयोरिवात्मचैतन्यजगत्प्रकाशचैतन्ययोर्वियोगाभावं प्रतिपादयति।

अचन्द्रे चन्द्रिका नास्ति न चन्द्रश्चन्द्रिकां विना।
चन्द्रिकाचन्द्रसंयोगः कथं वा विनिवार्यताम् ॥१॥

अचन्द्र इति। अचन्द्रे चन्दयति आनन्दयति सर्वं जगदिति चन्द्रो निरतिशयस्वयंप्रकाशानन्दरूप आत्मा स न भवतीत्यचन्द्रोऽनात्मा तस्मिन्घटादिजगत्पदार्थे चन्द्रिका जगदानन्दयित्री जगत्प्रकाशिका चेतना च नास्ति न विद्यते विद्यमाना न स्यादित्यर्थः, एवं चेज्जगदान्ध्य प्रसङ्ग इति भावः, ततश्च जगत्प्रकाशान्यथानुपपत्त्या तदानन्दानुपपत्त्या चात्मनः सत्त्वमङ्गीकर्त्तव्यं तथा सति चन्द्रचन्द्रिकयोरिवात्मचैतन्यजगत्प्रकाशचैतन्ययोरपि द्वित्वं स्यादित्याशङ्क्य चन्द्राच्चन्द्रिकाया इवा-

ऽऽत्मचैतन्याज्जगत्प्रकाशचैतन्यस्य पृथक् सत्त्वं निषेधति नेति, चन्द्रिकां कौमुदीं विना—ऋते चन्द्रः सोम इव चन्द्रिकां जगत्प्रकाशकचेतनामृतं चन्द्र आनन्दरूप आत्मा न नास्ति एकसत्ताकत्वादुभयोरिति भावः, अतश्चन्द्रिकाचन्द्रसंयोगश्चन्द्रिकाया जगत्प्रकाशकचेतनायाश्चन्द्रस्य चात्मनः संयोग ऐक्यं कौमुदीचन्द्रयोरैक्यमपि कथं वा केन प्रकारेण विनिवार्यतां निषेध्यतां न कथमपीत्यर्थः ॥ १ ॥

ननु तर्हि चन्द्रिकाया जगत्प्रकाशकचेतनायाश्च कादाचित्कत्वं कथं प्रतीयते तत्राह।

विस्मृत्या चन्द्रिका नाप्ता स्मृत्याऽऽप्तेव तु चन्द्रिका।
चन्द्रिकाचन्द्रतादात्म्यं केनाहो विनिवारितम् ॥ २ ॥

विस्मृत्येति। चन्द्रिका कौमुदी विस्मृत्या निद्रादिरूपविस्मरणेनात्मचेतनापि विस्मृत्याऽज्ञानरूपविस्मरेण नाप्ता न दृष्टाऽननुभूता च कस्मिंश्चित्समये स्मृत्या स्मरणेन ज्ञानेन चाप्तेव प्राप्तेव प्रतीयते वस्तुतस्तु चन्द्रिकाचन्द्रसंयोगवियोगावात्मचैतन्यजगत्प्रकाशचैतन्यसंयोगवियोगौ चैकरूप्यान्न स्तस्तत्प्रतीतिस्तु भ्रान्तिविलसितमितिभावः, अतोऽहो शिष्य चन्द्रिकाचन्द्रतादात्म्यं चन्द्रिकायाः कौमुद्याश्चन्द्रस्य च सोमस्य तादात्म्यमैक्यमात्मनो जगत्प्रकाशचेतनायाश्चैकत्वमभिन्नरूपत्वमित्यर्थः, केन निमित्तेन पुरुषेण वा विनिवारितं विनाशितं न केनापीत्यर्थः ॥ २ ॥

इदानीं शिष्यस्य चन्द्रचन्द्रिकाभिन्नत्वे प्रतीतेऽपि जीवन्मुक्तेषु जगद्भानस्याप्यात्मभानत्वप्रदर्शने दृष्टान्तत्वेनाभिधानादस्य सप्रयोजनत्वं दर्शयति।

त्वयाऽनुभूतमेवास्ति चन्द्रिकाचन्द्रकौतुकम्।
दृष्टान्तदर्शनायाङ्ग पुनस्तत्प्रकटीकृतम् ॥ ३ ॥

त्वयेति। त्वया भवता चन्द्रिकाचन्द्रकौतुकं चन्द्रिका जगत्प्रकाशरूपा चेतना चन्द्रश्चेश्वरहितांचदानन्द आत्मा तयोः कौतुकमभिन्नत्वे सत्यपि भिन्नत्वव्यवहारनिर्वाहरूपं कुतूहलमनुभूतं ज्ञातमस्त्येव विद्यत एव तर्हि पुनः किमर्थं तन्निरूपणं तत्राह दृष्टान्तेति, हे अङ्ग हे शिष्य पुनर्भूयस्तत्र दृष्टान्तदर्शनाय दृष्टान्तस्योपमानस्य दर्शनाय निरूपणाय ब्रह्मचित्तचैतन्ययोरभिन्नत्वं तच्चन्द्रिकाचन्द्रकौतुकमिषेण प्रकटीकृतं स्फुटमुक्तमतोस्य न निष्प्रयोजनत्वमिति भावः ॥ ३ ॥

इदानीं ब्रह्मचिच्चित्तचितोरनन्तत्वं चन्द्रिकाचन्द्रदृष्टान्ताद्वैलक्षण्येन दर्शयति।

तावती चन्द्रिका प्रोक्ता यावानेव हि चन्द्रमाः।
अनाद्यन्तस्तु चन्द्रोयमनाद्यन्तास्य चन्द्रिका ॥४॥

इति श्रीनरहरिकृतौ बोधसारे चन्द्रिकाचन्द्रचमत्कारचतुष्टय्यष्टात्रिंशा ॥ ३८ ॥

तावतीति। हे शिष्य हि विद्वत्सु श्रुतिषु च प्रसिद्धश्चन्द्रमा चन्दयति आनन्दयति जगदिति चन्द्रमाः 'एष ह्येवानन्दयाती'त्यादिश्रुतेः परमात्मा यावानेव यत्परिमाण एवास्ति तावती तत्परिमाणा चन्द्रिका चेतना प्रोक्ता कथिता कियत्परिमाणश्चन्द्रो कियत्परिमाणा च चेतनारूपा चन्द्रिकेत्याशङ्क्याहानाद्यन्त इति, अयं विद्वत्प्रसिद्धश्चन्द्रः सकलजगदानन्दकरः परमात्मा तु लोकप्रसिद्धचन्द्राद्विलक्षणोऽनाद्यन्तो न विद्येते आदिः कारणमन्तश्च नाशो यस्य स तथोक्तोऽ-

स्ति अस्य परमात्मचन्द्रस्य चन्द्रिका तु जगत्प्रकाशकचेतन-
शक्तिरपि अनाद्यन्ता न विद्येते आदिरन्तश्च यस्याः सा तथोक्ता
ऽस्ति उभावप्यनन्ताविति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ चन्द्रिका-
काचन्द्रचमत्कारचतुष्टयार्थप्रकाशोऽष्टात्रिंशः ॥ ३८ ॥

---

अथाद्भुतशिरश्छेदपञ्चकम् ।

एवं ब्रह्मचैतन्यचित्तचैतन्ययोरभेदं प्रदर्श्येदानीं मोक्षसा-
धनेषु समस्तेषु मनोबाधलक्षणस्य साधनस्य श्रैष्ठ्यं दर्शयितु-
मद्भुतशिरश्छेदपञ्चकाख्यं पञ्चश्लोकं प्रकरणमारभमाण आह ।

## अथाद्भुतशिरश्छेदपञ्चकम् ।

अथेति । अथ चन्द्रिकाचन्द्रचमत्कारचतुष्टयीनिरूपणानन्त-
रमद्भुतशिरश्छेदपञ्चकमद्भुतोऽत्याश्चर्यरूपो यः शिरश्छेदः सर्व-
प्राणिनां शिरश्छेदे मरणं जायत इति प्रसिद्धं यथा तथा
मनसो बाधे जगन्नाशसम्भवाज्जगतो मन एव शिरः शीर्षं
तस्य च्छेदो बाधस्तस्य निरूपकं पञ्चानां श्लोकानां समू-
हरूपं प्रकरणं निरूप्यत इति शेषः, तदेव प्रतिपादयितुं सर्व-
पदार्थेषु प्रत्येकं विरागविवेकरूपसाधनेभ्यो विश्वविस्मृतिरूप-
स्य श्रैष्ठ्यमाह ।

तत्तद्विचारवैराग्याद्वरिष्ठा विश्वविस्मृतिः ।
छेद्यस्य शिरसश्छेदः प्रत्यङ्च्छेदनाद्वरः ॥ १ ॥

तत्तदिति । तत्तद्विचारवैराग्यात्तस्य तस्य घ-
टादिपदार्थस्य तत्तदाकारवृत्तेश्च तत्तद्द्रष्टुर्भोक्तुश्चेत्येवमादिस-
मूहस्य विचारो विवेकस्तत्तद्विषयं वैराग्यं च वैतृष्ण्यमनयोः

समाहारैकवचनं तस्मान्मोक्षसाधनभूता विश्वविस्मृतिर्विश्वस्य जगतस्तत्कारणस्य मनसश्च विस्मृतिः–'नेह नानास्ति किञ्चने'ति बाधपूर्वं विस्मरणं मोक्षसाधनमित्यर्थः, वरिष्ठा श्रेष्ठा तत्सम्भावयितुं दृष्टान्तमाह च्छेद्यस्येति। च्छेद्यस्य च्छेत्तुं योग्यस्य शिरसः शीर्षस्यच्छेदः कर्त्तनं प्रत्यङ्गच्छेदनात्प्रत्येकमङ्गानामवयवानां छेदनात्कर्त्तनाद्वरः श्रेष्ठः, अयं भावः, केन चित्तीव्रापराधेन कस्य चिद्वध्यस्य वधे राज्ञाऽऽज्ञप्ते सति तद्दृष्ट्या विना शिरश्छेदं मृत्योरसम्भवात् पृथक्पृथगङ्गच्छेदनान्मृत्युसाधनभूताच्छिरःकर्त्तनमेव मृत्युसाधनं श्रेष्ठमिव मुमुक्षोर्मोक्षसाधनभूतात्तत्पृथक्पदार्थविवेकवैराग्याद्विश्वविस्मृतिलक्षणं मनोबाधं विना मोक्षासम्भवाद्विश्वोपलक्षितमनोबाधलक्षणसाधनस्यैव श्रैष्ठ्यं मुमुक्षुदृष्ट्येति भावः ॥१॥

वध्यस्य प्रत्यङ्गच्छेदने कृतेऽपि शिरश्छेदं विना मृत्यसम्भवात्प्रत्यङ्गच्छेदनवैयर्थ्यवन्मुमुक्षोः प्रत्येकं विषयवैराग्यविचारयोः कृतयोरपि विश्वविस्मृतिलक्षणमनोनाशं विना मोक्षासम्भावात्प्रत्येकं विषयविचारवैराग्ययोर्निष्प्रयोजनत्वमाह।

प्रत्यङ्गच्छेदनेप्यस्य च्छेद्यमेव शिरो यदि।

प्रथमं तच्छिरश्छिन्धि वृथा किं चेष्टयाऽन्यया ॥२॥

प्रत्यङ्गेति। हे शिष्य अस्य जगतः प्रत्यङ्गच्छेदनेपि अङ्गमङ्गं प्रतीति प्रत्यङ्गं तस्य च्छेदने विकर्त्तने कृते सत्यपि पृथक्पृथगङ्गानां त्रिपुटीलक्षणानां नाशे कृतेपीत्यर्थः, शिरः शिर इव जगज्जीवनकारणं मन एव तत्त्वज्ञानेन विशीर्यमाणत्वाच्च शिरस्तस्य जगतो नाशाय च्छेद्यमेव च्छेत्तुं विकर्त्तितुं योग्यमेव यदि यर्हि तत्तर्हि त्वं प्रथममादौ शीर्यते तत्त्वज्ञानाद्विनश्यतीति शिरो मनो जगज्जीवनकारणत्वात्सर्वाङ्गेषु मुख्याङ्ग

शिर इव सप्तदशावयवेषु मध्ये मुख्यं मन एवेत्यर्थः, छिन्धि विकर्त्तयाऽन्यया पृथक्पृथक्त्रिपुटीलयलक्षणया वृथाचेष्टया निष्प्रयोजनचेष्टया व्यापृत्या किं किं फलं न किमपीत्यर्थः, ॥ २ ॥

ननु मुनीनां दयाशीलत्वं प्रसिद्धं तथा च मृत्युकारणभूते शिरश्छेदनप्रवृत्त्याऽतीवनिर्दयत्वप्रसिद्धेस्तां विहायाऽन्याङ्गच्छेदनप्रवृत्तौ किञ्चिद्दयावत्त्वाच्छिरश्छेदात्प्रत्यङ्गच्छेदने श्रैष्ठ्यमिव मनोनाशात्प्रत्येकत्रिपुटीलयस्यैव श्रैष्ठ्यमस्त्वित्याशङ्क्य शिरश्छेदस्य प्रत्यङ्गच्छेदनस्य च दुःखरहितशीघ्रमरणहेतुत्वेन दुःखहेतुत्वपूर्वं मृत्युहेतुत्वेन चातीव वैलक्षण्यमेवेति प्रत्यङ्गच्छेदाच्छिरश्छेदस्य श्रैष्ठ्यमिव दुःखमात्रकारणात्प्रत्येकं त्रिपुटीलयाद्विश्वविस्मृत्या मनोनाशस्यैव श्रैष्ठ्यं दर्शयति ।

दयाशीला हि मुनयो मुनेः सापि दयालुता ।
यच्छिनत्ति मनः शीर्षं विनाङ्गच्छेदवेदनाम् ॥३॥

दयाशीला इति । मुनयो मननशीला ज्ञानिन इत्यर्थः, दयाशीला दया कृपा शीलं स्वभावो येषां ते तथोक्ताः सन्ति हि प्रसिद्धमेतच्छास्त्रेषु तर्हि कथं निर्दयवज्जगज्जीवनहेतुमनःशीर्षच्छेदने प्रवृत्तिस्तत्राह मुनेरिति । मुनेर्विवेकिनः सापि सैव दयालुता दयास्वभावता सा केत्यत आह यदिति, मुनिरङ्गच्छेदवेदनां विनाऽङ्गानां त्रिपुटीलक्षणानामवयवानां छेदश्छेदनं विकर्तनमित्यर्थः, तस्य वेदनां यातनामृते मनः शीर्षं मन एव शीर्षं शिरच्छिनत्ति विकर्त्तयतीति यद्या सेति योज्यम्, अयं भावः—प्रत्यङ्गच्छेदजन्यदुःखस्य बहुत्वादकस्माच्छिरश्छेदे च तदभावान्मनःशिरश्छेदकर्त्तुर्मुनेरपि दयालुत्वसिद्धिरिति भावः ॥ ३ ॥

ननु विवेकिबुद्धौ तत्सिद्धावपि यस्य शिरश्छेद्यते तद्दृष्ट्या तु तदसिद्धिरेवेत्याशङ्क्य तद्दृष्ट्यापि तत्सिद्धिं दर्शयति।

सद्यो मम शिरश्छिन्धि मामित्याह मनो मम।
मया सोढुं न शक्यन्ते प्रत्यङ्गच्छेददुर्दशाः॥ ४॥

सद्य इति। वध्यपुरुष एवायमस्य प्रत्यङ्गं छेत्तव्यमिति राजाऽऽज्ञायां सत्यां प्रत्यङ्गच्छेदने दुःखबहुत्वं ज्ञात्वा वधकर्त्तारं बहुद्रव्यं दत्त्वा मम शिरः सद्य एव च्छिन्धीति वदति तद्दृष्ट्या प्रत्यङ्गच्छेदनं कर्त्तुः सकाशाच्छिरश्छेदकर्त्तरि दयालुत्वं स्फुरति यथा तथा मम मनोपि मे ज्ञानिनो मनोऽन्तःकरणं प्रत्यङ्गच्छेदने दुःखबाहुल्यं ज्ञात्वैव जगदाकारं मनो मम मे जगदाकारस्य मनसः शिरस्तत्त्वज्ञानेन विशीर्यमाणत्वाच्छिरोभूतं जगज्जीवनभूतं सङ्कल्पविकल्परूपं मनः सद्यः शीघ्रं छिन्धि विकर्त्तयेत्येव मां मुमुक्षुं तन्नाशकमाह कथयति। ननु जगदाकारस्य ते जीवनहेतुभूतसङ्कल्पविकल्पात्मकमनःशीर्षछेदने मरणहेतुभूते कुतो मां प्रेरयसीति पृष्टं मनो मां प्रति कथयामासेत्याह मयेति, मया जगदाकाररूपेण मनसा प्रत्यङ्गच्छेददुर्दशाः प्रत्यङ्गानां पृथक् पृथगङ्गानां त्रिपुटीरूपाणामवयवानामित्यर्थः, छेदो विकर्त्तनं तज्जन्या दुर्दशाः पीडाः सोढुं क्षन्तुं न शक्यन्ते तत्सहने नाहं समर्थ इत्यर्थः, अतः प्रत्येकमङ्गच्छेदने दुःखबहुत्वज्ञानाद्दुःखाभानेन तत्कालशिरश्छेदकर्त्तुर्दयालुत्वस्य वध्यपुरुषदृष्ट्या सिद्धिरिवानन्तत्रिपुटीलक्षणामङ्गानां प्रत्येकच्छेदनेन दुःखबहुत्वज्ञानाज्जगदाकारमनोदृष्ट्यापि तच्छीर्षभूतसङ्कल्पविकल्परूपमनोबाधकर्त्तरि मयि दयालुत्वसिद्धिरिति भावः॥ ४॥

किंच वध्यस्य प्रत्यङ्गच्छेदने कृतेपि वधाभाववदनन्तचित्ता

वयवानां कर्त्तनासम्भावात्तत्कर्त्तनेपि तन्नाशाभावाच्च शिरश्छेद इव जगच्छिरो मन एव च्छिन्नमित्याह ।

असङ्ख्याश्चित्तजा भावा शक्याश्छेत्तुं क्रमात्कथम् ।
चित्तमेतत्समाच्छिन्नमत एव मया मुने ॥ ५ ॥

इति श्रीन०बोधसारेऽद्भुतशिरश्छेदपञ्चकमेकोनचत्वारिंशम् ॥ ३९ ॥

असंख्या इति । हे शिष्य चित्तजाश्चित्तादुत्पन्ना भावा विकारा असङ्ख्या न विद्यते सङ्ख्या गणना येषान्ते तथाभूता अनन्ता इत्यर्थः, अत एव ते क्रमात्क्रमेण च्छेत्तुं विकर्त्तितुं शक्याः सामर्थ्यविषयाः कथं केन प्रकारेण भवन्ति न कथमपीत्यर्थः, हे मुने इति सम्बोधनेन त्वमप्येवं जानास्येवेति सूचितम्, अत एवास्मादेव कारणान्मया मनोनाशकर्त्रैतदिदं प्रत्यक्षं चित्तं मनः समाच्छिन्नं सम्यक्पुनरुत्पन्नं न स्याद्यथा तथाऽऽच्छिन्नं विकर्त्तितं यदि त्वं मोक्षमिच्छसि तर्हि त्वयापि सङ्कल्पविकल्परूपमनोनाश एव कार्य इति भावः ॥ ५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपावद्भुतशिरश्छेदपञ्चकार्थप्रकाश एकोनचत्वारिंशः ॥ ३९ ॥

---

अथ जातसाक्षात्कारं शिष्यं प्रति श्रीगुरोः प्रश्नामृतम् ॥

इदानीमुपदिष्टार्थस्य शिष्ये स्थिरतापरीक्षणाय स्वप्रश्नानुदाहर्त्तुं श्रीगुरुप्रश्नामृताख्यं नवश्लोकं प्रकरणमभिदधान आह ।

अथ जातसाक्षात्कारं शिष्यं प्रति श्रीगुरोः प्रश्नामृतम् ।

अथेति । अथाद्भुतशिरश्छेदपञ्चकनिरूपणानन्तरं जातसाक्षात्कारं जात उत्पन्नः साक्षात्कारः स्वात्मप्रात्यक्ष्यं यस्य तं तथोक्तं शिष्यं प्रति शिष्यस्य प्रतियोगे द्वितीया श्रीगुरोः

श्रीगुरुकृतं कर्त्तरिपष्ठी प्रश्नामृतं प्रश्नानां पृच्छानाममृतं शिष्ये सुखाविर्भावकारणत्वादमृतमिवैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तत्रादौ परमपदानुभवो जातो वा नेति पृच्छति ।

नित्यानुभूतमपि यन्नानुभूतत्वमागतम् ।
अनुभूतिरसस्पर्शैरनुभूतं परं पदम् ॥ १ ॥

नित्यानुभूतमिति । यत्प्रसिद्धं विदुषां नित्यानुभूतमपि स्वयं प्रकाशरूपत्वान्नित्यं सर्वदाऽनुभूतमनुभवरूपमपि भावे निष्ठा नानुभूतत्वं नानुभूतमनुभवविषयस्तस्य भावस्तत्त्वं कर्मणि निष्ठा नागतं न प्राप्तमवेद्यत्वात्तदुक्तलक्षणं परं कार्यकारणातीतं कार्यकारणयोस्तत्रैव कल्पितत्वेनासत्त्वादित्यर्थः, पदं पद्यते श्रुतियुक्त्यनुभवैर्गम्यते तत्पदं प्रत्यगभिन्नं ब्रह्मानुभूतिरसस्पर्शैरनुभूतेरनुभवस्य यो रसः सुखविशेषस्तस्य स्पर्शाः साक्षात्कारास्तैस्त्वया कर्त्राऽनुभूतं साक्षात्कृतं किं किमु न वेति एकः प्रश्नः ॥ १ ॥

इदानीं प्रत्यगात्मनि ब्रह्मलक्षणानि साक्षात्कृतानि न वेति पृच्छति ।

प्रत्यक्षलक्षणैरेव पराग्वृत्तिविलक्षणैः ।
साक्षात्कृतः शिवः साक्षात्सच्चिदानन्दलक्षणैः ॥२॥

प्रत्यक्षलक्षणैरिति । हे शिष्य त्वया पराग्वृत्तिविलक्षणैः पराग्बहिरञ्चन्ति गच्छन्तीति पराञ्च्यो बहिर्मुखा यो वृत्तयोऽन्तःकरणस्य घटाद्यनुभवकरणरूपा अंशास्ताभ्यो विलक्षणैरविषयभूतैर्विगतानि लक्षणानि चिह्नानि स्वलक्षकानि येभ्यस्तैः प्रत्यक्षलक्षणैः प्रत्यक्षाणि अव्यवहितप्रकाश-

रूपाणि लक्षणानि चिह्नानि येषां तानि तैस्तेषां स्वयं प्रकाशत्वेन सर्वदास्फुरणरूपत्वात्तत्प्रात्यक्ष्यं सर्वत्र सर्वदानुभूयमानमिति भावः, सच्चिदानन्दलक्षणैः सत्कालत्रयाबाध्यं चिज्ज्ञप्तिमात्रमानन्दः सुखमेतान्येवाभिन्नानि ब्रह्मणो लक्षकत्वाल्लक्षणानि तैः साक्षाच्छिवोऽव्यवहितप्रकाशरूपः शिवः सुखरूपस्त्वंपदलक्ष्यः प्रत्यगात्मा साक्षात्प्रत्यक्षमनुभूतः किमिति पूर्वश्लोकादावर्त्तनीयं किं किमु नवेति प्रश्नः ॥ २ ॥

इदानीं वेदान्तश्रवणेन जनिततत्फलं ब्रह्मसुखाविर्भूत्या निद्रायामिव सर्वदुःखविस्मरणं जातं नवेति पृच्छति ।

यशोदागीतमधुरैर्मृदुवेदान्तभाषितैः ।

लालितः प्रापितो निद्रां मुकुन्द इव मोदसे ॥ ३ ॥

यशोदेति । हे शिष्य त्वं यशोदागीतमधुरैर्यशोदाया नन्दपत्न्या गीतानि गायनानि कृतानि यानि तेषां माधुर्याणि मृष्टानि सुखविशेषा इत्यर्थः, तैर्लालितः क्रीडितः सन्निद्रां सुषुप्तिसुखं प्रापितः प्राप्तः कृतः सन्मुकुन्दः श्रीकृष्णो यथा मोदते हृष्यति सुखितो भवतीत्यर्थः, तद्वत्त्वं यशोदागीतमधुरैर्यशः कीर्तिं ददातीति यशोदा विवेकवती बुद्धिर्विद्येति यावत्तया गीतानि गानानि कृतानि गुरुमुखाच्छ्रुतानि वाक्यानि तेन माधुर्याणि सुखविशेषा येषु तानि तथोक्तानि तैर्मृदुवेदान्तभाषितैर्मृदूनि कोमलस्पर्शानि सूक्ष्मार्थत्वात्सुखजनकत्वाच्चेत्साशयः, यानि वेदान्तानामुपनिषदां भाषितानि वचांसि तैर्लालितो विक्रीडितः सन्निद्रां प्रपञ्चविस्मृतिलक्षणात्मसमाधिरूपां सुप्तिं प्रापितः प्राप्तः कृतो मोदसे हृष्यसि न वेति प्रश्नः किं पदानुवृत्तिः कर्त्तव्यात्रापि ॥ ३ ॥

इदानीं स्वरूपसुखानुभवेन तृप्तोसि किं न वेति पृच्छति।

नवनीतरसग्रासैश्चमत्कारैः स्वसंविदाम्।
अन्तराप्यायितो बालमुकुन्द इव खेलसि ॥ ४ ॥

नवनीतेति। हे शिष्य त्वं बालमुकुन्द इव यथा बालमुकुन्दो बालो बालभावापन्नो मुकुन्दो मुक्तिप्रदो भक्तानां श्रीकृष्णो नवनीतरसग्रासैर्नवनीतं हैय्यङ्गवीनं तस्यैव ग्रासाः कवला भोग्या येषां ते तथोक्तास्तैः स्वसंविदां स्वस्य श्रीकृष्णस्य संविदश्चेतना अन्तःकरणवृत्तयश्चिदाभासविशिष्टा इत्यर्थः, तासां चमत्कारैर्विलासैरन्तराप्यायितोऽन्तरेव तृप्तः सन्खेलति क्रीडति तद्वन्नवनीतरसग्रासैर्नवनीतस्य हैय्यङ्गवीनस्य रस इव तृप्तिकारकत्वाद्रसः सुखं 'रसो वै स' इतिश्रुतेस्तदेव ग्रासो भोजनं येषां तैः स्वसम्विदां स्वाऽऽत्मरूपा याः सम्विदो ज्ञानानि तासां चमत्कारैर्विलासैरन्तराप्यायितोऽन्तरात्मन्येव तृप्तः सन्खेलसि किं नवेति प्रश्नः ॥ ४ ॥

इदानीं स्वानन्दे स्थितोसि किं न वेति पृच्छति।

स्वात्मनि प्रलयं नीत्वा दृश्यमेकाकितां गतः।
किं नृत्यसि निजानन्दे महादेव इवात्मनि ॥ ५ ॥

स्वात्मनीति। हे शिष्य त्वं महादेव इव यथा महादेवः शिवोऽहङ्कारदेवता रुद्र इति यावद्दृश्यं दर्शनविषयं जगत्स्वात्मनि स्वरूपेऽहङ्कारे प्रलयं नाशं नीत्वा प्रापयित्वैकाकितामेकलत्वं गतः प्राप्तः सन्निजानन्दे स्वात्मसुखे स्थितो भूत्वा नृत्यति तद्वद्दृश्यं ज्ञानविषयं समस्तं जगत्स्वात्मनि ब्रह्माभिन्ने प्रत्यगात्मनि प्रलयं प्रकृष्टो निर्बीजो लयो नाशस्तं नीत्वा प्रापयित्वा बाधं कृत्वेत्यर्थः, तत एकाकितामद्वैतरू-

एतां गतः प्राप्तः सच्चिदानन्दे निरतिशयात्मानन्द आत्मनि ब्रह्माभिन्ने प्रत्यगात्मनि स्थित्वा नृत्यसि किं नृत्यं करोषि किं न वेति प्रश्नः ॥ ५ ॥

इदानीं सविकल्पसमाधौ स्थितोसि किं नवेति पृच्छति।

सायङ्काले समाध्याख्ये स्निग्धां सर्वाङ्गसुन्दरीम्।
निजशक्तिमुमां पश्यन्महेश इव नृत्यसि ॥ ६ ॥

सायंकाल इति। हे शिष्य त्वं महेश इव यथा महेशः शिवः सायंकाले प्रदोषसमये स्निग्धां प्रेमवतीं सर्वाङ्गसुन्दरीं सर्वाणि समस्तानि यानि अङ्गानि हस्तपादनासिकानेत्रादीनि तैः सुन्दरीं कमनीयां निजशक्तिं स्वशक्तिमुमां पार्वतीं पश्यन्नवलोकयन्नृत्यति नृत्यं करोति तद्वत्समाध्याख्ये समाधिनामनि सायंकाले सविकल्पसमाधिरूपप्रदोषसमये सविकल्पस्य समाधेः सर्वजगतो बाधपूर्वं स्फूर्तिसत्त्ववत्त्वेन प्रदोषकालत्वमिति भावः, स्निग्धां स्वात्मनि प्रेमवतीं सर्वाङ्गसुन्दरीं सर्वैः समस्तैरङ्गैरवयवैरनुभाव्यानुभवानुभवितृरूपैः सुन्दरीं कमनीयरूपामु–उकारवाच्यं लिङ्गशरीरं समष्टिव्यष्टिरूपं द्विविधं तदभिमानिद्वयमपि तैजसहिरण्यगर्भाख्यं तन्माति साक्षाद्दृश्यत्वेनावलोकयति सा तथोक्ता तां, यद्वा–उ ब्रह्मैव प्रत्यगभिन्नं माति अनुभवति सा तथोक्ता तां, 'यो जागार तमु सामानि यन्ती'ति श्रुतेर्निजशक्तिं निजा स्वीया शक्तिर्जगज्जननसामर्थ्यरूपा तां चिच्छक्तिं पश्यन्सन्साक्षादवलोकयन्सन् किं नृत्यसि यावत्प्रारब्धक्षयं व्यापृतिरूपं नृत्यं करोषि किमिति प्रश्नः ॥ ६ ॥

इदानीं दृश्यविलयपरिपाको जातो न वेति पृच्छति।

दृश्यं निपीय गरलं पाचयित्वा तदात्मनि।

मृत्युञ्जयपदं प्राप्तः किं हृष्यसि हरो यथा ॥ ७ ॥

दृश्यमिति । हे शिष्य त्वं यथा यद्वद्धरो हरति भक्तदुःखमिति हरः सदाशिवो दृश्यं सर्वदेवासुरादिदृग्विषयं गरलं समुद्रादुत्पन्नं हालाहलं निपीय निशेषं पीत्वा तद्धालाहलमात्मनि स्वदेहे पाचयित्वा जारयित्वा मृत्युञ्जयपदं मृत्युञ्जयतीति मृत्युञ्जयस्तदेव पदं नाम प्राप्तः लब्धः सन् हृष्यति मोदते तथा तद्वद् दृश्यं ज्ञेयं सर्वं जगद्गरलं गरं विषं तद्धर्मं लाति अङ्गीकरोतीति गरलं स्वसेवकस्य नाशकत्वात्तन्निपीय निःशेषं पीत्वाऽऽत्मनः पृथगसत्त्वेनावलोकयित्वेत्यर्थः, तद्ग्रस्तं बाधितं जगदात्मनि प्रत्यगभिन्ने ब्रह्मणि पाचयित्वा पक्वं कृत्वा पुनरुदयाक्षमं कृत्वेत्यर्थः, मृत्युंजयपदं मृत्युं मृतिकारणं संसारं जयतीति मृत्युञ्जयो ब्रह्म तस्य पदं स्वरूपं प्राप्तो यातः सन् हृष्यसि नित्यतृप्तो जातोऽसि किं न वेति प्रश्नः ॥ ७ ॥

इदानीमन्तःकरणवृत्तौ स्वात्मानं साक्षात्पश्यसि नवेति पृच्छति।

यथा संमुखतां नीत्वा मुकुरे मुखमीक्षितम्।
अखण्डवृत्तौ च तथा स्वरूपं किं विलोकितम् ॥८॥

यथेति । हे शिष्य त्वया यथा यद्वत्सन्मुखतां स्वसन्मुखतां दर्पणं मुकुरं नीत्वा प्रापयित्वा तस्मिन्मुकुरे दर्पणं मुखं वदनमीक्षितमवलोकितं तथा तद्वत्स्वरूपं स्वस्यात्मनो रूपमाकृतिं स्वतो द्रष्टुमशक्यमपि अखण्डवृत्तौ ध्यानाभ्यासेनाखण्डाकाराकारितायां वृत्तावहंब्रह्मास्मीत्याकारायामित्यर्थः, स्वरूपं स्वस्यात्मनो रूपं सच्चिदानन्दघनमविलोकितं दृष्टं किं नवेति प्रश्नः ॥ ८ ॥

इदानीं मायायामन्तर्बहिश्चात्मानं जगद्रूपां मायां च दृष्ट्वा परमाश्चर्यवाञ्जातोऽसि किं नवेति पृच्छति।

बहिरन्तर्हरिं पश्यन्मायां पश्यञ्जगन्मयीम् ।
विस्मयं परमं यासि मार्कण्डेय इवात्मनि ॥ ९ ॥

इति श्रीनरहरिकृतौ बोधसारे श्रीगुरुप्रश्नामृतं चत्वारिंशम् ॥४०॥

बहिरिति । हे शिष्य त्वं मार्कण्डेय इव यथा मार्कण्डेयो मृकण्डुपुत्रो बहिर्बाह्यदेशे वटपत्रस्थितं बालमुकुन्दरूपमन्तश्च तद्देहे प्रविष्टः सन्स्वाश्रमे नारायणरूपं हरिं विष्णुं पश्यन्नवलोकयन् मायां च मुकुन्ददेहाद्बहिर्बाह्यदेशेऽन्तश्च तद्देहे जगत्स्वाश्रमादिदृश्यरूपां जगन्मयीं जगद्रूपां पश्यन्नवलोकयन्सन्परममुत्कृष्टं विस्मयमाश्चर्यं यातः प्राप्तस्तद्वद्बहिर्जगतो बाह्यदेशे स्वस्वरूपे स्थितमन्तश्च जगति स्वदेहे सच्चिदानन्दरूपेणानुवृत्तं हरिं सर्वद्वैतहरणशीलं प्रत्यगभिन्नं ब्रह्म पश्यन्नवलोकयन्सन्मायामपि सदसत्त्वादिलक्षणैर्निरूपयितुमशक्यां जगन्मयीं जगद्रूपां पश्यन्नवलोकयन्सन्नात्मनि अन्तःकरणे परमं श्रेष्ठमुत्कृष्टमित्यर्थः, विस्मयमाश्चर्यं यासि प्राप्नोषि किं किमु न वेति प्रश्नः ॥ ९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ श्रीगुरुप्रश्नामृतार्थप्रकाशश्चत्वारिंशः ॥ ४० ॥

---

अथ शिष्यप्रतिवचनम् ।

इदानीं शिष्यप्रतिवचनं निरूपयितुं शिष्यप्रतिवचनाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

## अथ शिष्यप्रतिवचनम् ।

अथेति । अथ गुरुप्रश्नामृतनिरूपणानन्तरं शिष्यप्रतिवचनं शिष्यस्य छात्रस्य प्रतिवचनं प्रत्युत्तरणमेतन्नामकं प्रकरणं

निरूप्यत इति शेषः, तदेवाह ।

श्रीगुरो सानुभावानां करुणापूर्णचेतसाम् ।
श्रीमतां कृपया नूनमस्माकं किमु दुर्लभम् ॥ १ ॥

इति श्रीनरहरिकृतौ बोधसारे शिष्यप्रतिवचनमेकचत्वारिंशम् ॥ ४१ ॥

श्रीगुरो इति । हे श्रीगुरो श्रिया स्वरूपसंपदा युक्तो गुरुराचार्यस्तस्य संबोधने हे श्रीगुरो अनेन संबोधनेन त्वादृग्गुरूणां कृपया शिष्याणां सर्वं सुलभमिति सूचितं, तदेव स्पष्टमाह सानुभावानामिति, सानुभावानामनुभावः प्रतापस्तेन सहितानां, यद्वा ऽनुभावः स्वात्मानुभवस्तेन सहितानामित्यर्थः, अत एव करुणापूर्णचेतसां करुणया दयया पूर्णं भरितं चेतश्चित्तं येषां तेषां श्रीमतां स्वसाक्षात्कारसंपत्तिमतां युष्माकं कृपया दययाऽस्माकं त्वच्छिष्यभावं प्राप्तानां नूनं निश्चयेन दुर्लभं दुःप्रापं किमु किमस्ति न किमपि सर्वमपि सुलभमेवेत्यर्थः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ शिष्यप्रतिवचनार्थप्रकाश एकचत्वारिंशः ॥ ४१ ॥

---

अथ चर्याचतुष्टयी ।

एवं शिष्यप्रतिवचनमभिधायेदानीं शिष्याणां ज्ञानित्वाभिमानेन निषिद्धाचरणे प्रवृत्तिं वारयितुं पूर्णज्ञानिनां तत्र प्रवृत्तावपि तद्दोषं च दर्शयश्चर्याचतुष्टय्याख्यं चतुश्श्लोकं प्रकरणमभिधास्यन्नाह ।

## अथ चर्याचतुष्टयी ।

अथेति । अथ शिष्यप्रतिवचननिरूपणानन्तरं चर्याचतुष्टयी चर्याया आचारस्य निर्णायिका चतुष्टयी चतुःश्लोकसमूहरूपैतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तत्र तावदादौ

ब्रह्मविदो 'न मातृवधेन न भ्रूणहत्यये' त्यादिश्रुत्या निषिद्धाचरणस्य दोषाभावप्रतिपादनात्केवलं तत्रैव प्रवृत्तिर्माभूदिति तत्र प्रवृत्याऽशोभाकारित्वं सदृष्टान्तमाह ।

जात्या यद्यपि गौरमेव वदनं रूपस्य नास्ति क्षति-
स्तत्किं कज्जलकालिमा मुखतले संलापनीयो बुधैः ।
अस्तु ब्रह्मविदः कृतैरपि न तैर्दुष्कर्मभिश्चेत्क्षतिः
किं कामादिकदर्थिता वरमहो निःसङ्गसौख्यं वरम् ॥ १ ॥

जात्येति । हे शिष्य ब्रह्मविदो ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु वेत्ति जानातीति ब्रह्मवित्तस्य ब्रह्मविदः कृतैराचरितैरपि तैर्नरकादिप्रापकैर्ब्रह्महननादिभिदुष्कर्मभिर्दुष्टानि निषिद्धानि यानि कर्माणि तैः क्षतिर्नाशो न नास्ति चेद्यदि तर्हि अस्तु भवतु दोषाभावः श्रुतिप्रामाण्यात्तथापि ब्रह्मविदः कामादिकदर्थिता कामो विषयभोगेच्छाऽऽदिर्येषां क्रोधादीनां तैः कदर्थिता तुच्छता वरमुत्तमं किमहो किमुत निःसङ्गसौख्यं निःसङ्गं नाशादिभिरसंबद्धं सौख्यं सुखमेव सौख्यं निरतिशयं सुखमित्यर्थः, वरं श्रेष्ठं तद्भवेति शेषः, तत्र दृष्टान्तो वदनं यद्यपि मुखं जात्या स्वभावेन गौरवर्णमस्ति अत एव तत्र लग्नेपि कज्जले रूपस्य क्षतिर्हानिर्नास्त्येव न विवृत एव परन्तु नेत्रप्रान्तभागएव लग्नेन कज्जलेन रूपस्य क्षतिर्नास्तीत्युक्तं सत्यमेव किञ्च प्रत्युत रूपशोभाकार्येव तद्भवति तत्तो हेतोर्बुधैर्विवेकिभिर्मुखतले वदनफलके कज्जलं कालिमा कज्जलस्य तैलादिसंयुक्तदीपोत्पन्नस्य काष्ण्यद्रव्यस्य कालिमा श्यामत्वं संलापनीयो लेपनीय इत्यर्थः, अयं भावः—यद्यपि 'न मातृवधेने'त्यादि श्रुतिभिर्ज्ञानिनां निषिद्धाऽऽचरणे दोषाभाव उक्तस्तथापि न तत्र विधिः किन्तु

तीव्रप्रारब्धवशेन जातेपि तस्मिन् दोषाभाव उक्तोऽतस्तत्रैव न प्रवर्त्तितव्यमसङ्गात्मसुख एव रतिः संपाद्या यथा गौरवर्णे मुखे लोकव्यवहारवशेन मुखशोभायै नेत्रयोरञ्जनं कार्यमित्युक्ते नेत्रयोः कज्जलेऽञ्जिते तच्छोभा स्यात्तस्मिंश्च मुखतले संलापिते सति लोकेऽशोभैव स्यादेवं तीव्रप्रारब्धवेगेन कृतेपि निषिद्धकर्मणि तत्क्षयेन शुद्धिकारणत्वादन्तःकरणस्य ज्ञानिनो गुण एव तस्मिंश्च बुद्धिपूर्वं कृते च मुखमण्डले कज्जललेप इव लोकहासजन्यं दुःखमेव स्यात्, किञ्च तदाचरणेन च नरकादिजन्यं दुःखमेव स्यादतस्तत्र न प्रवृत्तिः कार्येति ॥ १ ॥

ननु विद्यावतां प्रबलश्रुत्युक्तस्य निषिद्धाचरणे दोषाभावस्य सत्त्वात्तदाचरणे को दोष इत्याशङ्क्याह।

विद्यैवाधिगता सदामृतमयी विद्यावता तत्सुखं
स्थेयं वर्त्मनि सङ्गदोषरहिते सङ्गः पुनः कीदृशः।
किं भूषाऽस्य वरा स्थितिः स्तुतिमयी सा राजसिंहासने
द्वारि द्वारि कपर्दिकार्थमटनं किं वाऽस्य राज्ञो वरम् ॥२॥

विद्यैवेति। विद्यावता ज्ञानिना विद्यैव ज्ञानमेवाऽधिगता प्राप्ता सा चामृतमय्यमृतं सुखं ब्रह्म तन्मयी तद्रूपाऽस्ति यदि यर्हि तत्तर्हि सुखं यथा भवति तथा सङ्गदोषरहिते सङ्गः कामादिभिः सम्बन्धस्तज्जन्यो यो दोषो दुःखरूपमनिष्टं तेन रहिते व्यतिरिक्ते वर्त्मनि आचरणरूपे मार्गे स्थेयं स्थितिः कार्या पुनर्ज्ञानप्राप्तेरनन्तरं कीदृशः किं प्रकारः सङ्गः पापकर्मभिः सम्बन्धो भवेन्नैव भवेदित्यर्थः, ननु किं निःसङ्गसुखेन विदेहमुक्तिस्तु स्यादेव ज्ञानफलत्वात्तस्या इत्याशङ्क्य जीवतो मुक्तिसुखाननुभवे तस्या अप्यसिद्धिरिति निश्चित्य सङ्गसुखा-

त्रिःसङ्गसुख आधिक्यं तदादराय प्रदर्शयन्दृष्टान्तेन पृच्छति किमिति, अस्य राजकुलोत्पन्नस्य प्राप्तराज्यस्य च पुरुषस्य राजसिंहासने राज्ञो नृपस्य यत्सिंहासनं पदं तस्मिल्लोकादरणीयस्थान इत्यर्थः, सा प्रसिद्धा लोकपूज्या स्थितिः स्थानं सा वरा श्रेष्ठा भूषाऽलङ्कृतिः स्तुतिमयी स्तोत्ररूपा किं किमु किं किंवाऽस्य प्राप्तराज्यस्य राज्ञो नृपस्य द्वारि द्वारि लोकानां द्वारे द्वारे कपर्दिकार्थं कपर्दकलाभेच्छयाऽटनं भ्रमणं वरं श्रेष्ठं तत्कथय निन्द्याचरणेन जीवन्मुक्तिसुखानुभवाभावाल्लोकनिन्दाजन्यदुःखाधिक्याच्च विदेहमुक्त्यभावेन च नरकदुःखस्य विद्यमानत्वाच्च न निन्द्याचरणे प्रवर्त्तितव्यमिति भावः ॥ २ ॥

ननु श्रुतिप्राबल्येन निन्द्याचरणे ज्ञानिनां प्रवृत्तिर्भवतु को दोष इत्याशङ्क्य प्रयोजनाभावान्न कार्येत्याशयेनाह ।

शिष्टाचारपथं विना यदि भवेदात्मप्रबोधो महां-
स्त्याज्यस्तर्हि तु सर्वदैव विदुषा वर्णाश्रमाणां क्रमः ।
वर्त्म ज्ञस्य विलक्षणं यदि कृतात्किंचाकृतात्कर्मणः
संगृह्णातु जनांस्तदा मुनिजनस्तेनापि नास्य क्षतिः ॥ ३ ॥

शिष्टाचारेति । हे शिष्य तव शिष्टाचारपथं विना शिष्टानां श्रेष्ठानामाचारः कर्म तदेव पन्था मार्गः स्वर्गापवर्गकारणत्वात्तं तथोक्तं विना वर्जयित्वा निन्द्याचरणेनेत्यर्थः, महान्प्रबोधो दृढं ज्ञानं यदि यर्हि भवेत्स्यात्तर्हि तु तर्ह्येव विदुषा ज्ञानिना वर्णाश्रमाणां वर्णाश्च ब्राह्मणाद्या आश्रमा ब्रह्मचर्याद्यास्तेषां क्रम आचारः सर्वदैव सर्वकालमपि त्याज्यस्त्यक्तुं योग्यः स्यान्निषिद्धाचरणेनैव ज्ञानप्राप्तौ सत्यां सर्वेषामेव मुक्तिः स्यादेवं च सर्वेषामपि तत्र प्रवृत्तौ सन्मार्गोच्छेद-

प्रसङ्गो न हि सन्मार्गगामिनां प्रवृत्तिस्तत्र दृश्यते न हि च निषिद्धाचाराणां मुक्तिरपि सर्वेषां दृश्यते किन्तु केवलनरकप्राप्तिरेव दृश्यते श्रूयते चाऽतो निन्द्यकर्मणि प्रवृत्तिर्नैव कार्येति भावः, ननु 'नैनं कृताकृते तपतः, एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमि'त्यादिश्रुतिभिर्ज्ञानिषु सुकृतदुष्कृतभयाभावप्रतिपादनात्किं निष्फलसत्कर्माचार एवाग्रह इत्याशङ्क्य लोकसंग्रहफलसद्भावान्नैवमित्याह वर्त्मेति, ज्ञस्य ज्ञानिनो वर्त्माऽऽचरणरूपो मार्गः कृतात्कर्मणोऽकृतादकर्मणः कर्मत्यागादित्यर्थः, यद्वा कृतात्कर्मफलात्स्वर्गादेरकृतान्मोक्षाच्चात्र श्रुतिः।

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'ति ॥

विलक्षणं भिन्नमस्तीति यदि चेद्वदसि तदा तर्हि मुनिजनो मुनीनां ज्ञानिनां जनः समूहो जनाँल्लोकान्कर्माधिकारिजीवानित्यर्थः, संगृह्णातु ग्राहयतु स्वयं कर्म कृत्वा लोकानपि कारयतु इत्यर्थः, ।

'लोकसंग्रहमेवापि संपश्यन्कर्त्तुमर्हसी'ति ।

भगवद्गीतोक्तेः, ननु तर्हि लोकसंग्रहार्थमेव कर्म कुर्वतोपि तदाऽऽसक्त्या बन्धः स्यादित्याशङ्क्याह तेनापीति, तेनापि लोकसंग्रहार्थं कृतेनापि कर्मणाऽस्य ज्ञानिनो क्षतिर्नाशो न न विद्यते निषिद्धाचारेण बन्धाभाव इव सत्कर्माचारेपि बन्धाभावाल्लोकसंग्रहाय सत्कर्माचार एव ज्ञानिना प्रवर्तितव्यमिति भावः ॥३॥

ननु तर्हि दत्तादीनां कथं तत्र तत्र पुराणेषु स्वेच्छाचारः श्रूयते इत्याशङ्क्याह ।

दत्तोऽसावृषभो जडश्च भरतो मङ्क्षिश्च संवर्त्तकः

कर्मभ्रष्टपथं गताः कथममी चेत्पूर्वपक्षस्तव ।
साधो जागरितान्प्रतीदमुदितं पश्यन्ति शृण्वन्ति ये
निद्रान्धा न विलोकयन्ति न पुनः शृण्वन्ति वाच्या न ते ४

इति श्रीनरहरिकृतौ बोधसारे चर्याचतुष्टयी द्विचत्वारिंशा ॥ ४२ ॥

दत्त इति । असौ पुराणेषु प्रसिद्धो दत्तो दत्तात्रेय ऋषभ ऋषभनामा राजा नाभेः पुत्रो जडो भरतो भागवते प्रसिद्धो जडभरतो मङ्किश्च मङ्किनामा मुनिरपि संवर्त्तकश्च संवर्त्तकनामेत्येवमम्येते कर्मभ्रष्टपथं कर्मभ्यो विहितकर्मभ्यो भ्रष्टश्च्युतो यः पन्था मार्गस्तं गताः प्राप्ताः कथं कुत इति तव पूर्वपक्षः प्रश्नश्चेद्यदि तर्हि हे साधो अनेन सम्बोधनेन तव साधकत्वादेव कथितमिति सूचितं, तदेव स्पष्टमाह जागरितानिति, ये पश्यन्ति अवलोकयन्ति जगद्गतपदार्थाननुभवन्तीत्यर्थः, किञ्च शृण्वन्ति जगद्गतपदार्थनामानि श्रोत्रेणानुभवन्ति ताञ्जागरिताञ्जाग्रदवस्थावत इत्यर्थः, इदं लोकसंग्रहार्थं कर्म कर्त्तव्यमित्येवमुक्तं ये दत्तादय आत्मसाक्षात्कारानन्तरं न विलोकयन्ति न जगत्पदार्थान्पश्यन्ति न च नैव शृण्वन्ति तत्तत्पदार्थनामान्यपि श्रोत्रेण नानुभवन्ति ते निद्रान्धा निद्रया प्रपञ्चविस्मृतिलक्षणया सुप्त्याऽन्धाश्चक्षुर्हीनब्रह्मरूपास्ते पुरुषा न वाच्या न वचनार्हास्तेषां ब्रह्मरूपत्वाद्विधिनिषेधानधिकारितया सत्कर्महीना अपि न निन्द्या इति भावः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ चार्याचतुष्टय्यर्थप्रकाशो द्विचत्वारिंशः ॥ ४२ ॥

---

अथ ज्ञानगङ्गातरङ्गोनाशीतिकम् ।

एवं चर्याचतुष्टयीं निरूप्येदानीं बहुसन्देहनिराकरणेन ज्ञा-

नदाद्यभीय ज्ञानगङ्गातरङ्गोनाशीत्याख्यमेकोनाशीतिश्लोकं प्रक-रणमभिदधान आह ।

## अथ ज्ञानगङ्गातरङ्गोनाशीतिकम् ।

अथेति । अथ चर्याचतुष्टयीनिरूपणानन्तरं ज्ञानगङ्गातर-ङ्गोनाशीतिकं ज्ञानं ज्ञप्तिः सैव गङ्गा पवित्रकारकत्वाद् ।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' ।

इति गीतोक्तेः, यद्वा ज्ञानं ज्ञप्तिः सैवाऽऽत्मसन्मुखतया स-न्ततगतिमत्त्वात्सागरं प्रति सन्ततगमनवती गङ्गेव गङ्गा तस्या-स्तरङ्गा इवास्मिन्प्रकरणे निरूपयिष्यमाणाः श्लोकास्ते तत्तत्सं-शयमलनिवर्त्तकत्वात्तरङ्गा भङ्गास्तेषामेकेनोना न्यूनाऽशीतिस्तत्सं-ख्यानां श्लोकानां समूहरूपमेकोनाशीतिकं प्रकरणमुच्यत इति शेषः, तत्र तावदादावेतत्प्रकरणप्रयोजननिरूपणेनैतच्छ्रवणे शिष्यं प्रेरयति ।

ज्ञानगङ्गातरङ्गोनाशीतिकं शृणु सांप्रतम् ।
एकेनाप्यङ्गलग्नेन सर्वपापक्षयो भवेत् ॥ १ ॥

ज्ञानगङ्गेति । हे शिष्य त्वं भवान्सांप्रतमधुना ज्ञानगङ्गा-तरङ्गोनाशीतिकं ज्ञानमहंब्रह्मास्मीतिप्रमारूपा वृत्तिस्तस्यैव ब्रह्मात्मविषये सन्ततप्रवाहवत्त्वात्पवित्रकारकत्वाच्च तदेव ग-ङ्गेव गङ्गा तस्यास्तरङ्गास्तत्तद्विवेकरूपा वृत्तयस्तासां प्रतिपा-दकत्वादेतत्प्रकरणस्थश्लोकानां ज्ञानगङ्गातरङ्गत्वं तदाश्रयत्वादे-तत्प्रकरणस्य च ज्ञानगङ्गात्वं तेषामूनाशीतिकमूना—एकोना या-ऽशीतिस्तत्परिमितानां श्लोकानां समूहरूपं वक्ष्यमाणं प्रकरणं समूहे कन्, शृणु श्रोत्रेणानुभव श्रोतव्यमित्यर्थः, ननु ममैतत्प्र-करणश्रवणेन किं फलं स्यादित्याशङ्क्याहैकेनापीति, एके-

नापि ज्ञानगङ्गातरङ्गेण लौकिकगङ्गातरङ्गेणेवाङ्गलग्नेनाङ्गे लिङ्गशरीरे लग्नेन विचारपूर्वं स्थिरीभूतेन गङ्गातरङ्गपक्षे शरीरलग्नेन सर्वपापक्षयोऽखिलपापनाशो ज्ञानगङ्गातरङ्गपरामृष्टलिङ्गशरीरे सन्देहपापक्षयो भवेत्स्यादतो मुमुक्षुणा त्वयाऽन्यैश्चेदं प्रकरणं श्रोतव्यमिति भावः ॥ १ ॥

ननु चिद्रूपब्रह्मणो व्यापकत्वेन सर्वत्र विद्यमानत्वेपि कस्य चिल्लाभः कस्य चिदलाभोऽयुक्त इत्याशङ्क्य सदृष्टान्तं तत्सम्भावयति ।

वाङ्मयं खं हि सर्वत्र वाचो मूकस्य दुर्लभाः ।
चिन्मयं ब्रह्म सर्वत्र विद्याहीनस्य दुर्लभम् ॥ २ ॥

वाङ्मयमिति । चिन्मयं चिन्मात्रं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु सर्वत्र समस्तपदार्थेषु समस्तप्राणिष्वपि अस्ति विद्यते ज्ञानिदृष्ट्या तथा सत्यपि विद्याहीनस्य ज्ञानरहितस्य दुर्लभं दुःखेन श्रवणादिप्रयासेनैव लब्धुं शक्यं नानायासेन लब्धुं शक्यं साधनहीनस्य त्वप्राप्यमेव तदिति भावः, तत्र दृष्टान्तो हि यथा वाङ्मयं शब्दप्रचुरमाकाशस्य शब्दगुणवत्त्वात्खमाकाशं सर्वत्र समस्तप्राणिषु अस्ति तथापि मूकस्य मूकत्वफलकेन केन चित्कर्मणा वागिन्द्रियमप्राप्तस्य वाचो व्यक्तवाक्योच्चारा दुर्लभा दुःखेन तत्प्रापककर्माचरणेनायासेन लब्धुं शक्या नान्यथेत्यर्थः ॥ २ ॥

ननु ब्रह्मचैतन्यस्य स्वयं प्रकाशरूपत्वे सति कुतोऽन्तःकरणवृत्त्यप्रकाश्यत्वमित्याशङ्क्य सदृष्टान्तं तत्सम्भावयति ।

प्राचीमथ प्रतीचीं वा यत्र क्व चन गच्छतु ।
तमसा दृश्यते नैषा ब्रह्मचिद्भास्करो यथा ॥ ३ ॥

प्राचीमिति। यथा यद्वत्तमसा राऽयन्धकारेण नेत्रपटल-रूपेण वाऽऽवृतनेत्र इति शेषः, पुरुषः प्राचीं पूर्वदिशं प्रति अथवा यद्वा प्रतीचीं पश्चिमां दिशं प्रति अथवा यद्वा यत्र क चन यत्र कुत्रापि दक्षिणस्यामुत्तरस्यामध ऊर्ध्वं वेत्यर्थः, कुत्रापि सूर्यदर्शनाय गच्छतु यातु तथापि तत्तद्दिशां प्रकाशको भास्करः सूर्यो न दृश्यते नावलोक्यते स्वयंप्रकाशमानोपि सूर्यस्तिमि-रावृतचक्षुषा यथा नैव दृश्यत इति भावः, तथा तद्वत्तमसाऽ-ज्ञानेनावृतः पुरुषो यत्र क चनोपासनयेन्द्रलोकादिब्रह्मलो-कान्तं कर्मणा वा पितृलोकं निषिद्धकर्मणा वा नरकादिस्था-वरान्तं कुत्रापि गच्छतु यातु तथापि एषा विद्वत्प्रत्यक्षा ब्रह्म-चिद्देशकालवस्तुकृतपरिच्छेदशून्या चित्सर्वचेत्यसामान्यप्रका-शिका चेतना न दृश्यते नावलोक्यते तस्याः स्वयं प्रकाशरू-पत्वेऽप्यपि अज्ञानावृतप्राणिषु अप्रत्यक्षत्वं तदावरणशून्येषु-विद्वत्सु प्रत्यक्षत्वं चेति भावः ॥ ३ ॥

ननु प्रपञ्चासम्बद्धे ब्रह्मणि तदसम्बद्धप्रपञ्चस्य स्थितिः कथं सम्भाव्येत्याशङ्क्य तदपि सदृष्टान्तं सम्भावयति।

आकाशमण्डले शून्ये यथा नक्षत्रमण्डलम् ।
चिद्ब्रह्ममण्डले शून्ये तथा संसारमण्डलम् ॥ ४ ॥

आकाशमण्डल इति। यथा यद्वच्छून्ये वास्तववाय्वादि-सम्बन्धरहितत्वान्नक्षत्रमण्डलसम्बन्धरहित आकाशमण्डल आ-काशस्य वियतो मण्डले स्वरूपे नक्षत्रमण्डलं नक्षत्राणां ताराणां मण्डलं समूहोऽस्ति तथा तद्वच्छून्ये वास्तवप्रपञ्चमण्डलस-म्बन्धरहिते स्वतोपि निराकारे प्रतीतिविषयत्वाभावाच्छून्य-रूपे च चिद्ब्रह्ममण्डले चिन्मात्रब्रह्मस्वरूपे संसारमण्डलं संसा-

राणां सर्गाणां मण्डलं समूहोऽस्ति आकाशस्य नक्षत्रमण्डलेन सह वास्तवसम्बन्धाऽभावेपि प्रातीतिकसम्बन्ध इव ब्रह्मसंसार-मण्डलयोरपि वास्तवसम्बन्धाभावेपि प्रातीतिक एव सम्बन्धो ज्ञेय इति भावः ॥ ४ ॥

ननु मननवतो मुनेस्तुर्या स्थितिर्वर्ण्यते तत्र तत्र शास्त्रेषु तां कथयेत्यपेक्षां शिष्यस्यालक्ष्य तां प्रदर्शयति ।

जाग्रत्स्वरूप एवायं पश्यन्त्स्वप्नमयं जगत् ।
सुषुप्त इव चिद्रूपे मुनेस्तुर्यस्थताद्भुता ॥ ५ ॥

जाग्रदिति । सुषुप्ते निद्रायां सुषुप्त्यावृते प्रत्यगात्मनीति या-वत्, तिष्ठन्वर्त्तमानः सन् स्वप्नरूपं प्रातिभासिकमित्यर्थः, इव यथा पश्यति तथा तद्वत्स्वरूपं स्वेनैवान्यनिरपेक्षतया रूप्यते प्र-काश्यत इति स्वरूपं तस्मिंश्चिद्रूपे मायोपाधिके जगत्कारण-भूते चिद्रूपेऽव्याकृताभिधे जाग्रज्जाग्रदवस्थायां प्रतीयमानं ज-जद्विश्वं स्वप्नवन्मिथ्याभूतं पश्यन्नवलोकयन् सन् तिष्ठति स्थितिं करोति सैतादृशी मुनेर्ज्ञानिनस्तुर्यस्थता तुर्ये मायाशबले ब्रह्म-णि स्थितिस्तत्ता तद्रूपताऽद्भुताऽऽश्चर्यरूपाऽस्ति सा वक्तु-मशक्येति भावः ॥ ५ ॥

ननु तर्हि सा तुर्यस्थितिर्मुमुक्षोरपि मम कुतो न जायते तत्राह ।

मुमुक्षा दम्भमात्रं ते न ते तीव्रा मुमुक्षुता ।
तीव्रा यदि मुमुक्षा स्यान्न विलम्बो भवेदियान् ॥ ६ ॥

मुमुक्षेति । हे शिष्य ते तव मुमुक्षा मोक्षेच्छा दम्भमात्रं क-पटमेव केवलमस्ति लोकप्रदर्शनार्थे केवलं सा त्वया धृतेति भावः, ननु मम मोक्षेच्छायाः पारमार्थिकत्वमेवास्ति न तु दाम्भिकत्व

मतः कुतो मे सा न प्राप्यत इत्याशङ्क्याह नेति, हे शिष्य ते तव तीव्रा दृढा फलपर्यन्तमपरिच्छिन्ना मुमुक्षुता मोक्षेच्छावत्त्वं न न विद्यते, ननु मम मोक्षेच्छाया अदार्ढ्यं भवता कथं निश्चितं तत्राह तीव्रेति, तीव्रा दृढा मुमुक्षा मोक्षेच्छा यर्हि स्याद्भवेत्तर्हीयानेतावान्विलम्बश्चिरकालस्तुर्यस्थितेर्न भवेन्न स्यादतो दाम्भिकमुमुक्षाया इदं फलं तदभावे वा तददार्ढ्यफलमिति निनिश्चितमस्माभिरिति भावः ॥ ६ ॥

ननु तर्हि मुमुक्षात्वतोपि मे सा प्राप्ता भवेन्नवेति सन्देहं कुर्वन्तं मत्याह ।

अभूत्कुहूमयं विश्वं पक्षः स मलिनो गतः ।
इदानीं निर्मलः पक्षो जातं राकामयं जगत् ॥ ७ ॥

अभूदिति । स त्वयानुभूतो मलिनः कृष्णः पक्षो मासार्धं गतो ऽयतीतः कृष्णपक्षो गत इति कुतो ज्ञातं तत्राहाभूदिति, विश्वं दृश्यमानं पदार्थजातं कुहूमयं यस्याममावास्यायां चन्द्रकलानामत्यन्तमदृश्यता सा कुहूः 'सा नष्टेन्दुकला कुहूरि'त्यमरसिंहः, अन्धकाररात्रिर्ग्राह्या तन्मयं तत्प्रचुरमभूत्स्थितं पूर्वं तदिदानीं राकामयं राका पूर्णचन्द्रवती पूर्णिमा तया चात्र तद्रात्रिर्ग्राह्या तया प्रकाशितं जगज्जगद्गतपदार्थजातं जातं संपन्नमत इदानीमधुना निर्मलः शुक्लः पक्षो मासार्धं विद्यतेऽत इदानीं मलिनपक्षो गत इति निश्चेतव्यम्, अयमाशयः—पूर्वं तत्रान्तःकरणस्याज्ञानावृतत्वात् 'षोडशकलः सोम्य पुरुषे' इति श्रुत्योक्तषोडशकलानां तदाऽऽवृतत्वेन तत्तत्त्रिपुटीरूपाणां तिथीनां मालिन्यमभूत्तेन चान्धकाररात्रिषु स्थाण्वादौ चौरादिविपरीतज्ञानवदाऽऽत्मन्येव तत्तद्रूपत्रिपुटीरूपज्ञानं विपरीतज्ञानमेवस्थितं स पक्षो

मलिन इदानीं गत इदानीं शुक्लपक्ष इव प्रतिपदादिपूर्णिमा-न्ततिथिषु चन्द्रकलाधिक्येन रात्रौ प्रकाशाधिक्याद्विपरीत-ज्ञाननिवृत्त्या स्थाण्वादिषु स्थाण्वादियाथार्थ्यज्ञानमिवाज्ञान-निवृत्या श्रवणादिपरिपाके जाते ज्ञानस्य यथोत्तरं वृद्ध्या प-ञ्चदशत्रिपुटीलक्षणतिथिषु त्रिपुटीबाधपूर्वमात्मयाथार्थ्यस्फुरणं जायतेऽत इदानीं शुक्लपक्षस्य ब्रह्मपक्षस्यैव प्रवृत्तिर्जातेति पूर्णमास्यां चन्द्रवत्पूर्णं ज्ञानमपि स्यादिति निश्चेतव्यमिति ॥७॥

ननु सूक्ष्मस्यापि मनसो यत्र स्थितिर्न सम्भाव्यते तत्र मुनीनां पर्वतवत्स्थितिः कथं सम्भाव्या तत्राह ।

न तिष्ठति मनो यत्र गोः शृङ्गे सर्षपो यथा ।

शैला इव समाधिस्थास्तत्रैव स्थितिमागताः ॥८॥

नेति । यथा यद्वद्गोर्धेनोः शृङ्गे विषाणे शृङ्गाग्र इत्यर्थः, सर्षपः शिरीषबीजं न तिष्ठति नैव स्थितिं प्राप्नोति तत्रैव शैला इव यथा शिलानां समूहरूपा पर्वताः स्वभारेण तदाक्रम्य स्थितिं स्थिरतामागताः प्राप्ता इति सम्भाव्यते तद्वद्यत्र ब्र-ह्माभिन्ने प्रत्यगात्मनि मनः सङ्कल्पविकल्पवदन्तःकरणं न ति-ष्ठति न विद्यमानं भवति प्रसङ्गवतीत्यर्थः, यद्वा न स्थिरं भ-वति तत्रैव ब्रह्माभिन्ने प्रत्यगात्मन्येव समाधिस्थाः समाधौ नि-र्विकल्पसमाधौ स्थिताः सन्तो मुनयः स्थितिमागताः स्थि-रतां प्राप्ताः ॥ ८ ॥

ननु मुनीनां मननस्थितिः सा कथं ज्ञातव्येत्यपेक्षां शि-ष्यस्यालक्ष्य गुरुराह ।

जलप्रवाह इव याऽनवच्छिन्ना स्वभावतः ।

चतुर्दशधियां दूरे सा मुनेर्मननस्थितिः ॥ ९ ॥

जलप्रवाहेति। हे शिष्य जलप्रवाह इव यथा जलस्य तोयस्य प्रवाहः स्रोतः स्वभावतः स्वभावेनैवानवच्छिन्नो निरन्तरोऽखण्ड इत्यर्थः, अस्ति तथा तद्वद्या विवेकिप्रसिद्धा स्वभावतः स्वभावेनैवाऽनवच्छिन्ना नैरन्तर्येण वर्तमाना सोक्तलक्षणा मुनेर्मननवतः पुरुषस्य मननस्थितिर्मननस्य स्थितिः स्थिरताऽन्येषां तस्य च चतुर्दशधियां चतस्रो मनोबुद्ध्यहङ्कारचित्ताख्या धियो ज्ञानानि दश च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि च पञ्चेति दश धियश्चैतासां चतुर्दशधियां चतुर्दशसङ्ख्याकज्ञानानां दूरे वर्त्तमानाऽविषयेत्यर्थः, अतः सा वर्णयितुं नैव शक्येति भावः॥ ९॥

एवं मननस्थितेर्वचनाविषयत्वं निरूप्येदानीं तामेव लक्षणेन लक्षयति।

परमात्मपदभ्रष्टः स पुनः परमात्मताम्।
यया प्राप्नोति विश्वात्मा सा मुनेर्मननस्थितिः॥१०॥

परमात्मेति। पूर्वमज्ञानेन परमात्मपदभ्रष्टः परं कार्यकारणातीतं यदात्मस्वरूपं पदं स्वरूपं तस्माद्भ्रष्टश्च्युतः स एव पुनर्भूयो विश्वात्मा विश्वस्य जगत आत्मा स्वस्वरूपभूतः परमात्मतां परमः कार्यकारणास्पृष्टो य आत्मा तस्य भावस्तद्रूपता तां यया स्थित्या प्राप्नोति याति सोक्तलक्षणा मुनेर्मननवतः पुरुषस्य मननस्थितिर्मननरूपा स्थितिरवस्था ज्ञेया॥ १०॥

तामेव पुनर्लक्षणान्तरेण लक्षयति।

प्रतिबिम्बं न गृह्णाति निर्मलो निकटस्थितः।
प्रपञ्चवञ्चने युक्तिः सा मुनेरेव नामुनः॥ ११॥

प्रतिबिम्बमिति। कश्चिन्निर्मलः शुद्धो दर्पणो मुकुरः स-

मीपवर्त्यपि पदार्थानां नीलादिगुणवद्द्रव्याणां प्रतिबिम्बमाभासं न गृह्णाति नाङ्गीकरोति चेत्तद्वन्निर्मलो रागादिमलशून्यो निकटस्थितो जगद्गतपदार्थानां निकटे समीपे स्थितो वर्त्तमानः सन्नपि तेषां पदार्थानां प्रतिबिम्बमाभासं न गृह्णाति नैवाङ्गीकरोतीति या स्थितिः सोक्तलक्षणा प्रपञ्चवञ्चने युक्तिः प्रपञ्चस्य संसारस्य यद्वञ्चनं निरसनं तस्मिन्युक्तिः कुशलता मुनेरेव मननवत एव भवति अमुनेर्मननरहितस्य न न भवति ॥११॥

इदानीं मुनेः प्रतापं दर्शयति।

अपसर्पन्त्विति प्रोक्ताः क्षणादपसरन्त्यमी।
यदाज्ञया मनोभावाः स वशी कस्य नाद्भुतः ॥ १२ ॥

अपसर्पन्त्विति। अनेन मुनिना अपसर्पन्त्विति अपसर्पन्तु दूरं गच्छन्तु इत्येवं प्रोक्ता आज्ञप्ताः सन्तोऽमी एते प्रत्यक्षा मनोभावा मनसोन्तःकरणस्य विकाराः कामक्रोधादयो यदाज्ञया यस्य मुनेराज्ञा प्रेरणा तया क्षणात्क्षणमात्रकालेनैवापसर्पन्ति निवृत्ता भवन्ति स मुनिर्ज्ञानी कस्य कस्य विकारस्यापि वशी वशवर्त्ती न न भवति अतः सोऽद्भुतो लोकदृष्ट्या विषयवशी प्रतीयमानोपि विषयावशित्वादाश्चर्यरूप इति भावः ॥ १२ ॥

नन्वज्ञानिनां मनोवृत्त्यधीनत्वं ज्ञानिनां तु तदनधीनत्वमुक्तं तत्र मनस ऐक्ये पुरुषभेदेन विलक्षणकारित्वे को हेतुरित्याशङ्क्य सदृष्टान्तं हेतूक्त्या तत्सम्भावयति।

जारणात्कालकूटस्य शम्भोराशीविषा वशाः।
मारणान्मनसस्तद्वन्मुनेरिन्द्रियवृत्तयः ॥ १३ ॥

जारणादिति। कालकूटस्य कालकूटनामकं यत्समुद्रो-

त्पन्नं विषं तस्य जारणात्पाचनाद्, एवं हि पौराणिकी कथा-दुर्वाससः शापेन त्रैलोक्यलक्ष्मीः समुद्रे मग्ना तदा त्रैलोक्ये पीडित इन्द्रादिदेवैः सह ब्रह्मा विष्णुं शरणं जगाम तदा विष्णुना समुद्रमथने प्रेरितैर्देवासुरैर्मिलितैः समुद्रस्थितलक्ष्मीप्राप्त्यै समुद्रमथन आरब्धे सति ततः कालकूटं विषं प्रथममुत्पन्नं तेन च देवासुराः जगच्च सर्वे पीडिताः प्रलयकाल इव तदा शिवं शरणं गतेषु सर्वेषु शिवेन तद्रक्षणाय तद्भक्षितं पाचितं चेति तत एव शम्भोः शम्भुनामप्राप्तस्य शिवस्याऽऽशीविषा आशीषूरगदंष्ट्रासु विषं गरलं येषां ते तथोक्ताः सर्पाः स्वबलं शिवे न्यूनत्वादकिञ्चित्करं ज्ञात्वा वशाः स्वाधीना जाता यथा यद्वत्तद्वत्तथा मनसः सङ्कल्पविकल्परूपस्यान्तःकरणस्य मारणान्नाशान्मुनेर्मननवतो ज्ञानिन इन्द्रियवृत्तय इन्द्रियाणामन्तःकरणादिसहितानां श्रोत्रादीनां वृत्तयः स्वस्वविषयग्राहका अंशाः वशाः स्वाधीना जाताः ॥ १३ ॥

ननु मुमुक्षूणां प्रथममहंममतयोस्त्यागे विहिते तदशक्तेन किं कार्यमित्याशङ्क्याह ।

> अहन्ताममतात्यागः कर्त्तुं यदि न शक्यते ।
> अहन्ताममताभावः सर्वत्रैव विधीयताम् ॥ १४ ॥

अहन्तेति । हे शिष्य यदि यर्हि अहंममतात्यागोऽहन्ताया देहादिष्वहंभावस्य ममतायाश्च पुत्रदारादिषु ममत्वस्य च त्यागो विसर्गः कर्तुं सम्पादयितुं न शक्यते न पार्यते तर्हि सर्वत्रैव सर्वपदार्थेषु अपि अहन्ताममताभावोऽहन्ताया अहङ्कारस्य ममताया ममत्वस्य चाऽभावोऽसत्त्वैव विधीयतामनुसन्धीयतामनेनैवोपायेन मोक्षो भवेदिति भावः ॥ १४ ॥

इदानीं वर्णाश्रमधर्मेभ्यो विचारवैराग्ययोर्विशेषमादरं कर्त्तुं तच्छ्रैष्ठ्यमाह ।

वर्णाश्रमवयोवेषाध्ययनाचारसुन्दरः ।

विना विचारवैराग्यैः पशुरेव न संशयः ॥ १५ ॥

वर्णेति । वर्णाश्रमवयोवेषाध्ययनाचारसुन्दरो वर्णो ब्राह्मणादिस्तेनाऽऽश्रमश्च ब्रह्मचर्यादिस्तेन वयश्च तारुण्यं तेन वेषश्चालङ्कारः सौन्दर्यसम्पादनं तेन चाऽध्ययनं वेदादीनां पठनं तेनापि आचारश्च स्वविहितकर्मानुष्ठानं तेनापि सुन्दरो रमणीयो दृश्यमानोऽपि स पुरुषो विचारवैराग्यैर्विचारः सदसतोर्विवेको वैराग्यं च ब्रह्मपदान्तवस्तुषु काकविष्ठायामिव वैरस्यमादरे वहुवचनं तैर्विना ताभ्यां रहितश्चेत्पशुरेव तिर्यग्जन्तुरेव ज्ञातव्योऽत्र सन्देहः संशयो न नास्ति ॥ १५ ॥

ननु अन्यसाधनानामभावे केवलविचारवैराग्ययोर्मोक्षसाधकत्वासामर्थ्येन सामान्यत्वमस्त्वित्याशङ्क्य तयोः प्रधानत्वं दर्शयति ।

तीक्ष्णे विचारवैराग्ये चित्ते यस्य निरन्तरे ।

स पण्डितः किमेतस्य साधनान्तरचिंत्तनैः ॥१६॥

तीक्ष्णे इति । हे शिष्य यस्य पुरुषस्य चित्तेऽन्तःकरणे तीक्ष्णे दृढे अज्ञानभेदने समर्थे इत्यर्थः, विचारवैराग्ये विचारो विवेको वैराग्यं च ब्रह्मलोकान्तविषये तृणवत्तुच्छत्वबुद्धिस्ते उभे निरन्तरे सर्वदा वर्त्तमाने भवतः स पुरुषः पण्डितो ज्ञानी ज्ञेय एतस्योक्तलक्षणस्य ज्ञानिनः साधनान्तरकल्पनैः साधनान्तराणि अन्यसाधनानि तेषां कल्पनैः सङ्कल्पैः किं फलं न किमपि तैः प्रयोजनं तस्येत्यर्थः ॥ १६ ॥

ननु मुमुक्षूणां मोक्षस्यैवेष्टत्वात्तस्यान्तिकं ज्ञानमेव साधनमतस्तेनैव कृतार्थतास्तु किमापातिकेन वैराग्येणेत्याशङ्क्य प्रपञ्चवृक्षस्य शुष्कताकारणेन वैराग्येण विना तदसम्भवात्केवलज्ञानेन प्रपञ्चवृक्षस्य दाह आयासबहुत्वमार्द्रकाष्ठदाह इवेति समाधत्ते द्वाभ्यां, तत्रादौ दृष्टान्तमाह।

वर्धते मूलसेकेन मूलशोषण शुष्यति।
भस्मसात्क्रियते वह्निज्वालयेति तरुस्थितिः॥ १७॥

वर्धत इति। यथेत्यध्याहार्यं यथा यद्वन्मूलसेकेन मूलेषु यः सेकः सिच्यतेऽनेनेति सेको जलार्पणं तेन वृक्षो वर्धते एधते स एव मूलशोषेण मूलानां जलार्पणाभावेन यः शोषः शुष्कता तेन शुष्यति शुष्को भवति ततश्च वह्निज्वालया वह्नेरग्नेर्ज्वाला कीला तया भस्मसाद्भस्मरूपः क्रियते सम्पाद्यत इत्येवंप्रकारा तरुस्थितिस्तरोर्वृक्षस्य स्थितिर्गतिर्भवति॥ १७॥

वर्धते मनसः सेकैर्मनःशोषेण शुष्यति।
भस्मसात्क्रियते बोधज्वालयेति भवस्थितिः॥ १८॥

मूलेति। तथा तद्वन्मनसः संसारवृक्षस्यापि मनोमूलं तस्य तत्कल्पितत्वात्तस्य सेकैर्विषयजलार्पणरूपैः सिञ्चनैः प्रपञ्चवृक्षो वर्धत एधते स एव मनःशोषेण मनसः प्रपञ्चमूलभूतस्य शोषो वैराग्येण शुष्कत्वं तेन शुष्यति शुष्को भवति ततो बोधज्वालया बोधस्य जीवब्रह्मैक्यज्ञानस्याहंब्रह्मास्मीत्याकारस्य ज्वालाऽर्चिस्तया भस्मसाद्भस्मरूपो बाधितत्वेन तुच्छरूप इत्यर्थः, क्रियते सम्पाद्यत इत्येवंरूपा भवस्थितिर्भवः संसारस्तस्य स्थितिर्गतिर्भवति अतो ज्ञान इव मुमुक्षुभिर्वैराग्येऽप्यादरो विधेय इति भावः॥ १८॥

ननूपाधौ विद्यमानायां तत्र चित्प्रतिबिम्बः स्यात्तस्मिंश्च सति कथमद्वैतात्मस्वरूपसाक्षात्कारः स्याज्ज्ञानिनामित्याशङ्क्य सदृष्टान्तं तं सम्भावयति ।

परपारस्थितं हंसं द्विधेव प्रतिबिम्बितम् ।
तथात्मानं विजानाति तटस्थः सत्त्यदर्शनः ॥१९॥

परेति । यथा यद्वत्स्वस्थानात्परपारस्थितं परमन्यद्यत्पारं तटं नदीतडागादेस्तत्र स्थितं वर्त्तमानं हंसं हंसनामकं पक्षिणं प्रतिबिम्बितं जलगतप्रतिबिम्बेन सह वर्त्तमानं द्विधेव द्विप्रकारेण प्रतीयमानमपि एकरूपं वेत्ति जानाति तथा तद्वत्सत्यदर्शनः सत्यं सत्यात्मविषयं दर्शनं दृश्यतेनेनेति दर्शनं ज्ञानं यस्य स तथाविधोऽत एव तटस्थस्तटेऽविद्यानद्यास्तीरे स्थितः सञ्ज्ञान्यन्तःकरणाद्युपाधौ प्रतिबिम्बितेन सहानेकधाप्रतीतमप्यात्मानं पारमार्थिकमेकरूपं विजानाति वेत्ति अत उपाधौ सत्यपि तत्र च प्रतिबिम्बेन सहानेकधाप्रतीयमानेप्यात्मनि एकत्वानुभवः सम्भाव्य इति भावः ॥ १९ ॥

ननु ज्ञानिनि प्रतिबिम्बनिमित्तभूतान्तःकरणस्य विद्यमानत्वे पूर्ववत्संसारित्वापादनेन बन्धकं स्यादित्याशङ्क्याह ।

चित्रमल्पेन कालेन बोधभर्जितचेतसः ।
भर्जितस्येव बीजस्य कार्यसाधकता गता ॥२०॥

चित्रमिति । बोधभर्जितचेतसो बोधेन ज्ञानेन भर्जितं दग्धं यच्चेतोऽन्तःकरणं तस्याऽल्पेनाऽचिरेण कालेन समयेन कार्यसाधकता कार्यस्य संसारकल्पनारूपस्य कर्त्तव्यस्य साधकता कारणता गता नष्टेदं चित्रमाश्चर्यं यावान्कालो मनसः संसारकारणत्वसम्पादनेऽपेक्षितस्तावान्न बोधस्य तन्नाशेऽपेक्षित

इत्येवमाश्चर्यं ज्ञेयं, तत्र दृष्टान्तो भर्जितस्येति, यथा भर्जितस्याग्निपक्वस्य बीजस्य चणकादिबीजस्याऽङ्कुरजननादिरूपकार्यसाधकत्वं नश्यति तद्वद, अयमाशयः—भर्जितचणकादेर्भक्षणाद्युपयोगेन क्षुन्निवारणादिकिंचित्कार्यसाधकत्वेपि अङ्कुरादिजननकार्यसाधकत्वाभाव इव मनसोपि ज्ञानभर्जितस्य प्रारब्धभोगसाधकत्वेपि संसारबन्धनरूपकार्यसाधकत्वाभावस्तथा मनसः संसारसङ्कल्पने यावान्कालोऽपेक्ष्यते तावान्कालो बोधेन तन्नाशे नापेक्ष्यते यथा चणकादेरङ्कुरादिजनने यावान्कालोऽपेक्ष्यते तावान्कालोऽग्निना तद्दाहे नापेक्ष्यते तद्वदित्याश्चर्यमिति ॥ २० ॥

ननु तर्ह्यन्तःकरणादीनामत्यन्तलयेन केवलं ब्रह्मसुखानुभव एव संपाद्यः किमन्तःकरणेन चक्षुरादिनिःसृतेन जगद्विषयास्वादे प्रवृत्त्येत्याशङ्क्याह ।

पङ्गवस्तु कृता एव दृगाद्या न चलन्ति यत् ।

अन्धानपि करिष्यामि न पश्यन्ति यथा जगत् ॥ २१ ॥

पङ्गव इति । हे शिष्य दृगाद्याः दृग्दृष्टिराद्या प्रथमा येषां श्रोत्रादीनां ताः सर्वा वृत्तयः पङ्गवः पादहीनाः कृता एव संपादिता एव निश्चेतव्या भवता यद्यस्मात्कारणान्न चलन्ति स्वविषयेषु न सरन्ति अतस्तासां पङ्गुत्वं संपादितमिति भावः, अत ऊर्ध्वं तान्दृगादिपदार्थाश्चान्धानपि चक्षुर्हीनानपि करिष्यामि संपादयिष्यामि यथा येनान्धत्त्वसंपादनेन जगद्विश्वं न पश्यन्ति नावलोकयन्ति ॥ २१ ॥

ननु ब्रह्मणि ज्ञातेऽज्ञाते वा जीवस्य ब्रह्मसत्तयैव जीवनं तथा सति ज्ञाने कोऽतिशयस्तत्राह ।

जानातु वा न जानातु ब्रह्म जीवस्य जीवनम् ।

जानाति चेत्परो लाभो न जानाति भयं महत्॥२२॥

जानात्विति । अयं जीवो ब्रह्म देशकालवस्तुकृतपरिच्छेद-शून्यं वस्तु जानातु वेत्तु वाऽथवा न जानातु न वेत्तु तथापि उभयपक्षेपि तद्ब्रह्म जीवस्याऽधिष्ठानसहितबुद्धिस्थचिदाभा-सस्य सत्ताप्रदत्वेन जीवनं जीवनकारणभूतमस्त्येवैतत्ससमेव तर्हि ज्ञाने कोतिशयस्तत्राह जानातीति, अयं जीवस्तद्ब्रह्म जा-नाति वेत्ति चेद्यदि तर्हि परः श्रेष्ठो मोक्षरूपो लाभः प्राप्तिर-स्तीति ज्ञेया, स एव तन्न जानाति न वेत्ति चेद्यदि तर्हि महन्मृ-त्युरूपं भयं भीतिर्भवेदयं ज्ञाने विशेष इति भावः ॥ २२ ॥

ननु ब्रह्मणि को विशेषो येन तज्ज्ञानेन तल्लाभः संपाद्यः किं तु कामधेनूपासनया तत्साक्षात्कारेणेप्सितकामलाभात्तदेव सम्पाद्यमित्याशङ्क्य ब्रह्मणि ततो विशेषं दर्शयति ।

ब्रह्मधेनोः स्वभावोऽयं देवधेनोर्विलक्षणः ।
भोक्तैव तद्दुग्धपानात्सद्यस्तद्रूपतां व्रजेत् ॥२३॥

ब्रह्मधेनोरिति । भोक्तैव जीव एव सर्वविषयभोक्तृत्वेन प्रसिद्धः स तद्दुग्धपानात्तस्या ब्रह्मधेनोर्दुग्धं दुग्धवत्तृप्तिहेतुत्वा-त्सुखमत्र दुग्धपदेन ग्राह्यं दुह्यते तृप्तिरनेनेति व्युत्पत्त्या दुग्धं सुखं तस्य पानादास्वादनात्सद्यस्तत्कालमेव तद्रूपतां ब्रह्मधेनुरूपत्व-मेवेयात्प्राप्नुयादयमुक्तलक्षणो ब्रह्मधेनोर्ब्रह्म देशकालव-स्तुकृतपरिच्छेदशून्यं वस्तु तदेव धिनोति प्रीणाति जगदिति धेनुरानन्दरूपत्वेन जगदानन्दप्रदत्त्वात्तस्याः स्वभावः शील-मस्ति स देवधेनोर्देवानिन्द्रादीन्धिनोति प्रीणातीति देवधेनु-स्तस्याः स्वभावाद्विलक्षणो विचित्रो देवधेनोः स्वभावे तत्तत्का-मपूरकत्त्वेपि न स्वरूपप्रापकत्वं ब्रह्मधेनोस्तु तत्तत्सुखप्रापकत्वे

सति स्वरूपप्रापकत्वं विशेष इति भावः ॥ २३ ॥

इदानीं ब्रह्मण्येव स्थिरत्वसंपादनाय तत्साधनाभ्यासे प्रवृत्तये वृद्धसंमतिमाह ।

यदि योगे कृता बुद्धिः सप्तमीं गच्छ भूमिकाम् ।
मग्नश्चेद्गच्छ पातालमिति नीतिविदां वचः ॥ २४ ॥

यदीति । हे मुमुक्षो यदि यर्हि त्वया साधकेन बुद्धिर्निश्चयात्मिकान्तःकरणवृत्तिः कृता योजिता तर्हि सप्तमीं तुर्याभिधां भूमिकां भुवं स्थितिमित्यर्थः, गच्छ व्रज ततस्तत्र यदि मग्नो लीनश्चेद्यदि तर्हि पातो नाश आलीनो नष्टो यत्र तत्तथोक्तं ब्रह्म गच्छ प्राप्नुहि ली लय इति धातोराङ्पूर्वाद् 'अन्येभ्योपी'ति डष्टेर्लोपश्च, इत्येवं नीतिविदां नीतिं न्यायं विदन्ति ते नीतिविदस्तेषां वेदान्तिनामित्यर्थः, वचो वाक्यमतोऽस्य प्रामाण्यं मत्वाऽभ्यास आदरो विधेय इति भावः ॥ २४ ॥

ननु केवलचिन्मात्राकारवृत्तौ सम्पादितायां मोक्षः स्यादित्युक्तं तत्सत्यं तदशक्तौ किं कर्त्तव्यं मुमुक्षुभिरित्याशङ्क्योपायान्तरं तस्य सदृष्टान्तमाह ।

मध्याह्नभास्करं द्रष्टुं साक्षाद्यदि तु न क्षमम् ।
पटव्यवहितं पश्येज्जले वा प्रतिबिम्बितम् ॥२५॥

मध्याह्नभास्करमिति । मध्याह्नभास्करं दिने मध्यभागगतं सूर्यं साक्षाच्चक्षुषेक्षितुं द्रष्टुं यदि यर्हि न क्षमं न शक्यं तर्हि सूर्यसाक्षाद्दर्शनेच्छावता पुरुषेण किं कर्त्तव्यं तदाह पटेति, तदा मध्याह्नसूर्यं पटव्यवहितं पटेन सूक्ष्मवस्त्रेण व्यवहितमन्तर्हितं यथा तथा पश्येदवलोकयेद्वाऽथवा जले उदके प्रतिबिम्बितमाभासितं पश्येदवलोकयेत्ततश्च दृष्टेः स्थिरतायां सत्यां साक्षाद्द्रष्टुं स-

मर्थोपि भवेदिति भावः ॥ २५ ॥

दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह।

तथा चिन्मात्रचण्डांशुं निर्विकल्पं न चेत्क्षमः।
सर्वव्यापितया पश्येदन्तर्यामितयाऽथवा ॥ २६ ॥

तथेति। मुमुक्षुरपि तथा तद्वच्चिन्मात्रचण्डांशुं चैतन्यस्वरूपचण्डांशुं तीक्ष्णांशुं सूर्यमित्यर्थः, निर्विकल्पं निर्गता निवृत्ता विकल्पा देहनामजात्याद्युःकल्पना विपरीतकल्पना यस्मात्तथाभूतं ब्रह्माभिन्नप्रत्यगात्मानं साक्षादहमिति प्रत्यक्षं द्रष्टुमवलोकयितुं क्षमः समर्थो न चेन्न भवेद्यदि तर्हि तदा सर्वव्यापितया सर्वस्मिन्द्वैतजाते व्यापितया व्यापनस्वभावेन लक्षितमात्मानं पश्येदवलोकयेच्चिन्तयेदित्यर्थः, अथवा तत्राप्यसामर्थ्ये सति अन्तर्यामितया सर्वेषु भूतेषु भौतिकपदार्थेषु अन्तर्यमयति प्रेरयति भूतानीति अन्तर्यामी तस्य भावस्तत्ता तया लक्षितमात्मानं पश्येदवलोकयेत्ततश्चान्तःकरणशुद्धिर्यथा यथा भवेत्तथा तथाऽऽत्मसाक्षात्कारोपि स्यादिति भावः ॥ २६ ॥

ननु सर्वव्यापिधारणायामन्तर्यामिधारणायां वाऽभ्यस्यमानायां सत्यामपि आत्मसाक्षात्कारस्तत्फलं भवेन्न वेत्यत्र को निश्चयः, किं च तन्निश्चयेपि कियत्कालं साभ्यसनीयेत्याशङ्क्य तन्निश्चयाय तदभ्यासविधिं च दर्शयितुं दृष्टान्तमाह।

लक्षं शराः प्रयोक्तव्याः सूक्ष्मे लक्ष्येऽपि धन्विना।
कदाचिद्दैवसंयोगादेकोपि तु लगिष्यति ॥ २७ ॥

लक्षमिति। धन्विना धनुष्मता पुरुषेण सूक्ष्मेपि दृगगोचरेपि लक्ष्ये वेधार्थे लक्षिते कस्मिंश्चित्पदार्थे लक्षं लक्षशः शराः सायकाः प्रयोक्तव्याः प्रयोजनीयाः, तथा कृते सति किं स्यात्तदाह

कदाचिदिति, दैवसंयोगाल्लक्ष्यबाणयोः संयोगजनकं कर्म यदा पुष्टं सत्तत्संयोगफलोन्मुखं जातं तदत्र दैवपदेन ग्राह्यं तेन दैवेन यः संयोगो बाणलक्ष्ययोः सम्बन्धो जायमानस्तस्मान्निमित्तादेकोपि तु एक एवापि लगिष्यति लक्ष्ये संयुक्तो भविष्यतीति संभावनीयम्, अपि संभावनार्थः॥ २७॥

दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह।

सदैव चेतसो वृत्तिर्ध्यानाभ्यासे विधीयताम्।
कदाचित्कृपया शम्भोरखण्डाकारता भवेत्॥२८॥

सदैवेति। मुमुक्षुणा पुरुषेण चेतसोऽन्तःकरणस्य वृत्तिश्चिदाभाससहिता निश्चयात्मिका बुद्ध्यपरपर्याया सदैव निरन्तरमेव ध्यानाभ्यासे ध्यानमात्मविजातीयप्रत्ययानन्तरितात्मसजातीयविषयवृत्तिप्रवाह इति लक्षणलक्षितं तस्याभ्यासः पुनः पुनरावृत्तिरूपस्तस्मिन्विधीयतां योज्यतां तथा कृते किं स्यात्तदाह कदाचिदिति, कदाचित्कस्मिन्नपि काले ध्यानाभ्यासेन प्रसादितस्य शंभोः शं सुखं भवति जीवेऽस्मादिति शम्भुः प्रत्यगात्मा तस्य कृपया दयया विवेकोत्पादनरूपयाऽखण्डाकारताऽखण्डं भेदरहितं यद्ब्रह्म तस्याकारः सच्चिदानन्दरूपस्तस्य सत्ता तत्ता ब्रह्मरूपतेत्यर्थः, भवेत्स्यादतो निश्चयेन ध्यानाभ्यासो विधेय इति भावः॥ २८॥

ननु ध्याने कृतेऽकृते वा ब्रह्मणि तत्कृतातिशयाभावाज्जीवेपि तस्मिन्नुभये सति पारमार्थिकब्रह्मरूपत्वस्य सिद्धान्तितत्वाच्च किं तदाकारवृत्त्युत्पादनायासेनेत्याशङ्क्य तदभावे मुक्त्यभावं प्रतिपादयितुं ब्रह्माकारवृत्तिसम्पादने च प्रवर्त्तयितुं ब्रह्मणि तद्विदः सकाशान्न्यूनत्वदर्शनायोत्तरश्लोकद्वयं तत्र च पूर्वश्लोकस्यान्यार्थत्वप्रतीतेः प्रकृतार्थत्वं दर्शयितुं स्वयमेवाह।

# बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (वृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

| | | |
|---|---|---|
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० १ | | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि ६ | ६ | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० ७ | ७ | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिरचिता । | १ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डे २ | २ | ० |
| श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्यव्याख्या समेतम् खण्डानि ४ | ४ | ० |
| तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा–तत्त्वत्रयचुलुकसंग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । | १ | ० |


ब्रजभूषण दास और कम्पनी

चांदनीचौक के उत्तर नई सड़क बनारस




# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSRKIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 109.*




# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतपाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

# BODHASÂR,

A TREATISE ON VEDÂNTA,

BY

ŚRÎ NARAHARI,

With a commentary by the author' s pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus VIII.*

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1905.

# सूचीपत्रम् ।

| | | |
|---|---|---|
| गणपाठः | ० | ४ |
| गोलप्रकाशः | २ | ८ |
| गंगालहरी | ० | १ |
| गुरुसारणी | ० | ४ |
| जातकतत्त्वम् | ० | १२ |
| तत्त्वदीप | ० | १ |
| तर्कसंग्रहः | ० | १ |
| दत्तकमीमांसा | ० | ८ |
| धर्म्मशास्त्रसंग्रहः | ० | १ |
| धातुपाठः ( शिला -) ) | ० | २ |
| धातुरूपावली | ० | २ |
| नैषध चरित नारायणी टीका टाइप | ४ | ० |
| परिभाषापाठः | ० | १ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ |
| प्रथम परीक्षा | ० | २ |
| प्रथमपुस्तक हिन्दी | ० | १ |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ |
| लघुकौमुदीभाषाटीका | ४ | ० |
| लक्षणावली | ० | २ |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० |
| वसिष्ठसिद्धान्तः | ० | १ |
| विष्णुसहस्रनाम | ० | १ |
| शब्दरूपावली | ० | १ |
| शृङ्गार सप्तशती | १ | ८ |
| समासचक्रम् | ० | १ |
| समासचन्द्रिका | ० | १ |
| सरस्वतीकण्ठाभरणम् | ३ | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ |
| साङ्ख्यतत्त्वकौमुदी | ० | ६ |
| सिद्धान्तकौमुदी | ३ | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० |
| उपसर्गवृत्ति | ० | १ |
| क्षेत्रकौमुदी | ० | ६ |
| क्षेत्रसंहती | २ | ० |

ब्रह्मणोपि ब्राह्मणः श्रेयानित्याह द्वाभ्याम् ।

ब्रह्मणोपीति । ब्रह्मणोपि ब्रह्मभावादपि ब्राह्मणो ब्रह्मवेत्ता श्रेयानतिश्रेष्ठ इत्येवमाह कथयति द्वाभ्यां न तु पूर्वश्लोकस्यैवान्यार्थो वेदितव्य इति भावः, तदेव श्लोकद्वयमुदाहृत्य दर्शयति ।

लीलासिन्धोः कियदिव हरेः षोडशस्त्रीसहस्रं
निःसंख्याता विविधरुचिना येन भुक्ताः स्त्रियस्ताः ।
तादृङ्नीतः स पुनरनया भामया वश्यभावं ।
सम्यग्भुक्तो यदुपतिरतः सत्यभामैव धन्या ॥२९॥

लीलासिन्धोरिति । हे शिष्य लीलासिन्धोर्लीलानां क्रीडानां जलस्थानीयानां सिन्धुरिव सिन्धुराधारभूतस्तस्य हरेर्भक्तदुःखहरणशीलस्य श्रीकृष्णस्य षोडशस्त्रीसहस्रं षोडशसंख्याकं स्त्रीणां युवतीनां सहस्रं सहस्राणि जातावेकवचनं भागवतादौ वर्णितं श्रुत्वाऽऽश्चर्यं करोषि तत्षोडशस्त्रीसहस्रं कियदिव कियत्प्रमाणमिव अतिस्वल्पमेव तदित्यर्थः, कुत इत्यत आह निःसंख्याता इति, विविधरुचिना विविधाऽनेकप्रकारा रुचिः प्रीतिर्यस्य स तथोक्तस्तेन तथाभूतेन येन हरिणा श्रीकृष्णेन ता उक्ताः स्त्रियो वनिता निःसंख्याता निर्गता निवृत्ता संख्या गणना याभ्यस्तास्तथोक्ता भुक्ता अभ्यवहृताः क्रीडिता इत्यर्थः, पालिताश्च भुजधातोः पालनाभ्यवहारार्थान्निष्ठा तस्मिञ्छ्रीकृष्णे षोडशस्त्रीसहस्रभोग एव नाश्चर्यकारणमिति भावः, तत्र विवाहेनाङ्गीकृतानां स्त्रीणामेवाष्टाधिकशतोत्तरषोडशसहस्रसंख्याकत्वेपि गोपकन्यानां विवाहितानामविवाहितानां चापरिमितानां रासक्रीडायां श्रीकृष्णेन भुक्तत्वादनन्तत्वं श्रीकृष्णभुक्तस्त्रीणां

ज्ञेयं, स श्रीकृष्णस्तादृगुक्तगुणसंपन्नो यदुपत्तिर्यदूनां यदुकुलोत्पन्नानां पतिः पालकः श्रीकृष्णोऽनया तादृशश्रीकृष्णवशीकरणगुणेन प्रसिद्धत्वात्प्रत्यक्षया प्रख्यातयेत्यर्थः, भामया सत्यभामानाम्न्या स्त्रिया वश्यभावं स्ववशत्वं नीतः प्रापितश्च पुनः सम्यग्भुक्त आतृप्ति भुक्तः क्रीडितोऽतो हेतोः सत्यभामैव सत्यभामानाम्नी स्त्र्येवोक्तानन्तश्रीकृष्णवनितानां मध्ये तद्वशीभूताच्छ्रीकृष्णादपि धन्या कृतार्थाऽतिश्रेष्ठेति यावदिति लोकप्रसिद्धार्थः। प्रकृतार्थस्तु लीलासिन्धोर्लीलानां जीवन्मुक्तव्यवहाराणामनायासेन कृतत्वात्ता एव लीलापदेनाऽत्र ग्राह्यास्तासां लीलानां जलस्थानीयानां नित्यमुक्तात्मब्रह्मैवाश्रयत्वात्सिन्धुरिव समुद्र इव तस्य हरेः सर्वद्वैतहरणशीलस्यात्मनो ब्रह्माभिन्नस्य लोकदृष्ट्या कस्मिंश्चित्समये कस्मिंश्चिज्ज्ञानिनि अन्तःकरणावच्छिन्नत्वेन प्रतीतस्य षोडशस्त्रीसहस्रं 'षोडशकलः सोम्यपुरुष' इति श्रुत्या कलानां षोडशत्वप्रतिपादनात्ता एवात्र षोडशसङ्ख्या ग्राह्यास्तासां च वाङ्मात्रत्वात्परस्पराश्रयाश्रयित्वं विना स्थित्यभावप्रसिद्ध्या च समूहरूपत्वाच्च स्त्रीति नाम स्त्यै ष्ट्यै धातोः शब्दसंघातार्थस्येदं स्त्यायतेर्ड्रडिति ड्रट डकारटकारयोर्लोपे च डिति टेलोपे च ततो ङीषि च स्त्रीशब्दनिष्पत्तेः सर्वनाम्नां च वाचारम्भणश्रुत्या वाङ्मात्रत्वप्रतिपादनादनुभूयमानपरस्पराश्रयस्य षोडशवृत्तिषु प्रसिद्धेश्च षोडशकलानां स्त्रीशब्देन प्रतिपादने तासां च प्रत्येकमनन्तविषयाकारवत्तयाऽनन्तरूपत्वात्सहस्रत्वं तत्षोडशस्त्रीसहस्रं भोग्यं कियदिव कियत्परिमाणमिव अल्पमेव तदिति येन भुक्तेन बन्धनं तस्य ज्ञानिनो कथं नेत्याश्चर्यं तव जायते तन्न कर्त्तव्यमिति भावः, कुत इत्यत आह निःसङ्ख्याता इति विविधा अनेकप्रकारा

रुचयः प्रीतयो यस्य स तथोक्तस्तेन येन ब्रह्माभिन्नप्रत्यगात्मना योगिप्रत्यक्षेन समष्ट्यहङ्कारसम्बद्धसर्वजगत्साक्षिरूपेण ब्रह्मणा हिरण्यगर्भोपासकदृष्ट्या हिरण्यगर्भरूपेण ता उक्तलक्षणा व्यष्टिलिङ्गशरीरेषु षोडश षोडशसमूहरूपाः प्रत्येकं ताश्च सहस्रं सहस्रं परिणतास्ताः समष्टिलिङ्गशरीरे निःसङ्ख्याता निर्गतसङ्ख्याका अनन्ता इत्यर्थः, स्त्रिय उक्तलक्षणावत्त्रिपुट्योऽत्र ग्राह्या भुक्ता भोग्यत्वेनानुभूता इति यावत्तैजसहिरण्यगर्भयोरुपाध्यभेदेनाभेदात्कूटस्थब्रह्मणोरप्यभेदात्कूटस्थब्रह्मणस्तैजसहिरण्यगर्भस्य चाभेदात्तदभिप्रायेणेदमुक्तं ज्ञेयं, स उक्तस्तादृक्तादृशानन्तत्रिपुटीलक्षणभोग्यवस्तुसम्बद्धोपि उपतिरुकारवाच्यस्य समष्टिव्यष्टिलिङ्गशरीरसंहिततैजसाभिन्नहिरण्यगर्भस्य सत्ताभानप्रदत्वेन पालकस्त्वंपदलक्ष्यार्थकूटस्थचैतन्याभिन्नस्तत्पदलक्ष्यार्थो ब्रह्मचैतन्यं सोऽनया सर्ववेदान्तेषु प्रसिद्धत्वेन ज्ञानिप्रत्यक्षया 'दृश्यते त्वग्र्यया बुद्ध्ये'त्यादिश्रुतेर्भासया प्रत्यगभिन्नस्वप्रकाशं ब्रह्म भापदेनात्र ग्राह्यं तन्माति अज्ञाननिवृत्तिमात्रफलकत्वेन व्याप्नोतीति भामाऽहंब्रह्मास्मीति प्रमारूपा वृत्तिस्तया वश्यभावं वशमनुकूलत्वमर्हतीति वश्यस्तस्य भावस्तत्ता तं नीतः प्रापितो यदानुभवेच्छा तदानुभवविषयत्वेन दृश्यते तथा सम्पादित इत्यर्थः, च पुनः सम्यगसम्भावनाविपरीतभावनारहितं यथा भवति तथा भुक्तोऽनुभूतो यद्यतो हेतोरतो हेतोरनन्तत्रिपुटीलक्षणस्त्रीषु मध्ये ब्रह्मणः सामान्यरूपेण प्रत्यक्षरूपेण विद्यमानत्वादपि ब्रह्मतोपि सत्यभासैव सत्त्या कालत्रयाबाध्या या भा चितिस्तां माति व्याप्नोतीति सत्यभामाऽहंब्रह्मास्मीति प्रमारूपा वृत्तिरेव केवलं धन्या कृतार्थरूपा श्रेष्ठेत्यर्थः, ब्रह्मतोपि

ब्रह्माकारवृत्तेः श्रैष्ठ्यप्रतिपादनेन तद्वतो ब्राह्मणस्यात्र श्रैष्ठ्यं दर्शितमिति भावः ॥ २९ ॥

इदानीं स्पष्टमेव तदाह।

वर्त्तते ब्रह्म सर्वत्र ब्राह्मणो लभ्यते क्वचित्।
समर्घाद्ब्रह्मणस्तस्मान्महर्घो ब्राह्मणो भवेत् ॥ ३० ॥

वर्त्तत इति। ब्रह्म देशाद्यनवच्छिन्नं वस्तु सर्वत्र समस्तजगद्गतपदार्थेषु सर्वजाग्रदाद्यवस्थासु चानुस्यूतं वर्त्ततेऽस्ति ब्राह्मणस्तु ब्रह्मवेत्ता च क्वचित्कस्मिंश्चित्काले कस्मिंश्चिद्देशे वा विरल इत्यर्थः, लभ्यते प्राप्यते तस्मात्ततः कारणात्समर्घात्सर्वत्र सामान्यरूपेणविद्यमानतया समर्घं बहु तस्माद्ब्रह्मणः प्रत्यगभिन्नपरमात्मनः सकाशाद्ब्राह्मणो ब्रह्मवेत्ता महर्घो बहुयत्नमूल्यलभ्यो भवेत्स्यादतो मुमुक्षुभिर्ब्रह्माकारवृत्तिसम्पादनेन ब्राह्मणत्वं साध्यमिति भावः ॥ ३० ॥

ननु तर्हि ब्रह्माकारा वृत्तिः कथं सम्पाद्येत्याशङ्क्य लोकेषणादित्यागं विना सा केवलश्रवणादियत्नेनैव न लभ्यत इत्याशयेन स्वेष्टवस्तुनि योगिमनोरमणं सदृष्टान्तमाह।

परसङ्गसुखासक्तं योगिनां योषितामिव।
विहाय लोकसिद्धान्तं रमते स्वमते मनः ॥ ३१ ॥

परसङ्गसुखासक्तमिति। योषितामिव यथा योषितां व्यभिचारिणीनां स्त्रीणां परसङ्गसुखासक्तं परेणान्यपुरुषेण सह यः सङ्गः संयोगो मैथुनमित्यर्थः, तज्जन्यं यत्सुखं तस्मिन्नासक्तं रतं सन्मनोऽन्तःकरणं लोकसिद्धान्तं लोकेषु लौकिकशास्त्रेषु च यः सिद्धान्तो निर्णयस्तं व्यभिचारादिनिषेधरूपमित्यर्थः, विहाय परित्यज्य स्वमते स्वस्या मतमिष्टं यत्परस-

ङ्गसुखं तस्मिन्नेव रमते क्रीडति तद्वद्योगिनां ज्ञानिनां मनोन्तः-करणं परसङ्गसुखासक्तं परः कार्यकारणातीतः परमात्मा तेन सह यः सङ्गः संयोगस्तादात्म्यमित्यर्थः, तज्जन्यं यत्सुखं शर्म तस्मिन्नासक्तं रतं सँल्लोकसिद्धान्तं लोकानां तत्तच्छास्त्राणां च यः सिद्धान्तो निर्णयो देहाद्यात्मबुद्ध्या वर्णाश्रमाद्याचारस्यावश्यकर्त्तव्यरूपस्तं विहाय परित्यज्य स्वमते स्वस्यात्मनो मत इष्टे ब्रह्मसुख एव रमते क्रीडति एवमेव सर्वलोकधर्मान्परित्यज्य त्वया स्वमते ब्रह्मसुख एव रतिः कार्या तेन च ब्रह्माकारा वृत्तिर्भवेदिति भावः, अत्र भगवद्वचनं ।

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' इति, ॥

श्रुतिश्च 'लोकैषणायाश्च वित्तैषणायाश्चे'त्यादिः, 'न कर्मणा न प्रजया न धनेन त्यागेनैके अमृतत्वमानशु रि'ति च ॥३१॥

ननु सर्वलौकिकधर्मेभ्योपि व्यावर्त्तितस्य मनसो ब्रह्माकारता भवेन्नवेति सन्देहमालक्ष्य तन्दूरीकरोति सदृष्टान्तम् ।

तोयरन्ध्रनिरोधेन भाति पूर्णं सरोवरम् ।
वृत्तिरन्ध्रनिरोधेन पूर्णो बोधः किमद्भुतम् ॥ ३२॥

तोयेति । हे शिष्य यथेत्यध्याहार्यं यद्वत्तोयरन्ध्रनिरोधेन तोयस्य जलस्य यानि रन्ध्राणि च्छिद्राणि कर्कटादिभिर्निर्मितानि तद्द्वारा जलनिर्गमेन सरोवरस्यापूर्णत्वं भवेदिति प्रसिद्धं तेषामेव निरोधेनावरोधेन कृतेन जलस्य तत्रैव स्थिरतया पूर्णं भरितं सरोवरं सरो भाति शोभते तथेत्यध्याहार्यं तद्वद्वृत्तिरन्ध्रनिरोधेन वृत्तयः कामादय इन्द्रियाणि च ता एव रन्ध्राणि अन्तःकरणावच्छिन्नज्ञानस्य तत्तद्विषयं प्रति गन्तुं द्वाराणि तेषां

निरोधेनावरोधेन कृतेन बोधो ज्ञानं पूर्णो परिपूर्णो भाति शोभतेऽत्रास्मिन्नर्थे किमद्भुतं कुत आश्चर्यं तव नात्र सन्देहः कार्य इति भावः ॥ ३२ ॥

ननु सर्ववृत्तिनिरोधस्त्ववश्यं कर्त्तव्यश्चेत्स क्रियतां जगद्विषयवासनानां विद्यमानत्वे का हानिरित्याशङ्क्य तन्निवारणमन्तरेण सा न स्यादित्याशयेन तस्या निष्फलत्वनिरूपणपुरःसरं तद्दोषं दर्शयति।

निर्मूला निष्कला शुष्का कदर्या भोगवासना।
तया तिरोहितः स्वामी तृणेनेव महागिरिः॥ ३३ ॥

निर्मूलेति। निर्मूला वासना विषयाणामसत्त्वान्मूलहीना निष्कला निर्गता निवृत्ता कला सदंशो यस्याः सा तथोक्ता वास्तवसत्त्वरहितेत्यर्थः, शुष्का नीरसा सुखहीनेत्यर्थः, कदर्या शठा स्वस्वविषयात्यागेन दुःखदेत्यर्थः, एतादृशी भोगवासना भुज्यन्त इति भोगा विषयास्तेषां जगद्गतपदार्थानां वासनेच्छाऽस्ति, ननु तर्ह्यस्तु सा तादृश्या भोगवासनया किंकर्त्तव्यमात्मनो येन तन्निवारणं सम्पाद्यमित्याशङ्क्याह, तयेति तया भोगवासनया स्वामी तस्याः सत्ताप्रदत्वेन पालकः प्रत्यगभिन्नः परमात्मा तिरोहित आच्छादितोऽस्ति अतो न प्रकाशते, ननूक्तलक्षणवत्त्वेन तस्यास्तुच्छतायां सत्यां कथं ब्रह्मरूपस्यात्मनआच्छादकत्वं सम्भाव्यमित्याशङ्क्य तत्सम्भावयितुं दृष्टान्तमाह तृणेनेति, तृणेनेव यथा तृणं स्वयमतिसूक्ष्मत्वेन तुच्छमपि स्वतो बीजारोपेण तदुत्पन्नतृणसमूहरूपेण परिणतेन यत्तसेन महागिरिर्महानतिस्थूलोपि गिरिः पर्वत आच्छादितो भवति तद्वदित्यर्थः, अयं भावः—पर्वतादुत्पन्नस्य तृणस्य

स्वस्यानेकत्वरूपपरिणामेन स्वतस्तुच्छे सत्यपि स्वकारणबृहत्पर्वताच्छादकत्वसिद्धिरिव वासनायाः स्वतस्तुच्छत्वेपि स्वकारणभूतब्रह्मात्माच्छादकत्वसिद्धिरनेकविषयाकारपरिणामेन सम्भाव्येति तन्नाशे यत्नः कार्य इति ॥ ३३ ॥

तमेव वासनात्यागं द्रढयितुं तं विना देशकालादीनां मुक्तिसाधनानां मुक्तावकिञ्चित्करत्वं दर्शयति ।

न देशकालौ न वयो न युक्तिर्न विदग्धता ।
यदैव वासनात्यागस्तत्र मुक्तिस्तदैव हि ॥ ३४ ॥

नेति । हे शिष्य वासनात्यागाभावे सति तव ते देशो विजनादिः कालश्च प्रत्यूषादिर्ध्यानयोग्यौ न मुक्तिप्रापकौ भवत एवमग्रेपि तथा वयोऽवस्थापि वार्धक्यादिर्न नैव मुक्तिप्रदं भवति न नैव युक्तिर्योगोपि मुक्तिदा स्याद्विदग्धता पाण्डित्यं न मुक्तिं साधयति, ननु तर्ह्येषामभावेपि केवलभोगवासनात्यागस्यापि तथात्वमस्तु तत्राह यदैवेति, हे शिष्य पूर्वोक्तसाधनेष्वसत्सु सत्सु वा यदैव यस्मिन्नेव समये तव भवतो वासनात्यागो वासनानां भोगेच्छासंस्काराणां त्यागः प्रमोक्षः स्यात्तदैव तत्रैव समये तवेत्यावर्त्तनीयं मुक्तिर्मोक्षः स्याद्भवेद्धि प्रसिद्धमेतद्वेदान्ते विद्वत्सु च वासनात्यागस्यैव मुक्तिप्रदत्वमित्यर्थः ॥ ३४ ॥

ननु कृतेप्यभ्यासे ज्ञानं स्यान्नवेत्याशङ्कां शिष्यस्यालक्ष्य सदृष्टान्तं तत्सम्भावयति तत्र दृष्टान्तपक्षेऽर्थस्तावद् ।

उपायैः शोधिते क्षेत्रे निर्मलं बीजमर्पितम् ।
किं चित्रं धान्यसम्पत्तौ स देवो यदि वर्षति ॥ ३५ ॥

उपायैरिति । उपायैः कर्षणाद्युपायैः क्षेत्रे बीजावापस्थान-

भूमौ शोधिते शुद्धे कृते सति ततश्च तत्र निर्मलं शुद्धं बीजं कीटादिभिरदुष्टं बीजं चणकादि धान्यमर्पितमुप्तं यदि च यर्ह्येव स मेघाभिमानी देव इन्द्रो वर्षति वृष्टिं करोति तर्हि तदा धान्यसम्पत्तौ धान्यानां चणकादीनां धान्यानां सम्पत्तौ प्राप्तौ सत्यां किञ्चित्रमाश्चर्यं कः सन्देहो वा। दार्ष्टान्तिकपक्षेऽप्यत्रैवार्थ ऊह्यः स यथा हे शिष्य क्षेत्रेऽन्तःकरण उपायैरुपायान्ति मोक्षसाधनभूते ज्ञानेऽनुकूला भवन्ति त उपाया वैराग्यादयस्तैः कृत्वा शोधिते निर्मलीकृते सति तत्रैव निर्मलं शुद्धं मायातत्कार्यमलरहितं भेदरहितमित्यर्थः, बीजं समस्तजगत्कारणभूतं प्रत्यगभिन्नं ब्रह्मार्पितं धारणया स्थिरीकृतं यद्यदि तर्हि स देवः स गुरुरूपो देव ईश्वरो महावाक्यार्थोपदेशेन वेदान्तार्थनिरूपणरूपेण जलेन वर्षति ज्ञानामृतवृष्टिं करोति तर्हि तदा धान्यसम्पत्तौ धान्यं धन्यत्वं कृतकृत्यत्वमित्यर्थः, तस्य सम्पत्तौ प्राप्तौ सत्यां किञ्चित्रं किमाश्चर्यं कः सन्देहो वा न कोपीत्यर्थः ॥ ३५ ॥

ननु महावाक्यविचारेण ज्ञानं भवतीत्युक्तं तत्कीदृशमित्याशङ्क्य लोकप्रसिद्धज्ञानविलक्षणं तद्दर्शयति।

कृतवाक्यविचारस्य परमार्थमभीप्सतः।
ज्ञानं गरिष्ठमज्ञानमज्ञानं ज्ञानमुत्तमम् ॥ ३६ ॥

कृतवाक्येति। हे शिष्य कृतवाक्यविचारस्य कृत आवर्त्तितो वाक्यानां महावाक्यानां तत्त्वमसीत्यादीनां विचारो विवेको येन स तथोक्तस्तस्यात एव परमार्थं महावाक्यविचारेण विविक्तं परमार्थं प्रत्यगभिन्नं ब्रह्म तदेव मोक्षरूपमभीप्सतः सर्वभावेनेच्छतो विदुषो गरिष्ठमतिस्थूलं लोकप्रसिद्धं यत्पाण्डित्याद्यतिस्थूलं ज्ञानं ज्ञायन्ते विषयाः सर्वेऽनेनेति ज्ञानं

वेदनं तदज्ञानमवेदनं भवति, यद्वा लोकप्रसिद्धं यज्ज्ञानं वेदनं तद्वरिष्ठं श्रेष्ठमज्ञानं भवतीति व्याख्येयं, तथा लोकप्रसिद्धमज्ञानं जगद्विषयकं ब्रह्मविषयकमपि अवेदनं यदुत्तमं श्रेष्ठं ज्ञानं ज्ञायते भास्यते प्रत्यगभिन्नब्रह्मरूपेण तत्स्वयंप्रकाशरूपब्रह्मभानमेव भवति, यद्वोद्धृतं तमोऽज्ञानं यस्मात्तदुत्तममज्ञानहीनं शुद्धमित्यर्थः, ज्ञानं ज्ञायते प्रकाश्यते प्रत्यगभिन्नं ब्रह्मानेनेति ज्ञानं वेदनं भवतीत्यर्थः, तत्तादृशं ज्ञानं मुमुक्षुभिर्मोक्षाय सम्पाद्यमिति भावः ॥ ३६ ॥

ननु तादृशज्ञानाभावेपि मम वेदान्तव्याख्यातृत्वेनैव मोक्षो भवेदित्याशङ्क्य तद्व्याख्यानासक्त्यात्मन्यस्थिरत्वे सति वादिजयादौ प्रवृत्त्या मोक्षो न स्यात्प्रत्युत देहात्मभावरूपं मरणं द्वेषबुद्ध्या वाऽरिकृतमारणादिप्रयोगेन लोकप्रसिद्धं देहविसर्जरूपं वा मरणं भवेदित्याशयेनाह ।

> व्याख्यासि वेदान्तगिरो जयसि द्वैतवादिनः ।
> नान्तर्विशसि तन्मन्ये तत्रास्ति मरणं तव ॥ ३७ ॥

व्याख्यासीति । हे शिष्य त्वं भवान्वेदान्तगिरो वेदान्तानामुपनिषदां सूत्रभाष्यादीनां च वाक्यानि व्याख्यासि व्याख्यानं कृत्वा निरूपयसि सत्यं तद्व्याख्यानेन च द्वैतवादिनोऽनेकस्वगतादिभेदभिन्नं जगद्ब्रह्मजीवयोर्भेदं च द्वैतं तद्वदितुं सत्यत्वेन प्रतिपादयितुं शीलं येषां ते तथोक्तास्ताञ्जयसि पराभवसि तदपि सत्यं परन्तु अन्तरन्तरात्मनि न विशसि लीनो न भवसि तत्ततो हेतोस्तत्र द्वैतवादिजयाय वेदान्तव्याख्याने तव ते मरणं देहात्मभावरूपा स्मृतिरथवा वादिकृतमारणादिप्रयोगेन प्रसिद्धं देहविसर्गरूपं मरणमस्ति विद्यत

इत्यहं मन्ये निश्चिनोमि आत्मानुसन्धानाभावे वेदान्तव्याख्यानस्य मरणमेव फलं न मोक्ष इति भावः ॥ ३७ ॥

अत एव पूर्वपूर्वकालादुत्तरोत्तरकाल आत्मनि स्थैर्याधिक्यं सम्पाद्यमित्याशयेनाह ।

मित्रेण कुशले पृष्टे पूर्वावस्थामनुस्मरन् ।
इदानीं कुशलं जातमिति हृष्यति योगवित् ॥ ३८॥

मित्रेणेति । हे शिष्य योगविद्योगो जीवब्रह्मैक्यं तद्वेत्ति जानातीति योगविज्जीवब्रह्मैक्यवेत्ता मित्रेण हितोपदेशकर्त्रा गुरुणा कुशले क्षेमे पृष्टेऽनुयुक्ते सति ततः पूर्वावस्थां किं चिद्ब्रह्मसुखानुभवरूपामवस्थां स्थितिमनुस्मरन्ननुचिन्तयन् सन्निदानीं पूर्वावस्थातोऽस्मिन् क्षणे कुशलं क्षेमं विशिष्टं जातमुत्पन्नमित्येवं कथयित्वा गुरुं प्रति स्वयं हृष्यति हर्षं प्राप्नोति एवमेव त्वयापि उत्तरोत्तरक्षणे ब्रह्मसुखस्थैर्यमन्तःकरणे स्याद्यथा तथाऽभ्यासः कर्त्तव्य इति भावः ॥ ३८ ॥

ननु मोक्षसाधनभूतज्ञानाभ्यासस्यातीव प्रयत्नसाध्यत्वात्स्वल्पप्रयत्नसाध्यकर्मणैव परलोकसुखादिसाध्यं किं ज्ञानप्रयासेनेत्याशङ्कां शिष्यस्यालक्ष्य गुरुः कर्मरुचिवारणेन ज्ञाने रुचिमुत्पादयितुं कर्मिणः सकाशाज्ज्ञानिनः श्रैष्ठ्यं दर्शयति द्वाभ्याम् ।

कर्मठः काञ्चनालिप्तशून्यताम्रघटोपमः ।
विद्वांस्तु रत्नसम्पूर्णहेमकुम्भ इवोत्तमः ॥ ३९ ॥

कर्मठ इति । कर्मठः कर्मासक्तो बहिः शुचित्वदर्शनादन्तरज्ञानावृतत्वाच्च काञ्चनालिप्तशून्यताम्रघटोपमो बहिः काञ्चनेन सुवर्णेनालिप्त ईषल्लिप्तोऽन्तश्च शून्यो रिक्तो यस्ताम्रस्य घटः

कुम्भः स एवोपमा दृष्टान्तो यस्य स तथोक्तोऽस्ति तु पुन-र्विद्वाञ्ज्ञानी रत्नसम्पूर्णहेमकुम्भ इव यथा रत्नैर्हीरकादि-भिः सम्पूर्णः परिपूर्णो हेम्नः सुवर्णस्य कुम्भः कलशस्तथो-त्तमः श्रेष्ठोऽन्तर्ब्रह्मसुखपूर्णत्वाद्बहिरपि मुमुक्षूणां ज्ञानप्रदत्वा-च्चातः कर्मठाज्ज्ञानी श्रेष्ठ इति भावः ॥ ३९ ॥

ननु देहत्रयव्यवहारे जाग्रत्स्वप्नसुषुप्तिरूप उभयत्र समाने दृश्यमाने ज्ञान्यज्ञानिनोरन्तरं कथमवगन्तव्यं तच्च कीदृगित्याशङ्क्य सुखप्रदत्वदुःखप्रदत्वाभ्यामेवेत्याशयेन तदेव सदृष्टान्तमाह ।

भूरूहत्वाविशेषेपि द्वयोरन्तरमीदृशम् ।
इक्षुकाण्डसमो विद्वान्दण्डकाष्ठसमः पशुः ॥४०॥

भूरुहत्वेति । हे शिष्य भूरुहत्वाविशेषेपि भुवः पृथ्व्या रुहन्ति उत्पद्यन्ते ते भूरुहा वृक्षास्तेषां भावो जातिस्तस्याऽवि-शेषोऽवैलक्षण्यं तस्मिन् सत्यपि द्वयोरिक्षुदण्डकाष्ठयोरन्तरं भेद ईदृशमेतादृशमस्ति मिष्टरसदानेन तृप्तिकारकत्वं ताडने-नान्येषां दुःखकारणत्वं चान्तरं यद्वल्लक्ष्यते तद्वद्भूरुहत्वाविशेषेपि भूर्भवत्यस्माज्जगदिति भूशब्दवाच्यं ब्रह्म तस्माद्रुहत उत्पन्नौ भवतस्तौ तथाभूतौ ज्ञान्यज्ञानिनौ देहत्रयं वा ब्रह्मोत्पन्नं तस्य तयोर्वा भावस्तत्त्वं तस्य देहसत्त्वस्योभयत्राविशेषेऽवैलक्षण्ये स-त्यपि द्वयोर्ज्ञान्यज्ञानिनोरन्तरं भेद ईदृशमेतादृशमस्ति की-दृशं तदित्यत आह इक्ष्विति, विद्वाञ्ज्ञानी मुमुक्षूणां मुक्ति-सुखदानेन नित्यतृप्तिकारकत्वादिक्षुकाण्डेनेक्षुदण्डेन सम-स्तुल्योऽस्ति पशुरज्ञानी दण्डकाष्ठसमो दण्डो यष्टिस्तत्का-ष्ठं तद्यथा दण्डपरिणामेन दुःखकारणं तेन सम उत्तरोत्तरं दुः-खकारणत्वात्तुल्योऽस्ति विद्यत इदमन्तरं ज्ञान्यज्ञानिनोरिति भावः ॥ ४० ॥

इदानीं ब्रह्माकारापरिच्छिन्नवृत्तौ ब्रह्माविर्भावस्य तत्र तत्र वेदान्ते प्रतिपादनान्मुमुक्षुभिस्तादृशवृत्तिप्राप्त्युपायो यत्नेन सम्पाद्य इत्याशयेन तमेवार्थमन्योक्त्या प्रतिपादयति।

विशालदृष्टौ रमते न त्वन्यत्र पतिर्मम।
येन दृष्टिर्विशाला स्यात्स मन्त्रो मम दीयताम्॥४१॥

विशालदृष्टाविति। हे शिष्य काचित्स्त्री स्वमतं सिद्धं प्रत्याह हे सिद्ध मम मे पतिर्भर्त्ता विशालदृष्टौ विशाला बृहती दृष्टिर्नेत्रं यस्याः सा तथोक्ता तस्यां कस्यां चित्स्त्रियां रमते रतिं करोति अन्यत्रादीर्घनेत्रासु न तु नैव रमते क्रीडति अतः कारणाद्येन मन्त्रेण उपलक्षणमेतदौषधादीनां दृष्टिर्नेत्रं विशाला दीर्घा स्याद्भवेत्स तादृशो मन्त्रो मन्त्रौषधादिर्मम मे दीयतां समर्प्यतामेवं प्रार्थयति, अयमाशयः—यथा स्वपत्युर्विशालदृष्टौ रमणं निरूपितं तथा प्रकृतेर्थे विशालाऽपरिच्छिन्ना दृष्टि'र्दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि'तिश्रुत्युक्ता ब्रह्माकाराऽहंब्रह्मास्मीति प्रमा वृत्तिरत्र ग्राह्या तत्र मम बुद्ध्यवच्छिन्नचिदाभासस्य मे पतिः सच्चिदानन्दार्पणेन पालकः प्रत्यगभिन्नः परमात्मात्र ग्राह्यो रमते क्रीडति अन्यत्र परिच्छिन्नवृत्तिषु नैव रमतेऽतो येन मन्त्रेण प्रणवादिना तदुपलक्षितेन योगेन ज्ञानेन वा दृष्टिर्दृश्यतेऽनुभूयते ब्रह्मानयेति दृष्टिरहंब्रह्मास्मीति वृत्तिर्विशालाऽपरिच्छिन्नब्रह्मरूपा स्याद्भवेत्स उक्तलक्षणो मन्त्रो मन्त्रादिसाधनं मम साधिष्ठानबुद्धिस्थचिदाभासस्य त्वच्छिष्यस्य हे गुरो दीयतां समर्प्यतामेवं प्रार्थना गुरोरग्रे नित्यं कर्त्तव्येति ध्वनितम्॥ ४१॥

इदानीं गुरुं प्राप्यापि उक्तविधप्रार्थनाया अभावेन ज्ञा-

नामाप्तौ सत्यां सामान्यबुद्ध्या कृतया गुरुसेवया निष्फला-युर्व्ययमात्रं फलं जायते ततश्च दुःखमेव फलं पर्यवस्यतीति सूचनायान्योक्त्याह गुरुः ।

पूज्योऽयमिति विज्ञाय पूजितः स्वापितो गृहे ।
न भुक्तो मूढया स्वामी कश्चित्पुरुष इत्ययम्॥४२॥

पूज्योयमिति । यथा कया चिन्मूढया स्वपतिज्ञानाभाववत्या स्त्रिया स्वामी स्वपतिरेव चिरकालाद्देशान्तरादागतोऽयं कश्चित्पुरुषः सामान्यः कोपि नरोऽयं दृश्यमान इति निश्चित्य स्वपत्युः परदेशस्थत्वे प्रत्यक्षत्वायोगात्तस्मिन्दृश्यमाने तदसम्भवं मत्वेति यावदतः स्वगृहागमनान्मया गृहस्थया पूज्यः पूजितुमर्चितुं योग्योऽस्तीति विज्ञाय निश्चित्य च पूजितोऽर्चितो भोजनार्पणादिना तर्पितः सन्गृहे मन्दिरे स्वापितो निद्रायितः परन्तु न भुक्तो न रत्याऽङ्गीकृतोऽतस्तावान्कालस्तस्या व्यर्थमेव गतो यथा तथा प्रकृतेपि योजनीयं तद्यथा मूढयाऽज्ञानिमुमुक्षुबुद्ध्याऽयं कश्चित्पुरुषोऽयं मत्पुरोवर्त्ती दृश्यमानः पुरुष उद्यमवान्नरः कोपि अस्ति लोकवद्व्याप्रियमाणत्वाज्ज्ञानी न भवतीत्येवं मत्वा देहधारणवतो मम पूज्यः पूजितुमर्चितुं योग्योऽयं मत्पुरत आगत इति विज्ञाय निश्चित्य पूजितो भोजनपादसंमर्दनादिनाऽर्चितः सेवित इत्यर्थः, गृहे स्वमन्दिरे स्वापितः शायितः परं तु अयं स्वामी ममात्मप्रदत्वेन पालको गुरुरस्तीत्येवं ज्ञात्वा न भुक्तो धातूनामनेकार्थत्वाज्ज्ञानपरिप्रश्नेन न सम्वादित इत्यर्थः, अतः कृतसेवायाः पारलौकिकसुखादिफलसत्त्वेपि मुमुक्षोर्मोक्षस्यैवेष्टत्वात्तत्साधनभूतज्ञानप्राप्त्यभावेन निरर्थकत्वाद्व्यर्थमायुर्व्यय एवेति भावः ॥ ४२ ॥

ननु समाधिसाधनेनैव मोक्षोस्तु किं ज्ञानेनेत्याशङ्क्य ज्ञानं विना संसारानिवृत्तेः समाध्युत्थाने पुनर्दुःखमेव स्यादित्याशयेन तमेवार्थमन्योक्त्याह ।

भोगयोग्येन वेषेण व्यतीत्य शयने निशाम् ।
प्रियस्य भोगमप्राप्य प्रातः क्रन्दति कामिनी ॥४३॥

भोगयोग्येनेति। भोगयोग्येन भुज्यतेऽनुभूयते साक्षात्प्रत्यगभिन्नः परमात्माऽनेनेति भोगो ज्ञानमपरोक्षं महावाक्यजन्यं जीवब्रह्मैक्यविषयं तस्मिन्योग्योऽनुकूलस्तेन वेषेण बहिः संन्यासादिवेषेणान्तर्वैराग्यादिचिह्नेन चोपलक्षिता सती मुमुक्षुबुद्धिः शयने शेते निन्द्राति सर्वो जाग्रत्स्वप्नसुषुप्तिरूपः प्रपञ्चोऽस्मिन्निति शयनं तस्मिन् समस्तप्रपञ्चलयोपलक्षिते समाधौ निशां रात्रिं ।

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

इत्युक्तलक्षणां प्रपञ्चास्फुरणारूपां व्यतीत्यातिक्रम्य प्रातः समाधौ प्रपञ्चास्फुरणनिशान्ते प्रपचस्फुरणलक्षणादिवसात्पूर्वकाले प्रातः प्रत्यूषकालस्तस्मिन् प्रियस्यात्मसाक्षात्कारवज्ज्ञानस्यात्मसुखस्य वा भोगं संयोगमनुभवं वाप्राप्यालभ्य कामिनी तदिच्छावती मुमुक्षुबुद्धिः क्रन्दति रोदिति हा खेद एतावान्मम कालो व्यर्थमेव गत आत्मसाक्षात्कारेण विनेत्याक्रोशतीति भावः । लौकिकार्थे तावत्काचित्कामिनी स्वपुरुषभोगेच्छावती स्त्री भोगयोग्येन स्वपत्या सहयो भोगो रतिस्तस्मिन्योग्योऽनुकूलस्तेन वेषेण शृङ्गारेणोपलक्षिता सती केन चित्क्रोधादिना मानादिना वा प्रतिबन्धेनाऽव-

रुद्धा सती प्रियस्य स्वेप्सितपत्युर्भोगं रतिमप्राप्यालभ्य शयने पर्यङ्के निशां रात्रिं व्यतीत्याऽतिक्रम्य प्रातः प्रभाते क्रन्दति रोदिति हा व्यर्थं मानेन कलहादिना वा भोगकालोऽतिक्रान्तो मयाऽहो दौर्भाग्यविलसितं ममेदमतोहं हिताहितज्ञानशून्यत्वान्मूर्खेत्येव विलपतीति भावः ॥ ४३ ॥

ननु समाधिसुखस्यापि गीतायां 'यत्रोपरमते चित्तमि'त्यादिश्लोकैर्ब्रह्मसुखत्वप्रतिपादनात्तेनैव कृतार्थतास्तु किं ज्ञानजन्येन ब्रह्मसुखसाक्षात्कारेणेत्याह्रङ्क्यान्योक्त्या साक्षात्कारसुखात्मसमाधिसुखे कृत्रिमत्वेन न्यूनत्वं दर्शयति ।

चित्रपत्रे कृता नारी विचित्रा रूपसम्पदा ।
दृश्यते तावदेवाहो यावन्नायाति सुन्दरी ॥ ४४ ॥

चित्रपत्र इति । रूपसंपदा रूपस्याकारस्य संपत्संपत्तिः शोभेत्यर्थः, तया विचित्राऽत्याश्चर्यरूपा नारी स्त्री चित्रपत्रे चित्राधारभूते पत्रे तदुपलक्षिते पटादौ वा कृता लिखिता सा चित्ररूपा स्त्र्यहो शिष्य तावदेव तावत्कालमेव दृश्यतेऽवलोक्यते कामिभिरिति शेषः, तावत्कियत्कालपर्यन्तमित्यत आह यावदिति, यावद्यत्कालपर्यन्तं सुन्दरी कमनीयरूपा स्त्री नायाति न प्राप्नोति तावत्कालमेव सा प्रेमभावेनावलोक्यते तदुत्तरं नेति भावः, प्रकृतार्थे तु न रातीति नरो वैराग्यादिसाधनसंपन्नः पुरुषोधिकारीत्यर्थः, तस्येयं नारी मुमुक्षुबुद्धिश्चित्रपत्रे चित्रसदृशजगत्पदार्थानामाधारभूते ब्रह्मणि शबले पत्रस्थानीये कृता समर्पिता सा समाधिस्थिता बुद्धी रूपसंपदा रूपं यदद्वैतसुखाकृति तस्य संपत्प्राप्तिस्तया विचित्राऽत्याश्चर्यभूतेत्येवं तावदेव तावत्कालमेव मुमुक्षुभिर्दृश्यतेऽवलोक्यतेऽहो शिष्य तावदित्युक्ते का-

ल्लेऽवधिमाह यावदिति सुन्दरी कमनीयरूपा सुखरूपा ब्रह्म चि-तिरित्यर्थः, यावद्यावत्कालं नायाति न प्राप्नोति न प्रत्यक्षा भ-वतीति यावत्तावदिति योज्यं, यद्वा चित्रमनेकविचित्रं जगत्तत्पाति रक्षतीति चित्रपोऽहङ्कारस्तं त्रायते स्वसत्त्वदाने-नेति चित्रपत्रं शवलं ब्रह्म तस्मिन्नित्यर्थः ॥ ४४ ॥

इदानीं गुरुवाक्ये विश्वासकर्तव्यतां स्वस्यैव मुमुक्षूणां विधत्ते ।

चिन्तामणिं कराद्भ्रष्टं मा शुचः प्राह मे गुरुः ।
दिनैः कतिपयैरेव पुनरेव मिलिष्यति ॥ ४५ ॥

चिन्तामणिरिति । हे शिष्य मे मम गुरुर्महावाक्योपदेष्टा चिन्तामणिमीप्सितफलदातृत्वेन चिन्तामणिरिव ज्ञानं तं करा-त्करोति ध्यानादि तत्करमन्तःकरणं तस्माद्भ्रष्टं नष्टं केन-चिद्विषयरागेण प्रतिबन्धेनान्तर्हितमित्यर्थः, तन्मा शुचः शोकं मा कार्षीः शोकेन तदुद्यमाभावे पुनस्तत्प्राप्तिर्न स्यादतस्तच्छोकत्या-गेन पुनस्तदुद्योगे कृते सति चिन्तामणिर्ज्ञानं कतिपयैः कति-चित्सङ्ख्यैर्दिनैर्दिवसैः स्वल्पैरेव दिवसैरित्यर्थः, एव निश्चय एव नात्र सन्देहः कार्य इत्यर्थः, पुनरेव भूयोपि मिलिष्यति प्राप्तो भविष्यतीत्यर्थः, इत्येवं मे मां प्राह प्रोक्तवान्मया च त-द्वचनविश्वासेन पुनस्तदुद्योगे कृते पुनस्तत्प्राप्तमिति गुरुवचनवि-श्वास एव सर्वविघ्ननिवृत्त्या परमफलप्रापकः सर्वत्रेति भावः ॥४५॥

इदानीं गुरुवचनविश्वासोपि स्वचित्तनिश्चयेनैव स्यादिति तत्र निश्चयं संपादयितुं स्वस्य संशयग्रस्तत्वे क्वचिद्विवेकरूपं मन एव मत्संशयनिवारकं भवत्यतो मनसि विवेक एवा स्थापनीय इत्याशयेनाह ।

करोमि संशयं यावन्मुकुन्दमुखदर्शने ।
आश्वासयति मां तावत्परमा देवता मनः ॥ ४६॥

करोमीति । हे शिष्य अहमज्ञानावस्थायां मुकुन्दमुखदर्शने मुकुन्दो मुक्तिप्रदो गुरुरात्मा च ब्रह्माभिन्नस्तस्य गुरोर्मुखं देहस्थं प्रत्यक्षमेव तन्मुखतो महावाक्यद्वारा प्राप्तेन 'चेतोमुख' इति श्रुतेः प्रत्यगभिन्नं ब्रह्माकारवृत्तिरूपं मुखं ग्राह्यमात्मनश्च सैव ब्रह्माकारावृत्तिर्मुखपदेन ग्राह्या तस्य दर्शनमवलोकनं तस्मिन्यावद्यत्कालपर्यन्तं संशयं मम गुरुमुखाच्छ्रुतेन महावाक्यविचारेणात्मब्रह्मसाक्षात्कारः स्यान्न वेत्येवं रूपं सन्देहं करोमि संपादयामि तावत्तत्कालमेव विवेकसंस्कारवन्मनोऽन्तःकरणं परमा श्रेष्ठा देवता देववदादृतं सत्प्रकाशबहुलमित्यर्थः, मां सन्दिह्यमानं मामाश्वासयति साम्ना बोधयति अतो विवेकेन मन एव संस्कार्यं पूजनीयं च तन्मुमुक्षुभिरिति भावः ॥ ४२ ॥

ननु आत्मनि कंदर्पकोटिलावण्यं किमभिप्रायेण वर्णितं तच्चासम्भाव्यं सौन्दर्यस्य साकारनिष्ठत्वान्निराकारे तु तदात्मन्ययुक्तमेवेत्याशङ्कां शिष्यस्य लक्षणैरालक्ष्य तत्सम्भावनेन तां निराकरोति ।

कन्दर्पकोटिलावण्यं सत्यमुक्तं जनार्दने ।
कन्दर्पप्रमुखाः सर्वे तत्प्रकाशे पलायिताः ॥४७ ॥

कन्दर्पेति । हे शिष्य जनार्दने जनानां जन्मवतां जीवानामर्दने आत्मत्वेन तन्निर्वाहकत्वाद्गतिरूपे यत्पुराणादिषु कन्दर्पकोटिलावण्यं कन्दर्पाणां कामानां कोटयोऽपरिमिता मूर्त्तयस्तासां लावण्यं सौन्दर्यमुक्तं पुराणादिषु कथितं तत्सत्यं यथार्थमेव कुत इत्यत आह कन्दर्पप्रमुखेति, यत्प्रकाशे यस्य सर्वगति-

रूपस्यात्मनः प्रकाशे द्योतेऽन्तःकरणे आविर्भूते सतीत्यर्थः, सर्वे समस्ताः कन्दर्पप्रमुखाः कन्दर्पः कामः प्रमुख आद्यो येषां क्रोधादीनां ते तथोक्तास्ते पलायिताः पलाय क्वापि गता नष्टा इत्यर्थः, अतः सत्यमुक्तमिति योज्यम् ॥ ४८ ॥

इदानीं रजोविकाररागादित्यागं विनाऽविद्यावरणनिरासो न स्यात्तं विना चात्मसाक्षात्कारो न स्यादितीममर्थमन्योक्त्या दर्शयति।

अश्रु मुक्तं वियोगिन्या राधया मेलनाशया।
तत्रैव मायया गुप्तः प्राप्तः प्रकटतां हरिः ॥४९॥

अश्रिति। वियोगिन्या श्रीकृष्णस्य वियोगोऽस्ति यस्याः सा तथोक्ता तया राधया राधानाम्न्या गोपिकया मेलनाशया श्रीकृष्णस्य मेलनं योगस्तस्याशयेच्छया करणभूतयाऽश्रु नेत्राम्बु मुक्तं विसृष्टं यदा तदेत्यध्याहार्यं यदा यस्मिन्समये तदा तस्मिन्नेव समये पूर्वं मायया स्वान्तर्धानशक्त्या गुप्तोऽन्तर्हितो हरिः स्वभक्तदुःखहरणशीलः श्रीकृष्णस्तत्रैव यत्र स्थानेन्तर्हितस्तस्मिन्नेव स्थाने प्रकटतामाविर्भूततां प्राप्तो यातः, अयं भावः—यथा कामादिरजोवृत्तिभी राधायाः कृष्णावलोककरणं चक्षुः पिहितं तदेव कृष्णान्तर्धाने निमित्तं जातमन्यथा स्वयंप्रकाशरूपसर्वानुस्यूतश्रीकृष्णे न तत्सम्भवः, तथा मुमुक्षोरपि गुरुदर्शने मानादिभिर्गुरुदर्शनकरणभूतचक्षुषः पिहितत्वात्सामान्यमनुष्यदर्शनेन तद्गतगुरुत्वदर्शनासम्भवः अन्तःकरणस्य तु ब्रह्मसाक्षात्कारकरणभूतान्तःकरणवृत्तिचक्षुषो रागादिरजोवृत्तिभिरावृतत्वाद्ब्रह्मसाक्षात्कारासम्भव उभयत्र स्वयंप्रकाशत्वेन स्वत आवरणं न सम्भवति, किञ्च यदा राधया श्रीकृ-

ष्णदर्शनाशयाऽश्रुत्यागमिषेण मानादिकं रजःकार्यं विसृष्टं तदैव श्रीकृष्णदर्शनमपि तत्रैव जातं तथा मुमुक्षाणामपि प्रथमं मानादिरजोवृत्तित्यागे तत्रैव पूर्वदृष्टपुरुषे गुरुत्तदर्शनं जायते ततश्च तदुपदेशेनान्तःकरणस्य रागादिरजोवृत्तित्यागेन ब्रह्मसाक्षात्कारोपि सम्भावनीय इतीममर्थं सम्भावयितुं तादृशचरित्रवर्णनं भागवतादौ कृतमिति भावः ॥ ४८ ॥

इदानीं सर्वसाधनेभ्यः सोपासनकर्मादिभ्यो ज्ञानेन ब्रह्मसुखाकारस्य वृत्तिविशेषस्य श्रैष्ठ्यं दर्शयन्नन्योक्त्याह ।

सौरभ्याय भ्रमन्त्येके मधु काङ्क्षन्ति चापरे ।
न भ्रमन्ति न काङ्क्षन्ति मधुमत्ता मधुव्रताः ॥४९॥

सौरभ्यायेति । एके कति चिन्मधुव्रताः स्वतो मधुकरणसामर्थ्यवन्तोपि तद्विस्मृत्य केवलं सौरभ्याय पुष्पकेसरस्थसुगन्धप्राप्तये भ्रमन्ति आकाशे भ्रमणमेव कुर्वन्ति, अपरे च भ्रमरा मधुपुष्पकेसरस्थं सुगन्धमनुभूय तत्र तृप्तिजननाभावं विनिश्चित्य तदनादरेण मधुनि तृप्तिजननेन सुगन्धतो विशिष्टतामालक्ष्य तन्मधुपुष्परसं काङ्क्षन्तीच्छन्ति, किञ्च केचिच्च मधुव्रताः स्वतोऽन्यत्र मधुकर्त्तुं समर्था मधुमत्ता मधुपुष्परसस्तेन तत्पानेन तृप्ताः सन्तो न भ्रमन्ति न सुगन्धेच्छया भ्रमणं कुर्वन्ति न काङ्क्षन्ति पुष्परसं नेच्छन्ति, अयमाशयः—कर्मफलस्य स्वर्गादिविषयजन्यसुखस्य तृप्तिहेतुत्वाभावाद्ब्रह्मसुखप्रतिबिम्बत्वाच्च वासनामात्रतया गन्धतुल्यता तदर्थं कर्माद्यनुष्ठानमत्र भ्रमणं ग्राह्यं तदन्यलौकिककर्मतः श्रेष्ठमपि, तत्ततोपि ब्रह्मसुखमनुभवितुं समाध्यन्तमुपासनं मध्विच्छापदेनात्र ग्राह्यं तच्च कर्माद्यनुष्ठानाद्वरं, ततोपि विचारेण महावाक्यानां साक्षाद्ब्रह्मसुखानुभवेन

नित्यतृप्तिमन्तोऽत्र मधुमत्तभ्रमरपदेन सूचिता अत्र ग्राह्यास्तेषां च नित्यब्रह्मसुखप्राप्त्या मधुमत्तभ्रमराणां मधुनैराकाङ्क्ष्यमिति ब्रह्मसुखेप्यनिच्छुत्त्वमत्र सूचितं ते च पूर्वोक्तोभयेभ्योप्यतिश्रेष्ठा, अतः कर्माद्यनुष्ठानं तत्फलं स्वर्गादिसुखमुपासनाद्यनुष्ठानं तत्फलं मोक्षसुखं चानादृत्य ज्ञानमेव सम्पाद्यमिति भावः ॥ ४९ ॥

इदानीं हठपातञ्जलाद्युक्तसमाधितोपि महावाक्यविचारेण वेदान्तोक्तरीत्या नित्यसुखानुभवस्य श्रैष्ठ्यमन्योक्त्या दर्शयति ।

धनं प्राप्नोति कष्टेन प्रदोषे काष्ठभारिकः ।
सुखासनस्थो विपुलं धनं रत्नपरीक्षकः ॥ ५० ॥

धनमिति । हे शिष्य काष्ठभारिकः काष्ठानां दारूणां भारो भरस्तं वहति असौ काष्ठभारिकः काष्ठभारोपजीवीत्यर्थः, कष्टेन सर्वदिनकृतश्रमेण प्रदोषे दिनान्तसमये धनं द्रव्यं तदपि तद्दिन एवोदरपूर्तियोग्यं तत्रापि न्यूनं वा प्राप्नोति लभते पुनः प्रभाते तदर्थं श्रम एव कर्त्तव्यस्तस्येत्यर्थः, किञ्च रत्नपरीक्षको रत्नानां हीरकादीनां परीक्षकः परीक्षाकर्त्ता पुरुषः सुखासनस्थः सुखं यथा भवति तथा यदासनं स्वस्थितिसाधनभूतं कार्पासादिपूर्णं कशिप्वादि तस्मिन्स्थः स्थितः सन्विपुलं सहस्रलक्षादिसङ्ख्यापरिमितं धनं द्रव्यं प्राप्नोति लभते बहुधनप्राप्तौ बह्वायासोऽपेक्षितोऽल्पधनप्राप्तौ सोऽल्प इति न नियम इति भावः, अयं भावः–हठपातञ्जलोक्तसमाधेरष्टाङ्गसाधनश्रमापेक्षत्वात्तदुक्तसमाधिसुखस्य च समाधिकालमात्रस्थितिकत्वाद्व्युत्थानकाले प्रतीतसंसारदुःखेन तिरस्कृतत्वात्तस्य काष्ठभारिकार्जितद्रव्यस्याल्पत्वमिवाल्पत्वमेवात्र सूचितं

श्रमसाध्यत्वादप्यल्पत्वमेवोभयत्र समं च सूचितं, वेदान्तोक्त-
रीत्या तु सर्वजगतो बाधनेन ब्रह्मसुखानुभवसमाधौ व्युत्थाने
चोभयत्र ब्रह्मसुखस्य विद्यमानत्वादखण्डत्वेन देशकालव-
स्तुकृतपरिच्छेदरहितत्वेन च नित्यतृप्तिकारकत्वेन च साधनप-
रिश्रमाभावाच्च श्रमरहितरत्नपरीक्षकार्जितबहुद्रव्यतुल्यत्वं ज्ञा-
नेन साक्षात्कृतब्रह्मसुखस्येति भावः ॥ ५० ॥

ननु आसनमुद्रादिब्रह्मसुखप्राप्तिसाधनानामतीव श्रमसा-
ध्यत्वात्तत्र श्रमभीत्या वेदान्तिनां विचारे प्रवृत्तानां तत्प्राप्ति-
रासनादिसाधनैर्विना कथं स्यादित्याशङ्क्य ब्रह्मसुखप्राप्तौ के-
वलं श्रम एव नापेक्षितः किन्तु केवलविचारेणापि तत्प्राप्तिः
स्यादेवेति नासनादीनां तन्निमित्ततेतीममर्थमन्योक्त्या दर्शयति ।

नर्त्तकी स्वाङ्गभङ्गेन धनं प्राप्नोति वा नवा ।
कुलाङ्गना कटाक्षेण स्वं वशीकुरुते पतिम् ॥५१॥

नर्त्तकीति । नर्त्तकी वेश्या स्वाङ्गभङ्गेन स्वस्य स्वदेहस्य
यान्यङ्गानि करचरणनेत्रस्तनभृकुट्यादीनि तेषां भङ्गो नर्त्तनं
भङ्ग ऊर्मिरिव तत्तदङ्गनर्त्तनरूपो विकार इत्यर्थः, तेन कृत्वा-
ऽपि धनं द्रव्यं प्राप्नोति लभते वा पक्षान्तरे न वा न च प्रा-
प्नोति धनप्राप्तौ नियमेनाङ्गनर्त्तनं निमित्तं न दृष्टमिति भावः,
किञ्च कुलाङ्गना सत्कुलभवाङ्गना स्त्री कटाक्षेण कटाक्षो ने-
त्रप्रान्तेनावलोकनं तेन स्वं स्वीयं पतिं पालकं भर्त्तारं वशी-
कुरुते वशीकृत्वा भुनक्ति अतः प्रेमैव नियमेन स्वपतिव-
शीकरणे निमित्तं स च प्रेम्णा वशीभूतः सन्स्वयमेव द्रव्यादि
ददातीति भावः, अयमाशयः—यथा वेश्याकृतः स्वाङ्गभङ्गो
नियमेन द्रव्यप्राप्तिसाधनं न दृष्टस्तथा हठिनामष्टाङ्गयोगस्य

साधनानि आसनादीनि न नियमेन ब्रह्मसुखप्राप्तिसाधनानि दृष्टानि तत्सत्त्वेपि कतिपयहठिषु तदप्राप्तिदर्शनात्तदसत्त्वेपि महावाक्यविचारेणैव केवलं तत्प्राप्तिदर्शनाच्च प्रेम्णैव महावाक्यविचारः केवलं ब्रह्मसाक्षात्कारे हेतुरत्र नर्त्तकी सादृश्यं हठिनां नित्यसिद्ध्याद्यासक्तत्वान्नर्त्तकीस्वाङ्गनर्त्तनसादृश्यमासनादीनां हठप्रोक्तानां नर्त्तकीस्वाङ्गनर्त्तनस्य द्रव्यप्राप्तावकिञ्चित्करत्वमिवासनादीनां ब्रह्मसाक्षात्कारेऽकिञ्चित्करत्वं, कुलस्त्रीषु अङ्गनर्त्तनाभावेपि कटाक्षेण स्वमनोरथपूरकपतिवशीकरणमिव वेदान्तनिष्ठस्य ब्रह्मप्रेम्णैव केवलं भागत्यागलक्षणालक्षणविचारेणैव ब्रह्मात्मसाक्षात्कारो जायत एवेति ॥ ५१ ॥

ननु कृतेपि श्रवणादौ मम ब्रह्मसुखानुभवेन मुक्तिस्तत्साधनभूतं ज्ञानं च स्यान्न वेति सन्दिह्यमानं शिष्यं प्रत्याह ।

तव बुद्धिप्रकाशोयं निकटां मुक्तिमाह माम् ।
नूनं निर्वाणसमये दीपो देदीप्यते भृशम् ॥ ५२ ॥

तवेति । अयं मत्प्रत्यक्षस्तव ते बुद्धिप्रकाशो बुद्धेरन्तःकरणस्य प्रकाशो ज्ञानं मां मा प्रति निकटां समीपवर्त्तिनीं मुक्तिं ते मोक्षमाहोक्तवान् सूचयतीत्यर्थः, पूर्वकालादिदानीन्तनो बहुतरप्रकाशो मे तव मुक्तिं सूचितवानिति भावः, तत्र दृष्टान्तो नूनमिति नूनं निश्चयेन दीपः प्रदीपो निर्वाणसमये निर्वाणस्य नाशस्य समये काले भृशं बहु यथा भवति तथा देदीप्यतेऽतीव प्रकाशते एवं तवान्तःकरणप्रकाशः स्वनाशेन मोक्षं प्राप्तुमुद्युक्त इति भावः ॥ ५२ ॥

इदानीं वेदान्तपाठं तदर्थाख्यानाऽन्यकृततदर्थसूक्ष्मज्ञानस्वा-

त्मानुभवेषु मध्ये स्वात्मानुभवस्य श्रैष्ठ्यं दर्शयितुमन्योक्त्याह ।

एके खनन्ति वसुधां तथा विक्रयिणः परे ।
घर्षयन्त्यपरे रत्नं भोगं गृह्णाति भाग्यवान् ॥ ५३ ॥

एक इति । एके केचित्पुरुषा वसुधां पृथिवीं खनन्ति हीरकादिरत्नप्राप्तये खनन्ति कर्षयन्ति तथा तद्वदपरेऽन्ये पुरुषा विक्रयिणो हीरकादीनां विक्रयकर्त्तारो भवन्ति अपरेऽन्ये केचित्पुरुषा रत्नं हीरकादिकं घर्षयन्ति शाणे मर्दयन्ति किञ्च भाग्यवान्स्वतः सम्पत्तिमान्पुरुषो भोगं रत्नस्य स्वशरीरे स्वभोग्यस्त्र्यादिशरीरे वा सन्धारणरूपं भोगं गृह्णाति अङ्गीकरोति ते च यथोत्तरं श्रेष्ठाः ज्ञेयाः, तथान्तःकरणशोधनेन वेदान्तार्थावलोकनपरा अन्तःकरणस्य क्षेत्रत्वाभिधानात्तत्कर्षकत्वेन हीरकाद्यर्थं पृथिवीकर्षकतुल्या अत्र ग्राह्याः, शिष्यादीनां वेदान्तव्याख्यानद्वारा ज्ञानप्रदास्तत्कृतसेवामूल्यदानेन तेऽत्र हीरकादिरत्नविक्रयिपुरुषोक्त्या सादृश्याद्ग्राह्याः, वेदान्तश्रवणेन त्यागादिभिरन्तःकरणसूक्ष्मत्वापादका रत्नघर्षकोक्त्या तत्सादृश्यादत्र ग्राह्याः, केवलात्मनिष्ठास्तु अन्यसाधननिरपेक्षत्वाद्रत्नभोगकर्तृपुरुषसादृश्यात्तत्र ग्राह्याः, तेषु चोत्तरोत्तरं श्रैष्ठ्यात्तेषु केवलात्मनिष्ठानामेव श्रैष्ठ्यमिति भावः ॥ ५३ ॥

इदानीं कर्मोपासनज्ञानजन्यसुखानां मध्ये ज्ञानजन्यसुखस्याधिक्यं दर्शयन्नन्योक्त्याह ।

एके तक्रेण तुष्यन्ति दधिदुग्धेन चापरे ।
तत्वज्ञा नैव तुष्यन्ति नवनीतघृतं विना ॥ ५४ ॥

एक इति । एके केचित्पुरुषास्तक्रेण दधिविकारेण

दधिमण्डेन तुष्यन्ति तृप्यन्ति, अपरेऽन्ये च केचित्पुरुषा दधिदुग्धेन दध्ना दुग्धेन वा तृप्यन्ति, किञ्च तत्त्वज्ञा दधिदुग्धयोर्मध्ये यत्तत्त्वं नवनीतं घृतं वा तद्ये जानन्ति ते तथोक्तास्ते नवनीतघृतं विना नवनीतं हैयङ्गवीनं घृतं च सर्पिस्त उभे विना वर्जयित्वाऽन्येन तक्रादिना नैव तुष्यन्ति न च तृप्यन्ति ते च यथोत्तरं श्रेष्ठाः ज्ञेयाः, अयं भावः—तक्रतृप्तसदृशा अत्र कर्मजन्यविषयसुख इदमेव सुखं नान्यदिति तदासक्ता ग्राह्याः, उपासनादिजन्यसायुज्यादिसुखासक्ता अत्र दधिदुग्धाशनतृप्तपुरुषसादृश्या ग्राह्याः, ज्ञानजन्यब्रह्मसुखरता अत्र नवनीतघृततृप्तसदृशा अपि ग्राह्या, तेषु च यथोत्तरं श्रेष्ठ्यं नवनीतघृततृप्तश्रैष्ठ्यवज्ज्ञानतृप्ते श्रैष्ठ्यं ज्ञेयमिति भावः ॥५४॥

इदानीमन्येषां केषां चित्कर्मादौ रुचिरस्तु मम तु ज्ञानाभ्यासेन सर्वत्र ब्रह्मसुखानुभवाज्ज्ञानाभ्यास एव रुचिरस्तीति प्रतीत्यर्थं शिष्यस्य तत्र रुचिमुत्पादयितुमाह ।

यत्र क्वापि स्वपामीति जाता निद्रालुता मम ।
विस्तीर्णं शयनं प्राप्तं कोमलं ब्रह्म निर्मलम् ॥५५॥

यत्रेति । हे शिष्य मम मे यत्र क्वापि कर्मण्युपासने वा जाग्रदाद्यवस्थात्रये तुर्यायां वा स्वपामि तत्तत्कालव्यवहारेपि प्रपञ्चविस्मृतिरूपां निद्रामनुभवामीत्येवं निद्रालुता सुप्तिस्वभावे स्वाभाविकी रुचिर्ज्ञानाभ्यासेन जातोत्पन्ना कुत इत्यत आह विस्तीर्णमिति, विस्तीर्णमपरिच्छिन्नमनन्तमित्यर्थः, कोमलं सुखस्पर्शं सुखरूपत्वान्निर्मलं मायाऽविद्यातत्कार्यमलरहितं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं प्रत्यगभिन्नं परमात्मरूपं शयनं शेतेऽस्मिन्निति शयनं कशिपुस्था-

नीयं प्राप्तं लब्धमतः सर्वत्र प्रपञ्चास्फुरणरूपां निद्रामनुभवामीत्येतादृशी निद्रालुता मम ज्ञानाभ्यासेन सम्पन्नेति भावः ॥५५॥

ननु सर्वदृश्यसत्त्वे प्रपञ्चास्फूर्त्तिः कथं स्यादित्याशङ्क्याह ।

दृश्यं बोधेन निर्घृष्टं तच्चिदाकारताङ्गतम् ।
यत्र यत्रैव पश्यामि स्वं रूपं तत्र दृश्यते ॥ ५६ ॥

दृश्यमिति । हे शिष्य दृश्यं जगद्बोधेन ज्ञानेन निर्घृष्टमुपमार्दितं सत्तज्जगच्चिदाकारतां गतं चिन्मात्रस्वरूपतां यातमस्तीदानीमतोहं यत्र यत्र यस्मिन्यस्मिन्पदार्थे पश्यामि अवलोकयामि तत्र तत्रेसात्ता यो ऽयं तस्मिंस्तस्मिन्पदार्थे स्वरूपमेव दृश्यत आत्मस्वरूपमेव केवलमवलोक्यतेऽतः सर्वत्रात्मस्वरूपमात्रभानेन तद्यतिरिक्तजगत्पदार्थसत्त्वाभावात्तत्स्फुरणस्याप्यस्फुरणत्वेन सर्वावस्थासु निद्रालुत्वसिद्धिरिति भावः ॥ ५६ ॥

ननु पूर्ववत्त्वयि व्यवहारस्य विद्यमानत्वात्कथं जगदभावस्त्वयि सम्भाव्य इत्याशङ्क्यानन्तब्रह्मण्डानां मया ग्रस्तत्वात्किमेकब्रह्माण्डग्रास आश्चर्यमित्याशयेनाह ।

यदेकोपि जनो गीर्णः स्तुवन्त्यजगरं जनाः ।
मां न स्तुवन्ति किं येन गीर्णा ब्रह्माण्डकोटयः ॥५७॥

यदिति । यद्येनाजगरेणैकोपि एक एव जनो नरो गीर्णो गिलितस्तमजगरं तिलित्सं सर्पविशेषमित्यर्थः, जना लोकाः स्तुवन्ति प्रशंसन्ति अहो महानयं सर्पोऽयं मनुष्यानखादति एवं स्तुवन्ति येन मया प्रत्यगभिन्नब्रह्मस्वरूपेण ब्रह्माण्डकोटयो ब्रह्माण्डानां जगतां कोटयोऽपरिमिताः कोटय इति यावद्गीर्णा गिलितास्तं मां ब्रह्मस्वरूपं किं कुतो न स्तुवन्ति न

प्रशंसन्ति अहो अयं महान्यस्य ब्रह्मस्वरूपत्वान्नास्माभिस्तुल्यतेति कुतो न जानन्तीति भावः ॥ ५७ ॥

ननु त्वं देहत्रयपरिच्छिन्नोऽहमिव दृश्यसेऽतोऽपरिच्छिन्नं ब्रह्माहमिति नैव वक्तव्यमित्याशङ्क्य यद्यपि लोकप्रतीत्या सम्भाषनाऽविषयमपि श्रुतिप्रामाण्येन मदनुभवेन च तत्सिद्धमेवेत्याशयेनाय ।

मय्यसूया न कर्त्तव्या बहुजल्पामि यद्यपि ।
ब्रह्मास्मीति वदाम्येव श्रुतिर्मां नाभ्यसूयति ॥ ५८ ॥

मयीति । हे जन अहं प्रत्यगभिन्नः परमात्मा यद्यपि यद्यपि बहूत्कृष्टं यथा भवति तथा लोकदृष्ट्या ब्रह्मास्मीति जल्पामि वदामि तथापि श्रुतिः—'अहं ब्रह्मास्मि, तत्त्वमसी'त्याद्या मां प्रत्यगभिन्नब्रह्मसाक्षात्कारिणाहं ब्रह्मास्मीति वदन्तं मां नाभ्यसूयति नेर्ष्यां करोति प्रामाणिकवचनवत्त्वाद्यतस्ततो 'ब्रह्मास्मी'ति वदाम्येव कथयाम्येवाऽतो मयि ब्रह्मविदि 'ब्रह्मविद्ब्रह्मैव भवती'तिश्रुतेर्ब्रह्मस्वरूपत्वात्त्वयान्येषां चात्मनि स्वस्मिन्स्वेर्ष्याकर्त्तव्यतानुपपत्तेरसूयेर्ष्या न कर्त्तव्या नैव कर्तुं विहिताऽस्ति ॥५८॥

इदानीं स्वस्मिन्स्वाराज्यसम्पत्तिं लक्ष्यीकृत्याह ।

सिंहासनं समाधिर्मे वेदान्ता मम वन्दिनः ।
मारितो मोहनामारिर्मम राज्यमकण्टकम् ॥ ५९ ॥

सिंहासनमिति । हे शिष्य मे मम समाधिरेव निर्विकल्पसमाधिरेव सर्वदाऽऽत्मस्फुरणरूप इत्यर्थः, सिंहासनं राज्यासनं तथा वेदान्तास्तत्त्वमसीत्यादिरूपाणि वाक्यानि मम मे वन्दिनः स्तुतिपाठकाः सन्ति किञ्च मोहनामा मोहो नामा-

भिधानं यस्य स तथोक्तोऽरिः शत्रुर्मया स्वाराज्यप्राप्तिमता मारितो मृत्युं प्रापितोऽत इदानीं मम मेऽकण्टकं न विद्यते कण्टकः शत्रुर्यस्मिन्तत्तथोक्तं राज्यं स्वाराज्यमस्ति सर्वप्रतिबन्धहीनमात्मराज्यं मया लब्धमिति भावः ॥ ५९ ॥

ननु कुतस्तव स्वाराज्यप्राप्तिः कुतश्च नान्येषां तत्राह ।

दृष्टं चिदम्बरं नाम मया विस्तीर्णमम्बरम् ।
इदं जडाम्बरं शुन्यमत्यल्पं यदपेक्षया ॥ ६० ॥

दृष्टमिति । हे शिष्य मया साधिष्ठानबुद्धिस्थचिदाभासेन विस्तीर्णं देशादिभिरपरिच्छिन्नं चिदम्बरन्नाम चिन्मात्रस्वरूपं विद्वत्सु प्रसिद्धमम्बरमाकाशं दृष्टमवलोकितं कियद्विस्तृतं तदिति लक्षणेन निर्दिशतीदमिति, इदं पञ्चभूतेषु प्रसिद्धं दृश्यमानं शून्यमसद्रूपं वा जडाम्बरं जडमचिद्रूपमम्बरमाकाशं यदपेक्षया यस्य सच्चिदानन्दरूपब्रह्माकाशस्यापेक्षया दृष्ट्याऽत्यल्पमतिसूक्ष्ममस्ति अनेनानुमानेन चिदाकाशस्य विस्तारोऽनुमेय इति भावः ॥ ६० ॥

ननु तवैव कुतश्चिदाकाशदर्शनं कुतश्च नान्येषामित्याशङ्क्य तद्विषयकप्रेमसत्त्वासत्त्वाभ्यामिति दर्शयति ।

इष्टमन्नं क्षुधार्त्तस्य कृपणस्य धनं प्रियम् ।
तृषितस्य जलं त्विष्टं चैतन्यं मम वल्लभम् ॥ ६१ ॥

इष्टमिति । हे शिष्य यथेत्यध्याहार्यं यद्वत्क्षुधया बुभुक्षयाऽऽर्त्तः पीडां प्राप्तो यः पुरुषस्तस्यान्नं भोजनमिष्टं प्रियं भवति किञ्च यद्वत्तृषितस्य तृषा पिपासा सञ्जाताऽस्य स तृषितः पुरुषस्तस्य जलमुदकं प्रियमिष्टं भवति किञ्च यद्वत्कृपणस्य तु शठस्यापि धनं द्रव्यमिष्टं प्रियं भवति तथेत्यध्याहार्यं तद्वन्मम

साधनचतुष्टयसम्पन्नस्य साधिष्ठानबुद्धिस्थचिदाभासस्य मुमुक्षो-र्मे चैतन्यं चिन्मात्रमात्मरूपं वल्लभं प्रियं भवति मयि चिन्मात्र-स्वरूपात्मविषयकप्रेमसत्त्वात्तद्दर्शनमन्येषु च तदसत्त्वात्तददर्शन-मिति भावः ॥ ६१ ॥

ननु त्वय्यन्येषामिवाहङ्कारस्य दृश्यमानत्वात्त्वयि चिदा-काशदर्शनमन्येषु नेति कुत एतत्सम्भावनीयमित्याशङ्क्यैतत्सदृ-ष्टान्तं सम्भावयति ।

रसायनप्रसङ्गेन गतं ताम्रमताम्रताम् ।
तथाऽस्माकमहङ्कारो निरहङ्कारतां गतः ॥ ६२ ॥

रसायनेति। यथा यद्वत्ताम्रं रसायनप्रसङ्गेन रसायनस्य पा-रदादिप्रभवस्यौषधविशेषस्य प्रसङ्गो योगस्तेनाताम्रतां सु-वर्णादिरूपतां गतं प्राप्तं भवति तथा तद्वदस्माकं ब्रह्मवेदिना-महङ्कारोऽहङ्कृतिर्निरहङ्कारतां निर्गतो निवृत्तोऽहङ्कारोऽहङ्कृतिर्य-स्मात्तन्निरहङ्कारं प्रत्यगभिन्नं ब्रह्म तस्य भावः सत्ता तां ब्रह्मता-मित्यर्थः, गतः प्राप्तोऽतोऽस्माकं चिदाकाशदर्शनमन्येषां नेति सम्भवतीति भावः ॥ ६२ ॥

ननु अहं ब्रह्मास्मीति वदाम्येवेति त्वमेव वदसि अतस्त्व-य्यहङ्कारो नास्तीति कथं प्रत्येतव्यमित्याशङ्क्याज्ञानावस्थायामेव बाधकत्वात्तस्य रिपुत्वमिदानीं तद्बाधेनाकिञ्चित्करत्वाद्बाध-कत्वं न प्रत्युत ब्रह्माकारत्वेन सुखकारित्वमित्याशयेनाह ।

पूर्वमासीदहङ्कारो मम दुःखस्य कारणम् ।
रिपुरद्य मृतो दृष्टः परमानन्दकारणम् ॥ ६३ ॥

पूर्वमिति । हे शिष्य पूर्वमज्ञानावस्थायामहङ्कारोऽहं-कृतिर्मम मे दुःखस्य खेदस्य कारणं हेतुरासीदासाऽत्तो मे

मम रिपुः शत्रुरासीत्सोऽद्येदानीं ज्ञानावस्थायां मृतो बाधितो दृष्टोऽनुभूतो सोऽतः परमानन्दकारणं परमो निरतिशयो य आनन्दः सुखं तस्य कारणं हेतुर्जातोऽत इदानीं तस्य बाधितत्वेनाबाधकत्वात्तस्मिँल्लोकदृष्ट्या विद्यमानत्वेपि चिदाकाशदर्शनेऽविरुद्धत्वमिति भावः ॥ ६३ ॥

ननु परमानन्दप्राप्तावपि किं महत्वं तत्राह सदृष्टान्त।

भोगेप्सूनां सभामध्ये भोक्ता कान्तो यथा युवा।
मुमुक्षूणां तथा मध्ये राजते परमार्थवित् ॥ ६४ ॥

भोगेप्सूनामिति। भोगेप्सूनां भुज्यन्त इति भोगा विषयास्तानीप्सन्ति प्राप्तुमिच्छन्ति ते तथोक्तास्तेषां विषयिणां स्त्रैणानामित्यर्थः, सभामध्ये सभा सदोगृहं तस्या मध्येऽन्तरे भोक्ता बहुस्त्रीभोगी कान्तः सुन्दर युवा तरुण एतद्गुणत्रयविशिष्टः पुरुषो यथा यद्वद्राजते शोभते तथा तद्वन्मुमुक्षुणां मोक्षेप्सूनां मध्येऽन्तरे परमार्थवित्परमः श्रुतिश्रेष्ठः सत्यरूपश्च योऽर्थस्तत्त्वं प्रत्यगभिन्नं ब्रह्म वेत्ति जानातीति परमार्थविज्जीवब्रह्मैक्यज्ञानवान्राजते शोभते, अज्ञानदृष्ट्या तच्छ्रैष्ठ्येऽप्रतीतेऽपि मुमुक्षुदृष्टौ तत्प्रतीयते इति भावः ॥ ६४ ॥

ननु व्यवहारिण इव ज्ञानिनोपि व्यवहारसत्त्वे कथं सर्वदात्मसुखभानमित्याशङ्क्य सदृष्टान्तं तत्सम्भावयति।

गृहकार्यप्रसक्तापि भुक्तभोगेव कामिनी।
मनसैव मनो नूनमानन्दयति योगवित् ॥ ६५ ॥

गृहकार्येति। भुक्तभोगा भुक्तोऽनुभूतो भोगः परपुरुषेण सह रतिसुखं यया सा तथोक्ता कामिनी परपुरुषरतिसुखेच्छावती स्त्रीव यथा गृहकार्यप्रसक्तापि गृहस्य मन्दिरस्य य-

त्कार्यं लेपनसंमार्जनादिकं तस्मिन्प्रसक्ताऽत्यासक्ता प्रतीयमाना सत्यपि मनसैव परपुरुषभोगजन्यसुखवदन्तःकरणवृत्त्यैव मनो गृहकार्यनिर्वाहकमन्तःकरणमानन्दयति सुखीकरोति गृहकार्यजनितखेदास्पृष्टं करोतीत्यर्थः, तद्वद्योगवियोगं जीवब्रह्मैक्यं वेत्ति जानातीति स तथोक्तः, यद्वा युज्येते ऐक्येनानुभूयेते जीवब्रह्मणी अनेनेति योगो ज्ञानं तद्विन्दति प्राप्नोतीति योगवित्प्राप्तजीवब्रह्मैक्यज्ञान इत्यर्थः, लिङ्गपरिणामेन सर्वदृष्टान्तविशेषणान्यप्यस्मिन्दार्ष्टान्तिके योज्यानि, भुक्तभोगो लोकप्रतीत्या भुक्ता अभ्यवहृता भोगा विषया येन स तथाभूतोपि अतो गृहकार्यप्रसक्तोपि गृह्यत आत्मतयाऽङ्गीक्रियत इति गृहं शरीरं तस्य यत्कार्यमवश्यकर्त्तव्यतया विहितं वैदिकं स्नानसन्ध्यादिकं गर्भाधानादिमरणान्तसंस्काररूपं स्मार्त्तं कर्म च लौकिकमशनादिकं च, यद्वा लौकिकं प्रसिद्धमेवात्र गृहं मन्दिरं तस्य कार्यमवश्यकर्त्तव्यं द्रव्यार्जनादिकं तस्मिन्सर्वोक्तलक्षणे प्रसक्तोऽत्यासक्तः प्रतीयमानोपि नूनं निश्चयेन मनसैव ब्रह्मसुखानुभववद्वृत्तिविशेषेणैव मनः शरीरव्यवहारगृहव्यवहारयोर्निर्वाहकमन्तःकरणमानन्दयति प्रपञ्चदुःखास्पृष्टं करोति, ग्रहकार्यप्रसक्तापीति पाठे ग्रहा इन्द्रियाणि तेषां कार्याणि श्रवणादीनि वचनादीनि च ज्ञानकर्मेन्द्रियाणां सङ्कल्पादिकमन्तःकरणस्य च तेषु प्रसक्तोपीति व्याख्येयं। दृष्टान्तपक्षे इन्द्रियकार्याणि खानपानश्रवणादीनि गमनादीनि च तेषु प्रसक्तापीति योज्यमतो ज्ञानिनि लोकदृष्ट्या व्यवहारे प्रतीयमानेपि ब्रह्मसुखस्फुरणं सर्वदैवाखण्डितं विद्यत इति सम्भावनीयमिति भावः ॥ ६५ ॥

ननु लोकप्रतीत्यविषये विदुषि ब्रह्मानन्दे वर्त्तमाने कथं

सम्भावना कार्येत्याशङ्क्य तस्य क्वचित्क्वचिल्लोकदृष्टावपि प्रतीतिविषयत्वं दर्शयति।

मुनिमानन्दितं दृष्ट्वा ग्रामीणो वक्ति तं मुहुः।
त्वया यस्तु निधिः प्राप्तस्तं प्रदर्शय मामपि॥ ६६॥

मुनिमिति। ग्रामीणो ग्रामे भवो ग्रामीणः संसारी मूढ इत्यर्थः, मुनिं विवेकिनमानन्दितमानन्दो निरतिशयं सुखं सञ्जातमस्य स तथोक्तस्तं सुखसाधनविषयाभावेपि सुखितमित्यर्थः, दृष्ट्वाऽवलोक्य तं मुनिं मुहुः पुनः पुनस्त्वया भवता यस्तु यत्प्रकारको लोकविलक्षणो निधिर्निधीयन्ते स्थाप्यन्ते सर्वसुखानि अस्मिन्निति निधिर्ब्रह्मसुखं स प्राप्तो लब्धस्तं ब्रह्मानन्दं मामपि संसारदुःखदुःखितं मां प्रत्यपि प्रदर्शय समर्पयेत्येवं वक्ति वदति अज्ञानिदृष्टावपि क्वचित्क्वचिद्ब्रह्मानन्दो ज्ञानिनि प्रतीयत एवाऽन्यथा तत्प्रार्थनानुपपत्तेरतस्तत्र तत्सत्त्वं सम्भाव्यमिति भावः॥ ६६॥

इदानीं स आनन्दो गुरुकृपां विना न लभ्यत इत्याशयेन गुरुप्रतापं वर्णयति।

वञ्चकैर्विषयैस्तात वद के के न वञ्चिताः।
गुरुभिः पुरुषव्याघ्रैर्नूनमेतेपि वञ्चिताः॥६७॥

वञ्चकैरिति। हे तात हे शिष्य वञ्चकैः स्वासक्तपुरुषान्वञ्चयन्ति लुण्ठन्ति ते वञ्चकास्तैर्विषयैः स्त्र्यादिपदार्थैः के के ब्रह्मादयोपीत्यर्थः, न वञ्चिताः स्वरूपं विस्मार्य लुण्ठिता न भवन्तीति त्वं वद कथय सर्वे ब्रह्मादयोपि विषयैर्वञ्चिता एवेति भावः, विषयाणामेतादृशे सामर्थ्येपि एतेपि ईदृशमाबल्यवन्तोपि प्रत्यक्षा विषयाः पुरुषव्याघ्रैः पुरुषाः पौरुषस-

म्पन्ना उद्योगिनस्तेषु व्याघ्राः श्रेष्ठा मोक्षसाधनवन्त इत्यर्थः, तैर्गुरुभिर्गृणन्ति हितमुपन्दिशन्ति ते गुरवस्तैर्नूनं निश्चयेन वञ्चिता लुण्ठिताः स्वाधीनीकृता इत्यर्थः, अतः स्वशरणागतसर्वदुःखनिरसने गुरुरेव समर्थ इति तमेव मुमुक्षुभिः शरणं गन्तव्यमिति भावः ॥ ६७ ॥

ननु प्रपञ्चपरित्यागेन मोक्षेच्छया गुरौ शरणं गतेपि स्वदेहसम्बन्धिजनकृतोपद्रवेण विघ्नः स्यात्तत्राह ।

शीर्षे घटसहस्राम्भः पातयन्तु जडा जनाः ।
मौनमेवावलम्बेत शिवलिङ्गमिवात्मवित् ॥ ६८ ॥

शीर्ष इति। हे शिष्य शिवलिङ्गमिव यथा शिवस्य महादेवस्य लिङ्गं चिह्नं पूजास्थानं प्रतिमाविशेष इति यावत्तज्जडा मूढा जना लोकाः शीर्षे शिरसि घटसहस्राम्भो घटानां कुम्भानां सहस्राणि अपरिमिता घटा इत्यर्थः, तत्परिमितमम्भो जलं पातयन्तु तथापि मौनमेव केवलं तूष्णींभावमेवावलम्बत आश्रयति तन्निवारणं तदसहनं वा न करोतीत्यर्थः, तथा तद्वदात्मविदात्मज्ञानी जडा मूर्खा जना लोकाः स्वसंबन्धिदृश्यदेहे शीर्षे शिरसि घटसहस्राम्भःपातसदृशानपरिमितानुपद्रवान्कुर्वन्तु तथाप्यात्मनि देहत्रयातीते तदसम्बन्धं निश्चित्य मौनमेव मनोलयरूपं ब्रह्मभावमेव केवलमवलम्बेताश्रयेत न तत्प्रत्याख्याने प्रवर्त्तितव्यमिति भावः ॥ ६८ ॥

ननु गुरवोपि बहवः सन्ति मुमुक्षुभिः क आश्रयणीया इत्याशङ्क्याह ।

सविचारास्तु गुरवो विरक्ता गुरुसत्तमाः ।
विचारेपि विरक्ता ये गुरूणां गुरवो हि ते ॥ ६९ ॥

सविचारा इति । लोकप्रसिद्धगुरुषु मध्ये सविचारास्तु विचार आत्मानात्मविवेकस्तेन सह वर्त्तमानास्तुशब्देन लोकप्रसिद्धगुरुभ्य एतेषां श्रैष्ठ्यं दर्शितमतस्तत्सेवनमेव मुमुक्षुभिः कार्यमिति भावः, ततोपि विरक्ता वैराग्यसंपन्नाः सविचाराश्च ये वर्त्तन्ते ते गुरुसत्तमाः पूर्वोक्तसविचारगुरुषु सत्तमाः श्रेष्ठा इत्यर्थः, ते सेवनीयाः, ततोपि विचारवैराग्यफलं ब्रह्मानन्दं प्राप्ताः सन्तो ये विचारेपि विवेकेऽपिशब्दाद्वैराग्ये प्रयोजनाभावाद्विरक्ता उदासीनाः सन्ति ते हि प्रसिद्धा गुरूणां मध्ये गुरवः पूज्याः सन्ति अतः पूर्वोक्तोभयविधेभ्य एतेऽत्यादरेण मुमुक्षुभिः सेव्या इति भावः ॥ ६९ ॥

ननु विषयाणां दृश्यमानत्वाद्ब्रह्मसुखस्य तु वृत्त्यविषयत्वेनादृश्यत्वाच्च तदिच्छया विषयसुखत्यागो दुष्कर इत्याशङ्क्याह ।

दुस्त्यजान्विषयान्मूढो जिज्ञासुरपि मुञ्चति ।
विदां तद्रागदोषस्य त्यागे किमिव दुष्करम् ॥ ७० ॥

दुस्त्यज्यानिति । मूढः केवलमज्ञो द्वेषादिना विषयान्स्त्र्यादिपदार्थान्मुञ्चति परित्यजति जिज्ञासुरपि मुमुक्षुरपि ज्ञानप्राप्त्यभावादज्ञान्येव सोपि दुस्त्यजान्दुःखेनातिक्लेशेन त्यक्तुं योग्यानपि विषयान्धनादिपदार्थान्मुञ्चति परित्यजति तत्तस्माद्धेतोर्विदां ज्ञानिनां रागदोषस्य रागो विषयप्रेमा स एव दोषो दूषणं बन्धकरत्वात्तस्य त्यागे विसर्जने दुष्करं दुःसंपादं किमिव किमु अस्ति न किमपि दुष्करं ज्ञानिनामित्यर्थः ॥ ७० ॥

ननु सांसारिकवार्त्ताभिर्ज्ञानिनो ब्रह्मसुखानुसन्धानं व्याहन्येत तत्राह ।

जायेत जातबोधानामपि सांसारिकी कथा ।

जागरे समनुप्राप्ते यथा स्वप्नकथा नृणाम् ॥७१॥

जायेतेति। यथा यद्वज्जागरे जाग्रन्नामन्यस्यावस्थाविशेषे समनुप्राप्ते सम्यगुपलब्धे सति नृणां मनुष्याणां स्वप्नवार्त्ता जाग्रत्स्वानुभवविघाताय न भवति तथा तद्वज्जातबोधानां जात उत्पन्नो बोधः स्वस्मिन्ब्रह्मत्वज्ञानं येषां तेषां ज्ञानिनामपि सांसारिकी संसारविषयिणी कथा वार्त्तापि स्वात्मानुसन्धानविरोधिनी न जायेत न स्यादित्येवं सम्भावनीयमिति भावः ॥७१॥

ननु तुर्यसुषुप्तयोर्दृश्यभानाविशेषे तद्भेदः किन्निबन्धन इत्याशङ्क्याह।

मोहेन विस्मृते दृश्ये सुषुप्तिरनुभूयते।
बोधेन विस्मृते दृश्ये तुरीयमवशिष्यते॥ ७२ ॥

मोहेनेति। हे शिष्य मोहेन स्वरूपाज्ञानेन दृश्ये जगति विस्मृते विस्मरणविषयीकृते सति सुषुप्तिर्निद्रा जीवेन कर्त्राऽनुभूयते दृश्यते तेनैव जीवेन बोधेन जीवब्रह्मैक्यजगदसत्त्वज्ञानेन दृश्ये जगति विस्मृते विस्मरणविषयीकृते सति तुरीयं प्रत्यगभिन्नं ब्रह्मावशिष्यतेऽवशिष्टं भवति मोहबोधौ सुषुप्तितुर्ययोर्दृश्यभानाऽविशेषेऽपि भेदहेतुर्भवत इति भावः ॥ ७२ ॥

इदानीं जगत्सूर्यव्यवहारभेदेन दृष्टान्तेनात्मजगद्व्यवहारभेदं निरूपयति सार्धचतुर्भिः।

दृश्यं चेत्स्याद्रविर्न स्यात्तम एकं तदा किल।
रविश्चेत्स्याज्जगच्च स्याद्व्यवहारस्तदा किल॥ ७३

दृश्यमित्यादिभिः। हे शिष्य चेद्यदि दृश्यं जगत्स्याद्भवेच्चेद्यदि रविः सूर्यो न स्यान्न भवेन्न दृग्गोचरो भवेदित्यर्थः, तदा

तस्मिन्समय एकं केवलं तमोऽन्धकारः किल निश्चयेनानुभूयते यदा च चेद्यदि रात्रिः सूर्यः स्याद्भवेच्चेद्यदि जगदपि स्याद्भवेत्तदा तस्मिन्समये व्यवहारः क्रयादिरूपो व्यापारः किल निश्चयेनानुभूयते जगत्सत्त्वे सूर्यासत्त्वे चान्ध्यमेव सूर्यजगतोः सत्त्वे व्यापार एव जायत इति भावः ॥ ७३ ॥

किञ्च ।

रविरस्ति जगन्न स्याज्ज्योतिरेकं तदा किल ।
इति लोकस्थितिः पुत्र परमार्थगतिं शृणु ॥ ७४ ॥

रविरिति । चेद्यदि रविः सूर्यः स्याद्भवेज्जगद्विश्वं न स्यान्न भवेत्तदा तस्मिन्समय एकं केवलं ज्योतिस्तेजोरूपः सूर्य एव किल निश्चयेनानुभूयते, उक्तां लोकस्थितिं दृष्टान्तभूतामुपसंहृत्य परमार्थगतिं निरूपयिष्यंस्तच्छ्रवणे शिष्यमभिमुखीकरोतीतीति, इत्येवंप्रकारा लोकस्थितिर्लोकस्य लौकिकव्यवहारस्य स्थितिर्गतिः कथितेति शेषः, हे पुत्र हे शिष्य त्वमित ऊर्ध्वं परमार्थगतिं परमार्थो दार्ष्टान्तिकः साक्षिचैतन्यसाक्ष्यजगद्व्यवहाररूपोऽर्थस्तस्य गतिः स्थितिस्तां शृणु अवधारय ॥ ७४ ॥

तां प्रतिज्ञातामेव परमार्थगतिं निरूपयिष्यंस्तत्र विशिष्टं सूर्यं प्रदर्शयति ।

नित्यो हि रविरस्माकं तस्य नाशो न विद्यते ।
तमोभूतेपि सकले तमःसाक्षी सदव्ययः ॥ ७५ ॥

नित्य इति । हि सर्वत्र वेदान्ते प्रसिद्धो 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेर्विद्वदनुभवसिद्धश्चाऽस्माकं ज्ञानिनां रविश्चित्सूर्यः सूर्यादिसर्वजगत्प्रकाशक इत्यर्थः, नित्यः कालत्रयाबाध्योऽस्ति विद्यतेऽतस्तस्य नाशोऽभावो न विद्यते

नास्ति नाशादिसर्वजगत्प्रकाशकस्य नाशेऽङ्गीकृते नाशसा-क्षिणोऽभावान्नाशासिद्धेः कुत इत्यत आह तमोभूत इति, सकले समस्ते जगति तमोभूते तमसि तमोरूपप्रकृतौ लयेन तन्मात्रे स्थिते सति तदा तस्मिन्समये जगल्लयरूपतमसः प्रकृतेः साक्षी साक्षादव्यवधानेन प्रकाशकतया विद्यमानो-ऽत एव सदव्ययः सद्रूपोऽव्ययश्चापरिणामी, अव्ययत्वे स-द्रूपत्वं हेतुः सद्रूपत्वे चाव्ययत्वं ज्ञेयः, अस्ति अतो नाशाभा-वान्नित्यत्वं चित्सूर्यस्येति भावः॥ ७५॥

एवं दृष्टान्तस्थितिमुक्त्वा दार्ष्टान्तिकीं प्रतिज्ञातां परमार्थग-तिं निरूपयति।

रविरस्ति जगन्नास्ति समाधानवतो मुनेः।
अनेन हेतुना साधो ज्योतिरेकं तदा किल॥७६॥

रविरिति। समाधानवतः समाधानं समाधिर्विद्यतेऽस्य स तथोक्तस्तस्य मुनेर्ज्ञानिनो रविश्चित्सूर्यः समाधिसाक्षि-त्वेन प्रकाशमानोऽस्ति विद्यते जगद्विश्वं नास्ति न विद्यतेऽनेनो-क्तलक्षणेन हेतुना कारणेन तदा समाध्यवस्थायामेकं केवलम-द्वितीयं ज्योतिरात्मचैतन्यं किल निश्चयेनास्तीति ज्ञेयम्॥ ७६॥

किञ्च।

रविरस्ति जगच्चास्ति व्यवहारावलोकिनः।
रविर्नास्ति जगन्नास्ति तम एकं तदा किल॥ ७७॥

रविरिति। व्यवहारावलोकिनो व्यवह्रियते व्या-ह्रियतेऽस्मिन्निति व्यवहारो जाग्रदवस्था तमवलोकयितुं शी-लमस्येति स तथोक्तस्तस्य ज्ञानिनोऽज्ञानिनो वा रविश्चित्सूर्यो जाग्रत्साक्षित्वेन प्रकाशमान इत्यर्थः, अस्ति विद्यते जगच्च वि-

श्वमस्ति विद्यते, किञ्च सुषुप्तस्य निद्रितस्य ज्ञानिनोऽज्ञा-
निनो वाऽज्ञानेनावृतत्त्वादप्रतीयमानो रविश्चित्सूर्यो नास्ति
न विद्यते जगच्च विश्वमपि लीनत्वान्नास्ति न विद्यते तदा त-
स्मिन्समये तमोऽज्ञानमस्ति विद्यते ॥ ७७ ॥

ननु समाधावात्मप्रकाशो यदि स्यात्तर्हि जाग्रतीव कुतो
न भासते तत्राह ।

प्रकाश्यापगमे पुत्रप्रकाशः किं प्रकाशयेत् ।
प्रकाश्यत्वंविनाशेपि प्रकाशत्वमखण्डितम् ॥७८॥

प्रकाश्येति । हे पुत्र हे शिष्य प्रकाश्यापगमे प्रकाश्यमा-
त्मप्रकाशविषयभूतं जगत्तस्यापगमे नाशे सति प्रकाशश्चित्सू-
र्यश्चेतनारूपः किं वस्तु प्रकाशयेत्प्रकाशितं कुर्यादतो विद्यमा-
नोपि जाग्रतीव न प्रकाशत इति भावः, ननु प्रकाश्याभावेन
जाग्रतीव न प्रकाशते किं वा स्वाभावेनेत्यत्र किं विनिगमक-
मित्याशङ्क्य जगन्नाशप्रकाशान्यथानुपपत्त्या प्रकाश्याभावेपि त-
स्य भावोभ्युपेय इत्याशयेनाह प्रकाश्यत्वेति, प्रकाश्यत्ववि-
नाशेपि प्रकाश्यं चित्प्रकाशविषयं जगत्तस्य भावस्तत्त्वं तस्य
विनाशे लये सत्यपि प्रकाशत्वं चिन्मात्ररूपत्वमखण्डितमविना-
शि अस्त्येवेत्यभ्युपेयमन्यथानाशस्याप्यसिद्धेरिति भावः ॥ ७८ ॥

इदानीं प्रसिद्धसूर्यादात्मसूर्ये विशेषं दर्शयति ।

आयातु यातु वा भानोः प्राकाश्यं निजहेतुभिः ।
न मम स्वप्रकाशस्य किञ्चिदायाति गच्छति ॥७९॥

इति बोधसारे ज्ञानगङ्गातरङ्गोनाशीतिकं त्रिचत्वारिंशम् ॥ ४३ ॥

आयातु इति । हे शिष्य भानोः सूर्यस्य प्रकाश्यं प्रकाश-
रूपत्वं जगत्प्रकाशनशक्तिर्वा प्रकाशविषयं जगच्च निजहेतुभि-

निजाः स्वीया हेतवः कर्मोपासनादिरूपाणि कारणानि तैरायातु आगच्छतु यातु वा गच्छतु वा सूर्यस्य तेजोरूपत्वं जगत्प्रकाशकत्वं तत्प्रकाश्यं जगच्च सर्वमेतत्कृतकत्वादनित्यमिति भावः, स्वप्रकाशस्य स्वतःसिद्धप्रकाशरूपस्य मम म आत्मसूर्यस्येत्यर्थः, किञ्चित्प्रकाशरूपत्वं जगत्प्रकाशकत्वं वा जगद्वा प्रकाश्यमायाति नाऽऽगच्छति न गच्छति न नश्यति आत्मसूर्यप्रकाशस्य नित्यत्वात्प्रकाशनशक्तेर्जगतश्च पृथगसत्त्वाच्च न किमप्यात्मसूर्ये उत्पद्यते विनश्यति चेत्ययं लौकिकसूर्यादात्मसूर्ये विशेष इति भावः ॥ ७९ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ ज्ञानगङ्गातरङ्गोनाशीतिकार्थप्रकाशस्त्रिचत्वारिंशः ॥ ४३ ॥

---

अथ मनोमहिमा ।

एवं ज्ञानगङ्गातरङ्गोनाशीतिकाख्यं प्रकरणमभिधायेदानीं 'मन एव मनुष्याणाङ्कारणं बन्धमोक्षयोरि'त्यादिश्रुतिसूक्तंमनोनिरोधे यत्नदार्ढ्याय मनोमाहात्म्यं तदत्र निरूपयितुं मनोमहिमाख्यं सार्धषट्श्लोकं प्रकरणमभिदधान आह ।

## अथ मनोमहिमा ।

अथेति । अथ ज्ञानगङ्गातरङ्गोनाशीतिकनिरूपणानन्तरं मनोमहिमा मनसश्चेतसो महिमा महत्वनिरूपकं प्रकरणं निरूप्यत इति शेषः, तत्रादावात्मनो नित्यमुक्तत्वान्मनःकृतावेव बन्धमोक्षावात्मनि प्रतीतौ भवत इति तौ विवेकेन मनस्येव विज्ञेयावित्याशयेनाह द्वाभ्याम् ।

किं बद्धमसि मुक्तं वा मनः पृच्छ महामुने ।

यदि बद्धमिति ब्रूयात्तर्हि बद्धोस्यसंशयः ॥ १ ॥

किमित्यादिभ्यां । हे महामुने महाविवेकिस्त्वं भवान्हे मनस्त्वं बद्धं गुणैर्बंधनं प्राप्तमसि भवसि किं किं वा मुक्तं गुणतो मुक्तिं प्राप्तमसि भवसीत्येवं मनश्चेतः पृच्छाऽनुयोजय तन्मनः कर्तृ त्वामहं बद्धं संसारि अस्मीत्येवं ब्रूयात्कथयेद्यदि यर्हि तर्हि तदा त्वं बद्धोसि मनःकृतं बन्धनं त्वयि अस्तीत्यत्राऽसंशयो न संशयोऽस्ति ॥ १ ॥

किंचिन्मुक्तमिति ब्रूयात्किंचिन्मुक्तोसि मोहतः ।
यदि मुक्तमिति ब्रूयात्तर्हि मुक्तोसि मोहतः ॥२॥

किञ्चिदिति । यदि यर्हि किञ्चित्स्वल्पं बाह्यवैराग्यादिना कुतः कुतश्चित्संसारधर्मान्मुक्तमहमस्मीत्येवं तन्मनश्चित्तं ब्रूयाद्वदेत्तर्हि तदा त्वं मोहतोऽज्ञानात्किं चित्स्वल्पं मुक्तो मोक्षं प्राप्तोऽसीति निश्चेतव्यं यदि यर्हि तन्मनोऽहं मुक्तं मोक्षं प्राप्तमस्मीत्येव ब्रूयात्कथयेत्तर्हि तदा त्वं मोहतोऽज्ञानान्मुक्तो मोक्षं प्राप्तोऽसी ति ज्ञेयम् ॥ २ ॥

ननु मनःकृतावेव बन्धमोक्षावात्मनि प्रतीयेते इति कुत उच्यते वास्तवावेव तौ कुतो नस्त इत्याशङ्क्याह ।

बद्धेन मनसा बद्धो मुक्तो मुक्तेन चेतसा ।
न बद्धो न च मुक्तोयमिति वेदान्तनिर्णयः ॥ ३ ॥

बद्धेनेति । हे शिष्य अयं मम प्रत्यक्षमनुभूयमान आत्मा बद्धेन विषयासक्तिमता मनसाऽन्तःकरणेन बद्धो बन्धनं प्राप्तोऽस्ति स एव मुक्तेन विषयानासक्तेन चेतसान्तःकरणेन मुक्तो मोक्षं प्राप्त इत्यनुभूयते वस्तुतस्तु आत्मनश्चेतसः पृथग-

सत्त्वाच्चेतसस्तत्कृतबन्धमोक्षयोश्चासत्त्वाच्चाऽयमात्मा न बद्धो न बन्धनं प्राप्तो न च नैव मुक्तो मोक्षं प्राप्त इत्येव वेदान्तनिर्णयो वेदान्तानामुपनिषदां निर्णयः सिद्धान्तोऽस्ति तथा च श्रुतिः।

'न निरोधो न चोत्पत्तिर्नबद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थते'ति ॥ ३ ॥

इदानीं ब्रह्मविष्ण्वादिषु यन्महत्त्वं प्रतीयते तदपि मनःकृतमेवेत्याशयेनाह।

स्फुरन्ति माहिमानो ये यत्र यत्र जगत्त्रये।
ते सर्वे मनसो धर्मा मनो हि महिमाश्रयम् ॥४॥

स्फुरन्तीति। जगत्त्रये त्रैलोक्ये यत्र यत्र ब्रह्मविष्ण्वादिषु ये पुराणादिषु वर्णिताः श्रुताश्च महिमानो महत्त्वानि स्फुरन्ति भासन्ते ते सर्वे समस्ता मनसश्चेतसो धर्मा गुणा ज्ञेयाः, तेषां मनःकल्पनामात्रत्वादिति भावः, कुत इत्यत आह मन इति, हि यस्मात्कारणान्मनश्चित्तं महिमाश्रयं महिम्नो महत्त्वस्याश्रयमाधारोऽस्ति सर्वमहत्वस्य मनःकल्पितत्वादिति भावः ॥ ४ ॥

किञ्चाणिमादिसिद्धयोपि मनस एव गुणा इत्याह।

अणिमा महिमा चैव लघिमा गरिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं मनसो गुणाः ॥५॥

अणिमेति। अणिमानाम्नी सिद्धिर्महिमा महिमानाम्नी सिद्धिः, लघिमा लघुत्वसन्धारणरूपा योगजन्या शक्तिः, तथा गरिमा गुरुत्वसन्धारणरूपा योगजया शक्तिः, प्राप्तिः प्राप्तिनाम्नी सिद्धिः, प्राकाम्यं प्राकाम्यनाम्नी सिद्धिः, ईशित्वमीशि-

त्वनाम्नी सिद्धिः, वशित्वं वशित्वनाम्नी सिद्धिरेते सर्वे मनसोऽन्तःकरणस्य गुणा धर्माः सन्तीति ज्ञेयम् ॥ ५ ॥

किञ्च ।

मनो धनुर्मनो मौर्वी मन एव धनुर्धरः ।
मनो लक्ष्यं मनो वेधो मनो विद्धं विमुक्तये ॥ ६ ॥

मन इति । मनोऽन्तःकरणं धनुः शरासनं ज्ञेयं-'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' इति श्रुत्युक्तरूपके धनुःशब्दवाच्यः प्रणवोऽपि मन एव ज्ञेयं मनःकल्पितत्वात्तस्येति भावः, एवमुत्तरत्रापि प्रणवद्वारा ब्रह्मरूपलक्ष्ये चेतोवृत्तिरूपशरप्रवृत्तेः, तथा तत्रैव रूपके मौर्वी मूर्वं नाम तृणविशेष स्तत उत्पन्ना मौर्वी धनुःप्रत्यञ्चा सापि मन एवाऽन्तःकरणमेव तस्या अपि मनःकल्पितत्वात्, किञ्च धनुर्धरो धनुःशब्दवाच्यस्य प्रणवस्य धरो धारकः प्रणवधारणाभ्यासीत्यर्थः, सोपि मन एव तस्यापि मनःकल्पितत्वेन मनोमात्रत्वात, किञ्च लक्ष्यं लक्षणावृत्त्या बोध्यं ब्रह्मापि 'ब्रह्म तल्लक्ष्यमुच्यते' इति श्रुतेस्तदपि मनोन्तःकरणं ज्ञेयमुभयोरेकसत्ताकत्वाद्ब्रह्मणश्च पारमार्थिकलक्ष्यत्वगुणवत्त्वाभावेन लक्ष्यत्ववद्ब्रह्मणोपि मनःकल्पितत्वाद्वा मनोरूपत्वं ज्ञेयं, किञ्च वेधो विध्यतेनेनेति वेधो ब्रह्ममनसोरेकाकारसम्पादनरूपा वेधनक्रिया मनोन्तःकरणमेव ज्ञेयं तस्यापि मनःकल्पिततया मनोमात्रत्वादिति भावः, एतादृशं मनोन्तःकरणं विद्धं वेधनक्रियया व्याप्तुमिष्टतमं कृतं सद्विमुक्तये विदेहमुक्तिप्राप्त्यै भवेत्स्यादिति क्रियाया अध्याहारः कर्त्तव्यः, मुक्तिरपि मनोलयाधीना सर्वत्र शास्त्रेषु निरूपिताऽतो लयवन्मनोरूपत्वात्तस्या मनोरूपत्वमेव निश्चेतव्यम्, आत्मनि

तु पारमार्थिकबन्धमोक्षाभावस्य प्रतिपादितत्वादिति भावः ॥६॥

इदानीं बन्धमोक्षकारणत्वं मनसो निरूपयंस्तच्छ्रैष्ठ्यं त्रिभिः पादैराह ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
इतोऽधिकं तु किं वाच्यमद्वये तु स्थितं न तत् ॥७॥

इति श्रीनरहरिकृतौ बोधसारे मनोमहिमा चतुश्चत्वारिंशः ॥ ४४ ॥

मन एवेति । मनुष्याणां जीवानां बन्धमोक्षयोर्बन्धो बन्धनं मोक्षश्च मुक्तिस्तयोः कारणं हेतुर्मन एवान्तःकरणमेवास्ति अतो मनस्तोऽऽधिकं महत् किं वाच्यं किं वक्तव्यं मन एवातिश्रेष्ठं ततोधिकं किमपि नान्यदिति भावः, एवं मनसः सर्वश्रैष्ठ्यं प्रतिपाद्येदानीं तस्य स्वात्मन्यसत्त्वं दर्शयति अद्वय इति, तत्तु तन्मनोऽपि अद्वये न विद्यते द्वयं द्वैतं यस्मिन्स तथोक्तः प्रत्यगभिन्नः परमात्मा तस्मिन् स्थितं विद्यमानं न नास्ति आत्मनः सकाशान्मनसः पृथक्सत्ता नास्तीत्यर्थः ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ मनोमहिमार्थप्रकाशश्चतुश्चत्वारिंशः ॥ ४४ ॥

---

अथ चिच्चण्डीपशुघातनम् ।

एवं मनसः श्रैष्ठ्यनिरूपणपूर्वकमद्वयात्मनि तदसत्त्वं प्रतिपाद्येदानीं तादृशमनसो लयं कर्त्तुं साधकानां लयोपाये प्रवर्त्तनाय तत्र रुच्युत्पादनाय च मनोलयफलं प्रदर्शयंश्चिच्चण्डीपशुघातनाख्यमेकश्लोकं प्रकरणमभिदधान आह ।

अथ चिच्चण्डीपशुघातनम् ।

अथेति । अथ मनोमहिमनिरूपणानन्तरं चिच्चण्डीपशु-

घातनं चिदेव चण्डी देवी तस्या अग्रे तस्यै पशुर्बलिरज इत्यर्थः, घात्यते नाश्यतेऽस्मिन्निति पशुघातनं पशुहिंसनाख्यं तन्निरूपकत्वादेतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, तदेवाह पद्येन ।

चित्ताहंकृतिबुद्धिमानसमयैर्युक्तं चतुर्भिः पदै-
श्छित्त्वान्तःकरणं पशुं परशुना बोधेन तीक्ष्णेन यः ।
चिच्चण्डीचरणाम्बुजार्चनमनुप्राप्तः प्रसादं परं
किञ्चित्रं चरणे लुठन्ति रभसात्तस्याखिलाः सिद्धयः ॥ १ ॥

इति श्रीनरहरिकृतौ बो० चिच्चण्डीपशुघातनं पञ्चचत्वारिंशम् ॥४५॥

चित्तेति । हे शिष्य चित्ताहङ्कृतिबुद्धिमानसमयैश्चित्तमनुसन्धानप्रत्यभिज्ञास्मृत्यनुभववृत्तिमानन्तःकरणभागश्चित्तमित्युच्यते, अहङ्कृतिश्चाहङ्कारोऽन्तःकरणभागः स द्वितीयः, बुद्धिश्च मतिर्निश्चयरूपोऽन्तःकरणभागस्तृतीयः, मानसं च सङ्कल्पविकल्पात्मकोऽन्तःकरणभागश्चतुर्थः, एतद्रूपैश्चतुर्भिश्चतुःसंख्याकैः पदैः पादैर्युक्तं सहितमत एव चतुष्पदत्वेनाऽज्ञत्वेन च पशुसाम्यादन्तःकरणं पञ्चभूतसत्त्वभागोपादानकं कार्यद्रव्यं पशुमजम् 'अजामेकां लोहितशुक्लकृष्णामि'ति श्रुत्या प्रकृतेर्मायापरपर्यायाया अजत्वमभिपादनात्तत्कार्यभूतान्तःकरणस्याप्यजत्वं चतुष्पदत्वाच्च पशुत्वेनाजत्वं स्पष्टमेवेति भावः, तं तीक्ष्णेनाज्ञानभेदनसमर्थेन दृढेनेत्यर्थः, बोधेन ज्ञानाख्येन परशुना परश्वधेन छित्त्वा घातयित्वा यो ज्ञानी चिच्चण्डीचरणाम्बुजार्चनं चिच्चेत्यरहितचिन्मात्रस्वरूप आत्मा स एव चण्डी भगवती तस्याश्चरणौ पादावारोपाधिष्ठानत्वापवादाधिष्ठानत्वरूपौ कल्पि-

१ परं द्वैतजातं श्यति च्छेदयतीति व्युत्पत्त्या परशुत्वं बोधस्य ।

तांशावित्यर्थः, तयोर्मध्ये योऽपवादाधिष्ठानत्वरूपोंशः स एवात्र चरणो जगद्भक्षकत्वाच्चरणशब्दस्य च गतिभक्षणार्थकचरधातुप्रकृतिकत्वाच्चेति भावः, स एवाम्बुजं कमलं तस्यार्चनं पूजनं जगदपवादेन केवलतदनुसन्धानरूपमिति यावत्तत्कृत्वेत्यध्याहार्यम्, अनु अनन्तरमेव परं सर्वोत्कृष्टं प्रसादं निरावरणानन्दरूपं प्राप्तो लब्धोऽस्ति तस्यात्मसाक्षात्कारवतो योगिनश्चरणे पाद आरोपाधिष्ठानत्वरूपे कल्पितांश इत्यर्थः, तस्यैव सर्वसिद्धिनिर्वाहकत्वेन सर्वसिद्धीनां गतित्वादिति भावः, अखिलाः समस्ताः सिद्धयोऽणिमाद्या रभसा वेगेन योगिनस्तद्विषयानिच्छायां सत्यामपि स्वेच्छयैवेत्यर्थः, लुठन्ति कदाप्ययमस्मदङ्गीकारं करोतु इतीच्छया चरणसेवनपरा भवन्तीत्यत्र किं चित्रं किमाश्चर्यं न किमपीत्यर्थः ॥ १ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ चिच्चण्डीपशुघातनार्थप्रकाशः पञ्चचत्वारिंशः ॥ ४५ ॥

---

अथ जीवन्मुक्त्यष्टाऽशी ।

ननु सत्यप्यन्तःकरणे ज्ञानसिद्ध्या प्रारब्धभोगान्ते विदेहकैवल्यसिद्धेस्तयैव कृतार्थः स्यात्किमापातिकया मनोनाशलक्षणया जीवन्मुक्त्येत्याशङ्कायां तन्निवारणाय जीवन्मुक्तादरं च विधातुं जीवन्मुक्तिमहत्त्वख्यापकं जीवन्मुक्त्यष्टादश्याख्यमष्टादशश्लोकं प्रकरणमभिदधान आह ।

## अथ जीवन्मुक्त्यष्टादशी ।

अथेति । अथ चिच्चण्डीपशुघातनानन्तरं जीवन्मुक्त्यष्टादशी जीवन्मुक्तेर्निरूपणकर्त्र्यष्टादश्यष्टादशश्लोकसमाहाररूपैतन्नामकं प्रकरणं निरूप्यत इति शेषः, तत्र तावदादौ येन

मनसः सकाशात्स्वात्मा मोचित स ईश्वर एवेति मनोनाशे प्रवृत्तिरुचिमुत्पादयितुमाह ।

संकल्पबद्धं संकल्पाद्विमोच्यात्मानमात्मना ।
आत्मनात्मनि सन्तुष्टः स्वात्मारामः स्वयं हरिः ॥१॥

संकल्पेति । यः कश्चित्पुरुषधौरेयः संकल्पबद्धं संकल्पेन संकल्परूपेणान्तःकरणेन बद्धं बन्धनं प्राप्तमात्मानं स्वं सङ्कल्पात्सङ्कल्परूपान्मनसः सकाशादात्मना तत्साक्षिचैतन्याभिन्नेन कर्त्रा विमोच्यात्यन्तं मोचयित्वा तेनैव साक्षिचैतन्यरूपेणात्मनाऽऽत्मनि ब्रह्माभिन्ने चिन्मात्ररूपे सुखे सन्तुष्टस्तृप्तस्तिष्ठति स आत्माराम आत्मा स्वयमेवाराम उपवनं क्रीडावनं यस्य स तथोक्तः स्वयं स्वतो हरिर्हरति सर्वं जगदिति हरिः परमात्मैवास्तीति ज्ञातव्यः ॥ १ ॥

ननु जीवन्मुक्तौ को विशेषो येन तत्सम्पादने प्रयत्नो विधेयस्तत्राह ।

स्वरूपमेव कैवल्यं संसारः शुद्धमूर्खता ।
अतिचित्रा गतिः पुत्र जीवन्मुक्तस्य या स्थितिः ॥२॥

स्वरूपमिति । कैवल्यं विदेहत्वं स्वरूपमेव स्वस्यात्मनो रूपमाकृतिरेवास्ति, किञ्च संसारः संसृतिः शुद्धमूर्खता शुद्धा केवला मूर्खताऽज्ञताऽस्ति अतः संसारात्मनोर्जडचेतनरूपयोः परस्परं विरोधादेकत्रासम्भवेपि जीवन्मुक्तौ तत्सम्भवाद् हे पुत्र हे शिष्य जीवन्मुक्तस्य जीवतोपि मुक्तस्य मोक्षं प्राप्तस्य या तेषामेवानुभूयमाना स्थितिर्गतिः साऽतिचित्राऽत्याश्चर्यरूपा गतिरवस्थाऽस्तीति ज्ञेया ॥ २ ॥

अन्यमपि विदेहमुक्तेर्जीवन्मुक्तिश्रैष्ठ्ये हेतुमाह ।

जीवन्मुक्तिसुखप्राप्त्यै स्वीकृतं जन्मलीलया।
आत्मना नित्यमुक्तेन न तु संसारकाम्यया॥ ३॥

जीवन्मुक्तीति। नित्यमुक्तेन नित्यं सर्वदा मुक्तो मोक्षं प्राप्तस्तेन तादृशेनाऽनेन विशेषणेनाऽऽत्मनि विदेहमुक्तीच्छाऽभावो दर्शितः, आत्मना प्रत्यगभिन्नेन परात्मना लीलया क्रीडयाऽनेनाऽऽत्मना जन्माङ्गीकारेऽपि क्लेशाभावो दर्शितः, जीवन्मुक्तिसुखप्राप्त्यै जीवतो या मुक्तिर्मोक्षस्तस्मिन्यत्सुखमानन्दस्तस्य प्राप्तिर्लाभस्तस्यै तदर्थं जन्म जननं स्वीकृतमङ्गीकृतं, ननु नित्यमुक्तस्याऽऽत्मनो विदेहमुक्तीच्छा माऽस्तु संसारसुखेच्छयैव जन्माऽस्तु तत्राह न त्विति, हे शिष्य संसारकाम्यया संसारस्य भवस्य काम्येच्छा तया न तु नैव जन्म स्वीकृतं संसारस्य दुःखरूपत्वान्नहि कस्य चिज्ज्ञानिनोऽज्ञानिनो वा दुःखेच्छास्तीति दृष्टेति भावः॥ ३॥

ननु नित्यमुक्तत्वादात्मनो नित्यमुक्तीच्छाऽभावोऽस्तु संसारेच्छयैव जन्माऽङ्गीकारोऽस्तु अन्यथाऽविद्यावरणविक्षेपाणामङ्गीकारो न स्यात्तदनङ्गीकारे च संसारनिर्वाहासम्भवादित्याशङ्क्य दुःखानुभवं विना सुखाधिक्यानुभव इवाऽविद्यानङ्गीकारे दुःखानुभवं विना जीवन्मुक्तिसुखे सुखाधिक्यप्रतीतिर्न स्यादिति तदर्थमेवाविद्योत्पादनमित्याशयेनाह।

यदि न स्यादविद्याख्यमिदं कपटनाटकम्।
कथं लभेत विश्वात्मा जीवन्मुक्तिमहोत्सवम्॥ ४॥

यदीति। हे शिष्य यदि यर्हि अविद्याख्यमविद्येति आख्याऽऽह्वा यस्य तत्तथोक्तमिदं प्रत्यक्षं कपटनाटकं कपटरूपं दम्भरूपं नाटकं नृत्यविलासो न स्यान्न भवेत्तर्हि तदा वि-

श्वात्मा विश्वस्य जगत आत्मा पारमार्थिकरूपो ब्रह्माभिन्नः प्रत्यगात्मा जीवन्मुक्तिमहोत्सवं जीवतो या मुक्तिर्मोक्षस्तस्य महाञ्श्लेष्ठो य उत्सवो हर्षस्तं कथं केन प्रकारेण लभेत प्राप्नुयान्न केनापि प्रकारेण प्राप्नुयादित्यर्थः, जीवन्मुक्तिसुखस्याऽविद्याजन्यदुःखप्रतीतिपूर्वकत्वात्तं विना तत्प्राप्तिर्न स्यादिति भावः ॥ ४ ॥

इदानीं द्वैताद्वैतसुखस्य जीवन्मुक्तेष्वेव सत्त्वे तच्छ्रैष्ठ्यज्ञापनाय दर्शयति।

अद्वैतं न सदेहेऽस्ति विदेहे द्वैतमस्ति न।
जीवन्मुक्तस्य नान्यस्य द्वैताद्वैतमहोत्सवः ॥ ५ ॥

अद्वैतमिति। हे शिष्य सदेहे देहेन शरीरेण सह वर्त्तमाने पुरुषे सदेहत्वप्रतीतिमतीत्यर्थः, अद्वैतं न विद्यते द्वैतं द्वितीयं यस्मिंस्तदखण्डैकरसं ब्रह्मसुखमित्यर्थः, न नास्ति, किंच विदेहे विगतो निवृत्तो देहः शरीरं यस्मात्स तथोक्तस्तस्मिन्पुरुषे देहाप्रतीतिमतीत्यर्थः, द्वैतं देहादिप्रपञ्चजातं नास्ति न विद्यत एवं विरोधे परस्परं सत्यपि जीवन्मुक्तस्य जीवन्सन्यो मुक्तो मोक्षं प्राप्तस्तस्य पुरुषस्य द्वैताद्वैतमहोत्सवो द्वैतं सांसारिकं सविषयं सुखमद्वैतं केवलमात्मसुखं तयोस्ताभ्यां वा महाञ्श्लेष्ठ उत्सवो हर्षोऽस्ति अन्यस्य नित्यमुक्तस्य बद्धस्य च न भवति अतो जीवन्मुक्तिरेव संपाद्येति भावः ॥ ५ ॥

इदानीं जीवन्मुक्ते द्वैताद्वैतयोः सत्त्वं स्पष्टमेव दर्शयति।

सदेहे न विदेहत्वं विदेहे न सदेहता।
सदेहत्वं विदेहत्वं जीवन्मुक्ते प्रवर्त्तते ॥ ६ ॥

सदेह इति। हे शिष्य सदेहे देहेन शरीरेण सह वर्त्तमाने जीवे

देहसत्त्वप्रतीतिर्नास्तीत्यर्थः, विदेहत्वं देहरहितत्वमात्मरूपत्वमित्यर्थः, न नास्ति, किञ्च तथा विदेहे देहरहित आत्मनि सदेहता देहेन शरीरेण सह वर्तमानता न नास्ति, किञ्च जीवन्मुक्तो मोक्षं प्राप्तो यो जीवस्तस्मिन् सदेहत्वं देहेन सह वर्तमानत्वं विदेहत्वं देहरहितत्वं चोभयमपि प्रवर्त्तते प्रवृत्तं भवति समाधिसुखं संसारसुखं च जीवन्मुक्तोऽनुभवतीत्यर्थः ॥ ६ ॥

ननु सदेहे विदेहता कथं सम्भाव्येत्याशङ्कामुद्भाव्य दृष्टान्तेन तां सम्भावयति :

सदेहस्य विदेहत्वं यदि न स्यात्तदा वद ।
जनकस्य सदेहस्य कथं प्रोक्ता विदेहता ॥ ७ ॥

सदेहस्येति । हे शिष्य सदेहस्य लोकदृष्ट्या सदेहस्य देहेन सहवर्त्तमानस्य विदेहत्वं देहरहितत्त्वं यदि यर्हि न स्यात्तदा तर्हि सदेहस्य लोकदृष्ट्या सदेहस्य देहेन शरीरेण सहवर्तमानस्य जनकस्य मैथिलस्य निमेस्तद्वंशजस्यान्यस्य वेत्यर्थः, विदेहता देहरहितत्वं श्रुतिषु कथं केन प्रकारेण प्रोक्ता कथिता तथा च श्रुतिः 'जनको ह वैदेह आमाञ्चक्र' इति तत्त्वं भवान्वद कथयाऽतः सदेहेपि विदेहत्वं सम्भाव्यमिति भावः ॥ ७ ॥

अस्तु तर्हि विदेहे सदेहत्त्वासिद्धिरित्याशङ्कामुद्भाव्य तामपि निराकरोति ।

विदेहस्य सदेहत्वं यदि न स्यात्तदा वद ।
जनकस्य विदेहस्य कथं प्रोक्ता सदेहता ॥ ८ ॥

विदेहस्येति । हे शिष्य विदेहस्य देहरहितस्य सदेहत्वं देहसहितत्वं यदि यर्हि न स्यान्न भवेत्तर्हि तदा विदेहस्य श्रु-

तिपुराणादिषु वर्णितस्य देहरहितस्य जनकस्य मैथिलस्य निमेस्तद्वंशजस्य वा सदेहता देहेन शरीरेण सहवर्त्तमानस्य भावस्तत्ता कथं केन प्रकारेण प्रोक्ता कथिता तद्वद कथय ततो विदेहेपि सदेहत्वं सम्भाव्यमिति भावः ॥ ८ ॥

ननु तत्र तत्र शास्त्रेषु विदेहमुक्तिरेव प्रतिपादिता न जीवन्मुक्तिरित्याशङ्क्याह ।

विमुक्तिर्निश्चिता शास्त्रे जीवन्मुक्तिः सुनिश्चिता ।
जीवन्मुक्तत्वमप्राप्य न विदेहविमुक्तता ॥ ९ ॥

विमुक्तिरिति । हे शिष्य विमुक्तिर्विदेहमुक्तिः शास्त्रे वेदान्तशास्त्रे यथेत्यध्याहार्यं यद्वन्निश्चिता निश्चयेन प्रतिपादिता तथैव जीवन्मुक्तिर्जीवत एव या मुक्तिर्मोक्षप्राप्तिः सा सुनिश्चिता सु शोभना निश्चयेन प्रतिपादिताऽस्ति अत उभयोरपि प्रामाण्यमभ्युपगन्तव्यमिति भावः, ननु तर्हि विदेहमुक्त्यैवालं किमापातिकया मनोनाशसाध्यया जीवन्मुक्त्येत्याशङ्क्य जीवन्मुक्तिं विना विदेहमुक्तेरसिद्धिं प्रतिपादयति जीवन्मुक्तत्वमिति, हे शिष्य जीवन्मुक्तत्वं जीवत एव लोकदृष्ट्या प्राणोपाधिमत एव मुक्तत्वं मोक्षं प्राप्तत्वमप्राप्य न लब्ध्वा विदेहविमुक्तता कस्यापि पुरुषस्य विदेहो विगतो निवृत्तो देहः शरीरं यस्मात्स विदेहो देहरहितः स चासौ मुक्तश्च मुक्तिं प्राप्तश्च तस्य भावस्तत्ता न न सिद्ध्यतीति शेषः, अतो विदेवमुक्तीच्छावतापि जीवन्मुक्तिं संपाद्यानन्तरं विदेहमुक्तः स्वयमेव स्यादिति भावः ॥ ९ ॥

ननु 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यत' इति श्रुतेर्ज्ञानेनैव विदेहकैवल्यसिद्धेः प्रतिपादनाज्ज्ञानेनैव विदेहमुक्ति-

रस्तु अतः कथमत्र विरुद्धमुच्यते जीवन्मुक्त्यैव विदेहमुक्तिरितीत्याशङ्क्याह।

ज्ञानं विना न कैवल्यं न मृतो ज्ञानवान्भवेत्।
जीवतो ज्ञानलाभः स्यात्सा जीवन्मुक्तिरक्षता॥ १०॥

ज्ञानं विनेति। हे शिष्य ज्ञानं विना—ऋते ज्ञानात्कैवल्यं विदेहमुक्तिर्न न भवतीति सत्यमेव 'ज्ञानादेवतु कैवल्यम्'-त्यादिबहुश्रुतिप्रामाण्यादिति भावः, तज्ज्ञानाभावे केवलं मृतो मरणं प्राप्तो यः सोऽपि विदेहोऽस्ति तथापि तस्य ज्ञानाभावात्स मोक्षभाग्मोक्षं मुक्तिं भजति सेवतेऽसौ मुक्तिभाग्न भवेन्न स्याद्. ज्ञानवानिति पाठे ननु तस्य मरणसमये मोक्षात्यन्तसाधनभूतं ज्ञानं नास्तीति कुतो निश्चेतव्यमित्याशङ्क्य मृते पुरुषे ज्ञानाभावः सर्वलोकप्रसिद्ध इत्याशयेनाह मृतो मरणं प्राप्तो ज्ञानवान्मूर्च्छया पूर्वकालमनभ्यासेन वा ज्ञानी न भवेन्न स्यादित्यर्थः, यद्वा मरणस्याज्ञानकार्यत्वाज्ज्ञानस्य च मरणनिवर्त्तकत्वाच्च ज्ञानिनि मरणाभावो मरणवति च ज्ञानाभावः प्रसिद्ध एवेति मृतो मरणं प्राप्तो यः स ज्ञानी न भवेदतो मरणवति प्रसिद्धदेहाभावेन लोकदृष्ट्या विदेहत्वेपि ज्ञानाभावेन न मोक्षसिद्धिरित्यर्थः, अतो जीवनः प्राणधारणवतो ज्ञानलाभो मुक्तेरात्यन्तिकसाधनभूतज्ञानस्य लाभः प्राप्तिः स्याद्भवेज्जीवतः पुरुषस्य श्रवणादिज्ञानसाधनाभ्याससम्भवाज्जीवत एव ज्ञानप्राप्तिरिति युक्तमिति भावः, अस्तु जीवतो ज्ञानलाभो जीवन्मुक्त्या विदेहमुक्तिः कथं सिद्धा तत्राह सेति, सा ज्ञानप्राप्तिरेव जीवन्मुक्तिर्जीवन्मुक्तिशब्देनोक्ताऽक्षता न क्षता नष्टा साऽक्षताऽविनाशिनीत्यर्थः, अतो जीवन्मुक्त्यनन्तरमेव विदेहमुक्ति-

स्तां विना सा न सम्भवतीत्यर्थः, सिद्धान्ते तु जीवन्मुक्तिविदेहमुक्त्योर्न भेद इति भावः ॥ १० ॥

ननु जीवन्मुक्तेरेव विदेहमुक्तिरूपेण परिणामेपि किं स्वल्पकालसुखरूपया जीवन्मुक्त्याऽऽतस्तां विहाय विदेहमुक्तिरेव सम्पाद्येत्याशङ्क्य जीवन्मुक्तावपि चिरकालसुखं तां विना विदेहकैवल्यासिद्धेस्तत्रादरं विधातुं दर्शयति।

जीवन्मुक्तिसुखं स्वल्पकालं किं तेन चेच्छृणु।
ब्रह्मलोके विराजन्ते कथं ते सनकादयः ॥ ११ ॥

जीवन्मुक्तीति। हे शिष्य जीवन्मुक्तिसुखं जीवन्मुक्तेः सुखमानन्दः स्वल्पकालं स्वल्पोऽदीर्घः कालः समयः परिच्छेदको यस्य तत्तथोक्तमस्ति अतस्तेन तादृशेन सुखेन किं किंफलं न किमपीत्यर्थः, इत्येवं यदि यर्हि वदसि चेत्तर्हि शृणु अवधारय हे शिष्य जीवन्मुक्तिसुखस्य कल्पकालपरिच्छिन्नत्वे सति ते पुराणादिषु प्रसिद्धाः सनकादयः सनक आदिर्येषां ते तथोक्ता ब्रह्मलोके द्विपरार्धावसानकालपरिच्छिन्ने ब्रह्मणो लोके सत्यलोके कथं केन प्रकारेण विराजन्ते विराजमाना भवन्ति जीवन्मुक्तेः स्वल्पकालस्याङ्गीकारे ब्रह्मलोके द्विपरार्धकालं जीवन्मुक्तानां सनकादीनां स्थितिर्न स्यादिति जीवन्मुक्तिरपि बहुकालवर्त्तिनीति निश्चेतव्यमिति भावः ॥ ११ ॥

अतो गुरोः शिष्य इव विदेहमुक्तेर्जीवन्मुक्तिः सहचरी तत्स्वरूपनिश्चयकारणा चानायासेन व्यवहारनिर्वाहकत्वेनेश्वरीत्याह।

तस्मादीश्वरलीलेयं काचिदीश्वररूपिणी।
जीवन्मुक्तिर्महामुक्तेः संप्रदायप्रवर्त्तिनी ॥ १२ ॥

तस्मादिति । तस्मात्कारणादियं प्रकृता जीवन्मुक्तिर्जीवत एव पुरुषस्य या मुक्तिर्मोक्ष ईश्वरलीलेश्वरस्येशनादिशक्तिमतः परमात्मनो लीला क्रीडाऽस्ति अतो ईश्वररूपिणीश्वराभिन्नत्वादीश्वरो रूपं स्वरूपं यस्याः सा तथोक्ताऽस्ति किञ्च सा महामुक्तेर्विदेहमुक्तेः संप्रदायप्रवर्त्तिनी संप्रदायस्य प्रवर्त्तिनी प्रवर्त्तनकर्त्र्यस्ति विदेहमुक्तेः साक्षात्कारकारणभूतेति भावः ॥ १२ ॥

ननु सा केषां साक्षात्केषां नेति तत्राह ।

यस्यां खेलान्ति मुनयो नारदाद्या निरन्तरम् ।
ज्ञानिभिर्यानुभूतैव सा जीवन्मुक्तिरक्षता ॥ १३ ॥

यस्यामिति । हे शिष्य नारदाद्या नारदो नारदनामा ब्रह्मपुत्र आद्यः प्रथमो येषां सनकादीनां ते तथोक्ता मुनयो मननवन्तो ज्ञानिन इत्यर्थः, यस्यां जीवन्मुक्तौ निरन्तरं सर्वदैव खेलन्ति क्रीडन्ति ननु तर्हीदानींतनानामनुभवगम्या स्यान्न वेत्याशङ्क्याह ज्ञानिभिरिति, इदानीन्तनैरपि ज्ञानिभिर्ज्ञानवद्भिर्या जीवन्मुक्तिः साऽनुभूतैव साक्षाज्ज्ञातैवाऽतः सा जीवन्मुक्तिरक्षता न क्षतं नाशो यस्याः सा न केनाप्यनादृतेत्यर्थः, अतो विदेहमुक्तीच्छया न जीवन्मुक्तिस्त्याज्येति भावः॥ १३ ॥

एवं जीवन्मुक्तिं संस्थाप्येदानीं जीवन्मुक्तेष्वपि केषु चिद्व्यवहारः प्रतीयते केषु चिच्च त्यागोऽतो लौकिकदृष्ट्या त्यागिषु जीवन्मुक्तत्वनिश्चयः स्यान्नान्येषु तेन च ज्ञानसाधनं श्रवणादिकं त्यागिषु क्वचिदेव भवेद्व्यवहारवत्सु च तन्निरन्तरमेव वागुच्चारणादिव्यवहारवत्त्वे न स्यादतस्तत्रैव व्यवहारवत्सु जीवन्मुक्तत्वनिश्चयेन तेषु शरणं गन्तुं मुमुक्षूणामुभयेष्वपि जीवन्मु-

क्तत्वं दर्शयति द्वाभ्यां ।

चित्तविक्षेपकर्त्तारं विहारं तु विहाय ये ।
स्थिता निर्वाणनिष्ठायां त एव सनकादयः ॥ १४ ॥

चित्तेति । ये शास्त्रेषु प्रसिद्धाश्चित्तविक्षेपकर्त्तारं चित्तस्यान्तःकरणस्य विक्षेपोऽतिचाञ्चल्यं तस्य कर्त्तारं कारणभूतं व्यवहारं व्यापारं विहाय परित्यज्य निर्वाणनिष्ठायां निर्वाणेऽखण्डैकरसाकारवृत्तौ निष्ठा सहजप्रीतिस्तस्यां स्थिताः स्थितिं प्राप्तास्त एव ते चोक्तलक्षणाः सनकादयः सनक आदिर्मुख्यो येषां सनन्दनादीनां ते सन्तीति ज्ञेयाः ॥ १४ ॥

अन्तर्बोधमया लोके व्यवहारपरा इव ।
ये स्थिता निजनिष्ठायां त एव जनकादयः ॥ १५ ॥

अन्तरिति । हे शिष्य ये शास्त्रेषु प्रतिपादिता अन्तरन्तःकरणे बोधमयाबुंध्यते जीवब्रह्मैक्यं ज्ञायतेऽनेनेति बोधस्तन्मयास्तद्रूपाः सन्तो लोके लोकदृष्ट्या व्यवहारपरा इव व्यवहारे व्यापारे परा आसक्ता इव भासन्ते तथापि ते निजनिष्ठायां निजाऽऽत्मविषया या निष्ठा सहजप्रीतिस्तस्यां स्थिताः स्थिरा जातास्त एव ते च जनकादयो जनको मैथिल आदिर्मुख्यो येषां यदुप्रभृतीनां ते तथोक्ता ज्ञेयाः, उक्तलक्षणेषूभयेषु जीवन्मुक्तेषु व्यवहारतत्त्यागाभ्यां वैलक्षण्ये सत्यपि जीवन्मुक्तिकारणभूतज्ञानस्य विद्यमानत्वाज्जीवन्मुक्तत्वं सममेवेति भावः ॥ १५ ॥

ननु ज्ञानमुभयत्रास्तु जीवन्मुक्तिविघातकस्य व्यवहारस्य विद्यमानत्वाऽविद्यमानत्वाभ्यां जीवन्मुक्तेरपि सत्त्वासत्त्वे अप्य-

भ्युपगन्तव्ये इत्याशङ्क्य व्यवहारभावाभावयोरेव न मुक्तिहेतुत्वं किन्तु ज्ञानस्यैवेत्याशयेन समाधत्ते ।

गृहं वास्तु वनं वास्तु येषां निष्ठा न वर्त्तते ।
सनकादिषु नैवैते न च ते जनकादिषु ॥ १६ ॥

गृहमिति । हे शिष्य येषां मूढानां गृहं गृहनिमित्तं व्यापारकरणमस्तु भवतु वाऽथवा वनं तत्त्यागेन वनाश्रयो वा पक्षान्तरेऽस्तु भवतु परन्तु निष्ठाऽऽत्मनि सहजं प्रेम येषां न वर्त्तते न विद्यते तेषां मुक्त्यभावेनैत उक्तलक्षणा ज्ञानहीना गृहिणस्त्यागिनो वा सनकादिषु सनक आदिर्मुख्यो येषां सनन्दनादीनां तेषु नैव गणनार्हा जनकादिषु च जनको मैथिल आदिः प्रथमो येषां रध्वम्बरीषादीनां तेष्वपि न न गणनार्हा अतो ज्ञानमेव मुक्तिकारणं तदुभयत्राप्यस्तीति द्विविधा अपि जीवन्मुक्ता इति भावः ॥ १६ ॥

एवं व्यवहारिषु त्यागिषु चोभयत्र ज्ञानसत्त्वे जीवन्मुक्तत्वं प्रसाध्येदानीं तत्सेवां कर्त्तुं मुमुक्षूणां तेषु गुरुत्वं प्रदर्शयति ।

अन्तःसारा हि गुरवः स्वल्पवाचाऽमृतप्रदाः ।
मन्द्रं मन्द्रं हि गर्जन्ति प्रावृषेण्याः पयोधराः ॥ १७ ॥

अन्तःसारा इति । गुरवो हि गृणन्ति हितमुपदिशन्तीति गुरवो दैशिका हि यतः कारणादन्तःसारा अन्तरन्तःकरणे सारो ब्रह्मतत्त्वं येषां ते तथोक्तास्ते गुरवः श्रेष्ठा ज्ञेयाः, नन्वन्तःकरणे तेषां ब्रह्मतत्त्वं साक्षादनुभूतमस्तीति कुतो ज्ञातव्यं तत्राह स्वल्पवाचेति, स्वल्पवाचा स्वल्पाऽल्पाक्षरा वाग्वाणी तयाऽमृतप्रदा अमृतं मरणरहितं ब्रह्मसुखमित्यर्थः, तत्प्रददतीति ते

तथोक्ताः स्वल्पवाक्कं ब्रह्मसुखदातृत्वं च तेषामन्तःसारत्वज्ञापकमिति भावः, हि यस्मात्कारणात्प्रावृषेण्याः प्रावृषि वर्षाकाले भवा उत्पन्नाः पयोधराः पयसां जलानां धरा धारका मेघा मन्द्रं मन्द्रं गम्भीरं गम्भीरं यथा भवति तथा गर्जन्ति ध्वनन्ति जलवृष्टिकराणां मेघानां गम्भीरस्वल्पस्वन इव जीवन्मुक्तानां स्वल्पेनैव वाग्व्यवहारेण मोक्षप्रदत्वं लक्षणं गुरुलक्षणं परीक्ष्य तादृशलक्षणवन्तं गुरुं स्वयमपि जीवन्मुक्तत्वप्राप्त्यै सेवेतेति भावः ॥ १७ ॥

इदानीमेतत्प्रकरणाभ्यासफलमाह ।

सदैवाध्ययनीयेयं भावनीया सदैव हि ।
जीवन्मुक्तिपदप्राप्त्यै जीवन्मुक्तिचतुर्दशी ॥१८॥

इति श्रीनरहरिकृतौ बोधसारे जीन्मुक्त्यष्टादशी षट्चत्वारिंशा ॥४६॥

सदैवेति । हे शिष्य मुमुक्षुभिरियं प्रत्यक्षा मन्निरूपिता जीवन्मुक्तिचतुर्दशी जीवन्मुक्तेर्निरूपिका चतुर्दशी चतुर्दशानां श्लोकानां समाहार एतन्नामकं प्रकरणमित्यर्थः, सदैव निरन्तरमेवाऽध्ययनीया पठनीया हि पुनः सदैव निरन्तरमेव भावनीया विचार्या प्रयोजनं पठनविचारयोरेतस्या दर्शयति जीवन्मुक्तीति, जीवन्मुक्तिपदप्राप्त्यै जीवतो मुक्तिरूपं यत्पदं स्थानमवस्थेत्यर्थः, तस्य प्राप्त्यै लाभायैतत्प्रकरणस्य विचारपूर्वकपाठेनावश्यं जीवन्मुक्तिः स्यादेवेति भावः, अस्मिंश्च प्रकरणे यस्यां खेलन्तीत्याद्या गृहं वास्तु वनं वास्त्वित्यन्ताश्चत्वारः श्लोकाः सङ्गतत्वाद्व्याख्याता अपि क्षेपका ज्ञेया जीवन्मुक्तिचतुर्दशीत्येवमुपसंहारादिति भावः ॥ १८ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ जीवन्मुक्तिचतुर्दश्यर्थप्रकाशः षट्चत्वारिंशः ॥ ४६ ॥

अथ ज्ञानिगजगर्जनम् ।

एवं जीवन्मुक्तिचतुर्दशीं निरूप्येदानीं पूर्वप्रकरणेऽन्तःसारा हि गुरव इति श्लोके जीवन्मुक्तानां स्वल्पाक्षरगम्भीरवाण्याऽसूत्रितदत्रमुक्तं तदिदानीं दर्शयितुं ज्ञानिगजगर्जनाख्यं पञ्चत्रिंशच्छ्लोकं प्रकरणमभिदधान आह ।

## अथ ज्ञानिगजगर्जनम् ।

अथेति । अथ जीवन्मुक्तिचतुर्दशीनिरूपणानन्तरं ज्ञानिगजगर्जनं ज्ञानी जीवब्रह्मैक्यसाक्षात्कारज्ञानवान्स एव गजो हस्ती तस्य गर्जनं शब्दस्तन्निरूपकं प्रकरणं तन्निरूप्यत इति शेषः, तत्र तावदादौ सर्वेषां समविषमपदार्थानां स्वाश्रितत्वेपि स्वस्मिंस्तत्कृतजन्मनाशादिविकाराभावं लक्ष्यीकृत्य गर्जति ।

आयान्ति तत्र विलसन्ति वसन्ति च द्रा-<br>
गुड्डीय यान्ति च कुलानि विहङ्गमानाम् ।<br>
भावास्तथा मयि समा विषमा विचित्रा<br>
देवालयाग्रमिव केवलमस्मि नित्यः ॥ १ ॥

आयान्तीति । तत्र देवालयाग्रे विहङ्गमानां पक्षिणां कुलानि समूहा यथेसाध्याहार्यं यथा यद्वदायान्ति आगच्छन्ति यान्ति गच्छन्ति विलसन्ति क्रीडन्ति द्रागीषद्वसन्ति च तिष्ठन्त्यपि तत उड्डीयोड्डानं कृत्वा यान्ति च गच्छन्ति च तथा तद्वत्समाः सुखसाधनभूताः शान्तिदान्त्यादयो विषमा दुःखसाधनभूता रागादयो विचित्राः केचित्सुखदुःखकारणत्वेन विचित्राः स्त्रीपुत्रादयोऽनेकरूपा भावा वृत्तिविशेषास्तत्तद्विषयाश्च मयि तत्त्वम्पदयोर्भागलक्षणया लक्षिते प्रत्यगभिन्ने ब्रह्म-

णि आयान्ति उत्पद्यन्ते यान्ति गच्छन्ति नश्यन्तीत्यर्थः, विलसन्ति विचित्ररूपेण शोभन्ते वसन्ति च किंचित्कालं तिष्ठन्त्यपि द्रागीषत्कालमुड्डीयोड्डानं कृत्वा यान्ति च वियुक्ता भवन्त्यपि एवं च सति देवालयाग्रमिव देवस्यालयं मन्दिरं तस्याग्रं शिखरं-यथा पक्षिसमूहागमनक्रियावन्न दृश्यते गमनेन च तेषां गमनक्रियावत्तन्न भवति तद्वद्विलासेन च तेषां विलासक्रियाविकृतिमन्न भवति तत्स्थानेनापि स्थितिक्रियावच्च न दृश्यते किञ्च तेषामुड्डीनेन चोड्डीनं न दृश्यते तेषां वियोगेन च वियुक्तमपि न भवति एवं विक्रिया रहितत्वान्नित्यं सर्वदैकरूपं स्थितमित्यनुभूयते तथाऽहंपदलक्ष्यः प्रत्यगभिन्नः परमात्मा समविषमविचित्रभावोत्पत्त्या समोत्पत्तिमान् विषमोत्पत्तिमान् विचित्रोत्पत्तिमांश्च न भवामि तन्नाशेनापि नाशक्रियाविकृतिमान्न भवामि तद्व्यक्त्या च व्यक्तिविकारवान्न भवामि तत्स्थित्या च स्थितिविकारवान्न भवामि तद्वियोगेनापि वियोगविकारवांश्च न भवामि अतोऽहं केवलमभिन्नो नित्यः कालत्रयाबाध्यरूपोऽस्मि भवामीति गर्जना प्रथमा ॥ १ ॥

इदानीं सागरदृष्टान्तेन स्वस्मिन्नचलप्रतिष्ठत्वं सम्भावयन्गर्जति ।

> उन्मज्ज्य मज्जति जगन्मयि दैवयोगा-
> दुच्चावचा न गणिता अपि ते तरङ्गाः ।
> निष्ठाङ्गतः स्वमहिमन्यचलप्रतिष्ठे
> तिष्ठामि सागर इव स्वरसादपारः ॥ २ ॥

उन्मज्ज्येति । यथा यद्वत्सागरे समुद्रेऽगणिता असङ्ख्या अनन्ता इत्यर्थः, उच्चावचा अपि दीर्घाः केचित्खर्वाश्च त-

रङ्गा भङ्गा उन्मज्जयोदूर्ध्वमुत्पद्येत्यर्थः, मज्जन्ति लीयन्ते लीना भवन्तीत्यर्थः, पवनयोगादित्यध्याहार्यं पवनसंयोगादेवं सत्यपि अचलप्रतिष्ठेऽचला स्थिरा प्रतिष्ठा स्थितिर्यस्य तस्मिन् स्वमहिमनि स्वस्य महिमनि सागरमहिमनि निष्ठां स्वाभाविकीं स्थितिं गतः प्राप्तः सन्सागर इव यथा सागरः समुद्रस्तिष्ठति स्थितिं करोति तथा तद्वन्मयि प्रत्यगभिन्ने परमात्मनि तत्त्वंपदाभ्यां भागत्यागलक्षणया लक्षित उच्चावचान्यपि स्थूलसूक्ष्माण्यपि अगणितानि जगन्ति ब्रह्माण्डानि जातावेकवचनं दैवयोगात्प्रारब्धकर्मसम्बन्धादुन्मज्ज्योदूर्ध्वमुत्पद्येत्यर्थः, मज्जन्ति प्रारब्धक्षयाल्लीनानि भवन्ति एवं च जगतामुत्पत्तौ लये चाहमहंपदलक्ष्यः प्रत्यगात्मा ब्रह्माभिन्नोऽचलप्रतिष्ठेन चला चलायाना न चलाऽचला स्थिरा प्रतिष्ठा स्थितिर्यस्य स तथोक्तस्तस्मिन् स्वमहिमनि स्वस्यात्मनो यो महिमा महत्त्वं ब्रह्मत्वमित्यर्थः, तस्मिन् निष्ठां स्वाभाविकस्थितिं प्रीतिं वा गतः प्राप्तः सन्स्वरसात्स्व आत्मरूपो यो रसः सुखं तस्मात्तमनुभूयेत्यर्थः, ल्यब्लोपे पञ्चमी, अपारो न विद्यते पारोऽन्तो यस्य स तथोक्तो देशकालवस्तुकृतपरिच्छेदशून्य इत्यर्थः, तिष्ठामि वसामि। सागरपक्षेपीदं विशेषणं योज्यं स्वरसात्स्वः समुद्ररूपो यो रसो जलरूपस्तं तस्मात्तं प्राप्येत्यर्थः, अपारो न विद्यते पारोऽन्तो यस्य स तथोक्तो यथासागरेऽनेकतरङ्गोत्पत्तिलयाभ्यामुत्पत्तिलयविकाराभावोऽचलस्थितिरपारत्वं च सर्वदैव स्थितं, तद्वन्मयि अनन्तजगदुत्पत्तिलये प्रतीयमानेपि ताभ्यां मयि तदभावः स्वस्थैर्यं च स्वात्मानुभवश्चानन्तत्वं च पारमार्थिकं स्थितमेवेति भावः ॥ २ ॥

इदानीं जन्मादिविकारेषु प्रतीयमानेषु सत्सु कामादिवृत्तिष्वपि प्रतीयमानासु स्वस्मिंस्तत्स्पर्शाभावात्पर्वतदृष्टान्तेनाच-

लत्वमनुभूय गर्जति ।

> जन्मादयो वनचराः प्रवहन्तु कामं
> घर्षन्तु कुम्भमभितो मयि वृत्तिनागाः ।
> अस्मिन्युगे परयुगे च युगान्तरे वा
> तिष्ठामि निश्चलतया गिरिराजतुल्यः ॥ ३ ॥

जन्मादय इति । गिरिराज इव यथा पर्वतराजे श्रेष्ठपर्वते हिमाचलादौ वनचरा वनेऽरण्ये चरा गमनवन्तो भक्षणवन्तश्च सिंहहरिणादयः कामं स्वेच्छया प्रवहन्तु प्राप्नुवन्तु किञ्च वृत्ति-नागा वृत्तय इव चलायमाना नागा गजाः कुम्भं कटमभितः सर्वतः कामं यथेच्छं घर्षन्तु कण्डूयन्तु अस्मिन्युगे वर्त्तमानयुगे युगपरिमितकाले परयुगे च परमन्यत्पूर्वमत्र ग्राह्यं, युगे युगप-रिमिते काले च पुनर्युगान्तरे वाऽन्यद्युगं युगान्तरन्तस्मिन्वा भविष्यद्युगेपीत्यर्थः, तथापि वनचरसञ्चारेण वृद्धिरूपं विकारं कुम्भघर्षणने ह्रासरूपं च विकारमप्राप्य गिरिराजः पर्वतश्रेष्ठो हिमाचलादिर्निश्चलतया स्थिरतया तिष्ठति वर्त्तते तथा तद्व-न्मयि प्रत्यगभिन्ने परमात्मनि वनचरा वने सम्भजनीये विष-यिजनसेव्ये देहे चरन्ति तिष्ठन्तीति वनचरास्ते जन्मादयो 'जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यती'ति यास्क-पठिताः षड्विकाराः कामं यथेच्छं प्रवहन्तु प्राप्ता भवन्तु किञ्च वृत्तिनागा वृत्तयोऽन्तःकरणस्य वृत्तयः कामक्रोधाद्यास्ता एव नागा गजास्त इवाऽभितः सर्वतः कुम्भं गजस्य कुम्भरूप-मज्ञामिव स्वांशं विषयं घर्षन्तु संयोजयन्तु अस्मिन्वर्तमाने युगे युगपरिमिते काल उपलक्षणमेतत्कल्पादिरूपे कालांश इत्यर्थः, परयुगे च परमन्यद्गतमत्र ग्राह्यं, युगे युगपरिमितः

कालस्तस्मिन्भूतकल्पादिकाल इत्यर्थः, युगान्तरे वाऽन्य-द्युगं युगान्तरं तस्मिन्भविष्यत्कल्पादिकालांश इत्यर्थः, का-लत्रयेपीति भावः, तथापि जन्मादिविकाररहितो विषयतद्वृत्ति-सम्बन्धरहितश्च गिरिराजतुल्यो गिरिराजो महान्पर्वतो हिमा-चलादिस्तेन तुल्यः सदृशो निश्चलतया स्थिरतया तिष्ठामि वसामि यथा पर्वतं चालयितुमसमर्था वनचराः कुम्भघर्षणप-रा गजाश्च तथा मामपि प्रत्यगभिन्नं ब्रह्मरूपं स्थिरब्रह्मरूपा-च्चालयितुं जन्मादिनृत्यादिरूपा विकारा विषया अपि न स-मर्था इति भावः ॥ ३ ॥

इदानीमगस्त्यचरितसदृशचरित्रवर्णनेन स्वस्मिन्नगस्त्यत्वं सम्भाव्य गर्जति ।

> नीचैर्निपातितविमोहमहीधरस्य
> विन्ध्यस्य मूर्धनि पदं विनिधाय सम्यक् ।
> इष्टां दिशं प्रतिगतः पुनरागतो न
> स्वच्छन्दमेव विहरामि तदस्म्यगस्त्यः ॥ ४ ॥

नीचैरिति । यथाऽगस्त्योऽगस्त्यनामा मुनिर्नीचैर्नि-पातितविमोहमहीधरस्य नीचैरधो निपातितः स्वागमनेन स्व-नमस्कारार्थं पातितो विमोहो विशेषो मोहो दिग्भ्रमः सूर्या-च्छादनेन यस्माज्जनानां स तथोक्तः स चासौ महीधरः प-र्वतस्तस्य विन्ध्यस्य विन्ध्यनाम्नो गिरेर्मूर्धनि शीर्षे सम्य-ग्दृढं पुनरुत्थानं न भवेद्यथा तथेत्यर्थः, पदं पादं विनिधाय सं-स्थाप्येष्टां गन्तुमीप्सितां दिशं दक्षिणदिशं प्रति प्रतिगतो यातः प्रतिष्ठित इति यावत् स पुनर्भूयो नागतो नायातः काशीं प्रतीति शेषः, किन्तु तत्रैव दक्षिणस्यां दिशि स्वच्छन्दमेव

स्वेच्छयैव विहरति क्रीडति व्याप्रियतीत्यर्थः, इयमाख्यायिका काशीखण्डे प्रसिद्धा, तथाऽहमपि प्रत्यगभिन्नः परमात्माहं च नीचैः स्वात्मतोऽधःक्षेत्रे निपातितो यो विमोहो विपरीतज्ञानं प्रपञ्चनिर्वाहकज्ञानमित्यर्थः, यद्वा विमोहो मूलाज्ञानमेव मह्याः क्षेत्रस्य धरन्धारकमत एव विन्ध्यस्य विध्यति स्वात्मानं सदेकरूपमपि भिन्नतीति विन्ध्य आत्मभेदनिमित्तभूत इत्यर्थः, कार्यकारणरूपोभयविधमपि मोहं क्षेत्रं कुर्वेति भावः, तस्य मूर्धनि शिरसि पदं कल्पितांशं जगत्कारणत्वाधिष्ठानत्वादिरूपमंशं विनिधाय संस्थाप्य सम्यग्दृढं यथा पुनरात्मनि सम्बद्धो न भवेद्यथा तथेत्यर्थः, इष्टां सुखरूपत्वादीप्सितां प्रियामित्यर्थः, दिशं दिशति प्रकाशयति सामान्यरूपेण जगदिति दिगात्मचितिस्तां प्रतिगतः प्राप्तः सन्निति यावत् पुनर्भूयः कार्यकारणसन्घातरूपे प्रपञ्चे नागतो न प्राप्तस्तत्रात्मसुख एव स्वच्छन्दमेव स्वेच्छयैव विहरामि क्रीडामि तत्तस्माद्धेतोरहमहम्पदलक्ष्यार्थः, प्रत्यगात्माऽगस्त्योऽगं ज्ञानं विना न गच्छति निवृत्तं न भवति तदगमज्ञानं तत्कार्यमन्तःकरणं वा स्त्यायति खण्डयतीति अगस्त्यः स्वशरणागतमुमुक्षुजनाज्ञाननाशकोऽस्मि भवामि ॥४॥

ननु 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरमि'त्यादि, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'तिश्रुतिभ्यां स्वर्गसुखस्य नित्यत्वप्रतिपादनात्तत्प्रापकज्योतिष्टोमादिकर्मणैवाहं कृतार्थः स्यां किं वैराग्यादिप्रयाससाध्येन ज्ञानेनेत्याशङ्क्य स्वर्गेपि बहुविधंदुःखं दर्शयितुं गर्जति ।

> दृष्टो मयाद्य विगलद्वदनप्रसादः
>
> कश्चित्तृतीयपदतः पतितः पृथिव्याम् ।

तन्मे मतिः समुदियाय परावरज्ञा
स्वर्गस्तु हन्त नरकादपि दुर्विपाकः ॥ ५ ॥

दृष्ट इति। हे शिष्य अद्य वर्तमानरात्रौ मया विचारवदन्तःकरणवता कश्चित्कोपि स्वर्गी विगलद्वदनप्रसादो विगलन्विनश्यमानो वदनस्य मुखस्य प्रसादः प्रसन्नता यस्य स तथाभूतः सन् तृतीयपदतो लोकत्रये तृतीयं यत्पदं स्थानं तस्मात्स्वर्गात्पृथिव्यां भूमौ पतितः स्खलितो दृष्टोऽवलोकितस्ततः किमित्यत आह तदिति, तत्तस्मात्कारणात्स्वर्गपातावलोकनान्मे मम परावरज्ञा परः स्वर्गोऽवरो मृत्युलोकस्तौ जानातीति सा तथोक्ता मतिर्निश्चयरूपा वृत्तिः समुदियायोत्पन्ना बभूव तस्यां मतौ किं निश्चितं तदाह स्वर्गस्त्विति हन्तेति खेदे मन्मतौ स्वर्गस्मरणादिना खेद एव जायत इति भावः, स्वर्गस्तु मृत्युलोकादुत्कृष्टसुखरूपत्वेन वर्णितोपि स्वर्गो नाकलोको नरकादपि पापफलभूतबहुदुःखप्रदान्नरकादपि दुर्विपाको दुष्टकर्मणां विपाकः फलभूतइति निश्चितम्, अयं भावः—स्वर्गे सत्त्वगुणाधिक्येन प्रापश्चिकज्ञानाधिक्यात्तेन च न्यूनाधिकबुद्धिसत्त्वे सति स्वान्योत्कर्षावलोकनेनेर्ष्याजनितदुःखस्य विद्यमानतयाऽन्यपतनदर्शनेन च स्वपतनानुमानेन स्वपातस्मृतिजन्यदुःखस्यापि विद्यमानतयापि स्वस्मिंश्चोत्कृष्टसुखलाभेन किञ्चिद्दुःखासहस्वभावे च जाते पातजन्यदुःखबहुत्वप्रतीतेश्चोच्चपदप्राप्त्यनन्तरं निकृष्टपदप्राप्तिजन्यदुःखस्यापि सत्त्वाच्च सर्वतोपि दुःखरूपत्वं स्वर्गस्यातः पापस्य दुःखफलकत्वप्रसिद्धेर्बहुपापफलं स्वर्गः, नरके तु मौढ्यजन्यसुखस्य विद्यमानत्वात्तत्र च दुःखानुभवेन पश्चात्तापे पुण्यकर्मवासनोत्पत्तेश्च किञ्चित्पापफलत्वं नरकस्येति नरकादपि बहुतरपापफलत्वं स्वर्गस्येति निश्चितमिति भावः ॥ ५ ॥

अत एव स्वर्गप्राप्तेरपि मृत्युलोकादिस्वस्थानलोकप्राप्तिरेव श्रेयसीति सूचयन्गर्जति ।

आरुह्य तुङ्गपदवीं पतितादनार्या-
न्नारूढ एव हि वरं प्रकृतौ स्थितो यः ।
अङ्गानि हंत किल तस्य न चूर्णितानि
खेदो न चेतसि न वा परिहासपीडा ॥ ६ ॥

आरुह्येति । हे शिष्य तुङ्गपदवीं तुङ्गोच्चा या पदवी स्थितिस्तमारुह्य प्राप्य पतितात्ततो भ्रष्टादत एव तद्रक्षणबुद्धिहीनत्वादनार्यान्नीचादनारूढ एवोच्चपदमप्राप्त एव वरः श्रेष्ठो ज्ञेयः कुत इसत आह प्रकृताविति, हि यस्मात्कारणाद्यः श्रेष्ठपुरुषः प्रकृतौ स्वर्गप्राप्तिकारणभूते मर्त्यलोकेऽन्यत्रोच्चपदप्राप्तिकारणभूते नीचपदे च स्थितो वर्तमानोऽस्ति अतः श्रेष्ठ इसर्थः, उच्चपदे उच्चपदप्राप्तिसाधनाऽसम्भवात्तद्योगेन ततः पतनहेतुत्वाच्च नीचपदे तूच्चपदप्राप्तिसाधनसम्भवाच्च तत्र स्थितस्यैव श्रेष्ठत्वमिति भावः, तत उच्चपदात्पतने च दुःखाधिक्यं दर्शयितुं नीचपदे स्थितस्य त्रिविधदुःखाभावं दर्शयान्गर्जति अङ्गानीति, हन्तेति कोमलामन्त्रणे हे शिष्य तस्य नीचस्थानस्थितस्याऽङ्गानि अवयवा न चूर्णितानि न भग्नानि किलेति निश्चये किंच तस्य नीचस्थानस्थितस्य चेतसि अन्तःकरणे खेद उच्चपदवियोगजन्यं दुःखं न विद्यते किंच तस्य परिहासपीडा लोकैः कृतो यः परिहास उपहासस्तज्जन्या पीडा दुःखमपि न वा नैव विद्यतेऽतो नीचपदस्थस्य श्रेष्ठ्यमुच्चपदस्थादिति वर्णितमिति भावः ॥ ६ ॥

इदानीं हठयोगाभ्यासेन नाडीं प्रविश्य चिरजीवितसिद्ध्या

कृतकृत्यं मन्यमानं लक्ष्यीकृत्य तत्रापि दोषं दर्शयन्गर्जति।

नाडीं प्रविश्य यदि जीवति भीतभीतः
प्रान्ते च खादति मृतिश्चिरजीवनं किम्।
देहस्वभावरहितः परमात्मभावे
तिष्ठन्मृतिं जयति चेच्चिरजीवनन्तत् ॥ ७ ॥

नाडीमिति। हे हठिंस्त्वमन्यो वा त्वादृशः कोऽपि नाडीं सुषुम्णां प्रविश्य प्रवेशं कृत्वा सुषुम्णामार्गेण ब्रह्मरन्ध्रं प्रविश्येत्यर्थः, भीतभीतो भीता मृत्युतो भयं प्राप्ताः स्वल्पभया इत्यर्थः, स्वरक्षणसाधनेष्वप्रवृत्तेरल्पभयत्वमिति भावः, तेभ्योऽपि योऽति भीतः स्वरक्षणाय तत्साधनभूतनाडीप्रविष्टत्वाद्यदि यर्हि जीवति कियत्कालं मृत्युरहितस्तिष्ठति तथापि प्रान्त आयुषोन्तेऽवसाने समाध्यन्ते वा मृतिर्मृत्युः खादति च भक्षयेव चिरजीव्यभिमानिनं विनाशयत्येवेत्यर्थः, तत्तादृशं चिरजीवनं चिरकालं जीवनं किं न किमपीत्यर्थः, किं तु तच्चिरमरणमेव नाडीप्रविष्टत्वेन धर्मकामार्थानुपयोगान्मरणभीत्या च नाडीप्रवेशलक्षणेन हेतुनाऽज्ञानित्वस्यानुमेयत्वाज्ज्ञानसाधनानुपयोगित्वाच्चाजन्मतो मरणान्तं रोगिजीवनस्य मरणतुल्यत्वान्मरणवत्त्वमिव तादृशचिरजीवनस्य चिरमरणत्वमेव सिद्धमिति भावः, ननु तर्हि योगेन चिरजीवनं साध्यमित्युक्तेः कोऽभिप्रायः कथं च दत्तगोरक्षादिभिश्चिरजीवनं संपादितमित्याशङ्क्याह। देहेति, हे हठिन्देहस्वभावरहितो देहे शरीरे स्वस्यात्मनो यो भावः सत्ताऽऽरोपिता स तत आत्मनि संयोज्यानन्तरमात्मनि स्वपदवाच्ये देहस्य यो भावः सद्रूपता तेन रहितः सन् परमात्मभावे परमः कार्यकारणातीतस्तस्यात्मनो भावे सत्त्वे

आत्मपरात्मनोः सचैक्यानुभव इत्यर्थः, तिष्ठन्वर्तमानः सन् मृतिं मरणं जयति वशीकरोति चेद्यदि तर्हि तज्जीवनं चिरजीवनं चिरकालं जीवनं ज्ञेयमात्मज्ञानपूर्वं दत्तादिभिश्चिरजीवनं सम्पादितं तस्य च मुक्तिरूपत्वात्सफलत्वमिति ज्ञानपूर्वस्य जीवनस्य ज्ञानदार्ढ्योपयोगितया तस्यैव साध्यत्वं प्रतिपादितं तत्र तत्र योगशास्त्रेऽतस्तस्मिंश्च ज्ञाने सति मोक्षसिद्ध्या मरणनिवृत्तौ च तदनुपयोग इति भावः ॥ ७ ॥

ननु 'ज्ञानात्सिद्धिमवाप्नुयादि'त्यादिषु ज्ञानस्य सिद्धिफलकत्वप्रतिपादनात्सा सिद्धिस्तु योगेनैव सिद्ध्यति अतो योगस्यैव मुक्तिहेतुरूपज्ञानत्वमतस्तेनैवाहं कृतार्थः किं जीवब्रह्मैक्यज्ञानेन वेदान्तप्रतिपाद्येन तत्प्रतिपादकेन च वेदान्तशास्त्रेण वा किमित्याशङ्क्य वेदान्तप्रतिपाद्यज्ञानं विना नित्यसिद्धिरूपात्मस्थितिर्न स्याद्योगसिद्धेस्तु तात्कालिकत्वान्न परमपुरुषार्थतेत्याशयेन समाधत्ते ।

आलोकितानि च मतानि मुनीश्वराणा-
मालोकिताश्च बहवो बहुसिद्धमार्गाः ।
अद्यापि तं मलिनभावमपास्य दूरं
सिद्धिस्तु किं न यदि सिध्यति नित्यसिद्धः ॥ ८ ॥

आलोडितानीति । हे शिष्य मुनीश्वराणां मुनयो मननवन्तस्तेषामीश्वराः स्वामिनस्तेषु श्रेष्ठा इत्यर्थः, तेषां मतानि संमतानि तत्प्रणीतशास्त्राणीत्यर्थः, आलोकितानि विचारितानि सन्ति मयेत्यध्याहार्यम्, आलोडितानीति पाठे स एवार्थः, च पुनर्बहवोऽपरिमिता बहुसिद्धमार्गाश्च बहवोऽनन्ताः सिद्धाः कपिलप्रभृतयस्तेषां मार्गा मतानि तत्प्रणीतशास्त्राण्यपीत्यर्थः,

आलोकिता विचारिताः सन्ति तर्हि तद्विचारेण भवद्भिः किं निश्चितं तत्राहाद्यापीति, तं सर्वलोकमत्यक्षं मलिनभावं मलिनं रागादिभिः कलुषीकृतमन्तःकरणं तस्य भावः सत्त्वं, यद्वा नित्यशुद्धबुद्धमुक्तात्मनि मलिनानित्याशुद्धाबुद्धजीवोऽविद्यादिभिः संपादितस्तस्य भावः सत्त्वं तं दूरं दूरदेशमपास्य निषेध्य दूरीकृत्येत्यर्थः, नित्यसिद्धो नित्यं सर्वदैव सिद्धो वर्तमानः सन्यदि यर्हि न सिध्यति न मुच्यते तर्हि तदा स योगाभ्यासी सिद्धः किं सिद्धिं प्राप्त इत्यर्थः, योगेन तात्कालिकमुक्तिप्रतीतावपि तत्र प्रपञ्चबीजाज्ञानस्य विद्यमानत्वाद्यतो वेदान्तजन्यजीवब्रह्मैक्यप्रपञ्चाद्यन्तासत्त्वज्ञानं विना नित्यमुक्तिर्नेति सर्वशास्त्रविचारेण मया निश्चितमिति भावः ॥ ८ ॥

इदानीं स्वान्तःकरणस्य चितिलयेन प्रपञ्चाभानात्स्वस्य चेष्टारहितत्वेन लक्ष्यं परिपूर्णत्वमन्येषां तत्र रुच्युत्पादनाय क्षयवृद्धिहीनत्वं च दर्शयन्स्वस्मिन्स्वयमपि लक्ष्यीकृत्य गर्जति।

अङ्गं प्रसार्य पतितः खलु चित्स्वरूपे<br>
निद्रालुतां गत इति प्रविनष्टचेष्टः।<br>
विन्ध्यस्य योजनशतायतिका शिलेव<br>
नैव ह्रसामि न च वृद्धिमुपैमि पूर्णः ॥ ९ ॥

अङ्गमिति। हे शिष्य अहं साधिष्ठानबुद्धिस्थचिदाभासोऽङ्गं मत्स्वरूपं चिदाभासस्वरूपमित्यर्थः, प्रसार्य प्रसृतं कृत्वा ब्रह्मरूपत्वं संपाद्येत्यर्थः, चित्स्वरूपं चिच्चेतनं स्वरूपमसाधारणरूपं यस्य तस्मिन्प्रत्यगभिन्ने ब्रह्मणि पतित एकीभूतोऽस्मि अतो निद्रालुतां निद्रास्वभावं गतः प्राप्त इति हेतोः प्रविनष्टचेष्टः प्रकर्षेण विनष्टा विलीना चेष्टा अन्तःकरणबहिःकरणव्यापारा

यस्य स तथोक्तोऽस्मि भवामि, ननु भवता प्रतज्ञानरूप-निद्रालुत्वे चिदाभासस्य ब्रह्मत्वसंपादने च समस्तकरणव्यापा-रनाशे चापि संपादिते सति किं फलं प्राप्तमित्याशङ्क्य सदृष्टान्तं तद्दर्शयति विन्ध्यस्येति, विन्ध्यस्य विन्ध्यनाम्नः पर्वतस्य यो-जनशतायतिका योजनानि क्रोशचतुष्कानि तेषां शतानि अप-रिमितशतानि तावदायतिका विस्तीर्णा शिलेव यथा शिला न ह्रसति क्षीणा भवति न च नैव वृद्धिं पुष्टिमुपैति प्राप्नोति त-थाऽहमहंपदलक्ष्यः प्रत्यगात्मा नैव नापि ह्रसामि क्षयरूपं परिणामं प्राप्नोति च पुनर्न नैव वृद्धिं पुष्टिरूपं विकारमुपैमि प्राप्नोमि अतः पूर्णो ब्रह्मरूपेण व्यापको भवामि वृद्धिक्षयादि-विकाराभावेन परिपूर्णब्रह्मरूपत्वं स्वस्मिन्ननुभूयमानमेव फल-मिति भावः ॥ ९ ॥

इदानीं स्वस्य कृतकृत्यत्वं रूपकेण निरूपयन्गर्जति ।

परिलसति पिता मे सर्वलोकस्य राजा
धृतिमतिबलहेतुर्यौवनं मे नवीनम् ।
इयमपि च सुबुद्धिः काचिदूढा वराङ्गी ।
सुखमधिकमतः किं मत्परो नास्ति धन्यः ॥ १० ॥

परिलसतीति । मे मम चिदाभासस्य पिता पातीति पि-ता सच्चिदानन्ददानेन पालकत्वात्स्वस्य तत उत्पन्नत्वाच्च पितृपदेन परमात्माऽत्र ग्राह्यः स सर्वलोकस्य सर्वः समस्तो लोको लोक्यते दृश्यत इति लोको दृश्यं तस्य राजा रञ्जकः प्रकाशक इत्यर्थः, परिलसति परितः सर्वत्र लसति साक्षात्प्र-काशत इत्यर्थः, तथा मे मम चिदाभासस्य धृतिमतिबलहेतु-धृतिरात्मधारणा, इन्द्रियादिक्षोभेनाक्षोभरूपं धैर्यं वा, मतिः

शास्त्रार्थानां मननं, बलमात्मप्राप्तिसाधनेषूत्साहस्तेषां हेतुः कारणभूतं यौवनमात्मानात्मनोर्विवेचनं मिश्रणामिश्रणार्थद्वयवतो युधातोः करणे ल्युटि युवनमितिरूपं ततश्च स्वार्थेऽणि च यौवनं तेन चामिश्रणेन विवेचनमत्र ग्राह्यं तन्नवीनं प्रौढमस्ति नवीनपदमत्र जीर्णत्वमात्रव्यावर्त्तकं न तु कोमलत्वपरम्, अपि चान्यदपीयं कूटस्थसहितचिदाभासस्य मम दृश्यत्वेन प्रत्यक्षा काचिदनिर्वचनीया सुबुद्धिः सुखरूपत्वात्सु शोभना बुद्धिर्जीवब्रह्मैक्यविषयिणी निश्चयात्मिकान्तःकरणवृत्तिर्वराङ्गी वरं श्रेष्ठं सर्वेषां ब्रह्मादीनां पूज्यत्वादङ्गं स्वरूपं यस्याः सा तथोक्ता स्त्र्यूढा परिणीताऽतोऽस्मात्सुखादधिकमुत्कृष्टमन्यत्सुखं शर्म किमस्ति न किमपीत्यर्थः, इदमेवाधिकमिति भावः, यत एतादृशसुखवानस्मि ततो मत्परो मत्तः परोऽन्यो धन्यः सुकृती नास्ति न विद्यतेऽहमेव सुखीत्यर्थः, ॥१०॥

ननु तर्हि भवतां कृतकृत्यत्वात्सर्वव्यवहारसाधनभूतदेहधारणे प्रयोजनाभावेन न तदाश्रयो युक्त इत्याशङ्क्य देहव्यापृतिप्रयोजनाभावेपि स्वात्मसुखप्राप्त्या कृतकृत्यत्वात्प्रारब्धभोगमात्रोपयोगितया देहधारणं युक्तमेवेत्याशयेन गर्जति ।

समरसपदचिन्तानन्तसन्तोषवन्तः
क्षणसुखकणतृष्णातन्तुमन्तर्विमुच्य ।
निजसुखनिधिविद्याराजसिंहासनस्था
वयमिह कलयामः कालमालम्ब्य देहम् ॥ ११ ॥

समरसेति । हे शिष्य समरसपदचिन्तानन्तसन्तोषवन्तः समः सामान्यरूपेण सर्वदैकरूपो रसः सुखं यत्र 'रसो वै स' इति श्रुतेस्तत्तादृशं यत्पदं स्वरूपं तस्य चिन्ता चिन्तनं समर-

णमित्यर्थः, तेन योऽनन्तो नाशरहितः सन्तोषोऽलम्बुद्धिर्निरङ्कुशा तृप्तिरित्यर्थः, स विद्यते येषु ते तथोक्ता वयमस्मदादय आत्मसाक्षात्कारवन्तः समरसपदलब्ध्येति वा पाठः, तदा समरसपदस्य लब्ध्या प्राप्त्येति व्याख्येयं, क्षणसुखकणतृष्णातन्तुं क्षणं क्षणकालपरिच्छिन्नं यत्सुखं वैषयिकं क्षणिकसुखमित्यर्थः, तस्य ये कणा लवास्तेषां तृष्णा सैव बन्धनहेतुत्वात्तन्तुरिव तन्तुस्तं सुच्छेदत्वं सूचितं ज्ञानिभिस्तृष्णाया अज्ञानिनां तु चटकादिवन्निर्बलत्वेन दृढबन्धनहेतुत्वं च तन्तुपदेनेति भावः, यद्वा ज्ञानिषु तस्याः सूक्ष्मत्वेन तन्तुसादृश्यमन्तरन्तःकरणे वर्तमानं विमुच्य परिच्छिद्य निजसुखनिधिविद्याराजसिंहासनस्था निजमात्मरूपं यत्सुखं शर्म तस्य निधानं पात्रं ब्रह्म द्रव्यपूर्णं भाण्डमिव स्वसुखपूर्णं ब्रह्मेत्यर्थः, तस्य विद्या ज्ञानं सैव राज्ञः स्वयंप्रकाशात्मनो मम सिंहासनमास्यते स्थीयतेऽस्मिन्नित्यासनं हिंसति नाशयति आत्मज्ञानमिति सिंहो मोहस्तन्नाशेन तस्य मोहसिंहस्यासनं चर्मेव विद्याया मोहकार्यत्वात्सिंहासनत्वं तत्र स्था वर्त्तमानाः सन्त इह व्यवहारे देहं शरीरमालम्ब्याश्रित्य कालं कलयामोऽतिक्रामयामोऽस्माकं देहधारणं न कर्मजननेन देहान्तरप्राप्तये किन्तु प्रारब्धभोगायैव केवलमिति भावः ॥ ११ ॥

ननु तर्हीन्द्रादिपदं प्राप्तानां भवतां च शरीरधारणे समे सति भवतां तेभ्यः कोतिशय इत्याशङ्क्य तेषु तत्तत्पदभ्रंशस्य विद्यमानत्वादस्माकं गुरुपदं प्राप्तानां ततो भ्रंशाभावो विशेष इत्याशयेन गर्जति ।

कति कति न हि जीवा देवराजादयोमी
पदपतनहताशाः संसृतौ संसरन्ति ।

गुरुपदमवलंब्य ब्रह्मविद्यातरिस्था

अधिगतपरपारास्ते वयं धन्यधन्याः ॥ १२ ॥

कति कतीति । हे शिष्य देवराजादयो देवा विबुधस्तेषां राजा स्वामीन्द्रो 'राजाहःसखिभ्यः टजि'ति टच्, स आदिर्मुख्यो येषां ते तथोक्ता जीवाः प्राणिनः पदपतनहताशाः पदात्स्थानाद्यत्पतनं भ्रंशस्तेन हता नष्टाऽऽशा विषयतृष्णा येषां ते तथोक्ताः सन्तः सबीजनाशोत्र न तु निर्बीजनाशो ग्राह्यः, कति कति कियन्तः कियन्तः संसृतौ संसारे न संसरन्ति न जन्ममरणादिरूपं संसारमनुभवन्ति सर्वेप्यनुभवन्तीत्यर्थः, हि प्रसिद्धमेतत्सर्वशास्त्रेषु इन्द्रादिपदानामनित्यत्वमित्यर्थः, तस्मादिन्द्रादीनां तत्तत्पदभ्रंशरूपो मृत्युरस्तीति भावः, ये तु प्रसिद्धा गुरुपदं गुरोर्दैशिकस्य पदमङ्घ्रि, यद्वा गुरु श्रेष्ठं यत्पदं स्वरूपं तदनन्तत्वादवलम्ब्याश्रित्य ब्रह्मविद्यातरिस्था ब्रह्मणो देशकालवस्तुकृतपरिच्छेदशून्यस्य वस्तुनो विद्या ज्ञानं सैव तरिस्तरणिस्तस्मिन्स्था स्थिता उक्तलक्षणास्ते वयमस्मदादयोऽधिगतपरपारा अधिगतः प्राप्तः परः संसारसमुद्रस्य परोऽन्यः संसारास्पृष्टो ब्रह्मलक्षणो यैस्ते तथोक्ता अतः धन्यधन्या धन्येभ्य इन्द्रादिपदं प्राप्तेभ्यः कृतकृत्यंमन्येभ्य इत्यर्थः, धन्याः प्राप्तप्राप्यत्वात्कृतकृत्याः स्मो भवाम इति क्रियाऽध्याहार्या, शरीरधारणे समे सत्यप्युभयत्र तेषु पदभ्रंशपूर्वं जन्ममरणमस्मासु तन्नेत्ययमेव विशेष इति भावः ॥ १२ ॥

इदानीं स्वात्मनि व्योममागरमेरूपमा तत्र तत्र शास्त्रेषु दत्ता तामसहमानस्तेषु न्यूनत्वं दर्शयन्गर्जति ।

व्योम व्योमचरैर्न लिप्तमपि यत्तत्सर्वदानीरसं

क्षीराब्धिः सरसोपि वृद्धिमधिकां लब्ध्वा पुनर्मुञ्चति।
हेमाद्रिर्जनको मुदामपि मुदां नैवाश्रयो नीरसो
न क्षीणो न च नैव मोदरहितोऽहं तत्तुला नास्ति मे॥१३॥

व्योमेति। हे शिष्य व्योमाकाशं व्योमचरैर्व्योम्नि आकाशे चरन्ति गच्छन्ति ते व्योमचरा मेघसूर्यधूलिपक्ष्यादयस्तैर्न लिप्तमपि न लेपं प्राप्तं यद्यपि अतोऽनेन धर्मेणात्मन्युपमीकृते यद्यपि तथापि यद्यतः कारणात्ततो हेतोर्नोपमा भवति कुत इत्यत आह सर्वदेति, सर्वदा सर्वकालं नीरसं रसः सुखं तन्निर्गतं निवृत्तं यस्मात्तथोक्तं स्वात्मा तु 'रसो वै स' इति श्रुतेः सुखरूपोऽतस्तत्र तस्योपमाऽनुचितेति भावः, किञ्च क्षीराब्धिः क्षीरस्य दुग्धस्याब्धिः समुद्रः सरसोपि रसो जलं तेन सहितो यद्यपि अस्ति तथापि यद्यतः कारणादधिकामुत्कृष्टां प्रलये निरदा च चन्द्रोदये वृद्धिं वृद्धिरूपपरिणामं लब्ध्वा प्राप्य पुनर्भूयस्तां मुञ्चति विसृजति ततो हेतोरात्मनि तदुपमाप्ययुक्तैवेति न ह्रासवृद्धिपरिणामरहितात्मनि तदुपमोचितेति भावः, तर्हि वृद्धिक्षयविकाररहितो मेरुरेवानन्दकारकत्वादात्मन्युपमानमस्तु तत्राह हेमाद्रिरिति, हेमाद्रिर्हेम्नः सुवर्णस्याद्रिः पर्वतो मेरुः स मुदां हर्षाणां जनकोपि अन्येषां हर्षोत्पादकोपि आत्मन्युपमा न स भवति कुत इत्यत आह मुदामिति, यद्यस्मात्कारणान्मुदां हर्षाणामाश्रय आधारो नैव भवति जडत्वात्तस्येत्यर्थः, अतः सर्वमीत्युपलक्षितसर्वसुखाश्रयभूते स्वतः सुखरूपे चात्मनि स नैवोपमानं भवतीति भावः, किञ्चाहं ब्रह्माभिन्नः प्रत्यगात्मा नीरसो रसः सुखं तद्रहितो न भवामि किन्तु सरस एव भवामि किं चाहमात्मा क्षीणः क्षयविकारवान्न च नैवास्मि किन्तु सर्व

दैकरूपत्वान्नित्य एवास्मि किञ्च मोदरहितश्च मोदेनानन्देन रहितो हीनोपि नैवास्मि किन्तु सुखरूप एवास्मि तत्ततो हेतोर्मे मम प्रत्यगभिन्नब्रह्मरूपस्य तुलोपमाऽऽकाशादीनां नास्ति न विद्यत आत्मनो निरुपमस्य व्योमक्षीरसमुद्रमेरूणां न सम्भवतीति भावः ॥ १३ ॥

ननु तर्हि केनाशयेनात्मन्याकाशोपमा शास्त्रेषु दत्तेत्याशङ्क्य रक्तपीतादिगुणानाश्रयेण जलादिभिरनार्द्रत्वेन च प्रतीयमाननीलत्वानाश्रयेणापि च सादृश्यादित्याशयेन गर्जति ।

सायं प्रातरनेकरङ्गमपि तन्नानेकरङ्गाश्रयं
यान्त्यायान्ति पयांसि तत्र न पयोरेखापि दृष्टा क्वचित् ।
सज्ज्ञानेन मया विगाह्य तदहो दृष्टं नभो निर्मलम्
नीलं नीलमिति प्रथैव नभसो मिथ्या नभोनीलिमा ॥ १४ ॥

सायमिति । सायं सायंकाले प्रातरुषःकाले नभ आकाशमनेकरङ्गमपि अनेके बहवो नीलपीतरक्तादयो रङ्गा रञ्जयन्ति स्वसंसृष्टं वस्त्रादीति ते तथोक्ता यस्मिन्नाकाशे तथाभूतं प्रतीयमानमपि मूढदृष्ट्या तदाकाशं विवेकिदृष्ट्याऽनेकरङ्गाश्रयमनेके बहवो ये रङ्गा नीलपीतादिरञ्जकद्रव्याणि तेषामाश्रयमाधारभूतं न भवति तेन च धर्मेण रक्तश्वेतश्यामरूपरजःसत्त्वतमोगुणाधारत्वेन मूढानां प्रतीयमानोपि वस्तुतो विवेकिदृष्ट्या गुणानां पृथगसत्त्वात्तदाधारत्वाभावेनाकाशेनोपमीयत इति भावः, किञ्च तत्राकाशे पयांसि जलानि मेघद्वारा यान्ति गच्छन्ति आयान्ति आगच्छन्ति च तथापि क्वचित्कुत्रापि व्योमभागे पयोरेखा जलरेखा नापि नैव दृष्टाऽवलोकिताऽनेन जलास्पृष्टत्वधर्मेण वैषयिकसुखोत्पत्तिविनाशे प्रतीयमानेपि वस्तुत आत्मनि तद-

सत्वात्तेन तदुत्पत्तिलयेन चास्पृष्टत्वादात्मनि गगनोपमत्वं प्रतिपादितमिति भावः, किञ्च सज्ज्ञानेनाकाशज्ञानवता मया ज्ञानिना तल्लोके नीलकटाहाकृति प्रतीयमानं नभ आकाशं विगाह्याविश्य निर्मलं नीलगुणरहितं दृष्टमवलोकितं तस्य च लोके नीलं नीलमिति श्याममित्येवं नभस आकाशस्य प्रथैव प्रख्यातिरेव केवलं न तु तत्र वास्तवं तत् तदुक्तमेव स्पष्टमाह मिथ्येति, नभोनीलिमा नभस आकाशस्य नीलिमा नैल्यं मिथ्या मृषास्ति अनेनापि धर्मेणात्मनि साकारत्वाज्ञानवत्त्वप्रतीतौ सत्यामपि लोकदृष्ट्या, विवेकिदृष्ट्या तस्य तत्राभावादाकाशोपमोक्तेति ज्ञातव्यमिति भावः ॥ १४ ॥

इदानीं दृष्टान्तेनैवात्मज्ञानाज्ञानयोः फलं दर्शयन्गर्जति ।

रूप्ये रूप्यमतिः कृता कृतधिया रङ्गे पुनर्दुर्धिया
सत्यं द्वावपि संस्थितौ निजधिया स्वे निश्चये निश्चले ।
एकस्यैव दरिद्रता व्यपगता तस्थौ द्वितीयस्तथा
सञ्जाते क्रयविक्रयव्ययविधौ व्यक्तो विशेषस्तयोः ॥१५॥

रूप्य इति । मार्गे क्वचिद्रूप्यं रङ्गं च पतितं तस्मिन्मार्गे गच्छतोर्द्वयोर्मध्य एकेन कृतधिया विवेकिना पुरुषेण रूप्ये रजते, यद्वा-इदं रङ्गं रूप्यं वेति विचार्य रूप्ये रङ्गभ्रान्ति त्यक्त्वा रूप्य एवेदं रूप्यमिति कृता धीर्निश्चयात्मिकान्तःकरणवृत्तिर्येन स तथोक्तस्तेन रूप्ये रजते रूप्यमती रजतबुद्धिः कृता सम्पादिता पुनर्भूयश्च दुर्धिया दुष्टाऽविवेकिनी धीर्मतिर्यस्य स तथोक्तो भ्रान्तबुद्धिरित्यर्थः, तेन रङ्गे कार्ष्णायसे[1] रूप्यमती रजतबुद्धिः कृता सम्पादिता ततश्चोभाभ्यामुभयमपि गृहीत्वा द्वावपि उभा-

---

१ त्रपुनि ।

वपि निश्चले स्थिरे स्वे स्वकीये निश्चये निर्णये निजधिया स्वस्वबुद्ध्या 'समौ निर्णयनिश्चयावि'त्यमरः, संस्थितौ स्थितिं कृतवन्तावेतत्सत्यं यथार्थमेव तथापि उभयबुद्धिगृहीतस्य, द्रव्यस्य क्रयविक्रयव्ययविधौ क्रयोऽन्यस्मान्मूल्यदानेन ग्रहणं विक्रयश्च स्वेन मूल्यं गृहीत्वाऽन्यस्मै समर्पणं, व्ययश्च दानोपभोगस्तन्निमित्तं दानं तेषां विधिर्व्यापारस्तस्मिन्सञ्जाते सति प्राप्ते सति दरिद्रता दैन्यमेकस्यैव रूप्ये रूप्यनिश्चयेन तदङ्गीकर्तुरेव व्यपगता निवृत्ता, द्वितीयो रङ्गे रूप्यनिश्चयं कृत्वा तदङ्गीकारवान्तथा यथा पूर्वं दरिद्री तथा तस्थौ स्थितवानयं तयोर्विशेषो भेदो व्यक्तः प्रकटो जायत इति शेषः, अयमभिप्रायः—रूप्ये रूप्यमतिरिवात्मन्यात्ममतिः, कृतधीरिव ज्ञानी, दरिद्रत्वव्यपगम इवाज्ञानतत्कार्यदुःखापगमः, ज्ञानस्यान्यतो ग्रहणं क्रय इव, तन्मूल्यदानमिव गुरुसेवादिकं, विक्रय इवान्येषां जिज्ञासूनां ज्ञानार्पणम्, अन्यतो मूल्यग्रहणमिव जिज्ञासुभ्यः स्वसेवाङ्गीरः, व्यय इव—सेवादानिरपेक्षं दानमिवान्येषां ज्ञानप्राप्तये ग्रन्थादिरचनं ग्रन्थवाचकत्वं च, भोगोपयोगिव्यय इव स्वज्ञानदार्ढ्याय ज्ञानसंवादः, रङ्गे रूप्यमतिरिवानात्मन्यात्मबुद्धिः, दुर्धीरिवाज्ञानी, दरिद्राऽनिगम इवाज्ञानतत्कार्यदुःखानिवृत्तिः, क्रयविक्रयव्ययपदैश्चात्र स्वमतज्ञानस्यान्यतो ग्रहणमन्यस्मै समर्पणमात्मनस्तद्दार्ढ्याय विचारणं च क्रमेण ग्राह्याणि विधिपदेनात्र प्रसङ्गो ग्राह्यस्तत्र च ज्ञान्यज्ञानिनोर्विशेषः स्फुटो भवतीति यथायथमूह्यमिति ॥ १५ ॥

ननु भवति संसारस्य विद्यमानत्वाद्विक्षेपोऽपि भवन्नेव तथा सति विक्षेपानिवृत्तेरेव शास्त्रेषु मोक्षशब्दार्थत्वेन प्रतिपादनान्मोक्षः कथं सम्भाव्य इत्याशङ्क्य तस्याबाधकत्वेन स्वमहत्त्वसूचकत्वेन

वानुकूलत्वं दर्शयन्नन्योक्त्या गर्जति ।

निम्ना नूनमुदन्वतः स्थितिरियं कल्लोलिनी चेत्कृता
विक्षिप्तेन कुतश्चिदागतवता विन्ध्याटवीवायुना ।
तत्किं नायमपां निधिः किमथवा स्थानादसौ चालितः
किन्तु प्रत्युत तादृशोपि महिमा विख्यापितो वारिधेः ॥१६॥

निम्नेति । उदन्वत उदकपूर्णसमुद्रस्येयं सर्वप्रत्यक्षा
स्थितिः स्थानं प्रतिष्ठेत्यर्थः, निम्ना गम्भीराऽस्ति नूनमयं नि-
ाय एव, किञ्च सा कुतश्चित्कस्माच्चिद्देशादागतवताऽऽगच्छता
विक्षिप्तेन कम्पाद्युपलक्षितेन विन्ध्याटवीवायुना विन्ध्यस्य वि-
ध्यनाम्नः पर्वतस्य सम्बन्धिनी याऽटव्यरण्यं तस्य कम्पनाद्यु-
लक्षितेन वायुना पवनेन चेद्यदि कल्लोलिनी महोर्मिमती कृता
म्पादिता तत्तर्हि अयं प्रकृतोऽपां जलानां निधी राशिर्ज-
ाधिरित्यर्थः, न किं नास्ति किमस्त्येवेत्यर्थः, अथवा यद्वाऽसौ
मुद्रः स्थानात्स्वस्थितिदेशाच्चालितस्ततोन्यत्र कृतः किं
िमु नैवास्थाने कृत इत्यर्थः, ननु तर्हि किं कृतं तेनेत्यत आह
ि न्त्विति, किं तु किमपि तादृशोपि एकदेशागतवायुकृतविक्षेपे-
पि समुद्रत्वविनाशरहितस्वस्थानस्थिरस्थितिरूपोपि वारिधेः
मुद्रस्य महिमा महत्त्वं विख्यापितः प्रकाशितोऽहो मया
ालितोपि न नष्टो न च चलायमानोपि जातः समुद्रोऽतो म-
ानयं ज्ञेय इत्येवं महत्त्वमस्य लोके प्रकाशितम्,अयं ध्वन्यर्थोत्र-
दन्वत्सदृशस्यानन्दपूर्णस्यात्मनो गम्भीराऽज्ञानविक्षेपादिभि-
लोडितुमशक्याऽतो गम्भीरा स्थितिः सा विन्ध्यसदृशजाड्य-
परीतकर्तृत्वाभ्यां मोहोत्र ग्राह्यस्तत्र चाटवीसदृशी भयहे-
भूता द्वैतप्रतीतिस्तत्र चैकदेशस्थो व्यष्टिसंसारस्तत उत्पन्नो वा-

युसदृशश्चञ्चलत्वकारणभूतो विक्षेपोत्र ग्राह्यस्तेन संसारनिर्वाहकारणभूतेन विक्षेपेण शोकमोहजरामृत्युक्षुधापिपासादिपङ्क्तिमती कल्लोलिनीव कृता यद्यपि तथापि समुद्रे समुद्रत्वमिवात्मन्यात्मत्वमेव स्थितं न तु तन्नाशितं, किञ्च समुद्रस्य स्वस्थानाचालनमिवात्मनः स्थितेरात्मचालनाभावोऽत्र सूचितो ज्ञेयः, तेन विक्षेपेण चात्मनि तन्नाशाभावात्तच्चालनाभावाच्च यन्महत्त्वं तत्प्रकटीकृतमहो एतादृशमात्मनो महत्त्वं समस्तसंसारव्यापृतौ विद्यमानायामपि आत्मत्वं स्वप्रतिष्ठत्वं च न व्याहतमित्येवं प्रकाशितमिति ॥ १६ ॥

इदानीं परिणामोपादानत्वपक्षमात्मनि परित्यज्य विवर्तोपादानत्वपक्षो ग्राह्य इति ध्वनयन्गर्जति ।

माधुर्यं च पयस्त्वमाश्रितवता तुच्छे दधित्वाम्लते
रूपे संप्रति बिभ्रता तु पयसा सर्वं यशो हारितम् ।
ग्रैवेयत्वमथाङ्गदत्वमथ च क्षुद्रत्वमक्षुद्रतां
पर्यायैर्भजतः स्वभामजहतो हेम्नस्तु नास्ति क्षतिः ॥ १७॥

माधुर्यं चेति । हे शिष्य माधुर्यं मधुरो मिष्टस्तस्य भावो माधुर्यं पयस्त्वं च पयसः पय इति नाम्नो भावः पयस्त्वं मिष्टत्वरूपस्य पयोनाम्नश्च सत्त्वमित्यर्थः, आश्रितवता धृतवता पयसा दुग्धेन संप्रतीदानीं तुच्छे सात्विकानादृते दधित्वाम्लते दध्नो भावो दधित्वं दधिनामसत्त्वमित्यर्थः, अम्लता चाम्लरसरूपत्वं च ते एते द्वे रूपे स्वभावौ दधिभावव्यक्तिकाले बिभ्रताऽङ्गीकुर्वता सता तेन पयसा सर्वं समस्तं यशः कीर्तिर्हारितं नाशितं । हेम्नस्तु तुपदेन पयस्तः सुवर्णस्य महदन्तरं सूचितं, तदेव विशदयति हेम्नः सुवर्णस्य ग्रैवेयत्वं ग्रीवायाः कण्ठस्येदं ग्रैवेयं रुचकं तस्य भावस्तत्त्वं

चकरूपत्वमित्यर्थः, अथानन्तरमङ्गदत्वं बाहुभूषणरूपत्वम,अथा-
न्तरं क्षुद्रत्वं क्षुद्रं तुच्छं तस्य भावः स्वरूपं लघुत्वमित्यर्थः, अक्षु-
त्वां च न क्षुद्रं लघु तस्य भावस्तत्ता तां गुरुत्वमपीत्यर्थः, पर्या-
: क्रमैर्भजतः सेवमानस्य स्वभां स्वस्य प्रभा कान्तिस्तामज-
तो न परित्यजतः क्षतिर्हानिर्नास्ति न विद्यते, अयमभि-
ाय:—पयसो दधित्वपरिणामवद्ब्रह्मणो जगत्परिणामत्वाङ्गीकारे
धित्वात्पुनः पयस्त्वाभाव इव जीवस्य पुनर्ब्रह्मभावानापत्त्या
ोक्षाभावप्रसङ्गः स्याद्ब्रह्मासत्त्वं च स्यादतो नाङ्गीकार्यः परिणा-
पक्षः, सुवर्णस्यानेकभूषणाकारे प्रतीयमामाने वास्तवसुवर्णत्वे वि-
मानेऽलङ्कारलयेन सुवर्णे सुवर्णत्वमिव जगज्जीवलये तत्स्थतौ
ा ब्रह्मणो ब्रह्मत्वं न व्याहतमित्यतः परिणामवादाद्विवर्त्तवाद
व श्रेयानतः स एव ग्राह्य इति ध्वनिः ॥ १७ ॥

ननु विवर्त्तवादपक्षस्यैव निर्दोषत्वेन ग्राह्यत्वे कुतः परिणा-
वादादिषु चातुर्यं विशिष्टं मन्यते लोक इत्याशङ्क्य मूढप्रतीत्या
दस्ति न तु विवेकिदृष्ट्येति दर्शयन्गर्जति ।

न हि न हि चतुरास्ते यैर्न बुद्धं विशुद्धं
न हि न हि कृतिनस्ते ये न पारं प्रयाताः ।
न हि न हि तु कुलीना यैर्न तत्त्वं विविक्तं
न हि न हि मुनयस्ते यैर्धृता लोभवार्ता ॥ १८ ॥

न हि न हीति । ते परिणामवादिनश्चतुरा बुद्धिमन्तो
न हि न हि न भवन्तीत्येवं निश्चय एव, कुत इत्यत आह यैरिति,
यैः परिणामवादिभिर्विशुद्धं परिणामविकारहीनं चिन्मात्रस्व-
रूपं ब्रह्म न बुद्धं न ज्ञातं यथावन्न ज्ञातं किन्तु तेषां तद्भ्रान्तमेव
ज्ञानमित्याशयः, ननु तर्हि ते कुतः स्वात्मानं कृतकृत्यं मन्यन्त

इत्याशङ्क्य तदपि तेषां मौढ्यविलसितमेवेति सूचयन्गर्जति न हि न हीति, ते परिणामादिवादिनः कृतिनः कृतं कर्मास्ति येषां ते तथोक्ताः कृतकृत्या इत्यर्थः, न हि न हि नैव सन्ति कुत इत्यत आह य इति, ये परिणामादिवादिनः पारं संसारसमुद्रस्यान्तं ब्रह्म न प्रयाता न प्राप्ता अतो वेदान्तश्रवणादिकर्मणां तेष्ववशिष्टत्वान्न तेषां कृतकृत्यत्वमिति भावः, ननु तर्हि तेषां कुलीनत्वजन्यसुखेनैव कृतार्थतास्तु किं संसारसमुद्रपारप्राप्तिप्रयासेनेत्याशङ्क्य तदपि तेषां नास्तीत्याशयेन गर्जति न हि नहीति, ते परिणामादिवादिनः कुलीनास्तु कुलीना अपि न हि न हि नैव भवन्ति कुत इत्यत आह यैरिति, यैः परिणामादिवादिभिस्तत्त्वमनारोपितमात्मवस्तु न विविक्तमारोपितादनात्मरूपादपृथक्कृत्य न ज्ञातमतो न कुलीना इत्यर्थः, कुः पृथिवी यथा बीजानामावापस्थानं तथा ब्रह्मैवात्र संसारबीजभूताज्ञानावापस्थानत्वेन कुपदार्थो ग्राह्यस्तत्र लीनत्वं तत्परिणामादिवादिनां नास्तीत्यतस्तज्जन्यं सुखमपि तेषां नास्तीति कुलीनत्वाभिमान एव केवलं तेषां व्यर्थ इति भावः, ननु तर्हि तेषां मुनित्वं कथं लोकैः प्रतिपाद्यत इत्याशङ्क्य तेषु तल्लक्षणाभावात्तदप्यज्ञानविजृम्भितमेवेत्याशयेन गर्जति न हि न हीति, ते परिणामादिवादिनो मुनयो मननवन्तो न हि न हि नैव भवन्ति कुत इत्यत आह यैरिति, यैः परिणामादिवादिभिर्लोभवार्ता लोभस्य विषयभोगेच्छाया द्वैतत्यागभयात्परिणामादिवादस्य वार्ता वृत्तान्तो धृताङ्गीकृता, मननवत्सु च यथार्थब्रह्मज्ञानेन विषयसुखेच्छाभावाद्ब्रह्मसुखपरिपूर्णत्वाच्च द्वैतारुच्या परिणामादिवादानङ्गीकार एव योग्योऽतः परिणामादिवादिषु मुनित्वप्रतीतिरज्ञानविलसितमेव ज्ञेयमिति भावः ॥ १८ ॥

इदानीं कस्य चित्पक्षस्यापि गृहीतिरहङ्कारे सति सम्भवति तस्य तु प्रत्यगभिन्ने ब्रह्मण्यत्यन्ताभावात्तत्रत्याऽस्यानेच्छोऽस्तं विलापयितुं तं प्रार्थयन्गर्जति ।

हेऽहंकृते तव न कृत्यमिहास्ति किञ्चि-

ल्लीना भव स्वमहिमन्यचलप्रतिष्ठे ।

चेतस्त्वमेहि परमं स्वसुखाब्धिमन्तः

सोढुं न शक्नुम इमास्तव दुष्टवृत्तीः ॥ १९ ॥

हेऽहंकृते इति । हे अहङ्कृते हे अहङ्कार तव त इह स्वयंप्रकाशे मयि, यद्वा मुमुक्षोर्मम मोक्षसाधनभूते ज्ञाने जातेऽत्र कृत्यं कार्यमवशिष्टमिति शेषः, किञ्चित्किमपि नास्ति न विद्यतेऽतस्त्वं भवती—अचलप्रतिष्ठे न चला चलायमाना केनापि कारणेन प्रतिष्ठा स्थितिर्यस्य स तथोक्तस्तस्मिन् स्वमहिमनि स्वस्य प्रत्यगात्मनो यो महिमा महत्त्वं ब्रह्मत्वमित्यर्थः, तस्मिँल्लीना तदाकारत्वसंपादनेन नष्टा भव ब्रह्माकारत्वं प्राप्नुहीत्यर्थः, ननु मम कोऽपराधो 'मनः एव मनुष्याणां कारणं बन्धमोक्षयोरि'ति श्रुत्या 'मन एवे'ति स्मृत्या च तत्र तत्र शास्त्रेषु च मनस एव बन्धनकारित्वप्रतिपादनादहं ब्रह्मास्मीत्यादिवाक्येषु ब्रह्मपदाहंपदयोः सामानाधिकरण्यदर्शनाद्ब्रह्मज्ञाने च बाधासामानाधिकरण्येनोपयोगादहङ्कारस्य लयप्रार्थनं मनसि विद्यमाने व्यर्थमेव ज्ञात्वा तदेव मनः प्रार्थयन्गर्जति चेत इति, हे चेतो हे चित्त त्वं परमं श्रेष्ठमन्तस्त्वय्येवान्तरे स्वसुखाब्धि स्वमात्मरूपं यत्सुखं शर्म तस्याब्धि समुद्रमानन्दसमुद्रमित्यर्थः, एहि प्राप्नुहि कुतो मय्युदासीनस्त्वमिदानीं यतो मां नाशयितुमिच्छसीत्यत आह सोढुमिति, हे चेत इमा एतास्तव ते दुष्टवृत्तीर्दुष्टा विषय-

विदूषिता या वृत्तयः कामक्रोधाद्या वयं सोढुं क्षन्तुं न शक्नुमः समर्था न भवामो मनसो विषयविदूषितत्वेनाऽहङ्कारस्यापि बन्धकत्वं तस्यैव निर्मलत्वेन चाहङ्कारस्य मुक्तिहेतुत्वमिति भावः ॥ १९ ॥

ननु मनसि विषयोत्पत्तिः स्वाभाविक्येवेति तद्द्वाराऽऽत्मन्यपि मनःसम्बन्धेन विषयाणामपि सम्बन्धः स्यादित्याशङ्क्यात्मनि न वास्तवविकारसम्बन्धस्तथापि मनःकृततत्सम्बन्धे प्रतीयमाने तन्निवारणायोपायं प्रदर्शयन्नर्जति।

आयान्ति नैव सुत तत्र मनोविकारा<br>
आयान्ति चेदिह विचारय जोषमास्यम्।<br>
त्वं चापि मन्दमिह सञ्चर मुञ्च मोहं<br>
सोहम्पदे सुखनिधौ यदि ते मनीषा ॥ २० ॥

आयान्तीति। हे सुत हे शिष्य तत्रात्मनि मनोविकारा मनसोऽन्तःकरणस्य विकाराः कामादयो विकारा नैवायान्ति नैव प्राप्नुवन्ति आत्मनो निर्विकारत्वाद्विकारप्रसक्तिरात्मनि नैव सम्भाव्येति भावः, तथापि चेद्यदि आयान्ति प्राप्नुवन्ति तर्हि जोषं तूष्णीं निर्विकारं यथा भवति तथाऽऽस्यं स्थेयम, आत्मनि विकारप्रतीतौ प्रारब्धभोगमात्रेण तन्निवृत्तिसिद्धेस्तावत्कालं तूष्णीं स्थीयतामिति भावः, विचारादार्ढ्येन तत्प्राप्तौ सत्यां त्वं विचारय विवेकं कुरु विवेके कृते सति ते विकारा मनस्येव प्रतीयन्ते नात्मनीति भावः, अपि चान्यदपि त्वं च त्वमपीह विकाररूपे मनसि मन्दं स्वल्पं यथा भवति तथा संचर प्रविश क्वचित्क्वचित्प्रारब्धमात्रोपभोगो यथा स्यात्तथोत्तरं क्रियमाणं नोत्पद्येत यथा तथा मनसा सह वर्तितव्यमिति भावः,

न्वात्मनः पृथग्मनः प्रतीतावपि तद्विस्मृत्वा मनस्यात्मतादा-
त्म्यं जायते पुनः पुनरिति चेत्तत्राह मुञ्चेति, हे शिष्य मोहम-
ानं मुञ्च त्यज मोहत्यागः कुतः कार्य इत्यत आह सोहमिति,
यदि यर्हि ते तत्र सुखनिधौ सुखस्यानन्दस्य निधिः समुद्र इव
सुखपूर्णमित्यर्थः, तस्मिन्सोहंपदे स तत्पदलक्ष्यः परमात्माऽ-
हंपदलक्ष्यः प्रत्यगात्मा च तयोः सामानाधिकरण्येन जीवब्रह्मै-
क्यं भागलक्षणया लक्षितं यत्पदं चिन्मात्रस्वरूपं तस्मिन्मनीषा
ानम इच्छाऽस्ति तर्हि मदुपदिष्टं कुरु अन्यथा मा कुरु मोह-
्यागाद्युपायैर्विना जीवब्रह्मैक्यानुभवः साक्षान्न स्यादिति
भावः ॥ २० ॥

इदानीमिन्द्रियचौरेभ्यः स्वात्मधनरक्षणाय स्वात्मनि जा-
गृतिं विधातुं गर्जति ।

तीव्रं तमः समय एष निशीथनामा
देशोपि चौरबहुलः शिथिला च भित्तिः ।
इत्थं स्थिते निजधनं प्रति सावधानो
जागर्त्ति चेद्गृहपतिर्विफला हि चौराः ॥ २१ ॥

तीव्रमित्याद्यन्योक्त्या । हे शिष्य तमोऽन्धकारस्तीव्रं निबिडं
गाढमित्यर्थः, अस्तीत्यध्याहार्यं विद्यते, किं चैषः प्रत्यक्षो वर्त्त-
मानः समयः कालो निशीथनामा निशीथोऽर्धरात्र इत्येवं नाम
यस्य स तथोक्तोऽस्ति विद्यते, किंच देशोपि अयं स्वनिवास-
स्थानभूतो देशः स्थानमपि चौरबहुलश्चौरा बहुला बहवो य-
स्मिन्स तथोक्तः, यद्वा चौरैस्तस्करैर्बहुलो मलिनोऽस्ति, किंच
भित्तिश्च कुड्यमपि शिथिलाऽऽर्द्राऽस्ति अदृढा इत्यर्थः, इत्थमेव
स्थिते वर्त्तमाने सति गृहस्य गेहस्य पतिः स्वामी निजधनं प्रति

निजं स्वीयं यद्धनं द्रव्यं तत्प्रति तस्मिन्नित्यर्थः, तस्मै वा, चतुर्थी
पक्षे स्वधनं रक्षितुमित्यर्थः, सावधानोऽवधानेन सहितः सावधानो
ऽनलस इत्यर्थः, भूत्वेतदध्याहार्यं, चेद्यदि जागर्ति न निद्राति
तर्हि चौरास्तस्करा विफला निष्फला निष्फलप्रयत्ना इत्यर्थः
भवन्ति, हि प्रसिद्धमेतत्सर्वेषामिति लौकिकार्थः, ध्वन्यर्थस्तु तमो
ऽज्ञानं तीव्रं निविडं गाढमित्यर्थः, विना ज्ञानमनिवार्यमिति
भावः, अस्ति एष प्रत्यक्षो वर्तमान इत्यर्थः, समयः कालो निशी
थनामा 'या निशा सर्वभूतानामि'त्यत्र सर्वजीवजागृत्युपलक्षित
लोकव्यवहाररूपा ज्ञानिनां रात्रिर्ग्राह्यात्र तत्र चात्यन्तविक्षेपो
निशीथपदेन ग्राह्यः, अस्ति, किञ्च देशोपि दिश्यतेऽनेनेति देशो
व्यावहारिकं ज्ञानं तदपि चौरबहुलो ज्ञानद्रव्यापहारकत्वाच्चौर
इवेन्द्रियाणि तैर्बहुलो व्याप्तोऽस्ति, किञ्च भित्तिश्च कुड्यं तत्स
दृशी ज्ञानस्वरूपधनरक्षणाय साधिता यमनियमादिसाधनसंपत्ति
समाध्यन्ता नित्यानित्यवस्तुविवेकादिरूपा च श्रवणादिरूपाप्यत्र
भित्तिपदेन ग्राह्या सा शिथिलाऽदृढाऽस्ति, इत्थमेव स्थिते वर्तमाने
सति गृहपतिर्गृह्यते स्वात्मतयाऽङ्गीक्रियते गृहं शरीरं तस्य पतिः
पालको जीवः, यद्वा गृह्यन्ते विषया यैस्ते गृहा इन्द्रियाणि तेषां
पतिः पालको जीव एव, ग्रहपतिरिति पाठेपि स एवार्थः, निज
धनं प्रति निजं स्वमात्मरूपं यद्धनं धिनोति तर्पयति सर्वं ज
गदिति धनं द्रव्यं सुखरूपं, यद्वा धनवत्प्रियमात्मस्वरूपं प्रति त
दर्थमित्यर्थः, सावधानोऽनलसः सञ्जागर्ति न निद्राति चेद्यदि
तर्हि चौराश्चौरसादृश्यादात्मधनापहारकाणीन्द्रियाणि विफला
निष्फला भवन्ति हि प्रसिद्धमेतद्विद्वत्सु इति ध्वनिः ॥ २१ ॥

इदानीं मनोनिग्रहाभावे सतीन्द्रियनिग्रहो व्यर्थ इति रूप
केण सूचयन्गर्जति ।

भूपालकैर्निशितशास्त्रधरैरुदारै-
र्दुष्टं मृगं शमयितुं मृगया विधेया ।
दुष्टो मृगो न निहतो निहतास्तदन्ये-
व्यर्थस्य तत्क्षितिपतेर्वद कः प्रभावः ॥ २२ ॥

भूपालकैरिति । लौकिकार्थस्तावन्निशितशास्त्रधरैर्निशि-
तानि तीक्ष्णधाराणि यानि शास्त्राणि स्वार्थेण् आयुधानि तेषां
धरा धारकास्तैरुदारैर्भूपालकैर्भुवो भूमेः पालकैः पालन-
कर्तृभी राजभिरित्यर्थः, दुष्टं हिंस्रं व्याघ्रादिकं मृगं मृगयति
अवलोकयति भक्षितुं जीवानिति मृगस्तं शमयितुं नाशयितुं
मृगया मृगा यान्ति प्राप्नुवन्ति यया सा मृगयाऽऽखेटकं
विधेया कर्त्तव्येति धर्मशास्त्रे कथितं सत्यं, तथापि येन राज्ञा
दुष्टो मृगो दुष्टो हिंस्रो मृगो व्याघ्रादिर्न निहतो न मारितः,
किंच तदन्ये ततो व्याघ्रादेरन्ये भिन्ना अहिंस्राः शशादयो
दीना इत्यर्थः, निहता हिंसिता अतो व्यर्थस्य विगतो निवृत्तो-
ऽर्थः भूपालनाम्नस्तात्पर्यं यस्मात्स तथोक्तस्तस्य भुवः पालक-
त्वाभावात्प्रत्युत बहुप्राणिहिंसया तद्घातकत्वाच्चेति भावः, त-
त्क्षितिपतेस्तस्य प्राणिघातकस्य क्षितिपते राज्ञो राजापदेशस्ये-
त्यर्थः, प्रभावः प्रतापः कः कीदृशः सिद्ध एतत्त्वं वद कथय-
कृतार्थस्तावन्निशितशास्त्रधरैर्निशितानि तीक्ष्णानि अज्ञा-
नतत्कार्यभेदने शक्तानि यानि शास्त्राणि उपदेशकवाक्यानि त-
त्त्वमस्यादीनीत्यर्थः, तेषां तदर्थस्य धरा धारकास्तैस्तत्त्वमस्या-
दिवाक्यानां जीवब्रह्मैक्यरूपस्यार्थस्य च धारणावद्भिरित्यर्थः,
उदारैरुदारताऽत्रान्येषु जिज्ञासुषु ज्ञानदानं तद्वद्भिर्भूपालकै-
र्जीवत्वस्या जीव इति भूः क्षेत्रं तस्या बुद्ध्यादिरूपायाः क्षेत्रशब्द-

वाच्याया जीवोत्पत्तिनिमित्तभूतायाः पालकाः पालनकर्त्तारः साधिष्ठान बुद्धिस्थचिदाभासा अत्र ग्राह्याः, ते स्वात्मसत्त्वारोपेण क्षेत्रपालकास्तैर्दुष्टं विषयवासनाभिर्दूषितं मृगं मृग्यन्ते विषया अनेनेति मृगो मनस्तं, यद्वा विषयान्मृगयतीति मृगो मनस्तं शमयितुं नाशयितुं मृगया मृग्यन्ते भुज्यन्त इति मृगा विषयास्ते यान्ति प्राप्नुवन्ति अनया सा मृगया विषयप्राप्तिसाधनभूता द्रव्योपार्जनादिव्यापृतिः सा विधेया कार्येति लौकिकशास्त्रेषु कथितं तत्सत्यं। यद्वा मृगया हिंसाप्रधाना वनजन्तुवधरूपा क्रिया तत्सादृश्यात्संसारनाशसाधनभूता जीवत्वनाशसाधनभूता च साधनचतुष्टयसम्पादनपूर्विका वेदान्तश्रवणादिरूपा व्यापृतिर्विधेया कर्त्तव्येति वेदान्तशास्त्रे कथितं तत्सत्यं, तथापि तया येन जीवेन दुष्टः संसारोत्पादनेन दुःखप्रदत्वाद्विषयवासनाविदूषितत्वाच्च दुष्टो मृगो मनो न निहतो न नाशितः, किंच तदन्ये ततो मनोरूपाद्दुष्टमृगादन्ये भिन्नाश्चक्षुरादयो निहता अवरोधेन नाशिता अतो व्यर्थस्य विगतो निवृत्तोऽर्थो मोक्षरूपो यस्मात्स तथोक्तस्तस्य मनोनाशाभावान्मोक्षार्थहीनस्येत्यर्थः, तत्क्षितिपतेस्तादृशेन्द्रियावरोधपरस्य क्षेत्रपालजीवस्य प्रभावः प्रतापः कः कीदृश इति पृच्छामि तत्त्वं वद कथय ॥ २२ ॥

ननु तर्हि मनोनाशस्य क उपाय इत्याशङ्कायां तं दर्शयन्गर्जति ।

इष्टे नष्टे नश्वरे त्यक्तभोगः<br>
सञ्जातालंप्रत्ययो वीतरागः ।<br>
तां तां कक्षां स्वैरमभ्येति सूक्ष्मां<br>
यां यामन्ये साधकाः साधयन्ति ॥ २३ ॥

इष्ट इति। इष्टे प्रीतिविषये नश्वरे नाशवति नष्टे सति नाशं प्राप्ते सति तत्र मिथ्यात्वनिश्चयेन संजातालंप्रत्ययः सञ्जातो दृढोत्पन्नोऽलंप्रत्ययस्तृप्तिनिश्चयो यस्य स तथाभूत सन् वीतरागो वीतो निवृत्तो रागः स्नेहो यस्मात्स तथाविधो यो भवति स तां तां कक्षां मोक्षद्वारभूतामवस्थां भूमिमित्यर्थः, सूक्ष्मां मनोवागगोचरां स्वैरं स्वेच्छयाऽनायासेनैवेत्यर्थः, अभ्येति प्राप्नोति तां कामित्यत आहान्ये मन्दवैराग्या साधका मोक्षसाधनरता यां यां मोक्षभूतां स्थितिं साधयन्ति यतन्ते तीव्रवैराग्यमेव मुख्योपायो मनोलयकारणभूतज्ञानदार्ढ्ये नान्य इत्याशयः ॥२३॥

ननु तर्हि तीव्रवैराग्याभावे सति कुतो मोक्षसाधनभूते वेदान्तश्रवणादौ प्रवर्त्तमाना दृश्यत इत्याशङ्क्य ते सविचारा यदि भवन्ति तर्हि क्रमेण मुक्तिभाजो भवन्त्येवान्यथा प्रवर्त्तमाना यदि स्युस्तर्हि तेषां संसारनिवृत्तिर्न स्यात्प्रत्युत विपरीताचरणेनानर्थ एव स्यादिति दर्शयन्गर्जति ।

हृदि यदि सविचारास्तर्हि सम्यक्प्रचारा
गतिमनुगतिभाजः केवलं दुःखभाजः ।
परिकलय यदन्धैर्नीयमाना इवान्धा
युगपदपि समेता अन्धकूपे पतन्ति ॥ २४ ॥

हृदीति । हे शिष्य हृद्यन्तःकरणे यदि यर्हि सविचारा विचारेण सह वर्तन्त इति सविचारा विवेकिनो भवन्ति तर्हि तदा ते सम्यक्प्रचाराः सम्यगुत्तमः प्रचारो येषां ते तथोक्ता ज्ञेयाः, किञ्च गतिं गम्यते प्राप्यते फलमनया सा गतिराचारस्तमनु अन्येषामाचारं लक्ष्यीकृत्य गतिमाचारं भजन्ति सेवन्ते ते तथोक्तास्ते केवलमत्यन्तं दुःखभाजो दुःखं क्लेशं भ-

जन्ति सेवन्ते ते तथाभूता भवन्ति गतानुगतिकास्तु केवलं दुः-खमेव प्राप्नुवन्तीत्यर्थः, हे शिष्य त्वं तान्गतानुगतिकान् य-द्यस्मात्कारणाद्यथेत्यध्याहार्यम्, अन्धैश्चक्षुर्हीनैर्नीयमाना मार्गं प्रा-प्यमाणा अन्धाश्चक्षुर्हीनाः पुरुषा युगपदपि एकदैव स-मेताः समूहीभूताः सन्तोऽन्धकूपेऽन्धकारयुक्ते गम्भीरे कूपे-ऽन्धौ 'पुंस्येवान्धुः प्रहिः कूप'इत्यमरसिन्हः, पतन्ति पातं प्रा-प्नुवन्ति तथा तेऽविचारिणोऽन्धकूपसदृशे मोहे पतन्तीति प-रिकलय जानीहि ॥ २४ ॥

ननु अविचारेणापि श्रवणादौ प्रवृत्तानां विवेकिभिर्बोधिते सति तेषामपि सुगतिः स्यादित्याशङ्क्य तेषामज्ञानित्वेन वि-क्षेपबाहुल्याद्विक्षेपकारणभूतलौकिकशास्त्रजनवाक्यश्रवणे सति मदुपदिष्टार्थनाशेन निरर्थकत्वं स्यात्तत्रेति द्योतयन्स्वस्मि-ल्लौकिकशास्त्रजनकृतमनेकविधमुपदेशं स्मरन्स्वस्य तत्रानादरं च स्मरन्नन्येषां मुमुक्षूणां तथा कर्त्तव्यतामुपदिशंश्च गर्जति ।

एकः प्राह पठेति मां तदितरः प्राहाट दूराटवी-
मन्यः प्राह समेधयाग्निमपरः प्राहार्कमालोकय ।
स्विष्टेप्सुं प्रति मां वचो गुरुजनैरुक्तं त्वमेवासि त-
त्स्विष्टाप्तेर्ममधूर्णितेपि नयने अन्धा न पश्यन्त्यमी ॥ २५

एक इति । एको धर्मशास्त्ररुचिमान्वेदशास्त्राणां सर्वधर्म-मूलत्वाद्वेदाञ्छास्त्राणि च स्वकल्याणाय पठाधीहीत्येवं मां ब्रह्मविदं प्रत्याह, तदितरस्ततः शास्त्राद्यध्यनोपदेशकादितरो-ऽन्यस्तीर्थसेवाद्यासक्तः कोपि पुरुषो दूराटवीं दूरे दूरदेशे या-ऽटव्यरण्यं धर्मारण्यादिकमुपलक्षणमेतत्कुरुक्षेत्रपुष्करादीनामट सञ्चरेत्येवं मां प्रति प्राह, किञ्चान्योऽपरोऽग्निहोत्रा-

दिनाग्न्युपासकः कोपि पुरुषो मीमांसकादिरग्निं वह्निं समे-
धायाश्रय श्रौतं स्मार्तं वाऽग्निं सेवस्वेत्यर्थः, एवं ब्रह्मविदं
मां प्राह कथितवान्, अपरोऽन्यः कश्चित्सूर्योपासकोऽर्कं सूर्य-
मालोकय पश्य चक्षुषः सूर्यविषयिणीं धारणां सम्पादयेत्यर्थः,
इत्येव मां ब्रह्मविदं प्रत्याह कथितवान्, किञ्च गुरुजनैर्गुरवो-
हितोपदेष्टारो दैशिका इत्यर्थः, तेषां जनैः समूहैर्गुरुजनमुखश्रु-
तत्वात्स्वानिश्चयदार्ढ्यमिति सूचनाय गुरुजनैरिति पदद्वयपाठो
ज्ञेयः, स्विष्टेप्सुं प्रति सु शोभनं यदिष्टं प्रियं मोक्षसुखमीप्सती-
च्छति स तथोक्तस्तं मां प्रति मे तद्ब्रह्म त्वमेवासि तत्स-
कलजगत्कारणीभूतमायाशबलं साधिष्ठानं चैतन्यं त्वं देहत्रय-
परिच्छिन्नं साक्षिप्रत्यगात्मचैतन्यसहितं चैतन्यमेते उभे समस्त-
जगत्कारणमायातदवच्छिन्नचैतन्यदेहत्रयपरिच्छिन्नचैतन्याभ्याम-
विविक्तमभिन्नमेवेति असिपदे उभयोः पदयोः सामानाधिकर-
ण्येनोपदिष्टं सद्भागत्यागेन तदेव लक्षितमुक्तं कथितमुपादिष्ट-
मिति बहुगुरुजनमुखश्रुतत्वात्तेन स्विष्टाप्तिः सु शोभनं यदिष्टं
प्रियं ब्रह्मात्मसुखं तस्याप्तिः प्राप्तिस्तस्याः सकाशान्मम मे
ब्रह्मसुखसाक्षात्कारवत इत्यर्थः, नयने नेत्रे घूर्णितेपि ब्रह्मसु-
खसाक्षात्कारेणानुपयुक्ते जाते अपि नयने प्रत्र नीयेते ब्रह्मसंसा-
रावाभ्यामिति व्युत्पत्त्या संसाराप्तिब्रह्मप्राप्तिसाधनभूताव-
विचारविचारौ ग्राह्यौ, लोकप्रसिद्धनयनपक्षे घूर्णनं बाह्यसर्व-
दर्शयविमुखत्वेनान्तःप्रवृत्तिर्ग्राह्याऽपिशब्दस्याकारलोपो भागु-
रिमतेनाऽन्यथा 'ईदूदेदिति' प्रगृह्ये 'प्लुतप्रगृह्या' इति प्रकृतिव-
द्भावे सन्धेरसम्भवाद् अविचारविचारयोर्विघूर्णनपदेनानु-
पयुक्तत्वं तत्कर्तृभावे क्रमरहिता प्रवृत्तिः सर्वविषयाणामवास्त-
वत्वादन्तर्मुखतेति भावः, ते कर्मभूते अन्धाश्चक्षुर्हीना इव

ब्रह्मज्ञानरहिता अमी एते मम पठनाद्युपदेष्टारो न पश्यन्ति नावलोकयन्ति ॥ २५ ॥

ननु तर्हि तान्वादैर्जित्वा तेष्युपदेश्या भवद्भिरन्यथा तेषां मुक्तिर्न स्यादित्याशङ्क्याश्रद्धालुत्वात्स्तब्धत्वाच्च तेषां बोधो नैव स्यादिति तदुपेक्षैवोचितेत्याशयं प्रकटयन्गर्जति।

येषां वज्रदृढं कपोलमथवा जिह्वा वितस्त्यायता
ख्यात्यर्थं कलहाय पुस्तकपिशाचानां कथा तिष्ठतु।
मां पृच्छाच्छमते कथं विलसति ध्यानं कथं धारणा।
को भावः स्वरसेन केन विधिना चेतः परे लीयते॥२६॥

येषामिति। येषां लौकिकशास्त्राभ्यासवतां कपोलं गण्डो वज्रदृढं वज्रं कुलिशमिव दृढं गाढमस्ति अथवा यद्वा तेषामेव जिह्वा रसना वितस्त्यायता वितस्तिररत्निस्तत्परिमाणाऽऽयतादीर्घा लम्बायमानेत्यर्थः, अस्ति अत एव ख्यात्यर्थं ख्यातिर्लोकान्प्रति प्रकथनं सम्वाद इत्यर्थः, तदर्थं कलहाय कलहो वादस्तं कर्त्तुं पुस्तकपिशाचानां पुस्तकैरुपलक्षिता लोकदुःखप्रदत्वाल्लौकिकपण्डिताः पिशाचा इव तेषां कथा वार्त्ता तिष्ठतु अवसन्ना भवतु तर्हि त्वां किं प्रष्टव्यं तत्राह मामिति, हे अच्छमते अच्छा निर्मला मतिर्बुद्धिर्यस्य तस्य सम्बोधने हे निर्मलबुद्धे अनेन सम्बोधनेन निर्मलमतिभिरेवास्मात्प्रष्टव्यन्त एवास्माकमुपदेष्टव्या इति सूचितं, त्वं मां पृच्छाऽनुयोजय किं प्रष्टव्यमित्यत आह कथमिति, ध्यानं ब्रह्मणश्चिन्तनं कथं किंप्रकारकं विलसति स्थिरं प्रकाशते, किञ्च धारणा ब्रह्मणो धारणा कथं केन प्रकारेण साध्या, किञ्च स्वरसेन स्व आत्मस्वरूपो यो रस आनन्दस्तेन को भावः

र्कं स्वरूपं प्राप्यते, किञ्च केन कीदृशेन विधिना विधानेना-नुक्रमेणेत्यर्थः, चेतो मनः परे कार्यकारणातीत आत्मनि लीयते लीनं भवतीत्येवमादि मां पृच्छेति पूर्वत्र योज्यम् ॥२६॥

इदानीं चित्तनिरोधाय प्रथमं जीवन्मुक्तिसुखेच्छावता वा-ङ्मनोनिरोधः सम्पाद्य इति सूचयन्स्वयमेव जिह्वां प्रार्थय-मानो गर्जति ।

जिह्वे देवि गृहाण मौनमधुना भूयस्त्वया जल्पितं
प्रत्यग्वस्तुनि निष्ठिता यदि मतिस्तत्किं प्रलापास्तव ।
स्वच्छन्दोपरमामृताब्धिलहरीलावण्यलग्ने हृदि
प्रायः कर्कशतां गतासि कुटिले तस्मान्न मे रोचसे ॥२६॥

जिह्वे इति । हे जिह्वे इति हे जिह्वे देवि हे रसने त्वं ...ग्रूपा देव्यसि अतो मम प्रार्थनीयासि अतोहं प्रार्थयामि त्वां त्वमधुनाद्य मौनं तूष्णींभावं गृहाणाङ्गीकुरु, कुतो मां मौनं कारयसि किञ्चित्कालं मत्कृतं वाग्व्यवहारं शृणु इत्याश-ङ्क्य पूर्वं बहु जल्पितं तच्छ्रुतमपि तत्रेदानीं न ममेच्छेति सूचय-न्गर्जति भूय इति, हे जिह्वे त्वया भवत्या पूर्वं भूयो बहु यथा तथा जल्पितं सम्भाषणं कृतमतो मौनमङ्गीकार्यमित्यर्थः, ननु त्वं पूर्वं मद्भाषणे रुचिमान्स्थित इदानीं कुतो विरसतां प्राप्तस्त-त्राह प्रत्यगिति, हे जिह्वे मम मतिर्बुद्धिर्यर्हि प्रत्यग्वस्तु-नि प्रति अञ्चतीति प्रत्यक्सर्वानुस्यूतं निर्विकारं साक्षिचैतन्यं तदेव वस्तु सत्यस्वरूपं ब्रह्म तस्मिन् निष्ठिता निष्ठा सहजप्री-तिः सा संजाताऽस्याः सा निष्ठिता सहजप्रेमवती जातेत्यर्थः, तत्ततः कारणात्तव ते प्रलापाः ‘प्रलापोनर्थकं वच’ इत्यमरसिंहः, व्यर्थवचनानि किं किं प्रयोजना इदानीं न किमपि प्रयोज-

नमस्पाकं तेष्वित्यर्थः, ननु प्रत्यग्वस्तुनिष्ठया तव को लाभो जातो येन मत्प्रलापे तव वैरस्यमित्याशङ्क्य गर्जति स्वच्छन्देति, हे जिह्वे स्वच्छन्दोपरमामृताब्धिलहरीलावण्यलग्ने स्वच्छन्दं स्वेच्छया य उपरम उपरतिः स्वाभाविकश्चित्तलय इत्यर्थः, तज्जन्यं तद्रूपं वा यदमृतं सुखं तस्याब्धिः समुद्र इवोपरमसुखपूर्णं ब्रह्म तस्य लहरीवाहंब्रह्मास्मीत्याकारा प्रमारूपा वृत्तिः सापि ब्रह्मसुखरूपैव तस्या लावण्यं सौन्दर्यं प्रीतिविषयत्वात्सुखरूपत्वं तस्मिल्लँग्नमासक्तं तस्मिन् ह्यन्तःकरणे सति त्वं भवती प्रायो बहु यथा स्यात्तथा कुटिला वक्रा दुःखकारणभूतेत्यर्थः, अतः कर्कशतां कठिनत्वं गता प्राप्ताऽसि विभासे तस्मात्कारणान्मे मम ब्रह्मसुखसाक्षात्कारवदन्तःकरणस्येत्यर्थः, न रोचसे प्रिया न भवसि अतस्त्वयेतः परं बहुभाषणं नैव कार्यमिति भावः ॥ २७ ॥

इदानीं ब्रह्मानन्दसाक्षादनुभवे सति समस्तकर्मोपासनेषु तत्फलेषु चानादरो जायत इति सूचनाय सर्वत्र कर्मोपासनानां फलसिद्धिं दर्शयन्गर्जति।

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा
गाङ्गं वारि समस्तवारिनिचयाः पुण्याः समस्ताः क्रियाः।
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसीमेदिनी
सर्वैव स्थितिरस्य मुक्तिपदवी दृष्टे परे ब्रह्मणि ॥ २८ ॥

सम्पूर्णमिति। परे कार्यकारणयोर्मिथ्यात्वात्तयोः परे ब्रह्मणि देशकालवस्तुकृतपरिच्छेदशून्ये विभुत्वगुणविशिष्ट आत्मनि दृष्टे साक्षादनुभूते सति आत्मब्रह्मसाक्षात्कारवतः पुरुषस्य सम्पूर्णं समस्तं जगद्विश्वमेव नन्दनवनं नन्दयति सुख-

यति सर्वं जगदिति नन्दनं सुखरूपं ब्रह्म वनं सम्भजनं सेवनमित्यर्थः, वनधातोः सम्भजनार्थत्वात् 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्या सर्वजगतो ब्रह्मत्वप्रतिपादनाद्ब्रह्मणश्च–'एष ह्येवानन्दयाती'ति श्रुत्या जगदानन्दयितृत्वप्रतिपादनाच्च समस्तजगति ब्रह्मविदां नन्दनब्रह्मप्रतीतेर्नन्दनवनत्वं समस्तजगतो ज्ञानिदृष्ट्येति नैकदेशस्थनन्दनवनप्राप्तये ज्ञानिनां कर्मोपासनाद्यपेक्षेति भावः, समस्तजगतो नन्दनवनत्वसम्पादनायैवोत्तरविशेषणानि योज्यानि सर्वेपि कल्पद्रुमा इत्यादीनि वाचः प्राकृतसंस्कृताः श्रुतिगिर इत्यन्तानि, तद्यथा–ननु सम्पूर्णजगतो नन्दनवनत्वे स्वर्गस्थं नदनवनं कल्पवृक्षसमूहरूपमस्ति समस्तजगति तु तदभावान्न नन्दनवनत्वं सम्भवतीत्याशङ्क्यात्रापि तत्सम्भावयन्गर्जति सर्वेपीति, अत्र जगन्नन्दनवने सर्वेपि समस्ता अपि ब्रह्मादिस्थावरान्ता देहाः 'समानं वृक्षं परिषस्वजाते, समाने वृक्षे पुरुषो निमग्न' इत्यादिश्रुतिभिः समस्तदेहानां वृक्षत्वेन निरूपणाद्'ऊर्ध्वमूलमधः शाखमि'त्यादिस्मृत्या च तथात्वप्रतिपादनाच्च कल्प्यन्त इति कल्पाः कल्पिता इत्यर्थः, किञ्च तैर्यत्सुखादि फलं परस्परं प्राप्यते तस्यापि कल्पितत्वाविशेषात्कल्पितफलदातृत्वस्यापि तेषु सत्त्वाल्लोकेपि प्रसिद्धं कल्पवृक्षाणां कल्पितफलदातृत्वमतः कल्पद्रुमा एव सन्ति सर्वेषां देहानां कल्पद्रुमत्वे समस्तजगतो नन्दनवनत्वं सम्भाव्यमिति भावः, ननु प्रसिद्धस्वर्गस्थनन्दनवने परिखाभूता गङ्गास्तीति श्रूयते तत्रत्यप्राणिनां सर्वेषां गङ्गाजलस्यैव पानमस्ति तस्य चात्र समस्तजगत्यसम्भवान्न समस्तजगतो नन्दनवनत्वसिद्धिरित्याशङ्क्य गङ्गास्वरूपाविदुषामिदं सर्वत्र गङ्गा नास्तीति भाषणं प्रलाप एव पुष्पदन्तेन शिवमहिमाख्य-

स्तोत्रे 'वियद्व्यापी तारागणगुणितफेनोद्गमरुचिरि'त्यस्मिञ्श्लोके वियद्व्यापित्वब्रह्माण्डद्वीपावरकत्वेन गङ्गास्वरूपनिरूपणात् श्रीमद्भागवते च वामनचरणाङ्गुष्ठकृतभेदेन ब्रह्माण्डबहिर्देशाद्गङ्गाया आगमनं ब्रह्माण्डे निरूपितमतश्च ब्रह्माण्डावरकगङ्गाजलस्यैव सर्वब्रह्माण्डे विद्यमानत्वेन सर्वजलानां गङ्गाजलत्वमिति द्योतयन्गर्जति गाङ्गमिति, समस्तवारिनिचयाः समस्ताः सर्वे ये वारिनिचया वारीणां जलानां निचयाः समूहा राशय इत्यर्थः, गाङ्गं गङ्गाया इदं गाङ्गं विष्णुपदीसम्बन्धीत्यर्थः वारि जलमस्ति अतः सर्वत्र जलमात्रस्य गङ्गाजलत्वाद्ब्रह्मविदां सर्वदा गाङ्गजलपानसम्भवादपि सर्वजगतो नन्दनवनत्वमिति भावः, ननु गङ्गाजलकल्पतरुनन्दनवनानां प्राप्तिः पुण्यकर्मभिरेव जायते भवतु च पुण्यकर्मकर्तृत्वस्यास्माकं दृष्ट्यानवलोकनात्कुतस्तत्प्राप्तिः सम्भाव्येत्याशङ्क्य 'तस्यैवं विदुषो यज्ञस्यात्मा यजमान' इत्यादिना तित्तिरिशाखायां ज्ञानिकृतसर्वलौकिककर्मणां यज्ञरूपके यज्ञाङ्गत्वेन प्रतिपादना'न्नान्योऽतोस्ति द्रष्टा, नान्योतोस्ति श्रोते'त्यादिश्रुतिदृष्ट्या कर्तृत्वबाधपूर्वं समस्तकर्मनिर्वाहे सत्यपि ज्ञानिनि तत्कृतलेपाभावाज्ज्ञानिकृतसर्वकर्मणां पुण्यकर्मत्वमेवेति सूचयन्गर्जति पुण्या इति, समस्ता लौकिकवैदिकाः सम्पूर्णा अपि क्रियाः कर्माणि पुण्या 'नान्योतोस्ति द्रष्टे'त्यादिश्रुत्या कर्तृत्वस्य बाधपूर्वकृतत्वेनालेपकत्वात्पुण्याः पवित्राः सन्ति अतस्तासामेव फलमिदं समस्तजगतो नन्दनत्वं समस्तदृश्यपदार्थानां कल्पतरुत्वं समस्तजलानां च गङ्गाजलत्वं च तस्य च सर्वदा ज्ञानिनां सर्वत्रोपलब्धतोक्ता सा सम्भाव्येति भावः, ननु श्रुतिवाग्भिर्वैदिककर्माणि निर्वर्त्यन्ते संस्कृतशब्दैः पौराणिकमन्त्रैश्च पौ-

ाणिककर्मनिर्वाहोऽपि दृश्यते केवलप्राकृतवाग्भिर्लौकिकक-
निर्वाहश्च दृश्यते भवतां च मुखे कदाचिद्वेदवाक्कदाचिच्च
ौराणिकी संस्कृता च वाक्प्रदृश्यते कदाचिदपि प्राकृतवा-
ुच्चारोऽपि दृश्यतेऽतः समस्तकर्मणां कथं पुण्यकर्मत्वं सम्भा-
्यमित्याशङ्क्य भगवता 'त्रैगुण्यविषया वेदा' इत्यत्र त्रिगुणविष-
त्वाज्ज्ञात्रस्य वेदत्वप्रतिपादनाद्भगवता ब्रह्मणापि सृष्ट्युत्पा-
नसमये सर्वान्देवादिपतङ्गातान्सृष्ट्वा तेषु च स्वस्वव्यवहारज्ञा-
साधनभूता वेदा अपि तस्मै तस्मै समर्पिता इति च पु-
ाणेषूक्तत्वाच्च वेदशब्दस्य च ज्ञानवाचकत्वेन सर्ववाचां ज्ञा-
प्रतिपादकत्वाच्च सर्ववाग्जाते वेदत्वं विद्यतेऽतः सर्ववाचां
ानिदृष्ट्या श्रुतिवाक्त्वमेवेति निरूपयन्गर्जति वाच इति, प्रा-
ृतसंस्कृताः प्राकृताः प्राकृतजनानां तत्तद्देशीयाः संस्कृताश्च
्याकरणशुद्धा देवानां तत्सदृशानां मनुष्याणां चोच्चरिता
ाचो वाण्यः समस्ता अपि श्रुतिगिरो वेदवाण्य एव सन्ति त्रि-
ुणविषयत्वाज्ज्ञानसाधनत्वाच्चेति तादृशवाचा निर्वाह्यानां
मस्तक्रियाणामपि पुण्यकर्मत्वस्योक्तस्य सम्भावना कर्त्तव्ये-
ति भावः, ननु 'काश्यां तु मरणान्मुक्ति'रित्यादिना पुराणे-
ु काश्यां मरणेन मुक्तिप्राप्तेः श्रूयमाणत्वात्तत्र गमनं ज्ञानि-
ामप्यवश्यं कर्त्तुं युक्तमतो मास्तु स्वर्गप्राप्तिसाधनभूतं ज्योति-
्टोमादिकं कर्म तेषां काशीवासस्त्ववश्यं सम्पाद्य एवेत्याशङ्क्या-
मन एव विश्वेश्वरत्वात्तस्य च ज्ञानिदृष्ट्या सर्वत्र विद्यमान-
त्वाज्ज्ञानिन एवात्मविश्वेश्वररूपत्वात्तत्कृतोपदेशस्य च संसार-
समुद्रतारकत्वेन तारकत्वाज्ज्ञानिवासस्थाने तस्य सत्त्वाच्च स-
र्वत्र ज्ञानिवासेन मुमुक्षूणां मुक्तिसिद्धेर्ज्ञानिदृष्ट्या सर्वपृथिव्यां
काशीत्वं सम्भावयन्गर्जति वाराणसीति, मेदिनी पृथिवी ब्रह्म-

विदां वाराणसी काश्यस्ति ज्ञानिनां सर्वत्र मुक्तिसिद्धेः स
र्वत्रात्मरूपविश्वेश्वरदर्शनात्सर्वत्र तत्कृतोपदेशस्य तारकस्य वि
द्यमानत्वाच्च सर्वत्र काशीलक्षणत्वेन समस्तभूमेः काशीत्वं स
म्भाव्यं तेन ज्ञानिनां नैकदेशे काश्यादौ गमनं मूढानामिवा
पेक्ष्यमिति भावः, ननु समाधिसुखस्य योगशास्त्र उत्कर्षश्र
वणात्तस्यैव मुक्तित्वप्रतिपादनाच्च मुक्तिश्च ज्ञानिनामपीष्टाऽतं
ज्ञानवतामपि समाधिः साध्य एवेत्याशङ्क्यात्मप्रतीतिरेव वेदान्ते
समाधिशब्देन प्रतिपादितत्वात्तस्याश्च विवेकिदृष्ट्या जाग्र
दादिसर्वावस्थासु सत्त्वाज्ज्ञानिनां सर्वावस्थानां मुक्तित्वमिति
सूचयन्गर्जति सर्वैवेति, अस्य साक्षात्कृतात्मनो ज्ञानिनामित्यर्थः
सर्वैव समस्तैव जाग्रदादिः स्थितिरवस्था मुक्तिपदवी मोक्षरू
पा पदवी स्थितिरस्ति आत्मसत्त्वस्य जगन्मिथ्यात्वस्य च
सर्वावस्थासु स्फुरणादिति भावः, केवलकर्मणैव प्राप्तस्य प्रसि
द्धनन्दनवनस्य कतिचिद्विषयाणामप्राप्त्या कतिचिद्विषयेषु प्रा
प्तेषु तद्रक्षणादिचिन्तया च पुण्यक्षये तद्वियोगे सति दुःखप्रद
त्वाच्च न नन्दनवनत्वं, काश्या अपि विना ज्ञानं ब्रह्मप्रकाशकत्वा
भावात्काशते ब्रह्म यस्यामिति काशीशब्दार्थप्रतिपादनाच्च
लोकप्रसिद्धकाश्यां तदर्थाभावे सति न काशीत्वं योगशास्त्रो
क्तसमाधेरपि ब्रह्मसाक्षात्कारकारणीभूतज्ञानं विनाऽऽत्मसत्त्व
जगदसत्त्वभानयोस्तत्राविद्यमानत्वात्प्रपञ्चबीजसत्त्वाच्च का
चित्कत्वादपि न समाधित्वमतस्तेषु ज्ञानिनामादरो नैवास्ती
ति ज्ञेयम् ॥ २८ ॥

इदानीं लययोगाभ्यासिनं स्वलयाधिष्ठानं पृच्छमानो गर्जति

ओतं प्रोतमिदं विचित्रमखिलं यस्मिञ्जगद्वर्त्तते
यत्रोदेति विलीयते पुनरिदं तोये तरङ्गादिवत् ।

तच्चेतो मयि लीयते प्रतिदिनं मय्येव तज्जायते
मह्यं तर्हि वदन्तु हे लयविदः सोहं तु लीये क नु ॥२९॥

ओतमिति। विचित्रमाश्चर्यरूपमनेकरूपमखिलं समस्तमिदं दृश्यमानं जगद्यस्मिन्मनसि ओतं पट ऊर्ध्वतन्तुरिव व्याप्तं प्रोतं च पटे तिर्यक्तन्तुरिव स्थितं सदा सर्वकालं स्थितिकाल इति यावद्वर्तते तिष्ठति, किञ्च यस्मिंश्चेतसि अभ्युदित उत्पन्ने सतीदं दृश्यमानं जगदभ्युदेति उत्पद्यते यस्मिंश्चेतसि सलये नाशेन सह वर्तमाने सति नष्टे सतीत्यर्थः, जगद्विश्वं लीयते लीनं भवति तज्जगदुत्पत्तिलयाधारभूतं चेतोऽन्तःकरणं प्रतिदिनं दिने दिन उपलक्षणमेतत्क्षणलवादेः क्षणे क्षणे लवे लव इत्यर्थः, मयि ब्रह्माभिन्ने प्रत्यगात्मनि लीयते लीनं भवति पुनश्च तन्मनो मय्येव ब्रह्माभिन्ने प्रत्यगात्मन्येव जायत उत्पन्नं भवतीत्येवमनुभूयते, इत्थं स्थिते तर्हि तदा हे लयविदो लयं लययोगं विदन्ति जानन्ति ते तथोक्तास्तेषां संबोधने हे लयविदो लयविदंमन्या भवन्तः स चित्तलयाद्याधारभूतस्तुपदेन लयोत्पत्तिमच्चित्ततो वैलक्षण्यमात्मनो दर्शितं, क नु कुत्राधारे लीये लीनो भवामीति तद्वदन्तु कथयन्तु। अयमभिप्रायः—भवद्भिर्लयः प्रतिपाद्यते स किं सतः किमसतो, नाद्यः सतो लयवत्त्वायोगात्सत एव लयेऽङ्गीकृते लयस्यैवासत्त्वेन लयभावासिद्धेश्च न च लयवत्सतोऽन्यसत्त्वयोगेन लयसत्त्वं वाच्यमाकाशैक्यवत्सर्ववस्तुसत्त्वस्यैक्यात्तद्भेदे चाङ्गीकृत आकाशेपि भेदकल्पनोपपत्तेः, न द्वितीयोऽसतोऽविद्यमानस्य लयक्रियाकर्मत्वायोगात्तादृशासत्कर्मकलयस्यैव तदर्थत्वोपपत्तेश्च लये लयार्थत्वेन च लयो लयरूप इत्यर्थवत्त्वेन लयशब्दोच्चारस्य तत्प्रतिपादकशास्त्रस्य चोन्मत्तप्रलपितत्वप्रसङ्गाच्चातोऽसतो मनआदेर्लयासम्भव आत्मनश्च

सतो लयासम्भवे त्वत्प्रणीतं लयप्रतिपादकं शास्त्रमपि निर्विष
यत्वेनोन्मत्तप्रलाप एवातस्तद्विचारस्तदुक्तसाधनप्रयासश्चोन्मत्त
चेष्टैवेति भावः ॥ २९ ॥

ननु तर्हि सर्वकालं स्वात्मस्फूर्त्तिरूपः समाधिर्मनआदिप्र
पञ्चप्रतीतौ सत्यां कथं स्यात्तदभावे च जीवन्मुक्तिः कथं स्या
दित्याशङ्क्य सदृष्टान्तं तत्सम्भावयन्गर्जति।

बाला श्वश्रूजननियमिता देहलीदत्तदृष्टि-
र्दीर्घं चक्षुः किरति वदने यौवनालंकृतस्य।
युक्तस्यैवं न चलति ततो भ्रूतटे दत्तदृष्टे-
श्चेतोवृत्तिः स्फुरति पुरुषे मोक्षलक्ष्मीनिवासे ॥ ३०

बालेति। श्वश्रूजननियमिता श्वश्रूणां श्वश्रूसदृशानां श्वश्रून
नान्दृश्वसुरादीनामवरोधकानां जनः समूहस्तेन नियमिताऽवरुद्ध
बाला नवयौवना नायिका देहलीदत्तदृष्टिर्देहलीत्युपलक्षणं नी
चस्थानस्य देहल्यां नीचस्थाने दत्ताऽर्पिता दृष्टिर्नेत्रं यया स
तथाभूता लोकदृष्ट्या प्रतीयमाना सती दीर्घं चक्षुर्दूरदेशगामि
लम्बायमानमित्यर्थः, चक्षुर्नेत्रं मनस्यतिप्रियस्य यौवनालङ्कृतस्
यौवनेन तारुण्येनालंकृतस्य भूषितस्य स्वीयस्यान्यस्य कस्य
चित्पुरुषस्य वदने मुखे किरति प्रेरयति प्रसारयतीत्यर्थः, यथ
यद्वदेवमनेन प्रकारेण भ्रूतटे दत्तदृष्टेर्बिभृतो जगतो भ्रुवौ संक
ल्पविकल्पौ तयोस्तटमुभयनदीमध्यतटवत्तटं मध्यं तस्मिन् संक
ल्पविकल्पयोरेव जगद्धारकत्वप्रसिद्धेः, तत्र संकल्पविकल्पसन्धा
वित्यर्थः, दत्तदृष्टेर्दत्ता स्थापिता दृष्टिर्दृश्यते ज्ञायते जगदनया स
दृष्टिर्ज्ञानं येन तस्य संकल्पविकल्परहितत्वेन स्थिरीकृतज्ञानस्ये
त्यर्थः, युक्तस्य जीवब्रह्मैक्यज्ञानस्येत्यर्थः, चेतोवृत्तिश्चेतसोऽन्तः

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषा-
निबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवा-
दसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकी-
यसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्रा-
हकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदे-
कैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्म-
हाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां
) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| र्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| न्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| ात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| ांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| ाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे ुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाका- ण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| ‌सगङ्गाधरः खण्डानि ९ | ९ | ० |
| रिभाषावृत्तिः खण्डे २ | २ | ० |
| ैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीत- ाष्यसहितम् खण्डे २ | २ | ० |
| ीक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| ष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| हर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| हत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| वरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| ान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| ृटीका खण्डानि ४ | ४ | ० |

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*No. 111.*




# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण
दयानन्दस्वामिना परिशोधितः ।

# BODHASÂR,

A TREATISE ON VEDÂNTA,

BY

ŚRÎ NARAHARI,

With a commentary by the author' s pupil
PANDIT DIVÂKAR.

EDITED BY
SWÂMÎ DAYÂNAND.

*Fasciculus IX.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,
BENARES.
1906.

# सूचीपत्रम् ।

| | |
|---|---|
| गणपाठः | ० |
| गोलप्रकाशः | २ |
| गंगालहरी | ० |
| गुरसारणी | ० |
| जातकतत्त्वम् | ० |
| तत्त्वदीप | ० |
| तर्कसंग्रहः | ० |
| दत्तकमीमांसा | ० |
| धर्म्मशास्त्रसंग्रहः | ० |
| धातुपाठः ( शिला -) ) | ० |
| धातुरूपावली | ० |
| नैषध चरित नारायणी टीका टाइप | ४ |
| परिभाषापाठः | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० |
| प्रथम परीक्षा | ० |
| प्रथमपुस्तक हिन्दी | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ |
| लघुकौमुदी टिप्पणीसहिता | ० |
| लघुकौमुदीभाषाटीका | ४ |
| लक्षणावली | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ |
| वसिष्ठसिद्धान्तः | ० |
| विष्णुसहस्रनाम | ० |
| शब्दरूपावली | ० |
| शृङ्गार सप्तशती | १ |
| समासचक्रम् | ० |
| समासचन्द्रिका | ० |
| सरस्वतीकण्ठाभरणम् | ३ |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० |
| साङ्ख्यतत्त्वकौमुदी | ० |
| सिद्धान्तकौमुदी | ३ |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ |
| उपसर्गवृत्ति | ० |
| क्षेत्रकौमुदी | ० |
| क्षेत्रसंहिता | २ |

रणस्य वृत्तिः साभासान्तःकरणांशरूपा स्वविषयाज्ञाननिवृ-
फलाऽहं ब्रह्मास्मीत्येवंरूपा प्रमेति यावन्मोक्षलक्ष्मीनिवासे
स्वरूपा या लक्ष्मीः सम्पत्तिस्तस्या निवस्तेऽस्मिन्निति निवासो
सस्थानं तस्मिन्नधिकरणे वसे'र्हलश्चे'ति घञ्, पुरुषे परिपूर्णे
त्यगभिन्ने ब्रह्मणि व्यवहारे विद्यमानेऽविद्यमाने वा फुरति प्र-
शते आत्मस्फुरणे तस्य सर्वदैव समाधिसिद्धिरिति भावः ॥३०॥

इदानीं ब्रह्मणोऽगाधत्वनिरूपणपूर्वकं ब्रह्मसुखस्य 'यतो
चो निवर्त्तंत' इत्यादिश्रुत्युक्तं वागगोचरत्वं सूचयन्गर्जति ।

र्यन्त रहितस्य यस्य महती गम्भीरता तादृशी
ग्ना यत्र विभान्ति नो अगणिता ब्रह्माण्डमृत्पिण्डकाः ।
ादृक्तस्य चिदर्णवस्य सुरसो यादृक्स्वरूपं महृ-
त्कस्मै कथयामि कस्य विषयः को वास्य वक्ता भवेत् ॥३१॥

पर्यन्तैरिति । यस्य विद्वत्प्रत्यक्षस्य पर्यन्तै रहितस्य परि-
ऽभितोऽन्तैस्तीरै रहितस्य हीनस्यानन्तस्येत्यर्थः, चिदर्ण-
स्य चिच्चेतना जलस्थानीया तस्या अर्णव उदधिः समु-
द्रस्य महती बृहती तादृशी तादृग्रूपा गम्भीरताऽगाधता
म्नतेत्यर्थः, अस्ति; कीदृशीत्यत आह मग्ना इति, अगणिता
णना संख्या तस्या अतीता अनन्ता इत्यर्थः, ब्रह्माण्डमृ-
पिण्डका ब्रह्माण्डानि जगन्ति तान्येव मृत्पिण्डका मृदो
त्तिकायाः पिण्डिका अल्पपिण्डा इव यत्र चित्समुद्रे मग्ना
डिताः सन्त्यो लीना इत्यर्थः, नो विभान्ति न प्रतीता भ-
न्तीत्यर्थः, तादृशीत्यर्थः, किञ्च तस्योक्तमहत्त्वलक्षणस्य चि-
र्णवस्य चैतन्यसमुद्रस्य यादृग्यथा सुरसः सु शोभनो यो
सः सुखमानन्द इति यावद् 'रसो वै स' इतिश्रुतेः, किञ्च

तस्य चिदर्णवस्य स्वरूपप्राकारो यादृग्यादृशं महद्बृहद
स्ति तच्चित्समुद्रस्य रूपं सुखं च कस्मै श्रोत्रे न कस्मा अपीत्यर्थः
कथयामि वच्मि श्रोतुः पृथक्सत्त्वाभावादिति भावः, किञ्च
म चिदर्णवस्य रसः स्वरूपं च कस्य वचनस्य श्रोतुर्वक्तुर्व
विषयो वाच्यः श्रोतव्यश्च भवेन्न कस्यापीत्यर्थः, 'यतो वाचो
निवर्तन्ते' इति श्रुतेः, 'शृण्वन्तोऽपि बहवो यन्न विद्युरि'ति च
श्रुतेर्वचनस्य श्रोतृवक्त्रोरपि ततः पृथगसत्त्वादिति भावः
किञ्चास्य चिदर्णवस्य स्वरूपरसयोर्वक्ता वाचकः कः को
भवेन्न कोपीत्यर्थः ॥ ३१ ॥

इदानीं स्वरूपस्फुरणजन्यं सुखं तदनुभववतां ब्रह्मादीन
पुरत एव कथनीयमिति सूचयन्गर्जति ।

आख्यास्यामि रमावरस्य पुरतो गौरीवरस्याथवा
शब्दब्रह्ममयीवरस्य पुरतस्त्वमस्य कस्यापि न ।
प्रल्हादप्रवणं प्रकाशपरमं सम्वेदितं संविदा
शान्ते चेतसि यत्कुतूहलमये निर्जिह्ममुज्जृम्भितम् ॥ ३२

आख्यास्यामीति । अहं साधिष्ठानबुद्धिस्थचिदाभासः स्वा
त्मसाक्षात्कारवान्मम मे कुतूहलमये कौतुकयुक्तेऽतः शान्
निर्वासने चेतसि मनसि यत्प्रत्यक्षं संविदा ज्ञानेन संवेदितं नि
संशयं ज्ञातमत एव निर्जिह्मं निर्गतं निवृत्तं जिह्मं मायाख्यं क
पट यस्यां क्रियायां यथा तथोज्जृम्भितमुत्कृष्टं प्रकाशितम
एव प्रकाशपरमं प्रकाशेन चेतनेन परमं श्रेष्ठं यत्प्रल्हादप्रवण
प्रकृष्ट उत्कृष्टो यो ल्हाद आनन्दस्तस्य जलस्थानीयस्य प्रवण
निम्नस्थानरूपं ब्रह्मसुखं यथा जलस्य निम्नस्थानं समुद्रस्तथ
सर्ववैषयिकसुखानामाश्रयरूपत्वाद्ब्रह्मसुखस्य समुद्रत्वमित्यर्थः, त

मावरस्य रमाया लक्ष्म्या वरः पतिर्विष्णुस्तस्य पुरतोऽग्र
ाख्यास्यामि निरूपयिष्यामि अथवा किं वा गौरीवरस्य गौर्याः
ार्वत्या वरः पतिः शिवस्तस्य पुरतोऽग्र आख्यास्यामि क-
ायिष्यामि, वा किं वा शब्दब्रह्ममयीवरस्य शब्दब्रह्म वेदस्तन्म-
ी तद्रूपा गायत्री तस्या वरः पतिर्ब्रह्मा तस्य पुरतोऽग्र आ-
ख्यास्यामि अनुभविनामग्रे कथनेनानन्दवृद्धेर्विष्ण्वादीनामा-
मसुखस्यानुभवस्य विद्यमानत्वात्तेषामेवाग्र आत्मानुभवसुखव-
र्णनं युक्तमेवेति भावः, अन्यस्यात्मानुभवहीनस्यात्मनो भिन्नस्य
ीवत्वं प्राप्तस्येत्यर्थः, कस्यापि पुरुस्य पुरतोऽग्रे न तु नैव क-
थयिष्यामि आत्मानुभवहीनानामग्र आत्मानुभवसुखे निरूपिते
ति तदसहनेन तत्कृतोपहासेन वा स्वस्मिन् तत्कृतेर्ष्यया वैरया-
द् बहुविधदुःखकारणेन बहुदुःखसत्त्वादिति भावः ॥ ३१ ॥

इदानीं निर्मायात्मस्वरूपज्ञानं विनान्यसाधनैः साधितम-
ात्मज्ञानं तत्प्रतिकूलवृत्तिभिर्विनाश्यमानं सत्स्थिरं न जायत
ति सूचयन्गर्जति ।

तृष्णाभिर्गलितं क्षमाभिरुदितं प्रज्ञाभिरुन्मीलितं
मोहैरस्तमितं भ्रमैः प्रचलितं द्वन्द्वैश्च दूरं गतम् ।
बोधैरुल्लसितं सुखैर्विलसितं सन्मीलितं संशयैः
स्वं धाम स्फुरितं यदैव मुनिना निर्मायमालोकितम् ॥ ३२ ॥

तृष्णाभिरिति । क्षमाभिः सुखदुःखसहनरूपाभिर्वृत्तिभिः
ाधिताभिः क्व चित्समय उदितमुत्पन्नमिव प्रतीतं स्वं धाम स्वा-
मरूपं तेजस्तत्तृष्णाभिर्विषयभोगवासनारूपवृत्तिभिर्गलितं
स्तमिव जायते तत्र प्रज्ञाभिर्विवेकरूपवृत्तिभिरुन्मीलितम-
ानातिरोधानेन क्वचित्काले व्यक्तमिव जातं ततस्तत्प्रतिकूल-

मोहैरज्ञानरूपवृत्तिभिर्विषयस्नेहरूपवृत्तिभिर्वाऽस्तमितमस्तं ना
शमितं प्राप्तमिव जातं नष्टमित्यर्थः, भ्रमैर्भ्रान्तिरूपाभिर्वृत्तिभिः
प्रचलितं विक्षिप्तमिव प्रतीतं भवति द्वन्द्वैश्च द्वन्द्वानि सुखदुःखा
कारवृत्तयस्तैरुत्पन्नैर्दूरं दूरदेशं गतं प्राप्तमिव प्रतीयते दूरी
भूतमित्यर्थः, क्वचित्समये बोधैर्ज्ञानरूपवृत्तिभिरुदिताभिरुल्ल
सितमुत्कृष्टं प्रकाशितमिव प्रतीयते ततश्च सुखैरानन्दाकारवृ
त्तिभिरुदिताभिर्विलसितं शोभायमानं प्रतीतं भवति क चित्स
मये ततश्च संशयैः सन्देहरूपाभिर्वृत्तिभिरुदिताभिः संमीलितम
त्यन्तमाच्छन्नमिव जायते, एतादृशैरनुकूलैः प्रतिकूलैश्चान्तःकरण
विकारैरात्मरूपमाविर्भावतिरोभावत्त्वेन चलायमानं स्थितमि
प्रतीतं भवति तर्हि स्थिरं कदा प्रतीतं स्यात्तत्राह स्वमिति, य
दैव यस्मिन्नेव समये मुनिना मननवता पुरुषेण स्वमात्मरूपं धा
ज्योतिश्चैतन्यमित्यर्थः, निर्मायं मायारहितमपवादं कृत्वा मायाया
स्ततः पृथक् शुद्धरूपमित्यर्थः, आलोकितं साक्षाद्दृष्टं तदैव स्फुरि
प्रकाशितं यथार्थं ज्ञातमित्यर्थः, अन्यदा तु मायाया विद्यमान
त्वेन स्वात्मनि प्रतीतेपि तस्याऽयथार्थत्वेन तृष्णादिप्रतिकूल
वृत्तिभिराच्छाद्यते क्षमादिवृत्तिभिरनुकूलाभिरुदितमिव भासते
तस्य च मायां निषेध्य केवलात्मप्रकाशो जीवब्रह्मैक्यज्ञानरूपं
वेदान्तमहावाक्यजन्यो जायते तदा तु मायालये सति तृष्णा
दिक्षमादिप्रतिकूलानुकूलवृत्तिभिः प्रारब्धशेषेणोदिताभिरपि ना
त्मप्रकाश आच्छादितो भवतीति भावः ॥ ३३ ॥

इदानीं तदपि यावत्प्रारब्धभोगं जीवन्मुक्तिसुखाविरुद्ध
सत्त्वस्मिन्पूर्वमात्माभाने किं कारणमिदानीमात्मभाने च कि
ङ्कारणमिति विचारयन्कारणासिद्धौ सत्यामाश्चर्यवत्सत्तदपि ब्र
ह्मणि लीनं भवतीत्याशयेन गर्जति।

पूर्वं नाम किमन्तरं समभवद्यन्नेदमालोकितं
किं वा कारणमस्ति जातमधुना येनेदमालोक्यते ।
इत्थं विस्मयवन्मनो हि विदुषां विज्ञाननिद्राघने
तत्रानन्दवने मुनीन्द्रसदने लीनं परब्रह्मणि ॥३४॥

पूर्वमिति । यद्यतः कारणादिदं प्रत्यक्षत्वपरोक्षत्वरहित-
त्मस्वरूपं नालोकितं न दृष्टं तत्तादृशं पूर्वमादौ नाम प्रसिद्धम-
रं भेदोऽस्याऽस्तीति अन्तरं मत्तो भिन्नमात्माभाने कारणमि-
र्थः, किं समभवत्किंरूपमभून्न किमपीत्यर्थः, अज्ञानस्यात्म-
ं भिन्नसत्ताकत्वाभावादात्मनस्तु स्वयं प्रकाशत्वेन सर्वदा-
ानत्वाच्च न किमप्यज्ञानादिकमात्माभाने कारणं सम्भाव्यत
ति भावः, किञ्चाधुनेदानीमपि येन कारणेनेदं प्र-
क्षमात्मस्वरूपमालोक्यते साक्षादनुभूयते तत्तादृशं कारणं
ामित्तज्जातमुत्पन्नं किम्वा किञ्चास्ति विद्यते न किमपीत्यर्थः,
ज्ञानस्येव ज्ञानस्यापि स्वात्मतः पृथक्सत्त्वाभावादात्मनस्तु
यं प्रकाशत्वेन सर्वदा भानस्वरूपत्वे सति ज्ञानानपेक्षत्वाच्च
किमपि ज्ञानादिकमात्मभाने कारणं सम्भाव्यत इति भावः,
थमेतादृशमात्मभानाभानकारणासम्भवे सत्यपि आत्मभाना-
ानरूपकार्यप्रतीतौ सत्यामित्यर्थः, विस्मयवदाश्चर्ययुक्तं सद्वि-
ोकप्रत्यक्षं प्रारब्धभोगव्यापारानुमेयं विदुषां ज्ञानिनां म-
श्चित्तं विज्ञाननिद्राघने विगतं ज्ञानं जगद्विषयो बोधो यस्मा-
द्विज्ञानं तद्रूपा या निद्रा सुषुप्तिः सामान्यचैतन्यरूपात्र वि-
ाननिद्रा ग्राह्या 'या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी'ति
गवदुक्तेस्तया चेतनया घने निविडेऽत एवानन्दवन आ-
न्दानां जगद्गतसर्वसुखानां वनमरण्यमिव तस्मिन्, यद्वा स-

र्वविषयजन्यसुखाश्रयत्वाद्ब्रह्मसुखस्फुरणेन वनं सम्भजनमि
त्यर्थः, सम्भजनार्थवनधातुप्रकृतिकत्वाद्वनशब्दस्येति भावः, अ
एव मुनीन्द्रसदने मुनयः प्रथमादिचतुर्थ्यन्तभूमिस्थास्तेष
इन्द्राः श्रेष्ठाः पञ्चम्यादिसप्तम्यन्तभूमिस्थास्तेषां वासस्थानत्वा
त्सदने मन्दिरे तत्रोक्तलक्षणे परब्रह्मणि परं कार्यकारणाती
यद्ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु तस्मिल्लीनं न
भवति प्रारब्धभोगक्षये सति ज्ञानिमनः स्वयमेव नश्ये
तेति भावः ॥ ३४ ॥

इदानीं स्वस्यात्मज्ञानेन कृतकृत्यतां प्रदर्शयन्गर्जति।

शुद्धे बोधे स्फुरति परितः क्षालिता वासनाङ्काः
क्षीणं चित्तं विरतिरुदिता कर्मपाशा विशीर्णाः।
भग्नो भेदः सुखमधिगतं कल्पना दूरमुक्ता
दृष्टे तत्त्वे करबदरवन्नास्ति कर्त्तव्यशेषः ॥ ३५ ॥

इति श्रीनरहरिकृतौ बोधसारे ज्ञानिगजगर्जनं सप्तचत्वारिंशम् ॥४७

शुद्ध इति। शुद्धे बोध्यरूपविषयतदुपादानभूताज्ञानाभ्यां र
हिते बोधे ज्ञानरूप आत्मनि स्फुरति भासमाने सति तत्स्फुर
णेनैव तत्त्वे जीवेश्वरजगदारोपाधिष्ठानत्वेन स्वतोऽनारोपित
आत्मन्येव सच्चिदानन्दानन्तब्रह्मलक्षणानुभवेन ब्रह्माभिन्ने प्रत्य
गात्मनि करबदरवत्करे हस्ते बदरं यथा साक्षाद्दृश्यते तद्वत्सा
क्षाद्दृष्टेऽनुभूते सति मम कर्त्तव्यशेषः कर्त्तव्यस्य कार्यस्य शेषो
ऽवशेषो नास्ति न विद्यतेऽवशिष्टं कार्यं नास्ति प्राप्तप्राप्यत्वा
दिति भावः, तमेव कर्त्तव्यतानवशेषं दर्शयति क्षालिता इत्या
दिना, वासनाङ्का विषयाणां मिथ्यात्वे ज्ञाते सति तेषां वा
सना इच्छा एवाङ्काश्चिह्नानि क्षालिता धौता अतो वासना

यसाधनकर्त्तव्यताभावो मय्यस्तीति भावः, किञ्च चित्तं चेतः
ेणं नष्टं बाधितमनुभूतमित्यर्थः, अतो मनोनाशे योगादिकर्त्त-
यताभावो मयि शेष इति भावः, किञ्च विरतिर्विगता निवृत्ता
तिः प्रीतिर्यस्याः सा विरतिर्विरसता वैराग्यमित्यर्थः, उदितो
न्नाऽतो वैराग्यकर्त्तव्यशेषोपि मयि नास्तीति भावः, किञ्च क-
पाशाः कर्मरूपाः पाशसादृश्यात्पाशा इव बन्धनानि विशीर्णा-
त्रुटिता अतः कर्मपाशनिवर्त्तकसंन्यासादिकर्त्तव्यशेषोपि मयि
ास्तीति भावः, किञ्च भेदो द्वयो भग्नो नष्टोऽतो द्वैतनिरास-
कयाशेषोपि मयि नास्तीति भावः, किञ्च ननु सुखोपभोगाय किं
वत्कर्त्तव्यशेषोस्त्विति चेन्नेत्याह सुखमिति, सुखं सर्वसुखानां
ह्मसुखेऽन्तर्भावात्तत्सुखाश्रयभूतं ब्रह्मसुखमधिगतं प्राप्तमतः स-
सुखसाधनकर्त्तव्यताशेषोपि मयि नास्तीति भावः, ननु कल्प-
ानिवृत्तये तु किंचित्कर्त्तव्यतास्तु तत्राह कल्पनेति कल्पना-
ऽत्मन्यनात्मारोपबुद्धि र्दूरमुक्ता दूरदेशे मुक्ता त्यक्ताऽतस्तत्क-
र्त्तव्यतापि मयि नास्तीति भावः ॥ ३५ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ
ज्ञानिगजगर्जनार्थप्रकाशः सप्तचत्वारिंशः ॥ ४७ ॥

---

अथ नरहरिषट्कम्।

एवं ज्ञानिगजगर्जनं निरूप्येदानीं स्वगुरुनरहरिमहत्त्वख्या-
नाय नरहरिषट्काख्यं सप्तश्लोकं प्रकरणमारभमाण आह।

## अथ नरहरिषट्कम् ।

अथेति। अथ ज्ञानिगजगर्जननिरूपणानन्तरं नरहरिषट्कं
रहरेः संबन्धि षट्कं षणां श्लोकानां समूहः षट्कं नरहरिली-
ानिरूपकं षट्कनामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः, त-

त्वादौ नरहरिनाममात्रेण केवलं हिरण्यकशिपोर्वधो न स्यादि
नरहरिरूपं धृत्वा हिरण्यकशिपोर्वधः कर्त्तव्य इत्याशयेन सम
ष्टिव्यष्टिचित्ताधिष्ठातारं श्रीवासुदेवं ब्रह्मा प्रार्थयते।

नाम्नैव नो नरहरेर्हि विदीर्यतेऽसौ
दुष्टो हिरण्यकशिपुर्नितरां बलिष्ठः।
तस्मात्त्वया नृहरिरूपधरेण चित्त
मोह्यो हिरण्यकशिपुस्तु विदारणीयः ॥ १ ॥

नाम्नैवेति। हे चित्त हे चित्ताधिष्ठातर्वासुदेव अधर्मरत
त्वाद्दुष्टः पापी हिरण्यकशिपुर्हिरण्यकशिपुनामा दैत्यो नितरा
मतिशयेन बलिष्ठो बलवानस्ति कुत इत्यत आह नाम्नेति
हि यतः कारणान्नरहरेर्नरश्चासौ हरिश्च नरहरिर्नरहरिरूप
वान्भवांस्तस्य ते नाम्नैव नरहरिरिति नाममात्रेण केवलमसं
हिरण्यकशिपुर्दैत्यो नो विदीर्यते न विनाश्यतेऽत इति योज्यं
यत एवं तस्मान्नृहरिरूपधरेण ना चासौ हरिश्च नृहरिर्न
सिंहः स एव रूपमाकृतिस्तस्य धरं धारकं तेन त्वया भ
वता मोहयति स्वमायाबलपराक्रमै रणे देवानिति मोह्यो मोहक
हिरण्यकशिपुर्हिरण्यकशिपुनामा दैत्यो विदारणीयस्तु भेदनी
एव तं घातयित्वा स्वभक्ता देवा रक्षणीया इत्याशय इति लौ
किकार्थः। प्रकृतार्थे तु मुमुक्षोः केवलं ब्रह्माऽहमस्मीति वाङ्मात्रे
णाज्ञाननाशो न स्यादिति स्वस्मिन्ब्रह्मत्वसंपादनेनैव तद्विनाश
स्यादिति स्वगुरुनरहरिरूपं धृत्वैवाज्ञानं विनाशयेत्येवं स्वचित्तं प्र
र्थयति नाम्नैवेति, हे चित्त हे चेतो दुष्टः स्ववशं प्राप्तस्याती
वदुःखदत्वान्नित्यशुद्धबुद्धमुक्तनिर्विकारस्वभावे प्रत्यगात्मनि अ
नित्याशुद्धाज्ञानबद्धविकारस्वभावोत्पादकत्वाच्चापि च स

ोषकारणत्वाच्च दोषरूप एव हिरण्यकशिपुर्हिरण्यवत्प्रका-
हुलं पञ्चभूतसत्त्वगुणांशकार्यभूतमन्तःकरणद्रव्यं कशिपु-
व निद्रासामग्रीरूपं यस्य स तथोक्तस्तदाश्रयेणैव तत्प्रतीतेः
मोहः, यद्वा हिरण्यपदेन प्रकाशबहुलं प्रत्यक्चैतन्यमेवात्र
ह्यं तस्यैव सर्वारोपाधिष्ठानत्वात्तत्कशिपुरिव निद्रासामग्री-
ं यस्य स तथोक्तो मोह इत्यर्थः, आत्मन्येवाऽस्थित्वाऽऽत्मवि-
तिरूपनिद्रामनुभवितेत्यर्थः, नितरामत्यन्तं बलिष्ठः प्रबलो-
स्ति कुत इत्यत आह नाम्नेति, नरहरेर्नरश्च जीवोऽसौ
रेश्चात्मा व्यवहारदृष्ट्या बुद्ध्याद्युपाधिमत्त्वेन प्रतीयमान-
ज्जीवत्वं पारमार्थिकदृष्ट्या ब्रह्मत्वेन सर्वद्वैतहरणशील-
न च ब्रह्माभिन्नप्रत्यगात्मत्वं श्रीगुरौ लक्ष्यीकृत्य नरहरि-
म्ना स्वगुरुरत्र विवक्षितस्तद्द्वारा च प्रत्यगभिन्नं ब्रह्मग्राह्यं
य प्रत्यगभिन्नब्रह्मस्वरूपगुरोर्नाम्नैव केवलं नाममात्रेणैव
स्मिन्परोक्षज्ञानपूर्वं ब्रह्माहमस्मीत्याकारेण ब्रह्माभिन्नप्रत्य-
त्मवाचकेन नरहरिरिति कल्पितनाममात्रेणेत्यर्थः, असौ मोहो
विदीर्यते न विनाश्यतेऽतो बलिष्ठ इति योज्यं, तस्मा-
रणान्नृहरिरूपधरेण ना जीवो हरिः सर्वद्वैतहरणशीलः
मात्मा तयोर्जीवपरमात्मनो रूपमुभयत्र भागत्यागलक्षणया
क्षितमखण्डैकचिन्मात्रस्वरूपं तस्य धरं धारकं तेन प्रत्यगभि-
ह्मसाक्षात्कारवत्स्वगुरुरूपग्रहणवता त्वया भवता हिरण्यक-
पुर्हिरण्यवत्प्रकाशबहुलं सत्त्वगुणकार्यत्वादन्तःकरणं स्वयं
ाशरूपं तदाधारभूतं प्रत्यक्चैतन्यं वा कशिपुवत्स्वात्मविस्मृ-
तिरूपनिद्रासामग्रीरूपं यस्य स तथोक्तो मोहोऽज्ञानं विदा-
यो विनाशितव्य एव ब्रह्माभिन्नस्वात्मसाक्षात्कारेणैवाज्ञा-
ाशः स्यान्न तु ब्रह्माहमस्मीत्युच्चारमात्रेणेति भावः ॥ १ ॥

ननु को दोषो हिरण्यकशिपोरस्ति यं निमित्तीकृत्य नर
रिणा नाशं प्रापित इत्याशङ्क्याह ।

इन्द्रस्य राज्यमपि सम्प्रतिलभ्य लुब्ध-
स्तृष्णामयो निजरिपुर्न जगाम तृप्तिम् ।
अस्याधुना प्रलय एव हितं ममेति
प्रज्ञात्मना नृहरिणा प्रलयं प्रणीतः ॥ २ ॥

इन्द्रस्येति । लुब्धो लोभवांस्तत हेतु स्तृष्णामयस्तृष्णा
वाञ्छाभिः प्रचुरोऽत एव निजरिपुर्निजस्य स्वीयस्येन्द्र
प्रह्लादस्य वा रिपुः शत्रुर्हिरण्यकशिपुनामा दैत्य इन्द्रस्य
क्रस्य राज्यं पदं सम्प्रतिलभ्य संप्राप्यापि तृप्तिमलंबुद्धिं न
गाम न प्राप इति हेतोरस्य हिरण्यकशिपोः प्रलय एव न
एव मम मे चित्ताधिष्ठातुर्वासुदेवस्य हितं स्वभक्तसुखकार
त्वादिष्टमस्तीत्येवं विचार्येति शेषः, प्रज्ञात्मना प्रज्ञा बुद्धिरे
त्मा शरीरं यस्य स तथोक्त स्तेन ज्ञानस्वरूपेणेत्यर्थः, नृहरि
वासुदेवेनासौ हिरण्यकशिपुः प्रलयं नाशं प्रणीतः प्रापित
न्द्रपदप्राप्तावपि तृष्णाभावेन सर्वजगज्जयोद्योगमालक्ष्य तेनैव
षेण हिरण्यकशिपुर्घातित इति भाव इति लौकिकार्थः। प्रकृतेर्थे
मुमुक्षुणा मोहशत्रुघाते कुतः प्रवर्त्तितव्यं को वा दोषस्तस्मि
न्नित्याशङ्क्य स्वगुरुनरहरिचरितवर्णनमिषेणैव वधे निमित्तभू
मज्ञाने दोषं दर्शयतीन्द्रस्येति । हे शिष्य लुब्धो लोभवांस
हेतुस्तृष्णामयस्तृष्णा आशास्ताभिः प्रचुरोऽत एव नि
रिपुर्निजः स्वीयो रिपुः शत्रुरात्मन आवरकतया स्व
त्वमज्ञानस्य स्वस्यास्त स्वानन्दत्वादिस्वभावानावृणोतीति भा
प्रे.क्तदोषवान्मोह इन्द्रस्येदंतया सर्वदृश्यं पश्यतीति दक्षिण

स्थन: सञ्जगदुद्दर्शनान्पुरुष इन्द्रस्तस्येन्धति प्रकाशय-
जगदितीन्द्रशब्दवाच्यस्यैवात्मन इन्द्र इति परोक्षतया श्रु-
ोक्तस्यात्मन इति भावः, तथा च श्रुतिः 'इन्धो ह वै नामैष-
ं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्ध ँ सन्तमिन्द्र इत्याचक्षते
क्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष' इति, यद्वेदमिति
ाद्वव्यवधानेन सामान्यरूपेण प्रकाशयतीतीदन्द्रशब्दवा-
स्यात्मन एव परोक्षतयेन्द्र इति नाम्नो ये आत्मस्वरूपस्य
ा च श्रुतिः–स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति
ादिदन्द्रो नामेदन्द्रो ह वै नामैतमिदन्द्र ँ सन्तमिन्द्र इत्याच-
परोक्षेण परोक्षप्रिया इव हि देवा' इति, अस्मिन्नर्थे जीवब्र-
यस्फुरणरूपश्चिन्मात्र एवेन्द्रपदेन ग्राह्यः, तस्य तादृशस्य
ाज्यं पदमात्मत्वमित्यर्थः, संप्रतिलभ्य समाध्यादौ प्राप्यापि
ं सन्तोषं निरङ्कुशां तृप्तिमित्यर्थः, न जगाम न प्राप इति हेतो-
नदानीमस्य मोहस्य प्रलय एव नाश एव ममात्मस्वरू-
प स्वस्मिन्ब्रह्मत्वस्फुरणहेतुत्वाद्धितमिष्टं भवतीत्येवं निश्चित्येति
ः, प्रज्ञात्मना प्रज्ञा प्रज्ञानं ब्रह्मात्मा स्वरूपं यस्य तेन 'प्रज्ञानं
' इति श्रुतेः, अत एव नृहरिणा लोकदृष्ट्या ना पुरुषो जीव
र्थः, परमार्थदृशा 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतेर्हरिः सर्वद्वैत-
णशीलं ब्रह्म, एवमुभयरूपेण मयाऽसौ मोहरूपः शत्रुः प्र-
ं नाशं प्रणीतः प्रापितोऽतोऽन्येषां मुमुक्षूणामपि मोहनाशं
ना स्वात्मसुखप्राप्तिर्न स्यादिति भावः ॥ २ ॥

इदानीं हिरण्यकशिपुवक्षो वज्राद्यायुधाभेद्यमपि नरहरिन-
र्विदारितमिति श्रीनरहरिनखस्य दार्ढ्यवर्णनमुखेन नरहरिं
तौति ।

वक्षो हिरण्यकशिपोः किल वज्रसारं

शस्त्राणि तत्र सकलान्यपि कुण्ठितानि ।
तादृक्पुनस्तत्र नखैर्नृहरे विदीर्ण-
मत्यद्भुतो भवत एष नखप्रभावः ॥ ३ ॥

वक्ष इति । हे शिष्य हिरण्यकशिपोर्हिरण्यकशिपुनाम्नो
दैत्यस्य वक्ष उरो वज्रसारं वज्रस्य कुलिशस्य सारं दार्ढ्यं तदि
व सारं दार्ढ्यं यस्य तत्तादृशं स्थितं किल इति निश्चये, कु
एतज्ज्ञातं तत्राह शस्त्राणीति, शस्त्राणि वज्राद्यायुधानि सकलानि
समस्तानि अपि तत्र हिरण्यकशिपुवक्षसि कुण्ठितानि तद्भेदनेऽ
समर्थानि जातानि अतो वज्रादपि तत्र दार्ढ्यमधिकमिति नि
श्चेतव्यं हे नृहरे हे नरसिंह तादृक्तादृशदार्ढ्यवद्धिरण्यकशि
पोर्वक्षःस्थलं तत्र ते नखैः कररुहैर्विदीर्णं विदारितमत ए
हिरण्यकशिपोर्वक्षोविदारणरूपो भवतस्तव नखप्रभावो नख
नां कररुहाणां प्रभावः प्रतापोऽत्यद्भुतोऽत्याश्चर्यरूपोऽस्ति स
र्वशस्त्रेभ्योपि त्वन्नखसामर्थ्यमधिकमिति भाव इति लौकिकार्थः
परमार्थे तु स्वगुरुं नरहरिनामानं मोहनिवर्त्तकतद्वाक्यप्रशंसाभि
षेण प्रस्तौति वक्ष इति । हे नृहरे हिरण्यकशिपोर्हिरण्यं सु
वर्णं तद्वत्तेजोमयत्वात्प्रकाशबहुलमन्तःकरणं कशिपुवत्स्वरूपा
स्मृतिरूपनिद्रासाधनं यस्य तस्य मोहस्य वक्षः सदद्वैतानृतद्वै
योरन्योन्यारोपरूपं मोहजीवनहेतुत्वाद्वक्षःस्थलं तद्वज्रसारं
ज्रादपि दृढं किल, एवं निश्चय एव कुत इत्यत आह शस्त्राणीति
शंसन्ति हितमुपदिशन्तीति शस्त्राणि शास्त्राणीत्यर्थः, सकल
नि समस्तानि तत्रोक्तलक्षणे सत्यानृताद्वैतद्वैतैक्यरूपे वक्ष
कुण्ठितानि तद्भेदनेऽसमर्थानि जातानि अत इति योज्यं, हे
हर नः जीवो व्यवहार दृष्ट्या सन्नपि परमार्थदृशा हरे सर्वद्वैत

रणशील हे अद्वैतरूप गुरो तादृगपि सर्वशास्त्रवाक्यैरगेत्रमपि
त्र ते नखैन विद्यन्त खानि असत्पदार्थाभ्तात्पर्यभूता येषु वो-
धकवाक्येषु तानि सदद्वैतात्ममात्रविषयकानि वाक्यानि तैः पुनः
पुनर्वारं वारं दाढ्यार्थेति यावद् विदीर्णा विदारितं विविच्य
प्रदर्शितमिति भावः, अत एव सदद्वैतानृतद्वैतान्योन्यागोपलक्ष-
णरक्षोभेदनरूपो भवतस्तत्र नखप्रभावो नखानां केवलसन्मात्रबो-
धकवाक्यानां प्रभावः प्रतापोऽत्यद्भुतोऽस्याश्चर्यरूपोऽस्ति ॥ ३ ॥

ननु नृहरिणा हिरण्यकशिपुः कथं घातितस्तेन च किं फलं
सिद्धं तादृग्लीलया च कस्य महिमा संवर्धित इत्याशङ्क्य त-
त्सर्वं क्रमेण दर्शयति ।

> अध्यात्मदृष्टि हृदयं हृदयाग्रसंस्थं
> तेजोमयोऽरिमनयन्नृहरिस्तमस्तम् ।
> कष्टं समस्तमपि नष्टदशां प्रयातं
> प्रह्लाद एव परमं महिमानमाप ॥ ४ ॥

अध्यात्मेति । हे शिष्य अध्यात्मदृष्टि आत्मानं प्रत्यञ्चमधि
अधिष्ठाय स्थितं तदध्यात्ममहङ्कारादि सर्वं जगत्तद्दृश्यतेऽनेनेति
दृष्टिर्ज्ञानमस्मिन्नस्तीति तत्तथोक्तं समस्तज्ञानकरणमित्यर्थः, एता-
दृशं नरहरेर्हृदयं चित्तस्थानोपलक्षितमुदरवक्षसोर्मध्यमस्ति,
किञ्च तेजोमयो वह्निज्वालाप्रचुरो नृहरिर्नरसिंहो हृदयाग्रसंस्थं
हृदयस्योदरवक्षसोर्मध्यदेशस्याग्रे पुरतः संस्थं स्थापितं तं पूर्वो-
क्तं हिरण्यकशिपुनामानमरिं शत्रुमस्तं नाशमनयत्प्रापयत्तन्ना-
शेन किं फलं सिद्धमित्यत आह कष्टमिति, समस्तमपि समस्त-
जगतः सम्बन्धित्वात्समस्तं सकलं कष्टं दुःखं नष्टदशां नाशाव-
स्थां प्रयातं प्राप्तं ततोऽपि किमित्यत आह प्रह्लाद इति, तस्य हि-

रण्यकशिपार्वधेन समस्तजगतो दुःखे नष्टे सति प्रह्लाद एव हिरण्यकशिपोः पुत्रः प्रह्लादनामैव परममुत्कृष्टं महिमानं सर्वसुरासुरपूज्यत्वमाप प्राप्तवानिति लौकिकार्थः। परमार्थे तु ननु जीवब्रह्मैक्याखण्डरसरूपेण गुरुणा कथं मोहनिरासः कृतस्तेन च किं फलं प्राप्तं ततश्च कस्य वृद्धिर्जातेत्याशङ्क्य तत्सर्वं क्रमेण दर्शयति अध्यात्मेति, अध्यात्मदृष्टि आत्मानं ब्रह्माभिन्नप्रत्यगात्मानमधिश्रित्येत्यध्यात्ममात्मविषयकं यद्दृष्टिर्ज्ञानं 'दृश्यते त्वग्र्यया बुद्ध्ये'ति श्रुतेस्तदेव हृदयं हृत्सर्वद्वैतहरणशीलमद्वैतात्मरूपं तदयते प्रकाशयतीति हृदयं जीवब्रह्मैक्यविषयकं ज्ञानं तदज्ञाननिवर्तकाहंब्रह्मेति प्रमारूपमस्तीति ज्ञेयं, किञ्च तेजोमयस्तेजः सर्वजगत्प्रकाशकत्वेन स्वयंप्रकाशमानत्वाच्चैतन्यं तद्रूपो नृहरिर्व्यवहारदृष्ट्या ना जीवः परमार्थदृशा 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतेर्हरिः सर्वद्वैतहरणशीलोऽद्वैतब्रह्मस्वरूपः श्रीगुरुरित्यर्थः, हृदयाग्रसंस्थमध्यात्मज्ञानरूपहृदयस्याग्रे सम्यक्स्थितं कृत्वा प्रकाशये तम इव तं मोहनामानमरिं शत्रुं स्वस्यासङ्गत्वादिगुणावरकत्वाद्वैरित्वं मोहस्येति ज्ञेयम्, अस्तं कालत्रयेऽप्यसत्स्वरूपं नाशमनयत्प्रापितवान्, ननु मोहनाशेन किं फलं सिद्धमित्याशङ्क्यानिष्टनाशेष्टप्राप्तिरूपं यत्सिद्धं तद्दर्शयति कष्टमिति, समस्तमपि सर्वमपि कष्टं दुःखं नष्टदशां नाशरूपा या दशाऽवस्था तां प्रयातं प्राप्तमित्यनिष्टनिवृत्तिरूपं प्रयोजनं सिद्धमिति दर्शितं, किञ्च प्रह्लाद एव प्रकृष्टो ह्लाद आनन्दो विद्यानन्द एव केवलं महिमानं परममुत्कृष्टं महिमानमपरिच्छिन्नब्रह्मानन्दत्वमाप प्राप मोहविनाशे सति तापत्रयनिवृत्तिर्विद्यानन्दस्यापि विद्योपाधिनिवृत्तौ ब्रह्मानन्दत्वप्राप्तिश्चेति द्विविधमपि फलं सम्पन्नमिति भावः ॥ ४ ॥

ननु हिरण्यकशिपुनान्तर्बहिर्देशे दिवारात्रौ च काले सजलैर्निर्जलवस्तुभिश्च करणैर्नरैः पशुभिश्च कर्तृभिर्मृत्युर्मा भूदिति ब्रह्मणो वरः प्राप्त इति श्रूयते तत्कथं तस्य मृत्युर्नृहरेः सम्भाव्यस्तत्राह।

नान्तस्तु नापि च बहिर्न दिवा न रात्रौ
नार्द्रेण शुष्कवपुषा च न मार्यते यः।
नायं नरेण न मृगेण निपातनीय-
स्तादृग्रिपुं नरहरिर्हतवान्विचित्रम्॥ ५॥

नान्त इति। यो हिरण्यकशिपुर्ब्रह्मणो वरलाभादन्तर्गृहाद्यन्तर्देशे न मार्यते न विनाश्यते तुपदेनान्यशत्रुवधादस्य वधो दुर्घट इति सूचितम्, अपि च पुनश्च बहिर्बाह्यदेशे न मार्यते न विनाश्यते, किञ्च दिवा दिवसे न मार्यते न विनाश्यते, रात्रौ निशि च नमार्यते न विनाश्यते, किञ्चाऽऽर्द्रेण सरसेनायुधादिना न मार्यते न विनाश्यते, शुष्कवपुषा च शुष्कं रूक्षं वपुराकारो यस्य तथाविधेनाप्यायुधेन न मार्यते न विनाश्यते, किञ्चायं हिरण्यकशिपुर्नरेण मनुष्यादिब्रह्मान्तोपलक्षितशरीरवता कर्त्रा न निपातनीयो न मारणीयः, किञ्च मृगेण मृगोपलक्षितपशुशरीरवता वराहेण वा न निपातनीयो न विनाश्योऽस्ति अतो नरहरिर्नरो मनुष्यः सचासौ हरिश्च सिंह उभयविधशरीरोपलक्षितो भूत्वेत्यर्थः, तादृग्रिपुं तादृगुक्तलक्षणवान्यो रिपुः शत्रुस्तं हतवान्विनाशितवानिति नरहरेः कर्म विचित्रमद्भुतमस्तीति लौकिकार्थः। परमार्थस्तु ननु नरहरिरूपेण लोकदृष्ट्या मनुष्यरूपेण पारमार्थिकदृष्ट्या ब्रह्मरूपेणेत्युभयविधरूपेण गुरुणा कुतो मोहो निपातितः कुतश्च केवलब्रह्मरूपेण

केवलजीवरूपेण वा न निरस्त इत्याशङ्क्य तादृशरूपेणैव सवि-
नाशयितुं शक्यः केवलजीवस्य तदधीनत्वात्केवलब्रह्मणश्च त-
द्विरोधाभावात्किञ्च केवलस्यात्मतत्त्वस्य निर्विकारत्वेन कर्त्तृ-
त्वाद्यभावाच्चेति परिहरति नान्तरिति, यो मोहः सोऽन्त-
रन्तर्देशे धारणाध्यानसमाध्युपायैर्न मार्यते न विनाश्यते धा-
रणादीनां मोहकार्यत्वान्मोहनाशस्यान्योपायैर्दुर्घटत्वं सूचितं
तुपदेन, अपि च पुनरपि यो मोहो बहिर्बहिर्देशे स्वस्ववर्णाश्रम-
कर्माचरणैः स न विनाश्यते 'न कर्मणे'त्यादिश्रुतेस्तेषामपि त-
त्कार्यत्वादिति भावः, किञ्च दिवा केवललोकव्यवहारलक्षणेन
दिवसेन न मार्यते न विनाश्यते स मोहो रात्रौ केवललोकव्य-
वहारोपसंहृतिलक्षणायां समाधिरूपायां रात्रौ स न मार्यते न
विनाश्यते।

'या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' ॥

इतिस्मृत्युक्तौ दिवारात्रिशब्दाभ्यां व्यवहारसमाधी ग्राह्यौ
तयोरपि मोहनाशहेतुत्वं नास्तीति भावः, किञ्चार्द्रेण केवलप्रेम-
लक्षणेनोपासनेन न मार्यते न विनाश्यते शुष्कवपुषा च शुष्कं
प्रेमरसहीनं वपुः स्वरूपं यस्य तेन केवलशुष्कज्ञानेनेत्यर्थः, न मा-
र्यते न विनाश्यते केवलप्रेम्णा मोहं निवर्तयितुं न शक्यते तस्य च
तत्कार्यत्वाविशेषान्मोहनिवर्त्तकज्ञानाभावाच्च प्रेमहीनशुष्कज्ञा-
नस्य तु विषयभोगेषु प्रेमवत्त्वेन दार्ढ्याभावान्न तादृशज्ञानस्यापि
मोहनिवर्त्तकत्वमत उभयसंयोगेनैव मोहनिवृत्तिः स्यान्नैकैके-
नेति भावः, किञ्चायं मोहाख्यः शत्रुर्नरेण न राति आदत्ते
विषयानिति नरः केवलवैराग्यवान्तेन जीवेन न निपातनीयो
न विनाशनीयः प्रारब्धभोगशेषे सति केवलवैराग्ये विक्षेपस्या-

ङ्यसम्भावित्वान्न केवलवैराग्ये मोहनिवर्त्तकता सम्भवतीति भावः, किञ्च मृगेण मृगयति विषयानिति मृगो विषयासक्तस्तेन जीवेनापि अयं मोहरूपः शत्रुर्न निपातनीयो न विनाशयितुं शक्यः केवलविषयासक्तस्य विक्षेपादिबहुदोषवत्त्वात्तस्य च तत्कार्यत्वाच्च तादृशजीवस्यापि न मोहविनाशे सामर्थ्यमिति भावः, अतो नरहरिर्लोकदृष्ट्या व्यवहारवत्त्वेन नरो जीवः परमार्थदृशा तु 'ब्रह्मविद्ब्रह्मैव भवती'तिश्रुतेः सर्वद्वैतहरणशीलत्वाद्धरिश्च ब्रह्मेत्येवमुभयरूपो भूत्वेत्यध्याहार्यं, नरहरिर्जीवब्रह्मोभयरूपो भूत्वोभयरूपे च ध्यानादीनां कर्मादीनां सत्त्वाद्व्यवहारसमाध्योर्भक्तिज्ञानयोश्च जीवब्रह्मभावयोश्चापि विद्यमानत्वात्सः तादृग्रिपुं तादृशदुर्घटमरणवन्तमपि शत्रुं मोहं हतवान्विनाशितवानित्येवं प्रकारं नरहरेः कर्म विचित्रमत्यद्भुतमस्ति ॥ ५ ॥

ननु नरहरेः सर्वत्र विद्यमानत्वे सति पाषाणस्तम्भादेव कुतो व्यक्तिः प्रदर्शितेत्यत आह ।

सर्वत्रैव सदा स्थितो नरहरिर्यत्स्थावरे जङ्गमे
दैवाद्व्यक्तिमुपागतः पुनरसौ पाषाणपिण्डेपि यत् ।
नास्तित्वं गमितो हिरण्यकशिपुस्तादृक्प्रपञ्चाश्रयः
तत्सर्वं किल कौतुकं निजजनप्रह्लादहेतोः कृतम् ॥ ६ ॥

सर्वत्रैवेति । नरहरिर्नरसिंह ईश्वरत्वा'दाकाशवत्सर्वगतश्च नित्यः 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलमि'त्यादिश्रुतिभ्यः सर्वत्र सर्वेषु जगद्गतपदार्थेषु सर्वदा सर्वकालं स्थितस्तिष्ठत्येव यत्तत्सत्यमिति शेषः, तर्हि पाषाणस्तम्भ एव कुत आविर्भूतस्तत्राह दैवादिति, पु-

नरेवं मत्यपि तादृक्प्रपञ्चाश्रयस्तादृगिन्द्राज्यलाभेपि सन्तो
पमप्राप्तोऽत एव प्रपञ्चस्य संसारस्यैवाश्रयः संबन्धो विद्य
ऽस्य तथाविधः सन्नत एव नास्तित्वं प्रपञ्चव्यतिरिक्त ईश्व
नास्ति तद्व्यापको न विद्यते यस्य तस्य भावस्तत्त्वं गमि
प्राप्तः प्रपञ्चसुखलाभेन तद्व्यतिरिक्तं ब्रह्मसुखं नास्तीति निश्च
यानित्यर्थः, यद्यतः कारणादतो दैवात्सोपाधित्वेन स्वा
ष्टकर्मतो हेतोर्हिरण्यकशिपुर्दैवाद्वा पाषाणपिण्डेपि पाषाणस्य
श्मनः पिण्डो विग्रहः स्तम्भ इत्यर्थः, तस्मिन्नपि तस्मिन्नेव, अ
शब्दात्सचेतनेषु तु व्यक्तिः प्रसिद्धैवेति जडेपि तदाविर्भावेन
र्वत्र सर्वदाविर्भावः सूचितः, व्यक्तिं प्रकटतामुपसमीपे एव हि
ण्यकशिपोरागतः प्राप्तः, तत्सर्वं समस्तं चरितं निजजनप्र
दहेतोर्निजः स्वीयो यो जनः पुरुषः स्वभक्तजन इत्यर्थः, ए
भूतो यः प्रह्लादः प्रह्लादनामा हिरण्यकशिपोरेव पुत्रः स एव
तुर्निमित्तं तस्मात्कृतमाचरितमिति लौकिकार्थः। परमार्थे तु न
व्यवहारदृष्ट्या पुरुषस्य परमार्थदृष्ट्या ब्रह्मरूपस्य सर्वकार
त्वात्सर्वत्र व्याप्तौ सत्यां मोहांशरूपवृत्तिविशेषभूतायां ब्रह्मा
मस्मीति वृत्तावेव कुतोभिव्यक्तिर्दृश्यत इत्याशङ्क्यानन्दहेतुतये
दर्शयन्नाह सर्वत्रैवेति, नरहरिर्व्यवहारदृष्ट्या नरो जीवः प
मार्थदृष्ट्या हरिः परमात्मेत्युभयरूप आत्मा सर्वत्र
र्ववृत्तिषु सामान्यरूपेण सदा सर्वकालं स्थित एव
ष्टत्येव यदेवमुच्यते तत्सत्यं तर्हि कुतो ब्रह्माहमस्मी
वृत्तावेवाभिव्यक्तिर्भवतीत्युच्यते तत्राह दैवादिति, य
स्मात्कारणाद्धिरण्यकशिपुर्हिरण्यमिव प्रकाशबहुलमन्तःकर
सत्त्वगुणकार्यभूतं कशिपुरिवात्मविस्मृतिरूपनिद्रासामग्रीव य
स तथोक्तो मोहः स नास्तित्वं स्वस्माज्जगतश्चान्यद्वस्तु न

ति यस्य मोहस्य तस्य भावस्तत्त्वं गमितः प्राप्तः मन्गमशब्दा-
ारकादित्वादितच् तत्र हेतुस्तादृक्प्रपञ्चाश्रयस्तादृग्यथा प्रप-
ातीतात्मप्रतीतिर्न स्यात्तथा प्रपञ्चस्य संसारस्याश्रय सेवनं
स्य स तथोक्तः पुनः सामान्यरूपेण सर्वत्र सदा विद्यमानत्वेऽपि
मौ व्यवहारपरमार्थदशोर्नरहरिर्जीवब्रह्मोभयरूपो दैवाच्छूव-
ाविजनितादृष्टसंस्कारात्पाषाणपिण्डेऽपि पाषाणसदृशस्यासन्त-
डस्य मोहस्येत्यर्थः, पिण्डोऽवयवविशेषो ब्रह्माहमस्मीति सा-
त्काररूपवृत्तिविशेषस्तस्मिन्नेव व्यक्तिं प्रत्यक्षतामुपागतः प्राप्तः,
ःसर्वं समस्तं चरितं कौतुकमाश्चर्यरूपं निजजनप्रह्लादहेतोः कृतं
जात्स्वस्माज्जनं जन्म यस्य स तथाविधो यः प्रह्लादः प्रकृष्टो
दः सुखं विद्यानन्द इति यावद्, यद्वा निजं स्वीयं जनं जन्म-
स्मात्स ब्रह्मानन्दाविर्भावकारणभूतो विद्यानन्दः स एव हेतु-
िमित्तं स्यात्कृतमाचरितं किलेति निश्चयेन ज्ञातव्यमानन्द-
त्त्याधिक्यपूर्वकमात्माभिव्यज्यते प्रमारूपवृत्तौ, इतरासु तु
ित्मात्ररूपेणेत्ययमेव विशेष इति भावः ॥ ६ ॥

इदानीं साधनपूर्वमेतत्पाठे फलमाह ।

जित्वेन्द्रियरिपुषट्कं हृदि गायति वारषट्कं चेत् ।
एतन्नरहरिषट्कं विकारषट्कं निवारयति ॥ ७ ॥

ति श्रीनरहरिकृतौ बोधसारे नरहरिषट्कमष्टाचत्वारिंशम् ॥ ४८ ॥

जित्वेति । हे शिष्य इन्द्रियरिपुषट्कमिन्द्रियाणां श्रोत्रादिका-
ं मनःसहितानां रिपूणां षण्णां समूह इन्द्रियरिपुषट्कं जि-
ा नियम्यैतदिदं नरहरिषट्कं नरहरिर्जीवब्रह्मोभयरूपश्चिदा-
ा तस्य लीलाप्रतिपादकं षण्णां श्लोकानां समूहरूपं प्रकरणं
रषट्कं षड्वारं हृद्यन्तःकरणे गायति पठति चेद्यदि हरीति-

पदेन विचारपूर्वमिति ज्ञेयं, तर्हि विकारषट्कं विकाराणां का-
मादीनां शोकमोहादीनामपि साक्षित्वसहितानां कोशानां चापि
'जायत' इत्यादीनां यास्कपठितानां च विकाराणां च षट्कं
षण्णां समूहं निवारयति निवर्त्तयति ॥ ७ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ
नरहरिषट्कार्थप्रकाशोऽष्टाचत्वारिंशः ॥ ४८ ॥

---

अथोन्मत्तप्रलापशतकम् ।

एवं नरहरिषट्कं निरूप्येदानीं विदुषां विनोदाय मूढानां
विरुद्धार्थप्रतीतिजनकत्वादुन्मत्तप्रलापशतकाख्यं प्रकरणमभिद-
धानः शतश्लोकं गद्येन प्रतिजानीते ।

## अथोन्मत्तप्रलापशतकम् ।

अथेति । अथ नरहरिषट्कनिरूपणानन्तरमुन्मत्तप्रलापश-
तकमुन्मत्तस्योन्मन्यवस्थां प्राप्तस्य यः प्रलापो लोकप्रतीत्या
निरर्थकवाग्व्यापारस्तस्य निरूपकं शतकं शतश्लोकसमूहरूपं
प्रकरणं निरूप्यत इति शेषः, तत्रादावुन्मत्तप्रलापत्वेनैतदुपेक्षा
न कर्त्तव्येत्याशयेनैतदर्थविचारणाय सज्जनबुद्धीः प्रार्थयति ।

शुद्धबोधसुधास्वादी प्रलपामि प्रमत्तवत् ।
तत्प्रलापनिगूढार्थं शोधयन्तु सतां धियः ॥ १ ॥

शुद्धेति । हे शिष्य शुद्धबोधसुधास्वादी शुद्धो बोद्धृबोध-
बोध्यरूपत्रिपुटीरहितो यो बोधश्चिन्मात्रस्वरूप आत्मा स एव
सुधाऽमृतं तत्सेवनेन मरणनिवृतेः सुखरूपत्वाच्च तस्या आस्वा-
दोऽनुभवस्तद्वानहं प्रमत्तवत्प्रमत्तो मद्यादिपानेन यथा प्रलपति तद्व-
त्प्रलपामि लोकप्रतीत्या निरर्थकं वदामि तथापि तत्र प्रलापत्वं

न सम्भाव्यमित्याह तदिति, सतां सज्जनानां मुमुक्षूणामित्यर्थः, धियो मतयस्तत्प्रलापनिगूढार्थं तस्यात्मसुखानुभविनो मम यः प्रलापोऽर्थहीनत्वेन प्रतीयमानं भाषणं तस्मिन्निगूढो गुप्तः स्थूलधियामनवगम्योऽर्थस्तात्पर्यं तं शोधयन्तु विचारयन्तु इति प्रार्थना, अस्मिन्प्रकरणे श्रद्धादिगुणसंपन्ना मुमुक्षव एवाधिकारिण इति भावः ॥ १ ॥

एवं प्रार्थयित्वा तमेव प्रतिज्ञातं प्रलापं निरूपयितुं शास्त्रेषु कामादिविकाराणां मोक्षादीष्टपरिपन्थित्वेनाभिहितत्वात्तद्विरुद्धन्तेषामेव मोक्षोपायत्वं प्रदर्शयन्प्रतिजानीते ।

कामः क्रोधश्च लोभश्च मोहश्च मदमत्सरौ ।
संसारतारका यद्वत्तथा तद्विवृतिं शृणु ॥ २ ॥

काम इति । कामोऽभिलाषः क्रोधस्तत्प्रतिबन्धे सति तस्यैव परिणामः कोपो लोभश्च प्राप्तेपि विषये तृप्त्यभावरूपो विकारो मोहश्च पूर्वापराननुसन्धानरूपो विकारो मदमत्सरौ मदश्च स्वोत्कृष्टत्वबुद्धिरूपो विकारो मत्सरश्च स्वान्येषूत्कर्षासहनरूपो विकार एते सर्वे मोक्षपरिपन्थित्वेन शास्त्रे प्रतिपादिता अपि ते यद्वद्यथा संसारतारकाः संसाराब्धेस्तारयन्ति उद्धरन्ति तथा तद्वत्तद्विवृतिं तेषां विवृतिं व्याख्यां कामादिपदार्थानां विवरणमित्यर्थः, शृणु अवधारय ॥ २ ॥

तत्र तावदादौ कामस्य मोक्षोपायत्वं वदन्प्रलपति ।

विश्रान्तिसुन्दरीसङ्गरतिलावण्यलम्पटाः ।
एकान्तलीलाचतुराः कामिनो मुक्तिगामिनः ॥ ३ ॥

विश्रान्तीति। हे शिष्य विश्रान्तिसुन्दरीसङ्गरतिलावण्यलंपटा विश्रम्यतेऽनया सा विश्रान्तिर्विश्रामहेतुभूता या सुन्द-

री रमणीया स्त्रीत्यर्थः, तस्याः सङ्गः संयोगो रतिश्च तस्यां रमणं लावण्यं च सौन्दर्यं च तस्या एव तेषु लम्पटा लुब्धा अत एव एकान्तलीलाचतुरा एकान्ते निर्जने स्थाने या लीला मैथुनक्रीडा तस्यां चतुराः कुशला एवंविधा ये कामिनः कामोऽभिलाषो येषामस्ति ते तथोक्तास्ते मुक्तिगामिनो मुक्तिं मोक्षं गच्छन्ति प्राप्नुवन्ति ते तथोक्ताः सन्तीति लौकिकार्थः । परमार्थे तु विश्रम्यते समस्तविक्षेपराहित्येन परमानन्दः प्राप्यतेऽनया सा विश्रान्तिरहं ब्रह्मास्मीति जीवब्रह्मैक्य विषयसाक्षात्काररूपा प्रमारूपा वृत्तिः सैव सुन्दरी सुखरूपत्वाद्रमणीया तस्याः सङ्गः संयोगो रतिश्च तस्यां रमणं लावण्यं सौन्दर्यं च तस्यास्तापत्रयनिवृत्त्या सुखस्पर्शरूपत्वमित्यर्थः, तेषु लम्पटा आसक्ता अत एवैकान्तलीलाचतुरा एकान्ते विजने देशे या लीलास्तस्यां द्वैतनिषेधकैकत्वस्य लयावधिभूतब्रह्मणि या सहजसमाधिरूपा क्रीडा तस्यां कुशला इति भावः, एतादृशाः कामिनः कामो ब्रह्मसुखानुभव एवाभिलाषो विद्यते येषान्ते तथाभूता मुक्तिगामिनो मुक्तिं मोक्षं गच्छन्ति प्राप्नुवन्ति ते तथाविधा भवन्ति एवमुत्तरत्र लौकिकार्थो यथायथमूह्यः, परमार्थस्तु व्याख्यास्यत एव ॥ ३ ॥

इदानीं क्रोधे तद्दर्शयन्प्रलपति ।

यद्बलान्मोहदैत्यस्य योगी नरहरिः स्वयम् ।
वक्षो विदारयाञ्चक्रे स क्रोधो मुक्तिसाधनम् ॥४॥

यद्बलादिति । हे शिष्य यद्बलाद्यस्य क्रोधस्य बलादाश्रयाद्योगी योगो जीवब्रह्मैक्यविषयं ज्ञानं विद्यतेऽस्य स तथोक्तः स्वयमात्मा नरहरिर्नरो व्यवहारदृष्ट्या वैराग्यादिसाधनसम्पन्नो जीवः परमार्थदृशा हरिः सर्वद्वैतहरणशीलं ब्रह्म-

त्येवमुभयरूपो भूत्वा मोहदैत्यस्य मोहो मूलाऽज्ञानं स एव दैत्योऽसुरस्तस्य वक्षस्तज्जीवनकारणं जीवब्रह्मणोरन्योन्याध्यारोपरूपं ग्रन्थ्यपरपर्यायं विदारयाञ्चक्रे चिच्छेद स उक्तलक्षणः क्रोधः कोपो मुक्तिसाधनं मुक्तेर्मोक्षस्य साधनं करणमस्तीति निश्चेतव्यम् ॥ ४ ॥

इदानीं क्रोधविशेषस्यैव द्वेषस्य मोक्षोपायत्वं वदन्प्रलपति ।

भ्रुकुटीकुटिलं यस्य मुखमीक्षितुमक्षमाः ।
कामलोभादयो भावाः स द्वेषी केशवप्रियः ॥ ५ ॥

भ्रुकुटीकुटिलमिति । कामलोभादयः कामोऽप्राप्तवस्तुन्यभिलाषो लोभश्च प्राप्तेऽप्यसन्तोष एतावादी प्रथमौ येषां ते तथोक्ता भावा विकारा भ्रुकुटीकुटिलं बिभृतो जगतौ भ्रुवौ सङ्कल्पविकल्पौ कुटति विनाशयतीति भ्रुकुट्यहं ब्रह्मास्मीति प्रमारूपा वृत्तिस्तया कुटिलं वक्रं यस्य ज्ञानिनो मुखं चेतः स्वात्मसुखानुभवसाधनभूतां चित्तवृत्तिमित्यर्थः, 'चेतोमुख' इति, श्रुतेरीक्षितुमवलोकयितुं न क्षमाः समर्था न भवन्ति, किं पुनर्वक्तव्यं तत्र स्थातुं न समर्था इति । लोकेपि द्वेषवतो मुखं भ्रुकुटीकुटिलमिति प्रसिद्धिः, अतः स उक्तलक्षणो द्वेषी द्वेषोऽस्मीतिर्विद्यतेऽस्य स तथोक्तः पुरुषः कामादिषु वृत्तिषु द्वेषवानित्यर्थः, केशवप्रियः कं ब्रह्मसुखं तस्मिन्नेव प्रपञ्चविस्मरणेन शेते निद्राति स केशवः परमात्मा तस्य प्रिय इष्ट आत्मरूपत्वात्'प्रेयोन्यस्माच्च सर्वस्मादान्तरतरोऽयमात्मे'ति श्रुतेः ॥ ५ ॥

इदानीं रागद्वेषयोरपि तद्दर्शयन्प्रलपति ।

शाश्वते सुप्रसन्नानां नश्वरे भृकुटीभृताम् ।
रागद्वेषवतां तात मुक्तिः करतले स्थिता ॥ ६ ॥

शाश्वत इति। शाश्वते नित्यस्वरूपे ब्रह्मणि सुप्रसन्नानां सुष्ठु प्रसन्नाः सुप्रसन्ना रागिण इत्यर्थः, तेषां किञ्च नश्वरे विनाशिनि द्वैते भ्रुकुटीभृतां भ्रुकुटी वक्रभ्रुवं बिभ्रति ते भ्रुकुटीभृतस्तेषां वक्रभ्रुवामिति यावद् एतादृशां रागद्वेषवतां रागद्वेषौ प्रीत्यप्रीती विद्येते एषां तेषां यद्यपि मुक्तिर्नास्तीति प्रतिपादितमन्यत्र तथाप्यस्मन्मते तेषां मुक्तिर्मोक्षः करतले हस्ततले स्थिता तिष्ठति तदधीना वर्त्तते हे तात हे शिष्य यस्मै कस्मै सा समर्प्यते तैस्तस्य सा प्राप्ता भवेत्तेषां तु तदपेक्षैव नास्तीति भावः ॥ ६ ॥

इदानीं लोभस्यापि मोक्षसाधनत्वं वदन्प्रलपति ।

मनः काचमणिं दत्त्वा ज्ञानचिन्तामणिं मुनिः ।
क्रीणाति येन लोभेन स लोभो मुक्तिसाधनम्॥७॥

मन इति। मुनिर्ज्ञानी येन ज्ञानविषयिणा लोभेनाऽसन्तोषेण मनःकाचमणिं मन एव काचमणिरिव तुच्छस्तं दत्त्वा समर्प्य ज्ञानचिन्तामणिं ज्ञानं जीवब्रह्मैक्यविषयो बोधः स एव चिन्तामणिरिव बहुमूल्यस्तं क्रीणाति अङ्गीकरोति स लोभो विद्वत्सु प्रसिद्धो लोभ इच्छा मुक्तिसाधनं मुक्तेर्मोक्षस्य साधनमुपायभूत एवास्ति अतो लोकशास्त्रेषु वेदान्ते च लोभस्य मुक्तिसाधनभूतज्ञानप्रतिकूलत्वं यदुक्तं तदसमञ्जसमेवेति भावः॥७॥

इदानीं मोहस्यापि मोक्षसाधनतां वर्णयन्प्रलपति ।

येन वर्णाश्रमाचारदेहभोगधनादिकम् ।
विस्मरन्ति चितः प्रेम्णा स मोहः परमं पदम् ॥८॥

येनेति। हे शिष्य येन मोहेनाद्वैतात्मस्फुरणपूर्वकद्वैतास्फुरणरूपेणेत्यर्थः, वर्णाश्रमाचारदेहभोगधनादिकं वर्णा ब्राह्मणा-

य आश्रमाश्च ब्रह्मचर्यादय आचारश्च स्वस्ववर्णाश्रमवि-
इतकर्मानुष्ठानं देहश्च मनुष्यादिशरीरं भोगश्च तत्तदेहयोग्यः
सुखदुःखादिसाधनभूतो विषयो धनं सुवर्णादिकं द्रव्यमादि-
देन हस्त्यश्वराज्यादिकमत्र ग्राह्यं, तत्सर्वं चिताश्चिन्मात्रात्मव-
तुनः प्रेम्णा स्नेहेन विस्मरन्ति न जानन्ति स मोह उक्तल-
क्षणो मोहोऽज्ञानं परमं कार्यकारणातीतं पदमात्मस्वरूप-
स्तीति ज्ञेयम् ॥ ७ ॥

इदानीं मदस्यापि तद्दर्शयन्प्रलपति ।

मत्तो नान्यत्परं किंचिदहमेव महेश्वरः ।
अहमेवोत्तमश्चेति मदो मुक्तिप्रदो मतः ॥ ८ ॥

मत्त इति । मत्तोऽहंपदलक्ष्यात्कूटस्थात्परमन्यद्भिन्नं
ष्ठं किञ्चित्किमपि नास्ति न विद्यते, नन्वीश्वरः श्रेष्ठोस्तीति चे-
त्वाहाऽहमेवेति अहमेवाहंपदलक्ष्यः कूटस्थचिन्मात्रात्मैव
हेश्वरः सर्वजगत्साक्षी परमात्माऽस्मि भवामि अतोऽहमेवोत्त-
श्चाहंपदलक्ष्यः कूटस्थचिदात्मैवोत्तमः श्रेष्ठोऽस्मि भवामी-
वं यो मदः स्वोत्कृष्टत्वबुद्धिरूपो निश्चयो मुक्तिप्रदो मोक्षसा-
नभूतो मतो निश्चितो मुनिभिरिति शेषः ॥ ८ ॥

इदानीं मत्सरहीनादपि मत्सरिणः श्रैष्ठ्यं दर्शयन्प्रलपति ।

दृश्योत्कर्षं न सहते ज्ञानोत्कर्षबलात्तु यः ।
स तु सम्वत्सरशतं ज्येष्ठो निर्मत्सरान्मुने ॥ ९ ॥

दृश्योत्कर्षमिति । य आत्मनिष्ठ आत्मसाक्षात्कारवानि-
र्थः, ज्ञानोत्कर्षबलाज्ज्ञानस्य जीवब्रह्मैक्यविषयकबोधस्याहं
ह्मास्मीतिसाक्षात्काररूपस्य बलात्सामर्थ्यादाश्रयादित्यर्थः,
श्योत्कर्षं दृश्यस्य द्वैतस्योत्कर्षमाधिक्यं न सहते न क्षमते

मतूक्तलक्षणो मत्सरवान्निर्मत्सरान्मुनेर्निर्गतो निवृत्तो म
त्सरः सुखदुःखादिद्वन्द्वासहनरूपो यस्मात्स मत्सरहीनः पुरु
स्तस्मात्संवत्सरशतं संवत्सराणां शतं यथा भवति तथा ज्येष्ठ
वृद्धोऽस्ति ॥ ९ ॥

इदानीं क्षमावतः सकाशादपि तद्रहितस्य श्रैष्ठ्यं दर्श
न्नपलपति।

क्षणं न क्षमते यस्तु बाह्यस्फुरणमक्षमी।

तद्वामचरणाङ्गुष्ठे निबद्धाः क्षमिणां गुणाः ॥१०

क्षणमिति। यस्तु योऽपि ज्ञानी बाह्यस्फुरणं बाह्यानां दृश्याना
स्फुरणं भानं घटादिपदार्थस्फुरणमित्यर्थः, क्षणं क्षणकालं
क्षमते न सहते स उक्तविधोऽक्षमी क्षमाहीनो ज्ञेयः, तद्वा
मचरणाङ्गुष्ठे तस्योक्तविधस्याक्षमावतो वामः सव्यो यश्चरण
पादस्तस्याङ्गुष्ठे निबद्धाः स्थिताः क्षमिणां दृश्यसत्त्वबुद्ध्या सु
खदुःखक्षमावतां गुणा ये शास्त्रेषूक्तास्ते ज्ञेयाः, अयमाशय
बाह्यदृश्याऽक्षमावतो ज्ञानिनो 'ब्रह्मवेद ब्रह्मैव भवती'तिश्रुतेर्ब्रह्म
रूपत्वं तस्यारोपाधिष्ठानरूपोऽपवादाधिष्ठानश्च द्वौपादौ कल्पि
तांशावत्र ग्राह्यौ, तत्र च वामचरणपदेनारोपाधिष्ठानत्वरूपोंऽशो
ऽत्र ग्राह्यस्तत्राप्यङ्गुष्ठसदृशो योगोऽत्र ग्राह्यस्तस्मिन्नेव क्षमित
तद्गुणाश्चानुकूला अतस्तत्र निबद्धत्वं तेषामिति ॥ १० ॥

इदानीं वञ्चकेऽपि शिवप्रियत्वं दर्शयन्नपलपति।

कामादयो महाधूर्त्ता धूर्त्तितं यैर्जगत्त्रयम्।

तान्धूर्त्तयति यो युक्त्या स धर्तो धूर्जटिप्रियः ॥१

कामादय इति। कामादयः कामोऽभिलाष आदिर्मुख्यं
येषां क्रोधादीनान्ते तथोक्तास्ते महाधूर्त्ता महान्तः श्रेष्ठा

र्ता वञ्चकाः सन्ति कुत इत्यतः आह धूर्तितमिति, यैः काम-
धादिभिर्जगत्त्रयं जगतां लोकानां त्रयं त्रिकं धूर्तितं वञ्चित-
स्ति, किञ्च यो ज्ञानी तान्कामादीन्महाधूर्तान्युक्त्या प्रथमं
गद्विषयवैरस्यप्रदर्शनाख्ययुक्त्या ततो मनोनिरोधाख्ययोगयु-
या ततः परं तद्विषयासत्त्वप्रदर्शनयुक्त्या धूर्तयति वञ्चयति
उक्तविधो धूर्तो वञ्चकोऽयं ज्ञानिरूपो धूर्जटिप्रियो धूर्जटेः
विस्य प्रिय इष्टः स्वात्मत्वादिति भावः ॥ ११ ॥

इदानीं कपटिनोपि मुक्त्यधिकारित्वं प्रतिपादयन्प्रलपति ।

यो लालयति लोभादीनन्तर्मूलानि कृन्तति ।
बहिरन्योन्य एवान्तर्मुक्तिमेति कपट्यसौ ॥ १२ ॥

य इति । यो ज्ञानी लोभादील्लोभो प्राप्तेपि विषयेऽतृ-
रूपो विकार आदिर्येषान्ते कामादयस्तान्विकाराल्लाँल-
ति तत्तद्विषयप्रदानेन पालयति व्यवहारदृष्ट्याऽन्तरन्तरे
त्मानात्मविवेचनं कृत्वाऽऽत्मनः पृथगसत्त्वप्रतीक्षा तेषां
मादीनां मूलानि अज्ञानं काम्यत्वामनाश्च तदाश्रिताः कृन्तति
नयति अतो बहिर्लोकदृष्ट्याऽन्यो भिन्नः कामादिविकार-
निव प्रतीयमानोऽन्तरन्तरेऽन्य एव भिन्न एव कामादि-
कारहीन एव वर्तमानोऽस्ति अतोऽसावुक्तविधः पुरुषः
पटी च्छली मुक्तिं मोक्षमेति प्राप्नोति ॥ १२ ॥

इदानीं पिशुनस्यापि मोक्षः स्यादिति ब्रुवन्प्रलपति ।

गुणात्मकेषु सर्वेषु दोषमेवान्तरात्मनः ।
कर्णे जपति यो नित्यं पिशुनोऽसौ विमुक्तिभाक् ॥ १३ ॥

गुणात्मकेष्विति । यो ज्ञानी गुणात्मकेषु गुणाः सत्त्व-
जस्तमोभिधा आत्मा स्वरूपं येषान्ते तथोक्तास्तेषु भावेषु प-

दार्थेषु दोषमेवानित्यत्व दुःखप्रदत्व स्वबन्धकत्वादिरूपं दो
केवलमन्तरात्मनः प्रत्यक्साक्षिचिन्मात्ररूपस्यात्मनः कर्णे श्र
वणवृत्तौ नित्यं सर्वदा जपति सूचयति असावुक्तविधः पिशुनो
दोषसूचको विमुक्तिभाग्विमुक्तिं विदेहमुक्तिं भजते सेवते
सोतथोक्त मोक्षाधिकारीत्यर्थः, भवति ॥ १३ ॥

इदानीं परापवादिनोपि परमगतिर्भवतीति सूचयन्प्रल
पति ।

परापवाद एवास्ति हृदये यस्य सर्वदा ।
पराङ्गतिं गतो दृष्टः स मया मुनिशेखरः ॥ १४ ॥

परापावाद इति । हे शिष्य यस्य ज्ञानिनो हृदयेऽन्तःकरणे प-
रापवाद एव परस्यान्यस्या ऽज्ञानस्य तत्कार्यस्य च जगतोऽप-
वादो निषेध एव सर्वदा नित्यमस्ति स उक्तलक्षणः परापवादी
मुनिशेखरो मुनिषु ज्ञानिषु शेखर इवोच्चतरः परामुत्कृष्टां ग-
तिं स्थितिं जीवब्रह्मैक्यरूपां स्थितिमित्यर्थः, गतः प्राप्तो मयोन्म-
त्तेन दृष्टोऽवलोकितः ॥ १४ ॥

इदानीं मोक्षप्राप्तिर्भवति मिथ्यावादिनामिति ब्रुवन्प्रल-
पति ।

मिथ्यैवेदं जगत्सर्वमिति निश्चितचेतसाम् ।
स मिथ्यावादिनां लोको दुर्लभः सत्यवादिनः ॥ १५

मिथ्यैवेदमिति । हे शिष्य इदं दृश्यं सर्वं समस्तमपि जगद्वि-
श्वं मिथ्यैव भ्रममात्रमेवेत्येवं निश्चितचेतसां निश्चितं निश्चय-
वच्चेतोन्तःकरणं येषां तेषां मिथ्यावादिनां समस्तं जगन्मिथ्या
भ्रममात्रमित्येवं जिज्ञासून्प्रति वदन्तीति ते मिथ्यावादिनस्ते-
षां लोको जीवब्रह्मैक्यविषयं साक्षात्काररूपं ज्ञानं प्राप्यते

स बोधः सत्यवादिनामिदं जगत्मत्यमिति ये वदन्ति लोकान्प्रति ते सत्यवादिनस्तेषां यद्वा लोकप्रत्यक्षा ये सत्यवक्तारस्तेषामपि वाङ्मात्रस्य मिथ्याविषयत्वाद्दुर्लभो दुष्प्रापोऽस्तीति भावः ॥ १५ ॥

इदानीमाचारवतां मोक्षो न स्यादिति तद्रहितानामेव स्यादिति कथयन्प्रलपति ।

नैव किंचित्करोमीति यः सदाचारवर्जितः ।
आचारिणो न गच्छन्ति तस्यानाचारिणो गतिम् ॥१६॥

नैवेति । हे शिष्य अहमहंपदलक्ष्यः प्रत्यगात्मा कर्तृशब्दवाच्यबुद्धिसाक्षी किञ्चित्किमपि कार्यं नैवकरोमि नैव सम्पादयामीत्येवं योऽसङ्गात्मानुसन्धानवान्प्रसिद्धः कोपि पुरुषः सदाचारवर्जितः सदा सर्वकालमाचारेण विहितकर्मकर्तृत्वेन रहितोऽस्ति किन्तु विहितकर्मकर्तृत्वं विज्ञानमये बाधिते बाधितमेव कर्तृत्वं सदा पश्यतीत्यर्थः, अन्यस्य शुभाशुभकर्माणि अन्यस्मिन्नारोपितेऽन्यप्रायश्चितेनान्यस्मिन्पापनिवृत्तिरित्यतिप्रसङ्गेन विज्ञानमयस्य कर्मादिकं कर्तृत्वादिकं चात्मन्यसम्भाव्यमित्यनुसन्दधान इति भावः, तस्यानाचारिण उक्तविधस्याचारवर्जितस्य या गतिर्मोक्षरूपा शास्त्रेषु प्रतिपाद्यते तां गतिमाचारिणो विज्ञानमयस्य कर्तृत्वं चिदात्मनि समारोप्य कर्तृत्वाभिमानिनो न गच्छन्ति प्राप्नुवन्ति ॥ १६ ॥

इदानीं मित्रद्रोहिणामपि मोक्षो भवतीति प्रतिपादयन्प्रलपति ।

पूर्वं यानि च मित्राणि विचारादीनि तान्यपि ।
विहाय तत्परं यातो मित्रद्रोही स मुच्यते ॥ १७ ॥

पूर्वमिति। लोकशास्त्रे मित्रद्रोहिणां मोक्षो नास्ति प्रत्युत नरक एव भवेदिति प्रतिपादितं यद्यपि तथाप्यस्मन्मतं शृणु हे शिष्य पूर्वमात्मसाक्षात्कारात्प्राग्यानि शास्त्रेषु प्रसिद्धानि विचारादीनि विचार आत्मानात्मविवेक आदिः प्रथमो येषां तानि आदिपदेन श्रवणादीनि नियमादीनि च योगसाधनानि ग्राह्याणि तानि सर्वाणि मोक्षरूपेष्टसम्पादनानुकूलतया मित्राणि सखायस्तान्यपि मुक्तिसिद्धौ निष्प्रयोजकतया विहाय परित्यज्य वर्त्तमानः सन्तद्विद्वत्सु प्रत्यक्षानुभवसिद्धं परं कार्यकारणास्पृष्टमात्मस्वरूपं ब्रह्माभिन्नो यातः प्राप्तो भवति स उक्तलक्षणो मित्रद्रोही मित्राणि हितकारीणि यमादिश्रवणादीनि द्रुह्यतीति मित्रद्रोही स्वात्मसुखानुसन्धानखण्डनहेतुत्वात्तन्नाशक इत्यर्थः, मुच्यते मुक्तो भवति ॥ १७ ॥

इदानीं मायोपजीविनामैन्द्रजालिकानां नरकप्राप्तिरूपा दुर्गतिः शास्त्रेषु प्रतिपादिताऽत्र तूत्पत्तस्तेषामेव मुक्तिर्भवतीति तद्विरुद्धं प्रतिपादयन्प्रलपति।

पञ्चभूतात्मकं विश्वं निर्मितं येन मायया।
स एव हि मया दृष्टो मायावी मुक्तिभाजनम्॥ १८॥

पञ्चभूतेति। येन प्रत्यगभिन्नब्रह्मरूपेण कर्त्रा मायया स्वस्यैव जगत्सर्जनेच्छारूपया शक्त्या सत्त्वासत्त्वादिरूपैरनिर्वचनीयत्वान्मायात्वं तस्यास्तया कारणरूपया पञ्चभूतात्मकं पञ्चसंख्यानि यानि भूतान्याकाशादीनि तान्येवात्मा स्वरूपं यस्य तत्तथाविधं विश्वं जगन्निर्मितमुत्पादितं स एवोक्तलक्षण एव केवलं मायावी मायोपकरणवान्हि प्रसिद्धो विद्वत्सु शास्त्रेषु च मयोक्तप्रकारमायाविस्वरूपवेत्रा मुक्तिभाजनं मुक्तेर्मोक्षस्य भाजनं पात्रभूतो दृष्टो निश्चितोऽतः शास्त्रे तादृशस्य नरको भव-

तीति प्रतिपादितं तदसमञ्जसमेवेति भावः ॥ १८ ॥

इदानीं कृतज्ञानामुत्तमगतिः कृतघ्नानामधोगतिश्च भवतीत्यन्यशास्त्रेषु प्रतिपादितमत्र तून्मत्तस्तद्वैपरीत्यं प्रतिपादयन्प्रलपति ॥

स्वेच्छयैव कृतं विश्वं स्वेच्छयैव निहन्ति यः ।
कृतज्ञादपि पूज्योऽसौ कृतघ्नो मोक्षमश्नुते ॥ १९ ॥

स्वेच्छयैवेति । हे शिष्य येन ब्रह्माभिन्नप्रत्यगात्मना कर्त्रा स्वेच्छयैव स्वस्यात्मन इच्छयैव काङ्क्षयैव विश्वं जगत्कृतं निर्मितमस्ति 'सोऽकामयते'ति श्रुतेः, तथा यः प्रत्यगभिन्नब्रह्मस्वरूपः स्वेच्छयैव स्वात्मकाङ्क्षयैव न त्वन्यत्किमपि करणान्तरमपेक्षत इत्यर्थः, विश्वं जगन्निहन्ति नाशयति मानोरथिकप्रासादादिवदित्यर्थः, अतोऽसावुक्तलक्षणः कृतघ्नः कृतं विश्वं हन्ति नाशयतीति कृतघ्नः पुरुषविशेषः कृतज्ञादपि कृतं जानातीति कृतज्ञस्तस्मात्कृतवेत्तुरपि पूज्य आदरणीयोऽर्च्यो मुमुक्षूणामिति शेषः, अस्ति किञ्च स कृतघ्नो मोक्षं मुक्तिमश्नुते कृतसत्त्वप्रतीतिपूर्वककृतज्ञत्वादपि कृतासत्त्वप्रतीतिरूपं कृतघ्नत्वं श्रेष्ठमिति भावः ॥ १९ ॥

इदानीमभिमानवतां मुक्तिर्नास्तीति प्रतिपादितमन्यशास्त्रेषु तद्रहितानां तु सा स्यादित्येवमपि अत्र तून्मत्तस्तद्विरुद्धं कथयन्प्रलपति ।

आश्चर्यं योऽभिमन्येत जीव आत्मानमीश्वरम् ।
सोऽभिमानी गतिं याति निरहङ्कारदुर्लभाम् ॥२०॥

आश्चर्यमिति । हे शिष्य यो लोकप्रसिद्धो जीवः साधिष्ठानबुद्धिस्थचिदाभासो देहद्वयवानात्मानं स्वं विविच्येति शेषः,

देहत्रयात्पृथक्कृत्येत्यर्थः, ईश्वरमीशनादिशक्तिमन्तं परमात्मानमभिमन्येत सर्वावस्थासु मन्यते स उक्तविधोऽभिमान्यभिमानवान् निरहङ्कारदुर्लभामहङ्कारसत्त्वप्रतीतिपूर्वकत्वान्निरहङ्कारवतः पुरुषस्य दुर्लभां दुष्प्रापां गतिं स्थितिं मुक्तिरूपामवस्थामित्यर्थः, याति प्राप्नोति ॥ २० ॥

इदानीं परगुणेषु दोषदर्शिनां परनिन्दकानां स्वस्तावकानां च नरकपातोऽन्यशास्त्रेषु प्रतिपादितोऽत्र तून्मत्तस्तेषामेव मुक्तिर्भवतीति प्रतिपादयन्तद्विरुद्धं प्रलपति ।

> गुणेषु दोषं पश्यन्तो विश्वमात्रविनिन्दकाः ।
> आत्मस्तुतिपरा यान्ति नित्यं वैकुण्ठमन्दिरम् ॥ २१

गुणेष्विति । गुणेषु मायागुणेषु सत्त्वरजस्तमोभिधेषु तत्कार्येषु शान्त्यादिवृत्तिष्वपि दोषं स्वात्मसुखानुसन्धानविरोधित्वरूपं दुष्टस्वभावं पश्यन्तोऽवलोकयन्तः, किञ्च विश्वमात्रविनिन्दका विश्वमात्रस्य समस्तजगतो विनिन्दका अतिशयेन निन्दाकर्त्तारो ये सन्ति । किञ्चात्मस्तुतिपरा आत्मनो ब्रह्माभिन्नप्रत्यागात्मन एव स्तुतिः स्तोत्रं तस्यां परा आसक्ता ये सन्ति ते त्रयोपि नित्यं सर्वदा वर्त्तमानं यतो जयविजयौ पतितौ सत्वनित्य एव ततो विलक्षणमिति यावद् वैकुण्ठमन्दिरं विशेषेण कुण्ठा कुण्ठिता बुद्धिर्यत्र तद्विकुण्ठमात्मस्वरूपं विकुण्ठमेव वैकुण्ठं तदेव मन्दिरं जीवानामालयरूपं ब्रह्माभिन्नप्रत्यगात्मचैतन्यं यान्ति प्राप्नुवन्ति ॥ २१ ॥

इदानीमन्यशास्त्रे दाम्भिकानां नरकप्राप्तिर्भवतीति प्रतिपादितमत्र तून्मतस्तेषामेव मुक्तस्वरूपत्वेन शिवप्रियत्वं प्रतिपादयन्प्रलपति ।

बुध्वापि शुद्धमात्मानं व्यावहारिकलोकवत् ।
करोति न करोमीति दम्भकृच्छम्भुवल्लभः ॥ २२ ॥

बुध्वेति । यो ज्ञानी शुद्धं कर्तृत्वाद्यस्पृष्टमसङ्गमात्मानं ब्रह्माभिन्नचिदात्मानमहं कूटस्थोऽसङ्गोऽस्मि अतोहं किञ्चिदपि विहितं प्रतिषिद्धं वा न करोमीति बुध्वा विज्ञाय व्यावहारिकलोकवद्व्यवहारं व्यापारमाचरन्तीति व्यावहारिकाः कर्तृत्वाभिमानिनो मूढा इत्यर्थः, ते तथाभूता ये लोका जनास्ते यथा कुर्वन्ति आचरन्ति तद्वत्करोति आचरति लोकप्रदर्शनायेति यावत्, लोकेपि लोकप्रदर्शनाय कर्माचरणं दम्भशब्देनोच्यतेऽतः स एवंप्रकारो दम्भकृद्दम्भं छलं करोतीति स तथोक्तः शम्भुवल्लभः शं सुखं भवत्यस्मादिति शम्भुर्जगदानन्दकरो ब्रह्माभिन्नः प्रत्यगात्मा तस्य प्रियः स प्रियो यस्येति वा स तथोक्त आत्मत्वा'त्प्रेयोन्यस्माच्च सर्वस्मादान्तरतरोयमात्मे'ति श्रुतेरस्तीति ज्ञेयः ॥ २२ ॥

इदानीं लोकेषु शास्त्रेषु च घातकानां दुर्गतिर्भवतीति प्रसिद्धमत्र तून्मत्तस्तद्विपरीतं प्रदर्शयन्प्रलपति ।

बोधखड्गेन तीक्ष्णेन मोहाहङ्कारदुर्धियाम् ।
घातकः पातकं हन्ति पूर्वजन्मशतार्जितम् ॥२३॥

बोधखड्गेनेति । यो ज्ञानी तीक्ष्णेन तीव्रेणाज्ञानभेदनसमर्थेनेत्यर्थः, बोधखड्गेन बोधो महावाक्यजन्यं प्रत्यगभिन्नब्रह्मसाक्षात्कारज्ञानं स एव खड्गोऽसिस्तेन मोहाहङ्कारदुर्धियां मोहोऽज्ञानमहङ्कारस्तत्कार्येषु तादात्म्यप्रतीतिरूपाऽहङ्कृतिर्दुर्धियो विषयवासनाविदूषिता मतयस्तासां घातको नाशकोऽस्ति पूर्वजन्मशतार्जितं पूर्वाण्यतीतानि यानि जन्मानि

जननानि तेषां शतानि असंख्यजन्मानीत्यर्थः, तेष्वर्जितं सम्पादितं पातकं पापं हन्ति नाशयति उक्तविधो घातकोऽन्येषां पातकानि नाशयति किं पुनर्वक्तव्यं तस्य पापं नास्तीति भावः॥२३॥

इदानीं विश्वास्यघातिनां नरकप्राप्तिर्भवतीति प्रतिपादितमत्र तून्मतस्तद्विपरीतं प्रतिपादयन्प्रलपति ।

अहङ्कारं हरिरहं ब्रह्मैवाहमहं शिवः ।
इति विश्वास्य हन्तारः पुण्या विश्वस्तघातकाः ॥२४॥

अहङ्कारमिति । अहमहंपदलक्ष्यः स एव ब्रह्मणोऽभिन्नत्वाद्धरिः सर्वदुःखहरणशीलत्वाद्धरिर्विष्णुरस्मि किञ्चाहमहंपदलक्ष्यो ब्रह्माभिन्नः प्रत्यगात्मा ब्रह्मैव सर्वजगत्तत्त्वस्योभयत्राविशिष्यात्प्रजापतिरस्मि किञ्चाहमहंपदलक्ष्यो ब्रह्माभिन्नः प्रत्यगात्माऽऽनन्दरूपत्वात्समस्तजगन्नाशाधिष्ठानत्वाच्च शिवो रुद्रोऽस्मीत्येवं विश्वास्य विश्वासं दत्त्वा हन्तारो नाशका ये भवन्ति अहंकारस्य मामयं वर्धयतीत्येवं विश्वासमुत्पाद्य घातयन्तीत्यर्थः, ते विश्वस्तघातका विश्वस्तस्य विश्वासवतो घातका नाशकाः पुण्याः पवित्राः सन्तीति ज्ञेयं, यत्पुनर्विश्वासघातिनां नरकप्राप्तिर्भवतीति प्रतिपादितं तदसमञ्जसमेवेति भाव ॥ २४

इदानीं कर्मभ्रष्टानां पुण्यपापचिन्तारहितानां लोके पङ्क्तिबहिष्कृतत्वं दृश्यते शास्त्रेषु च तेषां नरकप्राप्तिः श्रूयतेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

मुक्तो विधिनिषेधाभ्यां निश्चिन्तः स्वेच्छया चरन्
कर्मठानामपाङ्क्तेयः सोऽस्माकं पङ्क्तिपावनः ॥ २५

मुक्त इति । हे शिष्य यो ज्ञानी विधिनिषेधाभ्यां विधि'ईत

शेषं भक्षयेद्, आजीवमग्निहोत्रं जुहुयादि'त्यादिरूपः कर्मसु प्रवर्तको वाक्यप्रयोगः, निषेधश्च 'न हिंस्यात्सर्वा भूतानी'त्यादिरूपोऽनिष्टकर्मभ्यो निवृत्तिजनको वाक्यकदम्बस्ताभ्यां मुक्तोऽतीतो निश्चिन्तस्तत्फलस्वर्गनरकादिशङ्काशून्यो भूत्वा स्वेच्छया स्वस्यात्मनः सम्बन्धिनी येच्छा काङ्क्षा तयैव लोकेऽपि विधिनिषेधाभावेन यथेच्छं चरन्प्रवर्तमानः सन्कर्मठानां कर्तृत्वसद्बुद्ध्या कर्मस्वासक्तानामपाङ्क्तेयः पङ्क्तौ साधुः पाङ्क्तेयः पङ्क्तियोग्य इत्यर्थः, अपाङ्क्तेयः पङ्क्तियोग्यो न भवतीति स तथोक्तो भवति स उक्तलक्षणः पङ्क्तिबहिष्कृतः कर्मठानाम्, अस्माकं ज्ञानिनां जिज्ञासूनामपि पङ्क्तिपावनः पङ्क्तिं ज्ञानिनां जिज्ञासूनां च समूहं पावयति पवित्रयति स तथोक्तोऽस्तीति हेतोर्लोके शास्त्रे च तत्तस्यापाङ्क्तेयत्वं निरूप्यते तदममात्रसमेवेति भावः ॥ २५ ॥

इदानीं मीमांसायामभिनिर्मुक्ताभ्युदितयोर्निन्दा क्रियतेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति।

निन्दिताविभिनिर्मुक्ताभ्युदितौ यौ तु तौ हि नः।
पूतौ कर्माभिनिर्मुक्तोऽभ्युदितश्च चितौ सदा ॥ २६॥

निन्दिताविति। हे शिष्य यौ तु मीमांसायां प्रतिपादितावभिनिर्मुक्तोऽभ्युदितश्चेत्यभिधौ तौ च तत्र निन्दितौ गर्हितौ स्तस्तथापि कर्माभिनिर्मुक्तः कर्मभ्यो विहितनिषिद्धकर्मभ्योऽभितः सर्वभावेन निर्मुक्तोऽकर्तृब्रह्मभावं प्राप्तश्चितौ चिन्मात्रस्वरूपे ब्रह्मणि सदा सर्वकालमुदितश्चोदयं प्राप्तश्च भवति तावेतौ हि प्रसिद्धौ नोऽस्माकं मते पूतौ पवित्रौ स्तः ॥ २६ ॥

इदानीं धर्मशास्त्रे द्वारमाच्छाद्यातिथिभ्योऽप्यप्रदाय मिष्टपदार्थभोजनमेकलस्य नरकप्रदत्वेन हेतुना निषिद्धमत्र तून्मत्तस्तदेव परमपदप्रापकत्वेन विहितमित्येवं दर्शयन्प्रलपति।

दत्त्वा द्वारि कपाटं यः खण्डलड्डुकवन्मुनिः ।
एकाकी मिष्टमश्नाति स याति परमां गतिम् ॥२७॥

दत्त्वेति । हे शिष्य यः कोपि पुरुष आत्मसुखरतो द्वारि-आत्मसुखप्राप्तिद्वारभूते विवेके कपाटं कं ब्रह्मसुखं पाटयति विच्छिनत्ति स कपाटोऽहङ्कारस्तं दत्त्वा समर्प्य विवेकेन सहाहङ्कारं संयोज्येति भावः, एकाक्येकलः सन्नद्वितीय इत्यर्थः, मुनिर्ज्ञानी खण्डलड्डुकवद्यथा खण्डस्य इक्षुरसविकारस्य लड्डुको मोदको मिष्टो भवति तद्वन्मिष्टं सुखरूपत्वान्मधुरं ब्रह्मसुखमित्यर्थः, अश्नाति भुनक्ति अनुभवतीत्यर्थः, स उक्तविधः स्वयमेकाकी मिष्टभोजनशीलः परमां श्रेष्ठां जीवब्रह्मैक्यस्थितिरूपां गतिं स्थितिं याति प्राप्नोति अतो लोके शास्त्रे चैकाकिमिष्टभोजिनां नरकप्राप्तिर्भवतीत्यसमञ्जसमेवोक्तमिति भावः ॥ २७ ॥

इदानीं पङ्क्तिघातकस्याधोगतिः स्यादिति प्रतिपाद्यते लोके शास्त्रे चात्र तून्मत्तस्तद्विपरीतं प्रदर्शयन्प्रलपति ।

ज्ञानकर्मेन्द्रियगणो निरुध्य निजमन्दिरे ।
पङ्क्तीकृत्य हतो येन सोऽस्माकं पङ्क्तिपावनः॥२८॥

ज्ञानेति । हे शिष्य येन ज्ञानिना ज्ञानकर्मेन्द्रियगणो ज्ञानानि शब्दस्पर्शरूपरसगन्धविषयाणि कर्माणि च क्रिया वचनादानगमनानन्दविसर्गाख्याः पञ्च तेषामिन्द्रियाणि करणानि पञ्च श्रोत्रादीनि वागादीनि च पञ्च तेषां गणः समूहो निजमन्दिरे निजं स्वीयं यन्मन्दिरं वासस्थानं लिङ्गशरीरं तस्मिन्निरुध्य रुद्ध्वा पङ्क्तीकृत्य समूहीकृत्य हत आत्मतः पृथगसत्त्वेनात्रलोक्य नाशितः स उक्तलक्षणः पङ्क्तिघातकोऽस्माकं मुमुक्षूणां मुक्तानां च पङ्क्तिपावनः पङ्क्तिः समूहस्तस्याः पावनः पवित्रीयताऽस्तीति

न्द्रयः, अतः शास्त्रेषु पङ्क्तिघातकानां नरको भवतीति यत्प्रतिपादितं तदसमञ्जसमेवेति भावः ॥ २८ ॥

इदानीं संसारद्वेष्टॄणां नरकप्राप्तिर्भवतीति प्रतिपाद्यते लोके शास्त्रे चात्र तून्मत्तस्तद्विपरीतं प्रलपति ।

पश्य संसारनाशार्थमात्मनाशं सहन्ति ये ।
संसारद्वेषिणां तेषां मुक्तिः शास्त्रेषु वर्णिता ॥२९॥

पश्येति । हे शिष्य त्वं भवान्ये ज्ञानिनो मुमुक्षवश्च संसारनाशार्थं संसारो जन्ममरणादिरूपस्तस्य नाशो घातः स एवार्थः प्रयोजनं यस्यां क्रियायां यथा भवति तथाऽऽत्मनाशमात्मनो मिथ्यात्मनो जीवस्येत्यर्थः, नाशो घातस्तं सहन्ति क्षमन्ते लोके हि मूढानामती वद्वेपिणां स्त्र्यादीनां स्वान्यद्वेष्यनाशेच्छया स्वात्मनाशोपि दृश्यते तादृशां तेषामुक्तलक्षणानां संसारद्वेषिणां संसारो जन्ममरणादिरूपस्तं द्विषन्ति ते तथोक्तास्तेषां मुक्तिर्मोक्षः शास्त्रेषु वेदान्तेषु वर्णिता प्रतिपादितेतिपश्यावलोकय, उक्तमिदं तवापि साक्षादनुभवगोचरमेवेति सूचितमतो लोकशास्त्रे संसारद्वेषिणां मुक्तिर्नास्ति नरकः प्राप्यते चेत्तेवं यत्प्रतिपादितं तदसमञ्जसमिति भावः ॥ २९ ॥

इदानीं धर्मशास्त्रेषु द्यूतकाराणां नरकपातो वर्णितोऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

अहं ममेति सर्वस्वं बोधद्यूतेषु हारितम् ।
येनासौ मुक्तिभाक्प्रोक्तो बृहदारण्यकश्रुतौ ॥३०॥

अहं ममेतीति । हे शिष्य अहं ममेति सर्वस्वमहं शरीरत्रये तादात्म्यं स्वात्मनो मम गृहादिषु मदीयत्वाभिमान इत्येवमेव सर्वस्वं धनं यत्तद्येन ज्ञानिना बोधद्यूतेषु बोधो जीवब्रह्मैक्यज्ञानं

तदेव द्यूतानि द्यूताभिधाः क्रीडास्तेषु हारितं विनाशितमसाधु-क्तविधो द्यूतकारी बृहदारण्यकश्रुतौ बृहदारण्यकमेतन्नामकं ब्राह्मणं वाजसनेयिशाखागतं तद्रूपश्रुतौ मुक्तिभाग्मुक्तिं मोक्षं भजतीत्येव प्रोक्तः कथितोऽतो लौकिकशास्त्रेषु द्यूतकारिणामधोगतिर्भवतीति यत्प्रतिपादितं तदसमञ्जसमिति भावः ॥ ३० ॥

किञ्च दीनेषु दयावानेव भगवत्प्रियस्तद्रहितस्त्वप्रियो भगवत इत्येवं लोकेषु पुराणादिषु च श्रूयतेऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति।

दीनेन्द्रियमृगेष्वेव दया यस्य न विद्यते।
स एव देवकीसूनोर्दीनबन्धोरतिप्रियः ॥ ३१ ॥

दीनेन्द्रियेति। हे शिष्य यस्य मुमुक्षोर्मुक्तस्य वा कस्यचिद्दीनेन्द्रियमृगेष्वेव दीनाः स्वाधीनत्वात्स्वतस्तद्रहितत्वाच्च स्वपोष्या इन्द्रियाण्येव शब्दादिज्ञानकरणानि श्रोत्रादीन्येव मृगयन्ति स्वस्वविषयानिति मृगास्तेषु प्रत्यक्षेषु दया कृपा न विद्यते नास्ति स एवोक्तविध एव नान्यस्तेषु दयावानित्यर्थः, दीनबन्धोर्दीनानां परवशानां बन्धुर्मित्रं तस्य देवकीसूनोर्देवक्या देवककन्याया वसुदेवपत्न्याः सूनुः पुत्रः श्रीकृष्णस्तस्यातिप्रियोऽत्यन्तमिष्टोऽस्तीति ज्ञेयो दीनघातको दीनहितकारिणो हितो भवतीत्यत्र विरोधः प्रतीयमानोऽपि देवकीसूनोरितिपदेन देवक्याः स्वमातुर्बन्धनेन पराधीनत्वेऽपि तस्या बन्धनमेव दृढीकृतं यशोदायास्तु स्वजन्मोत्सवबाललीलादिप्रदर्शनेनानन्दो दत्त इत्येवं विरुद्धकारित्वस्य श्रीकृष्णे प्रसिद्धत्वान्नेदमेव विरुद्धं मन्तव्यमिति भावः ॥ ३१ ॥

किञ्च लोकशास्त्रेषु राज्ञो विषयसुखलोभेन नगराद्युपल-

क्षितप्रजारक्षणोपेक्षा नरकाद्यनिष्टप्राप्तिसाधनत्वेन निषिद्धाऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

आत्मभोगरतो राजा यस्तु नावेक्षते पुरीम् ।
लिप्यते न स पापेन प्रमाणं मुण्डकश्रुतिः ॥३२॥

आत्मभोगेति । हे शिष्य यस्तु प्रसिद्धो ज्ञानी राजा राजते स्वयंप्रकाशात्मरूपेण प्रकाशते इति राजा सन्नात्मभोगरत आत्मनः स्वात्मसुखस्य भोगोऽनुभवस्तस्मिन्रत आसक्तः सन्पुरीं पृणाति पालयति स्वोपाधित्वेन जीवत्वमिति पुरी देहनगररूपा तां नावेक्षते नावलोकयति स उक्तविधः स्वात्मसुखभोगे लोभेन प्रजापालनोपेक्षावान्राजा पापेन किल्बिषेण न लिप्यते लिप्तो न भवतीति ज्ञेयम्, अत्रार्थे मुण्डकश्रुतिर्मुण्डकोपनिषत्स्था—'आत्मक्रीड आत्मरतिरि'ति श्रुतिः प्रमाणमस्ति अतो लोकशास्त्रेषु आत्मभोगरता प्रजारक्षोपेक्षाणां राज्ञां नरकप्राप्तिरिति यदुक्तं तदसमञ्जसमेवेति भावः ॥ ३२ ॥

किञ्च लोकशास्त्रेषु पाशिनां नरको भवतीति प्रतिपादितमत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

ज्ञानवैराग्यपाशेन हतो येन मनो धनी ।
यः स्यादेवंविधः पाशी तस्य काशी पदे पदे ॥३३॥

ज्ञानवैराग्येति । हे शिष्य येन ज्ञानपाशिना ज्ञानवैराग्यपाशेन ज्ञानं जीवब्रह्मैक्यविषयं वैराग्यं चात्मव्यतिरिक्तविषयेषु वैरस्यं च समाहार एकवचनं तदेव पाशो जालविशेषस्तेन कृत्वा मनो धनी मनश्चित्तमेव धनी धनवाञ्जगद्द्रव्यवत्त्वात्तस्य हतो मारितोऽस्ति एवंविधः एवंप्रकारो यः प्रसिद्धः पाशी पाशवानस्ति तस्योक्तविधपाशिनः पदे पदे

यत्र यत्र पादो निक्षिप्यते तत्र तत्र तथाविधपाशिन एव विश्वेश्वरत्वात्तस्मिंस्तस्मिन्स्थाने काशीत्वमितरेषां मुक्तिहेतुत्वात्काशी वाराणसी भवतीति निश्चतव्यमतो लोकशास्त्रेषु पाशिनां नरकप्राप्तिर्भवतीति यत्प्रतिपादितं तदयुक्तमेवेति भावः ॥ ३३ ॥

किञ्च लोके शास्त्रे च बालरण्डासङ्गो निषेधितः स तु बलात्कारादतीव निषेधितोऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

गङ्गायमुनयोर्मध्ये बालरण्डां तपस्विनीम् ।
बलात्कारेण यो भुङ्क्ते स रण्डाव्यसनी शुचिः ॥ ३४॥

गङ्गायमुनयोरिति । हे शिष्य गङ्गायमुनयोर्गङ्गेडाख्यानाडी यमुना च पिङ्गलाख्या नाडी तयोर्मध्येऽन्तराले वर्तमानां तपस्विनीं तप आलोचनं ज्ञानं विद्यते यस्याः सा तथोक्ता तां बालरण्डां बालः केशस्तद्वदतिसूक्ष्मरूपेण रण्डाकृतिमतीं सुषुम्णामित्यर्थः, यः कश्चिद्योगाभ्यासी बलात्कारेण योगाङ्गभूतप्राणायामबलेन भुङ्क्ते वशीकरोति स उक्तविधो रण्डाव्यसनी नित्यं सुषुम्णायामासक्तः शुचिः शुद्धोऽस्तीति ज्ञेयः, अतो लोकशास्त्रे रण्डागामिनामधोगतिर्भवतीति प्रतिपादितमसमञ्जसमेवेति भावः ॥ ३४ ॥

किञ्च लोके शास्त्रे च दावाग्निप्रदायिनां नरकप्राप्तिः श्रूयतेऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

बोधदावाग्निना दग्धं येन द्वैतवनं घनम् ।
अतिपुण्यां गतिं याति स हि दावाग्निदायकः ॥ ३५॥

बोधदावाग्निनेति । येन ज्ञानिना कर्त्रा बोधदावाग्निना बोधो जीवब्रह्मैक्यविषयं ज्ञानं स एव सर्वद्वैतवनदाहकत्वाद्दावाग्निरिव

दावानलस्तेन करणभूतेन घनं सघनं द्वैतवनं द्वैतं विश्वमेवाज्ञानसहितं वनमरण्यं दग्धं दाहं प्रापितं स उक्तलक्षणो हि प्रसिद्धो दावाग्निदायको द्वैतवने ज्ञानाग्निसमर्पकोऽतिपुण्यां मायाविद्यादिमलरहितां गतिमात्मरूपां स्थितिं 'स आत्मा अपहतपाप्मे'त्यादिश्रुतेर्याति प्राप्नोति अतो दावाग्निदायिनां नरकप्राप्तिर्भवतीति लोकशास्त्रेषु प्रतिपादितं तदस्मन्मतेऽसमञ्जसमेवेति भावः ॥ ३५ ॥

किञ्च लोकशास्त्रेषु गावः सर्वदा गृह एव न निरोद्धव्या निरुद्धाश्चेत्तासां समये समये तृणजलादिकं देयमनन्तरं स्वसंभोक्तव्यमन्यथाकरणे नरकपातः स्यादित्युक्तमत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

गृहे स्थितानामपि यो गवां ग्रासं ददाति न ।
आचरत्यात्मनः पुष्टिं सर्वपापैः प्रमुच्यते ॥ ३६ ॥

गृह इति । हे शिष्य यो ज्ञानी गृहे स्थितानामपि गृह्यत आत्मतया स्वीक्रियते तद्गृहं शरीरं तस्मिन् स्थितानामपि बाधितत्वेन प्रारब्धक्षयपर्यन्तं स्थितानां प्रारब्धभोगानुकूलतया स्वरूपेण विद्यमानानामपि लोकदृष्टौ गवामिन्द्रियाणां ग्रासं ग्रस्यत उपभुज्यत इति ग्रासस्तत्तद्विषयभोगस्तं न ददाति न समर्पयति तत्त्वबुद्धिपूर्वं नार्पयतीति यावत्, किञ्चात्मनः स्वस्य पुष्टिं पालनमाचरति करोति स उक्तलक्षणः पुरुषः सर्वपापैः सर्वकिल्बिषैः प्रमुच्यते प्रकर्षेण मुक्तो भवति अतो लोकशास्त्रोक्तं विरुद्धमेवेति भावः ॥ ३६ ॥

किञ्च रसविक्रयिणां लोकशास्त्रेषु दोषः प्रदर्शितोऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

रसाः सर्वेऽपि विक्रीता धर्माधर्ममजानता ।
ग्रन्थौ बद्धं बोधधनं स धन्यो रसविक्रयी ॥३७॥

रसा इति । हे शिष्य येन ज्ञानिना धर्माधर्मं धर्मो वेदविहितस्वस्वविहिताचारोऽधर्मश्च वेदनिषेधितः स्वस्वाविहिताचारस्तयोः समाहार एकवद्भावस्तमजानता न जानातीति अजानन्तेनाऽननुसन्दधता सता सर्वेऽपि समस्ता अपि रसा विषयसुखविशेषा विक्रीता ज्ञानमूल्यग्रहणेन परित्यक्ताः, किञ्च ग्रन्थावहङ्कारलक्षणे चिदचिद्ग्रन्थिरूपे बोधधनं बोधो जीवब्रह्मैक्यविषयं ज्ञानं तदेव धनं द्रव्यं बद्धं धृतं स उक्तविधो रसविक्रयी रसानां विषयसुखविशेषाणां विक्रयी विक्रेता परित्यागीत्यर्थः, धन्यः कृतकृत्योऽस्ति अतोऽन्यशास्त्रेषु रसविक्रयिणां निन्दितत्वमुक्तं यत्तदसमञ्जसमेवेति भावः ॥ ३७ ॥

किञ्च वर्णसङ्करकारिणां गीतायां नरकपात उक्तोऽत तून्मत्तस्तद्विपरीतं प्रलपति ।

अन्तर्याम्यात्मना येन रचितो वर्णसङ्करः ।
स्वयं शङ्कर एवासौ वर्णितो वर्णसङ्करी ॥ ३८ ॥

अन्तरिति । हे शिष्य येन ज्ञानिना अन्तर्याम्यात्मनाऽन्तः सर्वभूतानां भौतिकानां चान्तरे वर्तमानः सन्तानि सर्वभूतानि यमयति अस्मादन्तर्यामी स एवात्मा स्वरूपं यस्य तेन 'यः सर्वेष्वन्तः तिष्ठन्सर्वाणि यमयती'ति श्रुतेर्वर्णसङ्करो वर्णानां ब्राह्मणादीनां सङ्करो मेलनं रचितोऽद्वितीयब्रह्मचैतन्यमात्ररूपेणैक्यं प्रापितोऽसावुक्तविधो वर्णसङ्करी वर्णानां ब्राह्मणादीनां सङ्कर ऐक्यं विद्यतेऽस्य स तथोक्तः स्वयं स्वतः सिद्धः शङ्कर एव शं सुखं जगतः करोतीति शङ्करो जगदानन्दकरः परमात्मैव

'एष ह्येवानन्दयाति—एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुप-जीवन्ती'त्यादिश्रुतिभिर्वर्णितः कथितः, अतो ।

'दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
नरके नियतं वासो भवतीत्यनुशुश्रुम' ॥

इत्यादिभिर्वाक्यैर्वर्णसङ्करकारिणां नरकवासो भवतीति यत्प्रतिपादितं तदसमञ्जसमेवेति भावः ॥ ३८ ॥

इदानीं वेदप्लाविनां लोकशास्त्रे दुर्गतिः प्रोक्ताऽत्र तून्मत्तस्त-द्विरुद्धं प्रलपति ।

येन वेदाः समभ्यस्य विदित्वाऽर्थं स्वचिन्तया ।
प्लाविताः सह वेदान्तैर्वेदप्लावी स मुच्यते ॥ ३९ ॥

येनेति । हे शिष्य येन ज्ञानिना वेदाः श्रुतयः समभ्यस्य सम्यगधीत्य ततस्तेषामर्थं तात्पर्यं जीवब्रह्मैक्यरूपं विदित्वा ततः स्वचिन्तया स्वात्मचिन्तनहेतुना वेदान्तैरुपनिषद्भिः सह साकं ते वेदाः प्लाविता विसृष्टाः स एतादृशो वेदप्लावी वेदा-भ्यासत्यागी मुच्यते मुक्तो भवति अतो लोकशास्त्रेपूक्तमसम-ञ्जसमेवेति भावः ॥ ३९ ॥

इदानीं लोकशास्त्रेषु शिवनिर्माल्यभोजिनां निन्द्यत्वमुक्तम-तोन्मत्तस्तद्विपरीतं प्रलपति ।

शिवे निवेदितं सर्वं शिवनिर्माल्यतां गतम् ।
तद्भुनक्ति पवित्रात्मा शिवनिर्माल्यभोजनः ॥ ४० ॥

शिव इति । हे शिष्य ज्ञानिना सर्वं समस्तं जगच्छिवे ब्र-ह्माभिन्ने प्रत्यगात्मनि निवेदितं तन्मात्रतयाऽवलोकितं तच्छिव-निर्माल्यतां शिवस्वत्वं गतं प्राप्तं तच्च जगद्विषयजातं पवित्रा-

रुधशेषं भुनक्ति अवलोकयति यः स शिवनिर्माल्यभोजनः प-
वित्रात्मा शुद्धान्तःकरणः सन् मुच्यते मुक्तो भवति अतो लो-
कशास्त्रे शिवनिर्माल्यभोजिनां दुर्गतिरुक्ता तदसमञ्जसमेवेति
भावः ॥ ४० ॥

किञ्चाऽन्यशास्त्रेषु स्त्रीभोगो निषेधितः पातित्यहेतुत्वाद्ब्र-
ह्मचारिणामत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

ब्रह्मचर्यं गतो भुङ्क्ते सर्वा नगरनायिकाः ।
लिप्यते न स पापेन चित्रं वेदान्तदर्शनम् ॥ ४१ ॥

ब्रह्मचर्यमिति । हे शिष्य यः पुरुषो ब्रह्मचर्यं ब्रह्मणि
चरतीति ब्रह्मचरो ब्रह्माभिन्नः प्रत्यगात्मा तस्येदं ब्रह्मचर्यं
स्वस्मिन्ब्रह्माभिन्नस्फूर्तिरूपं कर्म गतः प्राप्तः सन् सर्वाः समस्ता
नगरनायिका नगरं शरीरं तस्मिन्नायिकाः स्वविषयान्भोक्तारं
प्रतिप्रापिका वृत्तयस्ता भुङ्क्तेऽनुभवति स उक्तलक्षणो ब्रह्म-
चारी पापेन किल्बिषेण न लिप्यते सम्बद्धो न भवति, नन्वेवं
लोकविरुद्धं शास्त्रविरुद्धं चैतत्कथं सम्भाव्यमित्याशङ्क्याह चि-
त्रमिति, वेदान्तदर्शनं दृश्यते ज्ञायते ब्रह्मानेनेति दर्शनं शास्त्रं वे-
दान्तनामकं दर्शनं शास्त्रं चित्रमत्याश्चर्यमस्ति वेदान्तशास्त्र-
स्याश्चर्यरूपत्वात्तदर्थस्याप्याश्चर्यरूपत्वमत उक्तेर्थे सम्भावना
कार्येति भावः ॥ ४१ ॥

किञ्च लोकशास्त्रेषूच्छिष्टभोजनं निषेधितमत्र तून्मतस्तद्वि-
रुद्धं प्रलपति ।

योगिनामवधूतानां शुकादीनां मुखाच्च्युतम् ।
किञ्चिदुच्छिष्टमास्वाद्य मुच्येदुच्छिष्टभोजनः ॥४२॥

योगिनामिति । हे शिष्य योगिनां जीवात्मैक्यानुभविनां

अत एवावधूतानां वर्णाश्रमतद्धर्मातीतानां शुकादीनां शुको व्यासपुत्र आदिः प्रथमो येषां दत्तभरतप्रभृतीनां मुखाद्वदना-च्च्युतं निसृतमुच्छिष्टं तदनुभवस्य सर्वस्यावर्णनीयत्वात्तदनुभव-स्योच्छिष्टरूपं वाक्यजातं किञ्चित्स्वल्पमपि आस्वाद्य तदनुभवम-ङ्गीकृत्य वर्तमानः स तादृश उच्छिष्टभोजन उच्छिष्टस्य भोजनं भोगो यस्य स तादृशो मुख्येन्मुक्तो भवेदतो लौकिकशास्त्रे-षूक्तमुच्छिष्टभोजिनां पातित्यमसमंजसमेवेति भावः ॥ ४२ ॥

किञ्च लोकशास्त्रेषु ।

'स्वदत्तां परदत्तां वा हरेत सुरविप्रयोः ।

स याति नरके घोरे यावदिन्द्राश्चतुर्दशे'ति ॥

ब्राह्मणवृत्तिहारिणां नरकपातो वर्णितोऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

ब्रह्म जानाति तस्यैव ब्राह्मणस्य स्वचेतसः ।

वृत्तिलोपः कृतो येन स धन्यो वृत्तिलोपकृत ॥४३॥

ब्रह्मेति। यः पुरुषो ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं प्र-त्यगभिन्नं वस्तु जानाति अहमिति वेत्ति तस्य स्वचेतसः स्व आत्मैव चेतोऽन्तःकरणं यस्य तस्य तादृग्विधस्यैव मुख्यस्य ब्राह्मणस्य ब्रह्मविदो येन तदुपदेष्ट्रा वृत्तिलोपोऽन्तःकरणस्या-सत्त्वप्रदर्शनेन तद्वृत्तीनां लोपो विनाशः कृतोऽसत्त्वं सम्पादित-मित्यर्थः, स उक्तलक्षणो ब्राह्मणस्य वृत्तिलोपकृद्वृत्तीनां लो-पो विनाशस्तस्य कृत्कर्ता धन्यः कृतकृत्योस्तीति ज्ञेयम्, अतो ब्राह्मणवृत्तिहारिणां नरकप्राप्तिर्भवतीति यदुक्तं तदयुक्तमेवे-ति भावः ॥ ४३ ॥

किञ्च पुराणेषु वृन्ताकदग्धान्नकालञ्जगृञ्जनादिभक्षकाणां भगवत्प्राप्तिर्दूरेति प्रतिपादितमत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

यस्तु वृन्ताकदग्धान्नं कलिञ्जादि यदृच्छया।
लब्धमश्नाति हि मुनिस्तस्यादूरतरो हरिः॥ ४४॥

यस्त्विति। यस्तु ज्ञानिषु प्रसिद्धो मुनिर्मननवान्विहितान्नसम्पादनेन मनने विक्षेपबाहुल्यदर्शनाद्यदृच्छयाऽयत्नतो लब्धं प्राप्तं वृन्ताकदग्धान्नं वृन्ताकन्दग्धमन्नं च स्थालीपुरीषं तयोः समाहारस्तत्कलञ्जादि कलञ्जमादि मुख्यं यस्य तत्तथोक्तमादिपदेन लशुनगृञ्जनादिकमपि अश्नाति भक्षति तस्य निषिद्धवृन्ताकादिभोजिनो हरिः सर्वद्वैतहरणशील आत्माऽदूरतरो न दूरतरोऽतिसन्निकृष्ट इत्यर्थः, अस्ति अतो लोकशास्त्रेषु कलञ्जादिभक्षकाणां भगवत्पदं दूर इति यदुक्तं तदयुक्तमिति भावः॥४४॥

किञ्च धर्मशास्त्रे वारुणीपानेन नरकप्राप्तिर्भवतीति प्रतिपादितमत्र तून्मत्तस्तद्विपरीतं प्रलपति।

भृगवे वरुणेनोक्ता ब्रह्मविद्या तु वारुणी।
तद्वारुणीरसास्वादमत्तानामुत्तमा गतिः॥ ४५॥

भृगव इति। हे शिष्य भृगवे भृगुनामकाय वरुणपुत्राय तमेव वरुणं शरणंगताय वरुणेन प्रचेतसोक्ता कथिता या ब्रह्मविद्या ब्रह्मणो देशकालवस्तुकृतपरिच्छेदशून्यस्य वस्तुनो विद्या ज्ञानमस्ति सा तु सैव वारुणी वारुणीनाम्न्यस्ति वरुणेन प्रोक्तत्वात् 'तेन प्रोक्तमि'त्यण् 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'ति श्रुतेः, तद्वारुणीरसास्वादमत्तानां सोक्तलक्षणा या वारुणी वारुणीनाम्नी मदिरा तस्या रसः सुखं 'रसो वै स'इति श्रुतेस्तस्यास्वादोऽनुभवस्तेन मत्ता उन्मनीभावं प्राप्तास्तेषामुत्तमा श्रेष्ठा गतिः स्थितिर्भवति, यद्वोद्गतं निवृत्तं तमोऽज्ञानलक्षणमान्ध्यं यस्याः सकाशादित्युत्तमा

स्वयंप्रकाशात्मस्वरूपा स्थितिर्भवतीत्यर्थः, अतो धर्मशास्त्रेषु वारुणीपानेन नरकपातो भवतीत्युक्तमसमञ्जसमेवेति भावः॥४५॥

अस्यैवार्थं स्पष्टयति ।

परागवृत्तिं परित्यज्य या प्रत्यक्सा तु वारुणी ।
तदाभ्यासरतानां च न दूरे परमं पदम् ॥ ४६ ॥

परागवृत्तिमिति । हे शिष्य परागवृत्तिं पराची बाह्यदृश्यविषया या वृत्तिरन्तःकरणस्य साभासोंशस्तां परित्यज्य विहाय या प्रसिद्धा ज्ञानिषु प्रत्यगन्तरात्मविषयिण्यपरोक्षानुभूतिरित्यपरपर्यायाऽस्ति सा तु लोकप्रसिद्धवृत्तिविलक्षणोक्तलक्षणा वृत्तिरेव वारुणी वरुणेन प्रोक्ता वारुण्यस्तु ततः किमित्यत आह तदिति, तदभ्यासरतानां तस्या उक्तलक्षणाया अहंब्रह्मास्मीति वृत्तेर्योऽभ्यासः पुनःपुनरावर्त्तनं तत्र ये रता रममाणास्तेषां च तेषामेव नान्येषामित्यर्थः, परमं कार्यकारणातीतं पदं स्वरूपं न दूरे नैव दूरदेशेऽस्ति किन्तु समीपमेवास्ति आत्मत्वात्तद्वृत्तिमत्वाच्च तेषामिति भावः॥४६॥

किञ्च शास्त्रेषु अजितेन्द्रियाणां मोक्षो नास्तीत्यापादितमत्र तून्मतस्तद्विरुद्धं प्रलपति ।

सुन्दरीं वीक्ष्य चित्कान्तामिन्द्रियेश्वरमिन्द्रियम् ।
मानसं स्खलितं येषां ते मुक्ता अजितेन्द्रियाः॥४७॥

सुन्दरीमिति । हे शिष्य येषां ज्ञानिनां सुन्दरीं सुखस्वरूपां चित्कान्तां कमनीयां चिद्रूपां वीक्ष्य साक्षादवलोक्य चिद्रूपां मुमुक्षुकामनाविषयामनुभूयेत्यर्थः, इन्द्रियेश्वरं समस्तेन्द्रियाणामध्यक्षमिन्द्रियमन्तःकरणरूपं मानसं मनः स्खलितं स्त्रस्तमसत्त्वं संपन्नमित्यर्थः, लोकेपि स्खलितेन्द्रियाणामजिते-

न्द्रियत्वप्रसिद्धेस्त उक्तलक्षणा स्खलितेन्द्रिया अजितेन्द्रिया न जितं वशीकृतमिन्द्रियमन्तःकरणं यैस्ते तथोक्ता मनसोऽसत्त्वात्तद्वशीकारस्यापि तथात्वादजितेन्द्रियत्वं मुक्ता मोक्षं प्राप्ता इत्यर्थः, मनोनाशस्यैव मोक्षत्वप्रसिद्धेरतोऽजितेन्द्रियाणां मोक्षो नास्तीत्युक्तिरयुक्तेति भावः ॥ ४७ ॥

किञ्च आरूढपतितानामशुचित्वं लोकशास्त्रे प्रतिपादितमत्र तून्मत्तस्तद्विरुद्धं प्रलपति।

योगभूमिं समारुह्य गम्भीरे ब्रह्मसागरे।
पश्चान्निपतितो लीन आरूढपतितः शुचिः ॥४८॥

योगभूमिमिति। हे शिष्य यः कोपि पुरुषः पूर्वं योगभूमिं योगो जीवब्रह्मैक्यज्ञानं तस्य भूमिं भुवं तुर्याभिधां सप्तमभूमिमित्यर्थः, समारुह्य सम्यगारुह्य संप्राप्येत्यर्थः, पश्चादनन्तरं गम्भीरे निम्ने ब्रह्मसागरे ब्रह्मदेशकालवस्तुकृतपरिच्छेदशून्यं वस्तु तदेव सागरः समुद्र इव तस्मिन्निपतितो योगभूमितो ब्रह्मणि स्खलितः सल्लीनस्तत्रैव लयं प्राप्तः स तथाविध आरूढपतितः पूर्वमारूढः पश्चात्पतितः पातं प्राप्तः स शुचिः शुद्धोऽस्ति अत आरूढपतितानां यत्पातित्यं प्रतिपादितं तदमज्ञस्यैवेति भावः ॥ ४८ ॥

किञ्च लोकशास्त्रे कर्मनाशानदीजलस्पर्शो निषेधितोऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति।

चिद्विद्याकर्मनाशायां नद्यां स्नानं मया कृतम्।
कर्मनाशाजलस्पर्शात्कर्मबन्धो निवर्त्तते ॥ ४९ ॥

चिद्विद्येति। हे शिष्य मया साधिष्ठानबुद्धिस्थचिदाभासेन चिद्विद्याकर्मनाशायां चितो विद्या ज्ञानं प्रत्यगभिन्नब्रह्मचैतन्य-

ापिकाहं ब्रह्मस्मीतिप्रमाख्या वृत्तिरत्र ग्राह्या, सैव कर्म त्रिवि-
मपि सञ्चितप्रारब्धक्रियामाणाख्यं नाशयतीति सा तथोक्ता
स्यां नद्यां सन्ततं प्रवाहवत्त्वेन नदीवत्तस्यां स्नानमवगाहनं
तमाचरितं 'क्षीयन्ते चास्य कर्माणी'ति श्रुतेः, 'ज्ञानाग्निः सर्वक-
र्णीति स्मृतेः, ततश्च किंफलं प्राप्तं तत्राह कर्मनाशेति, कर्मना-
ाजलस्पर्शात्कर्मणां नाशिका या विद्या तस्या यज्जलं रसशब्द-
ाच्यं ब्रह्मसुखं तस्य स्पर्शोऽनुभवस्तस्माद्, यद्वा डलयोरभे-
ात्कर्मनाशया सह यो जडस्य जाड्यांशस्य स्पर्शो योगस्त-
मात्कर्मबन्धः कर्मभिः कृतो यो बन्धो बन्धनमकर्त्रात्मनि क-
भोक्तृत्वरूपः स निवर्त्तते विनश्यतीत्येवं मत्कर्मबन्धनिवृत्त्या
िश्चितमतः कर्मनाशाजलस्पर्शो न कर्त्तव्य इति लोकशास्त्रेषू-
क्तमसमञ्जसमेवेति भावः ॥ ४९ ॥

किञ्चाङ्गवङ्गादिनिषिद्धदेशेषु वासे कृते पुनः संस्कारः
र्त्तव्य इति लोकशास्त्रेषूक्तमत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
सर्वत्र परिपूर्णोऽहं पुनः संस्कारवर्जितः ॥ ५० ॥

अङ्गवङ्गेति । हे शिष्य अङ्गवङ्गकलिङ्गेषु अङ्गश्चाङ्गनामको
शविशेषो वङ्गश्च वङ्गनामको देशविशेषः कलिङ्गश्च कलिङ्गनाम-
ो देशविशेषस्तथा सौराष्ट्रमगधेषु च सौराष्ट्रश्चैतन्नामको देश
षु अनुक्तसमुच्चयार्थश्चशब्दः सर्वत्रोक्तानुक्तेषु सर्वेषु निषि-
देशेषु शुद्धदेशेऽपि अहमहंपदलक्ष्यो ब्रह्माभिन्नः प्रत्यगात्मा
रिपूर्णः व्याप्तोऽस्मि तथापि पुनः संस्कारवर्जितः पुनर्भूयः
स्कारो व्रतबन्धादिरूपस्तेन वर्जितो रहितः, किञ्च पुनर्वारं वारं
ः संस्कारो जन्मादिकारणीभूतो वासनारूपस्तेनापि वर्जितो ही-
ोऽस्मि निर्विकारब्रह्मरूपत्वादतो वङ्गादिनिन्द्यस्थानात्पुनः-

संस्काररूपं प्रायश्चितमभिहितं तदयुक्तमेवेति भावः ॥ ५० ॥

किञ्च गृहस्थानां स्वगृहं त्यक्त्वाऽन्यगृहवासो निषेधित
लौकिकशास्त्रेषु अत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

निजं गृहं परित्यज्य रमते परमन्दिरे ।
स गृहस्थो गतिं गच्छेत्परामिति विदां मतम् ॥ ५

निजमिति । हे शिष्य यो गृहस्थो निजं स्वीयं गृहं गृह्य
स्वात्मतयाऽङ्गीक्रियत इति गृहं शरीरत्रयं परित्यज्य विसृज्य श
रीरत्रये स्वत्वं स्वीयत्वं चोभयमपि विहायेत्यर्थः, परमन्दिरे प
कार्यकारणातीतं परिपूर्णस्वरूपं च यद्ब्रह्माभिन्नं प्रत्यगात्मचै
न्यं तदेव मन्दिरं गृहमिव सर्ववासत्वात्तस्मिन्ब्रह्माभिन्ने प्रत्यग
त्मनि रमते क्रीडति स उक्त लक्षणो गृहस्थो लोकदृष्ट्या व्य
हारदशायां गृहस्थो गृहे शरीरत्रये स्थः स्थितोपि परामतिश्रे
गतिं ब्रह्माभिन्नप्रत्यगात्मरूपां स्थितिं गच्छेत्प्राप्नुयादित्येवं वि
दां ज्ञानिनां मतं निश्चितमस्ति अर्थाल्लौकिकशास्त्रे परगृहेषु रम
स्वगृहत्यागेन गृहस्थानां नरकप्राप्तिरिति वर्णितं यत्तदज्ञानि
तमेवेति भावः ॥ ५१ ॥

किञ्च 'न जातु कामान्नभयान्न लोभाद्धर्मं त्यजेज्जीवि
स्यापि हेतोः' इत्यादिना लौकिकशास्त्रेषु सुखलोभेन सुकृतलक्ष
धर्मो न त्याज्य इत्युक्तमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

आत्मनः सुखलोभेन सुकृतं येन हारितम् ।
स एव सुकृती शेषः सुकृत्यपि हि दुष्कृती ॥ ५

आत्मन इति । हे शिष्य येन पुरुषेणाऽऽत्मनो ब्रह्माभिन्न
त्यगात्मनाऽभेदेऽपि भेदव्यपदेशेन षष्ठी राहोः शिर इति
वात्मनः स्वरूपभूतमित्यर्थः, यत्सुखम् 'आनन्दो ब्रह्मेति व्यजा

,विज्ञानमानन्दं ब्रह्म, यो वै भूमा तत्सुखं, रसो वै स, इत्यादि-
तिभ्यस्तस्य सुखस्यानन्दस्य लोभेनाऽलंबुद्ध्यभावेन
।पित्तेन सुकृतं पुण्यकर्मापि हारितं विनाशितमसत्त्वदृष्ट्याना-
ं, यद्वा हारितमीश्वरे समर्पितं 'नान्योतोऽस्ति द्रष्टे'त्यादिश्रुतेः
।मात्मनः सकाशात्कर्तृत्वस्य पृथगसत्त्वेन स्वकर्तृकं सुकृतं प्र-
तीयते तन्न स्वस्य किन्त्वीश्वरस्यैवस्वेवं परात्मनस्तन्न ममेति
।श्चितमिति भावः, स एवोक्तलक्षणः सुकृतत्यागेव सुकृती
कृतं पुण्यकर्मास्यास्तीति स तथोक्तः सर्वपुण्यफलभूतात्मसुख-
भवत्त्वाच्छेषस्तदन्यः कश्चित्सुकृत्यपि हि लौकिकशास्त्रेषु प्र-
द्धो लोकदृष्ट्यापि पुण्यकर्मा प्रतीयमानोऽपि अस्मद्दृष्ट्या
ष्कृती दुष्कृतं पापकर्मास्य विद्यते स तथाभूतोऽस्ति संसा-
लक्षणनरकप्राप्तिहेतुत्वाल्लौकिकपुण्यकर्मणोऽतः सुखलोभ-
।माभ्यां जन्ममरणादिसंसारभयहेतुकत्वात्तद्विहाय सर्वदा
द्रूपस्थितिरूपजीवनहेतुत्वेन सुकृतत्यागादेव मुक्तिसिद्धेर्न
ास्त्वित्यादिसूक्तमुन्मत्तप्रलपितमेवेति भावः ॥ ५२ ॥

किञ्च लोकशास्त्रेषु ज्ञानस्यैव ज्ञानत्वं विवेकस्यैव विवेक-
।मद्वैतरूपस्यैव कैवल्यत्वं प्रतिपाद्यतेऽत्र तून्मत्तस्तद्विपरीतं प्रल-
ति ।

अज्ञानमेव विज्ञानमविवेको विवेकिता ।
सर्वात्मकत्वं कैवल्यं येषां ते सिद्धसत्तमाः ॥५३॥

अज्ञानमेवेति । हे शिष्य अज्ञानमेव न विद्यते ज्ञानं यस्मा-
दज्ञानमुत्तमं ज्ञानं, यद्वा न विद्यते ज्ञानं ज्ञेयविषयीकरणं यस्मि-
दज्ञानं चैत्यरहितं चिन्मात्ररूपं प्रत्यगभिन्नं ब्रह्मचैतन्यं तदेव
ज्ञानं विशिष्टं ज्ञानं येषां, किञ्चाऽविवेको विवेकिताऽविवेको
ाविक्तस्वरूपत्वाद्विवेकसदृशोऽविवेको विवेकिता येषामस्ति

सर्वद्वैतात्यन्तासत्त्वाद्वात्मैवाविवेकशब्देन ग्राह्य उभयत्र नञ्युदासार्थो न ब्राह्मणोऽब्राह्मण इति वाद्विवेकिता विवेकित्वं विवेकफलमित्यर्थः, येषामस्ति किञ्च सर्वात्मकत्वं समस्तस्य जगतो द्वैतस्य 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिदृष्ट्या सर्वबाधेनाऽऽत्मकत्वं ब्रह्माभिन्नप्रत्यगात्मत्वं केवल्यं केवलस्याखण्डरसात्मन आत्मकत्वं येषामस्ति त उक्तलक्षणवन्तः सिद्धसत्तमाः सिद्धेषु स्वात्मसाक्षात्कारवत्सु मध्ये सत्तमा अतिश्रेष्ठा ज्ञेयाः, अतो लोकशास्त्रे ज्ञानस्य ज्ञानत्वं विवेकस्य विवेकत्वमद्वैतस्य केवलत्वं यदुक्तं तदसमञ्जसमेवेति भावः ॥ ५३ ॥

किञ्च लोकशास्त्रेषु विपरीतकारिणां नरकपातो वर्णितोऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

बोधो यदवधानेन तन्मनो नाशयन्ति ये ।
विपरीतकृतां तेषां मुक्तिरित्याह शङ्करः ॥ ५४ ॥

बोध इति। ये ज्ञानिनो यदवधानेन यस्य मनसो मनःकर्तृकमवधानमनुसन्धानं तेन कृत्वा बोधः श्रवणादिना जीवब्रह्मैक्यज्ञानं जायते तत्स्वोपकारकं मनश्चित्तं नाशयन्ति आत्मनः पृथगसत्त्वदृष्ट्याऽवलोकयन्ति तेषामुक्तविधानां विपरीतकृतां विपरीतकारिणां मुक्तिर्मोक्षो भवतीति एवं शङ्करः सर्वजगत्सुखप्रदः शिव आह कथयामास शङ्करपदेन तद्वचने प्रमाणता सूचिता, एवं वदतामेव च शङ्करत्वमपि अतो विपरीतकारिणां नरकपातो भवतीत्यसमञ्जसमेवोक्तमिति भावः ॥ ५४ ॥

किञ्च लोकशास्त्रे स्वधर्मकीर्तनं निषिद्धमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

वेदान्तपाठरूपेण स्वधर्माः कीर्त्तिता मया ।

स्वधर्मकीर्त्तनादेव सायुज्यं पदमर्जितम् ॥ ५५ ॥

वेदान्तेति । हे शिष्य मया ज्ञानवता वेदान्तपाठरूपेण वेदान्तानामुपनिषदादिग्रन्थानां पाठः पठनं तदेव रूपं स्वरूपं यस्य तेन स्वधर्माः स्वस्यात्मनो ये धर्मा असङ्गनिर्विकारत्वादिस्वभावाः कीर्तिताः कथिताः सन्ति तेन च किं फलं प्राप्तं तदाह स्वधर्मेति, स्वधर्मकीर्तनात्स्वस्यात्मनो ये धर्माः स्वभावास्तेषां कीर्तनं कथनं तस्मात्सायुज्यं ब्रह्मणा सहैक्यं पदमेवाऽर्जितं सम्पादितमतो धर्मशास्त्रे स्वधर्मकीर्तननिषेधोऽयुक्त एवेति भावः ॥५५॥

किञ्च द्विभार्यब्राह्मणस्य पूर्वपतिव्रताभार्यात्यागेन द्वितीयभार्यानिषेधो धर्मशास्त्रेऽभिहितो ऽत्र तून्मत्तः स एव विहित इति प्रलपति ।

द्विभार्यो ब्राह्मणो यस्तु त्यजेत्पूर्वां पतिव्रताम् ।
परस्या गुणलोभेन स याति परमां गतिम् ॥ ४६ ॥

द्विभार्य इति । हे शिष्य यस्तु यो ज्ञानिषु प्रसिद्धो लोकविलक्षणो द्विभार्यो द्वे भार्ये जाये यस्य स तथोक्तः प्रवृत्तिनिवृत्त्याख्ये भार्ये अत्र वक्ष्यमाणो ब्राह्मणो ब्रह्मवेत्ता परस्या द्वितीयभार्याया गुणलोभेन गुणानां शान्तिदान्त्यादिधर्माणां लोभेनेच्छया पूर्वां प्रथमभूतां पतिव्रतां पत्युः कर्तृरूपस्य व्रतं नियम इव नियमो व्रतं यस्यास्तां त्यजेज्जह्यात्स उक्तलक्षणः पूर्वभार्यात्यागी परमां श्रेष्ठां मुक्तिरूपां गतिं स्थितिं याति प्राप्नोति ॥ ५६ ॥

एतच्छ्लोकस्यार्थं स्वमुखेनैव प्रतिपादयितुं गद्येन प्रतिजानीते ।

एतस्यविवरणम् ।

एतस्येति । एतस्यास्य श्लोकस्य विवरणं व्याख्यानं क्रियत इति शेषः, तत्प्रतिज्ञातमेवाह ।

प्रवृत्तिश्चानिवृत्तिश्च द्वेभार्ये वेदबोधिते ।
प्रथमा कर्मनिष्ठा स्याद्ब्रह्मनिष्ठा तथाऽपरा ॥ ५७ ।

प्रवृत्तिश्चेति । हे शिष्य ब्रह्मविदो ब्राह्मणस्य प्रवृत्तिश्च प्रवृत्तिनाम्न्येका निवृत्तिश्च निवृत्तिनाम्न्यपरेत्येवं द्वे उभे भार्ये जाये 'तज्जाया जाया भवति यदस्यां जायते पुनरि'ति श्रुतेः प्रवृत्तिस्त्रियां प्रवृत्तरूपेण स्वोत्पत्तेनिवृत्तिस्त्रियां च निवृत्तरूपेण स्वोत्पत्तेश्चानुभूयमानत्वात्प्रवृत्तनिवृत्तयोश्च पोषकत्वेनाप्युभयोर्भार्यात्वं प्रवृत्तिनिवृत्त्योरिति ज्ञेयं, ते एते भार्ये वेदबोधिते वेदेन श्रुत्या बोधिते प्रतिपादिते स्तः, तयोः स्वभावभेदेनापि नामान्तरे आह प्रथमेति, प्रथमा प्रवृत्तिनाम्नी भार्या कर्मनिष्ठा कर्मणि विहितक्रियायां निष्ठा सहजप्रीतिर्यस्याः सा तथोक्ता स्याद्भवेत्तथा तद्वदपरा निवृत्तिनाम्नी भार्या ब्रह्मनिष्ठा ब्रह्मणि देशकालवस्तुकृतपरिच्छेदशून्य आत्मवस्तुनि निष्ठा सहजं प्रेम यस्याः सा तथाविधाऽस्ति भवति एते उभे मती अत्र ग्राह्ये ॥ ५७ ॥

स्वभावान्तरभेदेनापि तयोर्नामभेदान्तरमाह ।

कर्कशा रसिका चेति तयोर्नामान्तरं क्रमात् ।
कर्कशा कर्मकाण्डस्था रसिका ब्रह्मवादिनी ॥५८॥

कर्कशेति, । हे शिष्य तयोः प्रवृत्तिनिवृत्त्योः कर्कशा दुःखप्रदत्त्वात्कर्कशा कठोरा रसिका च सुखप्रदत्वाद्रसिका सुखदेत्येवं क्रमात्क्रमेण नामान्तरमन्यदपि नामान्तरं नामभेदोऽस्ति जातित्वादेकवचनं तयोः स्थाने अप्याह कर्कशेति, हे शिष्य

कर्कशा कर्कशानाम्नी भार्या कर्मकाण्डस्था कर्मणः प्रतिपादकं यत्काण्डं वेदभागः तस्मिन्नेव तिष्ठतीति सा तथोक्ताऽस्ति, प्रवृत्तिनाम्न्याः भार्यायाः कर्मकाण्डमेव स्थानं तत्रैव तत्स्थितेरुपलभ्यमानत्वादिति भावः, किञ्च रसिकैतन्नाम्नी भार्या ब्रह्मवादिनी देशकालवस्तुकृतपरिच्छेदशून्यमात्मवस्तु वदितुं शीलमस्याः सा तथोक्ताऽस्ति ब्रह्मप्रतिपादकोपनिषद्भागे तदुपलब्धेस्तदेव तत्स्थानमिति भावः ॥ ५८ ॥

ननु कर्कशा भार्या दुःशीलत्वाद्व्यभिचारिणी स्यादतस्याऽस्यैव सेत्याशङ्क्य द्वयोरपि पातिव्रत्यमाह।

कर्कशा रसिका चेति यद्यपि द्वे पतिव्रते।
रसिका स्वपतिं भुङ्क्ते कर्कशा कष्टभागिनी ॥५९॥

कर्कशेति। हे शिष्य कर्कशा प्रवृत्तिनाम्नी भार्या रसिका च निवृत्तिनाम्नी भार्यापीत्येवम्प्रकारे द्वे उभे पतिव्रते पत्युः प्रवृत्तस्य निवृत्तस्य च प्रमातुर्व्रतं नियमः कर्मप्रवृत्तिज्ञानप्रवृत्तिरूप इव व्रतं नियमो ययोस्ते तथोक्ते स्तो यद्यपि सत्यमेवैतत्तथापि रसिका निवृत्तिभार्या स्वपतिं स्वस्याः पतिः पालको ब्रह्माभिन्नः प्रत्यगात्मा तमेव सर्वदा भुङ्क्तेऽनुभवति किञ्च कर्कशा प्रवृत्तिभार्या कष्टभागिनी कष्टं दुःखं संसाररूपं भजते सेवते तच्छीलाऽस्ति एवं तयोरन्तरं ज्ञेयम् ॥ ५९ ॥

अन्यमप्युच्चत्वनीचत्वरूपं भेदमाह।

कर्मनिष्ठा तु दासीव गृहकर्मरता सदा।
ज्ञाननिष्ठा महाराज्ञी राजसिंहासने स्थिता ॥६०॥

कर्मनिष्ठात्विति। हे शिष्य कर्मनिष्ठा तु कर्मणि विहितक्रियायां निष्ठा सहजप्रीतिर्यस्याः सा तथोक्ता प्रवृत्तिभार्या तुपदे-

नास्या निवृत्तिभार्यातो महन्नीचत्वं सूचितं, तदेव स्पष्टयति दासीव यथा दासी सदैव गृहकर्म लेपनसंमार्जनादिकं करोति सम्पादयति तद्वत्सर्वदा सर्वकालं गृहकर्मरता गृह्यते स्वात्मतयाऽङ्गीक्रियत इति गृहं शरीरं तस्य यत्कर्म स्वस्ववर्णाश्रमविहितं सन्ध्यावन्दनादि नित्यं नैमित्तिकं च जातेष्ट्यादिकं तत्र रताऽऽसक्ता भवति, ज्ञाननिष्ठा ज्ञाने जीवब्रह्मैक्यबोधे निष्ठा सहजप्रीतिर्यस्याः सा तथोक्ता निवृत्तिभार्या महाराज्ञी महानपरिच्छिन्नब्रह्मरूप आत्मैव राजा स्वयम्प्रकाशत्वात्तस्येयं महाराज्ञी स्वयम्प्रकाशात्मविषयिणीत्यर्थः, अतः सा राजसिंहासने राज्ञः स्वयंप्रकाशात्मनः सिंहासने हिंसति सर्वं द्वैतमिति सिंहं सर्वद्वैतापवादरूपमासनं स्थितिस्तस्मिन्नेव स्थिता वर्त्तत इत्यर्थः ॥६०॥

ननु कर्कशापि स्वपत्यर्थमेव कर्म करोति अतस्तस्याः कुतो दासीसादृश्यमुच्यते तत्राह ।

पतिहेतोर्दिवा नक्तं गृहकर्म करोतु सा
पतिं नालिङ्ग्य निद्राति कथं सौभाग्यभागिनी॥६२॥

पतिहेतोरिति । सा कर्कशा भार्या पतिहेतोः पतिः प्रमाता तस्य हेतुः प्रयोजनं तस्माद्दिवा नक्तं दिवसे रात्रौ च सर्वकालमित्यर्थः, गृहकर्म गृहं स्वात्मतया गृह्यतेऽङ्गीक्रियत इति गृहं शरीरं तस्य कर्म सन्ध्यावन्दनादिरूपं वैदिकं लौकिकं भोजनादिकं च 'शरीरं गृहमुच्यत' इत्युक्तेः करोतु निर्वर्त्तयतु तथापि यतः कारणात्पतिं पातीति पतिः स्वसत्ताप्रदानेन पालको बुद्धेरात्मा तं नालिङ्ग्य न परिरभ्य तेन सहैक्यमप्राप्येत्यर्थः, निद्राति निद्रां प्राप्नोतीत्यर्थः, प्रपञ्चास्फुरणपूर्वमात्मास्फुरणरूपां निद्रामनुभवतीति भावः, यद्वा प्रपञ्चास्फुरणपूर्वमात्मास्फुरणरूपामित्यर्थः, तस्याऽपि अवास्तवत्वान्निद्रात्वमेव 'या निशा सर्वभूतानां तस्यां

जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेरि'-
ति भगवद्वचनात्ततो हेतो सा कर्कशा सौभाग्यभागिनी सु शो-
भनं भगमैश्वर्यमसङ्गानन्दाद्वयादिरूपं सुभगमेव सौभाग्यं स्वार्थे
यत्तद्भजते तच्छीला कथं केन प्रकारेण स्यान्न कथमपी-
त्यर्थः ॥ ६१ ॥

किञ्च ।

रसरीतिं न जानाति कर्कशा कर्मवादिनी ।
पतिव्रता स्वभावेन भर्त्तारं स्तौति केवलम् ॥६२॥

रसरीतिमिति । कर्कशा प्रवृत्तिभार्या रसरीतिं रसस्य सुख-
स्य रीतिराचरणं 'रसो वै स' इतिश्रुतेस्तां न जानाति न वेत्ति,
किन्तु कर्मवादिनी कर्म क्रियामेव वदितुं प्रतिपादयितुं शीलमस्याः
सा तथाभूताऽस्ति, किञ्च पतिव्रता पत्युः प्रमातृरूपस्य स्वामिनो
व्रतं नियम इव व्रतं नियमो यस्याः सा तथा विधा यद्यपि त-
थापि सा स्वभावेन स्वस्या भावः स्नेहस्तेन कृत्वा भर्त्तारं स्व-
पोषकं प्रमात्तारं कर्तृत्वारोपेण तस्मिन्केवलं स्तौत्येव प्रशंसत्येव
न तु तत्त्वाच्विकरूपज्ञानेन तत्सुखमनुभवतीत्यर्थः ॥ ६२ ॥

इदानीं प्रवृत्तिभार्यायाः सकाशान्निवृत्तिभार्याया यदन्तरं
तत्प्रदर्शयति ।

ज्ञाननिष्ठा तु रसिका तत्तत्संस्कारलक्षणैः ।
आनन्दयति भर्त्तारं तमेवाश्लिष्य खेलति ॥ ६३ ॥

ज्ञाननिष्ठा त्विति । हे शिष्य ज्ञाननिष्ठा तु ज्ञाने जीवब्रह्मै-
क्यबोधे निष्ठा सहजप्रीतिर्यस्याः सा तथाविधा निवृत्तिभार्या
तुपदेन प्रवृत्तिभार्यायाः सकाशादस्या महद्वैलक्षण्यं सूचितं, तदेव
विशदयति रसिकेति, रसिका रसमात्मसुखं जानातीति रसि-

काऽस्ति अतस्तत्तत्संस्कारलक्षणैस्ते च ते शान्तिदान्त्यादयः संस्कारा वासनाविशेषास्तान्येव लक्षणानि चिह्नानि तैः कृत्वा भर्तारं स्वपोषकं ज्ञानात्मानमानन्दयति सुखीकरोति तमेव केवलं सुखात्मानमेव न तु दुःखितं संसार्यात्मानमित्यर्थः, आश्लिष्यालिङ्ग्य तेन सहैक्यं प्राप्येत्यर्थः, खेलति क्रीडतीत्यर्थः, जीवन्मुक्तस्वभावेन व्यापृणोतीति भावः ॥ ६३ ॥

किञ्च ।

आसने शयने याने भोजने सा तदन्विता ।

क्षणं न तिष्ठति स्वामी तां विना रसलालसः ॥६४॥

आसनेति । सा निवृत्तिभार्याऽऽसने स्थाने शयने पर्यङ्कादौ शयने च याने यात्रायां भोजनेऽन्नादिभक्षणे विषयभोगे वा क्रियमाणा इत्यादिसर्वक्रियासु तदन्विता तेन सुखरूपेणात्मनाऽन्विता युक्ता भवतीति शेषः, आत्मापि तां सक्त्वा क्षणमन्यत्र न तिष्ठतीति तयोरभेदज्ञानायाह क्षणमिति, स्वामी निवृत्तिभार्यायाः पतिश्चिदात्मेत्यर्थः, रसलालसः सन् रसो मुक्तिसुखं तस्मिन्लालसा यस्य स तथोक्तः सन् तां निवृत्तिवनितां विना ऋते क्षणं क्षणमात्रकालमपि न तिष्ठति न वर्त्तते निवृत्तिवनिताया निवृत्तात्मनश्चैकरूपेणावभासमानत्वादिति भावः ॥ ६४ ॥

अतो ज्ञानी प्रवृत्तिवनितायां नैव रमेतेत्याह ।

यस्तु जानाति चातुर्यान्महदन्तरमेनयोः ।

स कथं तत्र मूढायां रमेत किमु तत्सुखम् ॥६५॥

यस्त्विति । हे शिष्य यस्तु यः कोपि ज्ञानी तुपदेनाज्ञानितोऽस्य महदन्तरं सूचितं, चातुर्याच्चतुरः कुशलस्तस्य भावश्चातुर्यं तस्मादेनयोरुक्तविधयोः प्रवृत्तिनिवृत्तिभार्ययोर्मह-

इसन्तमन्तरं भेदं जानाति वेत्ति स ज्ञानी तत्र तादृशदुःखरू-
पभार्यायां तत्र हेतुर्मूढायामज्ञानरूपायां प्रवृत्तिभार्यायां कथं केन
हेतुना प्रकारेण वा रमेत रमतां ज्ञानाज्ञानयोस्तमःप्रकाशयो-
रिवैकत्र स्थित्यसम्भवान्न तयोः केनापि प्रकारेण क्रीडा सम्भ-
वतीति भावः, किमु तत्सुखं तादृशमूढस्त्रीभोगजन्यं सुखं किमु
किं तत्र किमपीत्यर्थः, असत्त्वाद्दुःखमिश्रितत्वाच्च न तत्सुखमे-
वेति भावः ॥ ६५ ॥

तर्हि तत्र केन रतिः कार्येत्यत आह ।

यस्तु कश्चिन्महामूढः पामरः पशुधर्मवान् ।
कर्कशायां रमते रसिकां च न विन्दति ॥ ६६ ॥

यस्त्विति । हे शिष्य यस्तु यः प्रसिद्धः कोपि पुरुषो म-
हामूढो महानत्यन्तं मूढो मूर्खोऽज्ञानित्वाद्दुःखदपदार्थसेवने
कदाचिज्जातेऽपि तज्जन्यदुःखानुभवेन तत्त्यागोऽपि स्यात्तस्य तु त-
दनुभवेपि तत्रैव पुनः पुनरासक्तत्वान्महामूढत्वमत एव पा-
मरो ग्रामीणस्तत्रापि पशुधर्मवान्पशूनां श्वादीनां मैथुनसमये शि-
श्नस्य योन्यन्तरवरोधनेन लोककृतताडनजन्यदुःखस्यानुभूयमा-
नत्वेपि तत्रैव पुनः पुनः प्रवृत्तिरूपो धर्म इव धर्मः प्रवृत्तिर्विद्य-
ते यस्य स तथोक्तः स उक्तलक्षणो मूर्खस्तत्र कर्कशायां प्रवृ-
त्तिरूपायां भार्यायां रमते क्रीडति, किञ्च स रसिकां च सुख-
प्रदां निवृत्तिवनितामपि न विन्दति नैव प्राप्नोति ॥ ६६ ॥

तस्यां च दुःखप्राप्तौ तया सह नित्यं च कलहे च जाय-
मानेपि तां न विसृजतीत्याह ।

तस्यां च दुःखमाप्नोति प्रत्यहं कलहायते ।
भूयस्तामेव भजते दौर्भाग्यं स्यत तादृशम् ॥ ६७ ॥

तस्यां चेति। सोऽतिमूढस्तस्यां प्रवृत्तिभार्यायां दुःख
क्लेशं प्राप्नोति लभते प्रत्यहं चेत्युभयान्वयि नित्यमेव कलहायते
कलहं करोति तथापि भूयः पुनरपि तामेव प्रवृत्तिभार्यां दुःख
रूपामेव भार्यां भजते सेवते, ननु दुःखानुभवे सति पुनस्तत्रैव
प्रवृत्तिः कुत इत्याशङ्क्याह दौर्भाग्यमिति, तस्यातिमूढस्य तादृशे
दुःखानुभवे सति पुनः पुनस्तत्रैव प्रवृत्तीच्छारूपं दौर्भाग्यमेव ज-
न्मान्तरीयं दुःखप्रदं कर्मैव तत्र प्रवृत्तीच्छाजनकं ज्ञेयम् ॥ ६७॥

इदानीमस्य द्विभार्यश्लोकविवरणस्य विषयं स्पष्टयति सार्धेन

अत्र द्विभार्यशास्त्रार्थे विषयो ऽयं व्यवस्थितः ।
निवृत्तिवनितां त्यक्त्वा प्रवृत्तो नरकं व्रजेत् ॥६८

अत्रेति। हे शिष्य अत्रास्मिन् द्विभार्यशास्त्रार्थे द्वे
उभे भार्ये जाये तयोः शास्त्रार्थे निर्णयेऽयं वक्ष्यमाणो विषयः
सिद्धान्तो व्यवस्थितो निश्चितोऽस्ति तमेव व्यक्तं दर्शयति नि-
वृत्तीति। निवृत्तिवनितां निवृत्तिरूपा या वनिता भार्या तां त्यक्त्वा
विहाय प्रवृत्तः प्रवृत्तिभार्यागामी नरकं संसारलक्षणं नरकं व्र-
जेत्प्राप्नुयात्संसारस्य नरकत्वे निरालम्बोपनिषच्छ्रुतिः 'को न-
रक इति, असत्संसारविषयिजनसंसर्ग एव नरक' इति ॥ ६८॥

प्रवृत्तिवनितां न्त्यक्त्वा निवृत्तो मोक्षमश्नुते ।
विषमोप्येष शास्त्रार्थः प्रमाणं व्यासवाक्यतः ॥६९

किञ्च प्रवृत्तिवनितां प्रवृत्तिनाम्नी या वनितां भार्या तां
त्यक्त्वा विहाय निवृत्तो निवृत्तिभार्यागामी मोक्षं मुक्तिमश्नुते प्रा-
प्नोति नन्वेतच्छास्त्रविरुद्धं स्वकपोलकल्पनयोक्तं कथमङ्गीका-
र्यमित्याशङ्क्याह विषमोपीति, एषोऽयं द्विभार्यशास्त्रविषयः

शास्त्रार्थो निर्णयोऽपि यद्यपि विषयो विरुद्धस्तथापि व्यासवाक्यतो व्यासः पाराशर्यस्तस्य वाक्येन प्रमाणं प्रामाणिकोऽस्ति व्यासवाक्यं च 'गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित इति, गुणदोषशब्दाभ्यां विधिनिषेधरूपा प्रवृत्तिरेवाभिहिता तत्त्याग एवोभयवर्जितपदेनाभिहितस्तस्यैव च गुणत्वप्रतिपादनं मुक्तिप्राप्तिहेतुत्वात्तथा ।

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' ॥

इति च, श्रुतिरपि 'त्यागेनैके अमृतत्वमानशुरि'ति ॥६९॥

एवं द्विभार्यश्लोकार्थं व्याख्यायात्र तत्समाप्तिं सूचयितुं गद्येनाह ।

इति प्रवृत्तिनिवृत्तिशास्त्रविवरणम् ।

इतीति । प्रवृत्तिनिवृत्तिशास्त्रविवरणं प्रवृत्तिः कर्मसु प्रवर्त्तनं निवृत्तिश्च मोक्षेच्छया ततो निवर्त्तनं तयोः शास्त्रमनुशासकं वाक्यं 'द्विभार्यो ब्राह्मण' इत्यादिरूपं तस्य विवरणं व्याख्यान मिति अत्र समाप्तं ज्ञेयम्, इत उत्तरं प्रकृतमुन्मत्तप्रलापनमेवेति ज्ञापयितुमाह।

अथान्यदपि ।

अथेति । अथ प्रवृत्तिनिवृत्तिशास्त्रविवरणानन्तरमन्यदपि पूर्वोक्तोन्मत्तप्रलापादन्यदितरदुन्मत्तप्रलापनमेवोच्यत इति शेषः, तत्र प्रथमं लोके कस्य चिद्भूतबाधायां सत्यां तस्यैहिकपारलौकिकसुखसाधनभूतकर्माद्यनुष्ठानासम्भवेन मोक्षसाधनज्ञानहेतुश्रवणाद्यनुष्ठानासम्भवेन च सर्वसुखाप्राप्त्या निन्द्यत्वं प्रसिद्धमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

एकौ विष्णुर्महद्भूतं व्यासेनोक्तं लगेद्यदि ।

तन्महाभूतसञ्चारे न दूरे परमं पदम् ॥ ७० ॥

एक इति । हे शिष्य एकः स्वगतसजातीयविजातीयभेदरहितो विष्णुर्व्यापनशीलः परमात्मा महद्देशकालवस्तुकृतपरिच्छेदशून्यं ब्रह्मरूपं भूतं सन्मात्रं पिशाचं चेति व्यासेनोक्तं बादरायणेन कथितमस्ति तद्यदि यर्हि लगेच्छरीरे सञ्चरेत्तर्हि तदा तन्महाभूतसंचारे तद्व्यासेनोक्तं महाभूतं ब्रह्मस्वरूपभूतं पिशाचमदृश्यत्वे सति सर्वप्राणिशरीरेषु सञ्चारित्वात्तस्य सञ्चारे प्रवेशे जाते सति परमं कार्यकारणातीतं पदं स्वरूपं न दूरे दूरदेशे नास्ति किन्तु समीप एव वर्त्तते लोके हि ब्रह्मभूतस्य प्रबलत्वमदृश्यरूपेण शरीरप्रवेशकारित्वं प्रसिद्धमिति तत्सादृश्येन विष्णोरपि ब्रह्मभूतत्वमतस्तत्कृतबाधावतोऽप्रयोजकं जीवनमिति यदुक्तं तदसमञ्जसमेवेति भावः ॥ ७० ॥

किञ्च डाकिनीमन्त्रजापकानां लोकशास्त्रे नरकपात उक्तोऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

डाकिनीसिद्धमन्त्रोऽयं ब्रह्मास्मीत्यक्षरात्मकः ।
भावनामात्रतो यस्य सद्यस्तद्रूपतां व्रजेत् ॥ ७१ ॥

डाकिनीति । हे शिष्य अयमेष ब्रह्मास्मीत्यक्षरात्मकोऽहमहंपदलक्ष्यः कूटस्थश्चिदात्मा स एव ब्रह्म देशाद्यपरिच्छिन्नमस्मि भवामीत्येवमात्मब्रह्मैक्यबोधकानि अक्षराणि वर्णा एवात्मा स्वरूपं यस्य स तथोक्तो डाकिनीसिद्धमन्त्रो डाकिनीनां सिद्धो मन्त्रो यथा भावनामात्रेण डाकिनीत्वप्रापको भवति स इवास्ति, कुत इत्यत आह भावनेति, यस्य ब्रह्मास्मीति मन्त्रस्य तस्यार्थस्य च भावनामात्रतः केवलं भावनयैव सद्यस्तत्कालमेव तद्भावकस्तद्रूपतां तस्य ब्रह्मणो रूपं स्वरूपं

स्य भावस्तत्ता तां व्रजेत्प्राप्नुयादतो डाकिनीमन्त्रसादृश्या-
स्य डाकिनीमन्त्रत्वमस्य च भावनया परमपदप्राप्तिदर्शनाड्डा-
किनीसिद्धमन्त्रजापकानां नरकपातो भवतीत्युक्तमसमञ्जसमे-
ति भावः ॥ ७१ ॥

किञ्च लोके कस्मिन्नपि पदार्थे ममत्वाभिनिवेशो न कार्य
इत्युक्तमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

गुरुशास्त्रप्रसादेन संप्राप्य परमं पदम् ।
ममैवेदं मया प्राप्तमिति प्राह स उत्तमः ॥ ७२ ॥

गुरुशास्त्रेति । हे शिष्य गुरुशास्त्रप्रसादेन गुरोर्महावा-
क्योपदेष्टुः शास्त्रस्य च वेदान्तस्य प्रसादः प्रसन्नता तेन कृत्वा
परमङ्कार्यकारणातीतं पदं स्वरूपं संप्राप्योपलभ्य यः पुरुष इदं
स्वरूपं ममैव प्रत्यगात्मनोऽहम्पदलक्ष्यस्यैवास्ति मया प्रत्यगा-
त्मना चिदाभासेनेदमिति साक्षात्प्राप्तं लब्धमित्येवं प्राह क-
थयति स पुरुष उत्तमः श्रेष्ठोऽन्योऽधमोऽस्ति अतो
गीताया'मिदमद्य मया लब्धमि'त्यादिनोक्तमिदं ममेदं मयालब्ध-
मित्येव जल्पनमासुरीसम्पत्त्वेन निन्द्यमिति तदयुक्तमेवेति
भावः ॥ ७२ ॥

किञ्च लोको हि यत्किञ्चनवस्तुनः प्राप्तेरेव प्राप्तिरिति
मन्यतेऽत्र तून्मत्तस्तद्विरुद्धं प्रलपति ।

यत्तु जन्मशताभ्यस्तविज्ञानैरपि वस्तुतः ।
न किञ्चिदपि सम्प्राप्तं तस्य प्राप्तिर्महीयसी ॥ ७३ ॥

यत्त्विति । हे शिष्य यत्तु यच्च लोकप्रसिद्धवस्तुविलक्षणं
वस्तु जन्मशताभ्यस्तविज्ञानैरपि जन्मनां जनीनां शतानि श-

तकानि अनन्तशतकानीत्यर्थः, तेष्वभ्यस्तानि अभ्यासेन स-म्पादितानि यानि विज्ञानानि तैः कृत्वापि वस्तुतः पारमार्थि-कदृशा किञ्चिदपि किमपि न प्राप्तं न लब्धमात्मस्वरूपस्य नित्योपलब्धत्वेन स्वयंप्रकाशत्वेन च ज्ञानप्राप्यत्वाभावादिति भावः, अतोऽलब्धमेवात्मस्वरूपं तस्यात्मस्वरूपस्याऽऽत्माऽलभ्य इति ज्ञानवतो वा प्राप्तिरुपलब्धिमहीयस्यतिश्रेष्ठाऽस्ति अतः किञ्चिद्वस्तुप्राप्तवतो लाभोऽप्राप्तवतोऽलाभ इति यदुक्तं तदसमञ्जसमेवेति भावः ॥ ७३ ॥

किञ्चातिसूक्ष्मस्यातिसूक्ष्मत्वं महतो महत्त्वं दृश्ये दृ-श्यत्वमदृश्येऽदृश्यत्वं परे परत्वं स्वे स्वत्वं च येन ज्ञायते त-त्प्रामाणिकं ज्ञानमित्युच्यतेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

अणीयसो महीयस्त्वं नेदीयस्त्वं दवीयसः ।
परस्य निजरूपत्वं यत्प्रत्येति प्रमा हि सा ॥ ७४ ॥

अणीयस इति । हे शिष्य अणीयसोऽतिसूक्ष्मस्य व-स्तुनो महीयस्त्वमतिमहत्त्वमतिशयितं महन्महीयस्तस्य भाव-स्तत्त्वमिति विग्रहः, दृश्यत्वाभावादतिसूक्ष्मस्य वस्तुनो देशाद्यप-रिच्छिन्नत्वेन ब्रह्मत्वादतिमहत्वं यद्यया प्रमया प्रत्येति अनुभवति, किञ्च दवीयसोऽतिशयेनादृश्यं दवीयस्तस्य प्रत्यगभिन्नब्रह्मणो नेदीयस्त्वं नेदीयः समीपतया साक्षादतिदृश्यं तस्य भावस्तत्त्वं दृ-ग्विषयत्वमिवादृश्यस्यात्मनः स्वत्वस्वप्रकाशत्वाभ्यामतीव दृश्यत्वं यद्यया प्रमया प्रत्येति अनुभवति, किञ्च परस्य कार्यकारणाती-तस्य परमात्मनो निजरूपत्वं निजं स्वीयं रूपमाकृतिस्तस्य भाव-स्तत्त्वं व्यवहारावस्थायां परोक्षप्रत्यक्षत्वाभ्यां सर्वज्ञकिञ्चिज्ज्ञत्वा-भ्यां जगदधिष्ठानव्यष्ट्यहङ्काराधिष्ठानत्वाभ्यां परिपूर्णसद्वितीय-त्वाभ्यां च स्वपरत्वरूपभेदे प्रतीयमानेपि भागलक्षणया विरु-

ांशत्यागेनाविरुद्धांशचिन्मात्रस्यैक्यात्परमात्मनः स्वस्वरूपत्वं
द्यया प्रमया प्रमेति अनुभवति सोक्तप्रकारा त्रिविधरूपापि
मा प्रमाणरूपा वृत्तिरस्ति हीत्येवं विद्वत्सु प्रसिद्धमत एतद्वि-
रीतप्रमायाः प्रमात्वं यदुक्तं तदसमञ्जसमेवेति भावः ॥ ७४ ॥

किञ्च लोके शास्त्रे च लौकिकं दृश्यपदार्थविषयं यज्ज्ञानं
त्सत्यमित्युच्यतेऽदृश्यपदार्थविषयकज्ञानस्य च मिथ्यात्वमत्र
न्मत्तस्तद्विपरीतं प्रलपति।

यद्दृश्यते तत्तु मिथ्या तत्सत्यं यन्न दृश्यते।
एतत्प्रामाणिकत्वं हि महोपनिषदां मतम् ॥७५॥

यदिति। हे शिष्य यत्पदार्थजातं दृश्यते ज्ञायते तत्तु प-
ार्थजातं मिथ्याऽसदस्ति यच्चात्मस्वरूपं न दृश्यते न ज्ञा-
ते तदात्मरूपं सत्यमबाध्यं वस्तु अस्ति एतदुक्तलक्षणं प्रा-
ाणिकत्वं प्रमाणमिद्धं ज्ञानं तस्य भावस्तत्त्वं हि प्रसिद्धं महो-
निषदां महत्यः श्रेष्ठा या उपनिषद उप समीप एव निषण्णं
श्रितं श्रेयः कल्याणं मोक्षरूपं यासु ता उपनिषदो वेदशि-
भागास्तासां सर्वश्रेष्ठात्मज्ञानप्रतिपादकत्वादुपनिषदां म-
त्त्वमिति ज्ञेयं, मतमिष्टं दृश्यस्यासत्त्वे श्रुतयस्तावद् 'अतोऽन्य-
र्तिम्, अथात आदेशो नेति नेति, नेह नानास्ति किञ्चन, त-
तज्जडं मोहात्मकं मायामात्रमि'त्याद्याः, आत्मनोऽदृश्यत्वे च
ुतयः, 'यत्तदद्रेश्यं, यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति,
चक्षुषा पश्यति कश्चनैनमि'त्याद्याः, अदृश्यरूपस्यात्मनः सत्त्वे
ापि श्रुतयः 'सदेव सोम्येदमग्र आसीत्सत्यं ज्ञानमनन्तं ब्रह्मे'-
ाद्याः, अतोऽदृश्यासत्त्वदृश्यसत्त्वज्ञानस्य प्रामाणिकत्वं यदु-
च्यते तदसमञ्जसमेवेति भावः ॥ ७५ ॥

किञ्च लोके जगद्गतविचित्रपदार्थेषु नीरसत्वप्रतीतिमत
पुरुषस्य किञ्चित्कालं जीवनं प्रतीयमानेऽपि भिषग्भिर्मृतत्वमे
निश्चितमित्येवं वदन्तीति प्रसिद्धमत्र तून्मतस्तद्विपरीतं प्रलपति

विचित्रा यस्य रचना समस्ता भाति नीरसा।
जीवन्मृतकतुल्योऽसौ जीवन्मुक्तः श्रुतौ स्तुतः॥७६॥

विचित्रेति। हे शिष्य इयं दृश्यमाना समस्ता सकल
विचित्राऽनेकरूपा रचना जगद्घटना नीरसा रसः सुखं निर्गत
निवृत्तो यस्याः सा तथाभूता यस्य पुरुषस्य भाति भासते
असौ पुरुषो जीवन्मृतकतुल्यो लोकदृष्ट्या किञ्चिज्जीवन्मृतक
प्रेतस्तेन तुल्यः सदृशोऽस्ति तथाप्यसौ श्रुतौ वेदे जीवन्मुक्तो
लोकदृशा जीवन्सन्परमार्थदृशा मुक्तो मुक्ततां प्राप्त इत्ये
स्तुतः प्रशंसितोऽस्ति अतस्तादृशस्य जीवन्मृतकत्वं यदुच्यते
लोके तदसमञ्जसमेवेति भावः॥ ७६॥

किञ्च यस्य जन्मनि हितमहितं वा किमपि न प्राप्तं स्वे
नान्येन वा न च स्वहितं परहितं वा ज्ञातं किमपि तस्य जन्म
व्यर्थमिति वदन्ति लोके लौकिकशास्त्रे चात्र तून्मतस्तद्विरुद्ध
प्रलपति।

स्वयमेव प्रकाशेत दीपः शून्यालये यथा।
तस्य व्यर्थप्रकाशस्य सार्थकं जन्म वर्णितम्॥७७

स्वयमेवेति। हे शिष्य यथा यद्वच्छून्यालये शून्यं दीप
प्रकाशव्यवहर्तृजनहीनं यदालयं गृहं तस्मिन्स्वयमेवान्यव्यव
हारिजनरहित एव प्रकाशेत प्रकाशमानस्तिष्ठति तथा तद्वद्य
पुरुषः शून्यालये शून्यं मातृपितृबन्धुभगिनीभार्यापुत्रसुहृन्मि
त्रादिहीनं यदालयं गृहं तस्मिन्स्वयमेवैकाक्येवोक्तमातृपित्रादि

ीन एवेत्यर्थः, प्रकाशेत दृश्येत तस्योक्तविधस्य व्यर्थप्रकाशस्य
पर्थो धर्मार्थकाममोक्षाख्यार्थचतुष्टयहीनः प्रकाशो दृश्यत्वं
स्य तस्य जन्म जननं सार्थकं सफलमित्येवमभ्यमन्यते वर्णितं
थितमस्तीति लोकार्थः, परमार्थस्तु यथा यद्वद्दीपः प्रदीपः
ून्यालये शून्यं दीपप्रकाशव्यवहर्तृजनहीनं यदालयं तस्मिन्स्व-
मेव स्वप्रकाशव्यवहर्तृजनरहित एव प्रकाशेत प्रकाशमानो
र्तेत तथा तद्वद्यः पुरुषो जन्मान्तरीयसाधनैः कस्माच्चित्प्र-
तिबन्धात्पूर्वजन्मनि अप्राप्तसाक्षात्कारः मन्तेनैव प्रतिबन्धेन
स्य चिद्गृहस्थस्य गृहे हस्तामस्तकादिरिव प्राप्तजन्मा सन्-
त्रैव जन्मनि मातृपित्रादिसम्बन्धरहितत्वाच्छून्ये गृहे स्वय-
व वास्तवपितृमात्रादिसंबन्धरहित एव प्रकाशेत दृश्येत त-
योक्तविधस्य व्यर्थप्रकाशस्य विगतो निवृत्तोऽर्थोऽर्थका-
धर्ममोक्षाख्यार्थस्तेषां मिथ्याभूतत्वाद्यस्मात्प्रकाशात्स ता-
शः प्रकाशो यस्य तस्य पुरुषस्य जन्म जननं सार्थकं सफलं
रमप्रयोजनमोक्षस्य सिद्धेरित्येवं वर्णितं कथितम्, उक्तविधान्य-
थैव निरर्थकं जन्मेत्यर्थः, यद्वा यः प्रमाता शून्यालये दीप इव
ून्यालये पितृमात्रादिसंबन्धरहितं संन्यासग्रहणेन सर्वसंबन्ध-
हितं यद्गृहमालयं तस्मिञ्छरीरे स्वयमेवैकाक्येव प्रकाशेत
श्येत तस्योक्तविधस्यार्थप्रकाशस्यैहिकपारलौकिकार्थहीनः प्र-
ाशो ज्ञानं यस्य तस्य जन्म जननं संन्यासलक्षणं लोक-
सिद्धं वा जन्म यस्मिन्नेतादृशः संन्यासः साधितस्तत्सार्थकं
फलं वर्णितं कथितं शास्त्रेष्विति, यद्वा यः साधिष्ठानो बुद्धि-
थश्चिदाभासः शून्यगृहदीप इव शून्यालयो शून्यं कर्तृत्वभो-
क्तृत्वरागादिसंबन्धहीनं यदालयं ज्ञानेन बाधितत्वात्सर्वदैव
ीनप्रायं शरीरत्रयं तस्मिन्नेव स्वयमेव कूटस्थादभिन्नत्वं स्वस्य

ज्ञात्वा स्वयंशब्दवाच्यकूटस्थाभिन्न एव नान्य इत्यर्थः, प्रकाशेत स्वयं प्रकाशमानस्तिष्ठति तस्योक्तविधस्य व्यर्थप्रकाशस्य मिथ्यात्वाद्विगता निवृत्ता अर्था धर्माद्याश्चत्वारो यस्मात्स तथाभूतः प्रकाशो ज्ञानं यस्य तस्य प्रमातुरस्मदृदृष्ट्या यज्जन्म लिङ्गशरीर आविर्भावलक्षणं जननं तत्सार्थकं कर्माचरणेन लोकसंग्रहरूपो मुमुक्षूणां ज्ञानप्राप्तिरूपश्च योऽर्थः फलं तेन सहितमेवास्तीत्येवं वर्णितं कथितं शास्त्रेष्विति शेषः, यद्वा यः कूटस्थ आत्मैव शून्यालये दीप इव शून्यालये शून्यमसद्यदालयं कालत्रयेपि नष्टप्रायं शरीरं तस्मिन्स्वयमेवान्यचिदाभासबाधेनानन्य एव प्रकाशेत प्रकाशितो भवेत्तस्योक्तविधस्य व्यर्थप्रकाशस्य विगतो निवृत्तोऽर्थः प्रकाश्यरूपो द्वैतप्रपञ्चो यस्मात्स तथाविधः प्रकाशो ज्ञानमात्रस्वरूपं यस्य तस्य कूटस्थात्मनो जन्माऽसङ्गनिर्विकारसच्चिदानन्दस्वरूपाविर्भावलक्षणं जननं सार्थकमर्थः सद्रूप आत्मैव तेनारहितमेव तन्न तु लोकप्रसिद्धमिव जन्म तदिति वर्णितं कथितं विद्वद्भिरिति शेषः, यद्वा यस्तत्त्वंपदार्थयोः परमात्मकूटस्थयोर्भागत्यागलक्षणया विरुद्धांशत्यागेनाविरुद्धचिन्मात्ररूपमैक्यमनुभूय वर्त्तमानः स्वयमेव प्रत्यगात्माभिन्नब्रह्मरूप एव नान्य इत्यर्थः, शून्यालये दीप इव शून्यालये शून्यमसद्‌द्वैतं तस्यालये 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिभिः कृत्वा बाधे सति प्रकाशेत सर्वलयावधिरूपेण प्रकाशमान इत्यर्थः, स्यात्तस्य ब्रह्माभिन्नप्रत्यगात्मनो व्यर्थप्रकाशस्य सतोपि विगतो निवृत्तो द्वैतरूपोऽर्थः प्रयोजनं यस्मात्स तथाविधः प्रकाशश्चेतनं यस्य स तथाविधस्तस्य जन्म द्वैतरूपेणाविर्भावलक्षणं जननं सार्थकमर्थो जीवन्मुक्तिलक्षणः पुरुषार्थस्तेन सहितमेव तादृत्येवं वर्णितं कथितमित्यलमतिविस्त-

रेण, अतस्तादृशस्य जन्म निरर्थकमित्युक्तिरयुक्तैवेतिभावः ।

सुव्यक्तस्यास्य पद्यस्य पश्चार्थः कथिता मया ।
यथाबुद्धि विचिन्वन्तु सन्तोऽर्थं विहरन्तु च ॥७७॥

किञ्च लोके ज्ञानदीपस्यैव ज्ञानदीपत्वं वर्ण्यतेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

न बोधयति भावानामात्मनो भेदमण्वपि ।
अबोधदीप एवायमस्माकं बोधदीपकः ॥ ७८ ॥

न बोधयतीति । हे शिष्य यो दीपो भावानां जगद्गतपदार्थानामात्मनः स्वस्मात्सकाशादण्वपि सूक्ष्ममपि भेदं पार्थक्यं न बोधयति न प्रकाशयति किं वक्तव्यं स्थूलभेदं न प्रकाशयतीति, आत्मनः सर्वस्य पृथगसत्त्वात्तस्योभयस्योभयप्रतियोगिको भेदोप्यसदेवातस्तज्ज्ञानस्याप्यसत्त्वादिति भावः, अत स तादृशोप्ययमस्मत्प्रसक्षोऽबोधदीप एवान्यदृष्ट्याऽज्ञानसादृश्यादबोधोऽज्ञानरूप एव दीप इव प्रकाशमानोऽस्ति यद्यपि तथापि स उक्तलक्षणोऽबोधदीपोऽस्माकमस्मदादीनां ज्ञानिनां बोधदीपको बोधो ज्ञानं तत्स्वरूपः सन्दीपक इव स्वयंप्रकाशानोऽस्ति अतस्तार्किकादिभिरात्मनोऽचिद्रूपत्वं प्रतिपाद्यते यत्तदसमञ्जसमेवेति भावः ॥ ७८ ॥

किञ्च चिकित्साशास्त्रे रात्रौ जागणं दिवा निद्रा चेत्येते रोगहेतुत्वान्निषेधितेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

निशायामेव जागर्मि निद्रामि सकलं दिनम् ।
न च रोगा प्रबाधन्ते मा जरामरणादय ॥ ७९ ॥

निशायामेवेति । हे शिष्य अहं साधिष्ठानबुद्धिस्थश्चिदा-

भासो निशायामेव महावाक्यविवेकेन तत्त्वंपदार्थयोः कूटस्थ-परमात्मनोर्भागत्यागलक्षणया विरुद्धप्रत्यक्परोक्षाद्यंशं त्यक्त्वा त-दैक्यरूपायां रात्रौ सर्वप्राणिभिस्तत्र सुप्तत्वाद् ।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी' ।

इति भागवदुक्तेर्जागर्मि जागृतिमानस्मि, किञ्च स-कलं समस्तं दिनं दिवसं प्रति कार्यकारणरूपो व्यवहारो-ऽज्ञानिनां दिवसस्तस्मिन्निति भावः, निद्रामि स्वपामि ।

'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेरि'त्युक्तेः, आत्मस्वरूपे जागर्मि प्रपञ्चे निद्रामीत्याशयः, किञ्चैतादृशविपरी-तकारिणमपि मा मां जरामरणाद्यो जरा वार्धक्यं मरणं च मृत्यु-स्तावादी येषां जन्मादीनां ते तथोक्ता रोगाः पीडाहेतुत्वाद्व्या-धयस्ते न च बाधन्ते नैव पीडयन्ति, अतो भिषक्शास्त्रे यदुक्तं रात्रौ जागरणं दिवा निद्रा च न कर्तव्या रोगहेतुत्वादिति तदयुक्तमेवेति भावः ॥ ७९ ॥

किञ्च बुद्धिमत एव बुद्धिमत्त्वं लोके शास्त्रे च प्रतिपाद्यतेऽत्र तून्मत्तो भगवता निर्बुद्धेरेव बुद्धिमत्त्वमर्जुनं प्रत्युपादिष्टमिति त-मुपहसन्प्रलपति ।

उत्तमाधममध्यानां भेदभानं धियां फलम् ।
ताभिर्हीनस्य हरिणा प्रोक्ता पण्डितराजता ॥ ८० ॥

उत्तमेति । हे शिष्य उत्तमाधममध्यानामुत्तमः श्रेष्ठोऽधमो नीचो मध्यः मध्यमस्तेषां भेदभानं भेदस्य पार्थक्यस्य भानं प्र-तीतिरेव धियां बुद्धीनां फलं प्रयोजनमस्तीति सर्वलोकेषु प्रसि-द्धं गीतायां तु ताभिर्बुद्धिभिर्हीनस्य रहितस्य पुरुषस्य हरिणा सर्वजगत्संहारशीलेन श्रीकृष्णेन पण्डितराजता पण्डिता बुद्धिम-

न्तस्तेषां राजेव शोभमानस्तस्य भावस्तत्ता प्रोक्ता कथिता। उपहसनपक्षे कृष्णस्य–

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्त' इत्यादिवाक्यैर्लोकानां क्षयकर्तृत्वप्रतिपादनं प्रसिद्धमत इवार्जुनाय विरुद्धमुपदिशंस्तन्मिषेणैव तत्प्रहितसर्वजगन्नाशे प्रवृत्त इति हरिपदार्थाशयेनोपहसनं, प्रलपनञ्च निर्बुद्धेर्बुद्धिमत्त्वं विरुद्धमिति। वस्तुतस्तु विषमबुद्धिनिरासेनात्माकारसमबुद्धिमर्जुनायोपदिशन्मुक्तिप्रदत्वेन समस्तदुःखहरणशीलत्वाद्धरिरितिनामान्नोऽन्वर्थकतेति भावः॥ ८०॥

किञ्च लोकशास्त्रे लोके च बुद्धियुक्तस्यैव बुद्धियुक्तत्वं प्रतिपाद्यतेऽत्र तून्मत्तो गीतायां भगवता जडस्यैव बुद्धियुक्तत्वं प्रतिपादितमित्येव तमुपहसन्प्रलपति।

जडेन येन संत्यक्ते उभे सुकृतदुष्कृते।
बुद्धियुक्तः स एवेति पार्थं प्राह जनार्दनः॥ ८१॥

जडेनेति। हे शिष्य येन ज्ञानिसंमतेन लोकदृष्ट्या जडेन मूढेन पुरुषेण त्याज्यात्याज्यज्ञानशून्यत्वाज्जडत्वमत एव सुकृतदुष्कृते सुकृतं पुण्यकर्म दुष्कृतं च पापकर्म ते उभे द्वे अपि संत्यक्ते कालत्रयासत्त्वबुद्ध्या पुनरुत्पत्तिर्यथा न स्यात्तथा विसृष्टे स एवोक्तविधो जड एव बुद्धियुक्तो ज्ञानयुक्तो नान्य इत्येव।

'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' इत्यादिवाक्यैर्जनार्दनो जनानां जीवानामर्दनो गतिरूपः श्रीकृष्णः पार्थं पृथा कुन्ती तस्या अपत्यं पुमान्पार्थस्तं प्राहोक्तवान्, जडे बुद्धियुक्तत्वकथनमनर्थकत्वाभासेन प्रलापः, जनार्दनपदेन समस्तजीवानामेतादृशविरुद्धज्ञानोपदेशेन जनार्दननाम्नो निरर्थ-

कत्वेन प्रत्युतघातकत्वेन च विरोधिलक्षणान्यायस्यात्र सम्भवादभद्रायां भद्रा नामेवोपहसनं, पार्थपदेन च तथैव पृथापुत्रत्वेनातीव कातर्यवतोऽर्जुनस्य तथाकम्पनमतीव युक्तमेवाऽर्दधातोर्गतिकम्पनार्थवत्त्वादिति वोपहसनं, वस्तुतस्तु सुकृतदुष्कृतज्ञानरहितज्ञानस्यैव मोक्षहेतुत्वेन तादृशज्ञानवत एव बुद्धियुक्तत्वमित्येवमुपदेशेन पृथापुत्रत्वेनाधीरस्यार्जुनस्याधीरत्वनिरासेन च मोक्षसाधनभूते ज्ञाने स्थिरीकरणाज्जनार्दनाम्नोऽन्वर्थकथनेन प्रमाणमेवैतदिति सुकृतिन एव लोके बुद्धियुक्तत्वं यदुच्यते तदसमञ्जसमेवेति भावः ॥ ८१ ॥

किञ्च लोके तुच्छस्य तुच्छत्वमेव प्रतिपाद्यतेऽत्र तून्मत्तस्तद्विपरीतमर्जुनाय भगवतोक्तमिति प्रदर्शयन्नुपहसंश्च तं प्रलपति ।

कृताकृतैर्न यस्यार्थो नाश्रयो यस्य कुत्रचित् ।
पार्थसारिथिरित्याह स तुच्छः स्वच्छमुक्तिभाक् ॥८२॥

कृताकृतैरिति । हे शिष्य यस्य ज्ञानिनः कृताकृतैः कृतानि कर्मफलानि अकृतश्च मोक्षस्तैरर्थः प्रयोजनं न नास्ति, किञ्च यस्य ज्ञानिन आश्रयोऽभिनिवेशः कुत्र चिद्‌द्वैतेद्वैते वा क्वचिदपि न नास्ति उभयस्यापि मिथ्यात्वात्स उक्तलक्षणः पुरुषस्तुच्छ एव लोक उपेक्षाविषय एव यद्यपि तथापि पार्थसारथिः पार्थस्यार्जुनस्य सारथिः सूतः श्रीकृष्णः स स्वच्छमुक्तिभाक्स्वच्छा निर्मलाऽऽत्मस्थितिरूपा या मुक्ति र्मोक्षस्तां भजते सेवत इति स तथाविधोऽस्तीत्येवमाह कथितवानर्जुनायेति शेषः, तुच्छत्वलक्षणवतः परमपुरुषार्थमोक्षप्राप्तिर्भवतीति तस्य श्रेष्ठत्वकथनेन विरोधाभासान्निरर्थकत्वे प्र-

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 113.*




# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण

दयानन्दस्वामिना परिशोधितः ।

## BODHASÂR,

A TREATISE ON VEDÂNTA,

BY

ŚRÎ NARAHARI,

With a commentary by the author' s pupil

PANDIT DIVÂKAR.

EDITED BY

SWÂMÎ DAYÂNAND.

*Fasciculus X.*


BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.,*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhambâ Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1906.

# सूचीपत्रम् ।

| | |
|---|---|
| गणपाठः | ० |
| गोलप्रकाशः | २ |
| गंगालहरी | ० |
| गुरुसारणी | ० |
| जातकतत्त्वम् | ० |
| तत्त्वदीप | ० |
| तर्कसंग्रहः | ० |
| दत्तकमीमांसा | ० |
| धर्म्मशास्त्रसंग्रहः | ० |
| धातुपाठः ( शिला -) ) | ० |
| धातुरूपावली | ० |
| नैषध चरित नारायणी टीका टाइप | ४ |
| परिभाषापाठः | ० |
| पाणिनीयशिक्षा भाष्यसहिता | ० |
| प्रथम परीक्षा | ० |
| प्रथमपुस्तक हिन्दी | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ |
| लघुकौमुदी टिप्पणीसहिता | ० |
| लघुकौमुदीभाषाटीका | ४ |
| लक्षणावली | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ |
| वसिष्ठसिद्धान्तः | ० |
| विष्णु सहस्रनाम | ० |
| शब्दरूपावली | ० |
| शृङ्गार सप्तशती | १ |
| समासचक्रम् | ० |
| समासचन्द्रिका | ० |
| सरस्वतीकण्ठाभरणम् | ३ |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० |
| साङ्ख्यतत्त्वकौमुदी | ० |
| सिद्धान्तकौमुदी | ३ |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ |
| उपसर्गवृत्ति | ० |
| क्षेत्रकौमुदी | ० |
| क्षेत्रसंहिता | २ |

ज्ञापत्वम्, असमञ्जसकथनेनासमञ्जसबोधेनैव क्षत्रकर्मत्यागात्सूत-
कर्मणि प्रवृत्तिस्तत्रापि पृथापुत्रत्वेन सूचितकातर्यवतोऽर्जुनस्ये-
त्युपहसनं, वस्तुतस्तु तादृशलक्षणवत एवमुक्त्यधिकारित्वक-
थनाद्यथार्थमेवोक्तम्, एवं च लोके तादृशस्य तुच्छत्वं यदुच्यते
तदयुक्तमेवेति भावः । तथाहि गीतायां-

'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रय' इति ॥ ८२ ॥

किञ्च धर्माधर्मादिज्ञानशून्यानां लोकशास्त्रेषु मूढत्वमुच्यते-
ऽत्र तून्मत्तस्तद्विरुद्धमर्जुनाय भगवतोपदिष्टमित्युपहसन्प्रलपति ।

धर्माधर्मौ न जानाति न जानाति शुभाशुभे ।
सुखदुःखे न जानाति स ज्ञानीति मतं हरेः ॥ ८३ ॥

धर्माधर्माविति । हे शिष्य यः पुरुषो धर्माधर्मौ धर्मो वेद-
प्रणिहितः स्वस्ववर्णाश्रमानुकूल आचारोऽधर्मश्च तद्विपरीत
आचारस्तौ न जानाति न वेत्ति सत्त्वनिश्चयेन नावलोकयतीत्य-
र्थः, किञ्च शुभाशुभे पुण्यपापेऽपि न जानाति नवेत्ति, किञ्च
सुखदुःखे सुखं शर्म दुःखं पीडा ते अपि न जानाति न वेत्ति, स
उक्तविधोऽज्ञानी लोकदृष्ट्या प्रतीयमानोऽपि ज्ञानी ज्ञानवान-
स्तीत्येवं हरेः श्रीकृष्णस्य मतं निश्चितमस्तीति त्वं विद्धि,
तत्राज्ञानिलक्षणवतो ज्ञानित्वकथनं निरर्थकत्वाभासेन प्रलपनम्,
अज्ञानिलक्षणवत एव ज्ञानित्वकथनरूपविरुद्धोपदेशेन च सर्व-
जगन्नाशकधर्मवत्त्वाद्धरिरिति श्रीकृष्णस्योचितमभिधानमित्युपह-
सनं, वस्तुतस्तु पारमार्थिकाखण्डैकरसात्मविज्ञाने धर्माधर्मादि-
ज्ञानाभावाद्यथार्थमेवेति न लोकशास्त्रोक्तं धर्माधर्मादिज्ञानशू-
न्यानामज्ञानित्वं समञ्जसमिति भावः, भगवद्वाक्यानि च 'गुण-
दोषदृशिर्दोषो गुणस्तूभयवर्जितः, शुभाशुभफलैरेवं, सुखदुःखे समे

कृते'स्यादीन्यत्रोह्यानि ॥ ८३ ॥

किञ्च शास्त्रे साकारचिन्तनं निराकारचिन्तनं च मोक्षसाधनत्वेन निरूपितमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

चिन्तनेनैव मुक्तिः स्यादिति सर्वत्र वर्णितम् ।
अस्माकं तु मते स्वस्मिन्न किञ्चिदपि चिन्तयेत् ॥ ८४ ॥

चिन्तनेनेति । हे शिष्य चिन्तनेनैव ध्यानेनैव मुक्तिर्मोक्षः स्यान्भवेदित्येवं सर्वत्र शास्त्रेसु 'तद्बुद्धयस्तदात्मानः,ज्ञाना द्ध्यानं विशिष्यते, मामनुस्मर युध्य च, मच्चित्ता मद्गतप्राणा' इत्यादिना गीतासु 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तादि'ति श्रुतिषु च वर्णितं कथितम, अस्माकं तु तुपदेन स्वमते ततो वैलक्षण्यं सूचितं, मते निश्चितेर्थे स्वस्मिन्नात्मनि किञ्चिद्नात्मरूपमात्मरूपं वा न चिन्तयेन्नैव ध्यायेन्ध्येयध्यानध्यातृरूपत्रिपुटेर्मिथ्यात्वाद, अष्टावक्रोप्यत्राह ।

'अचिन्त्यं चिन्त्यमानोऽसौ चिन्तारूपं भजत्यसौ ।
त्यक्त्वा तद्भावनं तस्मादेवमेवाहमास्थित' इति ।

तस्मात्सर्वशास्त्रेषु ध्यानेन मुक्तिः स्यादित्येवं प्रतिपादितं यत्तदयुक्तमेवेति भावः ॥ ८४ ॥

तदेव स्पष्टयति सार्धेन ।

चिन्तनं सर्वशास्त्राणां मतमन्यन्मतं मम ।
न किञ्चिच्चिन्तनादेव स्वयं तत्त्वं प्रकाशते ॥ ८५ ॥

चिन्तनमिति । हे शिष्य सर्वशास्त्राणां सर्वाणि समस्तानि यानि शास्त्राणि तेषां चिन्तनं ध्यानं मतमिष्टं मोक्षसाधनत्वेनाभिमतमित्यर्थः, मम मेऽन्यद्भिन्नमेव मतं निश्चितमस्ति किं तदित्यत आह नेति, न किञ्चिच्चिन्तनादेव किञ्चिच्छब्दवाच्यं द्वैतम-

द्वैतं वा तस्य चिन्तनं ध्यानं तदभावान्नैकधेत्यादिवन्नशब्दस्य किञ्चिच्चिन्तनशब्देन सह समासः, तस्मादेव कारणात्स्वयं, स्वत एव तत्त्वमनारोपितं ब्रह्माभिन्नं प्रत्यगात्मरूपं प्रकाशते प्रकाशितं भवति ॥ ८५ ॥

ततः किमित्यत आह ।

स्वयं प्रकाशिते तत्त्वे तत्क्षणात्तन्मयो भवेत् ।

स्वयमिति । तत्त्वेऽनारोपितात्मस्वरूपे स्वयमनन्यद्रूपे प्रकाशिते प्रकाशमाने सति तत्क्षणात्तत्त्वप्रकाशसमकालमेव तदन्यस्य सर्वस्य बाधितत्वात्तन्मयः स्वयंप्रकाशात्मस्वरूप एव भवेत्स्याद् अत्रैवैच्छ्लोकव्याख्यानस्य समाप्तिं द्योतयति ।

इति सार्धश्लोकौ ।

इतीति । सार्धश्लोकावर्धेन सहितौ श्लोकौ द्वौ श्लोकाविति समाप्ताविति उत्तरमन्यदेवेत्याशयः ।

इदानीं सगुणवर्णनं योग्यत्वाच्छ्लोके प्रशस्तमत्र तून्मत्तः श्रीकृष्णेन निर्गुणस्य गुणवर्णनं कृतमित्युपहसन्प्रलपति ॥

एकोऽपि न गुणो यस्मिन्द्वौ त्रयो वा कुतः किल ।
गुणान्गायति गोविन्दो निस्त्रैगुण्यस्य तस्य हि ॥ ८६ ॥

एकोपीति । हे शिष्य यस्मिन्नात्मनि एकोपि सत्त्वं रजस्तमो वा, एकत्वसंख्यारूपो वा गुणो धर्मो न नास्ति तत्रात्मनि द्वौ गुणौ त्रयो वा गुणा द्वित्रिसंख्याश्च गुणा वा कुतः कारणाद्भवन्ति किलेति निश्चयेन नैव भवन्तीत्यर्थः, यद्वा यस्मिन्नात्मनि एकोपि एकत्वसंख्यारूपो धर्मो न नास्ति अद्वैतरूपो धर्मो नास्तीत्यर्थः, तत्रात्मनि द्वौ द्विरूपौ प्रकृतिपुरुषाख्यौ

धर्मो त्रयो वा सत्त्वरजस्तमोभिधास्त्रयो गुणास्तदभिमानिनो ह-रिविष्णुरुद्राख्याश्च तद्विषयाः संख्या अपि कुतः कस्मात्कारणात्किलेति निश्चयेन नैव सन्तीत्यर्थः, तस्योक्तलक्षणस्य हि प्रसिद्धस्य ज्ञानिनां निस्त्रैगुण्यस्य निर्गतं निर्वृत्तं त्रैगुण्यं त्रिगुणकार्यं गुणाश्च त्रयो यस्मात्तत्तथोक्तं तस्यात्मनो गोविन्दो गोपालः श्रीकृष्णो गुणान्धर्मान्गायति उपदिशति अर्जुनायेति शेषः, अत्र च निर्गुणस्य गुणगानं विरोधाभासेन निरर्थकत्वप्रतिभासनात्प्रलपनं, निर्गुणस्य गुणकथनमयुक्तमिति विरुद्धभाषित्वेन गोविन्दनाम्नो ग्रामीणत्वार्थग्रहादन्वर्थकत्वमिति उपहसनं, वस्तुतस्तु निर्गुणस्यात्मनो गुणा असङ्गत्वसच्चिदानन्दादयो धर्मास्तेषां कथनमुपदेशनं मुक्तिसाधनमतो निर्गुणस्य गुणकथने मूढत्वं यदुच्यते तदसमञ्जसमेवेति भावः ॥ ८६ ॥

किञ्च कस्मिन्नपि कर्मणि ज्ञान उपासनायां चाधिकारित्वं यस्य नास्ति धर्मार्थकाममोक्षे च तस्य लोके शास्त्रे च निन्द्यत्वं श्रूयतेऽत्र तून्मत्तस्तादृशस्यैव मोक्षाधिकारोऽस्तीति भगवता प्रतिपादितमिति तमुपहसन्प्रलपति ।

यस्य नैवाधिकारोऽस्ति कस्मिंश्चिदपि कर्मणि ।
मुख्योऽधिकारी कैवल्ये स गीतो नन्दसूनुना ॥८७॥

यस्येति।हे शिष्य यस्य पुरुषस्य कस्मिंश्चिदपि कुत्र चिदपि कर्मणि क्रियायामधिकारो योग्यत्वं नैवास्ति नैव भवति स उक्तलक्षणः सर्वत्रानधिकारवान्कैवल्ये मोक्षे मुख्यः प्रधानोऽधिकारवान्नन्दसूनुना नन्दस्य नन्दनाम्नो गोपस्य सूनुः पुत्रः श्रीकृष्णस्तेन गीतः प्रतिपादितः, अत्र च कुत्राप्यनधिकारिणो मोक्षे मुख्याधिकारित्वकथने विरोधाभासेनानर्थकत्वप्रतीत्या प्रलापत्वम्, एतादृशविरुद्धप्रतिपादनादेव नन्दसुतत्व योग्यमित्यु-

पहासः, वस्तुतस्तु सर्वकर्मोपासनफलेषु विरक्तस्यैव मोक्षे मुख्याधिकारित्वकथनं युक्तमिति सर्वत्रानधिकारवतो लोके शास्त्रे च निन्द्यत्वं यत्प्रतिपाद्यते तदसमञ्जसमेवेति भावः ॥ ८७ ॥

किञ्च विरुद्धभाषिणो लोकेऽनार्यत्वमुच्यतेऽत्र तून्मत्तस्तादृशस्य भगवताऽऽर्यत्वं प्रतिपादितमिति तमुपहसन्प्रलपति ।

पश्यन्शृण्वन्स्पृशञ्जिघ्रन्यः प्रत्यक्षापलापकृत् ।
नैव किञ्चित्करोमीति तमार्यं प्राह केशवः ॥ ८८ ॥

पश्यन्निति । हे शिष्य यः पुरुषः पश्यञ्चक्षुर्द्वारा निर्गतान्तःकरणवृत्त्यवच्छिन्नचैतन्येन रूपजातमवलोकयन्सन् किञ्च शृण्वञ्छ्रोत्रद्वारा निर्गतान्तःकरणवृत्त्युपहितचैतन्येन शब्दजातं जानन्सन् किञ्च स्पृशन्त्वग्द्वारा निर्गतान्तःकरणवृत्त्यवच्छिन्नचैतन्येन स्पर्शविषयमनुभवन्सन् किञ्च जिघ्रन्घ्राणद्वारा निर्गतान्तःकरणवृत्त्यवच्छिन्नचैतन्येन गन्धजातमनुभवन्सँल्लोकदृष्ट्या प्रतीयमानोपि प्रत्यक्षापलापकृत्प्रत्यक्षस्य दृश्यमानस्यापलापो विरुद्धवचनव्यवहारस्तस्य कृत्कर्ता कथमपलापं करोतीति तत्राह नैवेति, अहमहम्पदलक्ष्यः प्रत्यगसङ्गचिद्रूप आत्मा किञ्चित्किमपि नैवकरोमि नैवाचरामीत्येवमपलापकृदस्ति केशवः श्रीकृष्णस्तं तादृशं विरुद्धभाषिणमाऽऽर्यं यथार्थवक्तारं प्राह कथयामास। अत्र च विरुद्धभाषिणोऽविरुद्धभाषित्वलक्षणमार्यत्वकथनं विरुद्धप्रतीत्या प्रलापः, एतादृशानार्यत्वलक्षणवति पुरुष आर्यत्वज्ञानवतो भगवतो भ्रान्तत्वादेव शयनायोग्ये जलोपलक्षिते सर्पे जल एव वा शयनेन केशव इति नाम योग्यमेवेत्युपहासः, वस्तुतस्तु अहम्पदलक्ष्यं कूटस्थात्मानमात्मत्वेन साक्षात्कृतवतः पुरुषस्य कर्तृत्वादिबाधेनान्तःकरणावच्छिन्नचिदाभासरूपेण यावत्प्रारब्धं तन्निर्वाहाद्व्यवहारनिर्वाहस्य लोकदृष्ट्या दर्शना-

द्व्यवहारे सत्यपि कूटस्थात्मनि तदसत्त्वाद्विरुद्धभाषिणस्तस्यार्यत्वकथनं युक्तमेवेति लोकशास्त्रे विरुद्धभाषिणामनार्यत्वकथनं यत्तदयुक्तमेवेति भावः ॥ ८८ ॥

किञ्च ये स्वयमुत्तममार्गं जानन्तोऽपि ततो भ्रष्टानां तदविदुषां सन्मार्गं न प्रदर्शयन्ति किञ्च प्रत्युततमेव मार्गं तदग्रे स्तुवन्ति तेऽसाधुलक्षणवन्तः खला इति लोकेशास्त्रे च वर्णिता, अत्र तून्मत्तस्ते एव साधव इति भगवदुक्तत्वात्तं भगवन्तमुपहसन्प्रलपति ।

जानन्तोऽपि न सन्मार्गं मूढायोपादिशन्ति ये ।
मूढमार्गं प्रशंसन्ति तान्साधूनाह माधवः ॥ ८९ ॥

जानन्तोपीति । हे शिष्य ये पुरुषाः स्वयं स्वतः सन्मार्गमुत्तममार्गं मोक्षमार्गभूतं ज्ञानमित्यर्थः, जानन्तोऽपि विदन्तः सन्तोऽपि मूढायाज्ञाय मोक्षमार्गमज्ञायेत्यर्थः, नोपदिशन्ति न प्रदर्शयन्ति, किञ्च मूढमार्गं मूढानां ज्ञानानधिकारिणां मार्गः पन्थाः स्वर्गादिस्वस्वेष्टसाधनभूतं कर्म वोपासनं वेत्यर्थः, प्रशंसन्ति स्तुवन्ति तानुक्तलक्षणवतः खलानपि माधवः श्रीकृष्णः साधून्दयावतः सज्जनानित्यर्थः, आहोक्तवान् गीतायामितिशेषः । अत्र च खलत्वलक्षणवता साधुत्वकथनं विरुद्धत्वेन निरर्थकत्वात्प्रलापः, तादृशखलत्वलक्षणवतां साधुत्वकथनं विरुद्धमपि लोके यत्प्रमाणं मन्यते तत्तस्य श्रीमत्त्वादेव न प्रमाणत्वादित्युपहासो माधवपदेनात्र ज्ञेयः, वस्तुतस्तु सन्मार्गपदवाच्यज्ञानानधिकारिणां ज्ञानमार्गाप्रदर्शनं कर्ममार्गस्तवनं च मूढानां कल्याणकारकत्वात्तत्कुर्वतां पुरुषाणां साधुत्वकथनं युक्तमेवेति लोके शास्त्रे सन्मार्गज्ञानवतां तत्र भ्रष्टानां तमजानानां तमप्रदर्श्य तत्स्तावकानामसाधुत्वं यदुच्यते तदसमञ्जसमेवेति भावः ॥८९॥

किञ्च चौरादिदुष्टप्राणिमतो मार्गस्य प्राणिनां दुर्मरणेनाग्रे
नीचजन्मप्रापकत्वान्निन्द्यत्वमुच्यते लोके शास्त्रे चाऽत्र तून्मत्त-
स्तादृशमार्गस्यैव श्रैष्ठ्यं भगवता प्रोक्तमिति तमुपहसन्प्रल-
पति ।

यस्मिन्मार्गे प्रविष्टस्य भ्रष्टताऽग्रिमजन्मनि ।
तमेव योगिनां मार्गमस्तौषीत्पार्थसारथिः ॥ ९० ॥

यस्मिन्निति । हे शिष्य यस्मिन्विवेकिषु प्रसिद्धे मार्गे मो-
क्षप्राप्तिसाधनभूते ज्ञाने, यद्वा यस्मिन्विद्वत्प्रत्यक्षे मार्गे मार्गयन्ति
वैराग्यादिसाधनपूर्वं श्रवणाद्युपायैरन्विष्यन्ति मुमुक्षवो यं स
मार्गो ब्रह्मानन्दस्तस्मिन्प्रविष्टस्य प्रवेशं कृतवतो योगेन ब्रह्मणि
समाहितस्य ज्ञानेन वा तदैक्यं प्राप्तस्य वेत्यर्थः, अग्रिमजन्मनि
भाविजन्मविषये भ्रष्टता प्रच्युतिर्मुक्तिरित्यर्थः, भवतीति शेषः,
तमेव तादृशमेव योगिनां ज्ञानिनां मार्गं मोक्षगतिप्रापकमुपायभूतं
ज्ञानं ब्रह्मसुखं वा पार्थसारथिः पार्थस्यार्जुनस्य सारथिः सौत्ये
कर्मणि स्थितः श्रीकृष्णोऽस्तौषीत् 'सुखमात्यन्तिकं यत्तद्'-
इत्यादिना ब्रह्मसुखं, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'
इत्यादिना ज्ञानं च प्रशंसितवान्,अत्र च यन्मार्गप्रविष्टस्याग्रिमज-
न्मनि नीचयोनिं प्राप्योत्तममार्गतो भ्रष्टता स्यात्तादृशदुष्टमार्गस्य
प्रशंसा विरुद्धत्वेन निरर्थकत्वात्प्रलापः, मार्गज्ञानिनामेव सार-
थित्वमपि युक्तमत्र तादृशमार्गज्ञानिनः श्रीकृष्णस्य तत्सार-
थ्यमयुक्तमेवेत्युपहासः, वस्तुतस्तु ज्ञानमार्गप्रविष्टस्याग्रिमजन्मभ्रं-
शेन मोक्षप्रसिद्धेस्तत्प्रशंसनेनाधीरस्यार्जुनस्य तारकत्वेन तत्सा-
रथित्वमुचितमेवेति पुरोभाविजन्मभ्रंशकमार्गस्य निन्दा धर्मशास्त्रे
कृता साऽयुक्तेति भावः ॥ ९० ॥

किञ्च हठयोगिनां स्वाभाविकदेहेन्द्रियादिचेष्टावरोधो मु-

क्तिसाधनत्वेनाभिमतः, अत्र तून्मत्तस्तद्विरुद्धं प्रलपति।

यथेष्टचेष्टारोधो हि सिद्धिदो हठयोगिनाम्।
यथेष्टचेष्टा कैवल्यमस्माकं ज्ञानयोगिनाम्॥९१॥

यथेष्टेति। हे शिष्य हठयोगिनां हठेन बलात्कारेण युञ्जन्ति आत्मानं परमात्मनि ते हठयोगिनस्तेषां यथेष्टचेष्टारोधो यथेष्टाः स्वाभाविक्यो याश्चेष्टाः क्रियास्तासां रोधोऽवरोधनं हि प्रसिद्धो योगशास्त्रे स सिद्धिदः सिद्धिर्मुक्तिस्तां ददातीति सिद्धिदोऽस्तीति मतं तत्त्वयुक्तमेव, अस्माकं तु तेभ्योऽतीव विलक्षणं मतमिति तुपदेन सूचितम्, अस्माकं ज्ञानयोगिनां ज्ञानमेव जीवब्रह्मैक्यविषयं ज्ञानं बोधस्तदेव योगो जीवब्रह्मैक्ययोगजनकं साधनं येषामस्ति तेषामस्मदादीनां यथेष्टचेष्टा यथेष्टा स्वाभाविक्यायासरहितेत्यर्थः, चेष्टा देहादिनिर्वाहाय देहादिभिर्निर्वर्त्यमाना क्रिया सैव कैवल्यं मोक्षमस्ति तदुक्तं

'अप्रवेश्य' चिदात्मानं पृथक्पश्यन्नहंकृतिम्।
इच्छंस्तु कोटिवस्तूनि न बाधो ग्रन्थिभेदत' इति।

अतो हठयोगिमतमुक्तेः कादाचित्कत्वादसमञ्जसमेव तन्मतमिति भावः॥ ९१॥

किञ्च सर्वप्राणिघातकस्य सङ्गत्या नरकप्राप्तिर्भवतीति धर्मशास्त्रे प्रतिपादितमत्र तून्मत्तस्तद्विपरीतं प्रलपति।

हत्वापि य इमाँल्लोकान्न हन्ति न निबध्यते।
अस्माकं तु मते तस्य सङ्गतिः शान्तिसाधनम्॥९२॥

हत्वेति। हे शिष्य यः कोपि पुरुषः इमान्प्रत्यक्षाँल्लोकाँल्लोक्यन्त दृश्यन्त इति लोकास्तान्पञ्चभूतानि भौतिकांश्च ब्रह्माण्डादीन्दृश्यानित्यर्थः, हत्वापि स्वात्मनः पृथक्सत्त्वरहितान्कृत्वापि

द्वा लोकप्रसिद्ध एवार्थः, तस्मिन्नपि कर्तृत्वबाधेन सर्वप्राणिनो
ाशयित्वापि न हन्ति न नाशयति विनाश्यलोकस्य तद्विनाश-
स्य चोभयोरप्यसत्त्वादत एव न निबध्यतेऽहमेषां घातक
ति जगन्नाशकर्तृचिदाभासतत्साक्षिचिदात्मनोरन्योन्यारोपेण
वात्मनि घातकत्वं नानुभवतीत्यर्थः, किञ्च तद्बाधपूर्वमात्मनः
थगनुभवतीति भावः, तस्योक्तविधघातकस्य सङ्गतः सङ्गः
ान्तिसाधनं तन्मुखवाक्यश्रवणादिना शान्तेर्मोक्षस्य साधनं
ाधिका भवतीत्येवमस्माकं तु अस्मदादीनामेव मतं निश्चित-
स्तीति ज्ञेयमतो लोकघातकानां सङ्गतिर्नरकप्रदेत्युक्तमस-
ङ्गतमेवेति भावः ॥ ९२ ॥

किञ्च गीतायां भगवतोक्तं ।

'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि' ॥

इति जन्ममरणयोरपरिहार्यत्वमत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
एतस्यापरिहार्यस्य परिहारो मतं मम ॥ ९३ ॥

जातस्येति । हे शिष्य हि लोके शास्त्रे च प्रसिद्धमेवेदं
ातस्योत्पन्नस्य मृत्युर्मरणं ध्रुवोऽवश्यंभावीत्यर्थः, मृतस्य च
रणं प्राप्तस्यापि जन्म जननं ध्रुवमवश्यंभावि अस्ति एतस्य
गवदुक्तस्यापरिहार्यस्य परिहर्तुं निवर्तयितुं योग्यं परिहार्यं
। परिहार्यमपरिहार्यं तस्यापि मम मे मतमिष्टमात्मस्वरूपमेव
रिहारो निवृत्तिरस्ति जन्ममरणादिवद्देहतादात्म्यनिरसने-
ात्मन आत्मत्वेनावस्थाने सति तयोः परिहारः स्यादिति त-
ोरपरिहार्यत्वोक्तिरयुक्तेति भावः ॥ ९३ ॥

किञ्च कर्मभ्रष्टानामधोगतिः श्रूयते धर्मशास्त्रेऽत्र तून्मत्तस्तद्विपरीतं प्रलपति ।

ज्ञानाग्निः सर्वकर्माणि कुरुते यस्य भस्मसात् ।
न तस्य कर्मभ्रष्टस्य कर्मठैर्लभ्यते पदम् ॥ ९४ ॥

ज्ञानाग्निरिति । हे शिष्य यस्य पुरुषस्य ज्ञानाग्निः सकारणसर्वसंसारदाहकत्वाज्ज्ञानं जीवब्रह्मैक्यविषयो बोध एवाग्निर्वह्निः सर्वकर्माणि समस्तानि सञ्चितप्रारब्धक्रियमाणानि भस्मसादबाधकत्वेन भस्मरूपाणि कुरुते सम्पादयति तस्योक्तविधस्य कर्मभ्रष्टस्य कर्मभ्यो भ्रष्टस्य मुक्तस्य यत्पदं जीवन्मुक्तिस्वरूपं तत्कर्मठैः कर्मिभिर्न लभ्यते न प्राप्यतेऽतः कर्मभ्रष्टानामधोगतिर्भवतीति धर्मशास्त्रे यत्प्रतिपादितं तदसमञ्जसमेवेति भावः ॥ ९४ ॥

किञ्च सर्वकामहीनस्य लोके कुत्सितपुरुषत्वमुच्यतेऽत्र तून्मत्तो भगवता तद्विपरीतमेव प्रतिपादितमिति तमुपहसन्प्रलपति ।

यस्तु कापुरुषः कामात्सर्वस्मादपि निर्गतः ।
स एव पुरुषार्थीति जगाद पुरुषोत्तमः ॥ ९५ ॥

यस्त्विति । हे शिष्य यस्तु प्रसिद्धः पुरुषः सर्वस्मादपि सकलादपि धर्मार्थकाममोक्षाख्यविषयात्कामादभिलाषान्निर्गतो निवृत्तोऽस्ति स कापुरुषः कुत्सितः पुरुषो लोकमते नरो ज्ञेयस्तथापि पुरुषोत्तमः पुरुषेषु पुरुषार्थिषूत्तमः श्रीकृष्णः स एवोक्तविधः सर्वकामहीन एव पुरुषः पुरुषार्थीति पुरुषार्थो मोक्षाख्यो विद्यतेऽस्य स तथोक्तोऽस्तीत्येव जगादोवाच स्पष्टम्, अत्र च कापुरुषस्य पुरुषार्थित्वकथनं विरुद्धत्वा-

त्मलपनमेव, तादृशस्य पुरुषार्थित्वप्रतिपादनेन पुरुषज्ञानहीन-
त्वात्पुरुषत्वस्याप्यसम्भवे सति पुरुषोत्तमनाम्नोऽयोग्यत्वमेवे-
त्युपहासः, वस्तुतस्तु सिद्धान्ते ।

'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' ॥

इति श्रुतेः सर्वपुरुषार्थानामना 'ऽऽत्मत्वेनात्मकाम' इति आत्म-
कामत्वप्रतिपादनात्तादृशात्मकामे पुरुषे सर्वकामनिवृत्त्युपलब्ध्या
पुरुषार्थित्वप्रतिपादनं युक्तमेवेति सर्वकामहीनस्य कापुरुषत्व-
प्रतिपादनमयोग्यमेवेति भावः ॥ ९५ ॥

किञ्च धर्मशास्त्रे तावत्सर्वधर्मत्यागिनां नरकप्राप्तिरेवाभि-
हिताऽत्र तून्मत्तस्तादृशसर्वधर्मत्यागिनामेव सर्वपापनिवृत्तिरिति
तद्विरुद्धं प्रलपति ।

विष्णुगीता मयाऽधीता निर्णयस्तत्र निर्गतः ।
सर्वधर्मपरित्यागी सर्वपापैः प्रमुच्यते ॥ ९६ ॥

विष्णुगीतेति । हे शिष्य मया साधिष्ठानबुद्धिस्थचिदा-
भासेन साधनचतुष्टयसम्पन्नेन विष्णुगीता विष्णुना श्रीकृष्णेन
गीतोपदिष्टाऽर्जुनाय शिष्यायेति शेषः, साऽधीता पठिता
तत्र च निर्णयो निश्चयो निर्गतः प्राप्तोऽस्ति कोऽसावित्यपेक्षा-
यामाह सर्वधर्मेति, यः कोपि सर्वधर्मपरित्यागी सर्वे समस्ता ये
धर्माः स्वस्ववर्णाश्रमोचितानि कर्माणि निषिद्धानि च तेषां
परित्याग आत्मैकशरणत्वेनात्यन्तं विसर्जनं सोऽस्यास्तीति स
तथोक्तः स सर्वपापैः सर्वाणि समस्तानि पापानि कल्मषाणि
तैः प्रमुच्यते मुक्तो भवति तस्यात्मत्वाद् 'य आत्मापहतपाप्मे'ति
श्रुतेरिति, अतो धर्मशास्त्रे सर्वधर्मत्यागिनां पापप्रसक्तिः प्रति-

पादिता साऽयुक्तैवेति भावः ॥ ९६ ॥

इदानीमेतत्प्रकरणस्योन्मत्तप्रलापत्वं स्पष्टीकर्तुं तावत्प्रलापत्वं साधयति।

असङ्गवस्तुविषये प्रलापोऽयं तु सङ्गतः।
ध्यातो मुहुर्मुहुर्दद्यात्सतां पूर्णामसङ्गताम् ॥ ९७ ॥

असङ्गेति। हे शिष्य असङ्गवस्तुविषये न विद्यते सङ्गः केनापि वाच्यधर्मेण सम्बन्धो यस्य तत्तादृशं यद्वस्तु ब्रह्म तस्मिन्विषयेऽस्य शतकस्य वर्णयितुं प्रवृत्तत्वादयं श्लोकशतकरूपः प्रलापोऽनर्थकवचनरूपः सङ्गतस्तु युक्त एवाऽस्ति, ननु तर्हि प्रलापत्वादुपेक्ष्यः स्यादित्याशङ्क्याऽसङ्गत्वस्फूर्तिलक्षणफलसद्भावान्नोपेक्ष्य इत्याह ध्यात इति, अयं प्रलापो मुहुर्मुहुः पुनः पुनर्ध्यातश्चिन्तितो विचारितः सन् सतां साधनसम्पन्नानामेतच्चिन्तकानां पूर्णामखण्डामसङ्गतामसङ्गात्मरूपां स्थितिं दद्यात्समर्पयेदतो नोपेक्ष्यत्वमस्येति भावः ॥ ९७ ॥

नन्वस्य प्रलापत्वमस्तून्मत्तप्रलापत्वं कुत इत्यत आह।

अगोचरविचारेऽस्य निन्द्यकामादिवर्त्मना।
शतकस्य प्रवृत्तस्य व्यक्तोन्मत्तप्रलापता ॥ ९८ ॥

अगोचरेति। अस्य शतकस्यागोचरविचारे न गोचरं विषयो मनोवचसोः प्रत्यगभिन्नं ब्रह्म चैतन्यं तस्य विचारो विवेकस्तस्मिन् निन्द्यकामादिवर्त्मना लोकशास्त्रयोर्निन्द्या गर्ह्या ये कामादयस्त एव वर्त्म मार्गो द्वारमित्यर्थः, तेन प्रवृत्तस्य प्रवर्तमानस्य शतकस्य शतश्लोकात्मकस्य प्रकरणस्योन्मत्तप्रलापतोन्मत्तस्य प्रमत्तस्य प्रपञ्चाननुसन्धानवत इत्यर्थः, प्रलापोऽनर्थकवाग्व्यवहारस्तस्य भावस्तत्ता व्यक्ता स्पष्टैवास्ति ॥ ९८ ॥

ननु तर्ह्यभयथाप्युपेक्ष्यत्वमस्येत्याशङ्क्याह ।

अस्योन्मत्तप्रलापत्वादुपेक्षां तात मा कुरु ।
नूनमेतस्य भावार्थो दुर्बोधो विषयात्मभिः ॥ ९९ ॥

अस्येति । हे तात हे शिष्य अस्य प्रकरणस्योन्मत्तप्रलापत्वादुन्मत्तप्रलापनाममात्रेणोपेक्षामनादरं मा कुरु नैव कर्त्तव्या कुत इत्यत आह नूनमिति, एतस्यास्य प्रकरणस्य भावार्थस्तात्पर्यं विषयात्मभिर्विषयेषु भोगेषु आत्माऽन्तःकरणं येषां तैः पुरुषैर्दुर्बोधो दुःखेनातिक्लेशेन बोद्धुं योग्यो न तु सुबोधो नूनमिति निश्चयेनास्तीत्यत इति योज्यम् ॥ ९९ ॥

अत एव तवाग्रे मयैतन्निरूपितमित्याह ।

इत्युन्मत्तप्रलापोऽयं नाम्ना प्रोक्तो मया तव ॥१००॥

इतीति । इत्यतो हेतोर्नाम्नाऽभिधानेनोन्मत्तप्रलाप उन्मप्रलाप इत्येवं तव ते मया त्वद्धितोपदेष्ट्रा प्रोक्तः कथितोऽस्ति ॥ १०० ॥

तर्हि किं कर्तव्यमित्याशङ्क्यमाह ।

नूनमेकान्तनिष्ठेन नित्यमेकाग्रचेतसा ।
इत्युन्मत्तप्रलापोऽयं विचार्यः कृतबुद्धिना ॥१०१॥

नूनमिति । हे शिष्य नूनं निश्चयेनैकान्तनिष्ठेनैकान्ते विजने देशेऽद्वितीयब्रह्मस्वरूप इत्यर्थः, लौकिकेऽपि विजने देशे निष्ठा सहजप्रीतिर्यस्य तथाभूतेन ब्रह्मणो विजनदेशशब्दवाच्यत्व आचार्यवचनम् ।

'आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सकलं व्याप्तं स देशो विजनः स्मृत' इति ।

किञ्च नित्यं सर्वदैकाग्रचेतसैकं स्वगतादिभेदशून्यं ब्रह्मैवाग्रे स्फुरद्रूपं यस्य विषयभूतं तदेकाग्रं चेतोऽन्तःकरणं यस्य तेन तथाभूतेन कृतबुद्धिना कृता संपादिता बुद्धिर्ब्रह्माहमिति प्रमारूपा वृत्तिर्येन तादृशेन भवताऽन्येन वेति यत उपेक्षा न कर्तव्येत्यतो हेतोरयं मया त्वदग्रे निरूपितस्त्वया च श्रुत एष उन्मत्तप्रलाप उन्मत्तप्रलापनामकं प्रकरणं विचार्यो विचारणीयो न तूपक्षेणीय इति भाव ॥ १०१ ॥

येषामुन्मत्तानामयं प्रलापो यतश्चास्यानुपेक्षणीयत्वं तेषां लक्षणमस्य च लक्षणमप्याह।

अवस्थाया मनोन्मन्या उन्मत्ता ये महाधियः।
निधिस्तेषांप्रलापोऽयं स्थाप्यो हृदयमन्दिरे ॥१०२॥

इत्युन्मत्तप्रलापशतकमेकोनपञ्चाशत्तमम् ॥ ४९ ॥

अवस्थाया इति। हे शिष्य ये लोकप्रसिद्धोन्मत्तेभ्यो विलक्षणा मनोन्मन्या मनसोऽन्तःकरणस्योन्मनी मनोनाशरूपा ब्रह्माकारा या वृत्तिस्तस्या अवस्थायाः स्थितेः कारणादुन्मत्ता नष्टमनस्का अत एव महाधियो महत्यपरिच्छिन्नब्रह्मस्वरूपा धीर्बुधिर्येषां ते तथोक्तास्तेषामुन्मत्तानामयमेषः प्रलापो भाषणं यथा निधिर्द्रव्यपूर्णं पात्रं गृहे गुप्तमेव स्थाप्यते तथाऽयमपि निधिर्निधीयते विचिन्त्यते ब्रह्मतत्त्वमस्मिन्निति निधिरस्ति अतो हृदयमन्दिरे हृदयमन्तःकरणमेव मन्दिरं तस्मिन् स्थाप्यः सन्धार्यो मुमुक्षुभिरिति शेषः ॥ १०२ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तावुन्मत्तप्रलापशतकार्थप्रकाश एकोनपञ्चाशत्तमः ॥ ४९ ॥

अथ शिवपूजाशतकम् ।

एवमुन्मत्तप्रलापशतकं निरूप्येदानीं ज्ञानविनोदेन ज्ञानिनां कालातिक्रमणाय शिवपूजाशतकाख्यं शतश्लोकं प्रकरणमारभमाणो ग्रन्थेन प्रतिजानीते ।

## अथ शिवपूजाशतकम् ।

अथेति । अथोन्मत्तप्रलापशतकनिरूपणानन्तरं शिवपूजाशतकं शिवस्य ब्रह्माभिन्नप्रत्यगात्मगुरोः पूजाऽर्चा तत्स्मरणरूपा तस्याः प्रतिपादकं शतकं शतश्लोकसमूहरूपं प्रकरणं निरूप्यत इति शेषः, तत्र तावदेतत्प्रकरणप्रतिपाद्यशिवपूजायां रुचिं जनयितुं शिवपूजायास्तत्सङ्कल्पस्य च फलं दर्शयति ।

शिवपूजात्मकं कर्म कर्मनिर्मूलनक्षमम् ।
सङ्कल्पः शिवपूजायाः सर्वसङ्कल्पदुःखहृत् ॥ १ ॥

शिवपूजेति । शिवपूजात्मकं शिवो महादेवस्तस्य पूजाऽर्चा सैवात्मा स्वरूपं यस्य तत्तथाविधं यत्कर्म क्रिया तत्कर्म बन्धनहेतुभूता या क्रियास्ति तस्य निर्मूलनं मूलमज्ञानं तेन सहैव निवर्त्तनं तस्मिन्क्षमं समर्थमस्ति अन्तःकरणशुद्धिद्वारा ज्ञानजननेनाज्ञानसहितकर्मनाशनसमर्थमिति भावः, किञ्च शिवपूजायाः शिवस्य महादेवस्य या पूजाऽर्चा तस्याः सङ्कल्पोऽध्यवसायः स सर्वसङ्कल्पदुःखहृत्सर्वे समस्ता ये सङ्कल्पा अध्यवसायास्तेभ्यो यद्दुःखं पीडा तस्य हृद्हर्त्ता भवतीति शेषः, इति लौकिकार्थः। प्रकृतार्थस्तु शिवपूजात्मकं शिवः सुखरूपः प्रेमास्पदत्वाद्ब्रह्माभिन्नः प्रत्यगात्मा'यो वै भूमा तत्सुखं, विज्ञानमानन्दं ब्रह्म'त्यादिश्रुतेः, 'प्रेयोऽन्यस्माच्च सर्वस्मादान्तरतरोयमात्मे'ति श्रुतेः स पूज्यतेऽर्च्यतेऽनया सा तथोक्ता सर्ववृत्तिपुष्पै-

रात्मनः पूजेत्यर्थः, प्रणाम्या ब्रह्मात्मविषया वृत्तिरिति भावः, सैवात्मा स्वरूपं यस्य तत्तथाविधं यत्कर्म कर्तृसापेक्षत्वाक्रिया तत्कर्मनिर्मूलनक्षमं कर्मणः समस्तबन्धनरूपाक्रियाया निर्मूलनं मूलमात्माज्ञानं तत्सहितं यत्कर्तृत्वं तेन सहितकर्मनिवर्त्तनं त स्मिन्क्षमं समर्थमस्ति ज्ञानस्वरूपत्वात् किञ्च शिवपूजायाः शिवस्य परमानन्दरूपस्यात्मनः पूजा पूर्वोक्तात्मविषया वृत्ति-स्तस्याः संकल्पोऽध्यवसायः सर्वसङ्कल्पदुःखहृत् सर्वस्य जगतो यः संकल्पो मननं 'स ईक्षत लोकान्नु सृजा'इति श्रुत्युक्त-स्ततो यद्दुःखं पीडा तस्य हृन्निवर्त्तको भवति अतः शिवपूजायां शिवपूजासंकल्पे च मुमुक्षुभी रुचिः कर्त्तव्येति भावः ॥ १ ॥

एवं शिवपूजायां रुचिमुत्पाद्येदानीं तत्रैव योग्यं मन्त्रमाह।

शिवपञ्चाक्षरी दीक्षा शब्दब्रह्ममयी हिता।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २ ॥

शिवपञ्चाक्षरीति। शब्दब्रह्ममयी शब्दरूपं यद्ब्रह्म प्रणवाख्यं वाच्यवाचकयोरभेदोपचारात्प्रणवस्य ब्रह्मत्वम्'ओमित्येतदक्षरमिदꣳ सर्वमि'त्यादिश्रुतेस्तन्मयी तद्रूपा शिवपञ्चाक्षरी शिवस्यानन्दरूपस्यात्मनः पञ्चाक्षरी पञ्चाक्षरसमूहरूपा दीक्षा विद्या हिता मुमुक्षूणामिष्टा कर्तव्या ग्राह्यतया च विहितेति भावः, पञ्चाक्षराणां प्रणवरूपत्वं श्रीभैरवेण मार्कंडेयं प्रत्युक्तम्।

'ॐकारस्तु शिवः स्वात्मा नकारः शक्तिरुच्यते।
मकार ईश्वरप्राज्ञौ शिः सूत्रात्मकतैजसौ ॥
वकारश्च विराड्विश्व एतत्सङ्गप्रकाशकः।
मकारः पञ्चमो वर्णा ॐकारो बीजमुच्यते ॥
पञ्चाक्षरीयं प्रणवब्रह्मरूपा प्रकीर्त्तिते'ति।

अस्तु पञ्चाक्षरीविद्यायाः प्रणवरूपत्वं ततश्च किं त-त्राह शब्दब्रह्मणीति, शब्दब्रह्मणि निष्णातः शब्दब्रह्म प्रण-वस्तस्मिन्निष्णातस्तद्वाच्ये ब्रह्मणि ध्यानादिना रतश्चेत्तर्हि परं कार्यकारणातीतं ब्रह्म देशाद्यनवच्छिन्नं निरतिशयसुखस्वरूपं वस्तु अधिगच्छति प्राप्नोति ब्रह्मैव भवतीत्यर्थः, अतो मुमुक्षुभिः सैवाङ्गीकर्तव्येति भावः । लौकिकार्थस्तु स्पष्ट एव ॥ २ ॥

एवं मन्त्रमभिधायेदानीं वक्ष्यमाणलक्षणपूजाधिकारार्थं मु-मुक्षूणां लोकप्रसिद्धविभूतिरेखात्रयविलक्षणं रेखात्रयस्य वि-भूतेर्विधारणं विधत्ते ।

तिस्रो रेखा विभूतेस्तु श्रद्धाभक्तिविरक्तयः ।
पूजाधिकारसिद्ध्यर्थं धार्याः स्वाङ्गेषु शाम्भवैः ॥ ३ ॥

तिस्र इति । विभूतेर्विशिष्टा जीवस्य ब्रह्मस्वरूपेण या भूति-राविर्भावस्तस्याः साधनभूतास्तु लोकप्रसिद्धविभूतिरेखात्रय-विलक्षणाः श्रद्धाभक्तिविरक्तयः श्रद्धा गुरुवेदान्तवाक्येषु वि-श्वासरूपा वृत्तिस्तस्या अपि जीवस्य स्वस्मिन्या ब्रह्मत्वस्मृ-तिस्तस्याः साधनत्वं ‘श्रद्धस्व सोम्ये’ति च श्रुतेः, भक्तिश्च गु-रुब्रह्मात्मनामभेदे सहजप्रीतिलक्षणा पराऽत्र ग्राह्या, तस्या अपि जीवस्य ब्रह्मरूपत्वस्मृतिसाधनत्वं ‘निरुद्ध्य भक्त्या स्वगुरुं प्र-णम्ये’ति श्रुतौ दर्शितं, विरक्तिश्चात्मव्यतिरिक्तविषयेषु विर-तता तस्याश्चापि ‘नाविरत’ इति श्रुतौ जीवस्य ब्रह्मरूपत्वस्मृतौ साधनता प्रतिपादिता, एतास्तिस्रस्त्रिसङ्ख्या रेखा ब्रह्माका-रवृत्तेरंशभूताः सन्तीति ज्ञेयाः, शाम्भवैः शं सुखं भवत्यस्मादिति शम्भुस्तस्य सकलजगदानन्दकरस्य पर-मात्मन एते साधिष्ठानबुद्धिस्थचिदाभासा मुमुक्षवस्तैः स्वाङ्गेषु स्वाङ्गभूताः प्रमारूपा अहंब्रह्मास्मीत्याकारा

वृतयस्तासु स्वस्य चिदाभासस्य पूजाधिकारसिद्ध्यर्थं ब्रह्माभिन्नस्वात्मचिन्तनरूपा या वक्ष्यमाणलक्षणा पूजाऽर्चा तस्यामधिकारो योग्यता तस्य सिद्धिः प्राप्तिः साऽर्थः प्रयोजनं यस्यां क्रियायां यथा भवति तथा धार्या धारणीयाः ॥ ३ ॥

एवमलौकिकं विभूतिरेखात्रयधारणं विधायेदानीमलौकिकरुद्राक्षमालाधारणमपि विधत्ते।

रूद्राभरणमुद्रास्तु धार्या रुद्राक्षमालिकाः।
देवो भूत्वा यजेद्देवमितीयं शाश्वती श्रुतिः ॥ ४ ॥

रुद्राभरणेति। हे शिष्य रुद्राभरणमुद्रास्तु रोदयति असङ्गानन्दादिस्वभावं विस्मार्य दुःखीकरोति स रुद्रोऽहङ्कारस्तस्याभरणानि अलङ्कारभूताः ससङ्गदुःखित्वादिस्वभावं विस्मार्यासङ्गानन्दाद्यात्मधर्मस्फूर्तिकारणभूता इत्यर्थः, या मुद्राः शाम्भव्यादिनाम्न्यस्ता एव रुद्राक्षमालिकाः रुद्रस्याहङ्कारस्याक्षीणी वाक्षीणि नेत्राणि स्वात्मदर्शनसाधनत्वात् तेषां धारणारूपाणां मालिका मालाः सन्ततावृत्तिरूपा इत्यर्थः, धार्या अङ्गीकार्याः स्वाङ्गेष्विवत्यावर्त्तनीयं ममाख्यवृत्तिष्विवत्यर्थः, नन्वेतादृशं विभूतिरेखात्रयविधारणं रुद्राक्षमालाधारणं च शिव एव सम्भाव्यते न तु तत्पूजके क्वापि दृष्टमित्यशङ्क्यास्यां पूजायां शिवः स्वयं भूत्वैवाधिकारी नान्यथेत्यर्थं दर्शयितुं श्रुतिमुदाहरति देव इति, हे शिष्य देवश्चिन्मात्ररूप आत्मा भूत्वा सम्भूय देवं चिन्मात्ररूपमात्मानं यजेत्पूजयेदित्येवमियमेषा शाश्वती शाश्वतोपनिषत्स्था श्रुतिर्वेदवागस्ति अत एवैतादृशविभूतिरेखात्रयरुद्राक्षमालाधारणेन शिवः सञ्छिवमर्चयेदिति भावः ॥ ४ ॥

एवं पूजाधिकारसिद्धये साधनान्युपदिश्येदानीं तादृशाधिकारवतः पूजाक्रमं दर्शयितुमाह।

## अथ पूजाक्रमः ।

अथेति । अथ पूजासाधननिरूपणानन्तरं पूजाक्रमः पूजाया अर्चाया क्रमोऽनुष्ठानं निरूप्यत इति शेषः, पूजनानुष्ठानप्रकारो वक्ष्यत इत्यर्थः, तत्रादौ मणिमयादिलिङ्गानि शिवपूजास्थानानि शैवतन्त्रेषु समाहात्म्यानि प्रतिपादितानि सन्ति तेषु च मृण्मयस्यैव लिङ्गस्यातिविस्तृतमाहात्म्यनिरूपणान्मृण्मयमेवात्र लिङ्गं कर्तव्यं पूज्यं चेत्याशयेनात्र पूजायां लौकिकमृद्विलक्षणां मृदं दर्शयति ।

आकाराः कल्पिता यस्यां ब्रह्माद्याः स्थिरजङ्गमाः ।
तन्मृतिकामयं शैवैः शिवलिङ्गं प्रपूज्यते ॥ ५ ॥

आकारा इति । हे शिष्य यस्यां लौकिकमृद्विलक्षणायां मर्दयति नाशयति सर्वं द्वैतमिति मृदिति व्युत्पत्त्या 'नेह नानास्ति किञ्चने'ति श्रुतिदृष्ट्या सर्वद्वैतबाधावधित्वेन प्रतिपादितं ब्रह्मैवात्र मृच्छब्देन ग्राह्यं, तस्यां ब्रह्माद्या ब्रह्मा स्वयंभूराद्यः प्रथमो येषां ते तथोक्ताः स्थिरजङ्गमाः स्थिराः स्थावराः पर्वतादयो जङ्गमाश्च गतिमन्तो मनुष्यादयस्ते समस्ता आकारा आकृतयो लौकिकमृदि घटादय इव रूपाणीत्यर्थः, कल्पिताः कल्पनयोत्पादिताः सन्ति सा मृच्छैवैः शिवा एव शैवाः स्वार्थेऽणतः शिवस्वरूपभूताधिकारिभिस्तन्मृत्तिकामयं सोक्तलक्षणा या मृत्सर्वद्वैतापमर्दकं ब्रह्म तन्मयं तद्रूपं प्रत्यगात्मस्वरूपं शिवलिङ्गं शिवो ब्रह्माभिन्नः प्रत्यगानन्दात्मा तस्य लिङ्गं लक्षकं चिद्रूपानन्दमयाद्यन्नमयान्तं बाह्यं च घटाद्याकाशान्तं च जग'त्सर्वं खल्विदं ब्रह्मे'ति श्रुतिदृष्ट्या प्रपूज्यत आद्रियते. यद्वा शिवस्य सुखरूपस्य ब्रह्मणो लिङ्गं सच्चिदानन्दादिचिह्नं स्वस्मिन्प्रत्यगा-

त्मनि प्रपूज्यतेऽहं ब्रह्मास्मीति साक्षात्क्रियत इत्यर्थः, स्वस्मिञ्जगति वा ब्रह्ममात्रत्वानुभव एवात्र पूजनमिति भावः ॥ ५ ॥

एवं मृत्तिकां निर्णीयेदानीं समन्त्रकं मृद्ग्रहणं विधातुं मृद्ग्रहणमन्त्रं च दर्शयितुं च गद्येन प्रतिजानीते ।

तत्र प्रथमं हराय नम इति मृतिकाग्रहणम् ।

तत्रेति । पूजाक्रमनिरूपणे प्रथममादौ हराय नम इति हरति सर्वं द्वैतमिति हरः समस्तद्वैतबाधावधित्वेनोपलक्षितः प्रत्यगभिन्नः परात्मा तस्मै नमोऽष्टप्रकृतिरूपाष्टाङ्गसहितेश्वरसहितजीवत्वबाधरूपः प्रह्वीभावोऽस्त्विति शेषः, इत्येवंप्रकारं मन्त्रार्थानुसन्धानमेवात्र मृत्तिकागृहणम्, आलक्षणमृच्छब्दवाच्यं ब्रह्मभावग्रहणं स्वस्मिन्कर्त्तव्यमिति भावः, तमिममर्थं श्लोकेनाह ।

मृत्सत्या यच्छरावास्तु श्रुता ब्रह्माण्डकोटयः ।
हराय नम इत्येव ग्राह्या सा मृत्तिका बुधैः ॥ ६ ॥

मृदिति । सत्या कालत्रयाबाध्यब्रह्मरूपा मृत्सर्वद्वैतोपमर्दकत्वान्मृन्नाम्नी ज्ञेया लोकप्रसिद्धमृत्साम्यमप्यस्यां दर्शयति यदिति ब्रह्माण्डकोटयो ब्रह्माण्डानां कोटयोऽनन्तकोटिब्रह्माण्डानीत्यर्थः, यच्छरावा यस्या ब्रह्मस्वरूपमृत्तिकायाः शरावाः शरावसदृशकार्यरूपास्तुपदेन लौकिकशराववैलक्षण्यमेतेषु सूचितं, श्रुताः श्रुतिभिः प्रतिपादिताः सन्ति अतो मृत्सादृश्यादपि ब्रह्मणो मृन्नामयोग्यतेति भावः, जगतो ब्रह्मकार्यत्वे श्रुतयः ‘यतो वा इमानि भूतानि जायन्त’ इत्याद्याः, सोक्तलक्षणा मृत्तिका ब्रह्मरूपा स्थितिरित्यर्थः, बुधैर्विवेकिभिर्हरायनमः सर्वद्वैतबाधेनावाशिष्टस्वरूपः प्रत्यगभिन्नः परमात्मैव हरस्तस्मै तद्रूपं प्राप्तुं नमोऽष्टप्रकृतिरूपाष्टाङ्गसहितेश्वराभिन्नजीवत्वबाधरूपः प्रह्वीभावोऽस्तु

इत्येवं मन्त्रार्थानुसन्धानेन ग्राह्याऽङ्गीकार्याऽन्यथा तदङ्गीकारो न स्यादिति भावः ॥ ६ ॥

एवं लोकप्रसिद्धमृद्ग्रहणविलक्षणं मृद्ग्रहणं समन्त्रकं प्रदर्श्येदानीमेव तादृशमेव लिङ्गसङ्घट्टनं विधत्ते तत्रादौ तन्मन्त्रमाह।

महेश्वराय नम इति लिङ्गसङ्घट्टनम् ।

महेश्वरायेति । महेश्वराय महान्मायोपाध्यनवच्छिन्नो य ईश्वरोऽन्तर्याम्यारोपाधिष्ठानभूतः सर्वेश्वरः 'सर्वेश्वरत्वमेतस्मादन्तर्यामित्वतः पृथग्'िति विद्यारण्यस्वामिभिरुक्तं ब्रह्म महेश्वरपदेनात्रोक्तः, श्रुति'श्चैष सर्वेश्वर'इति तस्मै तद्रूपत्वं प्राप्तुमित्यर्थः, नम उक्तविधाष्टाङ्गसहितेश्वराभिन्नजीवत्वबोधलक्षणः प्रह्वीभावः कार्यः, इत्येवमर्थानुसन्धानमेवात्र लिङ्गसङ्घट्टनं लिङ्गस्य ब्रह्मलक्षकत्वेन तच्चिह्नभूतस्य जगतोऽहं ब्रह्मास्मीतिवृत्तेर्वा सङ्घट्टनं तेन ब्रह्मणा सहैक्यसंपादनं कार्यमिति शेषः ।

इममेव मन्त्रार्थं श्लोकेनापि संगृह्णाति ।

अखण्डाकारवृत्तिस्तु वेदान्ते या निरूपिता ।
नमो महेश्वरायेति लिङ्गसङ्घट्टनं हि तत् ॥ ७ ॥

अखण्डाकारेति । या तु विद्वत्सु प्रत्यक्षमनुभूयमाना वेदान्ते वेदान्तशास्त्रेऽखण्डाकारवृत्तिरखण्डं भेदरहितं यद्ब्रह्म तस्याकार इवाकारो यस्याः सा तथाभूता स्वास्फुरणपूर्वकब्रह्ममात्रस्फुरणरूपा या वृत्तिः सैव निरूपिता प्रतिपादिता तद्ब्रह्माकारवृत्तित्वं हि प्रसिद्धं ज्ञानिनि नमो महेश्वरायेति महेश्वरोऽन्तर्याम्यारोपाधिष्ठानभूतो मायोपाध्यनवच्छिन्नस्तत्पदलक्ष्यस्तस्मै तद्रूपं प्राप्तुं नमोऽष्टप्रकारमष्टाङ्गसहितेश्वराभिन्नजीवत्वबोधरूपः प्रह्वीभावः कार्य इत्येवं मन्त्रार्थानुसन्धानेन लिङ्गसङ्घट्टनं लिङ्गस्य

ब्रह्मलक्षकत्वेन चिह्नभूतस्य जगतो वृत्तेर्वा प्रमारूपायाः सम्यग्घट्टनं पुनः पार्थक्यं न स्यादित्येवं ब्रह्मणा सहैक्यसम्पादनं भवति नान्यथेति भावः ॥ ७ ॥

एवमलौकिकं लिङ्गसंघट्टनं प्रदर्श्येदानीं तादृशलिङ्गप्रतिष्ठां प्रदर्शयितुं तावन्मन्त्रमाह ।

शुलपाणये नम इति प्रतिष्ठापनम् ।

शूलपाणय इति । शूलपाणये शूलमज्ञानशत्रुभेदकत्वाच्छूलमिवात्र ज्ञानशूलं ग्राह्यं, वक्ष्यति हि ।

शान्तिवैराग्यबोधाख्यैस्त्रिभिरग्रैस्तरस्विभिः ।
त्रिगुणत्रिपुरं हन्ति त्रिशूलेन त्रिलोचनः ॥

इति, तत्पाणौ हस्ते यस्य स तथोक्तः, अनेनात्र स्वशरणागतमुमुक्षूणां ज्ञानप्रदो गुरुरेव ब्रह्म ।

'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नम' ॥

इति स्मृतेस्तस्मै गुरुरूपब्रह्मत्वप्राप्तये नमः पूर्वोक्तलक्षणः प्रह्वीभावो विधेय इत्येवं ब्रह्मस्वरूपगुर्वभेदचिन्तनं स्वस्मिन्यत्तदेवास्यां पूजायां प्रतिष्ठापनं प्रतिष्ठा ज्ञेया, तमिममेवार्थं श्लोकेनापि संगृह्य दर्शयति ।

त्यक्त्वाऽसम्भवनां तद्वद्विपरीतत्वभावनाम् ।
शुलपाणिः प्रतिष्ठाप्यः पीठे निष्ठामये बुधैः ॥ ८ ॥

त्यक्त्वेति। हे शिष्य असम्भावनां स्वगुरुब्रह्मणामुक्ताभिन्नत्वेऽसम्भावनामनिश्चयरूपां वृत्तिं त्यक्त्वा विसृज्य तद्वत्तथा विपरीतत्वभावनां स्वगुरुब्रह्मणां भिन्नत्वनिश्चयरूपं विपरीतत्वं

तस्य भावनां स्फूर्तिं त्यक्त्वा विसृज्य बुधैः स्वगुरुब्रह्मणा-भिन्नत्वनिश्चयवद्भिर्निष्ठामयं स्वात्मगुरुब्रह्मणामखण्डरूपत्वे या निष्ठा सहजं प्रेम तन्मये तद्रूपे पीठ आसने शूलपाणिरज्ञानशत्रुभेदकत्वाच्छूलमिव शूलं तत्त्वबोधः पाणौ हस्ते यस्य स तथोक्तः साङ्ख्ययोगौ निजौ बाहू इत्युक्तत्वात्स शूलपाणिर्ब्रह्माभिन्नात्मस्वरूपो गुरुः प्रतिष्ठाप्यो ब्रह्माभिन्नस्वात्माभिन्नत्वानुसन्धानं स्थिरीकर्त्तव्य इदमेवात्र प्रतिष्ठापनम् ॥ ८ ॥

एवमलौकिकं प्रतिष्ठापनं निरूप्येदानीमस्यां पूजायामलौकिकमेवावाहनं निरूपयितुं तावदावाहनमन्त्रमाह ।

पिनाकधृते नम इत्यावाहनम् ।

पिनाकधृत इति । पिनाकधृते 'पिनाकोऽजगवन्धनुरित्यमरसिंहोक्तेरजोऽत्र चिन्मात्ररूपः परमात्मा गच्छति तत्त्वज्ञानेन निवृत्ता भवतीति गौरत्र माया प्रकृत्यपरपर्याया ग्राह्या तयोः समूहरूपं शबलं ब्रह्म प्रणवार्थभूतमजगवं पिनाकनामकं तद्वाचकः प्रणवश्चाभेदेनात्र ह्याह्यः, प्रणवस्य धनुष्ट्वे श्रुतिः 'प्रणवो धनुः शरो ह्यात्मे'ति स पिनाकस्तस्य धृद्धारकस्तदधिष्ठानभूतं परं ब्रह्म तद्रूपो गुरुश्च तस्मै तदर्थं तत्स्वरूपप्राप्त्य इत्यर्थः, नमः पूर्वोक्तलक्षणः प्रह्वीभावो विधेय इत्येवंमन्त्रार्थानुसन्धानमेवावाहनमत्र शिवस्वरूपगुरुस्वात्मनोः सामीप्यकारणमिति भावः, इममेव मन्त्रार्थं श्लोकेन स्पष्टयति ।

सर्वगस्यापि देवस्य भक्तिरावाहनं तव ।
आवाहयामि भक्त्या त्वामित्यावाह्यः पिनाकधृत् ॥ ९ ॥

सर्वगस्येति । सर्वगस्यापि सर्वत्रानुस्यूतस्यापि अस्तिभातिप्रियरूपेण सर्वत्र विद्यमानत्वाद्देवस्य चिन्मात्ररूपस्य शि-

वस्य भक्तिः सेवा सच्चिदानन्दरूपेणाङ्गीकार इत्यर्थः, आवा-हनं समीपप्रापणं भवेत्स्यादतोऽहं प्रमाता तं सच्चिदानन्द-रूपेण सर्वत्रानुस्यूतं शिवमावाहयामि समीपे प्रत्यक्षं करो-मीत्येवं पिनाकधृतिपनाकस्य पिनाकनाम्नोऽजगवन्धनुषः प्र-णवस्य तद्वाच्यशबलब्रह्मणो वा धारक आधारभूतं ब्रह्म यो-गहस्ते च प्रणवतद्वाच्यशबलब्रह्मधृतवदत्र लक्ष्यं स आवाह्यः सर्वदा स्वप्रत्यक्षत्वेनानुभवनीयः ॥ ९ ॥

एवमलौकिकमावाहनं प्रदर्श्येदानीं तथाविधं ध्यानं दर्श-यितुं सर्वलोकप्रसिद्धमेव ध्यानश्लोकमुदाहरन्नाह ।

अथ ध्यानम् ।

अथेति । अथावाहननिरूपणानन्तरं ध्यानं चिन्तनं नि-रूप्यत इति शेषः, तमेव प्रसिद्धं ध्यानश्लोकमुदाहरति ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ १०॥

ध्यायेदिति। अस्यार्थः—षोडशश्लोकैर्ग्रन्थकारो निरूपयिष्य-त्यतः संक्षेपेणात्र वर्णयामि हे शिष्य रजतगिरिनिभं रजतगि-रिणा रौप्यपर्वतेन निभं सदृशं चारुचन्द्रावतंसं चारुः सुन्दरो यश्चन्द्रः सोमः सोऽवतंसश्चूडाभूषणं यस्य तं रत्नाकल्पो-ज्ज्वलाङ्गं रत्नश्रेष्ठैरुज्ज्वलं प्रकाशमानमङ्गं शरीरं यस्य स त-थाविधस्तं परशुमृगवराभीतिहस्तमेकस्मिन्हस्ते परशुः कुठारोऽ-परे च मृगस्तदन्ये च वरश्चतुर्थहस्ते चाभीतिर्भयनिवर्त्तनं क्र-मेण यस्य तं प्रसन्नं हास्यमुख पद्मासीनं पद्मे कमल आसीनं

# बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां ) मूल्यं प्रापणव्ययश्च =) देय इति ॥

## तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

| | | |
|---|---|---|
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्ति स० | १ | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि ६ | ६ | ० |
| रसमञ्जरी । व्यङ्गयार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रमपराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख०९ | ९ | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्विरचिता । | १ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डे २ | २ | ० |
| श्रीमदणुभाष्यम् । श्रीश्रीवल्लभाचार्यविरचितम् । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि ५ | ५ | ० |
| तत्त्वशेखरः । श्रीभगवल्लोकाचार्यप्रणीतः । तथा-तत्त्वत्रयचुलुकसंग्रहः । कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः । | १ | ० |

**ब्रजभूषण दास और कम्पनी**

चांदनीचौक के उत्तर नई सड़क बनारस



स्थितं समन्तात्सर्वतः स्थितैरिति शेषः, अमरगणैर्देवसमूहैः स्तुतं प्रशंसितं व्याघ्रकृत्तिं व्याघ्रस्य शार्दूलस्य कृत्तिश्चर्म तद्वसानं परिदधानं विश्वाद्यं विश्वस्य जगत आद्यं तत्कारणभूतमत एव विश्ववन्द्यं विश्वस्य वन्द्यं नमनार्हं निखिलभयहरं निखिलं समस्तं यद्भयं समस्तानां वा भयं भीतिस्तस्य हरं नाशकं पञ्चवक्त्रं पञ्चसंख्यानि वक्त्राणि वदनानि यस्य स तथोक्तस्तं त्रिनेत्रं त्रिसंख्यानि नेत्राणि लोचनानि यस्य तं नित्यं सद्रूपं महेशं शिवं ध्यायेच्चिन्तयेदिति लौकिकार्थः ॥ १० ॥

इत्यनेनैवं ध्यानं कर्त्तव्यमिति शेषः । प्रकृतपूजोपयुक्तमस्यार्थं निरूपयिष्यमाण आह गद्येन ।

## अथाऽस्य विवरणम् ।

अथेति । अथ ध्यानश्लोकोदाहरणानन्तरमस्य ध्यानश्लोकस्य विवरणं व्याख्यानं क्रियत इति शेषः ।

## तत्र ध्यायेदित्यादिपदत्रयस्य विवरणम् ।

एवं ध्यानश्लोकव्याख्याननिरूपणं प्रतिज्ञायेदानीमादौ ध्यायेन्नित्यं महेशमिति पदत्रयस्य तात्पर्यं निरूपयिष्यनाद्येनाह तत्रेति । तत्र ध्यानश्लोकविवरणे नित्यं महेशं ध्यायन्तीति पदत्रयस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

अनित्ये नित्यं विरसा नित्ये नित्यं धृतव्रताः ।
नित्यं महेशं ध्यायन्ति नित्यानित्यविवेकिनः ॥ ११ ॥

अनित्य इति । हे शिष्य अनित्ये कालत्रयेप्यसद्रूपेऽनात्मभूते द्वैतप्रपञ्चे नित्यं सर्वदा विरसा विगतो रसः सुखं येषां तथाभूताः, किञ्च नित्ये कालत्रयेऽप्यबाध्य आत्मस्वरूपे नित्यं सर्वदैव धृतव्रता धृतं गृहीतं व्रतं श्रव-

णाद्यनुष्ठाननियमो येषां ते तथोक्ता नित्यानित्यविवेकिनो नित्यं कालत्रयाबाध्यमात्मचैतन्यमनित्यमनात्मरूपं द्वैतं ते विविच्येते अनेनेति नित्यानित्यविवेक आत्मानात्मपृथक्त्वज्ञानं येषामस्ति ते तथाभूताः नित्यं कालत्रयाबाध्यमात्मस्वरूपं महेशमन्तर्याम्यारोपाधिष्ठानं सर्वेश्वरं, यद्वा नित्यं सर्वदैव यथा भवति तथा ध्यायन्ति चिन्तयन्ति अनित्यान्नित्यमात्मानं पृथक्कृत्य नित्यात्मस्वरूपस्य प्राप्तये सर्वदा श्रवणाद्यनुष्ठाननियमवन्तो नित्यात्मस्फुरणपूर्वकं श्रवणाद्यावृत्त्यैव कालमतिक्रामन्ति तदेवात्र ध्यानशब्देन विवक्षितमिति भावः ॥ ११ ॥

एवं ध्यायेन्नित्यमहेशपदानां तात्पर्यमभिधायेदानीं रजतगिरिनिभमिति पदं व्याख्यास्यन् गद्येन प्रतिजानीते ।

## अथ रजतगिरिनिभमित्यस्य विवरणम् ।

अथेति। अथ ध्यायेन्नित्यं महेशमितिपदत्रयव्याख्यानानन्तरं रजतगिरिनिभमिति पदस्य विवरणं क्रियत इति शेषः। तदेव पद्येनाह ।

रजतस्य गिरिः शंभुः शाम्भवानां परं धनम् ।
धनेन तेन पूर्णानां दरिद्रत्वं न विद्यते ॥ १२ ॥

रजतस्येति। रजतस्य यथा रूप्यं प्रपञ्चनिर्वाहकं सर्वेषां सुखजनकं च भवतीति प्रसिद्धं तथाऽऽनन्दोपि 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिभिः सर्वजगन्निर्वाहकत्वप्रतिपादनाद् 'एष ह्येवानन्दयाति, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतिभिश्चानन्दत्वनिरूपणाच्चानन्दस्य रजतसाम्यतया स रजतपदेनात्र ग्राह्यः, तस्य गिरिरिव गिरिः पर्वत आनन्दसमूहरूपः शिवोऽत एव शम्भुः शं सुखं

भवत्यस्मादिति शम्भुः समस्तसुखप्रदः परमात्माऽस्ति अतः स शाम्भवानां शम्भोरेव हिता ये सेवकास्तेषां, यद्वा शम्भुरेव शाम्भवास्तेषां हितार्थे स्वार्थे वा तद्धितः, परमुत्कृष्टं धनं द्रव्यमस्ति द्रव्यसाम्यमेव दर्शयति धनेनेति, तेन प्रत्यगभिन्नब्रह्मस्वरूपेण धनेन द्रव्येण प्रीतिविषयेणेत्यर्थः, पूर्णानां तृप्तानां विदुषां दरिद्रत्वं दारिद्र्यं दुःखप्रदा दुर्गतिस्तस्य भावस्तत्त्वं न विद्यते नास्ति अत एव रजतवत्सुखसाधनत्वाद्दुःखस्वरूपदारिद्रनिवर्तकत्वाच्चानन्दसमूहरूपत्वाद्पि आनन्दात्मनः शिवस्य रजतगिरिसाम्यं प्रतिपादितमिति भावः ॥ १२ ॥

एवं रजतगिरिनिभमिति पदस्य तात्पर्यमभिधायेदानीं चारुचन्द्रावतंसमिति पदतात्पर्यं दर्शयितुं गद्येन प्रतिजानीते ।

## अथ चारुचन्द्रावतंसमित्यस्य विवरणम् ।

अथेति । अथ रजतगिरिनिभमितिपदव्याख्यानिरूपणानन्तरं चारुचन्द्रावतंसमित्यस्य चारुचन्द्रावतंसमित्येवं रूपं यत्पदं तस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

> शुद्धात्मा शीतला कान्ता सूक्ष्मा बोधकला परा ।
> वक्रायते दुरापेयं चन्द्रचूडा बिभर्ति ताम् ॥ १३ ॥

शुद्धेति । हे शिष्य शुद्धात्मा शुद्धः प्रपञ्चरागादिकलङ्कशून्य आत्मा स्वरूपं यस्याः सा तथोक्ताऽत एव शीतला तापत्रयनिवर्तयित्री स्वतश्च तापत्रयहीनाऽत एव कान्ताऽऽनन्दरूपत्वात्कमनीया सूक्ष्मा सूक्ष्मात्मविषयत्वाद्वृत्त्यन्तराविषयत्वाच्च तन्वी परा सर्वोत्कृष्टाऽऽत्मविषयत्वात्स्वतश्च सर्ववृत्तिभ्य उत्कृष्टत्वाच्च परा प्रपञ्चादन्या, एवं विधा या बोधकला बोधरूपं प्रत्यगभिन्नं ब्रह्मचैतन्यं कलयति अनुभवतीति सा तथोक्तेयमुक्तलक्षणा विद्यारूपा

वृत्तिर्दुरापा दुःखेन क्लेशेनाऽप्नोतीति सा तथाभूताऽत एव वक्रायते वक्रमिवाचरतीति सा तथा भवति दुरापत्वमेव तस्या वक्रभाव इति भावः, तामुक्तलक्षणां ज्ञानकलामाह्लादकत्वाच्चन्द्रत्वं तस्यास्तां विभर्ति धरति अतः शिवस्तया बोधकलाधारणया चन्द्रचूडश्चन्दयति स्वसंस्पृष्टं प्रमातारमाह्लादयतीति चन्द्रो बोध श्चूडायां चूडोपलक्षितमस्तके यस्य स तथोक्तः प्रसिद्धोऽस्तीति शेषः ॥ १३ ॥

एवं चारुचन्द्रावतन्समिति पदस्य तात्पर्यमभिधायेदानीं रत्नाकल्पोज्ज्वलाङ्गमिति पदस्य तात्पर्यमभिधातुं गद्येन प्रतिजानीते ।

अथ रत्नाकल्पोज्ज्वलाङ्गमित्यस्य विवरणम् ।

अथेति । अथ चारुचन्द्रावतन्समिति पदस्य तात्पर्यनिरूपणानन्तरं रत्नाकल्पोज्ज्वलाङ्गमिति पदस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

योगदीक्षामयान्येव बोधरत्नानि कानि चित् ।
दधाति शंकरोऽतोऽस्य रत्नाकल्पोज्ज्वलाङ्गता॥ १४॥

योगदीक्षेति । हे शिष्य योगदीक्षामयानि योगः कूटस्थब्रह्मणोर्भागत्यागलक्षणया विरुद्धांशत्यागेन चिन्मात्ररूपेणैक्यं तस्य दीक्षा संस्कारो वासनेत्यर्थः, तन्मयानि तत्प्रचुराणि कानि चिदनिर्वचनीयानि बोधरत्नान्येव बोधा जीवब्रह्मैक्यविषयाणि ज्ञानान्येव रत्नानि स्वप्रकाशरूपेण रत्नसादृश्याद्रत्नानीव दधाति विभर्ति अत एव शङ्करस्तैरेव ज्ञानरत्नैः समस्तस्वशरणागतजीवानां शं सुखं करोतीति शङ्करः, अनेन स्वज्ञानप्रदो गुरुरेव परमात्मरूपतया पूज्य इति ध्वनितमतो बोधरत्नधारणादेवाऽस्य

ब्रह्मात्मगुरुशिवस्य रत्नाकल्पोज्ज्वलाङ्गता स्वप्रकाशत्वेन रत्नतुल्यबोधैरुज्ज्वलमङ्गं स्वरूपं यस्य स्वप्रकाशेन बोधप्रकाशेन चात्यन्तं प्रकाशस्वरूप इत्यर्थः, तस्य भावस्तत्ताऽस्तीति ज्ञेया ॥१४॥

एवं रत्नाकल्पोज्ज्वलाङ्गमिति पदस्य तात्पर्यं निरूप्येदानीं परशुहस्तपदस्य तात्पर्यमभिधातुं गद्येन प्रतिजानीते।

## अथ परशुहस्तपदविवरणम्।

अथेति। अथ रत्नाकल्पोज्ज्वलाङ्गमिति पदस्य व्याख्यानानन्तरं परशुहस्तपदस्य विवरणं व्याख्यानं क्रियत इति शेषः- तदेव श्लोकेनाह।

येन मोहवनं छिन्नं कदाचिन्न प्ररोहति।
स बोधः परशुस्तीक्ष्णो हस्ते रुद्रस्य वर्त्तते ॥ १५ ॥

येनेति। हे शिष्य येन जीवब्रह्मैक्यविषयेण बोधपरशुना मोहवनं मोहोऽज्ञानं तदेव वनमरण्यं कामादिव्याघ्रनिवासत्वेन भयहेतुत्वादरण्यत्वं मोहस्येति भावः, तच्छिन्नं सन्निकृत्तं सत्कदाचित्कस्मिन्नपि समये कालत्रयेपीत्यर्थः, न प्ररोहति नोत्पद्यते स उक्तलक्षणः परशुः परमभिन्न आत्मनि भेदकारणभूतं मायां तत्कार्यं च शातयति खण्डयतीति परशुस्तीक्ष्णो भेदकारणाज्ञानादिभेदने तीव्रो बोधो ज्ञानमेव ज्ञेयः, स रुद्रस्य रोदयति स्वसम्बद्धं जीवमिति रुदहङ्कारस्तं राति 'नेहनानास्ति किञ्चने'ति श्रुतिदृष्ट्या बाधितत्वात्स्वात्ममात्रत्वेनाङ्गीकरोतीति रुद्रः परमात्मस्वरूपो गुरुस्तस्य हस्ते सांख्ययोगौ निजौ बाहू इत्युक्तत्वात्सांख्याख्यहस्ते वर्त्तते तिष्ठति ॥ १५ ॥

एवं परशुहस्तत्वं व्याख्यायेदानीं मृगहस्तत्वं व्याख्यातुं गद्येन प्रतिजानीते।

## अथ मृगहस्तपदविवरणम् ।

अथेति । अथ परशुहस्तत्वव्याख्यानानन्तरं मृगहस्तत्वविवरणं मृगहस्तत्वं यच्छिवस्योक्तं तस्य व्याख्यानं विवरणं क्रियत इति शेषः । तदेवश्लोकेनाह ।

धर्तुं न शक्यते धीरैर्यो धृतोऽपि पलायते ।
लीलयैव धृतो हस्ते शम्भुना स मनोमृगः ॥ १६ ॥

धर्त्तुमिति । हे शिष्य धीरैर्ब्रह्मचर्यादिसाधनसम्पन्नैर्विद्वद्भिः पराभूतावपि मनसः स्थैर्यसम्पादने योगाभ्यासादपरावृत्तैश्चायं मनोमृगो मृग्यन्ते विषया अनेनेति मृगो मनोरूपो मृगो धर्त्तुं स्वाधीनीकर्त्तुं न शक्यते न समर्थ्यते, किञ्च कदाचिद्यो मनोमृगो धृतोऽपि स्वाधीनीकृतोऽपि पलायते दूराद्दूरं गच्छति स उक्तलक्षणो मनोमृगो मनश्चित्तं तदेव मृगयति विषयानिति मृगो मन एव मृगोऽत्र ग्राह्यः, शम्भुना शम्भवत्यस्माज्जगतो मुमुक्षूणां च स शम्भुस्तेन, एतेन ज्ञानयोगाभ्यां मुमुक्षूणां मुक्तिप्रदः परब्रह्मस्वरूपोगुरुशिवो ग्राह्यः, गुरुर्ब्रह्मे'त्यादिस्मृतेः, 'एष ह्येवानन्दयाती'ति श्रुतेश्च ब्रह्मात्मगुरोः शम्भुत्वं ज्ञेयं, लीलयैव क्रीडयैव हस्ते योगाख्यहस्ते धृतो भृतः स्थिरत्वं सम्पाद्य वशीकृत इत्यर्थः ॥ १६ ॥

एवं मृगहस्तत्वं व्याख्यायेदानीं वरहस्तत्वं व्याचिख्यासुर्गद्येनाह ।

## अथ वरहस्तत्वविवरणम् ।

अथेति ।अथ मृगहस्तत्वव्याख्यानानन्तरं वरहस्तत्वविरणं शिवे यद्वरहस्तत्वं प्रोक्तं तस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव पद्येनाह ।

वरार्थिभिर्वरेण्याय वृतो यैस्तु वरः स तम् ।
वरं ददाति हस्तेन वरदस्तेन शंकरः ॥ १७ ॥

वरार्थिभिरिति । हे शिष्य यैर्मुमुक्षुभिर्वरार्थिभिर्वरं जीवब्रह्मैक्यभावलक्षणं मोक्षमर्थयन्त इच्छन्ति ते तथोक्तास्तैर्मोक्षस्यैव धर्माद्यर्थेषु श्रेष्ठत्वाद्वरेण्याय वरेण्यं सर्वजनैः प्रार्थनीयं ब्रह्मसुखं तस्मात्तु वृतो याचितः सेवितो वा यः शिवः स तु-क्तलक्षणो ब्रह्मरूपो गुरुरेव तं वरं ब्रह्मभावलक्षणं श्रेष्ठमर्थं हस्तेन वेदान्ताविरुद्धसांख्यहस्तेन ददात्यर्पयति स्वात्मन्येवासङ्गत्वादि-लक्षणप्रदर्शनेन ब्रह्मभावप्राकत्वान्मोक्षं ददातीत्यर्थः, तेन कारणेन वरदो वरं मोक्षं ददातीति वरदोऽत एव शङ्करः समस्तस्वशरणागतसुखकरोऽस्तीति ज्ञेयः ॥ १७ ॥

एवं वरदहस्तत्वं व्याख्यायेदानीमभीतिहस्तत्वं व्याख्यातुं पद्येन प्रतिजानीते ।

अथाऽभीतिहस्तत्वविवरणम् ।

अथेति । अथ वरहस्तत्वविवरणानन्तरमभीतिहस्तत्वविवरणमभीतिहस्तमिति पदस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव पद्येनाह ।

मृत्योर्विभेति ब्रह्मापि मृत्युरेव भयं महत् ।
तस्मादमृत्युरभयं हस्ते मृत्युञ्जयस्य तत् ॥ १८ ॥

मृत्योरिति । हे शिष्य ब्रह्मापि स्वयम्भूरपि किम्पुनरितर इत्यपिशब्देन सूचितं, मृत्योर्मरणाद्बिभेति भीतिं प्राप्नोति अतो महदुत्कृष्टं भयं भीतिर्मृत्युरेव मरणमेवास्ति तस्माद्धेतोरमृत्युर्न विद्यते मृत्युर्मरणं यत्र साऽमृत्युर्मोक्षोऽभयं भयं मरणं नास्ति यस्मिन्तदस्ति तदभयाख्यं पदं मोक्षरूपं मृत्युञ्ज-

यस्य मृत्युर्मरणं जयति स्ववशं सम्पादयतीति मृत्युञ्जयोऽब्रह्माभिन्नप्रत्यगात्मरूपो गुरुस्तस्य ब्रह्मस्वरूपत्वाद्वशीकृतमृत्योरिति भावः, हस्ते योगाख्ये करे वर्त्तते मृत्युरूपद्वैताप्रतीतिस्तु योग एववर्त्तत इति भावः ॥ १८ ॥

एवं परशुमृगवराभीतिहस्तमिति पदं चतुर्भिः श्लोकैर्व्याख्यायेदानीं प्रसन्नमिति पदं व्याख्यातुं गद्येन प्रतिजानीते।

## अथ प्रसन्नमित्यस्य विवरणम्।

अथेति। अथ परशुमृगवराभीतिहस्तमितिव्याख्यानानन्तरं प्रसन्नमित्यस्य प्रसन्नमिति पदस्य विवरणं व्याख्यानं क्रियत इति शेषः। तदेव श्लोकेनाह।

सिद्धिमेकामपि प्राप्य कश्चिदन्तः प्रसीदति।
निधानं सर्वसिद्धीनां प्रसन्नः सर्वदा हरः॥ १९॥

सिद्धिमिति। हे शिष्य कश्चित्कोपि जीव एकामाकाशगमनादिषु गौणसिद्धिषु अणिमादिषु प्रधानसिद्धिषु वा काञ्चनैकां सिद्धिं विभूतिं प्राप्योपलभ्याऽन्तरन्तःकरणे प्रसीदति प्रसन्नो भवति तर्हि सर्वसिद्धीनां सर्वाः समस्ता याः सिद्धयो विभूतयस्तासां निधानं निधीयन्ते स्थाप्यन्तेऽस्मिन्सिद्धय इति निधानमाधारः शिवोऽनः सुखरूपः प्रत्यगभिन्नब्रह्मगुरुरस्ति अतः सर्वदा सर्वकालं प्रसन्नः सुखरूपोऽस्ति अतो मुक्त्यादिसर्वसिद्धिप्रदो गुरुरेव प्रत्यगभिन्नब्रह्मरूप इत्यर्थः॥१९॥

एवं प्रसन्नमिति पदं व्याख्यायेदानीं पद्मासीनमिति पदं व्याख्यातुं पद्येन प्रतिजानीते।

## अथ पद्मासीनमित्यस्य विवरणम्।

अथेति। अथ प्रसन्नमिति पदविवरणानन्तरं पद्मासीनमि-

स्यस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव पद्येनाह ।

सतां हृदयपद्मेषु यदासीनः सदाशिवः ।
अत एव हि वेदेषु पद्मासीन इतीरितः ॥ २० ॥

सतामिति । हे शिष्य यद्यस्मात्कारणाच्छिवो ब्रह्माभिन्नप्रत्यगानन्दरूपो गुरुः सतामात्मसाक्षात्कारवताम्, 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरि'तिश्रुतेः, हृदयपद्मेषु हृदयान्यन्तःकरणान्येव पद्मानि कमलानीव तेषु, यद्वा हरति सर्वं द्वैतमिति हृत्सर्वद्वैतनिषेधः—'अथात आदेशो नेति नेति, नेह नानास्ति किञ्चने'त्यादिश्रुतिकृतस्तमयते प्रकाशयतीति हृदयं समस्तजगदत्यन्ताभावप्रकाशकं चैतन्यं तदेव पद्मानि पद्यते गम्यते श्रवणादिसाधनैः प्राप्यत इति पद्ब्रह्माभिन्नं प्रत्यगात्मचैतन्यं माति साक्षात्करोतीति पद्मं जीवब्रह्मैक्यविषयो बोध आदरे बहुवचनं तेषु तत्रैव सर्वदा प्रतीतेरासीनः स्थितोऽत एवास्मादेव कारणाद्वेदेषु श्रुतिषु 'हृत्पुण्डरीकं विरजं विशुद्धमि'त्यादिषु हि प्रसिद्धमेतद्विद्वत्स्वपि पद्मासीनः पद्मे सतां हृदयकमले उक्तविधजीवब्रह्मैक्यविषयकबोधे वाऽऽसीनः स्थित इत्येवमीरितः कथित इति निश्चेतव्यम् ॥ २० ॥

एवं पद्मासीनमिति पदं व्याख्यायेदानीं समन्तात्स्तुतममरगणैरिति पदत्रयं व्याख्यातुं गद्येन प्रतिजानीते ।

अथ समन्तात्स्तुतममरगणैरित्यस्य विवरणम् ।

अथेति । अथ पद्मासीनमिति पदव्याख्यानन्तरं समन्तात्स्तुतममरगणैरित्येवं यत्पदत्रयं तस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

स्तुवन्ति देवान्मनुजास्ते देवा देवनायकान् ।

देवदेवो महादेवः स्तूयते देवनायकैः ॥ २१ ॥

स्तुवन्तीति । मनुजा मनुष्या देवान्मरुत्प्रभृत्यमरान् स्तुवन्ति प्रशंसन्ति ते मनुष्यैः स्तुता देवा मरुत्प्रभृत्यमरा देवनायकान्देवानां मरुदाद्यमराणां ये नायका ईश्वरा इन्द्रब्रह्मादयस्तान्स्तुवन्ति प्रशंसन्ति देवदेवो देवानां मरुत्प्रभृत्यमराणां तदीश्वराणामिन्द्रब्रह्मादीनां देवः प्रकाशात्मस्वरूपत्वात्प्रकाशकः प्रत्यगभिन्नब्रह्मचैतन्यरूपो गुरुरत एव महादेवो महानपरिच्छिन्नात्मस्वरूपो यो देवश्चिन्मात्रस्वरूपः स्वयंप्रकाशः स देवनायकैर्देवानां मरुदाद्यमराणां ये नायका ईश्वरा इन्द्रब्रह्माद्यास्तैः स्तूयते प्रशस्यते सर्वदेवानामात्मत्वात्सर्वदेवैः शिव एव स्तुत्य इति भावः ॥ २१ ॥

एवं समन्तात्स्तुतममरगणैरिति पदत्रयं व्याख्यायेदानीं व्याघ्रकृत्तिं वसानमिति पदद्वयं व्याख्यातुं गद्येन प्रतिजानीते ।

अथ व्याघ्रकृत्तिं वसानमित्यस्य विवरणम् ।

अथेति । अथ समन्तात्स्तुतममरगणैरिति पदत्रयव्याख्यानानन्तरं व्याघ्रकृत्तिं वसानमिति पदद्वयस्य व्याघ्रकृत्तिं वसानमित्येवं पदयोर्द्वन्द्वं युग्मं तस्य विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

शङ्करेण किरातेन मोहव्याघ्रो निपातितः ।
कटौ कृत्तिस्वरूपेण पश्य तस्य निदर्शनम् ॥ २२ ॥

शङ्करेणेति । हे शिष्य शङ्करेण शं सुखं करोतीति शङ्करः सकलजगदानन्दकरः परमात्माभिन्नः प्रत्यगात्मा तेन—'एष ह्येवानन्दयाती'ति श्रुतेः किरातेन वक्ष्यमाणलक्षणव्याघ्रघातकत्वेन किरातेन व्याधभूतेन, यद्वा किरति स्वात्मसुखसाक्षा-

ङ्कारूपं धर्मं वर्षतीति किरो धर्ममेघाख्यः समाधिस्तमात-
नोति विस्तारयतीति किरातः स्वात्मसाक्षात्कारसाधनभूतो जी-
वब्रह्मैक्यविषयो बोधस्तदुपदेशेन कृत्वा धर्ममेघाख्यसमाधिवि-
स्तारको गुरुरूपः परमात्मा तेन स्वरूपेण मोहव्याघ्रो मोह-
यति विस्मारयतीति स्वात्मानं स मोह एव दुःखदत्वाद्भीति-
हेतुत्वाच्च व्याघ्रः शार्दूल इव स मोहव्याघ्रो निपातितो घातित
इति निश्चेतव्यम्, इत्थं कुतो निश्चेतव्यमित्यत आह कटाविति ।

तस्योक्तस्य मोहव्याघ्रघातस्य निदर्शनं चिह्नं कटौ कटति
आवृणोति स्वात्मानमिति कटिरहङ्कारस्तस्मिन्न स्वात्मनि कृत्तिस्व-
रूपेण कृत्तिश्चर्म तदिव स्वसम्बद्धव्याघ्रसूचकं यथा तथा स्वका-
रणमोहसूचकं बाधितं देहद्वयसहितं चिदाभासरूपं कृत्तिसादृ-
श्यादत्र कृत्तिपदेन ग्राह्यं, यद्वा कृन्तति भिनत्ति स्वात्मानमिति
व्युत्पत्याऽऽत्मनि भेदप्रतीतिहेतुर्देहद्वयसहितश्चिदाभासो मोह-
व्याघ्रस्य बाधितत्वेन चर्मेवावशिष्टोऽत्र ग्राह्यः, सैव स्वरूपं यस्य
तेन पश्यावलोकय तेनैव चिह्नेन मोहव्याघ्रो घातितः स्वात्मशिव-
गुरुणेति निश्चेतव्यमिति भावः ॥ २२ ॥

एवं व्याघ्रकृत्तिं वसानमिति पदद्वयं व्याख्यायेदानीं वि-
श्वाद्यं विश्ववन्द्यमिति पदद्वयं व्याख्यातुं गद्येन प्रतिजानीते ।

## अथ विश्वाद्यं विश्ववन्द्यमित्यस्य विवरणम् ।

अथेति । अथ व्याघ्रकृत्तिं वसानमिति पदद्वयव्याख्यानाा-
नन्तरं विश्वाद्यं विश्ववन्द्यमित्यनयोर्व्याख्यानं विवरणं क्रियत
इति शेषः । तदेव गद्येनाह ।

विश्वकृद्विश्वरूपोऽसौ विश्वहृद्विश्वपालकः ।

विश्वाद्यो विश्ववन्द्यश्च विश्वेशो गिरिजापतिः ॥२३॥

विश्वकृदिति । हे शिष्य असौ शिवः प्रत्यगभिन्नः परमात्मा विश्वकृद्विश्वं जगत्करोति उत्पादयतीति विश्वकृत्समस्तजगत्कर्त्तुरन्तर्यामिणस्तदाधारभूतचिदखण्डैकरसात्पृथगसत्त्वात, किञ्च विश्वरूपो विश्वं जगदेव रूपमाकारो यस्य, यद्वा विश्वं जगद्रूप्यते प्रकाश्यऽतेनेनेति विश्वरूपो जगत्प्रकाशकः, तथा विश्वहृद्विश्वं समस्तं जगन्मायातत्कार्यरूपं हरति विनाशयतीति स तथोक्तो जगत्प्रलयकर्त्तुरहङ्कारस्य तदधिष्ठातृ रुद्रस्य च प्रत्यगभिन्नब्रह्मणः पृथगसत्त्वात्तथा विश्वपालको विश्वस्य जगतः पालको रक्षकः स्वसत्ताचितिसुखार्पणेन प्रसिद्धजगत्पालकस्याऽपि विष्णोस्ततः पृथगसत्त्वादपि तथा विश्वेशो विश्वस्य जगत ईशो नियन्ता तस्यापि ततः पृथगसत्त्वाच्च गिरिजापतिर्गिरति विनश्यति तत्त्वज्ञानादिति गिरिर्मोहस्तत्कार्यरूपो विक्षेपश्च तस्माज्जातोत्पन्ना गिरिजाऽहं ब्रह्मास्मीति प्रमा वृत्तिस्तस्याः पतिः पालकस्तं विना तस्या जीवनासिद्धेः प्रसिद्धं च वृत्तेर्विषयाधिष्ठानयोरधीनं जीवनमत एवंभूतत्वाद्विश्वाद्यो विश्वस्य जगत आद्य आदौ भवः समस्तजगत्कारणमित्यर्थः, अत एव विश्ववन्द्यश्च विश्वस्य जगतो वन्द्यो वन्दनार्होऽपि- अस्तीति निश्चेतव्यम् ॥ २३ ॥

एवं विश्ववन्द्यमिति पदे व्याख्यायेदानीं निखिलभयहरमिति व्याख्यातुं गद्येन प्रतिजानीते ।

अथ निखिलभयहरमित्यस्य विवरणम् ।

अथेति । अथ विश्वाद्यं विश्ववन्द्यमिति पदव्याख्यानानन्तरं निखिलभयहरमित्येतस्य निखिलभयहरमिति पदस्य

विवरणं व्याख्यानं क्रियत इति शेषः । तदेव श्लोकेनाह ।

श्रुतिर्भयमिति प्राह 'द्वितीयाद्वै भयं भवेत्' ।
हरो हरति भक्तानां मुक्तिदो निखिलं भयम् ॥२४॥

श्रुतिरिति । हे शिष्य 'द्वितीयाद्वै भयं भवेद्द्वि'तीयं द्वैतं तस्माद्धेतोर्भयं भीतिर्भवेत्स्याद्वै इति निश्चय इत्येवं श्रुतिर्वेदो भयं भयकारणं द्वैतं प्राहोक्तवान्, किञ्च मुक्तिदो मुक्तिं मोक्षं ददातीति मुक्तिदोऽद्वैतस्वरूपमुक्तिप्रद इत्यर्थः, अत एव हरो हरति सर्वं द्वैतमिति हरः समस्तभक्तक्लेशनिवारक इत्यर्थः, प्रत्यगभिन्नब्रह्मस्वरूपो गुरुर्भक्तानां स्वसेवकानां मुमुक्षूणामित्यर्थः, निखिलं समस्तं भयं भयकारणं द्वैतं हरति विनाशयति ॥२४॥

एवं निखिलभयहरमितिपदं व्याख्यायेदानीं पञ्चवक्त्रमिति पदं व्याख्यातुं गद्येन प्रतिजानीते ।

अथ पञ्चवक्त्रमित्यस्य विवरणम् ।

अथेति । अथ निखिलभयहरमिति पदव्याख्यानानन्तरं पञ्चवक्त्रमिति पदस्य विवरणं व्याख्यानं क्रियत इति शेषः, । तदेव पद्येनाह ।

ध्यायन्ति भक्ताः सर्वत्र सर्वेषामपि सन्मुखः ।
उन्मुखो विमुखानां यस्तस्य सा पञ्चवक्त्रता ॥ २५ ।

ध्यायन्तीति । हे शिष्य भक्ताः सेवका मुमुक्षव इत्यर्थः, सर्वत्र चतुर्दिक्षु स्थिताः सन्तो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुं ध्यायन्ति चिन्तयन्ति तेषां स्वचिन्तकानां सर्वेषामपि समस्तानामपि यः प्रत्यगभिन्नपरमात्मशिवगुरुः सन्मुखः प्रत्यक्षत्वेन प्रतीयमानो भवति, किञ्च विमुखानां स्वस्मिन्पराङ्मुखानां य

उक्तलक्षणः परमात्मशिवगुरुरुन्मुखः पराङ्मुखो भवति सा सर्वपदवाच्यचतुर्दिक्स्थभक्तसान्मुख्येन चतुर्मुखता पराङ्मुखेषु च पराङ्मुखता, एवंप्रकारा तस्य प्रत्यगभिन्नब्रह्मशिवगुरोः पञ्चवक्त्रता पञ्चसङ्ख्यमुखवत्त्वं भवतीति ज्ञेया ॥ २५ ॥

एवं पञ्चवक्त्रमिति पदं व्याख्यायेदानीं त्रिनेत्रमिति पदं व्याख्यातुं गद्येन प्रतिजानीते ।

## अथ त्रिनेत्रमित्यस्य विवरणम् ।

अथेति। अथ पञ्चवक्त्रमितिपदव्याख्यानानन्तरं त्रिनेत्रमित्यस्य त्रिनेत्रमितिपदस्य विवरणं व्याख्यानं क्रियत इति शेषः। तदेव पद्येनाह ।

कर्मोपास्ती उभे नेत्रे ज्ञानं नेत्रं तृतीयकम् ।
ललाटे राजते यस्य त्रिनेत्रस्तेन शङ्करः ॥ २६ ॥

कर्मोपास्ती इति। हे शिष्य प्रत्यगभिन्नपरात्मशिवगुरुं विना निर्वाहाभावात्तस्यैव कर्मोपास्ती कर्मज्ञानमुपासनाज्ञानं चेत्येते उभे द्वे नेत्रे नयने स्तस्तृतीयकं तृतीयं नेत्रं नयनं ज्ञानं ज्ञायते साक्षात्क्रियते ब्रह्माऽनेनेति ज्ञानं जीवब्रह्मैक्यविषयको बोधो ज्ञेयं, पितृलोकदेवलोकमोक्षप्रापकत्वादेतेषां नेत्रत्वमिति भावः, तत्तृतीयं ज्ञाननेत्रं यस्य प्रत्यगात्मशिवगुरोर्ललाटे भालवदेकदेशे यस्मात्कारणाद्राजते प्रकाशते तेन कारणेन शङ्करः सकलजगदानन्दकरः परमात्मगुरुस्त्रिनेत्रस्त्रीणि नेत्राणि नयनानि यस्य स तथोक्तोऽस्ति कर्मोपासनज्ञानाधिकारिणां तत्तत्फलप्रापकत्वात्कर्मोपासनज्ञानानां नेत्रत्वं तेषां चाधेयानामाधारत्वाच्छिवगुरोश्च संबन्धित्वं ज्ञेयमिति भावः ॥ २६ ॥

एवं ध्यानश्लोकं व्याख्यायेदानीं तत्प्रसङ्गादेव तदुपयोगितया

ोपकरणानां विचारं कर्तुमस्यां पूजायां तद्व्याख्यानं निरूप-
यितुं पूर्वोक्तस्योत्तरवक्ष्यमाणस्य चासङ्गत्यायोपसंहरति गद्येन।

इति ध्यानम्।

इतीति। ध्यानविवरणं ध्यानस्य ध्यानप्रतिपादकश्लोकस्य
ववरणं व्याख्यानमिति एवं कथितम्, एवं ध्यानश्लोकं व्याख्या-
ादानीमुपकरणानां विचारं निरूपयितुं गद्येन प्रतिजानीते।

अथोपकरणविचारः।

अथेति। अथ ध्यानव्याख्यानानन्तरमुपकरणविचार उप-
करणानामुपाङ्गानां विचारो विवेको ध्यानोपकारकाङ्गानां विवेक
त्यर्थः, क्रियत इति शेषः। तेषु प्रथमं शुद्धस्फटिकसङ्काशतां
व्याख्यातुं गद्येन प्रतिजानीते।

तत्रादौ शुद्धस्फटिकसङ्काशताविचारः।

तत्रेति। तत्र प्रतिज्ञात उपकरणविचार आदौ प्रथमं शुद्धस्फ-
टिकसङ्काशताविचारः शुद्धो निर्मलो यः स्फटिकः स्फटिकना-
ाश्मा तेन सङ्काशता सादृश्यं यच्छिवे निरूपितं तस्य विचारो
ववेकः क्रियत इति शेषः। तामेव शुद्धस्फटिकसङ्काशतां विचार-
यन्गद्येनाह।

निर्मले सर्वमेवेदं यदस्मिन्प्रतिबिम्बति।
शुद्धस्फटिकसङ्काशो नीरागः सोऽयमीश्वरः ॥२७॥

निर्मल इति। हे शिष्य यद्यस्मात्कारणान्निर्मले निर्गतं
ाया तत्कार्यजगद्रूपं मलं यस्मात्तथोक्तं तस्मिन्नस्मिन्स्वयं प्र-
काशत्वेन सदैवापरोक्षरूपे प्रत्यगभिन्नपरमात्मशिवगुरौ सर्वमेव
समस्तमपीदं जगत्प्रतिबिम्बति जीवा ईश्वरश्च ताभ्यां सहितं

प्रत्यगात्मशिवगुरावाभानत इत्यर्थः, स जगत्प्रतिबिम्बवानयं स्वयं प्रकाशत्वेन नित्यापरोक्षरूपः प्रत्यगभिन्नपरमात्मशिवगुरुर्नीरागः पारमार्थिकरागशून्योऽत एवेश्वर उक्तलक्षणैश्वर्यसंपन्नोऽस्ति अतः शुद्धो निर्मलो यः स्फटिक एतन्नामाश्मा तेन सङ्काशः सदृशो ज्ञेयः, यथा स्फटिकाश्मनि नीलपीतादिरागप्रतिबिम्बवत्यपि प्रतीयमाने सति वस्तुतो रञ्जनारहित एव तिष्ठति तद्वत्प्रत्यगभिन्नपरमात्मशिवगुरुरपि जगत्प्रतिबिम्बवानिव प्रतीयमानोऽपि वस्तुतस्तद्रहित एव विद्वद्भिरनुभूयतेऽतः स्फटिकसङ्काशत्वं प्रतिपाद्यत इति भावः ॥ २७ ॥

एवं शुद्धस्फटिकसङ्काशत्वं विचार्येदानीं कर्पूरगौरतां व्याचिख्यासुर्गद्येन प्रतिजानीते।

अथ कर्पूरगौरताविचारः ।

अथेति । अथ शुद्धस्फटिकसङ्काशत्वविचारानन्तरं कर्पूरगौरताविचारः शिवे कर्पूरगौरता या निरूपिता तस्या विचारो विवेकः क्रियत इति शेषः । तदेव पद्येनाह ।

यद्वासनाप्रसादेन सर्वा दुर्वासना गता ।
स्वभावशीतला सेयं शिवे कर्पूरगौरता ॥ २८ ॥

यद्वासनेति । हे शिष्य यद्वासनाप्रसादेन यस्य शिवस्य सम्बन्धिनी या वासना भावना तस्याः प्रसादः प्रसन्नतोत्पत्तिरित्यर्थः, तेन कृत्वा सर्वा समस्ता दुर्वासना दुष्टा स्वसंस्पृष्टजीवानां दुःखदात्री या वासना संस्कारः समस्तजगद्विषयिणी जीवानां बन्धकारणभूता वासनेति भावः, गता निवृत्ता भवति सोक्तलक्षणा स्वात्मशिवविषयिणी वासनेयं विद्वत्सु प्रत्यक्षाऽनुभूयमाना स्वभावशीतला स्वभावेनाकृत्रिमरूपेण शीतला

ापत्रयनिवर्तयित्र्यस्ति, लोकेपि कर्पूरे गौरता शीतलता चा-
भिन्नाऽनुभूयते तथात्र प्रत्यगभिन्नपरमात्मशिवगुरुविषयवासना-
ामपि तापत्रयनिवर्तकत्वेन शीतलत्वं शुद्धत्वेन गौरत्वं चा-
भिन्नमनुभूयतेऽत इयमेव कर्पूरगौरता कर्पूरस्य गौरतेव गौरता
ाया शिवे प्रत्यगभिन्नपरमात्मशिवगुरौ विषये ॥ २८ ॥

एवं कर्पूरगौरतां विचार्येदानीं दिगम्बरतां विचारयितुं ग-
द्येन प्रतिजानीते ।

## अथ दिगम्बरताविचारः ।

अथेति । अथ कर्पूरगौरताविचारणानन्तरं दिगम्बरता-
विचारः शास्त्रे लोके च या दिगम्बरतोच्यते तस्या विचारो
विवेकः क्रियत इति शेषः । तमेव विचारं गद्येनाह ।

निरावरणविज्ञानस्वरूपो हि स्वयं हरः ।
स्वैरं चरति संसारे तेन प्रोक्तो दिगम्बरः ॥ २९ ॥

निरावरणेति । हे शिष्य हि यस्मात्कारणाद्धरो हरति
सर्वं द्वैतमिति हरः प्रत्यगभिन्नपरमात्मशिवगुरुः स्वयं स्वतो
निरावरणचैतन्यस्वरूपो निर्गतं निवृत्तमावरणं ब्रह्मात्मा न
भाति नास्तीत्येवंरूपव्यवहारकारणं कारणाविद्यासहितं य-
स्मात्तत्तथोक्तं यच्चैतन्यं चिन्मात्रं तदेव स्वमसाधारणं रूपं य-
स्येति स तथोक्तोऽस्ति, किञ्च स तथाविधोपि संसारे समष्टि-
व्यष्टिदेहत्रयरूपे प्रपञ्चे स्वैरं स्वेच्छं यथा भवति तथा चरति
वर्तते विधिनिषेधातीतः सन्संसारे तिष्ठतीति भावः, तेन हेतुना
दिगम्बरो निरावरणत्वान्नग्नः प्रोक्तस्तदेतादृशं दिगम्बरत्वं मूढ-
जनैर्नग्नत्वेन प्रतिपाद्यत इति भावः ॥ २९ ॥

एवं दिगम्बरत्वं विचार्येदानीं भस्मोद्धूलनं व्याख्यातुं

गद्येन प्रतिजानीते।

## अथ भस्मोद्धूलनविचारः।

अथेति। अथ दिगम्बरत्वविचारानन्तरं भस्मोद्धूलनविचारो भस्मनो विभूतेर्यदुद्धूलनं लेपनं लोके लौकिकशास्त्रे च शिवे प्रतिपाद्यते तस्य विचारो निर्णयः क्रियत इति शेषः। तदेव पद्येनाह।

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते किल।
तेनैव भस्मना गात्रमुद्धूलयति धूर्जटिः॥ ३०॥

ज्ञानाग्निरिति। हे शिष्य ज्ञानाग्निर्ज्ञानं जीवब्रह्मैक्यविषयं महावाक्यजन्यमपरोक्षं तदेव सकलकर्मदाहकत्वादग्निरिव स यस्य प्रत्यगभिन्नपरमात्मशिवगुरोः समष्टिव्यष्टिदेहद्वयसहितचिदाभासेऽहंप्रतीत्या कृतानि यानि सर्वकर्माणि सञ्चितप्रारब्धक्रियमाणाख्यानि क्रियापरपर्यायाणि भस्मसाद्भस्मरूपाणि कुरुते करोति किलेति निश्चये एवं निश्चते श्रुतिषु 'क्षीयन्ते चास्य कर्माणी'ति श्रुतेः, तेनैव तादृशेनैव भस्मना बाधितसर्वकर्मणामकिञ्चित्करत्वाद्भस्मसादृश्यं न त्वन्येनेत्यर्थः, गात्रं गा बुद्धीन्द्रियाणि बुद्धीश्च त्रायते पालयतीति गात्रं सच्चिदानन्दं ब्रह्म प्रत्यगभिन्नमुद्धूलयति मलिनं लोकदृष्टौ दर्शयति बाधितसर्वकर्मणां प्रत्यगभिन्नपरमात्मशिव एवाधिष्ठानाधिष्ठेयत्वेन लोकदृष्टौ प्रतीयमानतैव भस्मोद्धूलनत्वेनोपचर्यत इति भावः, अतः शिवगुरुर्धूर्जटिर्धूम्रवर्णा जटा यस्य स तथोक्तः, अत्र वेदान्तसाङ्ख्ययोगाख्या जटा ग्राह्याः॥ ३०॥

एवं भस्म विचार्येदानीं तादृशभस्मनः शिवस्य च मूढदृष्टौ प्रतीयमानं भेदं निरस्यति।

भासते भिन्नभावानामपि भेदो न भस्मनि ।
स्वस्वभावस्वभावेन भस्म भर्गस्य वल्लभम् ॥ ३१ ॥

भासतेति । हे शिष्य भिन्नभावानां भिन्नोऽन्योन्यस्य व्यावृत्तो भावोऽन्तःकरणं सत्ता वा येषां तेषा भेदः प्रत्यगभिन्नपरमात्मशिवगुरोः सकाशात्पृथक्त्वं बाधितकर्मकर्तृरूपप्रपञ्चविभूतौ यद्यपि भासते प्रतीयते तथापि प्रभेदः प्रत्यगभिन्नब्रह्मशिवगुरोः सकाशाद्भस्मनि बाधितकर्त्रादिप्रपञ्चरूपविभूतौ न नास्ति, कुत इत्यत आह स्वस्वभावेति, भर्गस्य भर्जति संसारबीजं दहतीति भर्गः प्रत्यगभिन्नपरमात्मशिवगुरुस्तस्य स्वस्वभावस्वभावेन स्वस्यात्मनो यः स्वभावो धर्मो जगद्बीजभर्जकरूपः स इव स्वभावो धर्मो यस्य भस्मनस्तेन कारणेन भस्मोक्तलक्षणा विभूतिरबाधरूपत्वाद्वल्लभं प्रियमस्ति, अत आत्मशिवस्य बाधितकर्मरूपभस्मनश्च न भेद आत्मत्वेनैव प्रियत्वस्योपलभ्यमानत्वादिति भावः ॥ ३१ ॥

एवं भस्मोद्धूलनत्वं विचार्येदानीं शिवे या चन्द्रचूडतोच्यते लोके शास्त्रे च तां विचारयितुं गद्येन प्रतिजानीते ।

अथ चन्द्रचूडताविचारः ।

अथेति । अथ भस्मोद्धूलनविचारानन्तरं चन्द्रचूडताविचारः शिवे या चन्द्रचूडता निरूपिता तस्या विचारो विवेकः क्रियत इति शेषः, तमेव पद्येनाह ।

नश्यन्त्यस्य कलाः सर्वाः सा कला नैव नश्यति ।
याऽर्पिता शङ्करे भक्त्या चन्द्रचूडस्तया हरः ॥ ३२ ॥

नश्यन्तीति । हे शिष्य अस्यान्तःकरणोपाहितचैतन्यस्य च-

न्द्रस्य सर्वाः समस्ताः कला अवयवा नश्यन्ति नष्टा भवन्ति प-ञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चप्राणमनोरूपाः षोडश कला ज्ञेयाः, तद्वत्त्वेन पुरुषस्य चन्द्रसादृश्याच्चन्द्रत्वं चेति भावः, किञ्च सोक्त-लक्षणकलासु मध्ये काप्येका नैव नश्यति नैव नष्टा भवति सा केत्यपेक्षायां तां दर्शयति येति, चिदाभासरूपचन्द्रेण भक्त्या प्र-त्यगभिन्नपरमशिवगुरुविषयकप्रेम्णा शङ्करे सकलजगदानन्द-करे प्रत्यगभिन्नपरमात्मविशगुरौ या कला कापि अर्पिता तदा-कारत्वेन संपादिता सेति योज्यम्, अतः शिवाकाराकारितायाश्चि-तवृत्तेः शिवस्वरूपत्वेनाविनाशात्तया प्रत्यगभिन्नपरमात्माकारवृ-त्यैव हरो हरति सर्वं द्वैतमितिहरः सर्वद्वैतहरणशीलः प्रत्यभिन्नः परमात्मा चन्द्रचूडश्चन्द्रश्चन्द्रकला चूडायां शिखायामिवैकदेशे यस्यास्ति स तथाविध उक्तो लोके शास्त्रेचेति ज्ञेयम् ॥ ३२ ॥

एवं चन्द्रचूडतां विचार्येदानीं जटाजूटं विचारयिष्यन्गद्येन प्रतिजानीते ।

## अथ जटाजूटविचारः ।

अथेति। अथ चन्द्रचूडताविचारानन्तरं जटाजूटविचारः शि-वस्य यो जटाजूटो लोके शास्त्रे च प्रतिपाद्यते तस्य विचारो निर्णयः क्रियत इति शेषः। तदेव पद्येनाह ।

विश्रामोऽयं मुनीन्द्राणां पुरातनवटो हरः ।
वेदान्तसाङ्ख्ययोगाख्यास्तिस्रस्तज्जटयः स्मृताः ॥ ३३ ॥

विश्राम इति । हे शिष्य अयं स्वयंप्रकाशत्वेन नित्यापरो-क्षः प्रत्यगभिन्नः परमात्मा हरो हरति सर्वं द्वैतमिति हरो गुरु-र्मुनीन्द्राणां मुनीनां ज्ञानिनां य इन्द्रा श्रेष्ठाः पञ्चम्यादिभूमिषु स्थितास्तेषां विश्रामो विश्रम्यतेऽस्मिन्निति विश्रामोऽधि-

करणे घञ् 'हलश्चे'ति सूत्रेण, आवासस्थानमित्यर्थः, अतः पुरातनवटोऽनादिकालस्थितो वट इव स द्रुमः, किञ्च वेदान्तसाङ्ख्ययोगाख्या वेदान्तो वेदान्तशास्त्रं साङ्ख्यं च साङ्ख्यनामकं शास्त्रं योगो योगशास्त्रमेता आख्या आह्वा यासां तास्तथोक्तास्तिस्रस्त्रिसंख्यास्तज्जटयस्तस्य प्रत्यगभिन्नपरमात्मशिवगुरोर्जटयो जटा इव तदलङ्कारत्वाज्ज्ञेयाः ॥ ३३ ॥

एवं जटाजूटं विचार्येदानीं गङ्गाधरत्वं विचारयन्गद्येन प्रतिजानीते ।

## अथ गङ्गाधरत्वविचारः ।

अथेति । अथ जटाजूटविचारानन्तरं गङ्गाधरत्वविचारो गङ्गाधरत्वं यच्छिवस्योक्तं तस्य विचारो निर्णयः क्रियत इति शेषः । तदेव पद्येनाह ।

> ब्रह्मलोका च या गङ्गा सुषुम्णा शीतलद्रवा ।
> मस्तके राजते यस्य तेन गङ्गाधरो हरः ॥ ३४ ॥

ब्रह्मलोका चेति । हे शिष्य या विद्वत्प्रसिद्धा ब्रह्मलोका ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु तस्य लोका प्रकाशिकाऽहंब्रह्मास्मीति प्रमारूपा वृत्तिः सैव शीतलद्रवा शीतलस्तापत्रयनिवर्तको द्रव आनन्दरूपो रसो यस्याः सा तथोक्ताऽत एव सन्ततगमनवत्त्वाच्छीतलद्रवत्त्वेन च गङ्गासादृश्याद्गङ्गेव सुषुम्णा च सुषुम्णा नाडी च तादृशविशेषणविशिष्टत्वेन गङ्गासादृश्याद्गङ्गेव यस्य प्रत्यगभिन्नपरमात्मशिवगुरोर्मस्तके मस्तक इवैकदेश उच्चस्थाने च सर्वादर्शविषयत्वाद्राजते प्रकाशते तेन हेतुना हरो हरति सर्वं द्वैतमिति हरः सर्वद्वैतबाधावधित्वेन प्रकाशमानः प्रत्यगभिन्नब्रह्मशिवगुरुर्गङ्गाधरो गङ्गाया अहं-

ब्रह्मास्मीति प्रमारूपवृत्तेः सुषुम्णानाड्याश्च धरो धारकोऽस्तीति लोके शास्त्रे च प्रतिपाद्यत इति भावः ॥ ३४ ॥

एवं गङ्गाधरत्वं निर्णीयेदानीं त्रिनेत्रतां विचारयिष्यन्गद्येनाह।

## अथ त्रिनेत्रताविचारः।

अथेति। अथ गङ्गाधरत्वविचारानन्तरं त्रिनेत्रताविचारः शिवस्य या त्रिनेत्रता प्रतिपादिता तस्या विचारः क्रियत इति शेषः। तमेव पद्येनाह।

> आप्यायनस्तमोहन्ता विद्यया दोषदाहकृत्।
> सोमसूर्याग्निनयनस्त्रिनेत्रस्तेन शङ्करः ॥ ३५ ॥

आप्यायन इति। हे शिष्य आप्यायनः आप्याययति तर्पयति जगत्स्वानन्ददानेनेति स तथोक्त आप्यायन आनन्दोऽतः स सोम इव, किञ्च तमोहन्ता तमसोऽज्ञानस्य हन्ता नाशकोऽज्ञानतमसो नाशयित्री चित्ताऽत्र ग्राह्या, अतः सा सूर्य इव, किञ्च विद्यया दोषदाहकृद्विद्यया ज्ञानरूपत्वसा दोषदाहकृद्दोषा रागादयस्तेषां दाहो दहनं तस्य कृत्कर्ता तेन धर्मेणाग्निसादृश्यादग्निरिव सः, अत एव सोमसूर्याग्निनयन उक्तविधसोमसूर्याग्निनयनोऽस्ति तेनोक्तविधसोमसूर्याग्निनयनवत्त्वेन शङ्करः समस्तजगत्सुखकारकस्त्रिनेत्रस्त्रिनेत्रत्वेन लोके शास्त्रे च प्रतिपादितो न तु लोकप्रसिद्धमत्र सोमसूर्याग्निनयनवत्त्वं ललाटस्थिताग्निनेत्रेण वा त्रिनेत्रत्वं ग्राह्यमिति भावः ॥ ३५ ॥

एवं त्रिनेत्रत्वं विचार्येदानीं नीलकण्ठत्वं विचारयितुं गद्येन प्रतिजानीते।

## अथ नीलकण्ठताविचारः।

अथेति। अथ त्रिनेत्रताविचारानन्तरं नीलकण्ठताविचारः

शिवस्य या नीलकण्ठता प्रतिपाद्यते तस्या विचारो निर्णयः क्रियते इति शेषः । तमेव पद्येनाह ।

कण्ठे ब्रह्माण्डनभसां गिलितानामनेकधा ।
छाया स्फटिकसङ्काशे नीलकण्ठत्वकारणम् ॥ ३६ ॥

कण्ठ इति । हे शिष्य स्फटिकसंकाशे स्फटिकनामाश्मा यथा नीलपीतादिद्रव्यसामीप्येन तत्प्रतिबिम्बवत्त्वेन नीलपीतादिरूपः प्रतीयमानोपि वस्तुतस्तु शुद्ध एव तेनानेन धर्मेण तुल्यः शिवः प्रत्यगभिन्नः परमात्मा जगत्तत्कारणमायासन्निधानेन शबलः प्रतीयमानोपि वस्तुतश्चेत्यरहितचिन्मात्ररूपत्वाच्छुद्ध एवातः स्फटिकतुल्ये तस्मिन्नेवैकदेशे सर्वब्रह्माण्डानां स्थितेः कण्ठ एकदेशे गिलितानां निगीर्णानां ब्रह्माण्डनभसां ब्रह्माण्डेषु जगत्सु यानि लोकदृष्टौ प्रतीयमानानि भ्रान्त्या नीलान्याकाशानि तेषां छाया प्रतिबिम्बोऽस्ति स नीलकण्ठत्वकारणं प्रत्यगभिन्नब्रह्मगुरुशिवे नीलकण्ठत्वं यदुच्यते लोके शास्त्रे च तस्य कारणं बीजं ज्ञेयं नान्यदित्यर्थः ॥ ३६ ॥

किञ्चोक्तधारणानधिकारिणां द्वितीयं नीलकण्ठत्वकारणमाह ।

यद्ब्रह्माण्डशरीरस्य श्यामलं पार्वतीपतेः ।
कण्ठदेशे स्थितं व्योम नीलकण्ठस्ततो हरः ॥ ३७ ॥

यदिति । हे शिष्य ब्रह्माण्डशरीरस्य ब्रह्माण्डं जगदेव शरीरं देहो यस्य शिवस्य तस्यात एव पार्वतीपतेः पर्वाणि तमोमोहादिरूपाणि पञ्च तनोति विस्तारयति असौ पर्वतो महामोहस्तस्मादुत्पन्ना पार्वती ब्रह्माण्डाहंबुद्धिस्तस्याः पतिः पालकस्तस्य विराजः कण्ठदेशे कृकस्थाने यत्प्रसिद्धं सर्वलोक-

दृष्ट्या श्यामलं श्यामत्वं स्थितं वर्त्तमानं प्रतीयते शास्त्रतश्च ज्ञायते तद्व्योमाकाशमेव श्यामरूपेण भासते ततो हेतोर्हरः सर्वद्वैतहरणशीलः प्रत्यगभिन्नपरमात्मशिवगुरुर्नीलकण्ठो विराड्रूपेण श्यामगलोऽस्तीति निश्चेतव्यम् ॥ ३७ ॥

साकारांशत्वोपासकान्प्रति तत्कारणं दर्शयति।

शङ्करेणाभ्रशुभ्रेण यद्विषाम्बु दयालुना।
कण्ठे धृतमतः कण्ठेः नवाम्बुधरसुन्दरः ॥ ३८ ॥

शङ्करेणेति। हे शिष्य दयालुना सर्वप्राणिषु दयावताऽभ्रशुभ्रेणाऽभ्रं शरत्कालीनो निर्जलो मेघस्तद्वच्छुभ्रेण श्वेतरूपेण शङ्करेण शं सुखं करोतीति शङ्करो जगज्जीवनप्रदस्तेन यद्यस्मात्कारणाद्विषाम्बु समुद्रस्य मथनसमये विषरूपं जलं निःसृतं तत्कण्ठे गले धृतं स्थापितमतः कारणाच्छिवः कण्ठे गले नवाम्बुधरसुन्दरो नवो नवीनो योऽम्बुधरो मेघस्तद्वत्सुन्दरः कमनीयो दृश्यत इति शेषः ॥ ३८ ॥

किञ्च।

शुद्धस्फटिकसङ्काशः स्थितोऽयं मन्दराचले।
इन्द्रनीलाचलच्छाया नीलकण्ठत्वकारणम् ॥ ३९ ॥

शुद्धेति। हे शिष्य अयं साकारः शिवः शुद्धस्फटिकसङ्काशः शुद्धो निर्मलः स्फटिकनामाश्मा तेन सङ्काशस्तुल्योऽस्ति, किञ्चाऽयं शिवो मन्दराचले मन्दरनाम्नि पर्वते स्थित उषितोऽत एव तस्मिञ्छिवकण्ठ इन्द्रनीलाचलच्छायेन्द्रनीलमणिरूपमन्दरपर्वतस्य च्छाया प्रतिबिम्बो भवतीति शेषः, तदेव नीलकण्ठत्वकारणं शिवस्य यन्नीलकण्ठत्वं तस्य कारणं बीजं निश्चेतव्यम् ॥ ३९ ॥

इदानीं भक्तेरेव श्रैष्ठ्यं मन्यमानान्प्रत्याह ।

रामोऽस्य परमो भक्तः शङ्करो भक्तवत्सलः ।
रामरत्नं धृतं कण्ठे नीलकण्ठत्वकारणम् ॥ ४० ॥

राम इति । हे शिष्य रामो दाशरथिः परमः श्रेष्ठोऽस्य शिवस्य भक्तः सेवको मुख्यसेवक इत्यर्थः, अस्ति किञ्च शङ्करो भक्तानां सुखकर इत्यर्थः, भक्तवत्सलो भक्तेषु वत्सलः प्रीतिमानस्तीति तत्तो हेतो रामरत्नं रामो दाशरथिरेव रत्नं नीलमणिस्तत्कण्ठे गले धृतं स्थापितं शिवेन तन्नीलकण्ठत्वकारणं शिवस्य यन्नीलकण्ठत्वं तस्मिन्कारणं हेतुरतः कर्मज्ञानाभ्यां भक्तेरेव श्रैष्ठ्यमिति भावः ॥ ४० ॥

एवं नीलकण्ठत्वकारणं विचार्येदानीं भुजङ्गभूषणतां व्याख्यातुं गद्येनाह ।

अथ भुजङ्गभूषणताविचारः ।

अथेति । अथ नीलकण्ठत्वकारणविचारानन्तरं भुजङ्गभूषणताविचारो भुजङ्गाः सर्पा भूषणमलङ्कारो यस्य तस्य भावस्तत्ता तस्या विवेको विचारः क्रियत इति शेषः । तदेव पद्येनाह ।

योगिनः पवनाहारास्तथा गिरिबिलेशयाः ।
निजरूपे धृतास्तेन भुजङ्गाभरणो हरः ॥ ४१ ॥

योगिन इति । हे शिष्य पवनाहाराः पवनः प्राणनामा वायुराह्रियते वशीक्रियते यैस्ते तथोक्ताः, तथा तद्वद्गिरिबिलेशया गिरति पतति तत्त्वज्ञानेनेति गिरिर्देहसमूहः स एव बिलं छिद्रं तस्य वा बिलमवकाशं तस्मिञ्छयाः शेरत इति

शया निद्रिताः स्वाभिन्ने परमात्मनि जागरिता इत्यर्थः, अतः पवनाहारबिलेशयत्वाभ्यां योगिभुजङ्गयोः सादृश्याद्योगिनां भुजङ्गपदेनात्र ग्रहणमिति भावः, ते योगिरूपा एव भुजङ्गा निजरूपे स्वस्वरूपे प्रत्यगभिन्ने परमात्मनीत्यर्थः, धृताः स्वाभिन्नत्वेन स्थापितास्तेन कारणेन हरो हरति सर्वं द्वैतमिति हरः प्रत्यगभिन्नपरमात्मशिवगुरुर्भुजङ्गाभरण सर्पभूषणः उक्तः, यद्वा भुजाभ्यां साङ्ख्ययोगहस्ताभ्यां गच्छन्ति प्राप्नुवन्ति स्वस्वरूपमिति व्याख्येयम् ॥ ४१ ॥

योगरीत्यापि तद्विचारमाह।

का चित्कुण्डलिनी शक्तिः शङ्करेण वशीकृता।
कुण्डलिन्या कुण्डलिनो देहाभरणतां गताः ॥ ४२ ॥

काचिदिति। हे शिष्य काचित्सूक्ष्मनाडीरूपा कुण्डलिनी कुण्डलिनीनाम्नी शक्तिर्जीवशक्तिः सर्वशरीरेषु वर्त्तते सा शङ्करेण शिवेन वशीकृता वशत्वेन सम्पादिता तयैव कुण्डलिन्या वशीकृतकुण्डलिनीशक्त्या तस्या एव सर्वसर्पेष्वपि स्थितत्वादित्यर्थः, कुण्डलिनः सर्पाणां कुण्डलाकारत्वप्रसिद्धेः सर्पा देहाभरणतां देहस्य शरीरस्याभरणतां भूषणत्वं गताः प्राप्ता इति योगमतेन निश्चेतव्यम् ॥ ४२ ॥

साकारोपासकमतेनापि तद्विचारयन्नाह।

अनन्तवासुकी शम्भोः कर्णकुण्डलतां गतौ।
तत्प्रधानतयाऽन्येपि ख्याताः कुण्डलिसंज्ञया ॥ ४३ ॥

अनन्तेति। हे शिष्य अनन्तवासुकी अनन्तानाम सर्पो वासुकिनामा च सर्प एतौ शम्भोः शिवस्य कर्णकुण्डलतां कर्णयोः श्रवणयोः कुण्डलतां कुण्डलनामकभूषणत्वं गतौ प्रा-

स्मौ कुत एतन्निश्चेतव्यमित्यत आह तदिति, तत्प्रधानतया तयो-रनन्तवासुकिनामकसर्पयोः प्रधानता मुख्यता तया च्छत्रिन्यायेनेत्यर्थः, अन्येपि सर्पाः कुण्डलिसञ्ज्ञया कुण्डलिरिति सञ्ज्ञानाम तया ख्याताः प्रसिद्धाः सन्तीत्यतो हेतोरित्यर्थः ॥ ४३ ॥

एवं भुजङ्गभूषणत्वं विचार्येदानीं त्रिशूलं विचारयानग्रन्थेन प्रतिजानीते ।

## अथ त्रिशूलविचारः ।

अथेति । अथ भुजङ्गभूषणत्वव्याख्यानानन्तरं त्रिशूलविचारः शिवस्य हस्ते यस्त्रिशूलोऽस्तीत्युच्यते तस्यायुधविशेषस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

शान्तिवैराग्यबोधाख्यैस्त्रिभिरग्रैस्तरस्त्रिभिः ।
त्रिगुणात्रिपुरं हन्ति त्रिशूलेन त्रिलोचनः ॥ ४४ ॥

शान्तीति । हे शिष्य शान्तिवैराग्यबोधाख्यैः शान्तिरुपरतिरष्टाङ्गयोगसाधनजन्या जगद्भानरूपा व्यवहाराभावकार्येतिलक्षणलक्षिता, तदुक्तं 'यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः । स्युर्हेत्वाद्या उपरतेरिति । वैराग्यं च दोषदृष्टिजन्यं सर्वविषयत्यागेच्छारूपं भोग्यादैन्याभावकार्यं चेति लक्षितं, तदुक्तं-

दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ।
असाधारणहेत्वाद्या वैराग्यस्य त्रयोप्यमी ॥ इति

बोधश्च ज्ञानं श्रवणादिजन्यं सत्यमिथ्याविवेचनरूपं चिदात्माहङ्कारैकत्वोपलक्षितग्रन्थ्युत्पत्त्यभावकार्यमित्युपलक्षितं, तदुक्तं-

श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः । इति ।

एता आख्या येषां तैस्तरैस्त्रिभिरज्ञानतत्कार्यभेदने वेगवद्भि-

स्त्रिभिस्त्रिसंख्याकै रग्रैः फलैरुपलक्षितेन त्रिशूलेनोक्तलक्षणानि त्रीणि शूलानि फलानीव यस्य स तथाविधस्तेन प्रत्यगभिन्नब्रह्मबोधेन त्रिलोचनः पूर्वोक्तलक्षणास्त्रिनेत्रः प्रत्यगभिन्नब्रह्मशिवगुरुस्त्रिगुणत्रिपुरं त्रयो रजःसत्त्वतमोऽभिधा ये गुणाः प्रकृतेर्विकारास्तान्तत्कार्यं च त्रयाणां पुराणां समाहारस्त्रिपुरं स्थूलसूक्ष्मकारणाख्यं देहत्रयमित्यर्थः, 'नवद्वारे पुरे देहीत्युक्तेः, हन्ति नाशयति ॥ ४४ ॥

एवं त्रिशूलं विचार्येदानीं डमरुं विचारयन्गद्येनाह ।

## अथ डमरुविचारः ।

अथेति । अथ त्रिशूलविचारनिरूपणानन्तरं डमरुविचारः शिवस्य हस्ते यो डमरुः प्रसिद्धस्तस्य विचारो निर्णयः क्रियत इति शेषः । तदेव पद्येनाह ।

टण्टङ्कारच्छलेनासौ शैवानां मुक्तिहेतवे ।
नेति नेति मुहुः प्राह डमरुः शाम्भवो हि सः ॥ ४५ ॥

टण्टमिति । हे शिष्य टण्टङ्कार इति डमरुध्वनेरनुकरणं तादृशध्वनिरेव च्छलं मिषं तेन कृत्वाऽसौ शास्त्रेषु प्रतिपादितः परोक्षतया श्रूयते शाम्भवः शम्भोर्जगत्सुखप्रदस्य प्रत्यगभिन्नपरमात्मशिवगुरोरयं शाम्भवो वेदो वेदशिवयोः प्रतिपाद्यप्रतिपादकसम्बन्धेन सम्बन्धवत्त्वं, हि विद्वत्सु प्रत्यक्षसिद्धः सोऽविद्वत्सु परोक्षतया श्रुतो डमरुर्डमरुत्वेन कल्पितः शैवानां शिवस्यैते शैवाः प्रत्यगभिन्नब्रह्मांशभूता जीवास्तेषां मुक्तिहेतवे मुक्तिर्मोक्षः स एव हेतुः प्रयोजनं तस्मै तत्प्राप्त्यर्थमित्यर्थः, मुहुः पुनः पुनर्नेति नेतीति निरूपितं यद्द्वैतं तन्न नास्तीत्येवं प्राहोपदिशति, अत्र वेदस्य डमरुत्वम्, 'अथातादेशो नेति नेती'त्यादौ

नां सर्वद्वैतनिषेधकवाक्यानां ध्वनित्वं च विवक्षितमिति भावः ॥ ४५ ॥

एवं डमरुं विचार्येदानीं मुण्डमालां विचारयनाद्येन प्रतिजानीते ।

## अथ मुण्डमालाविचारः ।

अथेति । अथ डमरुविचारनिरूपणानन्तरं मुण्डमालाविचारो मुण्डमालायाः शिवे या प्रोक्ता मुण्डमाला तस्या विचारो निर्णयः क्रियत इति शेषः । तमेव प्रतिज्ञातं पद्येनाह ।

अनन्तमृतब्रह्माण्डमुण्डमालाविधारणे ।
अनाद्यनन्तरूपत्वात्समर्थः शिव एव हि ॥ ४६ ॥

अनन्तेति । हे शिष्य अनन्तमृतब्रह्माण्डमुण्डमालाविधारणेऽनन्तानि अपरिमितानि मृतानि नष्टानि यानि ब्रह्माण्डानि तेषु चापरिमितानि यानि मुण्डानि कपालानि तेषां माला स्रक्तस्या विधारणे परिधानेऽनाद्यनन्तरूपत्वान्नाऽऽदिर्यस्य तदनादि न विद्यतेऽन्तो नाशश्च यस्य तदनन्तमनादि यदनन्तमेतादृशं रूपं स्वरूपं यस्य स तथोक्तस्तस्य भावस्तत्त्वं तस्माच्छिव एव प्रत्यगभिन्नपरमात्मगुरुरेव समर्थः प्रभुरस्ति हि एतद्विद्वत्सु प्रसिद्धमित्यर्थः ॥ ४६ ॥

एवं मुण्डमालाविधारणं निर्णीयेदानीं वृषवाहनत्वविचारं प्रतिजानीते गद्येन ।

## अथ वृषवाहनविचारः ।

अथेति । अथ मुण्डमालाविधारणनिर्णयनिरूपणानन्तरं वृषवाहनविचारः शिवस्य यद्वृषवाहनं निरूपितं शास्त्रेषु तस्य विचारः क्रियत इति शेषः । तमेव श्लोकेनाह ।

ब्रह्माद्या यत्र नारूढास्तमारोहति शङ्करः।
समाधिं धर्ममेघाख्यं तेनायं वृषवाहनः॥ ४७॥

ब्रह्माद्या इति। हे शिष्य ब्रह्माद्या ब्रह्मा विरञ्चिराद्यो मुख्यो येषां ते तथोक्ता यत्र समाधौ नारूढा न स्थितिं प्राप्ताः शङ्करः समस्तजगत आनन्दकरः प्रत्यगभिन्नः परमात्मा तं शास्त्रेषु प्रसिद्धं धर्ममेघाख्यं धर्मवृष्टिकर्तारं समाधिं 'क्षणमेकं क्रतुशतस्यापी'ति श्रुतेः, आरोहति आरूढो दृश्यते तत्रैव तदुपलब्धेस्तेन हेतुनाऽयं प्रत्यगभिन्नपरमात्मशिवगुरुर्वृषवाहनो वृषः सर्वश्रेष्ठः समाधिर्धर्ममेघाख्यो वाहनं गमनसाधनं यस्य स तथाविधोऽस्ति न त्वत्र लौकिकं वृषवाहनत्वं ग्राह्यम्, उपासनायां 'मनो ब्रह्मेत्युपासीते'ति श्रुतेर्मनसि ब्रह्मत्वबुद्धिरिव नन्दिनि वृषे धर्ममेघसमाधिबुद्धिः शिवे च ब्रह्माभिन्नप्रत्यगात्मगुरुबुद्धिश्च कार्येति भावः॥ ४७॥

एवं वृषवाहनत्वं विचार्येदानीं कैलासविचारं गद्येन प्रतिजानीते।

## अथ कैलासविचारः।

अथेति। अथ वृषवाहनविचारनिरूपणानन्तरं कैलासविचारः कैलासनाम्नः पदार्थस्य विचारो निर्णयः क्रियत इति शेषः। तमेव पद्येनाह।

कैवल्ये लसते रुद्रस्तद्भक्ता अपि सर्वदा।
तत्कैवल्यविलासेन कैलासं शम्भुमन्दिरम्॥ ४८॥

कैवल्यइति। हे शिष्य रुद्रो रोदयति मायया दुःखीकरोति जीवमिति रुद्रः परमात्मा कैवल्येऽखण्डैकरस आत्मनि

ब्रह्माभिन्ने लभते स्वयंप्रकाशमानो वर्त्तते तद्भक्ता अपि तस्य प्रत्यगात्मनोऽभिन्नपरमात्मशिवगुरोर्भक्तः सेवकास्तच्चिन्तकाश्च सर्वदा सर्वकालं तस्मिन्नेव कैवल्ये लभन्ते स्वयंप्रकाशमाना वर्त्तन्ते तत्कैवल्यविलासेन तादृशकैवल्यविलसनेन कैलासमखण्डैकरसस्वयंप्रकाशनमेव शम्भुमन्दिरं शंभवत्यस्मादिति शम्भुः समस्तजगत्सुखकारणं प्रत्यगभिन्नब्रह्मशिवगुरुस्तस्य मन्दिरमिव वासस्थानं ज्ञेयम् ॥ ४८ ॥

एवं कैलासं निर्णीयेदानीं मन्दरं विचारयन्पद्येनाह ।

अथ मन्दरविचारः ।

अथेति। अथ कैलासविचारनिरूपणानन्तरं मन्दरविचारो मन्दरस्य मन्दरनाम्नः पर्वतस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

मथितो मुक्तिरत्नार्थं येनायं भवसागरः ।
स बोधो मन्दरो नाम मन्दिरं शङ्करस्य तत् ॥ ४९ ॥

मथित इति । हे शिष्य येन बोधेनाऽयं सर्वलोकप्रत्यक्षो भवसागरो भवत्यस्मात्संसार इति भवोऽविद्यातत्कार्यरूपः प्रपञ्चो गिरति भक्षतीति गरो मृत्युस्तेन सह वर्त्तत इति स एव सागरः स्वार्थेण्, यद्वा गरो विषं विषयरूपं तत्स्पर्शेन तद्भोगेन च मरणसम्भवात्तेन सहितः सगरः स एव सागरः स मुक्तिरत्नार्थं मुक्तिर्मोक्षः स एव रत्नमिव तस्मै तं प्राप्तुं मथित आलोडितः स उक्तविधो बोधः प्रत्यगात्मपरमात्मैक्यविषयं ज्ञानं मन्दरो मकारवाच्यं कारणशरीरमज्ञानं समष्टिव्यष्टिरूपं तदुपहितौ प्राज्ञेश्वरौ च दराति विनाशयतीति व्युत्पत्त्या मन्दरो नाम प्रसिद्धोऽस्ति । ततस्तु बोध एव शङ्करस्य शं सुखं क-

रोति स शङ्करो जगदानन्दकरः प्रत्यगभिन्नपरमात्मशिवगुरुस्तस्य मन्दिरं वासस्थानं ज्ञेयं तत्रैव तत्प्राप्तेः प्रसिद्धत्वादित्यर्थः, उपासनापक्षे 'मनो ब्रह्म'ति श्रुत्या मनसि ब्रह्मत्वचिन्तनमिव लोकप्रसिद्धमन्दरपर्वते बोधरूपत्वचिन्तनं तत्रस्थे शिवे च प्रत्यगभिन्नब्रह्मगुरुरूपत्वचिन्तनं च कार्यमिति भावः ॥ ४९ ॥

एवं मन्दरं निर्णीयेदानीं लोके शास्त्रे च शिवस्य श्मशानवासोऽभिहितस्तन्निर्णयं गद्येन प्रतिजानीते।

## अथ श्मशानविचारः।

अथेति। अथ मन्दरविचारनिरूपणानन्तरं श्मशानस्य प्रेतावासस्य विचारो निर्णयः क्रियत इति शेषः। तमेव पद्येनाह।

नित्यं क्रीडति यत्रायं स्वयं संहारभैरवः।
तत्र श्मशाने संसारे शिवः सर्वत्र दृश्यते ॥ ५० ॥

नित्यमिति। हे शिष्य स्वयं स्वतः सिद्धोऽयं प्रत्यगभिन्नपरमात्मशिवगुरुर्विद्वत्प्रत्यक्षः संहारभैरवः सन्संह्रियते विनाश्यते विश्वमनेनेति संहारो मृत्युः सर्वजगल्लयाधिष्ठानमित्यर्थः, अतः सर्वभयहेतुत्वादेव भैरवो भीतिप्रदः सन् यत्र संसारे जगति नित्यं सर्वदा क्रीडति रमते, तत्रोक्तविधे संसाररूपे सर्वदा मङ्गलरूपत्वाच्छ्मशाने सर्वत्र सर्वपदार्थेषु सर्वकाले च शिवः प्रत्यगभिन्नब्रह्मगुरुर्दृश्यतेऽवलोक्यते ज्ञानिभिरिति शेषः, उपासनापक्षे श्मशाने संसारत्वं तत्र शिवप्रत्यगभिन्नगुरुरूपत्वं च ध्येयमिति भावः ॥ ५० ॥

एवं श्मशानं निर्णीयेदानीं गणान्विचारयितुं गद्येनाह।

## अथ गणविचारः।

अथेति । अथ श्मशानविचारनिरूपणानन्तरं गणविचारो गणानां विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

आनन्दसागरः शम्भुस्तच्छक्तिर्द्रव उच्यते ।
शीकरा इव सामुद्रास्तदानन्दकणा गणाः ॥ ५१ ॥

आनन्देति । हे शिष्य शम्भुः शं सुखं भवत्यस्मादिति शम्भुः प्रत्यगानन्दाभिन्नब्रह्मानन्दशिवगुरुरानन्दसागर आनन्दानां चतुर्विधानां विद्यानन्दानां विषयानन्दानां च जलस्थानीयानां सागरः समुद्र इव ज्ञेयः, तस्याऽऽनन्दसागरस्य शक्तिर्जगज्जननसामर्थ्यं द्रव आर्द्रतोच्यते कथ्यते मुनिभिरिति शेषः । तदानन्दकणास्तस्यानन्दरूपस्य प्रत्यगभिन्नपरमात्मशिवगुरोर्ये कणा अंशा विषयानन्दास्ततः समीपे वर्त्तमाना विद्यानन्दाश्च सामुद्राः समुद्रसम्बन्धिनः शीकरा इवाम्बुकणा इव सन्ति तेषां च समूहरूपत्वेनोक्तविधशिवसांनिध्येन च गणाः सेवका इव ज्ञेयाः । उपासनापक्षे च शिवे प्रत्यगभिन्नपरमात्मगुरुरूपत्वं पार्वत्यां च तच्छक्तिरूपत्वं तद्गणेषु च विद्यानन्दविषयानन्दरूपत्वं च ध्येयमिति भावः ॥ ५१ ॥

ननु शिवगणेषु जगद्विलक्षणत्वं स्वभावाकृतिभिरुक्तं पुराणेषु श्रुतं तदत्र कथं सम्भाव्यं तत्राह ।

जगद्विलक्षणः स्वामी स्वरूपाकृतिलक्षणैः ।
जगद्विलक्षणा एव गणास्तस्य किमद्भुतम् ॥५२॥

जगद्विलक्षण इति । हे शिष्य उक्तलक्षणानां विद्यानन्दादिरूपगणानां स्वामी सच्चिदानन्दादिसमर्पणेन पालकः प्रत्यगभिन्नपरमात्मशिवगुरुर्जगद्विलक्षणो जगतोऽसज्जडदुःखरूपात्प्रपञ्चाद्विलक्षणो विपरीतलक्षणवान्स्वरूपाकृतिलक्षणैः स्व-

नैव रूप्यते प्रकाश्यत इति स्वरूपं स्वप्रकाशं जगत्तु परप्रकाशम्, आकृतिर्निराकाररूपा जगत्तु साकाररूपम्, लक्षणं च सच्चिद्रूपं जगतस्तु असज्जडदुःखरूपं लक्षणं तैः प्रत्यगभिन्नब्रह्मणो जगतश्च वैलक्षण्यमस्ति यदि तर्हि तस्य प्रत्यगभिन्नब्रह्मानन्दस्य गणा उक्तविधा विद्यानन्दादिरूपाः सेवका जगद्विलक्षणा एव जगन्ति गच्छन्तीति जगन्ति विषयानन्दास्तेभ्यो विलक्षणा विपरीतलक्षणा एव निश्चयेन सन्ति, अत्रार्थे किमद्भुतं किमाश्चर्यं न किमपीत्यर्थः ॥ ५२ ॥

एवं साधारणच्छिवगणान्निर्णीयेदानीं योगिनीगणन्विचारयितुं गद्येनाह ।

## अथ योगिनीगणविचारः ।

अथेति । अथ गणनिर्णयनिरूपणानन्तरं योगिनीगणविचारो योगिनीनां योगिनीनामदेवतानां यो गणः समूहः शिवसमीपेऽस्तीति शैवपुराणेषु श्रूयते तस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

> यैव यैव मनोवृत्तिर्योगाभ्यासेन योगिनाम् ।
> सा समीपं गता शम्भोः सैवायं योगिनीगणः ॥ ५३ ॥

यैव यैवेति । योगिनां योगेन प्राप्तजीवब्रह्मैक्यभावानां योगाभ्यासेन योगस्य निरोधलक्षणस्य योऽभ्यासः पुनः पुनरावर्तनं तेन यैव यैव या या च प्रसिद्धा रुद्धा मनोवृत्तिर्मनसोऽन्तकरणस्य वृत्तिः साभासांशरूपाऽस्ति, सा सेत्यावृत्तिः कर्तव्या सा सा वृत्तिः शम्भोर्जगदानन्दकरस्य प्रत्यगानन्दपरमात्मनः समीपं निकटदेशं गता प्राप्ताऽस्ति सैवोक्तलक्षणवृत्तिसमूहरूप एवायं विद्वत्प्रत्यक्षो योगिनीगणो योगि-

न्यो निरोधाख्ययोगवत्यो वृत्तयस्तासां गणः समूहो ज्ञेयः । उपासनापक्षे योगिनीगणे निरुद्धचित्तवृत्तित्वं शिवे च तद्ध्येयप्रत्यगभिन्नब्रह्मगुरुत्वं च चिन्त्यमिति भावः ॥ ५३ ॥

ननु लोके शास्त्रे च शिवगणानां पिशाचत्वं श्रूयत इत्याशङ्क्य तेषु पिशाचत्वबुद्धिर्मूढानामेवेत्याह ।

सखायः शङ्करस्यैते योगिनीभैरवादयः ।
जीवन्मुक्ता जडैरुक्ता भूतप्रेतपिशाचकाः ॥ ५४ ॥

सखाय इति । हे शिष्य एत उक्ता वक्ष्यमाणाश्च गणादयः शङ्करस्य जगदानन्दकरस्य प्रत्यगभिन्नपरमात्मांशगुरोर्योगिनीभैरवादयो योगेन निरुद्धवृत्तयो योगिन्यो भैरवश्च जगद्भयजनको मृत्युश्चादी मुख्यौ येषां ते तथोक्तास्ते सखायः सुखरूपत्वेनात्मसुखसाधनत्वेनेष्टा जीवन्मुक्ता जीवन्त एव मुक्ता ब्रह्मभावं प्राप्ता अत एव विधिनिषेधातीतास्ते जडैर्मूढैर्भूतप्रेतपिशाचका भूता भूतनामानः प्रेताः प्रेतनामानः पिशाचकाः पिशाचनामान इति जातिभेदान्नामभेदेनोक्ताः कथिता इति ज्ञेयम् ॥ ५४ ॥

एवं योगिनीगणं निर्णीयेदानीं कालभैरवविचारं गद्येन प्रतिजानीते ।

अथ कालभैरवविचारः ।

अथेति । अथ योगिनीगणविचारनिरूपणानन्तरं कालभैरवविचारः शिवसमीपे यः कालभैरवो गणोऽस्तीति लोके शास्त्रे च प्रसिद्धस्तस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

विवर्त्तितजगज्जालः कालोऽस्य द्वारपालकः ।

कालाद्बिभेति यद्विश्वं स गणः कालभैरवः॥ ५५॥

विवर्तितेति। हे शिष्य विवर्तितजगज्जालो विवर्तितं विपरीतरूपत्वेन कल्पितं जगद्रूपं जालमिव जीवबन्धनकारणं येन स तथाविधः कालः कलयति जगदिति व्युत्पत्त्या कालः सर्वजगत्कल्पक ईश्वरोऽस्य प्रत्यगभिन्नपरमात्मशिवगुरोर्द्वारपालको द्वारं प्रत्यगभिन्नपरमात्मत्वप्रापकं प्रत्यगात्मपरमात्मैक्यविषयं ज्ञानं तस्य पालको रक्षकोऽस्ति कालपदं व्याख्याय भैरवपदं व्याख्यास्यन्नाह कालादिति, यद्यस्मात्कालादीश्वराद्विश्वं समस्तं जगद्बिभेति भयं प्राप्नोति अतः स ईश्वरोऽनन्तब्रह्माण्डापेक्षयाऽनन्तेश्वराणां गणः समूहरूपः कालभैरवः कालभैरवनामाऽस्तीति ज्ञेयम्, उपासनापक्षे तु कालभैरवनाम्नि शिवगणे जगत्कल्पकत्वसर्वभयहेतुत्वोपलक्षितमीश्वरत्वं शिवे च प्रत्यगभिन्नब्रह्मरूपत्वं च समारोप्य ध्येयमिति भावः॥५५॥

एवं कालभैरवं निर्णीयेदानीं दण्डपाणिनिर्णयं गद्येन प्रतिजानीते।

## अथ दण्डपाणिविचारः।

अथेति। अथ कालभैरवविचारनिरूपणानन्तरं दण्डपाणिविचारो दण्डपाणिनामको यः शिवस्य गणो लोके शास्त्रे च प्रोक्तस्तस्य विचारो निर्णयः क्रियत इति शेषः। तमेव पद्येनाह।

मनसो दण्डनेनैव दण्डपाणिर्गणो भवेत्।

तादृशा एव देवस्य गणत्वमुपयान्ति हि॥ ५६॥

मनस इति। हे शिष्य मनसः सङ्कल्पात्मिकान्तःकरणवृत्तिर्मनस्तस्य दण्डनेनैव निरोधलक्षणदण्डनेन शासनेनैव नान्यसाधनेनेत्यर्थः, दण्डपाणिर्दण्डो मनोनिग्रहाय निरोधाख्यः

समाधिः पशूनां निग्रहार्थं दण्ड इव पाशाविनात्मरूपं द्वैतं सत्का-ऽऽत्मस्वरूपब्रह्मग्रहणकरणत्वादष्टाङ्गयोगोऽत्र पाणिर्ग्राह्यस्तास्मि-न्यस्य स तथोक्तो गणः सेवकस्तेषां ब्रह्माण्डबहुत्वापेक्षया ब-हुत्वं तेषां समूहो वा भवेत्स्यादेवं सम्भावना कार्येति भावः, ततश्च किमित्यत आह तादृशा इति तादृशा एवोक्तलक्षण-दण्डपाणिसदृशा एव इदानीन्तना अपि ये भवन्ति ते एव नान्य इत्यर्थः, देवस्य प्रत्यगभिन्नब्रह्मचैतन्यरूपगुरोर्गणत्वं से-वकत्वमुपयान्ति प्राप्नुवन्ति हि प्रसिद्धमेतद्विद्वत्सु अतोऽत्र वि-श्वासः कार्य इति भावः ॥ ५६ ॥

एवं दण्डपाणिं विचार्येदानीं क्षेत्रपालान्विचारयितुं ग-द्येन प्रतिजानीते ।

अथ क्षेत्रपालविचारः ।

अथेति । अथ दण्डपाणिविचारानन्तरं क्षेत्रपालविचारः क्षेत्रपालनामको यः शिवस्य गणः प्रोक्तस्तस्य विचारः क्रियत इति शेषः । तमेव पद्येनाह ।

परमात्मा स्वयं शम्भुस्तदंशाः क्षेत्रपालकाः ।
अंशांशिभावभेदेन क्षेत्रपालैर्वृतो हरः ॥ ५७ ॥

परमात्मेति । हे शिष्य शम्भुः शं सुखं भवत्यस्मादिति शम्भुर्जगदानन्दकरः परमात्मा कार्यकारणातीत आत्मा स्वयं स्वतः सिद्ध एवाऽस्ति किञ्च तदंशास्तस्य प्रत्यगभिन्नपरमा-त्मशिवगुरोरंशाः प्रतिबिम्बा जीवाः क्षेत्रपालकाः क्षेत्राणि समष्टिव्यष्टिसूक्ष्मशरीराणि समष्टिव्यष्टिस्थूलशरीराणि च तेषां पालका रक्षितारो भवन्ति अतः अंशांशिभावभेदेनांशा जीवा अंशी च प्रत्यगभिन्नब्रह्मशिवगुरुस्तयोरारोपितयोर्भाव

आरोपितं यत्सत्त्वं तस्मिन्यो भेदः सोऽप्यारोपित एव तेन कृत्वाऽऽरोपावस्थायां क्षेत्रपालैर्जीवैर्हरः सर्वद्वैतहरणशीलोऽद्वैतरूपो वस्तुतः सन्नपि प्रत्यगभिन्नः परमात्मा वृत आवृतत्वेन व्यवहितोऽतोऽत्र क्षेत्रपालपदेन जीवा ग्राह्याः। उपासनापक्षे तु शिवक्षेत्रपालगणेषु जीवत्वं शिवे च प्रत्यगभिन्नब्रह्मरूपत्वं समारोप्य ध्येयमिति भावः ॥ ५७ ॥

एवं क्षेत्रपालान्निर्णीयेदानीं नन्दिगणविचारं गद्येन प्रतिजानीते।

## अथ नन्दिगणविचारः।

अथेति। अथ क्षेत्रपालविचारानन्तरं नन्दिगणविचारो नन्दिनामा यो गणः सेवकस्तस्य विचारो निर्णयः क्रियत इति शेषः। तमेव पद्येनाह।

यस्योपरि स्फुरद्रूपो दृश्यते परमेश्वरः।<br>
स बोधः शुद्धभावात्मा गीयते नन्दिकेश्वरः ॥ ५८ ॥

यस्येति। हे शिष्य यस्य बोधस्य उपरि ऊर्ध्वं परमेश्वरः परमः कार्यकारणाभ्यामतीत ईश्वरः सर्वेश्वरः प्रत्यगभिन्नपरमात्मशिवगुरुः स्फुरद्रूपः स्फुरत्प्रकाशमानं रूपं यस्य स तथाभूतो दृश्यते साक्षादनुभूयते स उक्तलक्षणः शुद्धभावात्मा शुद्धो मायातत्कार्यरहितोऽयो भावः प्रेमसहितः जीवब्रह्मैक्यबोधः स एवात्मा स्वरूपं यस्य स नन्दिकेश्वरो नन्दिक आनन्दात्मविषयत्वान्नन्दिनामक ईश्वरविषयत्वादीश्वररूपत्वाच्चेश्वर एतन्नामको गणः सेवको गीयते कथ्यते विवेकिभिरिति शेषः। उपासनापक्षे तु प्रसिद्धनन्दिगणे सप्रेमजीवब्रह्मैक्यविषयकबोधारोपं कृत्वा शिवे च तद्विषयजीवब्रह्मैक्यं समा-

रोऽप्य ध्येयमिति भावः ॥ ५८ ॥

एवं नन्दिकेश्वरं विचार्येदानीं भृङ्गिनामानं गणं विचारयितुं गद्येनाह ।

## अथ भृङ्गिविचारः ।

अथेति । अथ नन्दिगणविचारानन्तरं भृङ्गिविचारः शिवस्य यो भृङ्गीनामा गणः प्रोक्तस्तस्य विचारो निर्णयः क्रियत इति शेषः । तदेव पद्येनाह ।

यः कीटभृङ्गभावेन भक्तः सारूप्यमागतः ।
स एव खण्डपरशोर्भृङ्गिनामा गणः किल ॥ ५९ ॥

य इति । हे शिष्य यः कोपि भक्तः सेवकः कीटभृङ्गभावेन भृङ्गे भ्रमरविशेषे भावः प्रेम्णा भयेन स्मरणं कीटसंबन्धि कीटकृतं भ्रमरस्य चिन्तनमित्यर्थः, तेन तादृशेन भावेन सारूप्यं रूप्यते प्रकाश्यत इति रूपं स्वयंप्रकाशचिन्मात्रं तेन सह वर्त्तत इति सरूपं प्रत्यगात्मरूपं ब्रह्मणोऽभिन्नं तस्य भावः सारूप्यं प्रत्यगभिन्नब्रह्मत्वमागतः प्राप्तः स एव प्रत्यगभिन्नब्रह्मानुभववानेव खण्डपरशोः खण्डयति नाशयति अज्ञानं तत्कार्यं चेति खण्डो बोधः स एव परशुः कुठारो यस्य स तथोक्तस्तस्य येन मोहवनं छिन्नमित्युक्तत्वात्तस्य प्रत्यगभिन्नपरमात्म शिवगुरोर्भृङ्गिनामा भृङ्गिनाम्ना प्रसिद्धो गणः सेवकः किलेति निश्चयेन ज्ञातव्यः । तेन सेवकसेव्ययोर्व्यवहारदृष्ट्या भेदः पारमार्थिकदृष्ट्याऽभेद इति निश्चेतव्यम् ॥ ५९ ॥

एवं भृङ्गिगणं निर्णीयेदानीं महाकालं विचारयितुं गद्येन प्रतिजानीते ।

## अथ महाकालविचारः ।

अथेति । अथ भृङ्गीविचारनिरूपणानन्तरं महाकालविचारः शिवस्य यो महाकालनामको गणोऽस्ति तस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

कालेन भक्षितं विश्वं कालो बोधेन भक्षितः ।
बोधात्मा कालकालोऽयं महाकालो परो गणः ॥ ६० ॥

कालेनेति । कालेन सर्वं द्वैतं कलयति नाशयतीति कालो मृत्युस्तेन विश्वं जगद्भक्षितं ग्रस्तं स कालो मृत्युर्जगन्मिथ्यात्वेन तदसत्त्वाद्बोधेन ज्ञानेन भक्षितो ग्रस्तोऽतोऽयं विद्वत्प्रत्यक्षो बोधात्मा बोधो जीवब्रह्मैक्यविषयं ज्ञानं जगदसत्त्वेन मृत्युविषयासत्त्वज्ञानं चात्मा स्वरूपं यस्य स तथोक्तः कालकालो मृत्योरपि मृत्युरतः स एव परोऽन्यो महाकालो महामृत्युनामको गणः सेवकोऽस्तीति निश्चेतव्यम् । उपासनायां तु प्रसिद्धमहाकाले जीवब्रह्मैक्यजगन्मिथ्यात्वविषयबोधत्वं समारोप्य चिन्तनीयमिति ज्ञेयम् ॥ ६० ॥

एवं महाकालं निर्णीयेदानीं स्कन्दं निर्णेतुं गद्येन प्रतिजानीते ।

## अथ स्कन्दविचारः ।

अथेति । अथ महाकालविचारानन्तरं स्कन्दविचारः स्कन्दः कार्तिकेयस्तस्य विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

बोधस्वसेनया येन मोहस्य स्कन्दनं कृतम् ।
स बुद्धिमान्महासेनः स्कन्दो नाम शिवात्मजः ॥ ६१ ॥

बोधेति । येन प्रत्यगात्मरूपस्कन्देन बोधस्वसेनया बोधः स्वपरमात्माभेदविषयः स एव स्वस्य प्रत्यगात्मस्कन्दस्य सेना चमूस्तया मोहस्य स्वपरमात्मनोरभेदाज्ञानस्य स्कन्दनं नाशनं कृतं संपादितम्, अज्ञानशत्रुनिबर्हणसाधनत्वाद्बोधस्य सेनात्वं ज्ञेयं, स उक्तलक्षणः प्रत्यगात्मैव बुद्धिमान्स्वपरमात्म्यैक्यविषयिणी बुद्धिर्मतिर्यस्य विद्यते स तथोक्तोऽत एव महासेनो महती बृहती तादृश्यज्ञानशत्रुजयसामग्रीरूपा मतिः सेनेव यस्य स तथाभूतोऽत एव स्कन्दो नाम स्कन्दनामकः प्रसिद्धः शिवस्य परमात्मशिवगुरोरात्मजः पुत्र इवात्मेत्यर्थः, 'आत्मा वै पुत्रनामासीति' श्रुतेर्ब्रह्मशिवस्वरूप एवेत्यर्थः । उपासनापक्षे तु प्रसिद्धस्कन्दे प्रत्यगात्मत्वं शिवे च परमात्मत्वं स्कन्दसेनायां प्रत्यगात्मपरमात्मनोरभिन्नविषयमतित्वं च समारोप्याभेदेनैतत्त्रयं ध्येयमिति भावः ॥ ६१ ॥

एवं स्कन्दं विचार्येदानीं गणेशविचाराय गद्येनाह ।

## अथ गणेशविचारः ।

अथेति । अथ स्कन्दविचारानन्तरं गणेशविचारो गणेशस्य गणेशनामकशिवपुत्रस्य विचारो निर्णयः क्रियत इति शेषः । तदेव पद्येनाह ।

सुतोऽन्यो विघ्नराशिघ्नः सर्वविद्याविशारदः ।
आनन्दतुन्दिलः साक्षात्सिद्धिदाता गणेश्वरः ॥ ६२ ॥

सुत इति । हे शिष्य अन्यः स्कन्दादन्य उक्तलक्षणस्कन्दाद्गुणैर्विलक्षणो न त्वात्मतया वक्ष्यमाणलक्षणैर्लक्षितः सुतः पुत्र आत्मेत्यर्थः, 'आत्मा वै पुत्रनामासीति' श्रुतेः, तान्येव लक्षणान्याह विघ्नेत्यादिभिः, विघ्नराशिघ्नो विघ्नाः परिपन्थिभूता

मोक्षमाधनभूते ज्ञाने रागादयस्तेषां राशिः समूहस्तं हन्ति-नाशयतीति स तथोक्तो वैराग्यलक्षणेन लक्षित इति भावः। तत्र हेतुमाह सर्वेति, सर्वविद्याविशारदः सर्वाः समस्ता या विद्या ज्ञानानि रागादिदोषनिवर्तकानि तेषु विशारदः कुशल इति भावः, अत एवानन्दतुन्दिलो विक्षेपहेतुरागादिशून्यत्वेन विद्यानन्दपूर्णोदरत्वाद्बृहदुदर इव लक्षितः साक्षात्सिद्धिदाता प्रत्यक्षं यथा भवति तथा सिद्धेर्मुक्तेर्दाता प्रापकोऽव्यवधानेन मुक्तिप्रद इत्यर्थः, यः प्रत्यगभिन्नपरमात्मविषयबोधोपलक्षितः प्रत्यगात्मा सोऽत्र गणेश्वरो गणस्य शान्त्यादिसमूहस्येश्वरः स्वामी स्वाधीनीकृतशान्त्यादिवृत्तिरित्यर्थः, अस्ति, सोऽत्र गणेशो ज्ञेयः। उपासनायां तु रागादिसमूहे विघ्नराशित्वं तन्निवर्त्तकविषयदोषज्ञानेषु विद्यात्वं समारोप्य ताभिश्च करणैरुक्तविधविघ्ननाशकत्वेनोपलक्षितो विक्षेपराहित्येन पुष्ट आनन्दस्तं गणेशोदरे समारोप्य मुक्तिदातृत्वं च प्रत्यगात्मत्वं च गणेशे समारोप्योपास्यमिति भावः ॥ ६२ ॥

एवं गणेशं विचार्येदानीं शिवरात्रिं विचारयितुं गद्येन प्रतिजानीते ।

## अथ शिवरात्रिविचारः ।

अथेति । अथ गणेशविचारानन्तरं शिवरात्रिविचारः शिवस्य या रात्रिर्निशा प्रोक्ता तस्या विचारो निर्णयः क्रियत इति शेषः, इदानीं लोकप्रसिद्धशिवरात्रिविलक्षणां शिवरात्रिं तस्यां तल्लोकप्रसिद्धजागरणविलक्षणं च तत्फलं च तावद्दर्शयति।

या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ।
जागर्त्ति शिवरात्रौ यः शिवस्तस्मिन्प्रसीदति ॥ ६३॥

यानिशेति । हे शिष्य सर्वभूतानां सर्वाणि समस्तानि यानि भूतानि तेषां या शास्त्रप्रसिद्धा निशा यथा रात्रौ व्यवहारोपसंहारस्तथा यस्यामात्मस्थितौ सर्वप्राणिनां व्यवहारोपसंहारः, किञ्च सर्वप्राणिनां रात्रौ निद्रया व्यवहाराज्ञानं तथा त्राप्यात्माज्ञानं लक्ष्यतेऽतोऽत्र सर्वप्राणिनामात्मैव निशात्वेन ग्राह्यः सैवात्र मोक्षकारणत्वेन सुखसाधनत्वाच्छिवरात्रिरिति भावः, नन्वस्यां रात्रौ को जागर्ति लोकप्रसिद्धशिवरात्रौ तु बहवो जागरकर्तार उपलभ्यन्त इत्यत आह तस्यामिति, हे शिष्य यद्यपि सर्वप्राणिनोऽस्यां जागरणं न कुर्वन्ति तथापि तस्यामुक्तलक्षणायामात्मस्थितिरूपायां शिवरात्रौ संयमी संयम्यन्ते बुद्धिवृत्तयोऽस्मिन्निति संयमो निरोधनामको योगः—

'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥

इत्युक्तलक्षणो ब्रह्माभ्यासो वा विद्यते यस्य स योगाभ्यासवान्ब्रह्माभ्यासवान्वा जागर्ति जागरणं करोति सर्वप्राणिनां व्यवहारप्रतीतिरिव ज्ञानिनामात्मप्रतीतिरेव जारणशब्देनात्र ग्राह्येति भावः, नन्वत्रैवंविधजागरणे कृते च किं फलं भवतीत्यत आह जागर्तीति, हे शिष्य यः कोपि पुरुष इदानींतनो योगाभ्यासेन ब्रह्माभ्यासेन वा शिवरात्रावुक्तलक्षणायां शिवरात्रौ सुखस्वरूपायां लोकव्यवहाराभाववत्यामात्मस्थितावित्यर्थः, जागर्ति जागरणं करोति सर्वदैवात्मस्वरूपमनुभवतीत्यर्थः, तस्मिन्स्वात्मानुसन्धानवति बुद्धिगतचिदाभासे शिवस्तच्चिन्तितो ब्रह्माभिन्नप्रत्यगात्मा शिवगुरुः प्रसीदति प्रसन्नो भवतीत्यर्थः, निर्मलत्वेन स्फुरतीति भावः ॥ ६३ ॥

ननु लोकप्रसिद्धशिवरात्रेश्चतुर्दशीत्वं प्रसिद्धमस्यान्तु तत्सम्भवः कथमित्याशङ्क्य तदस्यामपि सम्भावयितुमाह ।

पञ्चकर्मेन्द्रियाण्येव पञ्चज्ञानेन्द्रियाणि च ।
मनोऽहंकृतिचित्तानि त्रीणि बुद्धिश्चतुर्दशी ॥ ६४ ॥

पञ्चेति । कर्मेन्द्रियाणि क्रियासाधनानि करणानि पञ्च पञ्चसङ्ख्यानि सन्ति तु पुनर्ज्ञानेन्द्रियाणि ज्ञानकरणानि पञ्च पञ्चसङ्ख्यानि सन्ति एवं तानि दशैव भवन्ति मन एकमहंकृतिरहङ्कारश्चैकश्चित्तं चैकमेतानि पूर्वोक्तदशेन्द्रियैः सहितानि त्रीण्येतानि त्रयोदश भवन्ति एतेषां बोधरूपा बुद्धिश्च साक्षी पूर्वत्रयोदशापेक्षया चतुर्दशी चतुर्दशसंख्यापूरकत्वाच्चतुर्दशीत्वं ज्ञेयम्, अन्तःकरणान्तर्गतबुद्धेस्तु त्रयोदशस्वन्तर्भावं मत्वा बुद्धिपदवाच्योऽत्र बोधात्मा चतुर्दशत्वेन ग्राह्यस्तस्य च पुंस्त्वे प्रतीतेऽपि लोकप्रसिद्धशिवरात्रेर्वाचकचतुर्दशीशब्दस्य स्त्रीलिङ्गप्रसिद्धेस्तत्सादृश्यमात्रविवक्षया बुद्धित्वं चतुर्दशीत्वं स्त्रीत्वं चेति निर्दिष्टानि, यद्वा ब्रह्माभिन्नप्रत्यगात्मविषयकबुद्धिवृत्तेरेव ब्रह्माहमस्मीति प्रमायाः पूर्वत्रयोदशापेक्षया चतुर्दशीत्वं ज्ञेयमिति भावः ॥ ६४ ॥

नन्वस्या बुद्धिवृत्तेर्बोधात्मनो वा शिवरात्रित्वं न क्वापि शास्त्रे प्रतिपादितमित्याशङ्क्य ज्ञानिष्वेवास्याः शिवरात्रित्वं प्रसिद्धमज्ञानिनां तु लोकप्रसिद्धशिवरात्रावेव शिवरात्रित्वमित्याशयेनाह ।

इयं तु शाम्भवैः प्रोक्ता शिवरात्रिचतुर्दशी ।
निराहारतया तत्र वृत्तिरोधी भवेद्बुधः ॥ ६५ ॥

इयं त्विति । हे शिष्य शाम्भवैः शम्भवत्वस्मादिति श-

म्भुर्जगदानन्दकरः परमात्मा तस्यैते शाम्भवास्तदात्मभूता ज्ञानिन इत्यर्थः, 'ज्ञानी त्वात्मैव मे मतमि'ति भगवदुक्तेः, तैरियं तु मदुक्तैव लोकप्रसिद्धशिवरात्रिविलक्षणा शिवरात्रिचतुर्दशी शिवरात्रिनाम्नी चतुर्दशी सुखस्वरूपलाञ्छिता व्यापाराभावाद्रात्रिः कर्मेन्द्रियादित्रयोदशत्रिपुटीप्रकाशकत्वेन तदपेक्षया चतुर्दशी प्रोक्ता कथिता, लोकप्रसिद्धा तु शिवरात्रिचतुर्दशी मूढजनायेति भावः । ननु लोकप्रसिद्धशिवरात्रावुपवासो विहितः सोत्र कथं कार्य इत्याशङ्क्यात्रापि विशिष्टमुपवासं विधत्ते निराहारतयेति, बुधो ज्ञानी तत्रोक्तलक्षणायां शिवरात्रौ निराहारतयाऽऽह्रियन्त उपभुज्यन्ते विषया यैस्त आहारास्तत्तद्वृत्तिभिस्तत्तद्विषयोपभोगास्ते निर्गता निवृत्ता यस्मात्स निराहारो विषयासेवनमसत्त्वेन विषयतद्भोगभोक्तॄणां अवलोकनमित्यर्थः, तस्य भावस्तत्ता तया वृत्तिलोपी वृत्तीनां ज्ञानविरुद्धकामादिवृत्तीनां लोपो नाशः सोऽस्यास्तीति तथाविधो भवेत्स्यादयमेवास्यां शिवरात्रावुपवासः कार्य इति भावः॥६५॥

ननु शिवरात्रिसामान्याल्लोकप्रसिद्धायामेव शिवरात्रौ प्रवृत्तिरस्तु किमप्रसिद्धायामस्यां प्रवृत्त्येत्याशङ्क्य मुमुक्षूणामत्रैव प्रवृत्तिरूच्युत्पादनायास्यामेव शिवप्रीति रधिकेति ज्ञानिनामत्रैव प्रवृत्तिरित्याह ।

> शिवभक्तैः कृता पूर्वं शिवस्यात्यन्तवल्लभा ।
> शिवरात्रिरियं पुत्र शिवसायुज्यदायिनी ॥ ६६ ॥

शिवभक्तैरिति । यतः कारणादियं मदुक्ता शिवरात्रिः शिवस्य प्रत्यगभिन्नब्रह्मानन्दगुरोरत्यन्तं वल्लभाऽत्यन्तमतिशयेन वल्लभा प्रियाऽऽत्मत्वात् 'प्रेयोऽन्यस्माच्च सर्वस्मादान्तरतरोयमात्मे'ति श्रुतेः, अतः शिवभक्तैः शिवस्य प्रत्यगभिन्नब्र-

ह्मगुरोर्ये भक्ताः सेवकाः प्रत्यगभिन्नब्रह्मचिन्तकाश्चिदाभासा इत्यर्थः, तैः पूर्वं प्राक्काले कृतोपासिताऽस्ति कुत इत्यत आह पुत्रेति, हे पुत्र हे शिष्य इयं शिवरात्रिः कृता सत्युपासिता सती शिवसायुज्यदायिनी शिवेन प्रत्यगभिन्नब्रह्मगुरुणा सह सायुज्यमैक्यं तस्य दायिनी दात्री चिदाभासस्येत्यर्थः, भवतीति शेषः ॥ ६६ ॥

नन्वन्यदेवानां दिनमेव पूजादिकर्मणि गृहीतं शिवस्य तु रात्रिरेव गृहीतेत्यत्र किं कारणमित्याशङ्क्याह ।

निशीथ एव मध्याह्नो रात्रिरेव दिनं विभोः ।
न यत्र किञ्चित्काशेत स प्रकाशस्तु शाम्भवः ॥६७॥

निशीथ इति । हे शिष्य विभोर्व्यापकस्य सर्वत्र विशेषेषु कार्यकारणरूपेषु सामान्यरूपेणानुवृत्तस्य प्रत्यगभिन्नब्रह्मगुरो रात्रिरेव सामान्यप्रकाशत्वेन विशेषाप्रकाशाद्रात्रिरेव आत्मप्रकाशरूपा सर्वव्यवहारोपसंहारवत्त्वाद्रात्रित्वमात्मप्रकाशस्य दिनं दिवसोऽस्ति प्रकाशरूपत्वादतो निशीथ एव लोकव्यवहारसाधनभूतकार्यकारणादिरूपप्रपञ्चासन्तास्फुरणोपलक्षितोऽर्धरात्र एव मध्याह्नो मध्यंदिनमस्तीति ज्ञेयं, ननु दिवसे मध्याह्ने च प्रकाशोऽनुभूयते लोके तस्याभावादत्र रात्रेर्दिनत्वमर्धरात्रस्य मध्याह्नत्वं च कथं संभाव्यं तत्राह नेति, यत्र यस्मिन्सामान्यचिद्रूपे प्रकाशे किञ्चित्किमपि विशिष्टं वस्तुजातं न काशेत प्रतीयेत स उक्तविधः शाम्भवः शम्भवत्यस्मादिति शम्भुर्जगदानन्दकरो ब्रह्माभिन्नप्रत्यगात्मगुरुस्तस्य तद्रूप एव शाम्भवः प्रकाशो ज्ञानं ज्ञेयः, अतो रात्रेर्दिनत्वमर्धरात्रस्य मध्याह्नत्वमुक्तं सम्भाव्यमिति भावः ॥ ६७ ॥

एवं शिवरात्रिं व्याख्यायेदानीं शिवताण्डवं निर्णेतुं गद्येन प्रतिजानीते ।

अथ शिवताण्डवविचारः ।

अथेति । अथ शिवरात्रिविचारनिरूपणानन्तरं शिवताण्डवविचारः शिवस्य महादेवस्य यत्ताण्डवं नृत्तं यच्छैवपुराणे निरूपितं तस्य विचारो निर्णयः क्रियत इति शेषः । तदेव पद्येनाह ।

यस्यानन्दलयेनैव नन्दिता नारदादयः ।
तदानन्दविनोदाख्यं शाम्भवं विद्धि ताण्डवम् ॥६८॥

यस्येति । यथा लोके नृत्तं लयसारं लयश्च स्वरगानतालमृदङ्गादिवाद्यपादप्रक्षेपहावभावानां समत्वं तस्मिंश्च सति तद्द्रष्टृणां समाजः सुखितो भवति तद्वदत्र यस्य प्रसगभिन्नब्रह्मरूपगुरोरानन्दलयेनैव 'स एको ब्रह्मण आनन्दः, यो वै भूमा तत्सुखं, रसो वै सः' इत्यादिभिः श्रुतिभिर्य आनन्दः प्रतिपादितस्तस्मिन्यो लयः साम्यं सर्वे वेदादिशब्दा गानं तत्तदुक्तक्रियोपासनाज्ञानाख्याः पादविक्षेपास्तत्तत्फलवासनापूर्वकावेशाश्च हावभावास्तेषां सर्वेषामानन्दप्रयोजकत्वेनानन्दे साम्यं पर्यवसानं तेनैव क्रियादीनामिच्छापूर्वकत्वादिच्छायाश्च सुखविषयत्वाद् 'वरेण्यमि'तिश्रुतेः, ब्रह्मानन्दस्यैव 'नाल्पे सुखमस्ती'ति श्रुत्या विशेषसुखे सुखनिषेधात्सुखत्वसिद्धेश्च ब्रह्मसुखस्यैव सुखत्वमनस्तस्मिन्नेव सर्वक्रियादिनृत्यसाम्यमिति भावस्तेनैव तादृशनृत्येनैव नारदादयो नारदो ब्रह्मपुत्र आदिर्मुख्यो येषु ते नारदचतुःसननादिशुकदत्तप्रभृतयस्तादृशनृत्यस्य स्वस्मिन्नाविर्भावेन नन्दिता नन्दो ब्रह्मानन्दः सञ्जात उत्पन्नो

येषां ते तथोक्ताः सन्तीति शेषः, ब्रह्मानन्दं प्राप्ता इत्यर्थः, 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुतेस्तदुक्तविधमानन्दविनोदाख्यमानन्दाय यो विनोदः क्रीडा स आख्या आह्वा यस्य तदानन्दपूर्वको वा यो विनोदोऽनायासेन कर्मोपासनाज्ञानानुष्ठानरूपं रमणं साऽऽख्याऽऽह्वा यस्य तत्तथाभूतं शाम्भवं शम्भवत्यस्मादिति शम्भुः सकलजगदानन्दकरो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्येदं शाम्भवं ताण्डवं नटनं विद्धि जानीहि 'ताण्डवं नटनं नाट्यं लयः साम्यमथास्त्रियामिति चामरसिंहः ॥ ६८ ॥

एवं शिवताण्डवं निर्णीयेदानीं शिवे स्मरहरत्वं यल्लोके शास्त्रे च प्रतिपाद्यते तद्विचारयिष्यन्गद्येनाह ।

## अथ स्मरहरत्वविचारः ।

अथेति । अथ शिवताण्डवविचारानन्तरं स्मरहरत्वविचारः स्मरहरनाम्नो विचारो निर्णयः क्रियत इति शेषः । तमेव पद्येनाह ।

> हते स्मरे हता एव षडप्येते स्मरादयः ।
> स्मरादिहरणादेव देवः स्मरहरो हरः ॥ ६९ ॥

हत इति । हे शिष्य स्मरे स्मरति जगदिति स्मरो जगद्विषयको बोधस्तस्मिन्हते 'नेह नानास्ति किञ्चने'त्यादिश्रुतिदृष्ट्योपसंहृते सति बाधिते सतीत्यर्थः, षडपि षड्सङ्ख्याका अपि स्मरादयो जगत्स्मरणरूपमनस उत्पन्नः काम आदिर्येषां ते कामक्रोधलोभमोहमत्सराख्या विकारा हता एव उपसंहृता एव तेषां विषयस्य जगतो बाधितत्वेन तेपि बाधिताः स्युरिति भावः । यतोऽतः स्मरादिहरणादेव स्मरः काम आ-

दिर्गुरुयो येषां तेषां हरणादेव तत्कारणजगद्बोधबाधेनैव तेषां कामादीनामपि बाधितत्वात्केवलं देवश्चिन्मात्रस्वरूपो हरो हरति सर्वं द्वैतमिति हरोऽद्वैतलक्षणो ब्रह्माभिन्नः प्रत्यगात्मशिवगुरुः स्मरहरः स्मरस्य जगद्बोधस्य हरो नाशकोऽस्ति न तु केवलं लोकप्रसिद्धकामदाहकत्वेनैव स्मरहरत्वं संभाव्यमिति भावः। उपासनापक्षे तु लोकप्रसिद्धशिवेऽद्वैतब्रह्माभिन्नप्रत्यगात्मशिवगुरुत्वं समारोप्य ध्येयमिति भावः ॥ ६९ ॥

एवं स्मरहरत्वं विचार्येदानीं गौरीं विचारयन्गद्येन प्रतिजानीते ।

अथ गौरीविचारः ।

अथेति । अथ स्मरहरत्वविचारानन्तरं गौरीविचारो गौरी पार्वती तस्या विचारो निर्णयः क्रियत इति शेषः । तदेतद्द्वादशभिः पद्यैर्निरूपयितुं तस्याः स्वरूपं तावद्दर्शयति ।

सा स्वभावेन वामैव मनोवाचामगोचरा ।
वामाङ्गी वामदेवस्य वामे गौरी विराजते ॥ ७० ॥

सेति । हे शिष्य येत्यध्याहार्यं या प्रसिद्धा मोक्षशास्त्रे विद्वत्सु च मनोवाचां मनसो वाचां च नामरूपातीतब्रह्मविषयत्वादगोचरा न गोचरा विषया भवति अहं ब्रह्मास्मीति प्रमारूपा वृत्तिः सोक्तविधा स्वभावेनैव स्वरूपेणैव वामा कमनीया सुन्दरी सुखरूपत्वादित्यर्थः, गौरी शुद्धा मायाविद्यारहितब्रह्माभिन्नप्रत्यगात्मविषयत्वाच्छुद्धत्वमस्या अतो गौरीनाम्ना साऽत्र ग्राह्येति भावः, तस्याः स्थानमाह वामदेवस्य वामः सुखरूपत्वात्कमनीयो यो देवश्चिन्मात्रस्वरूपो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्य वामे कमनीये सुखस्वरूपेऽङ्क इत्यर्थः, विराजते

प्रकाशत आनन्दमात्रविषयतया स्फुरतीत्यर्थः, अत एव वामाऽङ्गी वामं कमनीयं सुखरूपमङ्गं स्वरूपं यस्याः सा तथोक्ता प्रसिद्धा लोके शास्त्रे च ज्ञेया न केवलं देहमात्रसौन्दर्येणेति भावः॥७०॥

तस्या एव श्रेष्ठत्वं कारणसहितं दर्शयति ।

सा ब्रह्मवादिनां श्रेष्ठा भवानी ब्रह्मवादिनी ।
या कटाक्षेण सर्वत्र शिवाख्यं ब्रह्म वीक्षते ॥७१॥

सेति । हे शिष्य साऽहं ब्रह्मास्मीति प्रमारूपा पार्वती यतो भवानी भवन्त्यस्मिँश्चिदाभासरूपा जीवा इति भवः प्रत्यगभिन्नः परमात्मा तमनिति जीवयति सा भवान्यसद्रूपं जीवेश्वरत्वं मरणतुल्यं निरस्यामरब्रह्मभावस्मारकत्वेन जीवकत्वमस्या इति भावः, तत्रहेतुर्ब्रह्मवादिनी जीवे ब्रह्मत्वं वदते तच्छीलाऽत एव ब्रह्मवादिनां ब्रह्मवदितुं निरूपयितुं शीलं येषां तेषां मध्ये श्रेष्ठा महत्यस्ति अनयैव हेतुभूतया सर्वेषामपि ब्रह्मवादित्वसिद्धेरिति भावः, नन्वस्या ब्रह्मवादित्वं ब्रह्मजीवकत्वं ब्रह्मवादिश्रेष्ठत्वं च कुतः संभाव्यमित्याशङ्क्याह येति, हे शिष्य या विवेकिषु प्रत्यक्षा ब्रह्माकारवृत्तिरूपा गौरी कटाक्षेण कटाक्षं दृष्ट्यैकदेशेनावलोकनं तदिव चिदाभाससहितवृत्तिदृष्ट्या चिदाभासस्य निष्फलत्वात्केवलवृत्तिमात्रस्यैकदेशत्ववतया, यद्वा कटति वर्षति धर्ममिति कटं धर्ममेघाख्यसमाधिरूपमेवाऽक्षं नेत्रमिव ब्रह्मदर्शनसाधनं तेनेत्यर्थः, सर्वत्र जाग्रदाद्यवस्थासु तत्रापि सर्वपदार्थेषु शिवाख्यं सुखस्वरूपत्वाच्छिव इत्याख्याऽऽह्वा यस्य तद्ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु 'शिवमद्वैतमि'ति श्रुतेः प्रत्यगभिन्नं ब्रह्मेत्यर्थः, वीक्षते साक्षादनुभवतीत्यर्थः, अत इति योज्यम् ॥ ७१ ॥

इदानीं तस्यां सर्वत्र ब्रह्मानुभवं सम्भावयंस्तस्या ब्रह्मविषयप्रेमनिरूपणपूर्वकं कृतकृत्यतामाह ।

मम प्रियो मम स्वामी ममाऽऽत्मा मे गृहेश्वरः ।
इति यस्याः शिवे भावः सा धन्या शैलकन्यका ॥ ७२ ॥

ममेति । हे शिष्य यस्याः प्रत्यगभिन्नब्रह्मविषयकवृत्तेर्विद्वत्सु प्रसिद्धाया मम मे प्रत्यगभिन्नब्रह्मविषयवृत्तिगौर्या एवमुत्तरत्र त्रिष्वपि ममशब्देषु व्याख्येयं प्रिय इष्ट आनन्दरूपत्वात् किञ्च मम मे स्वामी पालको मम तत्सत्तयैव सत्त्वात् किञ्च मम म आत्मा पारमार्थिकं रूपं तं विना ममासत्त्वात् किञ्च मे मम गृहेश्वरो गृह्यते स्वात्मतयाऽङ्गीक्रियत इति गृहं प्रत्यगभिन्नब्रह्मत्वस्वीकरणमित्यर्थः, तस्येश्वरो नियन्ता ब्रह्माभिन्नप्रत्यगात्मशिवगुरुरेव स्वस्मिन्यद्ब्रह्माभिन्नप्रत्यगात्मत्वस्वीकरणमपि तदधीनमेवेत्यर्थः, इत्येवं शिव आनन्दरूपेऽद्वैतात्मनि भावः प्रेमाऽस्ति सोक्तलक्षणा ममारूपा वृत्तिः शैलकन्यका पार्वती धन्या कृतकृत्याऽस्ति शिलति दुःखयतीति शिलः स एव शैलो मोहस्तस्य कन्यका सुतेति व्याख्येयं तज्जत्वात्तस्या इति भावः ॥७२॥

पुनरपि तदेव द्रढयितुं तस्याः सर्वदेक्षणादिभिस्तद्विषयीकरणमेवाह ।

स ईक्षितः स आश्लिष्टः स भुक्तः स च पूजितः ।
स एव हृदये ध्यातः पार्वत्या परमेश्वरः ॥ ७३ ॥

स इति । हे शिष्य पार्वत्याः पर्वाणि पञ्च तमोमोहादीनि तनोति विस्तारयतीति पर्वनोऽज्ञानं तत्कार्यभूतो वा तनुविस्तार इति धातो'रन्येभ्योऽपि दृश्यते' इति डः प्रत्ययः, 'डिति चे'ति टेर्लोपे पर्वत इति सिद्धं तस्मादुत्पन्ना पार्वती तत एवोत्पन्ना तया

प्रमारूपया वृत्त्याऽहं ब्रह्मास्मीत्येवं रूपया स तद्विषयत्वेनोक्तः परमेश्वरः परमः कार्यकारणातीतो य ईश्वरः प्रत्यगभिन्नः परमात्मेक्षितोऽवलोकितः 'सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चने'त्यादिश्रुतिभिर्नानात्वस्य निषेधेन प्रत्यगभिन्नब्रह्ममात्रं साक्षात्कृतमित्यर्थः, अत स उक्तलक्षणो ब्रह्माभिन्नः प्रत्यगात्मैवाऽऽश्लिष्ट आलिङ्गितः स एव भुक्तोऽनुभूतः स चोक्तलक्षण एव प्रत्यगात्मा ब्रह्माभिन्न एव पूजित आदृतः किञ्च स एव प्रत्यगभिन्नः परमात्मैव हृदये सर्वबाधप्रकाशे ध्यातश्चिन्तितो नान्यः ॥ ७३ ॥

ननु सर्वशास्त्रेषु लोके च पार्वत्याः सौभाग्यं प्रसिद्धं लोकेपि सौभाग्यार्थं पूज्यते च तदत्र कथं संभाव्यमित्याशङ्क्यात्रापि तत्संभावयति ।

शिवं भजति भावेन पातिव्रत्येन पार्वती ।
अतः सौभाग्यमेतस्या लोके वेदे च गीयते ॥७४॥

शिवमिति । हे शिष्य पार्वती पञ्चपर्वविस्तारकमोहजन्याहं ब्रह्मास्मीति वृत्तिः पार्वती पातिव्रत्येन पतिरहं ब्रह्मास्मीति वृत्तेः स्वविषयत्वेन सत्त्वदानेन च पालको ब्रह्माभिन्नः प्रत्यगात्मा तस्य व्रतमखण्डैकरसत्वेनावस्थानरूपो नियम इव नियमो यस्या विद्यते तस्या भावः पातिव्रत्यमखण्डैकरसस्थितिरूपं तेन भावेन प्रेम्णा तद्रूपावस्थानेन वा शिवं सुखस्वरूपं ब्रह्माभिन्नं प्रत्यगात्मानं भजति सेवते यतोऽतः कारणादेतस्या विद्वत्प्रत्यक्षायाः प्रमावृत्तेः सौभाग्यं सु शोभनं भगमैश्वर्यं सच्चिदानन्दसमवस्थितिरूपं तदेव सौभाग्यं लोक ऋषिप्रणीतशास्त्रे वेदे च श्रुतौ च गीयते वर्ण्यते तद्द्वारा च जनेष्वपि वर्ण्यते ॥७४॥

ननु शास्त्रेषु पार्वत्या दिव्ययोगिनीत्वं प्रोक्तं तदत्र कथं संभाव्यमित्याशङ्क्य तदप्यत्र संभावयति ।

योगेश्वराणां योगोऽयं भुज्यते यन्महेश्वरः ।
तेन योगेन सम्पन्ना भवानी दिव्ययोगिनी ॥७५॥

योगेश्वराणामिति । हे शिष्य यद्यतो योगाज्जीवब्रह्मैक्यविषयकज्ञानादित्यर्थः, महेश्वरो महान्मायोपाध्यनवच्छिन्नः प्रत्यगभिन्नब्रह्मरूप एवेश्वर ईश्वरत्वारोपाधिष्ठानभूतो भुज्यतेऽनुभूयते सोयं प्रत्यक्षो योगेश्वराणां योगो जीवब्रह्मैक्यविषयं ज्ञानं तस्येश्वराः स्वाधीनज्ञाना इत्यर्थः, यस्योपर्यनुग्रहं कुर्वन्ति तस्य योगं समर्पयितुं समर्था इति भावः, तेषां ब्रह्मादीनां योगो युज्यते जीवो ब्रह्मणा सहैकीक्रियत इति योगो ज्ञानमस्ति तेन तादृशेन योगेन जीवब्रह्मैक्यज्ञानेन संपन्ना युक्ता भवानी सर्वसंसारोत्पत्तिकारणभूतप्रत्यगभिन्नब्रह्मजीवनहेतुभूतेव प्रमारूपा वृत्तिरेव दिव्ययोगिनी दिव्योऽलौकिको योगो ज्ञानं विद्यतेऽस्याः सा तथोक्ता शास्त्रेषु प्रोक्ता ॥ ७५ ॥

ननु शैवशास्त्रेषु पार्वत्याः पुरतः शिवो नृत्यतीत्युक्तं तदत्र न सम्भवतीत्याशङ्क्यास्यां तदपि सम्भावयति ।

नित्यं नृत्यति पार्वत्याः पुरतः परमेश्वरः ।
यदन्तस्तादृशं प्रेम तदग्रे किं न नृत्यतु ॥ ७६ ॥

नित्यमिति । हे शिष्य परमेश्वरः परमः कार्यकारणातीत ईश्वरो ब्रह्माभिन्नप्रत्यगात्मा शिवगुरुः पार्वत्याः पञ्चपर्वविस्तारकमोहजन्यायाः प्रमावृत्तेः पुरतोऽग्रभागे नित्यं सर्वदा नृत्यति नृत्यं करोतीव स्फुरतीत्यर्थः, कुतः इत्यत आह य-

दन्तरिति, हे शिष्य यदन्तर्यस्याः प्रमाख्यवृत्त्या अन्तरन्तरे तादृशं शिवस्य साक्षात्स्फुरणनृत्ययोग्यं पूर्वत्र मम प्रिय इत्यादिश्लोकद्वयोक्तं प्रेम प्रीतिरस्ति तदग्रे तस्यास्तादृशप्रेमवत्याः प्रमापार्वत्या अग्रे पुरो भागे किं कुतो न नृत्यतु नर्त्तनं न करोतु किन्तु नृत्यत्येवेत्यर्थः, संभावनायां लोट् सर्वदैव स्फुरत्विति भावः ॥ ७६ ॥

इदानीं ब्रह्माकारवृत्तेर्ब्रह्मणश्च भिन्नत्वेन प्रतीतावपि तयोर्वास्तवमेकत्वं निश्चित्य तदनुसन्धाय च तौ प्रणमति ।

एकात्मभावसम्पन्नौ स्थितौ भिन्नात्मकाविव ।
भवानीशङ्करौ वन्दे ब्रह्मविद्ब्रह्मणी यथा ॥ ७७ ॥

एकात्मेति । हे शिष्य यथा यद्वदेकात्मभावसम्पन्ने एकोऽद्वितीयो य आत्मा तत्त्वं तस्य भावस्तादात्म्यं तत्सम्पन्ने अपि प्राप्ते अपि भिन्नात्मके भिन्नावात्मानौ स्वरूपे ययोस्ते तथोक्ते अत एव ब्रह्मविद्ब्रह्मणी ब्रह्मवेत्ता ब्रह्म च तज्ज्ञानविषय इत्येवमर्थवाचकशब्दाभ्यामुच्यते तथा तद्वदेकात्मभावसंपन्नावेकोऽद्वितीयः सच्चिदानन्दरूप आत्मा स्वरूपं ययोस्तौ तथोक्तौ वस्तुतो विद्यमानावपि भिन्नात्मकौ भिन्नः पृथगात्मा स्वरूपं ययोस्तौ तथाभूतौ लोकदृष्ट्या प्रतीतौ भवानीशङ्करौ भवत्यस्मान्माया तत्कार्यं च प्रपञ्चश्चेति भवो ब्रह्माभिन्नः प्रत्यगात्मा तमनिति जीवयति असद्रूपं जीवेश्वरभावरूपं मरणं बाधित्वा सच्चिदानन्दस्फोरकत्वेन जीवयतीति भवानी ब्रह्मास्मीति प्रमारूपा ब्रह्माकारा वृत्तिः शङ्करश्च जगदानन्दकरो ब्रह्माभिन्नो प्रत्यगात्मा तावहं साधनसंपन्नः साधिष्ठानश्चिदाभासो वन्दे प्रणमामि चिदाभासस्य स्वतस्तदग्रे

स्फुरणाभावेन बुद्धिवृत्त्यधीनत्वाद्ब्रह्माकारवृत्त्यनुसरणेनैव ब्रह्माभिन्नप्रत्यगात्मनातादात्म्यं स्वस्मिन्ननुसन्दधामीत्यभिप्रायः। लौकिकार्थस्तु पूर्वत्रोत्तरत्र च स्पष्ट एवेति न दर्शितः स स्वबुद्ध्यैवानुसन्धेयः ॥ ७७ ॥

एवं ब्रह्मविद्ब्रह्मणी परमार्थत एकत्वेन लौकिकदृष्ट्या च भिन्नत्वेन लक्षयित्वेदानीं ब्रह्मणि तु सर्वदैव प्रपञ्चाभाव इति मुक्तिसुखं वृत्तावेवेति वृत्तावादरं विशिष्टं विधातुं ब्रह्माभिन्नप्रत्यगात्मनः सकाशाद्ब्रह्माभिन्नप्रत्यगात्माकारवृत्तेरेव श्रैष्ठ्यमाह चतुर्भिः तत्रादावुभयोरुभयत्र प्रेम्णोऽतिशयेन स्वेष्टब्रह्मतोऽपि तद्विषयकवृत्तावेवादरः कर्त्तव्य इत्याशयेन वृत्तेरेव स्तुतियोग्यत्वं विशेषतो ब्रह्मत इत्याह ।

प्रकारद्वितयेनापि पार्वती स्तुतिमर्हति ।
यदस्याः शङ्करे प्रेम यदस्यां प्रेम शाङ्करम् ॥७८॥

प्रकारेति । हे शिष्य प्रकारद्वितयेनापि प्रकारस्य धर्मस्य द्वितयं द्वयं तेन हेतुनापि पार्वती पञ्चपर्वविस्तारकमोहजन्यापि अहं ब्रह्मास्मीति ब्रह्माकारा वृत्तिः स्तुतिं स्तवनं आदरमित्यर्थः, अर्हति युनक्ति स्तुति योग्या भवतीति भावः, किं तत्प्रकारद्वयमित्यपेक्षायां तद्दर्शयति, यदिति यदलौकिकं प्रेम स्नेहोऽस्या ज्ञानिप्रत्यक्षाया अहं ब्रह्मास्मीतिवृत्तेः शङ्करे सकलजगदानन्दकरे प्रत्यगभिन्ने ब्रह्मणि अस्तीत्येकः प्रकारः, यच्चालौकिकं शाङ्करं सकलजगदानन्दकरप्रत्यगात्माभिन्नब्रह्मसम्बन्धि प्रेम स्नेहोऽस्यां प्रत्यगभिन्नब्रह्मविषयकाविद्वत्प्रत्यक्षायां वृत्तावस्तीत्येवं द्वितीयः प्रकारो ज्ञेयः ॥ ७८ ॥

आनन्दाधिक्यहेतुत्वादपि सामान्यानन्दरूपात्प्रत्यगभिन्न-

ब्रह्मणः सकाशाद्ब्रह्माकारवृत्तावेवादरो विधेय इत्याह।

पूजनीया विशेषेण शङ्करादपि पार्वती।
साक्षादानन्दरूपो यस्तस्याप्यानन्दवर्धिनी ॥ ७९ ॥

पूजनीयेति। हे शिष्य शङ्करादपि सकलजगदानन्दप्रदा त्प्रत्यगभिन्नब्रह्मणोऽपि सकाशाद्विशेषेणातिशयेन पार्वती पञ्चपर्वविस्तारकाज्ञानोत्पन्नाप्यहंब्रह्मास्मीति वृत्तिः पूजनीया ऽऽदरणीया कुत इत्यत आह साक्षादिति, यो विद्वत्प्रत्यक्षो ब्रह्मा-भिन्नप्रत्यगात्माऽऽनन्दरूपः सुखस्वरूपः साक्षात्स्वत एवास्ति 'को ह्येवान्यात्कः प्राण्याद्,यदेष आकाश आनन्दो न स्याद्, एष ह्येवानन्दयाति, यो वै भूमा तत्सुखमि'त्यादिश्रुतेस्तस्य ता-दृशस्यापि आनन्दवर्धिन्यानन्दं सुखं वर्धयतीति सा तथोक्ता स्वविषयब्रह्मानन्दस्वात्मानन्दाभ्यामानन्दद्वैगुण्यकारिणीति भावः, अस्तीति शेषः, अत इति पूर्वत्र योज्यम् ॥ ७९ ॥

ननु मुमुक्षूणां प्रत्यगभिन्नब्रह्मभाव एवेष्टः साक्षान्मुक्तिप्र-दत्वाद्वास्तवत्वाच्चास्तु किमापातिकया वृत्त्येत्याशङ्क्य तस्या एव ब्रह्मत्वं सोपपत्तिकमाह।

परब्रह्मस्वरूपैव पार्वती नात्र संशयः।
यदस्यां प्रचुरप्रेमा ब्रह्मज्ञानी सदाशिवः ॥ ८० ॥

परब्रह्मेति। हे शिष्य पार्वती पञ्चपर्वविस्तारकमोहोत्पन्ना प्र-प्रत्यगभिन्नब्रह्मविषयाऽहं ब्रह्मास्मीति प्रमारूपावृत्तिः पार्वती परब्र ह्मस्वरूपैव परं कार्यकारणातीतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु स्वमसाधारणं रूपमाकृतिर्यस्याः सा तथाभूतैवास्तीति निश्चेतव्यम्,अत्र ब्रह्माकारवृत्तेर्ब्रह्मरूपत्वे संशयः सन्देहो न नास्ति कुत इत्यत आह यदिति, यद्यस्मात्कारणाद्ब्रह्मज्ञानी ब्रह्मणः प्र-

त्यगभिन्नब्रह्मणो ज्ञानं साक्षात्कारो विद्यते यस्य स तादृशोपि अत एव सदाशिवः सर्वदा सुखस्वरूपः सन्नपि प्रत्यगभिन्न-ब्रह्मशिवगुरुरस्यां प्रकृतायां ब्रह्माकारवृत्तौ पार्वत्यां प्रचुर प्रेमा प्रचुरमुत्कृष्टं प्रेम स्नेहो यस्य स तथाविधोऽस्ति अत इति योज्यम् ॥ ८० ॥

ननु प्रत्यगात्मशिवगुरौ साकारे च शिवे वृत्तिसुखाभि-लाषेण स्त्रीभोगजन्यसुखाभिलाषेण च विषयित्वमेव कुतो न स्यात्कुतश्च ब्रह्मज्ञानित्वं तयोर्निश्चेतव्यमित्याशङ्क्योभयत्र विष-यित्वलक्षणाभावं दर्शयति ।

मन्दारास्तरवो वनेषु परिखातोयं सुधासागरो
द्वारेप्यष्टविभूतयो निधिगणैरन्तःपुरे पार्वती ।
शूलं शस्त्रवरं वृषः प्रियसखा नारः कपालः करे
ग्रैवेयं गरलं भुजेषु भुजगा भस्माङ्गरागे रुचिः ॥८१॥

मन्दारा इति । हे शिष्य साकारपक्षे यस्येत्यध्याहार्यं, यस्य शिवस्य वनेषु अरण्येषु आरामेषु वा मन्दारा मन्दारनामका-स्तरवः कल्पवृक्षाः सन्ति अन्यकामिनां कामानुरूपफलप्रदत्वा-द्यत्प्राप्तये कर्माद्यनुष्ठानं क्रियते ते कल्पवृक्षाः शिवस्यारण्ये साहजिकाः स्थिता इति भावः, किञ्च यस्य शिवस्य परिखातोयं परिखा शिवनगरस्य परितः खातरूपा तस्यास्तोयं जलं सुधासा-गरोऽमृतसमुद्रोऽस्ति कामिनां विषयभोगाय बहुकालशरीरजी-वनहेतुभूतममृतं काम्यमिति तत्प्राप्तये कर्माद्यनुष्ठानक्लेशस्त-त्तस्य समुद्र इव शिवनगरपरिखाभूतं विद्यत इति भावः, किञ्च द्वारेपि यस्य शिवस्य द्वार्यपि निधिगणैः सह निधयः पद्मशङ्खा-दयो नव तेषां गणैः समूहैः सह साकमष्टविभूतयोऽष्टाव-

ष्टसङ्ख्या विभूतयोऽणिमाद्याः सिद्धयः सन्ति सर्वकामसाधनत्वान्नवनिधिषु अष्टसिद्धिषु च कामिनां कर्मोपासनाद्यनुष्ठानप्रयासः प्रदृश्यते ते नव निधयस्ताश्चाष्टसिद्धयः शिवस्य नित्यप्राप्तत्वादनादरणीयत्वाच्च शिवदर्शनविघ्नरूपत्वेन द्वारे स्थापितास्तिष्ठन्तीति भावः, किञ्च यस्य शिवस्याऽन्तःपुरेऽवरोधे पार्श्वेऽस्ति गौरी विद्यते सुन्दरस्त्रीलाभायान्यकामिभिः गौरी पूज्यते सैव शिवस्यानुकूला भार्येति भावः, एवं भोगसामग्र्यां विद्यमानायामपि शिवस्य कामित्वाभावे चिह्नान्याह शूलमिति, शूलं त्रिशूलं तस्य शिवस्य शस्त्रवरं शस्त्रेषु आयुधेषु वरं श्रेष्ठमायुधमस्ति निर्धारणे षष्ठी सप्तमी वा श्रेष्ठमायुधं मतमित्यर्थः, कामिनां स्वल्पसम्पत्तावपि विद्यमानायां सत्यां धनुःखड्गादीन्यायुधानि तेषां स्वस्य च सौन्दर्याय सुवर्णादिधातुभिश्चित्रितानीष्टानि दृश्यन्ते शिवस्य तु सर्वलोकारुचिविषयं लौहं सुवर्णादिभिरचित्रितं त्रिशूलं मान्यं शस्त्रमतस्तस्मिन्कामिलक्षणाभावात्कामित्वं नास्तीति निश्चेतव्यमिति भावः, किञ्च तस्य शिवस्य प्रियसखा प्रिय इष्टः सखा मित्रमिष्टं वाहनमित्यर्थः, वृषो बलीवर्दोऽस्ति कामिनां तु स्वल्पायामपि सम्पदि प्राप्तायां सत्यां करितुरगरथादियानानि सुवर्णादिभूषितानि दृश्यन्ते शिवस्यैतादृशि संपदि विद्यमानायामपि लोकगर्ह्यं वृषवाहनमस्ति ततस्तस्मिन्कामिलक्षणाभावान्न कामित्वमिति निश्चेतव्यमिति भावः, किञ्च शिवस्य करे हस्ते नारो नुर्मनुष्यस्यायं नारः कपालो नृकरोट्यस्ति कामिनां तु किञ्चित्संपन्नानामपि पानभोजनपात्राणि सुवर्णादिनिर्मितानि दृश्यन्ते शिवस्य तु पानभोजनार्थं मनुष्यशिरोऽस्थिभूतं लोकनिन्द्यं कपालमस्ति ततोपि कामिलक्षणाभावान्न शिवे कामित्वमिति भावः, किञ्च शिवस्य

ग्रैवेयं ग्रीवाभूषणं गरलं विषमस्ति कामिनां स्वल्पायामपि संपदि विद्यमानायां सुवर्णरत्नादिनिर्मितानि ग्रीवाभूषणानि दृश्यन्ते शिवस्य तु कण्ठभूषणं विषमतः कामित्वलक्षणाभावान्न शिवे कामित्वं सम्भाव्यमिति भावः, किञ्च भुजेषु शिवस्य हस्तेषु भुजगाः सर्पाः सन्ति कामिनां तु किञ्चित्संपत्तौ विद्यमानायां बाहुषु सुवर्णरत्नादिनिर्मितानि भूषणानि दृश्यन्ते शिवभुजेषु तु लोकभीतिप्रदाः सर्पा एव भूषणत्वेन धृता अतश्च कामिलक्षणाभावान्न शिवे कामित्वमिति भावः, किञ्च शिवस्य भस्माङ्गरागे भस्म विभूतिरेवाङ्गस्य शरीरस्य रागो रञ्जनद्रव्यं तस्मिन्रुचिः प्रीतिरस्तीति शेषः, कामिनां तु स्वल्पायामपि संपदि विद्यमानायां चन्दनकस्तूर्याद्यङ्गरागे रुचिर्दृश्यते शिवस्य तु सर्वलोकाप्रिये भस्मन्येव प्रीतिरधिकाऽतो न तस्मिन्कामित्वं किन्तु तस्मिन्वैराग्यलक्षणस्य विद्यमानत्वाद्ब्रह्मवित्त्वं तादृशब्रह्मज्ञानित्वे विद्यमानेपि शिवस्य पार्वत्यामधिकप्रीतिदर्शनात्पार्वत्याः परब्रह्मत्वं पूर्वश्लोकोक्तं सम्भाव्यमिति भावः। प्रकृतार्थे तु प्रत्यगभिन्नब्रह्मशिवगुरोर्यस्य विद्वत्प्रत्यक्षस्य वनेषु सम्भजनविषयेषु वेदान्तेषु वनधातोः सम्भजनार्थाद्वनशब्दनिष्पत्तेर्वनशब्देन सेवनयोग्या वेदान्ता अत्र ग्राह्या इति भावः, तरवस्तरन्ति भवसागरं ते तरवो ज्ञानिनो मन्दारा मं मकारवाच्यं समष्टिव्यष्ट्यज्ञाने तदुपाधिकावीश्वरप्राज्ञौ चैतद्रूपं प्रपञ्चं दारयन्ति स्वस्यान्येषां च विनाशयन्ति ते तथोक्तास्तिष्ठन्ति यस्य शिवस्य स्वरूपज्ञानप्रतिपादकेषु वेदान्तेषु स्थिताः सन्तः स्वतो भवसागरं तीर्णा अन्येषामप्यज्ञाननिवारणेन तारका भवन्ति किं पुनस्तेषां कामित्वं नास्तीति तेषां कामित्वाभावे च किं पुनः प्रत्यगभिन्नब्रह्मशिवगुरौ कामित्व नास्तीति कामित्वाभावेपि ब्रह्माका-

रवृत्तौ प्रीत्यतिशयस्यानुभूयमानत्वाद्ब्रह्माकारवृत्तौ ब्रह्मत्वमुक्तं सम्भाव्यमिति भावः, किञ्च प्रत्यगभिन्नब्रह्मशिवगुरोः परिखातोयं परितः खनति उन्मूलयत्यविद्यामिति परिखा विद्या तस्यास्तोयं तोयमिव तृष्णानिवर्त्तकं सुखं विद्यानन्दशब्दवाच्यं सुधासागरः सुधा अमृतानि सुखानि मानुषानन्दादिब्रह्मानन्दान्तानि 'आशिष्ठो दृढिष्ठो बलिष्ठ' इत्यादिकया 'स एको ब्रह्मण आनन्द' इत्यन्तया श्रुत्या प्रतिपादितानि उत्तरोत्तरं शतशतगुणितानि तेषां तोयस्थानीयानां सागर इव विद्यानन्दोऽस्ति ब्रह्मानन्दविद्यानन्दयोरभेदाद्ब्रह्मानन्द एव सुधासागरत्वेन ग्राह्यः, किञ्च द्वारोपि प्रत्यगभिन्नपरमात्मशिवगुरोः प्राप्तिकारणत्वाद्द्वारभूतं योगो ज्ञानं वा तस्मिन्नपि निधिगणैः सह निधीयन्ते स्थाप्यन्ते सिद्धयो येषु ते निधयस्तत्तत्सिद्धिप्रापका धारणाविशेषास्तेषां गणाः समूहास्तैः साकमष्टविभूतयोऽष्टसङ्ख्याः सिद्धयः सन्ति, किञ्च यस्य प्रत्यगभिन्नशिवगुरोरन्तःपुरेऽन्तःकरणे लिङ्गशरीरे पार्वती पञ्चपर्वविस्तारकमोहोत्पन्नापि अहंब्रह्मास्मीति प्रमावृत्तिरस्ति, किञ्च यस्य प्रत्यगभिन्नशिवगुरोः शूलं शान्तिवैराग्यबोधाख्यैरित्यादिश्लोकोक्तं प्रत्यगभिन्नब्रह्मविषयबोधरूपमेव त्रिशूलं शत्रुभेदकमिवाज्ञानशत्रुभेदकं शस्त्रवरं शंसनीयेषूपदेश्येषु शस्त्रेषु वरं श्रेष्ठमस्ति, किञ्च वृषो ब्रह्माद्या यत्र नारूढा इति श्लोकोक्तो धर्ममेघाख्यः समाधिः श्रेष्ठत्वाद्वृषः स प्रियसखेष्टं मित्रमस्ति, किञ्च यस्य प्रत्यगभिन्नब्रह्मशिवगुरोः करे हस्ते योगाख्ये साङ्ख्ययोगौ निजौ बाहू इत्युक्तेः, नारो नराति किञ्चिदपीति नरो वैराग्यादिसाधनसम्पन्नः प्रमाता तस्यायं नारः कपालः कं ब्रह्मसुखं पालयति रक्षतीति कपालो ब्रह्मसुखसाक्षात्कारोऽस्ति ब्रह्मसुखसाक्षात्कारस्य योगाधीनत्वाद्यो-

ाहस्तेनैवान्येषामपि तत्प्राप्तिरिति भावः, किञ्च यस्य प्रत्यगभि-न्नब्रह्मशिवगुरोर्ग्रैवेयं ग्रीवायामिवैकदेशे स्थितं भूषणमिव वर्त्त-मानं गरलं गृणाति हितमुपदिशतीति गरो गुरुः, गिरति ग्रसति अज्ञानमिति गरो गुरूपदिष्टवाक्यकदम्बो वाऽज्ञानाद्यनर्थग्रासक-त्वात्तं लाति आदत्ते इति गरलं गुरुसेवनं गुरूपादिष्टवाक्याङ्गी-करणं वाऽस्तीति ज्ञातव्यं, किञ्च यस्य प्रत्यगभिन्नब्रह्मशिवगुरो-र्भुजेषु द्वैताद्वैतत्यागादानहेतुत्वाद्भुजौ साङ्ख्ययोगावादरेबहु-वचनं तेषु भुजगा भुजाभ्यां साङ्ख्ययोगाभ्यां गच्छन्त्यात्मान-मिति भुजगाः साङ्ख्येन योगेन वा जीवब्रह्मैक्यसाक्षात्कारा इति भावः, योगिनो विवेकिनश्च सन्ति, किं च यस्य प्रत्यगभिन्नब्रह्म-शिवगुरो रुचिः प्रीतिर्भस्माङ्गरागे ज्ञानबाधितं प्रारब्धशेषप-र्यन्तं प्रतीयमानं जगत्तदेव भस्मतुल्यत्वाद्भस्मैव भस्म तदेवाङ्ग-रागः स्वरूपरञ्जकं द्रव्यं तस्मिन्नस्तीति ज्ञेयम्, एतैर्लक्षणैः प्रत्यग-भिन्नब्रह्मशिवगुरौ कामित्वाभावः सम्भाव्यस्तथा सत्यपि स्वा-कारवृत्तौ प्रीत्यतिशयदर्शनाद्ब्रह्माकारवृत्तावेव ब्रह्मत्वं संभाव्य-मिति भावः ॥ ८१ ॥

ननु साकारे शिवे प्रत्यगभिन्नब्रह्मशिवगुरौ च पार्वत्यां ब्रह्माकारवृत्तौ च प्रेमाधिक्यदर्शनात्कामित्वं तर्हि कुतः प्रतिपा-द्यत इत्याशङ्क्य मूढजनानां तथा प्रतीतिरस्तु मत्प्रतीत्या तु न तथेत्याशयेनाह ।

चन्द्रादित्यशतप्रकाशजयिनी चन्द्रावतंसोज्ज्वला
गङ्गागर्भजटाधरा त्रिनयना गङ्गाम्बुवन्निर्मला ।
वामेभूधरकन्यका सहचरी भूत्या सदालंकृता
स्वानन्दशितिकण्ठिनी पुरभिदो मूर्त्तिः पुरः स्फूर्जति॥८२॥

चन्द्रादित्येति । हे शिष्य साकारपक्षे चन्द्रादित्यशतप्रकाशजयिनी चन्द्राः सोमा आदित्याश्च सूर्याश्च तेषां शतानि शतकानि तेषां प्रकाशः प्रभा तं जयति तच्छीलाऽतितेजस्विनीत्यर्थः; निराकारपक्षेपि ।

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं ममे'ति भगवचनात् ।
न तत्र सूर्यो भाति न चन्द्रतारकम् ।
नेमा विद्युतो भान्ति कुतोयमग्निः ॥
तमेव भान्तमनुभाति सर्वम् ।

तस्य भासा सर्वमिदं विभाती'ति श्रुतेश्च, ननु श्रुतौ स्मृतौ चैकचन्द्रस्यैकसूर्यस्य च प्रकाशतिरोधानं तत्र न तच्छतकप्रकाशजेतृत्वं दृश्यते किञ्च तेषां शतकमपि लोकशास्त्रविरुद्धं च न सम्भवति सूर्यचन्द्रयोरेकत्वस्योपलभ्यमानत्वादिति चेन्न सूर्यप्रकाश एकदीपप्रकाशतिरोधानमिवानेकदीपप्रकाशतिरोधानसम्भव इवैकैकसूर्यचन्द्रयोः प्रकाशतिरोधाननिरूपणादनन्तचन्द्रसूर्यादीनां प्रकाशतिरोधानस्य सम्भावितत्वादनन्तब्रह्माण्डापेक्षया च सूर्यचन्द्रादीनामनन्तत्वाच्चाऽनन्तचन्द्रादित्यप्रकाशजेतृत्वं सम्भाव्यं प्रसङ्गात्प्रशिवगुरौ, तथा चन्द्रावतंसोज्ज्वला चन्द्रः सोम एवावतंसश्चूडाभूषणं तेनोज्ज्वलाऽतिशोभायमाना; निराकारपक्षेऽपि शुद्धात्माशीतलाकान्तेत्यादिश्लोकोक्तमायाविद्यारहितत्वतापत्रयनिवर्तकत्वकमनीयत्वसूक्ष्मत्वदुष्प्रापत्वकार्यकारणातीतत्वलक्षणैर्लक्षितो बोध एव चन्दयति आह्लादयतीति व्युत्पत्या चन्द्रपदेन ग्राह्यः सोऽवतंस इव शिरसा धार्यो मुमुक्षूणां तेनोज्ज्वला निर्मलत्वेन प्रकाशमाना, तथा गङ्गागर्भज-

धरा गङ्गा विष्णुपदी गर्भे उदरे यासां तथाभूतानां ज-
टानां सटानां धरा धर्त्री; निराकारपक्षे तु ब्रह्मलोका
च या गङ्गेत्यत्रोक्ता ब्रह्मविषयिणी सन्ततं प्रवर्त्तमाना
वृत्तिरेव योगपक्षे सुषुम्णा वात्र गङ्गापदेन ग्राह्या सा गर्भे उ-
दर इवान्तःस्थिता यासां जटानां तासां विश्रामोयं मुनीन्द्राणा
मित्याद्युक्तानां वेदान्तसाङ्ख्ययोगाख्यानां जटानां धरा धात्र्या-
धारभूतेत्यर्थः, तथा त्रिनयना त्रीणि त्रिसङ्ख्यानि नयनानि
नेत्राणि यस्याः सा तथोक्ता; निराकारपक्षे तु त्रीणि त्रिसङ्ख्यानि
नयनानि प्रापकानि कर्मोपास्ती उभे नेत्रे इत्यत्रोक्तानि कर्मो-
पासनज्ञानाख्यानि अन्तःकरणशोधनेन चित्तस्थैर्यसम्पादनेन
च साक्षात्प्रकाशनेनापि क्रमेण यस्याः सन्ति सा तथाभूता तथा-
गङ्गाम्बुवन्निर्मला यथा गङ्गाजलं स्वतो मलरहितं सदन्येषा-
मपि मलनिवर्त्तकं भवति तथा निर्मला स्वतः पापरहिता सती
स्वशरणमुमुक्षूणामपि पापनिवर्तिका; निराकारपक्षे तु 'अपहत-
पाप्मे'ति श्रुतेः स्वतः पापमायाविद्यादिमलरहिता सती स्वसा-
क्षात्कारवतां स्वशरणागतमुमुक्षूणां च पापस्य मायाविद्यादि-
मलानां च निवर्तयित्री, किञ्च यस्याः शिवमूर्त्तेर्भूत्या जाता-
नेकवचनमष्टविभूतिभिः सदा सर्वकालश्चालङ्कृता भूषिता स-
हचरी सह सार्कं चरितुं वर्तितुं शीलमस्याः सा तथोक्ता
भूधरकन्यका भुवः पृथिव्या धरः स्तम्भकः पर्वतो हिमाचलस्तस्य
कन्यका सुता पार्वती वामे वामभागेऽस्ति; निराकारपक्षे तु य-
स्याश्चिन्मात्राकृतेर्भूत्याऽष्टविभूतिभिः सदा सर्वकालमलङ्कृता
भूषिता सती ब्रह्माकारवृत्तावेव सर्वसिद्धीनामुपलब्धेर्भूधरक-
न्यका भवन्त्यस्या जीवा इति भूरज्ञानं तत्कार्यं च विक्षेपः क्षेत्रा-
परपर्यायमन्तःकरणमित्यर्थः, अत्र भूपदेन ग्राह्यं तस्या धरोऽव-

छुम्भकस्तस्य कन्यका सुतेव जीवब्रह्मैक्यसाक्षात्कारहेतुभूताहं-ब्रह्मास्मीत्याकारा वृत्तिर्वामे वामं सुन्दरं सुखरूपं तस्मिन् सुखविषयत्वादेव तस्या इति भावः, सहचरी सह साकं चरितुं स्वात्मसुखमनुभवितुं शीलमस्याः सा तथाभूताऽस्ति विषयत-द्वृत्योः साहचर्यस्य लोके प्रसिद्धत्वादिति भावः, तथा स्वानन्दा स्व आत्मरूप आनन्दः सुखं यस्याः सा तथोक्ता न तु शिवः कामिवद्विषयसुखेन सुखीति भावः; निराकारपक्षे तु स्व आत्मैवा-नन्दः सुखं तद्रूपेत्यर्थः, न तु विषयसुखेन विद्यानन्देन च सुख-रूपेत्यर्थः, तथा शितिकण्ठिनी कण्ठ ब्रह्माण्डनभसामिति श्लो-कोक्तप्रकारेण निराकारपक्षे श्यामकण्ठवत्त्वं व्याख्येयं, यद्ब्रह्माण्ड शरीरस्येत्यादिभि रामरत्नं धृतं कण्ठे नीलकण्ठत्वकारणमित्यन्तैः श्लोकैरुक्तेषु नीलकण्ठत्वकारणेषु मध्ये यथारुचि साकारपक्षे नीलकण्ठत्वं व्याख्येयम्, एतादृशी पुरभिदः पुरं त्रिपुरम्भिनत्ति नाशयति असौ पुरभित् त्रिपुरहन्ता शिवस्तस्य मूर्तिराकृतिर्मे पुरोऽग्रे स्फूर्जति भासते; निराकारपक्षे तु पुरभिदः पु-राणि स्थूलसूक्ष्मकारणाख्यानि समष्टिव्यष्टिरूपाणि शरीराणि भिनत्ति बाधतेऽसौ पुरभित्तस्य प्रत्यगभिन्नब्रह्मशिवगुरोर्मूर्ति-श्चिन्मात्ररूपाऽऽकृतिर्मे ब्रह्माभिन्नप्रत्यात्मरूपस्य चिदाभास-स्य पुरोऽग्रे प्रत्यक्षतयेत्यर्थः, स्फूर्जति प्रकाशतेऽतः कामि-भिः स्वसादृश्यारोपेण साकारे निराकारे च पार्वत्यां वृत्तौ ब्र-ह्माकारायां वा शिवस्य ब्रह्माभिन्नप्रत्यगात्मशिवगुरोश्च प्रेमाधि-क्यदर्शनात्कामित्वं प्रतिपादितं तन्मौढ्यविलसितमेवेति कामि-त्वाभावेन ब्रह्मज्ञानिनः शिवस्य ब्रह्माभिन्नप्रत्यगात्मशिवगुरोश्च पार्वत्यां प्रमारूपवृत्तौ च प्रेमाधिक्यदर्शनात्पार्वत्या ब्रह्माकारवृत्ते-श्चोक्तं ब्रह्मत्वं सम्भाव्यमिति भावः ॥ ८२ ॥

इदानीं निर्णीतं सोपकरणं ध्यानमुत्तरत्रासङ्करायोपसंहरति गद्येन।

इति सोपकरणं ध्यानम् ।

इतीति । सोपकरणमुपकरणं ध्यानानुकूलसर्वसामग्री तेन सहितं सोपकरणं ध्यानं चिन्तनरूपः पूजोपचार इति समाप्तम् । एवं ध्यानं निर्णीयेदानीमुत्तरमवशिष्टं पूजाक्रमं निर्णेतुं तत्र प्रथमं स्नाननिर्णयाय स्नानमन्त्रं तावद्दर्शयति ।

पशुपतये नमः स्नानम् ।

पशुपतय इति । पशुपतये पशवोऽज्ञा जीवा इत्यर्थः, तेषां पतिः पालकः स्वसत्त्वचित्त्वानन्दत्वदानेन रक्षको जीवानां ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्मै तत्स्वरूपप्राप्तय इत्यर्थः, नमः प्रह्वीभावोऽष्टप्रकृत्यष्टाङ्गसहितोऽष्टप्रकृतितदुपहितजीवबाधेन लय एवात्र प्रणामो विवक्षितः, अष्टधा प्रकृतिश्च ।

'भूमिरापो ऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति श्लोके गीतायां भगवतोक्ता, बाधश्च 'नान्यो तोस्ति द्रष्टा नान्योतोस्ति श्रोते'त्यादिश्रुतिभिरष्टप्रकृत्युपहितकर्तृत्वभोक्तृत्वादिधर्मचिदाभाससत्त्वनिषेध रूप उक्तः प्रसिद्धस्तेन च पशुत्वत्याग एव पशुपतिशब्दवाच्यो ब्रह्माभिन्नप्रत्यगात्मनैक्यमेव मन्त्रार्थोऽत्र विवक्षित इति भावः, इममेवार्थं श्लोकेन स्पष्टयति ।

पशुत्ववासना त्याज्या ज्ञानगङ्गाम्बुधारया।
पवित्रया शीतलया स्नाप्यः पशुपतिः शिवः ॥८३॥

पशुत्वेति । हे शिष्य ज्ञानगङ्गाम्बुधारया ज्ञायते प्रत्यगभिन्नं ब्रह्मानेनेति ज्ञानं बोधः स एव सन्ततगमनात्पवित्रत्वकारणाच्च गङ्गेव तस्या अम्भिव तापत्रयनिवर्तकत्वा-

द्वितीयानन्दोऽत्र ग्राह्यस्तस्य धारैवात्राखण्डत्वं विवक्षितं तया पवित्रया मायाविद्यारागादिमलनिवर्त्तकया शीतलया तापत्रनिवर्त्तयित्र्या पशुत्ववासनाऽज्ञत्वात्पशोर्जीवस्य भावः पशुत्वं तस्य वासनेच्छा त्याज्या शक्तुं योग्याऽस्ति तेनेत्यध्याहार्यं तेन पशुत्ववासनात्यागेन पशुपतिः पशूनामज्ञानां जीवानामिति यावत् पतिः पालकः स्वसत्त्वं जीवेष्वारोप्य रक्षको ब्रह्माभिन्नप्रत्यगात्मशिवगुरुः शिवः सुखरूपः स्नाप्यः स्नापितव्यो ब्रह्माभिन्नप्रत्यगात्मशिवगुरोर्जीवत्ववासनात्यागपुरःसरं जीवत्वबाध एवात्र पूजायां स्नानं कार्यमिति भावः ॥ ८३ ॥

एवं स्नानं निर्णीयेदानीमुत्तरोपचारान्निर्णेतुं तत्समर्पणमन्त्रं तावदाह ।

शिवाय नम इति पूजनम् ।

शिवाय नम इति। शिवाय शिवो ब्रह्माभिन्नः प्रत्यगात्मशिवगुरुस्तस्मै तत्स्वरूपप्राप्तये नमोऽष्टप्रकृत्यष्टाङ्गसहितः साधिष्ठानचिदाभासबाधरूपः प्रह्वीभावोऽस्त्विति प्रार्थनेति मन्त्रार्थः, इत्यनेन सर्वोपचारार्पणं ज्ञायत इति शेषः । तमेवार्थं श्लोकेनापि स्पष्टयति ।

शिवो देवः शिवो जीवः शिवादन्यन्न विद्यते ।
एवं शिवे प्रकर्त्तव्यं भक्त्या चन्दनलेपनम् ॥ ८४ ॥

शिव इति । हे शिष्य देवः प्रत्यगभिन्नब्रह्मचिद्रूपो गुरुः शिव आनन्दरूपोऽस्ति 'यो वै भूमा तत्सुखमिति श्रुतेः, किञ्च जीवोऽधिष्ठानकूटस्थचैतन्यसहितः प्राणोपाधिमान् बुद्धिस्थचिदाभासो जीवः स शिवः प्रत्यगभिन्नब्रह्मानन्द एवास्ति 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुतिभिर्जीवबाधेन कूटस्थावशेषणादे-

तदेव व्यतिरेकेणाप्याह शिवादिति, शिवाद्ब्रह्माभिन्नप्रत्यगानन्दगुरोः सकाशादन्यत्पृथग्जीवत्वं न विद्यते नास्ति ब्रह्माभिन्नप्रत्यगात्मनः सकाशाज्जीवसत्ताऽन्या नास्तीत्यर्थः, एवमित्थं भाव एव शिवे ब्रह्माभिन्नप्रत्यगानन्दरूपे भक्त्या प्रेम्णा चन्दलेपनं चन्दयति आह्लादयतीति चन्दनं विद्यानन्दस्तस्य लेपनं संयोजनं प्रकर्तव्यं प्रकर्षेण सम्यग्यमिति भावः ॥ ८४ ॥

एवमेवाक्षतान्समर्पयितुं गद्येन प्रति जानीते ।

अथाक्षताः ।

अथेति । अथ चन्दनलेपननिर्णयानन्तरमक्षता लोके शिवपूजायां यथा समर्प्यन्ते तेऽत्र पूजायां निर्णीयन्त इति शेषः । तमेव निर्णयं पद्येनाह ।

भजनादक्षता भक्ता देवस्तु स्वयमक्षतः ।
अतस्त्वक्षतया भक्त्या पूजनीयः शिवोऽक्षतैः ॥८५॥

भजनादिति । हे शिष्य भक्ता ब्रह्माभिन्नप्रत्यगात्मत्वस्य स्वस्मिंश्चिदाभासे सेवका अङ्गीकर्तारश्चिदाभासा एव भजनात्तादृशं यत्स्वस्मिन्ब्रह्माभिन्नप्रत्यगात्मत्वस्वीकारलक्षणं भजनं सेवनं तस्माद्धेतोरक्षता न क्षता न नष्टा भवन्ति देवस्तु ब्रह्माभिन्नप्रत्यक्चिद्रूप आत्मापि स्वयं स्वत एवाक्षतो न क्षतोऽविनाशी 'अविनाशी वा अरेऽयमात्मे'त्यादिश्रुतेः, एवं चोभयोः स्वभावैक्याच्च परस्परं प्रीतिः सिद्धेति भावः, अत एवोभयोरक्षतत्वेनैक्यादेकस्वभावत्वाच्च हेतोरक्षतैर्ब्रह्माभिन्नप्रत्यगात्मत्वस्य स्वस्मिन्नङ्गीकारेणाविनाशित्वं प्राप्तैश्चिदाभासैरक्षतया न क्षता नष्टा तथाविधा या भक्तिः प्रत्यगात्मत्वस्य स्वस्मिन्नङ्गीकारे प्रेमलक्षणा वृत्तिस्तयाऽहंब्रह्मेत्येवंरूपया वृत्त्येति भावः, शिवो

ब्रह्माभिन्नप्रत्यगात्मशिव गुरुः पूजनीय आदरणीयः इदमेवात्राक्षतैः पूजनं ज्ञेयमिति भावः ॥ ८५ ॥

एवमक्षतार्पणं निर्णीयेदानीमर्कपुष्पार्पणं निर्णेतुं गद्येन प्रतिजानीते ।

अथार्कपुष्पविचारः ।

अथेति । अथाक्षतार्पणनिर्णयानन्तरमर्कपुष्पार्पणनिर्णयो लोके यदर्कपुष्पाणां शिवे समर्पणं क्रियते तस्यात्र शिवपूजायां निर्णयो विचारः क्रियत इति शेषः । तमेव निर्णयं पद्येनाह ।

अर्कः पाशुपतो नाम देवः पाशुपतप्रियः ।
अतः पाशुपतार्कस्य पुष्पं पशुपतेः प्रियम् ॥ ८६ ॥

अर्क इति । हे शिष्य पाशुपतः पशुर्जीवस्तस्य पतिः पालकः स्वसत्त्वसमारोपेण रक्षकः प्रत्यगभिन्नपरमात्मेत्यर्थः, तस्यायं पाशुपतः प्रत्यगभिन्नब्रह्मविषयको बोधो नाम प्रसिद्धः स एव प्रकाशरूपत्वादर्कः सूर्य इवास्ति अतः स बोधएवार्कोऽत्र ग्राह्यः, किञ्च देवो ब्रह्माभिन्नप्रत्यगात्मा पाशुपतप्रियः पशुपतिर्जीवरक्षकः प्रत्यगात्मा ब्रह्माभिन्नस्तस्य तद्विषयत्वेन तत्सम्बन्धी पापाशुपतो बोधः प्रियः सुखकारणत्वादात्मत्वाच्चेष्टो यस्य स तथोक्तोऽस्ति अतो जीवब्रह्मैक्यबोधप्रियत्वादेव पाशुपतार्कस्य प्रत्यगभिन्नब्रह्मविषयकबोधस्य प्रकाशरूपत्वेनार्कस्य पुष्पं पुष्पमिव प्रफुल्लं मुक्तिसुखं पशुपतेः पशूनां जीवानां पतेः पालकस्य प्रत्यगभिन्नब्रह्मणः प्रियमिष्टं भवति न लौकिकार्कपुष्पमत्र पूजायां ग्राह्यमिति भावः ॥ ८६ ॥

ननु लोके तावदर्कनाम्ना वृक्षः प्रसिद्धोऽत्र तु अर्कपदेन बोधः प्रतिपादितस्तत्र वृक्षधर्मवत्त्वं कथं सम्भाव्यं तत्राह ।

कटुपत्रस्तरुः कोपि भक्तेन गिरिशेऽर्पितः ।
प्रकाशकस्तमोहन्ता स एवार्कत्वमागतः ॥ ८७ ॥

कटुपत्र इति । हे शिष्य भक्तेनाहं ब्रह्मास्मीति स्वस्मिन् ब्रह्माभिन्नप्रत्यगात्मशिवगुरुत्वाङ्गीकारवता कोपि सत्त्वासत्त्वाभ्यामनिर्वचनीयः पूर्वमज्ञानावस्थायां कटुपत्रः कटूनि तीक्ष्णानि पत्राणि दलानि कामक्रोधादिवृत्तिरूपाणि यस्य स तथोक्तस्तरुर्ज्ञानावस्थायां तरति संसारसमुद्रमिति तरुर्ब्रह्माभिन्नप्रत्यगात्मबोधो गिरिशे गिरन्ति नश्यन्ति तत्त्वज्ञानेनेति गिरयोऽज्ञानतत्कार्यरूपाः प्रपञ्चास्ताञ्छातयति स्वयंप्रकाशचिद्रूपेण तनूकरोति असौ गिरिशो ब्रह्माभिन्नः प्रत्यगात्मशिवगुरुस्तस्मिन्नर्पितस्तदभिन्नत्वेन निश्चितश्चेदित्यध्याहार्यं, चेद्यदि तर्हि प्रकाशकः प्रकाशयिताऽऽत्मानात्मनोस्तमोहन्ता तमसोऽज्ञानस्य हन्ता नाशको यतो भवति अत एव स ब्रह्माभिन्नप्रत्यगात्मविषयको बोध एवार्कत्वं प्रकाशकत्वेनार्कनामत्वमागतः प्राप्त इति निश्चेतव्यम् ॥ ८७ ॥

ननु लोकप्रसिद्धेऽर्के शिवमल्लीति नाम प्रसिद्धं तदत्र कथं सम्भाव्यं तत्राह ।

पुष्पङ्कटुदलस्यास्य शाम्भवेन निवेदितम् ।
शम्भुना स्वीकृतं तेन सा जाता शिवमल्लिका ॥ ८८ ॥

पुष्पमिति । हे शिष्य अस्य प्रत्यक्षस्य कटुदलस्य कटूनि तीक्ष्णानि दलानि कामादिरूपाणि पर्णानीव यस्य तस्यान्तःकरणावच्छिन्नचिदाभासरूपबोधस्य प्रत्यगभिन्नब्रह्मविषयस्य पुष्पं पुष्पमिव प्रफुल्लं विद्यासुखं शाम्भवेन शं भवत्यस्मादिति शम्भुः सर्वजगदानन्दकरः प्रत्यगभिन्नब्रह्मशिवगुरुस्तस्यायं शा-

म्भवस्तदंशत्वाच्चिदाभासस्तेन शिवे प्रत्यगभिन्नब्रह्मणि निवेदितं समर्पितं ततः पृथगसत्त्वेन निश्चितमित्यर्थः, तच्छम्भुना स्वीकृतं शम्भुर्जगदानन्दकरः प्रत्यगभिन्नब्रह्मशिवगुरुस्तेन स्वीकृतमङ्गीकृतं स्वाभिन्नत्वेन सम्पादितमित्यर्थस्तेन कारणेन साऽहंब्रह्मास्मीति बोधरूपा वृत्तिः शिवमल्लिका शिवेन प्रत्यगभिन्नब्रह्मणा सहैकीभूय मालते शोभत इति शिवमल्लिकानाम्नी जाता लोके प्रसिद्धाऽस्तीति ज्ञेयम् ॥ ८८ ॥

एवमर्कपुष्पार्पणं निर्णीयेदानीं धत्तूरं निणेतुं गद्येन प्रतिजानीते।

## अथ धत्तूरनिर्णयः।

अथेति। अथार्कपुष्पनिर्णयानन्तरं धत्तूरनिर्णयो लोके धत्तूरः शिवे समर्प्यते तस्य निर्णयो विचारः क्रियत इति शेषः। तमेव निर्णयं पञ्चधत्तूरनामनिरुक्त्या पञ्चभिः श्लोकैराह, तत्र तावद्धत्तूर इति धत्तूरनामनिरुक्त्योभयोः स्वभावसाम्यदर्शनेन तमाह।

ईश्वरस्य प्रसादेन भासतेऽन्यादृशं जगत्।
स्वसमानगुणत्वेन धत्तूरः शिववल्लभः ॥ ८९ ॥

ईश्वरस्येति। हे शिष्य ईश्वरस्य शिवस्य प्रसादेन भजनाद्युपायैः स्वस्मिंस्तदाविर्भावलक्षणेन जगद्विश्वमन्यादृशं पूर्वं सद्रूपेण यत्प्रतीतं तदेव ततो विपरीतमसद्रूपं भासते दृश्यते धत्तूरस्यापि सेवनेन तत्सेवके धत्तूराविर्भावलक्षणेन धत्तूरस्य प्रसादेनापि जगदन्यादृशं विपरीतं भवतीत्यतः स्वसमानगुणत्वेन स्वस्य शिवस्य गुणेन स्वभावेनसमानस्तुल्यो गुणः स्वभावो यस्य धतूरस्य तस्य भावस्तत्त्वं तेन

धत्तूरो लोक उन्मत्तवृक्षः शिववल्लभः शिवस्य महादेवस्य वल्लभः प्रियोऽस्ति । प्रकृतार्थे तु ईश्वरो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्य प्रसादेन प्रसादो विवेकेन चिदाभास आविर्भावलक्षणस्तेन तस्यैव स्वात्मसाक्षात्कारवतश्चिदाभासस्य जगद्विश्वमन्यादृशं 'सर्वं खल्विदं ब्रह्मे'ति दृष्ट्या जगत्त्वबाधनेन ब्रह्मस्वरूपं भासते प्रतीयत इत्यतः स्वसमानगुणत्वेन स्वेन प्रत्यगभिन्नब्रह्मणा समानस्तुल्यो गुणः स्वभावो यस्य स तथोक्तः स्वात्मनादात्म्येन स्वात्मसेवकाचिदाभासेष्वाविर्भावे सति जगदन्यथाप्रतीतिकरणगुणसाम्यवांस्तस्य भावस्तत्त्वं तेन तेनोपलक्षितः पुरुषो धत्तूरः शिववल्लभः शिवस्य प्रत्यगभिन्नब्रह्मगुरोर्वल्लभः प्रिय आत्मत्वाद्भवतीति ज्ञेयम् ॥ ८९ ॥

इदानीमुन्मत्तनामनिरुक्त्यापि तत्तात्पर्यमाह ।

> उन्मन्या स्वयमुन्मत्त उन्मादयति शाम्भवान् ।
> अत एव प्रियं शम्भोः पुष्पमुन्मत्तसम्भवम् ॥ ९० ॥

उन्मन्येति । हे शिष्य स्वयं शिव उन्मन्या मनोलयापरपर्याययोन्मन्यावस्थयोन्मत्त उन्मादं प्राप्तः सञ्छाम्भवाञ्छम्भुः शिवस्तस्यैते शाम्भवाः शिवभक्तास्तानुन्मादयति उन्मत्तान्करोति यतः कारणादत एवानेनैव कारणेन शम्भोः शिवस्योन्मत्तसम्भवं धत्तूरोत्पन्नं पुष्पं कुसुमं प्रियमिष्टं ज्ञेयम् । परमार्थतस्तु स्वयं ब्रह्माभिन्नश्चिदात्मोन्मन्या 'नेह नानास्ति किञ्चने'ति श्रुत्या सर्वस्यात्माभिन्नस्य वस्तुनो बाधितत्वेन मनसोऽत्यन्ताभावरूपया मुक्तावस्थयोन्मत्त उन्मत्त इव विधिनिषेधातीतः प्रतीयते तथा सञ्छाम्भवाञ्छम्भुः सकलजगदानन्दकरः प्रत्यगभिन्नो ब्रह्मानन्दस्तस्यैते शाम्भवा ब्रह्माभिन्नप्रत्यगात्मत्वं प्राप्ताश्चिदाभासाः प्रमातार इत्यर्थः, तानुन्मादयति

पनोनाशेन विधिनिषेधातीतान्करोति मुक्तान्करोति यतः कारणादत एवैवंस्वभावादेव शम्भोः सकलजगदानन्दकरस्य ब्रह्माभिन्नप्रत्यगात्मशिवगुरोरुन्मत्तसम्भवं बाधितमनसश्चिदाभासात् सम्भव उत्पत्तिर्यस्य तत्तादृशं पुष्पमिव विकसितं ज्ञानं ज्ञानरूपा वृत्तिः प्रियमिष्टमस्ति न धत्तूरपुष्यमिति ज्ञेयम् ॥ ९०॥

इदानीं कितवनामनिरुक्त्यापि तदुद्रढयति ।

कैतवं कितवस्यास्य सर्वगोऽयं न लिप्यते ।
अतः किवधूर्त्तस्य कैतवं कुसुमं प्रियम् ॥ ९१ ॥

कैतवमिति। हे शिष्य अस्य प्रत्यगभिन्नब्रह्मशिवगुरोः कितवस्य सर्वगत्वे सति अलिप्तत्वं कपटं तेन युक्तत्वात्कपटिनो यज्ज्ञानिषु प्रसिद्धं सर्वगः सर्वत्रानुस्यूतः सन्न लिप्यते लिप्तो न भवति सर्वोत्पत्तिलयादिना तद्वान्न भवतीति तदिदं कैतवं कपटं ज्ञेयं यतोऽतः कारणात्कपटवत्त्वादित्यर्थः, कितवधूर्त्तस्य सर्वगत्वे सति अलिप्तत्वेन कितवः कपटः कामादिधूर्त्तवञ्चकत्वेन धूर्त्तो वक्ष्यमाणो वञ्चकः प्रत्यगभिन्नब्रह्मशिवगुरुस्तस्य, यद्वा स्वस्मिन्सर्वगत्वेनालिप्तत्वं कामादिवञ्चकत्वं च साक्षात्कृतवान्प्रमाता तस्य कैतवं तस्मादुत्पन्नं कुसुमं पुष्पमिव प्रफुल्लमलिप्तत्वसर्वगत्वकामादिवञ्चकत्वोपलक्षितं प्रत्यगभिन्नपरमात्मशिवगुरुविषयकं ज्ञानं विद्यानन्दविकासितमिति भावः, प्रियमिष्टं नान्यदित्यर्थः। लौकिकार्थे तु अस्य प्रत्यक्षस्य कितवस्य च्छलिनो यत्प्रसिद्धं सर्वगः समष्ट्यहंभावाधिष्ठातृत्वेन समस्तपदार्थेषु व्याप्तः सन्नपि न लिप्यते लिप्तो न भवतीत्येवं कैतवं कापट्यमस्ति अतः कारणात्कितवधूर्त्तस्य कपटेनोक्तविधेन धूर्त्तस्य सर्ववञ्चकस्य स्वस्वभाववत्त्वेन कैतवं धात्तूरसम्बन्धि कुसुमं

पुष्पं प्रियमिष्टम् ॥ ९१ ॥

इदानीं धूर्त्तनामनिरुक्त्यापि तद्‌द्रढयति ।

कामादयो महाधूर्त्ता धूर्त्तितं यैर्जगत्त्रयम् ।
तान्धूर्तयति यो युक्त्या स धूर्तो धूर्जटिप्रियः ॥ ९२ ॥

कामादय इति। हे शिष्य कामादयः कामोऽभिलाष आदिर्मुख्यो येषु क्रोधादिषु ते महाधूर्ता महान्तः श्रेष्ठा धूर्त्ता वञ्चकाः सन्ति तत्रोपपत्तिमाह धूर्त्तितमिति, यैः कामादिभिर्जगत्त्रयं जगतां लोकानां त्रयं त्रिकं धूर्त्तितं वञ्चितमस्ति ते कामाद्याः शिवेन ब्रह्माभिन्नप्रत्यगात्मशिवगुरुणा धूर्तितास्तत्तद्विषयबाधनेन वञ्चिताः सन्तीति हेतोरयं तादृशकामादिवञ्चकः प्रत्यक्षो धूर्तः सर्वकामादिवञ्चको ज्ञानी चिदाभासो धूर्त्तवल्लभो धूर्त्तकामादिवञ्चकस्य प्रत्यगभिन्नपरमात्मन आत्मत्वाद्वल्लभः प्रियोऽस्ति न तु लौकिकधूर्त्त इत्यर्थः। लौकिकार्थे तूभयोः स्वभावैक्याल्लौकिकधूर्तप्रियः शिवः, शेषं समानम् ॥ ९२ ॥

इदानीं कनकाह्वयनामनिरुक्त्यापि तदेवाह ।

अर्पितं शङ्करे धूर्त्तपत्रं कनकपुण्यदम् ।
अनेन हेतुना जातो धत्तूरः कनकाह्वयः ॥ ९३ ॥

अर्पितमिति। हे शिष्य शङ्करे जगदानन्दप्रदे प्रत्यगभिन्नब्रह्मशिवगुरावर्पितं तत्सत्तासमर्पणेन प्रत्यगात्माभेदेन संपादितं धूर्त्तपत्रमुक्तलक्षणकामादिवञ्चकस्य चिदाभासस्य पत्रमिव वृक्षस्यांशभूतमहंब्रह्मास्मीति ज्ञानं कनकपुण्यदं कनकस्य सुवर्णस्यार्पणेन यत्पुण्यं सुकृतं तद्ददातीति तथाभूतं भवति अनेनैतेन

१ धूर्तवल्लभः ।

हेतुना कारणेन धत्तूरो जगदन्यथाभासक उक्तलक्षणो ज्ञानी कनकाह्वयः कनकं सुवर्णमित्याह्वयं नाम यस्य स तथोक्तो जातो वेदेषु प्रतिपादितः सुवर्णं घर्मं परिवेदनमित्यादिष्वित्यर्थः। लौकिकार्थे तु धूर्तपत्रं धूर्तस्य धत्तूरस्य पत्रं पर्णं शङ्करे शिवेऽर्पितं सत्कनकपुण्यदं सुवर्णार्पणपुण्यफलप्रदं भवतीति शैवपुराणेषु प्रतिपादितमनेन हेतुनैतेन कारणेन धत्तूरः कनकाह्वयः कनक इति नामको जातो लोके प्रसिद्धः ॥ ९३ ॥

एवं धत्तूरं निर्णीयेदानीं कण्टकारिकां निर्णेतुं पद्येन प्रतिजानीते।

## अथ कण्टकारिकानिर्णयः।

अथेति। अथ धत्तूरनिर्णयानन्तरं कण्टकारिकानिर्णयो लोके या कण्टकारिका शिवे समर्प्यते तस्या निर्णयो निश्चयोऽत्र क्रियत इति शेषः। तमेव पद्येनाह।

> भक्त्या भक्तेन चेद्वृत्तिर्मनसः शङ्करेऽर्पिता।
> सकण्टकस्वभावापि जाता साऽकण्टकारिका॥ ९४ ॥

भक्त्येति। हे शिष्य भक्तेन जीवब्रह्मैक्यप्रेमवता साधिष्ठानबुद्धिस्थचिदाभासेनाधिकारिणा मनसश्चेतसो वृत्तिस्तत्त्वंपदार्थशोधनेन शुद्धतत्त्वंपदार्थयोः कूटस्थब्रह्मणोरैक्यविषयाऽहंब्रह्मास्मीतिरूपा भक्त्या प्रेम्णा तद्विषयकस्नेहेनेत्यर्थः, शङ्करे सकलजगदानन्दकरे प्रत्यगभिन्नब्रह्मशिवगुरावर्पिता तदाकाराकारिता पृथगसत्त्वेनावलोकितेत्यर्थः, चेद्यदि तर्हि तदर्पणात्पूर्वं सा वृत्तिरेव सकण्टकस्वभावापि कण्टका इव पीडाहेतवः कामादिविकारा अत्र ग्राह्यास्तैः सहितो युक्तः स्वभावो यस्याः सा तथोक्तापि कामादिविकारैः संपृक्तापीत्यर्थः, केवलब्रह्मानन्दा-

तिशयेनाकण्टकारिका न विद्यन्ते कण्टका दुःखकारणभूताः कामादिविकारा यस्यां सा तथाभूता केवलं सुखमात्रानुसन्धानवतीत्यर्थः, जाता सम्पन्ना । लोकप्रसिद्धार्थेऽपि यद्यपि कण्टकैः सह वर्त्तमाना कण्टकारिका बृहती भक्तिपूर्वकं शिवपूजकेन शिवेऽर्पिता यदि स्यात्तर्हि शिवप्रसादद्वारा तत्समर्पकाणां सुखप्राप्तिहेतुत्वात्कण्टकरहितैव सम्पन्नेति योज्यम् ॥ ९४ ॥

एवं कण्टकारिकां निर्णीयेदानीं बिल्वपत्राणि निर्णेतुं गद्येन प्रतिजानीते ।

## अथ बिल्वविचारः ।

अथेति । अथ कण्टकारिकानिर्णयानन्तरं बिल्वनिर्णयः शिवस्य बिल्वः प्रेयानिति लोके शास्त्रे च प्रसिद्धिरतोऽत्र बिल्वस्य-बिल्वनाम्नो वृक्षस्यापि निर्णयो विचारः क्रियत इति शेषः । तमेव त्रिभिः पद्यैराह, तत्र तावच्छाण्डिल्य इति बिल्वनामास्तीति तन्निरुक्त्या तद्विचारमाह ।

शिवभक्तिस्वभावेन शाण्डिल्यो हि महामुनिः ।
तन्नाम्नैव प्रियं शम्भोः पत्रं शाण्डिल्यसम्भवम् ॥ ९५ ॥

शिवभक्तीति । हे शिष्य शिवभक्तिस्वभावेन शिवे प्रत्यगभिन्नब्रह्मगुरौ या भक्तिः प्रत्यगभिन्नब्रह्मत्वसेवनरूपा वृत्तिः स एव स्वभावः शीलं तेनोपलक्षितोऽत एव महामुनिर्महाञ्छ्रेष्ठो मुनिर्ज्ञानी शाण्डिल्यः शाण्डिल्यनामको हि प्रसिद्ध उपासनाशास्त्रेऽस्ति अतस्तस्मिन्प्रेम्णः शिवसम्बन्धिन आधिक्यदर्शनात्तत्र च शिवप्रेमाधिक्ये ब्रह्मविद्ब्रह्मणोरभेदनिरूपणाद्ब्रह्मविदि ब्रह्मात्मत्वेन ब्रह्मणः प्रेमाधिक्यं सम्भाव्यं 'प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोन्यस्माच्च सर्वस्मादान्तरतरोऽयमात्मे'त्यादिश्रुतेः शम्भोः

सम्भवत्यस्मादिति शम्भुर्ब्रह्माभिन्नः प्रत्यगानन्दस्तस्य तत्प्रणीतमुपासनाशास्त्रं प्रत्यगभिन्नब्रह्मविषयिणी वृत्तिर्वा शाण्डिल्याभिधान्मुनेः सम्भव उत्पत्तिर्यस्य तत्तथाविधं पत्रमिव वृक्षस्यात्र ग्राह्यं तन्नाम्नैव शाण्डिल्य इति लोकप्रसिद्धदेहादिदृष्ट्या नामाभिधानं तेनैवोपलक्षितं प्रियं प्रीतिविषयं भवतीति ज्ञेयं, न तु प्रसिद्धविल्वपत्रमत्र शिवप्रियं ग्राह्यमिति भावः। लौकिकार्थेऽपि प्रसिद्धशिवभक्तशाण्डिल्यमुनिनामवत्त्वादेव बिल्वपत्रं शिवप्रियमिति योज्यम् ॥ ९५ ॥

इदानीं शैलूषनामनिरुक्त्यापि तन्निर्णयमाह।

विश्वरूपो महादेवः स्वयं शैलूषलक्षणः।
अतः शैलूषपत्रणां पूजया स प्रसीदति ॥ ९६ ॥

विश्वरूप इति। हे शिष्य महादेवो महानपरिच्छिन्नो देवश्चिन्मात्ररूपो ब्रह्माभिन्नप्रत्यगात्मा यतो विश्वरूपो विश्वं समस्तं जगद्रूपमाकृतिर्यस्य स तथाविधोऽस्ति अतः स्वयं ब्रह्माभिन्नप्रत्यगात्मा शैलूषलक्षणः शैलूषस्य बहुरूपधारिणो नटस्य लक्षणमिव लक्षणं चिह्नं यस्य स तथाविधोऽस्ति अतः शैलूषलक्षणवत्त्वादेव हेतोः स उक्तविधो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुः शैलूषपत्राणां तादृशसमस्तजगद्रूपधारिणां तद्बाधेन ब्रह्मस्वरूपधारिणां चिदाभासानां पत्राणीव ब्रह्माकारवृत्तयस्तासां कृतया पूजया कर्तरि षष्ठी ताभिः कृतयेत्यर्थः, ब्रह्माकारवृत्तिप्रवाह एवात्र पूजा तया प्रसीदति प्रसन्नो भवति न तु लोकप्रसिद्धबिल्वपत्राण्यत्र ग्राह्याणि लोकप्रसिद्धबिल्वपत्रैः पूजनं तु सांसारिकफलहेतुत्वान्मुमुक्षुभिर्नादरणीयमिति भावः ॥९६॥

इदानीं श्रीफलनामनिरुक्त्यापि तन्निर्णयमाह।

जन्मनस्तु फलं श्रीमद्बिल्वपत्रार्पणाच्छिवे ।
अतो निरूपितो वृक्षो बिल्वः श्रीफलसंज्ञया ॥९७॥

जन्मन इति । हे शिष्य यस्मिञ्जन्मनि देहद्वयाविर्भाव-पूर्वं तादात्म्यप्रतीतिरूपे जन्मनि ब्रह्माभिन्ने प्रत्यगात्मशिवे सुखरूपे बिल्वपत्रार्पणादुक्तविधो यो बिल्वश्चिदाभासस्तस्य पत्रमिव पत्रमहंब्रह्मास्मीतिवृत्तिरूपं तस्यार्पणं निवेदनं ब्रह्माभिन्नप्रत्यगात्ममात्रत्वसम्पादनलक्षणं तस्माद्धेतोस्तस्य जन्मनस्तु देहद्वयसहितचिदाभासाविर्भावलक्षणोत्पत्तेः फलं प्रयोजनं श्रीमच्छ्रीर्मुक्तिसम्पत्तिर्विद्यतेऽस्य तत्तथोक्तं जायते यतोऽतः कारणाद्बिल्व उक्तविधो ज्ञानी चिदाभास एव वृक्षस्तत्त्वज्ञानेन वृश्चनीयो विनाशार्हः श्रीफलसंज्ञया श्रीफल इति नाम्ना निरूपितो विशेषितो मुक्तिफलवत्त्वान्मुक्तनाम्ना निर्दिष्ट इति भावः। लौकिकार्थे तु यस्मिञ्जन्मनि शिवे बिल्वपत्रं समर्पितं तस्य जन्मनः फलं श्रीमत्सायुज्यादिमुक्तिप्राप्तिमद्भवति अतो बिल्वनामको वृक्षः श्रीफलनाम्ना लोके व्यवह्रियत इति भावः ॥ ९७ ॥

एवं बिल्वपत्रार्पणं निर्णीयेदानीं शिष्टान्धूपादीन्दक्षिणान्तानुपचारानपि निर्णीय दर्शयति ।

धूपप्रदीपनैवेद्यफलताम्बूलदक्षिणाः ।
शिवाय नम इत्येव सर्वमेवास्य पूजनम् ॥ ९८ ॥

धूपेति। हे शिष्य धूपप्रदीपनैवेद्यफलताम्बूलदक्षिणा धूपश्च दशेन्द्रियाणि वैराग्यानले दग्ध्वा तत उत्पन्नो ब्रह्मात्मविषयकवासनारूपः कर्मज्ञानमयो यदिन्द्रियगण इत्यत्रोक्तः, प्रदीपश्च जीवब्रह्मैक्यविषयको ज्ञानस्वरूपो यस्मिन्नुज्ज्वलित इत्यत्रोक्तः,

नैवेद्यश्च द्वैतबाधरूपो यज्जक्ष्यं प्रियमस्येत्यत्रोक्तः, फलं च भक्तिरूपं निष्कामोत्तमधर्मसम्भ्रमजुषामित्यत्रोक्तः, ताम्बूलं च मैत्र्यादिवृत्तिचतुष्टयाङ्गीकरणलक्षणं यन्मैत्र्यादिचतुष्टयमित्यत्रोक्तमेव, दक्षिणा च मनश्चिन्तामणिसमर्पलक्षणा सर्वस्वं मम तत्किलेत्यत्रोक्तैव, एते सर्वेप्युपचाराः शिवाय नम इत्येव शिवो देवः शिवो जीव इत्यत्रोक्तलक्षणेन प्रत्यगभिन्नपरमात्मशिवगुरोर्जीवस्य पार्थक्यबाधनेन लक्षिताश्चेत्स्युस्तर्हि सर्वमेव समस्तमपि लौकिकवैदिकनिषिद्धाचरणमपि अस्य प्रत्यगभिन्नब्रह्मशिवगुरोः पूजनं पूजा भवति तत्र किं वक्तव्यमेवादृशाचरणं पूजा भवतीति भावः ॥ ९८ ॥

एवं दक्षिणान्तानुपचारान्निर्णीयेदानीं मन्त्रजपं निर्णेतुं मन्त्रनिर्णयमाह ।

> विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
> तत्र पञ्चाक्षरी श्रेष्ठा सा जप्या शिवतुष्टये ॥ ९९ ॥

विद्यास्विति।हे शिष्य विद्यासु ज्ञानसाधनोपासनासाधनप्रतिपादिकासु वाणीषु मध्ये श्रुतिर्वेद उत्कृष्टा प्रमाणशिरोभूतत्वाच्छ्रेष्ठाऽस्तीति ज्ञेयं, तत्र श्रुतौ वेदेपि रुद्रैकादशिन्येकादशानुवाकैर्नमकाराख्यैश्चमकाराख्यैश्चोपलक्षिता रुद्राध्यायरूपा वाक्श्रेष्ठा ज्ञेया, तत्रापि नमः शिवाय चेति पञ्चाक्षर्याकाशादिपञ्चभूतरूपवाच्यांशत्यागेन तत्साक्षिप्रत्यगभिन्नब्रह्मचिन्मात्रशिवगुरुलक्षिका शिवाय नम इति पञ्चाक्षरसमूहरूपा वाक्श्रेष्ठोत्कृष्टाऽस्ति, यद्वा पञ्चम्यर्थे सप्तमी तत्र ततोपि रुद्राध्यायरूपवाक्यजातादपि पञ्चाक्षरी पञ्चानामक्षराणां वर्णानां समाहाररूपा वागहं ब्रह्मास्मीत्येवं रूपा श्रेष्ठेति व्याख्येयं, सोक्तविधा शिवपञ्चाक्षर्यहंब्रह्मास्मीति पचाक्षररूपा शिवाय नम इत्येवंरूपा

वा शिवतुष्टये शिवो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्य तुष्टिः सन्तोषः सुखमित्यर्थः, तस्य ब्रह्मानन्दप्राप्त्यै जप्याऽऽवर्तनीया ॥ ९९ ॥

एवं मन्त्रं निर्णीयेदानीमेकादशबिल्वपत्रैः शिवम्पूजयितुं तन्निर्णयं गद्येन प्रतिजानीते ।

अथैकादशबिल्वपत्रिकाः ।

अथेति । अथ मन्त्रनिर्णयानन्तरमेकादशबिल्वपत्रार्पणमेकादशसङ्ख्यानि यानि पूर्वोक्तचिदाभासलक्षणस्य बिल्वस्य पत्राणीव वृत्तयस्तेषामर्पणं प्रत्यगभिन्नब्रह्ममात्रत्वानुसन्धानं तस्य निर्णयो विचारः क्रियत इति शेषः । तत्रादौ प्रथमबिल्वपत्रार्पणं निर्णीय दर्शयति ।

द्रष्टा च दर्शनं दृश्यमिति पत्रत्रयान्विता ।
शिवे समर्प्या चिद्रूपे प्रथमा बिल्वपत्रिका ॥ १०० ॥

द्रष्टाचेति । हे शिष्य द्रष्टा साधिष्ठानो बुद्धिस्थश्चिदाभासो रूपसाक्षात्कारकरणभूतचक्षुषा रूपदर्शनवान्, दर्शनं च तस्योक्तविधद्रष्टू रूपज्ञानकरणभूतं चक्षुः, दृश्यं च रूपमित्येवं यानि पत्राणि वृत्तयस्तेषां त्रयमन्योन्यसापेक्षत्वात्त्रिकं त्रिदलमित्यर्थः, तेनान्विता युक्ता प्रथमा वक्ष्यमाणासु आदिभूता बिल्वपत्रिका सामान्यत्रिपुटीसाक्षिचिद्विषयिणी वृत्तिः शिवे चिद्रूपे भागत्यागलक्षणया लक्षिते चिन्मात्रस्वरूपे ब्रह्माभिन्नप्रत्यगानन्दशिवगुरौ समर्प्या ततः पृथगसत्त्वात्तस्या बाधपूर्वमवलोकनीयेदमेवात्र समर्पणमेवमग्रेपि दशसु ज्ञेयम् ॥ १०० ॥

इदानीं द्वितीयां तथाविधां बिल्वपत्रीं दर्शयति ।

कर्त्ता कार्यं च करणमिति पत्रत्रयान्विता ।
शिवे समर्प्या चिद्रूपे द्वितीया बिल्वपत्रिका ॥ १०१॥

कर्त्तेति। हे शिष्य कर्त्ता साधिष्ठानबुद्धिस्थचिदाभास इन्द्रियजन्यक्रियाभिमानी, कार्यं चेन्द्रियै रूपादिसाक्षात्करणरूपो व्यवहारः, करणं च तत्तत्क्रियासाधनमन्तःकरणं बाह्येन्द्रियदशकं चेतिपत्रत्रयात्मिकेत्येवं यत्पत्राणां दलानां त्रयं त्रिकं तदेवात्मा स्वरूपं यस्याः सा बुद्धिरेवात्र ग्राह्या, सोक्तविधा द्वितीया द्विसङ्ख्यापूरणी बिल्वपत्रिका पूर्वोक्तचिदाभासलक्षणस्य बिल्वस्य पत्रिकेत्यंशभूता पत्रिका त्रिदलरूपेत्यर्थः, चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगात्मानन्दशिवगुरौ समर्प्या समर्पणीया तदभिन्नत्वेनावलोकनीयेति भावः ॥ १०१ ॥

इदानीं तृतीयां बिल्वपत्रीं दर्शयति ।

भोक्ता च भोजनं भोज्यमितिपत्रत्रयात्मिका ।
शिवे समर्प्या चिद्रूपे तृतीया बिल्वपत्रिका॥ १०२॥

भोक्तेति । हे शिष्य भोक्तेन्द्रियैरन्तःकरणवृत्तिभिश्च प्रापितविषयजन्यसुखानुभववान्सानन्दमयो विज्ञानमयः, भोजनं च तत्तत्सुखानुभवकरणरूपा वृत्तिः, भोज्यं च भोगविषयं सुखं चेतिपत्रत्रयात्मिकेत्येवं यत्पत्राणां दलानां त्रयं त्रिकं तदात्मा स्वरूपं यस्याः सा तथाविधा बुद्धिस्तृतीया त्रिसङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्य पूर्वोक्तचिदाभासलक्षण शाण्डिल्यस्य पत्रिका पत्री चिद्रूपे चिन्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगात्मशिवगुरौ समर्प्या तदभिन्नत्वेनावलोकनीया ॥ १०२ ॥

चतुर्थीमाह ।

भूर्भुवश्च तथा स्वर्ग इतिपत्त्रत्रयात्मिका ।
शिवे समर्प्या चिद्रूपे चतुर्थी बिल्वपत्रिका ॥ १०३ ॥

भूरिति । हे शिष्य भूर्भवन्त्यस्या भूतानीति भूः पृथ्वी भुव-श्चान्तरिक्षलोकस्तथा तद्वत्स्वर्गः स्वर्गलोक इतिपत्त्रत्रयान्वि-तत्येवंविधं यत्पत्त्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता-बुद्धिश्चतुर्थी चतुःसङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तवि-धत्रिपुटीलक्षणत्रिदललक्षितचिदाभासस्य पत्रिका पत्रीव बुद्धि-श्चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगात्मशिवगुरौ समर्प्या समर्पणीया तद्रूपत्वेनानुभाव्येति भावः ॥ १०३ ॥

पञ्चमीं दर्शयति ।

जाग्रत्स्वप्नस्तथा सुप्तिरितिपत्त्रत्रयान्विता ।
शिवे समर्प्या चिद्रूपे पञ्चमी बिल्वपत्रिका ॥ १०४ ॥

जाग्रदिति । हे शिष्य जाग्रदिन्द्रियैरर्थोपलब्धिर्जागरित-मित्युक्तलक्षणा जाग्रदवस्था, स्वप्नो जाग्रद्विषयवासनावासित-बुद्धौ प्रातीतिकः प्रपञ्चः स्वप्न इत्युक्तलक्षणा स्वप्नावस्था, तथा तद्वत्सुप्तिर्जाग्रत्स्वप्नविषयैः सह वृत्तिसहितबुद्धेर्लयेन कार-णाज्ञानमात्रस्थितिरित्युपलक्षिता सुषुप्त्यवस्थेत्येवं पत्त्रत्रया-न्विता पत्त्राणां दलानां यत्त्रयं त्रिकं तेनाऽन्विता युक्ता बुद्धिः पञ्चमी पञ्चसङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तविधत्रिद-लोपलक्षितचिदाभासस्य पत्रिका पत्री चिद्रूपे चेत्यरहितचि-न्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगात्मशिवगुरौ समर्प्या समर्प-णीया तद्रूपेणानुभाव्येति भावः ॥ १०४ ॥

षष्ठीं दर्शयति ।

स्थूलं सूक्ष्मं कारणाख्यमितिपत्त्रत्रयान्विता ।

शिवे समर्प्या चिद्रूपे षष्ठिका बिल्वपत्रिका॥१०५॥

स्थूलमिति । हे शिष्य स्थूलं पञ्चीकृतपञ्चभूतकार्यरूपं समष्टिव्यष्टिस्थूलशरीरं, सूक्ष्ममपञ्चीकृतपञ्चभूतकार्यरूपं सप्तदशावयवकं समष्टिलिङ्गशरीरं, कारणाख्यं स्थूलसूक्ष्मशरीरप्रकृतिरूपमज्ञानसमष्टिव्यष्टिरूपं कारणशरीरमितिपत्रत्रयान्विता-इति उक्तविधं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता बुद्धिः षष्ठिका षट्सङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तप्रकारत्रिपुटीलक्षणत्रिदलोपलक्षितचिदाभासस्य पत्रिका पत्री चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगानन्दात्मगुरौ समर्प्याऽर्पितव्या तन्मात्रत्वेनाऽनुभाव्येति भावः ॥१०५॥

इदानीं सप्तमीं बिल्वपत्रीं दर्शयति ।

अविद्या संसृतिर्जीव इति पत्रत्रयान्विता ।

शिवे समर्प्या चिद्रूपे सप्तमी बिल्वपत्रिका॥१०६॥

अविद्येति । हे शिष्य अविद्या मलिनसत्त्वप्रधाना प्रकृत्यंशरूपा जीवत्वोपाधिभूता, संसृतिः संसरति प्रसरतीति संसृतिः संसारः, जीवो जीवयति संसारं विपरीतज्ञानेनेति जीवः प्राणोपाधिमान् संसारी चिदाभास इतिपत्रत्रयान्विता=इत्येवं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता बुद्धिः सप्तमी सप्तसङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तविधत्रिपुटीलक्षणत्रिदलोपलक्षितस्य चिदाभासस्य पत्रिकेवांशरूपा चिद्रूपे चेत्यरहितचिन्मात्रस्वरूपे शिवे ब्रह्माभिन्नप्रत्यगात्मशिवगुरौ समर्प्या समर्पणीया तन्मात्रत्वेन चिन्तनीयेति भावः ॥ १०६ ॥

अष्टमीं बिल्वपत्रीं लक्षयति ।

उत्पत्तिश्च स्थितिर्नाश इतिपत्रत्रयान्विता ।

शिवे समर्प्या चिद्रूपे ह्यष्टमी बिल्वपत्रिका॥१०७॥

उत्पत्तिरिति । हे शिष्य उत्पत्तिर्जगतः स्वस्य वोद्भवः, स्थितिश्च स्वधर्मस्थानलक्षणमर्यादापालनं स्वयं च तदाचरणं, नाशश्च संहार इतिपत्रत्रयान्विता=इत्येवं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता बुद्धिश्चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे ब्रह्माभिन्नप्रत्यगात्मशिवगुरावष्टम्यष्टसंख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तविधत्रिपुटीलक्षणत्रिदलोपलक्षितचिदाभासस्य पत्रिका पत्री समर्प्या समर्पणीया तन्मात्रत्वेनानुभाव्येत्यर्थः ॥ १०७ ॥

नवमीं पत्रिकां दर्शयति ।

ब्रह्मा विष्णुस्तथा रुद्र इतिपत्रत्रयान्विता ।
शिवे समर्प्या चिद्रूपे नवमी बिल्वपत्रिका॥१०८॥

ब्रह्मेति । हे शिष्य ब्रह्मा विरिञ्चिः सर्वजगज्जनकत्वेन प्रसिद्धः, विष्णुश्च जगत्पालकत्वेन प्रसिद्धो हरिः, तथा तद्वद्रुद्रः सर्वसंहारकः शिव इतिपत्रत्रयान्विता=इत्येवं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता बुद्धिर्नवमी नवसंख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तत्रिपुटीत्रिदलोपलक्षितचिदाभासस्य पत्रिकेवांशरूपा चिद्रूपे चेत्यरहितचिन्मात्रस्वरूपे शिवे सुखरूपे प्रत्यगभिन्नब्रह्मगुरौ समर्प्या समर्पणीया ब्रह्माभिन्नप्रत्यगात्मशिवगुरुमात्रतयाऽवलोकनीयेति भावः ॥ १०८ ॥

दशमीं बिल्वपत्रीं लक्षयति ।

तमो रजस्तथा सत्त्वमितिपत्रत्रयान्विता
शिवे समर्प्या चिद्रूपे दशमी बिल्वपत्रिका॥ १०९॥

तम इति । हे शिष्य तम आवरणात्मकं मोहस्वभावं स्वा-

त्मविस्मृतिकारणमत्र तमःशब्देन ग्राह्यं, रजश्च चाञ्चल्यधर्मवत्सर्वजगदुत्पत्त्यादिक्रियाकारणं लोभादित्युपलक्षितमत्र ग्राह्यं, तथा तद्वत्सत्त्वं प्रकाशस्वरूपं सर्वजगज्ज्ञानकारणं धर्मप्रीत्याद्युपलक्षितमिति पत्रत्रयान्विता=इत्येवं प्रकारं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता संयुक्ता बुद्धिर्दशमी दशसङ्ख्यापूरणी बिल्वपत्रिका बिल्वस्योक्तविधत्रिपुटीत्रिदलोपलक्षितस्य चिदाभासस्य पत्रिकेवांशभूता चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे सुखस्वरूपे ब्रह्माभिन्नप्रत्यगात्मगुरौ समर्प्या समर्पणीया प्रत्यगभिन्नब्रह्ममात्ररूपेण भावनीयेति भावः ॥ १०९ ॥

एकादशीं बिल्वपत्रीं प्रदर्शयति ।

> त्वन्ताऽहन्ता तथेदंत्वमितिपत्रत्रयान्विता ।
> शिवे समर्प्या चिद्रूपे रुद्राख्या बिल्वपत्रिका॥ ११०॥

त्वंतेति । हे शिष्य त्वंता स्वभिन्नपुरुषविषयकत्वप्रत्यक्षता, अहन्ता स्वानन्यदेहद्वयसहितसाधिष्ठानचिदाभासता, तथा तद्वदिदंत्वं स्वान्यस्वदृश्यत्वमितिपत्रत्रयान्विता=इत्येवंप्रकारं यत्पत्राणां दलानां त्रयं त्रिकं तेनान्विता युक्ता बुद्धी रुद्राख्या रुद्रा एकादशेत्याख्याऽऽह्वा यस्याः सा तथोक्ता एकादशीत्यर्थः, बिल्वपत्रिका बिल्वस्योक्तत्रिपुटीत्रिदलोपलक्षितचिदाभासस्य पत्रिकेवांशभूता चिद्रूपे चेत्यरहितचिन्मात्ररूपे शिवे सुखस्वरूपे ब्रह्माभिन्नप्रत्यगात्मगुरौ समर्प्या समर्पणीया ब्रह्माभिन्नप्रत्यगात्मशिवगुरुरूपमात्रत्वेनानुभाव्येति भावः ॥ ११० ॥

इदानीमुक्तबिल्वपत्रार्पणमुपसंहृत्य तत्फलं दर्शयति ।

> एकादशैताः कथिताः शाम्भवाः बिल्वपत्रिकाः ।
> एताभिरर्चितः शम्भु सद्यो मुक्तिं प्रयच्छति॥ १११॥

एकादशेति । हे शिष्य एता मया निरूपिता इमा एकादशैकादशसङ्ख्याः शाम्भवाः शम्भवत्यस्मादिति शम्भुः सकलजगदानन्दकरो ब्रह्माभिन्नप्रत्यगानन्दात्मशिवगुरुस्तस्यैताः शाम्भवास्तदर्पणेनोक्तविधेन तत्सम्बन्धीकृता बिल्वपत्रिका बिल्वस्योक्तत्रिपुटीलक्षणत्रिदलोपलक्षितचिदाभासस्य पत्रिकाः पर्वाणीवांशभूताः सन्तिः ता मया ते कथिता निरूपिताः, किञ्चैताभिराभिरेकादशसङ्ख्यबिल्वपत्रिकाभिः कृत्वा शम्भुः शं सुखं भवत्यस्मादिति शम्भुर्ब्रह्माभिन्नप्रत्यगात्मशिवगुरुरर्चितः पूजितस्तत्तद्वृत्तिलयेनाखण्डैकरसाश्चिन्तितश्चेद्यदि तर्हि सद्यस्तत्कालमेव मुक्तिं मोक्षं प्रयच्छति ददाति ॥ १११ ॥

एवमेकादशबिल्वपत्रार्पणं निर्णीयेदानीमष्टमूर्तिपूजननिर्णयनिरूपणं गद्येन प्रतिजानीते ।

अथाष्टमूर्तिपूजनम् ।

अथेति । अथैकादशबिल्वपत्रिकानिर्णयनिरूपणानन्तरमष्टमूर्तिपूजननिर्णयोऽष्टावष्टसङ्ख्या याः शिवस्य मूर्तय आकृतयः कथिताः शैवशास्त्रेषु क्षित्यादिनाम्न्यस्ताभिः क्रियते यच्छिवस्य पूजनमर्चनं, यद्वा तासामेव पूजनं तस्य निर्णयो निश्चयः क्रियत इति शेषः । तदेव सफलं निरूपयति ।

शर्वो भवो रुद्र उग्रो भीमः पशुपतिस्तथा ।
महादेवस्तथेशान इति मूर्तिप्रपूजनम् ॥ ११२ ॥

शर्व इति द्वाभ्याम् । हे शिष्य शर्वः शरान्वाति धारयतीति शर्वः विशीर्यमाणदेहोपलक्षितप्राणिधारणोपलक्षिता पृथ्वीप्रकृतिदेहः, भवः सैव पृथ्वी भवत्यस्मादुत्पद्यत इति भवो जलम् 'अम्भो मरीचीर्मरमाप' इत्यादिकया श्रुत्या 'अद्भ्यः पृथिवी'ति

श्रुत्या च पृथिव्यादिसृष्टेर्जलकारणत्वनिरूपणाज्जलप्रकृतिरूप इत्यर्थः, रुद्रो दाहकत्वेन रोदयति सर्वं जगदिति रुद्रोऽग्निप्रकृतिरूपस्तेजोमूर्तिरित्यर्थः, उग्रस्तेजआदिभूतभौतिकानां शोषकत्वादुग्रो वायुर्वायुप्रकृतिमूर्तिरित्यर्थः, तथा भीमः सर्ववाय्वादिभूतभौतिकलयात्मकत्वेन सर्वभीतिहेतुरत्राकाशस्तत्प्रकृतिमूर्त्युपलक्षितः, तथा तद्वत्पशुपतिः पशुं जीवं स्वोपाधितया पाति रक्षतीति पशुपतिरत्र मनःप्रकृतिमूर्तिरिति भावः, महादेवो महान्मनसोऽपि श्रेष्ठो देवश्चिद्रूपो विज्ञानशब्दवाच्यत्वात्सर्वसंसारक्रीडासाधनभूतो बुद्धिप्रकृतिमूर्तिरित्यर्थः, तथा तद्वदीशान ईष्टे जीवान्स्वशक्तित्वेन प्रेरयति असावीशानोऽहङ्कारप्रकृतिमूर्तिरित्येवं मूर्तिप्रपूजनमष्टौ प्रकृतय एवात्राष्टौ मूर्तयस्ताभिरुपाधिभिस्तत्तत्साक्षित्वेनोपलक्षितं प्रत्यगभिन्नब्रह्मचैतन्यं सर्वदैव चिन्त्यं तदेवात्राष्टमूर्तिप्रपूजनं न त्वन्यल्लौकिकमष्टमूर्तिप्रपूजनमिति भावः॥ ११२॥

नन्वेतदष्टमूर्त्युपलक्षिताखण्डचिन्मात्रचिन्तनरूपपूजनेन किंफलमित्याशङ्क्य तद्दर्शयति।

अष्टौ प्रकृतिरूपाणि कष्टान्यष्टैव देहिनः।
स्पष्टं मूर्तिभिरष्टाभिरष्टमूर्तिर्हरत्यसौ॥ ११३॥

अष्टाविति। हे शिष्य यानि अष्टावष्टसङ्ख्यानि प्रकृतिरूपाणि प्रकृतेः पराभिधायाः प्रकृतेः 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परामि'त्यादिना 'यया सन्धार्यते जगदि'त्यन्तेन वाक्येन भगवतोक्ताया रूपाणि आकृतयः सन्ति।

'भूमिरापो नलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा'॥

इति गीतोक्तानि देहिनः साधिष्ठानदेहद्वयसहितचिदाभासस्याष्टैवाष्टसङ्ख्यान्येव कष्टानि दुःखानि ज्ञेयानि स्पष्टमेतत्प्रसिद्धमेव तानि अष्टौ प्रकृतिरूपाणि दुःखानि प्रभावुक्तविधाऽष्टमूर्त्तिरात्माऽष्टमूर्तीनामष्टप्रकृत्युपाधीनां साक्षित्वेनाऽनुगतो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुरष्टाभिरष्टसङ्ख्याभिर्मूर्तिभिराकृतिभिर्हरति निवारयति अष्टप्रकृत्यष्टमूर्त्युपलक्षिताष्टप्रकृतिसाक्षिप्रत्यगभिन्नब्रह्मचैतन्यशिवगुर्वनुसन्धानलक्षणेन पूजनेनाष्टप्रकृतिबाधेन तत्तज्जन्यदुःखनिवृत्तिः फलं स्यादिति भावः ॥ ११३ ॥

एवमष्टमूर्तिपूजनं निर्णीयेदानीं प्रदक्षिणं निर्णेतुं ग्रन्थेन प्रतिजानीते ।

## अथ प्रदक्षिणनिर्णयः ।

अथेति । अथाष्टमूर्तिपूजननिर्णयानन्तरं प्रदक्षिणनिर्णयः शिवपूजायां प्रदक्षिणनामको य उपचारस्तस्यात्र पूजायां निर्णयो विचारः क्रियत इति शेषः । तमेवाह पद्येन ।

> अपर्यन्तो महादेवस्तस्य कल्पशतैरपि ।
> न स्यात्प्रदक्षिणं तेन शिवस्यार्धं प्रदक्षिणम् ॥ ११४ ॥

अपर्यन्त इति । हे शिष्य महादेवो महानपरिच्छिन्नो देशकालवस्तुभिर्देवश्चिन्मात्ररूपो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुरपर्यन्तो न विद्यते परितः सर्वतोऽन्तोऽवच्छित्तिर्यस्य स तथाविधोऽनन्त इत्यर्थः, अस्ति अत एव तस्य प्रत्यगभिन्नब्रह्मशिवगुरोः कल्पशतैरपि कल्पानां द्विपरार्धोपलक्षितमहाकल्पानां शतानि शतकानि अपरिमितानि शतकानीत्यर्थः, तैरपि तत्परिमितकालेनापीति भावः, प्रदक्षिणं सर्वप्रकारेण दक्षिण-

भागे कृत्वा गमनं चिदाभासस्य न स्यान्न भवेत्तेन हेतुना शिवस्य ब्रह्माभिन्नप्रत्यगात्मशिवगुरोरर्ध एकदेश एव प्रदक्षिणं प्रकृष्टं दक्षिणं प्रत्यगभिन्नब्रह्मचिन्तने दक्षत्वमस्तीति ज्ञेयम्, अत एव लोकेपि सोमसूत्रानुल्लङ्घनं चिह्नं दृश्यत इति भावः ॥ ११४॥

एवं प्रदक्षिणं निर्णीयेदानीं गल्लवाद्यं निर्णेतुं पद्येन प्रतिजानीते।

## अथ गल्लवाद्यविचारः।

अथेति। अथ प्रदक्षिणविचारानन्तरं गल्लवाद्यविचारः शिवाग्रे यद्गल्लवाद्यं क्रियते तस्य विचारो निर्णयः क्रियत इति शेषः। तमेव पद्येन प्रदर्शयति।

यथा स्वरूपं देवस्य तथा वक्तुं न शक्यते।
स्तुतिर्वा गल्लवाद्यं वा तेन शम्भोर्द्वयं समम्॥ ११५॥

यथेति। हे शिष्य देवस्य चिन्मात्ररूपिणो ब्रह्माभिन्नप्रत्यगात्मशिवगुरोर्यथा यादृक्स्वरूपमाकृतिरस्ति तथा तादृग्वक्तुं वचनेन प्रतिपादयितुं न शक्यते न समर्थ्यते तेन वचनमात्रस्य शिवस्वरूपाविषयीकरणेन निरर्थकत्वाच्छिवप्रसादहेतुत्वेन सार्थकत्वाच्च स्तुतिर्वा स्तोत्रं च गल्लवाद्यं वा कपोलवादनध्वनिरपीति द्वयं युग्मं शम्भोः शं सुखं भवत्यस्मादिति शम्भुः समस्तजगदानन्दकरो ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्य समं तुल्यं ज्ञेयं गल्लवाद्योपलक्षणेन यावद्व्यक्ताव्यक्तशब्दजातस्य नैरर्थक्येन प्रसन्नताहेतुत्वेन च सम्यगनुसन्धानमेवात्र पूजायां गल्लवाद्यमिति भावः॥ ११५॥

एवं गल्लवाद्यं निर्णीयेदानीं नमस्कारं निर्णेतुं पद्येन प्रतिजानीते।

## अथ नमस्कारविचारः ।

अथेति । अथ गन्धवाद्यनिर्णयानन्तरं नमस्कारनिर्णयो नमस्काराभिधोपचारस्य निर्णयो विचारः क्रियत इति शेषः । तमेव पद्येनाह ।

प्रेमनिर्भरभावेन दण्डवत्पतितैर्भुवि ।
महादेवो नमस्कार्यो गलितत्वादहङ्कृतेः ॥११६॥

प्रेमेति । हे शिष्य प्रेमनिर्भरभावेन प्रेम्णः स्नेहस्य यो निर्भरभावो निरतिशयत्वं तेन कृत्वाऽहंकृतेरहङ्कारस्य गलितत्वाद्विनष्टत्वाद्धेतोर्भुवि भवत्यस्माज्जीवेश्वरत्वादिरूपः प्रपञ्च इति भूर्ब्रह्माभिन्नप्रत्यगात्मशिवगुरुस्तस्मिन् दण्डवद्यथा दण्डः स्वाधारभूतभूमावभिमानरहितः पतति तद्वत्तत्र कालेन विलीनो भवति तथा पतितैरेकीभावं प्राप्तैश्चिदाभासैर्महादेवो महानपरिच्छिन्नो ब्रह्मस्वरूपो देवः प्रत्यक्चैतन्यरूप आत्मशिवगुरुर्नमस्कार्यो नमस्कर्तुं योग्यो नान्यैरित्यर्थः, अहङ्काराद्युपाधिपरित्यागेन चिदाभासानां प्रत्यगभिन्नब्रह्मणा सहैक्यसम्पादनमेवात्र पूजायां नमस्कार इति भावः ॥ ११६ ॥

एवं नमस्कारं निर्णीयेदानीं क्षमापनं निर्णेतुं गद्येन प्रतिजानीते ।

## अथ क्षमापनम् ।

अथेति । अथ नमस्कारनिर्णयानन्तरं क्षमापननिर्णयः क्षमापनं समाधापनं तस्य निर्णयो विचारः क्रियत इति शेषः । तमेव पद्येनाह ।

मानुष्यमपि संप्राप्य पूजितो न महेश्वरः ।
अपराधो महाञ्जातः क्षमस्वेति मुहुर्वदेत् ॥११७॥

मानुष्यमिति । हे शिष्य मानुष्यं मनुष्यजन्मापि संप्राप्य लब्ध्वापि महेश्वरो महान्देशाद्यपरिच्छिन्न ईश्वरो ब्रह्माभिन्नः प्रत्यगात्मेश्वरत्वारोपाधिष्ठानं न पूजितः सर्वं परित्यज्य नाहृतोऽयमेव महाञ्छ्रेष्ठोऽपराधो आगो जातः सम्भूतस्तमिममपराधं क्षमस्व सहस्वेति एवं मुहुः पुनः पुनर्वदेद्ब्रूयात्स्वात्मानं प्रति ॥ ११७ ॥

एवं क्षमापनं निर्णीयेदानीं विसर्जनं निर्णेतुं ग्रन्थेन प्रतिजानीते ।

अथ विसर्जननिर्णयः ।

अथेति । अथ क्षमापननिर्णयानन्तरं विसर्जननिर्णयो विसर्जनस्योद्वासनस्य निर्णयो विचारः क्रियत इति शेषः । तमेव पद्येनाह ।

ज्ञत्वकर्तृत्वभोक्तृत्वजीवत्वादिविसर्जनम् ।
एतस्यां शिवपूजायामेतदेव विसर्जनम् ॥ ११८ ॥

ज्ञत्वेति । हे शिष्य ज्ञत्वकर्तृत्वभोक्तृत्वजीवत्वादिविसर्जनं ज्ञत्वं ज्ञानेन्द्रियान्तःकरणवृत्तिसहितत्वं, कर्तृत्वं कर्मेन्द्रियप्राणक्रियासहितत्वं, भोक्तृत्वं भोग्यानपायजन्यसुखदुःखित्वं, जीवत्वं प्राणोपहितसाधिष्ठानचिदाभासत्वम्, एतानि आदीनि येषां तेषां धर्माणां विसर्जनं प्रत्यगभिन्ने ब्रह्मणि परित्यागोऽत्यन्ताभावचिन्तनं यत्तदेतदेवैतस्यां पूजायामुक्तप्रकारायां पूजायामस्यां ब्रह्माभिन्नप्रत्यगात्मशिवगुरुचिन्तनरूपायामर्चायां तदाकारवृत्त्याऽऽदररूपायामित्यर्थः, विसर्जनमुत्थापनं नान्यदित्यर्थः ॥ ११८ ॥

इदानीमेतत्पूजनमाहात्म्यमाह ।

आज्ञाकरत्वमायाति पुरुषार्थचतुष्टयी ।
यतोऽस्याः शिवपूजाया महिमा केन वर्ण्यताम् ॥११९॥

आज्ञाकरत्वमिति । हे शिष्य यतः कारणादुक्तविधया पूजया कृतया पुरुषार्थचतुष्टयी पुरुषार्थानां धर्मार्थकाममोक्षाख्यानां चतुष्टयी चतुष्कमाज्ञाकरत्वमाज्ञाकारित्वमायाति प्राप्नोति तद्वशा भवतीत्यर्थः, पुरुषार्थेषु मध्ये यस्मै यस्मै यं यं ददाति तस्य तस्य स लभत इति भावः, तत्तस्मात्कारणादस्या अत्रोक्तलक्षणायाः शिवपूजायाः शिवो ब्रह्माभिन्नप्रत्यगात्मगुरुस्तदाकारवृत्त्यादररूपाया अर्चाया महिमा महत्त्वं केन वक्त्रा वाक्प्रपञ्चेन वर्ण्यतां निरूप्यतां वागविषयत्वात्स्वतश्चानन्तत्वान्न वर्णनार्हेति भावः ॥ ११९ ॥

इदानीमस्यामधिकारिस्वरूपनिरूपणं तद्दौर्लभ्यनिरूपणपूर्वकमाह ।

तत्त्वतो यः शिवं वेद स वेद शिवपूजनम् ।
कस्तत्त्वतः शिवं वेद को वेद शिवपूजनम् ॥१२०॥

इति श्रीनरहरिकृतौ बोधसारे शिवपूजाशतकं पञ्चाशत्तमम् ॥ ५० ॥

तत्त्वत इति । हे शिष्य यः कोऽपि पुरुषः साधनचतुष्टयसम्पन्नस्तत्त्वतो याथार्थ्येन शिवं ब्रह्माभिन्नप्रत्यगात्मशिवगुरुं वेद जानाति स पुरुषः शिवपूजनं शिवस्य प्रत्यगभिन्नब्रह्मशिवगुरोः पूजनमर्चनं तदाकारवृत्त्यादररूपमित्यर्थः, वेद जानाति तस्य च दौर्लभ्यं दर्शयति क इति, हे शिष्य कः पुरुषस्तत्त्वतो याथार्थ्येन शिवं ब्रह्माभिन्नप्रत्यगानन्दात्मशिवगुरुं वेद जानाति न कोपीत्यर्थः, अतः कः पुरुषः शिवपूजनं शिवस्य ब्रह्माभिन्नप-

मगानन्दात्मशिवगुरोः पूजनं तदाकारवृत्त्यादिरूपमर्चनं वेद जानाति न कोपि जानातीत्यर्थः, 'को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जनेनाथाको वेद यत आबभूवेति श्रुतेः । अत्र ध्याननिर्णायकश्लोकस्य व्याख्यानरूपाणां षोडशश्लोकानां तद्व्याख्येये ध्यायेन्नित्यं महेशमिति श्लोकेन्तर्भावेणास्य शतकत्वं ज्ञेयं, द्वयोश्च माहात्म्याधिकारिनिरूपकयोरपि तत्रैवान्तर्भावः ॥ १२० ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ शिवपूजाशतकार्थप्रकाशः पञ्चाशत्तमः ॥ ५० ॥

---

अथ बोधसारप्रशंसा ।

एवं शिवपूजाशतकं निरूप्येदानीं मुमुक्षूणामत्रैव ग्रन्थे रुच्युत्पादनाय सर्वोऽन्यग्रन्थाननादृत्यात्रैव प्रवृत्तये चास्य ग्रन्थस्यान्यग्रन्थेभ्यः श्रैष्ठ्यं दिदर्शयिषुर्बोधसारप्रशंसाख्यमष्टश्लोकं प्रकरणमारभमाण आह गद्येन ।

## अथ बोधसारप्रशंसा ।

अथेति । अथ शिवपूजाशतकनिरूपणानन्तरं बोधसारप्रशंसा बोधसारस्य बोधसारनामकस्यास्य ग्रन्थस्य प्रशंसा स्तुतिरस्यां सा तथोक्ता=एतन्नामकं प्रकरणमित्यर्थः, निरूप्यत इति शेषः । तत्रादावेतद्ग्रन्थस्य श्रैष्ठ्यं सहेतुकमाह ।

आदौ गुरुस्तवो यत्र प्रान्ते च शिवपूजनम् ।
मध्ये मुकुन्दस्मरणं बोधसारः स उत्तमः ॥ १ ॥

आदाविति । हे शिष्य यत्र बोधसारनाम्नि ग्रन्थ आदौ प्रारम्भे गुरुस्तवो गुरोर्मोक्षसाधनभूतं ज्ञानमुख्यं जीवब्रह्मैक्यविषयं तत्प्रतिपादकं महावाक्यं च तदुपदेष्टुर्देशिकस्य स्तवः स्तु-

तिर्यस्मिन्स तथोक्त एतन्नामकं प्रकरणमित्यर्थः, अस्ति । प्रान्ते चाऽवसानेपि शिवपूजनं शिवस्य प्रत्यगभिन्नब्रह्मशिवगुरोः पूजनं तदाकारवृत्तिचिन्तनरूपं यत्र तत्तथोक्तं शिवपूजाशतकनामकं प्रकरणमित्यस्यर्थः, अस्ति । किञ्च यत्र बोधसारनाम्नि ग्रन्थे मध्ये मध्यभागे मुकुन्दस्मरणं तुरीयतुलसीपत्रपूजानिरूपणमिषेण मुकुन्दस्य मुक्तिदातुर्जीवब्रह्मैक्यज्ञानोपदेशद्वारा मुक्तिसमर्पकस्य प्रत्यगभिन्नब्रह्मशिवगुरोः स्मरणं चिन्तनं यस्मिंस्तत्तथोक्तं तुरीयतुलसीपत्रपूजानामकं प्रकरणमित्यर्थः, निरूपितमस्ति एवमादिमध्यान्ते मङ्गलप्रतिपादनादत्र स उक्तलक्षणो मङ्गलत्रयनिबद्धो बोधसारो बोधो जीवब्रह्मैक्यज्ञानं सारो मुख्यार्थो वर्णनीयो यत्र स तथाविध एतन्नामको ग्रन्थ उत्तमोऽन्यग्रन्थेभ्यः श्रेष्ठ इत्यर्थः, अत्र भाष्यसम्मति'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते सिद्धार्थद्योतकानि सिद्धार्थाध्येतृकाणि च स्युरि'ति अतोस्य महाशास्त्रत्वात्सिद्धार्थबोधनशक्तिमत्वाच्चैतत्पाठकानां सिद्धार्थप्रापकत्वादपि मुमुक्षूणामत्रैव प्रवर्त्तितुं योग्यमस्तीति भावः ॥ १ ॥

उक्तं श्रैष्ठ्यमेव द्रढयितुं विशेषणैर्विशिनष्टि ।

सिद्धार्थः सुगमार्थश्च विशेषैर्बहुभिर्वृतः ।
ग्रन्थस्त्वेतादृशस्तात न भूतो न भविष्यति ॥ २ ॥

सिद्धार्थ इति । सिद्धार्थः सिद्धः स्वतः सिद्धो जीवब्रह्मैक्यरूपोऽर्थस्तात्पर्यतया वर्णनीयो यस्मिन् स तथोक्तः, कर्कशत्वं निवारयति सुगमार्थश्च सुगमः सुबोधोऽर्थोऽभिप्रायो यस्य स तथोक्तः, मनोरञ्जकत्वमाह विशेषैरिति, बहुभिरनेकैर्विशेषै रूपकैर्वृत्तो युक्तोऽस्ति, अतो हे तात हे शिष्य एतादृश एतत्तुल्यो

ग्रन्थः शास्त्रं न भूतो नैव केनापि कृतो न भविष्यति न कोऽपि करिष्यति अतो वर्त्तमानेऽपि एतत्तुल्यो ग्रन्थो नास्ति अतोऽयमतिश्रेष्ठत्वादादरणीय इति भावः ॥ २ ॥

ननु स्वरुच्यैव भवद्भिरस्यातिप्रशंसा क्रियत इत्याशङ्क्याह।

न स्तोमि न च निन्दामि कथयामि यथास्थितम्।
एकैकस्मिन्निह श्लोके प्रोक्तः सिद्धान्तनिर्णयः ॥ ३॥

नेति। हे शिष्य अहमिमं ग्रन्थं न स्तौमि न प्रशंसामि च पुनर्न निन्दामि न गर्हामि किन्तु यथास्थितं यथार्थमेव कथयामि निरूपयामि तत्किं यथार्थमित्यत आह एकैकस्मिन्निति, इहास्मिन्ग्रन्थ एकैकस्मिन् एकश्चैकश्चानयोः समाहार एकैकं तस्मिन्नेकैकस्मिञ् श्लोके पद्ये प्रत्येकश्लोकमित्यर्थः, सिद्धान्तनिर्णयो सिद्धान्तस्य जीवब्रह्मैक्यरूपस्य निर्णयो निश्चयः प्रोक्तः कथितो ऽस्ति समस्तशास्त्रतात्पर्यभूतं जीवब्रह्मैक्यमेव श्लोके श्लोके निरूपितमित्यतोऽयमत्यद्भुतो ग्रन्थ इति भावः ॥ ३ ॥

नन्वनेकसहस्रसंख्यापरिमितानेकशास्त्रप्रतिपादिततात्पर्यस्यैकैकस्मिञ् श्लोके कथं प्रतिपादनं कृतमिति सम्भाव्यमित्याशङ्क्य सदृष्टान्तं तत्सम्भावयति।

यथा ब्रह्माण्डसर्वस्वं पिण्डे पिण्डे निरूपितम्।
तथा सिद्धान्तसर्वस्वं श्लोके श्लोके निरूपितम् ॥४॥

यथेति। हे शिष्य यथा यद्वद्ब्रह्माण्डसर्वस्वं ब्रह्माण्डस्य सर्वस्वं सर्वपदार्थजातं ब्रह्मेन्द्रध्रुवसूर्यचन्द्रादिपिपीलिकान्तं पदार्थजातं पञ्चाशत्कोटियोजनविस्तृतदेशस्थमपि पिण्डे पिण्डे प्रत्येकदेहे सप्तवितस्तिपरिमिते निरूपितं प्रतिपादितमस्ति तन्मूढानामसम्भावितमपि योगिनां प्रत्यक्षमेवानुभूयते ज्ञानवतां च तथा

तद्वृत्तिसिद्धान्तसर्वस्वं सिद्धान्तस्यानेकशास्त्रप्रतिपादितस्य तात्पर्यरहस्यस्य जीवब्रह्मैक्यरूपस्य सर्वस्वं स्वरूपं श्लोके श्लोके पद्ये पद्ये निरूपितं कथितं तन्मूढानामसम्भावितमपि ज्ञानिना त्वनुभूयत एवेति सम्भावनाऽत्र मुमुक्षुभिः कार्येति भावः ॥ ४ ॥

इदानीमविद्यानाशनेऽस्य प्रतापं दर्शयति ।

अविद्योन्मूलकुद्दालस्त्वविद्यादावपावकः ।
अविद्यामृगशार्दूलस्त्वविद्यागजकेसरी ॥ ५ ॥

अविद्योन्मूलकुद्दाल इत्यादिभिरविद्यास्वप्नजागर इत्यन्तैश्चतुर्भिः पद्यैः। हे शिष्य अयं बोधसारो अविद्योन्मूलकुद्दालोऽविद्यैव पृथिवीस्थानीया तस्या उन्मूलनं खननं तत्र खनिकरणक्रियाकरणभूतः शस्त्रविशेषोऽस्ति, किञ्चायं बोधसारोऽविद्यादावपावकोऽविद्याऽज्ञानं तदेव दावो वनं तस्य पावकोऽग्निरिव दाहको भवति, किञ्चाऽविद्यामृगशार्दूलोऽयं बोधसारोऽविद्यैव मृगो हरिणस्तस्य शार्दूलो व्याघ्र इव घातकोऽस्ति, किञ्चाऽयं बोधसारोऽविद्यागजकेसरी=अविद्यैव गजस्थानीया तस्य केसरी सिंह इव घातको भवति ॥ ५ ॥

अविद्याजीवगरलमविद्याकण्ठकृच्छुरी ।
अविद्यालवणस्याऽऽप अविद्याप्रलयार्णवः ॥ ६ ॥

अविद्येति । हे शिष्य अयं बोधसारोऽविद्याजीवगरलमविद्या मूलाज्ञानं तदेव जीवो जीवनं तस्य गरलं विषमिव नाशको भवति, किञ्चायं बोधसारोऽविद्याकण्ठकृच्छुरी=अविद्याऽज्ञानमेव कण्ठस्थानीया तं कृन्तति च्छेदयतीति स तथाभूता च्छुरी=एतन्नामक आयुधविशेषनामको भवति, किञ्चायं बोध-

सारोऽविद्यालवणस्याऽविद्याऽज्ञानमेव लवणस्थानीयं तस्याऽऽपो जलमिव नाशकोऽस्ति, किञ्चायं बोधसारोऽविद्याप्रलयार्णवोऽविद्यैव सृष्टिस्थानीया तस्याः प्रलयार्णवः प्रलयकालीनः समुद्र इव नाशकोऽस्ति ॥ ६ ॥

किञ्च।

अविद्याशैलदम्भौलिरविद्यान्धकशङ्करः।
अविद्याकंसगोविन्दस्त्वविद्याचण्डचण्डिका ॥ ७ ॥

अविद्येति। हे शिष्य अयं बोधसारो अविद्याशैलदम्भोलिरविद्याऽज्ञानमेव शैलः पर्वतस्तस्य दम्भोलिरशनिरिव नाशकोऽस्ति, किञ्चाऽयं बोधसारोऽविद्यान्धकशङ्करोऽविद्याऽज्ञानमेवान्धकोऽन्धकनामासुरस्तस्य शङ्करः शिव इव नाशकोऽस्ति, किञ्चायं बोधसारोऽविद्याकंसगोविदोऽविद्याऽज्ञानमेव कंस औग्रसैनिस्तस्य गोविन्दः कृष्ण इव नाशकोऽस्ति, किञ्चायं बोधसारोऽविद्याचण्डचण्डिकाऽविद्याऽज्ञानमेव चण्डश्चण्डनामासुरस्तस्य चण्डिका दुर्गेव नाशकोऽस्ति ॥ ७ ॥

किञ्च।

अविद्यादाहशीतांशुरविद्याध्वान्तभास्करः।
तथैव बोधसारोऽयमविद्यास्वप्नजागरः ॥ ८ ॥

इति बोधसारप्रशंसा ॥ ५१ ॥

अविद्येति। हे शिष्य अयं बोधसारोऽविद्यादाहशीतांशुरविद्याऽज्ञानमेव दाहः सन्तापस्तस्य शीतांशुश्चन्द्र इव नाशकोऽस्ति, किञ्चायं बोधसारोऽविद्याध्वान्तभास्करोऽविद्याऽज्ञानमेव ध्वान्तं तमस्तस्य भास्कर इव नाशकोऽस्ति, किञ्चायं

मत्कृतः प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थोऽविद्यास्वप्नजागरोऽविद्यैवाज्ञानमेव स्वप्नः स्वप्नावस्था तस्य जागरो जागृतिरिव निवर्तकोऽस्ति, इतः परं पुनः पश्चात्किं वक्तव्यमस्ति न किमपीत्यर्थः ॥ ८ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीपौ बोधसारप्रशंसार्थप्रकाश एकपञ्चाशत्तमः ॥ ५१ ॥

---

अथ बोधसारोपासना।

एवं बोधसारप्रशंसां निरूप्येदानीं गुर्वादिब्रह्मान्तसर्वपदार्थानामस्मिन्ग्रन्थे समारोपणेनैतद्ग्रन्थावृत्तौ कृतायां चित्तैकाग्र्यस्य सिद्धेरेतद्ग्रन्थनाम्नो बोधसारस्य बोधसारपदार्थयोर्जीवब्रह्मणोर्विरुद्धांशं त्यक्त्वा भागत्यागलक्षणया लक्षिते प्रत्यग्ब्रह्मैक्ये साक्षात्कारज्ञानमुदेतीति मुमुक्षूणां मन्दप्रज्ञानामस्य ग्रन्थस्योपासनं विधातुं बोधसारोपासनाख्यं प्रकरणं नवश्लोकमारभमाण आह गद्येन।

## अथ बोधसारोपासना।

अथेति। अथ बोधसारप्रशंसानिरूपणानन्तरं बोधसारोपासना बोधसारस्योपासनोपास्तिर्निरूप्यत इति शेषः। तत्रादौ स्वगुरुत्वं बोधसारे समारोप्य बोधसारपदलक्ष्यं जीवब्रह्मैक्यमपि समारोप्योपासनं स्वकृतं शिष्यं प्रत्याययति।

गुरुर्मे बोधसारोऽयं यतो ज्ञानप्रदो मम।
शिष्यो मे बोधसारोऽयं यमुद्दिश्य वदाम्यहम् ॥१॥

गुरुरिति। हे शिष्य अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थो मे मम गुरुर्जीवब्रह्मैक्यविषयकाहंब्रह्मास्मीतिस्वरूपज्ञा-

नोपदेष्टाऽऽचार्योऽस्ति, कुत इत्यत आह यत इति, यतः कारणान्मम मेऽयं बोधसारो ज्ञानप्रदो ज्ञानस्य जीवब्रह्मैक्यविषयकबोधस्याऽहंब्रह्मास्मीत्याकारस्य प्रदः प्रदाताऽत इति योज्यं, लोकेऽपि ज्ञानप्रदातुरेव गुरुत्वप्रसिद्धेः। अयमाशयः—गुरुबोधसारयोरैक्यं विचिन्त्य बोधसारग्रन्थतत्प्रतिपाद्यजीवब्रह्मैक्ययोरैक्यं चिन्तनीयमिति, ननु गुरुबोधब्रह्मणामैक्यचिन्तनं भवतु शिष्यं बोधयितुं प्रवृत्तस्य तस्यिस्ततो भेदप्रतीत्या तत्खण्डनं स्यादित्याशङ्क्य तत्रापि पूर्वोक्तं चिन्तनाखण्डत्वाय तस्यापि तेन सहैक्यं सम्पाद्यमित्याशयेनाह शिष्य इति, अयं बोधसारो ग्रन्थस्तत्प्रतिपाद्यं जीवब्रह्मैक्यं च मे मम शिष्यश्छात्रोऽस्ति कुत इत्यत आह यमिति, यत इत्यनुवर्त्तनीयं यतः कारणादहमहम्पदलक्ष्यः प्रत्यगात्मा सन्नपि वक्तृधर्मवाञ्चिदाभासो भूत्वाऽयं बोधसारं ग्रन्थं तद्वाच्यं जीवब्रह्मैक्यं चोद्दिश्य बोध्यत्वेन विषयीकृत्य वदामि कथयामि अतः शिष्येऽपि मम बोधसारग्रन्थत्वं गुरुत्वसहितं तत्प्रतिपाद्यं जीवब्रह्मैक्यं च समारोप्य शिष्यग्रन्थब्रह्माभिन्नप्रत्यगात्मनामभिन्नत्वानुसन्धानलक्षणं ध्यानं न खण्ड्यमिति भावः ॥ १ ॥

ननु तर्हि स्वामिप्रतीतौ तत्खण्डना स्यादित्याशङ्क्य तत्रापि तत्खण्डनाभावं दर्शयति ।

स्वामी मे बोधसारोऽयं मां पालयति यः सदा ।
सेवको बोधसारो मे मम सेवां करोति यः ॥ २ ॥

स्वामीति । अयं बोधसारो मत्प्रत्यक्षः प्रत्यगभिन्नपरमात्मा तत्प्रतिपादको ग्रन्थश्च मे मम स्वामी सेव्योऽस्ति कुत इत्यत आह मामिति, यतः कारणाद्यो बोधसारस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मां तदनुसन्धानवन्तं चिदाभासरूपं प्रमा-

तारं स्वसत्ताप्रदानेन सर्वकालं पालयति रक्षति अतः स्वामिसेवाकाले तत्प्रतीतौ सत्यां बोधसारोपास्तिखण्डना न स्यादिति भावः, ननु तर्हि स्वसेवकप्रतीतौ तद्विच्छित्तिः स्यादित्याशङ्क्य तत्रापि तद्विच्छित्त्यभावं सम्भावयति सेवक इति, अयं प्रत्यक्षो बोधसारो ब्रह्माभिन्नप्रत्यगात्मा तत्प्रतिपादको ग्रन्थश्च तदभिन्नो मे मम सेवको भृत्योऽस्ति कुत इत्यत आह ममेति, यतः कारणाद्यो बोधसारो ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मम ब्रह्माभिन्नप्रत्यगात्ममात्रस्य चिदाभासस्य सेवामङ्गीकृतिं भजनं च वा करोति संपादयति अतः सेवकप्रत्यगभिन्नब्रह्मग्रन्थानामेकत्वानुसन्धानलक्षणे ध्याने सति नोपासनाखण्डनं सम्भवतीति भावः ॥ २ ॥

ननु तर्हि स्वदेशसम्बन्धिसुहृत्प्रतीतौ सा स्यादित्याशङ्क्य तत्रापि ध्यानविच्छित्त्यभावं दर्शयति ।

सुहृन्मे बोधसारोऽयं सर्वं जानाति मद्गतम् ।
सखा मे बोधसारोऽयं यस्मिन्दृष्टे सुखं मम ॥ ३ ॥

सुहृदिति । अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थस्तत्प्रतिपाद्यं प्रत्यगभिन्नं ब्रह्म च मे मम सुहृत्सम्बन्धेन प्रीतिमान्मय्यस्ति तत्रोपपत्तिमाह सर्वमिति, यतः कारणान्मद्गतं मयि ब्रह्माभिन्नप्रत्यगात्मनि तदभिन्नचिदाभासेऽस्मच्छब्दवाच्ये गतं विद्यमानं सर्वं समस्तमात्मत्वानात्मत्वेन स्थितमुभयमपि जानाति वेत्ति सामान्यरूपेणाऽत इति योज्यं पूर्वत्र, अत्र सुहृद्ग्रन्थप्रत्यगभिन्नब्रह्मणां क्रमतो व्युत्क्रमतश्चैक्यानुसन्धाने न ध्यानविच्छित्तिरिति भावः, ननु मित्रे मित्रत्वप्रतीतौ तद्विच्छेदः स्यादित्याशङ्क्य तत्रापि तदभावं दर्शयति सखेति, अयं प्रत्यक्षो बोधसारो

बोधसारनामको ग्रन्थो ब्रह्माभिन्नप्रत्यगात्मा च मे मम सखो-पकारि मित्रमस्ति तत्रोपपत्तिमाह यस्मिन्निति, यतः कारणाद्य-स्मिन्बोधसारग्रन्थे तत्प्रतिपाद्ये प्रत्यगभिन्नब्रह्मणि च दृष्टेऽव-लोकिते सति मे मम ब्रह्माभिन्नप्रत्यगात्माभिन्नस्य मे चिदाभा-सस्य सुखमानन्दो भवति अत इति योज्यम्, अत्र च मित्रग्रन्थ-तत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणां क्रमव्युत्क्रमाभ्यामैक्यानुसन्धानेन नोपास्तिखण्डनेति भावः ॥ ३ ॥

ननु गृहकर्मणि आवश्यके तत्प्रतीत्योपास्तिविच्छेदो भवे-दित्याशङ्क्य तत्रापि तदभावं साधयति ।

गृहं मे बोधसारोऽयं यत्रैव निवासाम्यहम् ।
आरामो बोधसारो मे विहारो यत्र मामकः ॥ ४ ॥

गृहमिति । अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थ-स्तत्प्रतिपाद्यं ब्रह्म च मे मम तदभिन्नत्वं स्वस्मिन्ननुसन्धानवत-श्चिदाभासस्य गृहं मन्दिरमस्ति तत्रोपपत्तिमाह यत्रैवेति, अहं ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननुसन्दधानश्चिदाभासो यत्रैव बो-धसारग्रन्थे तत्प्रतिपाद्येऽखण्ड ब्रह्मणि चाभेदेन निवसामि वासं करोमि यतः कारणादत इति योज्यम्, अत्र च गृहग्रन्थप्रत्य-गभिन्नब्रह्मणामैक्यानुसन्धानेन नोपास्तिखण्डनेति प्रदर्शितं बोध्यं, ननु तर्ह्यारामादिप्रतीतौ तद्विच्छेदः स्यादित्याशङ्क्य तत्रापि तद-विच्छेदं सम्भावयति आराम इति, अयं प्रत्यक्षो बोधसारो ग्रन्थ-स्तत्प्रतिपाद्यं ब्रह्माभिन्नप्रत्यगात्मा च मे मम तदभिन्नस्वानुस-न्धानवतश्चिदाभासस्याराम उपवनमस्ति तत्रोपपत्तिमाह वि-हार इति, यतः कारणाद्यत्र बोधसारग्रन्थे तत्प्रतिपाद्येऽखण्डचि-दात्मनि च मामको मे मम ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननु-

सन्दधतश्चिदाभासस्यायं मामको विहारः क्रीडा भवति अत इति योज्यम्, अत्रारामग्रन्थब्रह्मणामैक्यानुसन्धानेन ध्यानं विच्छिन्नं न स्यादिति भावः ॥ ४ ॥

ननु तर्हि कान्तादिप्रतीतौ तद्विच्छित्तिः स्यादित्याशङ्क्य तत्रापि तदभावं दर्शयति ।

कान्ता मे बोधसारोऽयं यमालिङ्ग्य स्वपाम्यहम् ।
मनो मे बोधसारोऽयं मननं येन जायते ॥ ५ ॥

कान्तेति । अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मे मम तदभिन्नस्वत्वानुसन्धानवतश्चिदाभासस्य कान्ता सुन्दरी प्रेयसी भार्याऽस्ति तत्रोपपत्तिमाह यमिति, यतः कारणादहं ब्रह्माभिन्नप्रत्यगात्माऽभिन्नस्वत्वानुसंदधानश्चिदाभासो यं बोधसारं ग्रन्थं तत्प्रतिपाद्यं ब्रह्माभिन्नप्रत्यगात्मानं चालिङ्ग्य परिरभ्य स्वपामि निद्रामि प्रपञ्चविस्मृतिरूपां निद्रामनुभवामि, अत्र कान्ताग्रन्थतत्प्रतिपाद्यब्रह्माभिन्नप्रत्यगात्मनामैक्यानुसन्धानेन नोपासनाविच्छित्तिरिति भावः, ननु मनसोऽनुसन्धाने तद्विच्छित्तिः स्यादित्याशङ्क्य तत्रापि तदभावं सम्भावयति, मन इति, अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थस्तत्प्रतिपाद्यं प्रत्यगभिन्नं ब्रह्म च मे मम प्रत्यगभिन्नब्रह्मात्मत्वं स्वस्मिन्ननुसन्धानवतश्चिदाभासस्य मनः सङ्कल्पात्मकमन्तःकरणमस्ति तत्रोपपत्तिमाह मननमिति, यतः कारणाद्येन ग्रन्थेन तत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणा च मननं युक्तिपूर्वकश्रुतार्थावधारणं जायते भवति अत इति योज्यम्, अत्र क्रमतो व्युत्क्रमतश्च मनोग्रन्थप्रत्यगभिन्नब्रह्मणामैक्यानुसन्धानेन नोपासनाविच्छेदः स्यादिति भावः ॥ ५ ॥

ननु तर्हि बुद्ध्यनुसन्धाने सा स्यादित्याशङ्क्य तत्रापि तद्भावं दर्शयति ।

बुद्धिर्मे बोधसारोऽयं परमं बुध्यते यया ।
चित्तं मे बोधसारोऽयं येन चेतामि तत्पदे ॥ ६ ॥

बुद्धिरिति । अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मे मम ब्रह्मात्मत्वं स्वस्मिन्ननुसन्धानवतोऽस्मच्छब्दवाच्यचिदाभासस्य बुद्धिर्निश्चयात्मकमन्तःकरणमस्ति तत्रोपपत्तिमाह परममिति, यतः कारणाद्यया ग्रन्थरूपया तत्प्रतिपाद्यब्रह्मात्मैक्यरूपया च निश्चयात्मिकान्तःकरणवृत्त्या परमं कार्यकारणातीतं प्रत्यगभिन्नं ब्रह्मचैतन्यं बुध्यते ज्ञायतेऽत इति योज्यम्, अत्र च बुद्धिग्रन्थतत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणामैक्यानुसन्धानेन न तद्विच्छेदः स्यादिति भावः, ननु तर्हि चित्तानुसन्धाने तद्विच्छेदः स्यादित्याशङ्क्य तत्रापि तदभावं सम्पादयति चित्तमिति, अयं प्रत्यक्षो बोधसारो ग्रन्थस्तत्प्रतिपाद्यं प्रत्यगभिन्नब्रह्मचैतन्यं च मे मम प्रत्यगभिन्नब्रह्ममात्रत्वं स्वस्मिन्ननुसन्धानवतोऽस्मच्छब्दवाच्यस्य चिदाभासस्य चित्तं ब्रह्माभिन्नप्रत्यगात्मचैतन्यानुसन्धानकर्त्रन्तःकरणमस्ति तत्रोपपत्तिमाह यतः कारणाद्येन बोधसारेण ग्रन्थेन तत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणा च तदनुसन्धानवताऽन्तःकरणेन चाऽहं प्रत्यगभिन्नब्रह्मत्वं स्वस्मिन्ननुसन्धानवांश्चिदाभासोऽस्मच्छब्दवाच्यस्तत्पदे प्रत्यगभिन्नब्रह्मणि चेतामि अनुसन्धानवान्भवामि अत इति योज्यम्, अत्रापि चित्तग्रन्थप्रत्यगभिन्नब्रह्मणामैक्यानुसन्धानेन नोपासनाविच्छित्तिः स्यादिति भावः ॥ ६ ॥

ननु तर्ह्यहङ्कारानुसन्धाने तद्विच्छित्तिः स्यादित्याशङ्क्याह ।

अहङ्कारो बोधसारो बोधसारोऽहमेव हि।
शरीरं बोधसारो मे ममता यत्र भूयसी॥ ७॥

अहङ्कार इति। अयं प्रत्यक्परोक्षत्वरहितो बोधसारो ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नः प्रत्यगात्मा चाऽहङ्कारः शरीरत्रयेऽहं प्रत्ययवान्साधिष्ठानबुद्धिस्थचिदाभासोऽस्ति, किञ्चाऽहमेव साधिष्ठानबुद्धिस्थचिदाभास एव बोधसारग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नः प्रत्यगात्मा चाऽस्ति हि प्रसिद्धं ब्रह्माभिन्नप्रत्यगात्मचिदाभासयोरैक्यं ज्ञानिष्विति भावः। इदमत्र महावाक्यं ज्ञयमहङ्कारग्रन्थतत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणामभिन्नत्वानुसन्धानरूपं ध्यानमत्र विहितमिति भावः, ननु शरीरत्रयप्रतीतौ तद्विषयकाहमः कथं बोधसारग्रन्थतत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मभ्यां सहैक्यं सम्भाव्यमित्याशङ्क्य शरीरस्यापि ताभ्यां सहैक्यानुसन्धानं विधत्ते शरीरमिति, अयं बोधसारः प्रत्यक्षो बोधसारनामको ग्रन्थः प्रत्यगभिन्नं ब्रह्मचैतन्यं च मे मम ब्रह्मात्मत्वं स्वस्मिन्ननुसन्धानवतश्चिदाभासस्येत्यर्थः, शरीरं स्थूलसूक्ष्मकारणाख्यं देहत्रयमस्ति न तु बोधसारात्तत्पृथगस्तीत्यर्थः, तत्रोपपत्तिमाह ममतेति, यतः कारणाद्यत्र बोधसारनाम्नि ग्रन्थे तत्प्रतिपाद्ये प्रत्यगभिन्ने ब्रह्मणि च मे प्रत्यगभिन्नब्रह्मत्वं स्वस्मिन्ननुसन्दधतश्चिदाभासस्य मम ममता मदीयत्वबुद्धिरज्ञानावस्थायां देह इव भूयस्युत्कृष्टाऽस्ति अत इति योज्यम्, अत्र च बोधसारग्रन्थतत्प्रतिपाद्यब्रह्माभिन्नप्रत्यगात्मदेहानामभेदानुसन्धानेनाहमो ब्रह्माभिन्नप्रत्यगात्मग्रन्थाभ्यां सहैक्यमनुसन्धातुं शक्यमिति भावः॥७॥

इदानीं प्राणप्रतीतावपि तत्सम्भावयति।

प्राणो मे बोधसारोऽयं ममता यत्र भूयसी।

जीवो मे बोधसारोऽयं येन जीवाम्यहं सदा ॥ ८॥

प्राण इति। अयं बोधसारः प्रत्यक्षो बोधसारो ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मे मम ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननुसन्दधतश्चिदाभासस्य प्राणो जीवनोपाधिः प्राणनामको वायुरस्ति तत्रोपपत्तिमाह यत इति, यतः करणादसौ बोधसारो ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मम मे ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननुसन्दधतश्चिदाभासस्य प्रियतरोऽतिशयेन प्रियोऽस्ति अत इति योज्यम्, अत्रापि प्राणग्रन्थप्रत्यगभिन्नब्रह्मणामभेदानुसन्धानेन नोपासनाक्षतिरिति भावः, जीवप्रतीतावपि तदविच्छेदं दर्शयति जीव इति, अयं प्रत्यक्षो बोधसारो बोधसारनामको ग्रन्थस्तत्प्रतिपाद्यो ब्रह्माभिन्नप्रत्यगात्मा च मे मम ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननुसन्दधतोऽहमदाद्यस्य चिदाभासस्य जीवो देही जीवनमित्यर्थः, अस्ति तत्रोपपत्तिमाह येनेति, अहं प्रत्यगभिन्नब्रह्मत्वं स्वस्मिन्ननुसन्दधानश्चिदाभासः सदा सर्वकालं येन बोधसारग्रन्थेन तत्प्रतिपाद्यब्रह्माभिन्नप्रत्यगात्मना च जीवामि प्राणान्धारयामि अत इति योज्यम्, अत्र च ग्रन्थजीवब्रह्मणामैक्यानुसन्धानेन नोपासनाहानिरिति भावः॥ ८॥

ईश्वरप्रतीतौ चोपासनाविच्छेदाभावं सम्भावयति।

ईश्वरो बोधसारो मे यतो मुक्तिप्रदो मम।
बोधसारः परं ब्रह्म बोधसारात्परं नहि॥ ९॥

इति श्रीनरहरिकृतौ बोधसारे बोधसारोपासनं द्विपञ्चाशत्तमम्॥ ५२॥

ईश्वर इति। अयं प्रत्यक्षो बोधसारो ग्रन्थस्तत्प्रतिपाद्यो

ब्रह्माभिन्नप्रत्यगात्मा च मे मम ब्रह्माभिन्नप्रत्यगात्मत्वं स्वस्मिन्ननु-न्धानवतोऽहम्पदवाच्यचिदाभासस्येत्यर्थः, ईश्वर उपास्योऽस्ति तत्रोपपत्तिमाह यत इति, यतः कारणादयं बोधसारो ग्रन्थस्त-त्प्रतिपाद्यं प्रत्यगभिन्नं ब्रह्म च मम मे प्रत्यगभिन्नब्रह्मत्वं स्वस्मि-न्ननुसन्धानवतश्चिदाभासस्येत्यर्थः, मुक्तिप्रदो मुक्तिं मोक्षं प्रद-दाति समर्पयतीति स तथाविधोऽस्ति अत इति योजयम्, अत्र ग्रन्थेश्वरब्रह्मणामभेदानुसन्धाने नोपासनाक्षतिरिति भावः, ब्रह्मप्र-तीतावपि तदविच्छेदं दर्शयति बोधसार इति, परं कार्य कारणातीतं ब्रह्म देशकालवस्तुकृतपरिच्छेदशून्यं वस्तु बोधसा-रो बोधसारनामको ग्रन्थ एवास्ति अतो बोधसाराद्ग्रन्थात्तत्प्र-तिपाद्यात्मवस्तुनश्च परमन्यत्किमपि वस्तु नास्ति हि प्रसिद्धमेत-न्मम, अत्रेदमाकूतम्—उपासनात्रैविध्यमुत्तमं मध्यममधमं चेति भे-दात्, उत्तमं च गुर्वादीश्वरान्तोक्तपदार्थानामस्य ग्रन्थस्य चैतद्ग्र-न्थप्रतिपाद्यविषयभूते जीवब्रह्मैक्ये समारोपणेन निरन्तरं जीवब्र ह्मैक्यमात्रचिन्तनं, मध्यमं च गुर्वादीश्वरान्तपदार्थानामेतद्ग्रन्थप्र-तिपाद्यप्रत्यगभिन्नब्रह्मणश्चैतस्मिन्बोधसारे ग्रन्थे समारोपणेनैत-द्ग्रन्थमात्रत्वानुसन्धानं निरन्तरम्, अधमं च गुर्वादीश्वरान्तपदार्थ-जात एतद्ग्रन्थस्य तत्प्रतिपाद्यप्रत्यगभिन्नब्रह्मणश्च निरन्तरमनुस-न्धानम्, एतेषु च क्रमादुत्तमादयोऽधिक्रियन्ते तेषां च यथाधिका-रमुपासने कृते जीवब्रह्मैक्यापरोक्षज्ञानप्राप्त्या मुक्तिर्भवतीति ॥९॥

इति श्रीनरहरिशिष्यदिवाकरविरचितायां बोधसारार्थदीप्तौ बोधसारोपासनार्थप्रकाशो द्विपञ्चाशत्तमः ॥ ५२ ॥

---

एवं ग्रन्थं परिसमाप्येदानीमस्य प्रामाण्यसिद्धये पद्येनाह।

उपनिषदि वने ये पुष्पिता मन्त्रवृक्षाः

सुरभिकुसुममेषामेकमेकं विविच्य ।
समरसपदलब्ध्यै वाङ्मयैरेवपुष्पै-
र्नरहरिसुधियैतत्पूजितं बोधलिङ्गम् ॥ १ ॥

उपनिषदीति । हे शिष्य ये प्रसिद्धा वेदान्तेषूपनिषदि उप समीपे निषण्णं श्रेयो मोक्षलक्षणं यस्यां सोपनिषत्तस्यां तद्रूपे वनेऽरण्ये सम्भजनीये देश इत्यर्थः, अविष्टलिङ्गेन विशेषणविशेष्यभावः, मन्त्रवृक्षा मन्त्राः 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याद्या वृक्षा इव वृक्षा द्रुमाः सर्वाज्ञानतत्कार्यप्रपञ्चवृश्चकत्वादित्यर्थः, पुष्पिताः प्रस्फुटार्थकुसुमिताः सन्ति एषामुक्तानां मत्प्रत्यक्षाणामुपनिषद्वनसंस्थितस्फुटार्थकुसुमितमन्त्रवृक्षाणां सुरभि ब्रह्मात्मवासनाप्रदत्वेन सुगन्धि एकमेकं प्रत्येकं प्रत्येकं पृथक्पृथक्कुसुममर्थरूपं पुष्पं विविच्य समूहीकृत्य मया नरहरिसुधिया न रातीति नरो वैराग्यपूर्वकप्रपञ्चमिथ्यात्वानुसन्धानवानेतादृशो यो हरिर्द्वैतनिवृत्त्या स्वशरणागतमुमुक्षुजनदुःखनिवर्तकः सन्नरहरिर्गुरुस्तस्मिन्सुष्ठु शोभना स्थिरत्वसम्पन्ना धीर्बुद्धिनिश्चयात्मिकान्तःकरणवृत्तिर्यस्य स तथोक्तस्तेन तद्रूपस्त्वं प्राप्तेन मया समरसपदलब्ध्यै समः सदैकरूपो रस आनन्दो यत्र तत्तादृशं यत्पदं स्वरूपं तस्य लब्धिः प्राप्तिस्तस्यै तदर्थं वाङ्मयैर्वाग्रूपैरेव पुष्पैः कुसुमैरेतन्मत्प्रत्यक्षं बोधलिङ्गं बोधः प्रत्यगभिन्नब्रह्मापरोक्षविषयकं ज्ञानं तेनैव लिङ्ग्यते साक्षात्क्रियते यत्तथोक्तं ब्रह्म पूजितमर्चितमनुसन्धितमित्यर्थः, अतोऽस्य प्रामाण्यमभ्युपेतव्यमिति भावः ॥ १ ॥

इदानीमस्य ग्रन्थस्य श्रैष्ठ्यज्ञानपूर्वमेतत्पठनं विधत्ते ।

बुधजनहितकारी संप्रदायानुसारी
परमसुखनिधानं मोहमुक्तेर्निदानम् ।

नरहरिविहितोयं बोधवृक्षस्य तोऽयं
कुमतिवनकुठारः पठ्यतां बोधसारः ॥ २ ॥

बुधजनेति । बुधजनहितकारी बुधा ज्ञानिनो ये जना लोकास्तेषां हितं मोक्षं करोति स तथोक्तः श्रद्धादिसम्पन्नानां मोक्षप्रद इत्यर्थः, किञ्च संप्रदायानुसारी संप्रदाय उपदेष्टृपुरुषाणां परम्परा तमनुसरतीति स तथोक्तः संप्रदायागत इत्यर्थः, किञ्च परमसुखनिधानं परमं निरतिशयं यद्ब्रह्मशब्दवाच्यं ब्रह्मस्वरूपं सुखमानन्दस्तस्य निधानं द्रव्यपूर्णं पात्रमिव पात्रभूतोऽस्ति, किञ्च मोहमुक्तेर्मोहान्मूलाज्ञानान्मुक्तिर्मोक्षस्तस्या निदानं मूलकारणं हेतुरित्यर्थः, किञ्च नरहरिविहितो नरहरिर्ब्रह्माभिन्नप्रत्यगात्मस्वरूपो मम गुरुस्तेन विहितो विरचितः, किञ्च बोधवृक्षस्य बोधः प्रत्यगभिन्नब्रह्मविषयकापरोक्षज्ञानं स एव वृक्षोऽज्ञानतत्कार्यप्रपञ्चयोर्वृश्चकत्वाद्वृक्षस्तस्य तोयं जलमिव जीवनोपायभूतः, किञ्च कुमतिवनकुठारः कुत्सिता निन्दिता मतिर्बुद्धिः संसारासक्तिरूपा सैव वनमरण्यं तस्या वा वनं सम्भजनविषयः प्रपञ्चस्तस्य कुठारः परशुरिव च्छेदने समर्थः, अयं प्रत्यक्षो बोधसार एतन्नामको ग्रन्थः पठ्यतामधीयतां मुमुक्षुभिरित्यर्थः ॥ २ ॥

एवमेतद्ग्रन्थपाठे मुमुक्षून्प्रवर्त्येदानीमेतस्येश्वरार्पणासम्भवनिरूपणेनैव समर्पणं द्योतयति ।

गुरुभिर्दीक्षितानां हि सर्वमेवेश्वरार्पणम् ।
अयं तु बोधसारोऽस्य स्वात्मैव परमेशितुः ॥ ३ ॥

इति श्रीनरहरिविरचितो बोधसारः समाप्तः ॥ ग्रन्थसंख्या १०५२ ॥

गुरुभिरिति । गुरुभिः प्रत्यगभिन्नब्रह्मत्वं महावाक्यद्वारा

बोधयद्भिर्देशिकैर्दीक्षितानामुपदिष्टानां पुरुषधौरेयाणां सर्वमेव लौकिकं वैदिकं च समस्तमपि कर्मेश्वरार्पणमीश्वरे सर्वाधारभूते सर्वनियन्तरि ब्रह्मणि अर्पणं प्रदानमेव भवति हि प्रसिद्धमेतच्छ्रुतौ स्मृतौ च 'नान्योऽतोस्ति द्रष्टा नान्योतोस्ति श्रोता नान्योतोस्ति विज्ञाते' त्यादिश्रुतेः, 'ब्रह्मार्पणं ब्रह्म हविरि'त्यादिस्मृतेश्च । अतोऽयं प्रत्यक्षो बोधसारस्तु बोधसारनामको ग्रन्थस्तुपदेनास्य ग्रन्थस्यान्यसमस्तग्रन्थेभ्यो विलक्षणत्वं सूचितं, परमेशितुः परमः कार्यकारणातीत ईशितेश्वरो ब्रह्माभिन्नप्रत्यगात्मा तस्य बोधसाररूपत्वसामान्यादुभयोरपीत्यर्थः, अस्य ज्ञानिनां प्रत्यक्षत्वेनानुभूयमानस्यात्मनः स्वात्मैव स्वस्वरूपमेवास्ति अतः समर्पकस्य समर्प्यस्य च समर्पणस्यापि असम्भवात्समर्पणं न सम्भवतीत्येवं निश्चय एवात्र समर्पणं नान्यदिति भावः ॥ ३ ॥

नरहरिपदसेवालब्धविज्ञानसारो
बुधजनहितकृत्यै बोधसारार्थदीप्तिम् ।
बुधदिनकरसाह्वो मुक्तये सज्जनाना
मकृत जनशरण्यस्तेन तृप्यात्परात्मा ॥ १ ॥
सन्तः कृपालवस्तज्ज्ञाः क्षमन्तु मम साहसम् ।
स्वाधिकारमदृष्ट्वैव यदुक्तं क्षमिणो हि ते ॥ २ ॥
शाके गजत्रिमुनिभूमिमिते तु वर्षे ।
रामाद्रिनागशशिचिह्नमिते तपस्ये ।
पक्षे सिते सुतशशाङ्कतिथौ ज्ञवारे
व्याख्या समाप्तिमगमद्बुधकृतन्या ॥ ३ ॥
बोधसारार्थदीप्त्याख्या व्याख्येयं भावबोधिनी ।
दिवाकरेण रचिता नरसिंहप्रसादतः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचिता बोधसारार्थदीप्त्याख्या टीका समाप्ता ॥ ग्रन्थसङ्ख्या १२००० ॥

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*Nos. 89. 90. 94. 96. 101. 105. 108. 109. 111. & 113.*

---

# बोधसारः ।

श्रीविद्वद्वर्यनरहरिविरचितः ।

तच्छिष्यश्रीदिवाकरकृतयाऽर्थदीप्त्या सहितः ।

श्रीमदुदासीनवर्यस्वामिगोविन्दानन्दशिष्येण
दयानन्दस्वामिना परिशोधितः ।

# BODHASÂR,

A TREATISE ON VEDÂNTA,

BY

ŚRÎ NARAHARI,

With a commentary by the author' s pupil
PANDIT DIVÂKAR.

EDITED BY
SWÂMÎ DAYÂNAND.

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhambâ Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,
BENARES.

1906.

# अथ सटीकबोधसारस्य भूमिका।

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थो, 'न स पुनरावर्तत' इति श्रुतेः। पूर्वेषां त्रयाणां चानित्यत्वेन हेयतयाऽस्यैवोपादेयत्वमिति न तिरोहितं विदुषाम्, तत्साधनञ्च प्रसंगात्मब्रह्मैक्यज्ञानम्, तत्साधनं साधनचतुष्टयसम्पन्नस्याधिकारिणः श्रवणादिकम्, 'आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेः। तदुपयोगिषु सूत्रभाष्यादिबहुग्रन्थेषु सत्स्वपि गुर्वादिस्तुतिप्रभृत्यनेकगुणविशिष्टत्वेनाल्पबुद्धीनामनायासेन बोधोपयुक्तसुगमार्थत्वेन प्रतिश्लोकं सिद्धान्तप्रतिपादकत्वेन च सर्वश्रेष्ठत्वमस्य ग्रन्थकारेण स्वमुखेनैवोक्तं, तथाहि—

आदौ गुरुस्तवो यत्र प्रान्ते च शिवपूजनम्।
मध्ये मुकुन्दस्मरणं बोधसारः स उत्तमः॥ १॥
सिद्धार्थः सुगमार्थश्च विशेषैर्बहुभिर्वृतः।
ग्रन्थस्त्वेतादृशस्तात न भूतो न भविष्यति॥ २॥
न स्तौमि न च निन्दामि कथयामि यथास्थितम्।
एकैकस्मिन्निह श्लोके प्रोक्तः सिद्धान्तनिर्णयः॥ ३॥
यथा ब्रह्माण्डसर्वस्वं पिण्डे पिण्डे व्यवस्थितम्।

तथा सिद्धान्तसर्वस्वं श्लोके श्लोके निरूपितम् ॥ ४ ॥

इत्यादि ।

अस्य ग्रन्थस्य निर्माणसमयमारभ्य शरच्छतं व्यतीयायेति वृद्धयतिभ्योऽवगम्यते, अस्य मूलग्रन्थस्य निर्माता कश्चिद्दाक्षिणात्यो ब्राह्मणो नरहरिनामाऽभूत्, टीकाकारश्च तच्छिष्यो दिवाकरनामा, तत्तु नामद्वयं मूले टीकायां च शतसहस्रश उपलभ्यत इति ।

अस्य चादर्शपुस्तकमेकं प्रसिद्धभिषग्वराद् वृद्धयतिवराद् वसिष्ठाभिधानात्प्राप्तमाश्रित्य श्री१०८ब्रह्मविद्वरिष्ठेभ्यः शतसहस्रसाधूनां हृदयकमलानि ब्रह्मविद्यामयस्ववचनकिरणजालेनाऽऽत्माऽज्ञाननिरसनद्वारा बोधयद्भ्य उदासीनेषु पूज्यतमेभ्य उदासीनसंप्रदायस्थेभ्यः परमहंसवर्यपण्डितब्रह्मानन्दाभिधेभ्यः प्राचार्येभ्यो लब्धविद्येन तच्छिष्यैरधीतवेदान्ताशास्त्रैरधिगतशास्त्रार्थतत्त्वैः परोपकारनिरतैः परमहंसगोविन्दानन्दाभिधैः स्वगुरुभिः प्रेरितेन परमहंसदयानन्देन यथामति शोधितोऽयं ग्रन्थ इति शम् ॥

॥ शुभंभूयात् ॥

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

---

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

